# मेरुतन्त्र

यह सब तन्त्रोंका शिरोमणि है और बहुत तलाश करने पर ज़िला रायबरेली मौज़ा जीगौं निवासी पण्डित चन्द्रशेखर झा मन्त्रशास्त्री से बहुत सा धन व्यय करने पर प्राप्त हुआ है

इसमें

देवताओं के मन्त्र यन्त्र व पूजन करने की विधि वर्णित है

प्रथमबार

लखनऊ

मुंशी नवलकिशोर ( सी, आई, ई ) के छापेख़ाने में छपा

सन् १९०७ ई०



॥ श्रीगणेशाय नमः ॥

# अथ मेरुतन्त्रं प्रारभ्यते

यथासत्सदिवाभाति नचभातिकदापिसत् ॥ यस्मिन्ज्ञानेनसाभाति तस्मै तस्मैनमोनमः ॥ १ ॥ जलन्धरेणविजिते सुरासुरनरेऽखिले ॥ सूक्ष्मरूपेणते सर्वे महेशशरणंगताः ॥ २ ॥ वर्षाणांचसहस्राणि समाधिस्थंविलोक्यतम् ॥ भाताचार्चितातैस्तु वामदक्षिणमार्गिभिः ॥ ३ ॥ अम्बातदाबोधयुता हतंसंव्यजिज्ञपत् ॥ ध्यायन्तिविधिहर्य्याद्यात्वांत्वंध्यायसिकंपुनः ॥ ४ मांवदन्तिपरामेषां त्वांवदन्तिपरंशिवम् ॥ आवयोरपिकिंध्येयं तत्त्वम्मे सावद ॥ ५ ॥ इतिश्रुत्वावचस्तस्याः स्थित्वाकिञ्चिन्महेश्वरः ॥ उपवेश्य इन्द्रादीन्वाक्यमेतदुवाचह ॥ ६ ॥ सदाशिवउवाच ॥ नराणांपरमंवृद्धे रुस्सौरंश्शतंसमाः ॥ तथादेविमुनीनांहि दिनमायुश्चतच्छतम् ॥ ७ ॥ न्द्येतेपरमंतस्य मानंकलियुगस्यतत् ॥ धर्म्मार्धसार्धसम्पूर्ण धर्म्मेणातत्प्रमाण ः ॥ ८ ॥ इदन्तुशैविविहितमैन्द्रायुर्मानवम्परम् ॥ कतिप्रमाणमब्दंतुसम

---

१ तीनसौ साठ दिन को सौरवर्ष होता है सौवर्ष की मनुष्यों की आयु है २ तैसे मुनियों को भी साठि दण्ड को दिन रात्रि होता है तीस दिन रात्रि को मास बारहमासको वर्ष तेही सौ वर्ष को आयु होता है ३ जो मन में स्थित इन्द्र वा मनु की आयुर्दाय को प्रमाणता की सुधि भई व आगे कहेंगे सो मनमें आयो इससे इदं यह कहना उचित है ॥

यःकायपूरकः ॥ ९ ॥ चतुर्दशेन्द्रंस्थैव ब्रह्मणोदिनमुच्यते ॥ याध्यायतेम हामाया मयातच्छ्वासनिर्गमः ॥ १० ॥ प्रपञ्चोब्रह्मदिवसः कुम्भकोरात्रिरस्य तु ॥ एवंतस्याघटिकया वर्षमेकंविधेस्स्मृतम् ॥ ११ ॥ घटीशतमितंतस्या ब्रह्माजीवतिकीटवत् ॥ पक्षमेकंसतीरूपं शुक्लंकृष्णंतुपार्वती ॥ १२ ॥ ऋतुमा त्रंहरिर्जीवेद्वर्षमात्रमहंशिवः ॥ एवंसाशतवर्षावैमहाकालस्यगेहिनी ॥ १३ ॥ सर्पकञ्चुकवद्देहंत्यक्त्वात्यक्त्वापुनर्युवा ॥ महाकालस्सदातिष्ठेत्समयाविषयीकृ तः ॥ १४ ॥ एवंश्रुत्वावचस्तस्य देवीब्रह्माहरिःसुराः ॥ अहङ्कारंचवितयं कृत्वा भीतास्ततःपुनः ॥ १५ ॥ देवाऊचुः ॥ त्राहित्राहिमहादेव शरणागतवत्स ल ॥ साहङ्कारावयंसर्वे ईश्वराइतिवादिनः ॥ १६ ॥ निर्जिताअपिनिर्लज्जा जलन्धरद्वेषिणः ॥ मशकाश्चवयन्देव नचत्वंमशकायसे ॥ १७ ॥ यस्यार्थे सोपियस्त्वञ्च पादार्धांशेननोसमः ॥ महाकालःकथञ्ज्ञेयः कथयस्वसदाशिव ॥ १८ ॥ मुक्तयःकतिधादेव श्रेष्ठाकाकिञ्चसाधनम् ॥ वदास्माकंयदिकृपा दे व्यांविष्णौसुरेषुच ॥ १९ ॥ ईश्वरउवाच ॥ ज्ञायतेतत्प्रभावेन सकलन्देववा क्यतः ॥ पुनर्मोदयतेबुद्धिन्तस्यमायाकृतञ्जगत् ॥ २० ॥ मयाकृतानित न्त्राणिसङ्ख्ययाष्टोत्तरंशतम् ॥ येनयेनप्रार्थितोहंदेवीसम्प्रार्थितामया ॥ २१ ॥ देवीभिःप्रमथैर्देवैस्तत्तन्मोक्षश्चतुर्विधः ॥ येनमार्गेणभवतिससमार्गः प्रक शितः ॥ २२ ॥ तस्माद्देवेशितेदेवा अहङ्कारेणमोहिताः ॥ अन्यान्देवान्वि निन्दन्तिषट्कर्मनिरतास्सदा ॥ २३ ॥ कलिनाहतसौभाग्याभक्ष्येपानेचमैथु ने ॥ जायन्तेनिरतास्तेननिर्धनाःप्रेतरूपिणः ॥ २४ ॥ दृश्यन्तेतुतथादेवा म द्भिस्सम्यगीरितम् ॥ वेदसारंधर्म्मसारंतन्त्राणांहृदयंपरम् ॥ २५ ॥ महाका

---

१ सत्रहलाख अट्ठाइस हजार १७२८००० वर्ष को सतयुग है बारहलाख छानवे हजार १२९६००० को त्रेता युग होता है आठलाख चौंसठि हजार ८६४००० वर्ष को द्वापर युग होता है चारिलाख बत्तिस हजार ४३२००० वर्ष को कलियुग होता है चारों युग हजार दफे बीतैं तौ ब्रह्माजी को दिन होता है इसी दिन मैं चौदह इन्द्र वा मनु वा सप्तर्षि होते हैं २ केचुलि इति लोक मैं प्रसिद्ध है ३ मन से ध्यान कियागया है ४ चतुर्थांश ५ हे देवाः ! यह सम्बोधन पद है देवताओं से श्रीशिवजी कहते हैं मुख्य सुननेवाली पार्वतीजी हैं परन्तु इस श्लोक मैं श्रीपार्वतीजी सहित पूछने जे देवता तिन से बोले हैं ॥

नयत्प्रोक्तम्पञ्चमीमुक्तिसाधनम् ॥ सर्वेषाम्मेरुतांयातन्तत्तन्त्रंमेरुसञ्ज्ञितम् ॥ २६ ॥ शृण्वन्तुतद्दृश्यमानम्मनोह्लादकरञ्चयत् ॥ पृच्छयानिज सन्देहन्दूरीकुर्वन्त्वशङ्किताः ॥ २७ ॥ यथातोयञ्जलनिधेर्गृहीत्वाब्दाःस्वधारया ॥ वर्षन्ति क्षत्रवायुस्तंबिन्दुरूपंकरोतिच ॥ २८ तद्वन्महाकालत्वान्महामायाप्रकर्षति ॥ कर्म्मभिश्चैवसम्भिन्नास्तेदेवाःकोटिशोभवन् ॥ २९ ॥ यथानैकत्यगुणतोबिन्दवोयान्तिचाघटाम् ॥ तथैवोपासनामार्गगुणायान्तिचदेवताम् ॥ ३० ॥ यथासरिद्भ्योगर्हायाम्पतितंह्रदतांव्रजेत् ॥ सचदूरतलःस्याद्वैतद्वद्देवोऽपिमोहितः ॥ ३१ ॥ प्रविष्टस्तोयधिम्पश्चाद्पुनर्भवतांव्रजेत् ॥ तद्देवोदरसंदेशात्तद्जीवोऽपिदेवताम् ॥ ३२ ॥ विष्णुतांशिवतांल्लब्ध्वामहाकालोभिजायते ॥ समुद्रादाहृतःकश्चिद्देवात्त्यक्तस्तुतत्रतु ॥ ३३ ॥ यथासमुद्रोभवतितद्वद्ब्रह्मसुता अपि ॥ ब्रह्मज्ञानाद्विनिर्मुक्ताहित्वाचोपासनाक्रमम् ॥ ३४ ॥ श्रीदेव्युवाच ॥ वामदक्षिणभेदेनपञ्चपञ्चक्रमेणच ॥ उपासनावामदक्षातत्रतत्रप्रशस्तिका ॥ ३५ ॥ तत्रभोगक्रियामोक्षक्रियायुग्मक्रियाअपि ॥ लभ्यन्तेदेवताकाचसर्वाभ्यस्तूत्तमोत्तमा ॥ ३६ ॥ शिवउवाच ॥ देवासुरैःपुराकल्पेमथ्यमानेमहोदधौ ॥ तत्रश्यामासमुत्पन्नासुराकलशधारिणी ॥ ३७ ॥ गौराङ्ग्यरुणचैलाच भास्वद्धरितकञ्चुका ॥ श्वेतोत्तरच्छदादेवीत्रैलोक्यस्यापिमोहिनी ॥ ३८ ॥ दृष्ट्वातान्दानवास्सर्वेशुक्राचार्य्यबलात्सुरान् ॥ जित्वाताञ्जगृहुस्तस्याः कलशाच्च पपुः सुराम् ॥ ३९ ॥ देवान्पलायितान्दृष्ट्वाशक्तयस्तत्रसंस्थिताः ॥ पपुस्ताअपितांपुण्यांसुरांदैवतमातरम् ॥ ४० ॥ वरानपिबहून्ददुः सुरायास्सुरमातरः ॥ अनयास्मान्तर्प्पयन्तिशेषंगृह्णन्तियेनराः ॥ ४१ ॥ तेऽस्मद्रूपानसन्देहोमुक्तिमुक्त्येकभाजनम् ॥ सुरागङ्गासुरासिन्धुःसुरादेवीसरस्वती ॥ ४२ ॥ सुरागोदावरीरेवासुरैवपरमम्पदम् ॥ सुरान्निन्दन्तियेमूढास्तेमूढाजन्मजन्मनि ॥ ४३ ॥ गन्धर्वैस्स्तूयमानास्ताश्शक्तयस्तेचदानवाः ॥ पुनर्ममन्थुर्जलधिंबलहीनैस्सुरैस्सह ॥ ४४ ॥ धन्वन्तरिस्समायातस्सुधाकलशहस्तवान् । सुरमन्त्रास्तुतेप्रोचुः किमिदंपुरुषाहृतम् ॥ ४५ ॥ उवाचमधुरंविष्णुस्सान्त्वयं

---

१ थोरा सा हिस्सा २ मोक्ष को प्राप्त होते हैं ३ कपड़ा ४ जगमगात ॥

श्चप्रतारयन् ॥ पूर्वदेवास्सन्तुयूयम्मद्यपानस्यपानतः ॥ ४६ ॥ अग्रेयदिद मुत्पन्नंपीयूषन्तत्प्रकीर्त्तितम् ॥ अग्रेप्येतत्तुदेवार्थनिस्सारम्पुरुषाहृतम् ॥ ४७ ॥ ततोहरिर्मोहिनीरूपधारीवामेनतांपाययेत्पूर्वदेवान् ॥ शक्तिस्सर्वास्त्वरुणा न्भैरवादीनेतन्मन्त्रानुद्धरेदभ्यवर्षन् ॥ ४८ ॥ दक्षेणदेवानमृतंपाययंस्तेतत्त न्मन्त्राः पूर्वदेवानबाधन् ॥ हाहाभूतंसमरेतत्समस्तंशुक्राचार्य्योज्ञातवान्तत्स मग्रम् ॥ ४६ ॥ ततस्सक्रोधताम्राक्षोजलंकृत्वाकरेऽशपत् ॥ धिग्धिग्ज्ञानंसु रारीणामनयासुरयाहृतम् ॥ ५० ॥ तस्मादिमांयेपिबन्तिसर्वेपातकिनस्तुते ॥ प्रयान्तुनिरयंघोरंतिष्ठन्त्विहपिशाचवत् ॥ ५१ ॥ श्रुत्वातद्दारुणंशापंप्रजज्वाल तदासुरा ॥ निर्दहन्तीवलोकांस्त्रीन्प्राकम्पन्तसुरासुराः ॥ ५२ ॥ ततोमयास्तुता देवीबीजगर्भैस्स्तवोत्तमैः ॥ पादयोःपातितःशक्रःपुत्रोऽयन्तेभ्ययोत्स्यताम् ॥ ५३ ॥ मायथारमयावाचासम्बुध्यन्तांत्रिवर्षकाः ॥ शुक्रशापंविमोचयपुनस्तद्वर्ण कान्तिका ॥ ५४ ॥ यस्याउपासनातस्याबीजेनपुटितोमनुः ॥ षोडशार्णस्तवा ख्यातोमन्त्रिताष्टोत्तरंशतम् ॥ ५५ ॥ निश्शापंकुरुतेसाध्यंभुक्तिमुक्त्येकभाजन म् ॥ इतिदीक्षाक्रमोयेषांवंशेदेविसमागतः ॥ ५६ ॥ सकौलोदुर्लभोदेविदा ताभोक्ताचपावकः ॥ यस्मिन्मार्गेप्रधानोऽयंसतुवामपथःस्मृतः ॥ ५७ ॥ मद्यं मांसंचमत्स्याश्चमुद्रामैथुनमेवच ॥ कृत्वामार्गप्रविष्टेनसदासेव्यंसुहर्षिणा ॥ ५८ ॥ कौलिकोङ्गुष्ठताम्प्राप्तोवामस्स्यात्तर्जनीसमः ॥ चीनक्रमोमध्यमस्स्या त्सिद्धान्तीयोऽवरोभवेत् ॥ ५६ ॥ कनिष्ठःशाबरोमार्गइतिवामस्तुपञ्चधा ॥ यैःपीतममृतंतेतत्सोमपाबलदर्प्पिताः ॥ ६० ॥ लक्ष्म्यासहसमुद्भूताः शत्रुय लाश्चसोमपाः ॥ तेषामुपासनाप्रोक्तादक्षमार्गेणसाद्धिजैः ॥ ६१ ॥ कर्तव्या वैदिकीश्रेष्ठास्मार्तीस्यान्मध्यमोत्तमा ॥ पौराणीमध्यमाख्यातातान्त्रिकीत्ववं रास्मृता ॥ ६२ ॥ दैशीचकालीजातीयाकनिष्ठास्यादुपासना । वाममार्गीय दादक्षंविशेत्तत्सुरैस्सतु ॥ ६३ ॥ विघ्नेनपीड्यतेचापिनसिद्धिमधिगच्छति ॥ दक्षमार्गीयदावामंप्रविशेत्तत्सुरास्तदा ॥ ६४ ॥ लोकद्वयाद्यापयन्तितंग्रसन्ति

१ दैत्यों को २ लाल रंग की हैं आंखैं जिसकी ३ शापदिये ४ बीजमन्त्र हैं भीतर जिनके तिनसे ५ अर्थ धर्म काम के देनेवाले ६ पतित करि देते हैं ॥

चवामिनम् ॥ तस्मात्स्वकुलमार्गंतुज्ञात्वाकुर्य्यादुपासनाम् ॥ ६५ ॥ भक्तिश्र द्धान्वितौशिष्यगुरूसम्पूर्णलक्षणौ ॥ सर्वोपिमार्गस्तत्कालंभुक्तिमुक्तिप्रदा य कः ॥ ६६ ॥ धनार्थिनस्तुगुरवःशिष्याः[1]सिद्ध्यर्थिनःकलौ ॥ तस्मान्नचो भ योस्सिद्धिर्देवतानामिदंबलम् ॥ ६७ ॥ द्विजानामनुपेतानांस्वकर्म्माध्यय नादिषु ॥ यथाधिकारोनास्तीहस्याच्चोपनयनादिषु ॥ ६८ ॥ तथाचादीक्षि तानांचमनुदेवार्चनादिषु ॥ नाधिकारोऽस्त्यतःकुर्य्यादात्मानंमन्त्रसंस्कृतम्॥ ६९ ॥ दीयतेज्ञानविज्ञानंक्षीयन्तेपापराशयः ॥ तेनदीक्षाइतिप्रोक्ताप्राप्ताचे त्सगुरोर्मुखात् ॥ ७० ॥ असद्गुरुःस्वयंनष्टः कथंतारयतेपरम् ॥ विश द्धिस्वोपकगुणैर्युक्तोयःसगुरुर्भवेत् ॥ ७१ ॥ योऽत्युत्कृष्टोयथोक्ताङ्गः शुद्धवेषो मनोहरः ॥ सर्वाङ्गमार्गतत्त्वज्ञःसर्वमन्त्रविधानवित् ॥ ७२ ॥ इङ्गिताकारचे ष्टाविदूरतःकृतदुर्जनः ॥ अं[2]न्तर्मुखोऽ[3]बहिर्दृष्टिस्सर्वज्ञोदेशकालवित् ॥ ७३ ॥ आज्ञासिद्धोदयायुक्तःशान्तोवेदाङ्गवेदवित् ॥ [4]नित्येनै[5]मित्तिकेका[6]म्येरतःक र्म्मण्य[7]निन्दिते ॥ ७४ ॥ अलोभोहिंसकश्चैवापक्षपातीगुरुर्मतः ॥ अनीदृ शगुरोर्मन्त्रोमरणायासदुःखकृत् ॥ ७५ ॥ विप्रएवेदृशःकार्य्योगुरुर्नोचेत्तदेदृ शः ॥ क्षत्रविट्छूद्रजातीयः प्रातिलोम्योनदीक्षयेत् ॥ ७६ ॥ दक्षमार्गेतुनि

---

१ मारण मोहन वशीकरणादि मन्त्र सिद्धियों के चाही हैं अर्थात् आत्मशुद्धि भूत शुद्धि षट्चक्रशोधन मन्त्र योग कुण्डलिनी द्वारा जीव को परमेश्वर के समीप पहुँचाना तेहि आनन्द में मग्न होना इत्यादि तन्त्रशास्त्र में कथित परमेश्वरकी उपासना की विधि मोक्ष साधन उसके चाही नहीं हैं तेदुष्ट हैं यह भाव है २ ऊँचे कुल में जन्महो जिसको ३ मन में हमेशः परमेश्वर को स्मरण करताहो ४ सबसे भेद करनेवाला न हो ५ जो रोज करना चाही ६ जो किसी लायक वहूं होय विधि उसको नैमित्तिक कर्म्म कही ७ जो किसी कामना के वास्ते कियाजाय ८ जो कर्म्म निंदित न हो उस में रतहो अर्थात् प्रीति समेत शुभ कर्म्म करताहो साइति बड़ा जीवसंकट हो तब मारण मोहन वशीकरणादि करै तबहूं उसमें प्रीति नहीं रहै है तन्त्रको परमप्रयोजन देवोपासना विधि मोक्षसाधन परमेश्वर को ज्ञान है औरको दुःखदेना मारण मोहनादि कर्म्म वर्जित हैं सो सब तन्त्र ग्रन्थोंमें लिखा है कि जो मारण मोहनादि की विधि है सो प्राणसंकट परेपर करने को उपदेश है तहां यह लिखा है कि जो देवता को हठ से किसी कामके लिये जोरता है उससे देवतासे शत्रुता होती है अर्थात् उसका मोक्षक भी नहीं होता ॥

वीर्य्यः पितुर्मातामहस्यच ॥ सोदरस्यगृहस्थस्यवाममार्गेतिवीर्य्यवान् ॥ ७७ ॥ परीक्षेतगुरुःशिष्यंविद्वाद्भिर्लक्षणैर्युतम् ॥ द्वादशाब्दंतदर्धंवातदर्धं वाथदीक्षयेत् ॥ ७८ ॥ गुरुवाक्यप्रमाणज्ञंगुरुशुश्रूषणेरतम् ॥ लज्जाभिमान गर्वादिवर्जितंकुलनायकम् ॥ ७९ ॥ निरपेक्षंगुरुद्रव्येतत्प्रसादाभिकाङ्क्षिण म् ॥ जपध्यानाभिनिरतंमोक्षमार्गाभिगामिनम् ॥ ८० ॥ समाधिसाध नोपेतंशुद्धदेहंचधार्म्मिकम् ॥ दृढव्रतंसदाचारंश्रद्धाभक्तिसमन्वितम् ॥ ८१ ॥ दीनंसत्यमितिस्निग्धभाषिणंसाधुसम्मतम् ॥ अनुकूलप्रियायुक्तं[1]धीरंसर्वोप कारकम् ॥ ८२ ॥ सदैवसुमुखंकुर्य्याच्छिष्यंदैवततुष्टये[2] ॥ दत्त्वादीक्षांतुलोभा द्यैर्देवताशापमाप्नुयात् ॥ ८३ ॥ परशिष्येचेद्वंशेधूर्त्तेपण्डितमानिनि ॥ स्त्री द्विष्टेसामयेत्रस्तेव्यङ्गेदीक्षातुनिष्फला ॥ ८४ ॥ नवेदःप्रणवंत्यक्त्वामन्त्रोवेद समुत्थितः ॥ तस्माद्वेदपरोमन्त्रोवेदाङ्गश्चागमःस्मृतः ॥ ८५ ॥ वश्याकर्षादि कंकर्म्मदृष्टादृष्टफलप्रदम् ॥ वेदेनसाध्यतेसर्वंग्रहयज्ञादिभिःकिल ॥ ८६ ॥ नवेदेनविनायज्ञानवेदायज्ञवर्ज्जिताः ॥ तस्माद्वेदपरोमन्त्रोनावेदोमन्त्रईरि तः ॥ ८७ ॥ नमन्त्रेचाधिकारोस्तिशूद्राणांनियमात्परः ॥ यावन्त्यर्णानिम न्त्राणांशूद्रायप्रतिपादयेत् ॥ ८८ ॥ तावन्त्योब्रह्महत्यास्स्युस्तस्मात्संस्कारव र्जितम् ॥ स्वाहोङ्कारेणरहितंदद्यात्पश्चाच्चतान्त्रिकम् ॥ ८९ ॥ स्वागमोक्ते नमार्गेणस्त्रीशूद्रैरपिपूजनम् ॥ कर्तव्यंसंस्कृतैस्तैश्चस्वागमोक्तेनवर्त्मना ॥ ९० ॥ विधवायाःसुतादेशात्कन्यायाःपितुराज्ञया ॥ भर्त्रैवदीक्ष्यतेभार्य्याय तोऽसौसर्वदागुरुः ॥ ९१ ॥ तथापिपूज्यदेवस्यस्त्रीशूद्राणांनमोन्तकः ॥ नाम मन्त्रइतिज्ञात्वाचाण्डालानपिदीक्षयेत् ॥ ९२ ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्रा पौलस्त्यजातयः ॥ पञ्चधामनवःख्याताःप्रदेयाश्चानुलोमतः ॥ ९३ ॥ मार

---

१ सनेह राखनेवाली प्रसन्नचित्ता स्त्रीसमेत हो २ देवता की प्रीति के लिये भाव है कि ज्ञानको देइ पापोंको क्षयकरै उसका दीक्षा नामहै सो दीक्षाको देना जीवोंको सं से अभय देना है जे दया करिकै संसार में दुःखित जीवोंको मोक्षोपदेश उपासना बताते हैं उनसे देवता हमेशः प्रसन्न रहते हैं जे यह नहीं समझते ते मूर्ख हैं उनका भी वर्जित है उनको शिष्य होनेको को कहै ३ ह्रीं यह एकाक्षर मन्त्र है ॥

बीजंब्राह्मणःस्याच्छ्रीबीजंक्षत्रियःस्मृतः ॥ कामबीजंभवेद्वैश्योवाग्भवंशूद्रई रितः ॥ ९४ ॥ चतुर्बीजपरित्यक्तोमनुःपौलस्त्यसञ्ज्ञकः ॥ हीनवर्णायनोदद्या न्मन्त्रंत्वधिकवर्णकम् ॥ ९५ ॥ आनुष्टुभाश्रयेशक्तिमन्त्रानीलसरस्वती ॥ कल्पोक्तावैदिकाविप्रैर्देयाविन्ध्यनिवासिनी ॥ ९६ ॥ ब्राह्मणैःक्षत्रियैश्चापि देयाःपाशुपतादिभिः ॥ सौदर्शनानारसिंहाःकार्त्तवीर्य्यस्यनान्यतः ॥ ९७ ॥ वर्णत्रयेपिदातव्यंदक्षिणामूर्त्यघोरकम् ॥ ९८ ॥ अष्टाक्षरंहयग्रीवमुमामाहेश्व रंतथा ॥ लक्ष्मीनारायणंवासुदेवतारंवराहकम् ॥ ९९ ॥ अग्निःसूर्य्यघृणेर्य स्तुताराद्याश्चारुणेश्वराः ॥ सर्ववर्णेषुदातव्याः कालिकाश्यामलातथा ॥ १०० ॥ छिन्नमस्ताचमातङ्गीवगलाचोग्रतारिका ॥ योगिनीयक्षपत्नीनांत्रैपु रावटुकादयः ॥ १०१ ॥ शावराश्चपुलस्त्यानिनतथाद्विजजन्मनि ॥ उपास नात्रिधाप्रोक्ताश्रेष्ठातत्रतुसात्त्विकी ॥ १०२ ॥ तस्यांतुमानसीपूजापौजेमुख्य तमास्मृता ॥ राजसोदक्षिणोमार्ग प्रतिमायांचपूजनम् ॥ १०३ ॥ वाक्योप चारैःसकलैस्तदाद्यन्तद्विशिष्यते ॥ तामसोपासनंप्रोक्तंपीठादौबलिदानतः ॥ १०४ ॥ वाममार्गस्ततश्चाद्यवर्णंहित्वाप्रशस्यते ॥ एषापद्यातुसम्प्रोक्तावाम दक्षिणयोःपरा ॥ १०५ गोपितासर्वतन्त्रेषुकिमन्यच्छ्रोतुमिच्छथ ॥ १०६ ॥

इति श्रीमहामायाकालानुमतेमेरुतन्त्रेशिवप्रणीतव्यवस्थाप्रकाशःप्रथमः ॥ १ ॥

---

श्रीदेव्युवाच ॥ शतशोथजनोदेवतन्त्रमार्गेव्यवस्थितः ॥ सिद्धिर्नदृ श्यतेक्वापिकिम्परत्रभविष्यति ॥ १ ॥ यदिकर्म्मप्रधानंचदेवताराधनेनकि म् ॥ देवताराधनंसत्यंसाधकोदुःखितःकथम् ॥ २ ॥ एतन्मेसंशयंछिन्धिकिं चक्रैश्चापिमान्त्रिकैः ॥ संस्काराश्चकथंकार्य्यास्तान्त्रिकाणांवदस्वतत् ॥ ३ ॥ ईश्वरउवाच ॥ गर्भेकर्म्मत्रयंकुर्य्याज्जायमानेतथादश ॥ ततःकर्म्मत्रयंचेति संस्काराःषोडशस्मृताः ॥ ४ ॥ द्विजातीनांतथामन्त्रेकुर्य्यात्कर्म्मत्रयंगुरुः ॥

---

१ श्रीं यह श्रीबीज है २ क्लीं यह काम बीज है ३ ऐं यह वाग्बीज है ४ ह्रीं श्रीं क्लीं ऐं ये चारि बीजों में एको बीज जिस मन्त्र में न हो उसकी पौलस्त्य सञ्ज्ञा है ५ ब्राह्मणवर्ण मन्त्र क्षत्रि- यको क्षत्रियवर्ण वैश्य को वैश्यवर्ण शूद्र को न देना चाहिये ६ ब्राह्मण को ७ छोड़िकै अन्य के लिये वाममार्ग है ब्राह्मणों को हमेशः सतोगुणी वेदविहित कर्म्म करना चाहिये यह भाव है ॥

दशशिष्यस्ततः कुर्य्यात्तिसिद्धेमन्त्रेपुनस्त्रयम् ॥ ५ ॥ षडेवजन्मसंस्काराः प्रोक्ताःस्त्रीशूद्रयोरपि ॥ तथैवमन्त्रसंस्काराःषडेवपरिकीर्त्तिताः॥ ६ ॥ चाण्डालादिषुचत्वारोमन्त्रेप्रोक्तास्तएवहि॥ त्रयोयवनकल्पोक्तास्तन्मन्त्रेष्वपितेत्रयः ॥ ७ ॥ वामदक्षिणभेदेनतेषांकर्त्तव्यतांशृणु ॥ अन्यस्थानेसुरांवामेहोमाद्यर्थं प्रकल्पयेत् ॥ ८ ॥ पाकादिषुचमांसंस्यात्स्त्रैलादौनियमाःस्मृताः ॥ मैथुनं ब्रह्मचर्य्यंचमुद्रातत्कर्म्मकस्तथा ॥ ९ ॥ गर्भाधानंस्वकल्पोक्तवर्त्मनाप्रथमं भवेत् ॥ दक्षिणानामथोवामेद्वितीयाङ्गंसमाचरेत् ॥ १० ॥ सन्तर्पयेदङ्गदेवमन्त्रैर्योनिंचतीर्थतः ॥ अस्याअङ्गेदेवतायामन्त्रन्यासंसमाचरेत् ॥ ११ ॥ सर्वान्न्यासान्स्वस्यदेहेभावयेत्तांचभैरवीम् ॥ स्वयंचभैरवोभूत्वारतिकर्म्मसमाचरेत् ॥ १२ ॥ सुखासनस्थोभगगंध्वेजंकृत्वाजपेदसुम् ॥ मन्त्रंपञ्चसहस्रंचयथेष्टंलभतेसुतम् ॥ १३ ॥ लक्ष्मीप्राणेश्वरीचेतिममपाहिनवाक्षरः ॥ तस्याःसोमेतस्यसौर्य्यंगर्भस्तिष्ठेद्धरातले ॥ १४ ॥ अथद्वितीयसंस्कारः कार्य्यःपुंसवनाभिधः ॥ तृतीयेमासिकुर्व्वीतअथपुंसवनंबुधः ॥ १५ ॥ वेदोक्तप्रोक्तदिवसेस्वकल्पोक्तेनवर्त्मना ॥ तत्रवैदिकमुख्यस्यहोमस्थानेस्वदेवताम् ॥ १६ ॥ जुहुयात्कारणेनैवचतुराहुतिसङ्ख्यया ॥ तदावरणदेवानांपुरुषाणांद्वयंद्वयम् ॥ १७ ॥ एकास्त्रीणांवाममार्गेशेषंपूर्ववदीरितम् ॥ सतीर्थंसपशुंदद्यान्निशायां भैरवंबलिम् ॥ १८ ॥ अथोतृतीयसंस्कारः सीमन्ताख्यःप्रकीर्त्तितः ॥ चतुर्थषष्ठाष्टमेपुमासस्युत्तमध्यमाधमः ॥ १९ ॥ ज्योतिश्शास्त्रोक्तदिवसेस्वकल्पोक्तेनवर्त्मना ॥ वामीतुदेवतामन्त्रंसीमन्तेसुरुचालिखेत् ॥२०॥ न्यासंकुर्य्यात्सद

---

१ लिङ्ग २ श्रीमाणेश्वरि मम पाहि यह मन्त्र पांचहजार जपै ३ उस स्त्री के सोम में उस पुरुष को बीज गर्भ रूप होकर टिकता है अर्थात् यह श्रुति है कि अग्नीषोमात्मकंजगत् ॥ सोम याने चन्द्ररूप स्त्रीका अंशहै सो शक्त्यंश समझना चाहिये सौर्य्य याने तेजोमय अग्निरूप पुरुषांश है ताको शिव समझना चाहिये अर्थात् शिवशक्ति दोऊसे जगत है ॥ अग्निरित्युच्यतेरौद्रीघोरायातैजसीतनुः ॥ सोमात्मकोऽमृतमयःशक्तेःशान्तिकरंवपुः ॥ यह शिवपुराणमें भी कहाहै ४ स्थाप्याइतिशेषः ॥ होमस्थानमें इष्टदेवताकी प्रतिमा धरिकै पूजै ५ इष्टदेवकेजे आवरण देवता हैं ते पुरुषहो तौ दोदो आहुतियां उनके नाममन्त्रसे देवै और जो स्त्रीहों तौ एक एक आहुति आवरण देवताओं को देना चाहिये ॥

ङ्गेपुतन्मन्त्रंरोगहारिणम् ॥ ततोनगच्छेत्तांभार्य्यांदेवताशापभीतितः ॥ २१ ॥ कामेनवाथमोहेन दुःकाले वा विधानतः ॥ अन्यायेन कृतःसङ्गसीमन्तस्तं दधोवहः ॥ २२ ॥ अथतुर्य्यन्तु संस्कारं कुर्य्यात्स्त्रीशूद्रयोरपि ॥ जात कर्म्माभिधंविप्रः स्वकल्पोक्तेनवर्त्मना ॥ २३ ॥ कन्याजन्मनिविप्राणांशूद्र स्यसुतजन्मनि ॥ तूष्णीमेवक्रियांकुर्य्याद्विष्णुस्मरणपूर्वकम् ॥ २४ ॥ वाम मार्गीनकुर्वीतमेधाजननसंस्कृतिम् ॥ किन्तुस्वर्णस्यलेखन्याविलिखेत्करणा ग्रया ॥ २५ ॥ तालुदेशेमूलबीजंरसनायांतथामनुम् ॥ देवतांतर्पयेत्पश्चा दन्यत्कर्म्म तु दक्षवत् ॥ २६ ॥ अथपञ्चमसंस्कारो नामकर्म्माह्वकोध्रुवम् ॥ सर्वेषामेवमुद्दिष्टः सूतकान्तेशुभेदिने ॥ २७ ॥ स्वकल्पोक्तविधानेननामक र्म्मसमाचरेत् ॥ तन्त्रेषुयानिचोक्तानिमात्राचक्राणिषोडश ॥ २८ ॥ विचा र्य्यतानिकुर्वीतनामयत्सफलंभवेत् ॥ नकृतंचेदत्रनामतादृशश्चेद्गुरुस्तदा ॥ २९ ॥ पूर्णाभिषेकेकुर्वीततत्सबीजंनिरूप्यते ॥ यस्मादक्षगुणैः सिद्धिर्विप्रा णांसम्प्रजायते ॥ ३० ॥ ताराचक्रंप्रवक्ष्यामिबालानांमन्त्रसिद्धये ॥ अआहं येइयं मेचईउऊवह्निभेतथा ॥ ३१ ॥ ऋॠऌॡचरोहिण्यांएमृगेशिवभेचऐ ॥ ओऔपुनर्वसौपुष्येककारःसर्प्पभेखगौ ॥ ३२ ॥ पैत्रेघङौभगर्क्षेचआर्य्यम र्क्षेछजौमतौ ॥ हस्तेझञौटठौत्वाष्ट्रेस्वात्यांडोद्वीशभेढणौ ॥ ३३ ॥ तथदाअ नुराधायांज्येष्ठायांधोऽथमूलभे ॥ नपफाः पूर्वापाढायांबकारोभस्तुवैश्वभे ॥ ३४ ॥ मःकर्णेथधनिष्ठायांयरौलःशततारके ॥ वशौतुपूर्वभाद्रायांषसहाःस्यु रुंपान्तिमे ॥ ३५ ॥ ळंक्षंअंअश्चरेवत्यांगण्यामन्त्राक्षरर्क्षतः ॥ साध्यना मानिवर्णर्क्षत्रिरावृत्याफलानितु ॥ ३६ ॥ स्थाननाशःसतांसङ्गोबहुमैत्री मृतेःसमम् ॥ आधिव्याधिमवाप्नोतिसाधकःकार्य्यसिद्धये ॥ ३७ ॥ बहुभिः शत्रुताक्षेपोविपत्तिः सम्पदात्ययः ॥ एतत्तुताराचक्रस्यफलंज्ञात्वाचरेदिद म् ॥ ३८ ॥ तारोक्तमातृकाभिर्भंज्ञात्वासाधकसाध्ययोः ॥ स्त्रीपुंसोर्वाऽव्यत्ययो

---

१ तत् यह अव्ययपदहै स के अर्थ में जानों सो सीमन्त अधोवह याने पतित करने वाला होता है २ जो इष्टदेवके मन्त्र में बीजहो उसका मूलबीज नामहै ३ मन्त्र ४ इष्टदे- वता ५ समारभेत् इतिद्विः ६ अश्विनी ७ भरणी ८ उत्तरापाढ ९ श्रवण १० रेवती में ॥

श्चगणचक्रंविचारयेत् ॥ ३९ ॥ स्थिराणिविमघोग्राणि[2]रौ[3]द्रंनरगणःस्मृतः ॥ ईर्ष्यन्त्यमित्रादित्यैन्द्रंवाय्विज्यकरचोटकाः ॥ ४० ॥ देवाःशेषाराक्षसाः स्युः साध्यसाधकयोःफलम् ॥ नृदेवयोःफलंशीघ्रंव्यस्तयोःकष्टतःफलम् ॥ ४१ ॥ नृदैत्ययोर्मनुग्राह्यव्यस्तयोर्मरणंभवेत् ॥ देवदानवयोर्युद्धंव्यस्तयो र्निष्फलम्भवेत् ॥ ४२ ॥ ग्रहोपग्रहमन्त्रेषुराशिचक्रंविचारयेत् ॥ वेदा रामास्त्रयोयुग्मंयुग्मंयुग्मंवदन्तिपद् ॥ ४३ ॥ षड्वर्गाश्चततःषट्सुनामवर्णस्थ लान्मनोः ॥ भवेद्यत्रादिगोवर्णःफलंतत्रभवेदिदम् ॥ ४४ ॥ इष्टोदासः पोषकश्चरोगकृत्पुत्रदःशुभः ॥ स्त्रीसौख्यकृद्घातकारीभाग्यदःकार्य्यसिद्धि कृत् ॥ ४५ ॥ लाभकृद्व्ययकृच्चेतिप्रोक्तायन्त्रेषुमातृकाः ॥ स्त्रीशूद्रप्रतिलो मानांनाममन्त्रैरुपासना ॥ ४६ ॥ पूर्वोक्ताराशयोज्ञेयामीनाद्याश्चद्विजा दयः ॥ वर्णोत्तमोमनुर्ग्राह्योवैदिकोऽत्रविशेषतः ॥ ४७ ॥ वक्ष्येऽथकौलि केमार्गे सिद्धिकृत्पाञ्चभौतिकम् ॥ वाँय्वग्निभूजलाकाशपञ्चतत्त्वानि विन्यसेत् ॥ ४८ ॥ द्वौद्वौस्वरौ तलेलेख्यायकाराद्यास्ततःपुनः ॥ का दिकाश्चापिषड्वर्गाःशषसाहश्चक्षस्तथा ॥ ४९ ॥ पुनःपुनर्नामलेख्यंम न्त्राक्षरसमोमनुः ॥ तस्मात्पुनर्मनुर्लेख्योयुगपत्स्यात्समापनम् ॥ ५० ॥ यावत्तावल्लिखित्वाथवर्णतत्त्वंविचारयेत्॥स्थाप्यंरूपंत्वेकतत्त्वेमित्रतत्त्वेचतद्द लम् ॥ ५१ ॥ उदासीनेपादमेकंतद्योगःपञ्चभाजितः ॥ इष्टंस्यादथ

---

१ तीनों उत्तरा रोहिणी २ पूर्वाफाल्गुनी पूर्वाषाढा पूर्वभद्रपद भरणी ३ आर्द्रा ४ श्रवण ५ मृगशिरा ६ कृत्तिका धनिष्ठा आश्लेषा चित्रा मूल ज्येष्ठा शतभिषा मघा ७ पांच कोठों में उक्त पांचतत्त्व लिखै उसके नीचे ८ अआ इई उऊ एऐ ओऔ दश स्वर दो दो एक एक कोठामें लिखै फिरि क ख ग घ आदि अक्षर उन्हीं कोठोंके नीचे सात आवृत्ति करिकै लिखै सतई पंक्तिमें औ स्वर के नीचे शून्य आवेगा तब जेहि तत्त्व के नीचे नामके स्वर और वर्णहों सो अलग लिखि लेइ ऐसेही मन्त्रके स्वर और अक्षर जेहि जेहि तत्त्वके नीचेहों सो सब लिखिलेइ एकै तत्त्व में जो अक्षरहो उसकी संख्या एक मित्रतत्त्व में आधा समतत्त्व में चौथाई जोड़िकै पांचको भाग दे शेष अलग लिखै इसको इष्टनाम है पुनि शत्रुतत्त्व में एक सममें आधा मित्रतत्त्व में चौथाई जोड़िकै पांच से भागदे शेषको कष्ट नाम है जेहि मन्त्र के और अपने नामके अक्षर तत्त्व विचारे इष्ट अधिकहो सो मन्त्र लेना उचित है ॥

कष्टंतुशत्रौरूपंसमेदलम् ॥ ५२ ॥ पादोमित्रेतुतद्वत्तुतत्कष्टंस्यात्कलात्मकम् ॥ ५३ ॥ इष्टेधिकेऽल्पकष्टेतुमन्त्रसाधनमाचरेत् ॥ कुर्वन्तिभूतवेतालाःपिशाचाश्चान्यथामनुम् ॥ ५४ ॥ महीसलिलयोर्मैत्रमनलानिलयोरपि ॥ सामान्यमग्निभूम्योस्तुसलिलानिलयोस्तथा ॥ ५५ ॥ शात्रवंवैपरीत्येनचक्रंस्यात्पाञ्चभौतिकम् ॥ सिद्धादिचक्रंवक्ष्येऽहंयज्ज्ञात्वानामकारयेत् ॥ ५६ ॥ दक्षिणोपासनामार्गेस्वमन्त्रंस्वस्यदेवताम् ॥ द्वादशारेतथाचक्रेकूटषण्ढविवर्जितान् ॥ ५७ ॥ आदिक्षान्ताल्लिँखेद्वर्णान्पूर्वतोयावदीश्वरम् ॥ स्वनामाक्षरमारभ्यज्ञेयोमन्त्राक्षरावधिः ॥ ५८ ॥ सिद्धःसाध्यःसुसिद्धोऽरिर्विज्ञेयश्चपुनःपुनः ॥ सिद्धःसिध्यतिकालेनसाध्यःसिध्यतिवानवा ॥ ५९ ॥ सुसिद्धग्रहणादेवरिपुमूलंनिकृन्तति ॥ अथवक्ष्येमहाविद्यासाधनेसिद्धमातृकाम् ॥ ६० ॥ मूलक्रमेणज्ञेयानितत्रकोष्ठानिषोडश ॥ क्रमादेतेषुकोष्ठेषुमातृकार्णान्सुविन्यसेत् ॥ ६१ ॥ कुत्रीष्वङ्ग महीन्द्वब्धिसूर्य्यदिक्षण्नृपात्तृपाः ॥ पञ्चाङ्गतिथिविश्वेचकोष्ठास्तत्रप्रकीर्तिताः ॥ ६२ ॥ आदौज्ञेयाश्चतुष्केषुसिद्धाद्याविदिशासुच ॥ तत्तत्स्थानास्तकोष्ठानुपूर्वाङ्गुल्यागुरूक्तितः ॥ ६३ ॥ सिद्धःसिद्धोजपात्सिद्ध्येत्सिद्धसाध्योद्विसङ्गुणात् ॥ सिद्धःसुसिद्धसम्प्राप्तःसिद्धारिर्हन्तिगोरुजान् ॥ ६४ ॥ साध्यसिद्धोऽतिसंक्लेशात्साध्यसाध्योऽतिदुःखकृत् ॥ साध्यःसुसिद्धोभजनात्साध्यारिःस्वाश्रयंहरेत् ॥ ६५ ॥ सुसिद्धसिद्धोर्धजपाद्बहुरूपाचतत्परः ॥ अतिद्रुतंद्धिःसुसिद्धःसुसिद्धारिःकलापहः ॥ ६६ ॥ अरिसिद्धस्सुतंहन्यादरिसिद्धस्तुकन्यकाम् । अरिःसुसिद्धःपत्नीघ्नोऽथार्य्यरिःसाधकापहः ॥ ६७ ॥ अत्रप्रसिद्धंनामस्यात्प्रयुक्तंयेनजागृवान् ॥ यस्तुबीजात्मकोमन्त्रस्तत्रषड्दलमातृकाः ॥ ६८ ॥ विज्ञेयास्तत्रपद्मंतुरचयेत्षड्दलंशुभम् ॥ तत्रन्यसेन्मातृकार्णान्कूटषण्ढविवर्जितान् ॥ ६९ ॥ स्वस्यनामाक्षरंयत्रतदारभ्यविचारयेत् ॥ सम्पद्दारिद्र्यधैर्य्याणिबन्धुविग्रहसंशयौ ॥ ७० ॥ सर्वनाशःक्रमादेवनामाद्यर्णैश्चकोष्ठतः ॥ कथंमन्त्रस्यासिद्धिस्स्यादेतदर्थमहंब्रुवे ॥ ७१ ॥ धनर्णमातृकांखें[५] पुं[६]षट्[२]न्द्वं[१]ध्यं[४]ङ्क[६]षट्[६]कृं[४]ताः ॥ वक्ष्येऽत्रतुयथालेख्याअङ्काएकादश

स्वराः + ॥ ७२ ॥ तत्तलेकाचदाद्धाचलेख्यावर्णाहरोन्मिताः ॥ तदधोद्धि कुं
समाग्निर्धिसंत्रिंसं सेषुसागराः ॥ ७३ ॥ षट्पञ्चसाधकस्याङ्कामन्त्राङ्काःपूर्व
मीरिताः ॥ स्वरव्यञ्जनभिन्नानांमन्त्राणांनांपृथक्पृथक् ॥ ७४ ॥ अङ्क
योगस्तथाकार्य्यःसाधकस्यतुनामतः ॥ भागशेषावुभौस्थाप्यौयावन्नामाङ्क
तामनोः ॥ ७५ ॥ अधिकास्यात्साधकस्यदेयंमन्त्रस्ससाधितः ॥ तावत्स
ङ्ख्यान्समायोगानसाध्यानपिसाधयेत् ॥ ७६ ॥ हीनांश्चग्रहयोगेनतथा
ऋक्षोपपत्तितः ॥ पुरश्चर्य्यांपुनःकुर्य्यान्मन्त्रसन्दीप्तयेपुनः ॥ ७७ ॥
ऋणीतुसाधकोज्ञेयःसाधकाङ्कोयदाधिकः ॥ यावत्स्यादधिकस्तावत्सङ्ख्या
ङ्कानियदाचरेत् ॥ ७८ ॥ पुरश्चरणसञ्ज्ञानितदास्यसमताभवेत् ॥ पुरश्च
र्य्यांपुनःकृत्वा तदास्यात्कार्य्यसाधकः ॥ ७९ ॥ एकस्मिन्साधिते कार्य्ये
पुनर्यातिसकुण्ठताम् ॥ तावज्जपंपुनःकृत्वाचैककार्य्यक्षमोभवेत् ॥ ८० ॥
योधयोर्विजयार्थंतुप्रसङ्गान्मल्लमातृकाम् ॥ वक्ष्यामितस्याश्चक्रेतुरचयेदेवमे
वहि ॥ ८१ ॥ पञ्चपञ्चाग्निरामाग्निरस्सर्तूग्रमुखानिखम् ॥ भूश्चाथपञ्चस
ल्लेख्यास्तदधःषण्ढवर्ज्जिताः ॥ ८२ ॥ एकादशस्वराश्चान्त्यहीनालेख्याश्चत
त्तले ॥ कचटाद्याल्लिँखेद्वर्णान्ङञणाक्षरवर्ज्जितान् ॥ ८३ ॥ नामाक्षराङ्कयोगस्तु
द्वयोर्योगावशेषितः ॥ तुल्यतायांद्वयोर्योगःकार्य्यश्चास्तावशेषितः ॥ ८४ ॥
स्वंवेदर्तुशरागाग्निभूशेषेष्वग्रतोजयी ॥ समयोरुभयोरत्रमन्त्रंयन्त्रंविनाक
लिः ॥ ८५ ॥ चौरमात्राम्प्रवक्ष्यामिभूपयोर्विजयप्रदाम् ॥ वर्गाष्टकाङ्का

+ बहत्तरिके श्लोकमें अन्त शून्यहै एक शून्य चाहिये अन्तमें काहेसे कि गेरह कोठा लिख कर यह चक्र लिखाजाता है सो अङ्क दशै कहिनि है श्लोक में तेहिते परिशेष से अन्तशून्य जानिये जो कोई अङ्क होता तौ क्यों न कहते गेरह कोठाका चक्र लिखै तिनमें क्रमहीसे अ आ इ ई उ ऊ ए ऐ ओ औ अं गेरह स्वर लिखै नीचे उतनेही कोठोंकी कई पंक्ति बनावै उनमें क ख ग आदि अक्षर क्रमसे लिखै तेहि में मन्त्रके नाम के स्वर अक्षरों की संख्या जोड़िकै नाम के जे अक्षरहों उनसे भागदे शेष अलग लिखै ऐसे ही गेरह कोठोंमें श्लोकोक्त अङ्क लिखि कै नीचेकादि अक्षर और गेरह स्वर लिखै उस चक्रमें नामके अक्षर और स्वरोंके कोठोंकी गिन्ती जोरिकै लिखै नामाक्षर संख्या गिन्ती से भागदे जो शिष्य के अक्षर गिन्तीवाले भाग शेष अधिकहों तौ शुभ १ ऋ ॠ ऌ ॡ इतिषण्ढ सञ्ज्ञकाः अर्थात् ये चारकी षण्ढसञ्ज्ञा है २ दोको नाम है ३ सात को नाम है ॥

वह्नीषुषड्दाङ्केन्दुवह्नयः ॥ ८६ ॥ द्वयोश्चभाजयेद्वर्णान्सप्ततष्टेऽधिकेजयः ॥ तुल्यशेषेवर्गबलाद्वर्गैक्यप्राणवीर्य्यतः ॥ ८७ ॥ मातृकांकलहांवक्ष्येकलौ सर्वजयप्रदाम् ॥ वह्नीन्दुवेदयुग्मेन्दुरङ्काःपञ्चस्वराल्लिँखेत् ॥ ८८ ॥ कादींस्तदधोनामवर्णसंख्याद्वयोस्तुया ॥ पञ्चभक्ताधिकेशेषेजयोहीनेपराजयः ॥ ८९ ॥ कामेरणेवास्त्रीपुंसोर्जयदांमातृकांशृणु ॥ भूपद् पञ्चाग्निवेदाग्निद्विभूखेषुशराःकृताः ॥ ९० ॥ त्रिद्विभूस्तदधोवर्णाल्लिँखेत्कादीन्पुरेरितान् ॥ संगृह्यनामवर्णाङ्कान्मात्राभेदक्रमोदितान् ॥ ९१ ॥ सप्ततष्टेधिकेशेषेजयोहीनेपराजयः ॥ समशेषेविवेकस्तुकुर्य्यात्प्राणाच्चवर्गतः ॥ ९२ ॥ सेनापतिजयार्थन्तुमात्रांशृण्वन्तुदेवताः ॥ रसाग्निलोचनयुगानागपङ्क्तोऽब्धिवह्नयः ॥९३॥ खंभूश्चतदधोलेख्याःस्वराअत्रपुरेरिताः ॥ आद्यास्तदङ्कयोगोत्रहीनेऽष्टाङ्केऽधिकेजयः ॥ ९४ ॥ कादिहान्ताल्लिँखेद्वर्णान्ङञणदवविवर्जितान् ॥ रसाग्निवेदयुग्माङ्कषट्कृताग्नीन्दुशून्यभूः ॥ ९५ ॥ विलिख्याङ्कानधोद्भूतगदिनोरङ्कसम्मितिः॥ तष्टाष्टभिश्चेदधिकागदिनोजीवितम्भवेत् ॥ ९६ ॥ साम्येपूर्ववदित्युक्ताएताःषोडशमातृकाः ॥ विद्यादेतद्गुरुमुखान्नामकर्म्मसमाचरेत् ॥ ९७ ॥ अन्नप्राशनसंस्कारः षष्ठःसार्वजनीयकः ॥ स्वकल्पोक्तविधानेनशूद्राणांनाममन्त्रतः ॥ ९८ ॥ पितरस्तत्रसय्युँक्तावाममार्गेतुभैरवाः ॥ अष्टदेवाश्चचक्रस्यपूजान्तेष्ववशेषितम् ॥ ९९ ॥ सतीर्थसफलंदद्यान्मूलमन्त्रमुदीरयन् ॥ एवंकृतविधानस्यक्षुद्विपत्तिर्नजायते ॥ १०० ॥ अथसप्तमसंस्कारं चौडाख्यंशृणुपार्वति॥सर्वेषामेवमुद्दिष्टंबाल्यपातकनाशनम् ॥ १०१ ॥ बौद्धानांयवनानांचशिखात्रस्थाप्यतेनच ॥ स्त्रीणामपिचकर्त्तव्यंसौभाग्यारोग्यवृद्धये ॥ १०२ ॥ वामेचूडातुकर्त्तव्यामन्त्रबीजसमाःकँचाः ॥ तीर्थेक्षिप्त्वाखनेद्भूमौविशेषोवामिनामिति ॥ १०३ ॥ अथाष्टमंतुसंस्कारंमौञ्जीबन्धमहंब्रुवे ॥ गुरोःसमीपेनयनंतच्चोपनयनंस्मृतम् ॥ १०४ ॥ स्वकल्पोक्तविधानेनतत्कुर्य्याद्ब्रह्मवर्चसम् ॥ वामाचारैर्द्विजैःपूर्वंकर्तव्यंकुलदीक्षणम् ॥ १०५ ॥ पश्चादी

---

१ हारि २ जो सब जनोंको हो उसे सार्वजनीयक कहते हैं ३ बार ॥

क्षातु सावित्र्यान्यत्र्यां सात्पतितो भवेत् ॥ दीक्षातु लघुदैवत्या प्राक्पश्चान्महतस्तथा ॥ १०६ ॥ बृहद्दैवतमन्त्रे तु सिद्धे क्षुद्राः स्वयं वशाः ॥ तेषां ग्राह्या मन्त्र दीक्षा पुरश्चर्य्यां समारभेत् ॥ १०७ ॥ प्रयोगांश्चापि कुर्व्वीत न चेष्टस्य कदाचन ॥ सच्छिष्यं वा सुपुत्रं वा विनेष्टं दापयेन्न च ॥ १०८ ॥ लोभाद्भयाद्वा यो दद्यादन्यस्मै सिद्धमन्त्रकम् ॥ शिष्यस्य जायते सिद्धिर्गुरोः शापः प्रजायते ॥ १०९ ॥ यस्याश्च देवतायाश्च प्रशक्तिर्यत्र यत्र च ॥ तत्तन्मार्गे प्रशक्ता सा स्वविद्या राजवद्भवेत् ॥ ११० ॥ तन्त्राण्यष्टोत्तरशतं मया प्रोक्तानि पार्वति ॥ येन येन तु यत्पृष्टं तस्याधिक्यं तु वर्णितम् । १११ ॥ निष्पक्षपातं वक्ष्यामि मेरुतन्त्रे यथार्थतः ॥ सर्वेभ्यो वैदिकं श्रेष्ठं ततश्च स्मार्तमुत्तमम् ॥ ११२ ॥ ततस्तन्त्रं तु तत्रापि संहिता अर्णवास्ततः ॥ यामलास्तत्स्वङ्गमा च मन्त्रीशानी च ताण्डवम् ॥ ११३ ॥ इन्द्रजालं कक्षपुटी बौद्धं जैनं च शावरम् ॥ क्रमादपचितं ज्ञेयं यथा योग्येन मुख्यता ॥ ११४ ॥ नीचेह्युपास्ये पातः स्यान्नीच उच्चात्पतेद्ध्रुवम् ॥ ज्ञानं दद्याच्च सर्वस्मै स्वाचारात्कर्म्म कुर्व्वते ॥ ११५ ॥ संस्कारं दशमं विद्यात्प्राजापत्यव्रताभिधम् ॥ स्वकल्पोक्तेन मार्गेण वैदिकस्तान्त्रिकः पुनः ॥ ११६ ॥ एतद्व्रतस्य संस्कारे गाणपत्यो मनुः स्मृतः ॥ वक्रतुण्डादिका दक्षे उच्छिष्टाद्यास्तु वामके ॥ ११७ ॥ संस्कारं दशमं सौम्यं व्रतं वैदिक आचरेत् ॥ स्वकल्पोक्तेन मार्गेण तत्स्थाने तान्त्रिकः पुनः ॥ ११८ ॥ गृह्णीयाद्भैरवं मन्त्रं वटुकाख्यस्य वामके ॥ कालभैरवभेदस्य यस्य कस्यापि दक्षिणे ॥ ११९ ॥ पुरश्चर्य्योपासकानां नाशको भैरवो यतः ॥ दरिद्रैः साधकैर्ग्राह्यः स्वर्णाकर्षणभैरवः ॥ १२० ॥ एकादशं तु संस्कारमाग्नेयाख्यं व्रतं द्विजः ॥ कुर्य्याद्गृह्योक्तमार्गेण तस्मिन्स्थाने तु तान्त्रिकः ॥ १२१ ॥ गृह्णीयादङ्गदेवानां मन्त्राना दौ गुरोर्मुखात् ॥ पूजादिमन्त्रास्तच्छिष्टां तद्द्रव्यनियमांस्तथा ॥ १२२ ॥ द्वादशं चापि संस्कारं वैश्वदेवव्रताभिधम् ॥ तस्मिन्स्थाने भवेद्दीक्षा स्वेष्टमन्त्रे तु तान्त्रिके ॥ १२३ ॥ त्रयोदशं तु संस्कारं गोदानाख्यं प्रकीर्तितम् ॥ तत्स्थाने तान्त्रिकः कुर्य्यात्सर्वपापविमोक्षणम् ॥ १२४ ॥

१ उलटा होनेसे २ जो मन्त्र इष्ट को है तेहि इष्टदेव के आवरण पूजामें जे षडङ्ग होइँ तिनके मन्त्र ॥

सत्स्थलेतुसमासीनआदर्शंवाघटोदकम् ॥ संस्थाप्याग्रेसत्यवाचाततःसम्प्रा
र्थयेदिति ॥ १२५ ॥ पुरश्चरणकामोहंपापंक्षयितुमुद्यतः ॥ आपरा
ह्णंजपंकुर्व्वेदेवताःसन्तुसाक्षिणः ॥ १२६ ॥ पृथिव्यप्तेजआकाशवायु
सूर्य्येन्दुभानिच ॥ यावच्छरीरेपापानितिष्ठन्तिममदेवताः ॥ १२७ ॥ ताव
च्चप्रतिबिम्बोमेमलिनाभश्चपातकैः ॥ शान्तेपारदमध्येचयथासन्दृश्यतांत
था ॥ १२८ ॥ शुद्धःसच्चिन्मयोभूत्वाचिन्तयन्पापपूरुषम् ॥ दक्षकुक्षिस्थि
तंकृष्णमङ्गुष्ठपरिमाणकम् ॥ १२९ ॥ विप्रहत्याशिरोयुक्तंकनकस्तेयबाहु
कम् ॥ मदिरापानहृदयंगुरुतल्पकटीयुतम् ॥ १३० ॥ पापसंयोगपद्द्वन्द्व
मुपपातकरोमकम् ॥ दद्रूचर्म्मधरंदुष्टमधोवक्त्रंसुदुस्सहम् ॥ १३१ ॥ एवं
सञ्चिन्तयित्वाथजपंकुर्व्वन्विचिन्तयेत् ॥ क्षीयमाणंपापनरंजपान्तेप्रेक्षये
त्पुनः ॥ १३२ ॥ आदर्शादियथास्वच्छासर्वच्छायाप्रदृश्यते ॥ तदातुनि
र्गतंपापंपुरश्चरणयोग्यता ॥ १३३ ॥ चतुर्दशंतुसंस्कारंसमावर्त्तनमुच्यते ॥
तस्यस्थानेपुरश्चर्य्याकर्तव्यातान्त्रिकैर्जनैः ॥ १३४ ॥ आदौसङ्कल्पपूजां
तुदिनेकृत्वातुकौलिकः ॥ आसायंतुजपंकुर्य्याच्चक्रपूजांतथानिशि ॥ १३५ ॥
शक्तिभिःसहितःपञ्चमकारादिसमन्वितः ॥ एवंसिद्धिमवाप्नोतिनान्यथाजप
कोटिभिः ॥ १३६ ॥ विवाहःपञ्चदशमःसर्वेषांसंविधीयताम् ॥ विधवाया
विवाहन्तुपिप्पलेनैवकारयेत् ॥ १३७ ॥ सर्वपापविनिर्मुक्तासातुविष्णुपदं
व्रजेत् ॥ अब्राह्मणीचचेत्कुर्य्यादन्यमेकंतथापतिम् ॥ १३८ ॥ षोडशः
पितृमेधाख्यःस्वगृह्योक्तेनवर्त्मना ॥ वैदिकस्तान्त्रिकस्तत्रदेवस्थानेस्वदेवता
म् ॥ १३९ ॥ स्थापयित्वाचरेच्छ्राद्धंब्राह्मणामृतपन्थिनः ॥ अथवायज
मानस्यमार्गस्थस्तदभावतः ॥ १४० ॥ आमश्राद्धंप्रकुर्व्वीतवामीतुपलपैतृ
कम् ॥ शक्तियुक्ताद्विजाःकौलमार्गाश्चक्रार्चनेयथा ॥ १४१ ॥ वर्ज्जयेत्तु
लसीन्तत्रभृङ्गराजैर्नपूजयेत् ॥ पाकःकौलिकवस्तूनांपिण्याश्चरुधिरोक्षि
ताः ॥ १४२ ॥ एतैःषोडशसंस्कारैःसंस्कृतःसाधकोत्तमः ॥ जीवन्मुक्तस्त
दाज्ञेयःसामर्थ्येदेवतासमः ॥ १४३ ॥ अथषोडशवक्ष्येहंसंस्कारान्मन्त्रसंस्थि
तान् ॥ शापैर्मन्त्राविमुच्यन्तेयान्कृत्वादेवनिर्मितैः ॥ १४४ ॥ अथादौ

सर्वमन्त्राणांजागृतिःप्रोच्यतेमया ॥ गुरुणासाप्रकर्तव्याशिष्यस्यसिद्धिहेतवे ॥ १४५ ॥ ताराग्निंबीजंविजपेद्यस्मिन्नाग्नेयकस्सतु ॥ अन्यःसौम्यःस्वापकारइडायामग्निरूपिणः ॥ १४६ ॥ सौम्यस्यपिङ्गलायांस्यात्तयोरन्यत्रयागतिः ॥ प्रबोधकालेसञ्जप्तोजागृतोजायतेमनुः ॥ १४७ ॥ अथवासम्पुटीकृत्यलान्तान्नान्तान्सबिन्दुकान् ॥ पुनश्चसविसर्गांस्तांस्त्रिकालंकेवलंजपेत् ॥ १४८ ॥ एवंजप्तोयदीष्टश्चप्रबुद्धःशीघ्रसिद्धिदः ॥ अथ शाबरमन्त्राणांजागृतिंशृणुपार्वति ॥ १४९ ॥ कांस्यभाजनमानीयशुद्धंभस्मादिभिः कृतम् ॥ प्रजपेद्दविरात्रौतुयामेयामेशताष्टकम् ॥ १५० ॥ स्वादियान्तंजपेद्यस्तुकांस्यपात्रंवदेदिति ॥ जागृतोभवमन्त्रत्वंभाषयाथतुरीयके ॥ १५१ ॥ यामेदद्याद्बलिंकांस्येमण्डजंभैरवस्यतु ॥ कुक्कुटंचान्यदेवेषुस्वापयेन्नारिकेलकम् ॥ १५२ ॥ सुरयासुधयापूर्वंदेवादेवाविमोहिताः ॥ यदातदातुभगवान्प्रोवाचमधुसूदनः ॥ १५३ ॥ कःपूज्योभवतांमध्येकःश्रेष्ठस्तन्निगद्यताम् ॥ उन्मत्तास्तुतदादेवाः श्रेष्ठोहमितिचाब्रुवन् ॥ १५४ ॥ किञ्चित्स्मित्वातुभगवान्मोहयन्नात्ममायया ॥ इत्यवोचद्यस्यवाक्यंशापेचानुग्रहेक्षमाम् ॥ १५५ ॥ सएवदेवश्रेष्ठोत्रपूर्वोवाप्यपुरोथवा ॥ इतिश्रुत्वावचोविष्णोः शेपुश्चैवपरस्परम् ॥ १५६ ॥ मन्त्ररूपाण्यतोदेविसंस्कारैः शापमोक्षणम् ॥ विनातुशापमोक्षेण कःसिद्धिंप्राप्नुयाज्जनः ॥ १५७ ॥ श्रीदेव्युवाच ॥ शापःकेनकथंदत्तःशप्तेजप्तेचकिंफलम् ॥ निश्शापत्वंकथंतेषुसिद्धिःस्यादितिमेवद ॥ १५८ ॥ ईश्वरउवाच ॥ आदिमध्यावसानेषुवायुर्यस्यव्यवस्थितः ॥ चतुराद्यश्चैकबीजोनिधायैकत्रसङ्गमः ॥ १५९ ॥ केनापिचसमाक्रान्तोजप्तोमन्त्रश्चयेनवै ॥ कार्त्तिकेयस्यशापात्तुच्छिद्यन्तेऽस्यमनोरथाः ॥ १६० ॥ आदौमध्येऽवसानेवाभूर्बीजयुगलंभवेत् ॥ आदौयद्वाद्विधावत्रीत्रिधामध्यंततोद्विधा ॥ १६१ ॥ रुद्धौशुक्रस्यशापेनभुक्तिमुक्तिविवर्जितौ ॥ जातौमन्त्रौवामदक्षमार्गयोरपिसेवितौ ॥ १६२ ॥

१ तार नाम ओङ्कार का है २ रं यह अग्निबीज है ३ यं यह वायुबीज है ४ लं भूमिबीज है ॥

सौम्ये श्रीश्चैकतमं यत्र बीजं न दृश्यते॥ हुङ्कारो वा समन्त्रस्तु शक्तिहीनः कृतः सुरैः॥ १६३॥ एतादृशश्च सञ्जातः सामर्थ्यं हन्ति मन्त्रिणः॥ शक्तिहीनस्य वामस्य मरणं नात्र संशयः॥ १६४॥ नादो ह्रीं न च मध्ये क्लीं क्रोऽन्ते वा न प्रदृश्यते॥ असौ पराङ्मुखो मन्त्रो जातरूपस्य शापतः॥ १६५॥ पराङ्मुखं भजन्मन्त्रं देवता स्यात्पराङ्मुखी॥ दैवात्कार्येऽपि संसिद्धिर्लोकः स्याच्च पराङ्मुखः॥ १६६॥ आदावन्ते तथा मध्ये हं वा सं वा न दृश्यते॥ बधिरास्ते कृता मन्त्रा देवाचार्येण[1] शापिताः॥ १६७॥ जप्ते तु बधिरे मन्त्रे विस्मृतिस्तस्य जायते॥ जायते बधिरो नूनं महाकालेन भाषितम्॥ १६८॥ सूर्यबीजं हकारः स्याच्चन्द्रबीजं तु सः स्मृतः॥ रेफोऽग्निबीजमुद्दिष्टमेतन्नेत्रत्रयं मम॥ १६९॥ पञ्चाक्षरे यत्र मन्त्रे यत्रैकोऽपि च नास्ति चेत्॥ मम शापान्नेत्रहीनो दुःखशोकामयप्रदः॥ १७०॥ नादौ मध्ये न चान्ते वा हं वा सं वाथ वा यरौ॥ ऐं वा श्रुं वाथ वा हुं वा न मो वाथ मनुः स तु॥ १७१॥ शापेन कीलितो मन्त्रो देवराजेन पार्वति॥ जप्तस्तु कीलितो मन्त्रो न सिद्धिमधिगच्छति॥ १७२॥ मध्ये एको लकारो वा फड्वान्ते लद्वयं यदि॥ फड्द्वयं वा लत्रयं वा न चेत्स्तम्भितो मनुः॥ १७३॥ शापेन भैरवीयेन नास्माद्भवति शोभनम्॥ कदापि देवि दुःखं च प्रायशो बहुलं भवेत्॥ १७४॥ आदौ तु यस्य मन्त्रस्य क्रमात्सप्ताक्षराणि चेत्॥ रेफेण वायकारेण संयुक्तानि मनुस्स तु॥ १७५॥ वाय्वग्निशापसन्धदग्धः साधकं परितापयेत्॥ तस्मात्संस्कारयेद्देवि सिद्धये साधकोत्तमः॥ १७६॥ द्वाभ्यां त्रिभिरथो षड्भिरष्टभिर्वा प्रदृश्यते॥ यदक्षरैरन्तरितः फट्कारः स निगद्यते॥ १७७॥ नारसिंहस्य शापेन त्रस्तः सन्त्रासयेत्सदा॥ स्वप्नादौ साधकं नैव सिद्धिः सन्दृश्यते क्वचित्॥ १७८॥ ॐ वा हं वा सकारो वा नादौ भानोर्मनुः स तु॥ ब्रह्मशापाद्धीनसिद्धिर्भवेदत्यन्तकष्टदः॥ १७९॥ आदिमध्यावसानेषु मिलित्वा मञ्चतुष्टयम्॥ स मन्त्रो मलिनो मायाशापान्मालिन्यकारकः॥ १८०॥ हुआदौ मन्त्रमध्ये वा वान्ते फड्युगलं भवेत्॥ तिरस्कृतो रुद्रशापात्साध्यं कुर्यात्तिरस्कृतम्॥ १८१॥ आदौ तारद्वयं चान्ते

---

१ बृहस्पति २ रोगके देनेवाले ३ इन्द्र॥

वषड्वात्रवरानने ॥ कुटुम्बकलहं कुर्य्याद्बालाशापेन भेदितः ॥ १८२ ॥ हकारेणसकारेणरहितस्त्र्यक्षरस्तुयः ॥ सुपुत्रःसिंहशापेनप्रोक्तोभीष्टफलापहः ॥ १८३ ॥ अष्टादशाक्षरोयोत्रपञ्चफट्कारपूर्वकः ॥ चामुण्डाशापतोजातोमन्दो मत्तोनशोभनः ॥ १८४ ॥ मध्येचेत्पञ्चफट्काराः कालिकाशापत एतु ॥ मूर्च्छितोमूर्च्छितंकुर्य्याद्यामिनंतुविशेषतः ॥ १८५ ॥ एवंमन्त्रेचफट्काराः पञ्चान्तेसतुरम्भया ॥ हतवीर्य्यस्तुशापेनकृतःक्षीणत्वकारकः ॥ १८६ ॥ चत्वारोयत्रफट्काराआदिमध्यावसानिकाः ॥ अष्टादशाक्षरोहीनोहानिर्भैरव शापतः ॥ १८७ ॥ एकोनविंशवर्णश्चेत्क्लींक्रोमोङ्कारसय्युँतः ॥ प्रध्वस्तः कामशापेनध्वंसयेत्कामकारणात् ॥ १८८ ॥ सप्तवर्णोमनुर्बालःकुमारोष्टा क्षरःस्मृतः ॥ षोडशार्णस्तुतरुणःप्रौढोव्योमाब्धिवर्णकः ॥ १८९ ॥ त्रिंशा त्कलाःशतंवेदकाष्ठावर्णास्तुयत्रच ॥ सकृद्धिएतेकालेनशप्ताद्दुःखानिकुर्वते ॥ १९० ॥ नवार्णओङ्कारयुतश्चामुण्डाशापतोमनुः ॥ निर्बीजइतिसंशप्तो नित्यंनैराश्यकारकः ॥ १९१ ॥ निस्त्रिंशःसाधकंछिन्द्यान्निस्त्रिंशेननसंशयः ॥ अन्तेनमोवास्वाहावानास्तिवायस्यमध्यतः ॥ १९२ ॥ वषड्वौपट्हुम्फड्वा प्रोक्तोनैवास्त्यसौमनुः ॥ सेवांकुर्व्वँल्लभेद्देशनाशंवर्षत्रयादितः ॥ १९३ ॥ आदिमध्यावसानेषुफट्काराःसन्तियस्यतु ॥ कौमार्य्यास्तुसशापेनसिद्धिही नोनसिद्धिकृत् ॥ १९४ ॥ दशाक्षरस्तुयोमन्त्रःसगणेशस्यशापतः ॥ मन्दो जप्तस्तुमूर्खत्वंकुर्य्याज्जन्मनिजन्मनि ॥ १९५ ॥ आदौव्यञ्जनसंय्योग एवमेवास्वरोभवेत् ॥ तत्कूटंकूटतोहानिर्मातृकाणांचशापतः ॥ १९६ ॥ द्विवर्णःसत्त्वहीनःस्यादाश्विनेयस्यशापतः ॥ नाशयेत्साधकबलंराज्ञःसेनां विनाशयेत् ॥ १९७ ॥ चतुर्वर्णःकेकरस्तुजातःसर्प्पारिशापतः ॥ जपित्वा केकरंमन्त्रंचक्षुषानैवपश्यति ॥ १९८ ॥ षडक्षराबीजहीनाजातारावणशा पतः ॥ तज्जपाद्वंशवृद्धिर्नचान्यथास्त्रीसुखंनहि ॥ १९९ ॥ सार्धत्रिस प्तसूर्य्याणांधूम्राधूम्रास्यशापतः ॥ तज्जपेव्याकुलंचित्तंजायतेसाधकस्यतु ॥ २०० ॥ विंशत्तथैकविंशच्चत्रिंशद्वर्णस्तुयोमनुः ॥ शप्तआलिङ्गितेनायं जपात्सप्तरतेर्मृतिः ॥ २०१ ॥ द्वाविंशत्यक्षरोमन्त्रःसरस्वत्यास्तुशापतः ॥

मोहितःसाधकंकुर्य्यात्पानादिव्यसनाकुलम् ॥ २०२ ॥ मन्त्रोवरानने यस्तुचतुर्विंशतिवर्णकः ॥ क्षुधार्त्तोराजमातङ्ग्याःशापाद्दारिद्र्यकारकः ॥ २०३ ॥ त्रयोविंशाक्षरोरुद्रवर्णःकोकिलशापतः ॥ मन्त्रोद्दस्तुतेनैवम न्दताजायतेनृणाम् ॥ २०४ ॥ षड्विंशदेकोनत्रिंशत्त्रिंशत्षट्त्रिंशदक्षरः ॥ पूष्णःशापादङ्गहीनःकामनापूरकोनहि ॥ २०५ ॥ अष्टाविंशदेकत्रिंशद्वर्णो नन्दीशशापतः ॥ अतिक्रूरःसाध्यनाशंकृत्वानश्येच्चसाधकः ॥ २०६ ॥ अष्टत्रिंशाक्षरेमन्त्रेमातृकाणांचशापतः॥ अतिक्रुद्धस्तज्जपेनस्वकृतेस्वस्य संशयः ॥ २०७ ॥ चत्वारिंशत्समारभ्यत्रिषष्टिर्यावदक्षरम् ॥ सव्रीडामातृका शापात्सव्रीडास्तस्यसाधकाः ॥ २०८ ॥ धात्रीघ्रतिद्विवृत्यङ्काङ्काकयुग्मद्वि गोकराः ॥ शतत्रयंयत्रवर्णाःशापिताश्छिन्नमस्तया ॥ २०९ ॥ यूयंभवन्तुनि स्नेहाःसाधकानांभयावहाः ॥ निष्कामैर्याजिभिर्जप्याःसंसारस्नेहनाशनाः ॥ २१० ॥ चतुश्शतान्यथारभ्ययावद्वर्णसहस्रकम् ॥ अतिवृद्धायज्ञशापात्पौ ष्टिकादिषुवर्ज्जिताः ॥ २११ ॥ सहस्रार्णाधिकामन्त्रादण्डनेतुस्तुशापतः ॥ दण्डकाख्याःपीडिताश्चतज्जपात्कष्टमाप्नुयात् ॥ २१२ ॥ द्विसहस्राधिकाम न्त्राभार्गवस्यतुशापतः ॥ खण्डीकृतास्सप्तधातेसिद्धिखण्डकराःस्मृताः ॥ २१३ ॥ अन्यच्छृणवन्तुभोदेवामुनीनांजपतांयदा ॥ सिद्धिर्नजातातुतदाद त्तःशापःसुदारुणः ॥ २१४ ॥ आश्वासनंदेवतानांजातंसिद्धेरकारणात् ॥ उपदेशेगुरुःकुर्य्यात्तस्मात्तन्मन्त्रशोधनम् ॥ २१५ ॥ तत्प्रकारंप्रवक्ष्यामिशृ ण्वन्तुसकलाःसुराः ॥ गुरुः[२]सिद्धासनस्थश्चगुदमेढ्रान्तरंदृढम् ॥ २१६ ॥ वामेनपार्ष्णिनापीड्यतस्योपर्य्यूरुविन्यसेत् ॥ पादंतुदक्षिणंगुल्फग्रन्थ्योर न्योन्यमर्दनम् ॥ २१७ ॥ यथास्यात्तत्प्रकर्त्तव्यंततोदक्षिणपार्ष्णिना ॥ लिङ्ग

---

१ पूजा करनेवालों करिकै २ सिद्धासन को लक्षण शिवसंहिता में भी लिखाहै योनिंसम्पीड्ययत्नेनपादमूलेनसाधकः ॥ मेढ्रोपरिपादमूलं विन्यसेद्योगवित्सदा ॥ ऊर्ध्वंनि रीक्ष्यभ्रूमध्यंनिश्चलःसंयतेन्द्रियः ॥ विशेषोऽवक्रकायश्चरहस्युद्वेगवर्जितः ॥ एतत्सिद्धास नंज्ञेयंसिद्धानांसिद्धिदायकम् ॥ यत्नके साथ पादमूल द्वारा योनिको प्रपीड़ित कर अन्य पाद मूल लिङ्गके ऊपर धरै ऊर्ध्वनयन भौंहोंके बीचमें दृष्टिराखै इसको सिद्धासन नामहै सिद्धिका देनेवाला है समकाय होकर इन्द्रिय रोंकिकै ये आसन करै ॥

मूलंविनिष्पीड्यस्थिरकायउपाविशेत् ॥ २१८ ॥ गुदमाकुञ्च्यपवनमपाना ख्यंतदागुरुः ॥ उत्थापयेत्ततःप्राणान्वायुंसम्यग्निरोधयन् ॥ २१९ ॥ आचार्य्यःप्राणयोःकुर्य्यात्संहतिंचैकदहनः ॥ मूलाधारेचित्स्वरूपेकुण्डल्यांवरमात्मनि ॥ २२० ॥ जातदोपस्वस्त्ययनंमण्डपंतत्रचिन्तयेत् ॥ तस्यमन्त्रस्याक्षराणिक्रमादेकैकशस्ततः ॥ २२१ ॥ सुषुम्णायास्तुमार्गेणमूलाधारेप्रवेशयेत् ॥ स्वाधिष्ठानेततश्चक्रेमणिपूरेत्वनाहते ॥ २२२ ॥ विशुद्धआज्ञाचक्रेचभित्त्वाभित्त्वाप्रवेशयेत् ॥ एवंनीत्वाब्रह्मरन्ध्रेसोमस्यमण्डलामृतात् ॥ २२३॥ संसिक्तान्मन्त्रवर्णांस्तुसुधीःसम्यग्विभावयेत् ॥ ततस्तन्मन्त्रमृष्यादिन्यासपूर्वंजपेत्ततः ॥ २२४ ॥ अष्टोत्तरसहस्रंतुतेनशुद्धोभवेन्मनुः ॥ उक्तशापाद्विनिर्मुक्तंपश्चादुपदिशेच्चतम् ॥ २२५ ॥ आशीर्वादफलंस्तोकंपूर्वपापाद्विजंफलम् ॥ वाचिकानांतुशापानांनाशार्थमथोच्यते ॥ २२६ ॥ श्रीपर्ण्यावाचन्दनस्यपीठेचूतादिकस्यवा ॥ कस्तूरीकुङ्कुमाद्यैश्चविलिखेत्पाञ्चभौतिकम् ॥ २२७ ॥ चक्रमावाहयेत्तत्रमातृकाख्यांसरस्वतीम् ॥ यथोक्तविधिनापूजां कृत्वाचाष्टोत्तरंशतम् ॥ २२८ ॥ जपित्वामातृकांतस्यामध्यात्स्वाभीष्टमन्त्रकम् ॥ स्वरव्यञ्जनबिन्दूंश्चसर्गयोगाक्षराणिच ॥ २२९ ॥ पृथक्पृथगथोद्धृत्यचैकीकृत्यगुरूक्तितः ॥ गृहीतंजनयेन्मन्त्रंप्रोक्तंसञ्जननंत्विदम् ॥ २३० ॥ आद्यन्तेप्रणवंकृत्वाप्रणवान्तरितंजपेत् ॥ अष्टोत्तरशतंमन्त्रवर्णानेतत्तुजीवनम् ॥ २३१ ॥ रोचनाकुङ्कुमाभ्यांतुभूर्जपत्रेलिखेन्मनुम् ॥ प्रत्यक्षरंशतावृत्यातारयेच्चन्दनाम्भसा ॥ २३२ ॥ समुच्चरन्वायुबीजमेतत्साधनमुच्यते ॥ कुण्ठिताःशावरामन्त्रास्तान्त्रिकाःसिद्धिकारकाः ॥२३३॥ पूर्वोक्तपीठेसल्लिख्यतन्मन्त्राक्षरसङ्ख्यया ॥ आहार्थ्यकरवीरस्यपुष्पाण्यथसमुच्चरेत् ॥ २३४॥ प्रत्यक्षरंतैःपुष्पैस्तुशतवारंहरेदिति ॥ उच्चरन्वह्निबीजंचबोधनंत्वेतदुच्यते ॥ २३५॥ प्राग्वत्पीठेचतैर्द्रव्यैःपञ्चमष्टदलंलिखेत् ॥ तत्कर्णिकायांमालत्यालिखेत्कलिकयैकया ॥ २३६ ॥ एकैकार्णन्तुमन्त्रस्यतन्मन्त्राक्षरसङ्ख्यया ॥ बोधिद्रुपल्लवांश्चैवगृहीत्वामन्त्रमुच्चरेत् ॥ २३७ ॥ अभिषिञ्चाम्यमुंमन्त्रंनमेज्ञ

१ यं यह वायुबीज है २ रं यह अग्निबीज है ॥

भिषेचयेत् ॥ नानासुगन्धिनोपेतपल्लवैर्यावदक्षरम् ॥ २३८ ॥ एकमष्टोत्तरशत मभिषेकस्त्वयंमतः ॥ अभिषेकोमन्त्रशुद्धिंकुर्य्यान्नूणांयथाजलम् ॥ २३९ ॥ ज्योतिर्मन्त्रशिचन्तनीयोमूलाधारेग्निमण्डले ॥ संस्कर्तव्यंमनोस्तस्यदा ग्ध्यमेवंविभावयेत् ॥ २४० ॥ आननाख्यःसाहजिकआगन्तुःकर्म्मणःस्मृ तः ॥ योगाख्योमायिकःप्रोक्तस्तन्मन्त्रेतुमलत्रयम् ॥ २४१ ॥ ज्योतिर्म न्त्रेणनिर्दग्धमेकमेकंविचिन्तयेत् ॥ एवंतुविमलोजातःस्वमन्त्रइतिचिन्त येत् ॥ २४२ ॥ ज्योतिर्मन्त्रस्तुवेदादिह्रौमितिद्व्यक्षरोमतः ॥ विमलीकरणं त्वेतत्प्रयोगंचापिकारयेत् ॥ २४३ ॥ प्राग्वत्पीठेकुङ्कुमादिद्रव्यैर्मन्त्रंविलेख येत् ॥ ताम्रादिपात्रेकर्पूरवासितेनजलेनच ॥ २४४ ॥ शुद्धेनापूर्य्यविलि खेन्मन्त्रेणाष्टोत्तरंशतम् ॥ अभिमन्त्र्यजलंतेनमन्त्रेणकुशबिन्दुभिः ॥ २४५ ॥ प्रत्यक्षरंप्रोक्षयेत्रिरेतदाप्यायनंस्मृतम् ॥ पुरश्चर्य्याक्लेशितानांसमावर्त्तनव त्त्विदम् ॥ २४६ ॥ कस्तूर्य्याद्यैस्ताम्रपात्रेमध्येमन्त्रंविलेखयेत् ॥ पात्रान्त रेचकर्पूरगुटिकावासितंजलम् ॥ २४७ ॥ गृहीत्वाचार्घ्यपात्रेणपठेन्मन्त्र मिमंमनुम् ॥ तर्प्पयामिनमोन्तेनतर्प्पयेदितितर्प्पणम् ॥ २४८ ॥ ॐह्रींश्रीं पूर्वकंमन्त्रंजपेदष्टोत्तरंशतम् ॥ जपेदेतद्दीपनंस्यात्सर्वमन्त्रेष्वपीष्यते ॥ २४९ ॥ जप्यमानस्यमन्त्रस्यगोपनंत्वप्रकाशनम् ॥ संस्कारादशसम्प्रोक्ताः सर्वतन्त्रेपुगोपिताः ॥ २५० ॥ एवमेकादशप्रोक्ताः संस्कारादशपञ्चच ॥ प्रतिमन्त्रंवक्ष्यमाणाजपोहोमश्चतर्प्पणम् ॥ २५१ ॥ मार्ज्जनंभोजनंचापि द्विजानामिति षोडश ॥ प्रोक्तामन्त्रस्यसंस्काराः किमन्यच्छ्रोतुमिच्छ सि ॥ २५२ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतसंस्कारप्रकाशोद्वितीयः ॥ २ ॥

---

श्रीदेव्युवाच ॥ वाममार्गेकथंदीक्षादक्षिणेचकथंभवेत् ॥ किन्तुत्वाव श्यकंकर्म्मचेतिमेनिर्णयंवद ॥ १ ॥ ईश्वरउवाच ॥ शृणुदेविप्रवक्ष्यामिसर्वत न्त्रेपुगोपितम् ॥ दीक्षाविधिंपञ्चविधंतद्रात्रामुत्तमोत्तमम् ॥ २ ॥ उत्तमंमहदा

१ ॐकार को वेदादि कहते हैं और ॐह्रौं इसको ज्योतिर्मन्त्र जानिये ॥

द्यानांसामान्यानांतुमध्यमम् ॥ ब्राह्मणानामल्पमुक्तंयतीनामपिचाल्पकम् ॥ ३ ॥ तस्मादादौप्रवक्ष्यामितुभ्यंयच्चोत्तमोत्तमम् ॥ यस्मिञ्ज्ञातेचोत्तमादिभेदानांविषयोभवेत् ॥ ४ ॥ तत्रादौमण्डपंकुर्य्यादुत्तमोत्तमकर्म्मणि ॥ स्थलादर्काङ्गुलोच्छ्रायंमण्डपस्थलमीरितम् ॥ ५ ॥ भूमिस्तुखननाच्छोध्यास्वेष्टकुण्डादितस्त्वधः ॥ अस्थिकीटाङ्गारमलादिकहीनंशुभावहम् ॥ ६ ॥ अन्यथातांमृदंत्यक्त्वापूरयेच्छुभयामृदा ॥ ग्रामाद्बहिःस्थयातत्र विप्राद्यैश्चस्ववर्णया ॥ ७ ॥ विस्तीर्णमष्टमांशेनपूजयित्वाप्रचारयेत् ॥ तत्पात्रंयत्रलेख्यायाजलमूर्ध्वंसमागतम् ॥ ८ ॥ एवंसमीकृतायांतुभूमौदिग्बन्धनंचरेत् ॥ सूत्रकर्कटकीलानिगृहीत्वावैनिशान्तरे ॥ ९ ॥ आद्यन्तरन्तसंयुक्तानालिकाधुवबोधिका ॥ याम्योत्तरशरातन्मध्येकेन्द्राद्वृत्तंसमालिखेत् ॥ १० ॥ लेख्यांततोवृत्तमध्येतेनकार्कटिकेनतु ॥ धनुःकुर्य्यात्ततश्चापंधनुःकुर्य्यात्ततःपुनः ॥ ११ ॥ एवंचापानिषट्तत्रपद्मंभवतिषड्दलम् ॥ सौम्ययाम्येत्रयंकृत्वादलानांमध्यदेशतः ॥ १२ ॥ दीर्घालेखाकृतासातुभवेत्पूर्वापराभिधा ॥ याम्यपश्चिमयोस्सौम्यपूर्वयोरुपरिस्थयोः ॥ १३ ॥ चापयोरूर्ध्वगंसूत्रमीशानीराक्षसीभवेत् ॥ अन्ययोश्चापयोरेवमाग्नेयीवायवीभवेत् ॥ १४ ॥ विदिक्संस्थानिसूत्राणिसमान्येवबहिस्ततः ॥ यथेष्टंबहिरानीयनिखनेत्तत्रकीलकान् ॥ १५ ॥ बद्धंचतुर्णांकीलानां मस्तकेदृढसूत्रकम् ॥ समकर्णदिगङ्कंतच्छुद्धंस्याच्चतुरस्रकम् ॥ १६ ॥ गणेशंपूजयित्वादौपुण्याहंवाचयेत्सुधीः ॥ ततःपञ्चनिनादैश्चमण्डपंरचयेच्छुभम् ॥ १७ ॥ मण्डपंकुलदीक्षायांकुर्य्याद्विंशतिहस्तकम् ॥ मध्यमांसपुरन्ध्रीणांसमावेशोयथाभवेत् ॥ १८ ॥ मण्डपोऽष्टादशकरोसिद्धान्तेवाममार्गके ॥ अल्पत्वात्तत्रकुण्डानामधिकेपिसुपञ्चके ॥

१ अर्क अर्थात् बारह अंगुलको ऊँचा चौतरा चौकुण्ठा हो उसपर मण्डप बनावै २ ब्राह्मण क्षत्रिय वैश्य शूद्र चारोंवर्णों को निज निज वर्ण की जमीन में मण्डपस्थल करना उचित है भूमिको वर्णविचार विश्वकर्म्मपद्धति और वास्तुरत्नावली में लिखाहै ॥ उजले रंगकी माटीहो जहां उसको ब्राह्मण वर्ण जानिये लालेरंग की माटीहो सो क्षत्रियवर्ण है पीलेरंग की माटीहो वह वैश्यवर्ण है नीलेरंगकी माटीहो सो शूद्रवर्ण है ॥

१९ ॥ वैदिकेहुतिसामग्र्यांनवकुण्डेतुषोडश ॥ कुण्डाल्पतायासामग्र्या मल्पायांवेदहस्तकः ॥ २० ॥ दक्षिणेबहुसामग्र्यांसूर्य्यहस्तस्तुमण्डपः ॥ अल्पायांदशहस्तःस्यान्नवहस्तःसदाविशाम् ॥ २१ ॥ शूद्राणांसप्तह स्तस्स्यात्सङ्कराणांचपञ्चच ॥ प्रोक्तंमानंमण्डपानांसर्वतन्त्रेषुगोपितम् ॥ २२ ॥ प्रोक्तानानाविधाहस्तास्तन्निर्णयमथोशृणु ॥ यस्मिन्देशेचकालेचस मुत्पन्नायथायवाः ॥ २३ ॥ तेषामष्टोदराणांस्यादङ्गुलंतद्विजन्मनाम् ॥ सप्तो दरैस्तुशूद्राणांसङ्करादौतथा[1]रसैः ॥ २४। अवैदिकस्यविप्रादेरेतत्सङ्ख्याकशा लिभिः ॥ यत्रकर्तास्वयंतत्रमानमेतदतोन्यथा ॥ २५ ॥ आचार्य्यदक्षिणकरे मध्यमाङ्गुलिमध्यगम् ॥ पै[2]र्वणोरन्तरन्दीर्घमात्राङ्गुलमुदाहृतम् ॥ २६ ॥ उ[3]च्छ्रायःप्रतिमायाश्चप्रसादादेश्चनिर्मितः ॥ वेदिकापीठशिबिकारथाद्येत त्प्रमाणतः ॥ २७ ॥ विनाङ्गुष्ठेनशेषाभिर्मुष्टिरङ्गुलिभिःकृतः ॥ चतुर्द्धावि भजेदेकोभागोमुष्ट्यङ्गुलंतुतत् ॥ २८ ॥ होमाङ्गानिस्त्रुवादीनिकुण्डस्थण्डिल वेदिकाः ॥ यज्ञोपवीतमुञ्जादिकुर्य्यान्मुष्ट्यङ्गुलेनतु ॥ २९ ॥ यं[4]कंचित्पौरुषा यामंविभज्यदशधापुनः ॥ एकंद्वादशभागन्तुकृत्वातेष्वेकमङ्गुलम् ॥ ३० ॥ देहलब्धाङ्गुलंनामजानीयात्तस्यतत्पुनः ॥ एभिश्चतुर्विंशतिभिर्हस्तःस्याद ङ्गुलैःपुनः॥ ३१ ॥ अनेनप्रतिमाङ्गानांमानमुन्मानमेवच॥ नराणांचापिनारी णांकुर्य्याद्बोप्यंप्रकाशितम् ॥ ३२ ॥ चतुर्दशकरंकोटिहोमेसम्पत्तिसंयुते ॥ अन्यथाद्वादशकरंलक्षहोमेपु[5]दिक्करम् ॥ ३३ ॥ मण्डपंनवधाकृत्वामध्येभागे ऽस्यवेदिका ॥ स्तम्भास्तुवेदिकायाममण्डपाधोच्छ्रिताबहिः ॥ ३४ ॥ पञ्च मांशंन्यसेद्भूमौपुष्टतां[6]शांशसूत्रतः ॥ मस्तकेकलशाकारंतद्दशांशेनकारये त् ॥ ३५ ॥ स्वायामोनाभवेद्वेदीनवकोष्ठेत्थसन्धिषु ॥ मण्डपस्यतृतीयांश दीर्घास्तम्भान्सुविन्यसेत् ॥ ३६ ॥ द्वादशैवंतुपञ्चांशभूमौकूटंदशांशतः ॥ मध्यस्तम्भस्थितंकूटंमृदङ्गाभंप्रकल्पयेत् ॥ ३७ ॥ बाह्यस्तम्भार्धतोदेयावल

---

१ रस छाको नाम जानिये २ पर्व पोर को नामहै ३ उँचाई ४ जेहिकेहू पुरुष की उँ- चाई नापिकै दश हिस्सा करो एक हिस्से में से बारहवें हिस्से को देहलब्धांगुल नाम है ५ दशहाथ ६ दशमांश ॥

योद्वादशैवहि ॥ दक्षदीक्षाविधौपद्मनिभंकूटंतुकारयेत् ॥ ३८ ॥ त्रिधारंवाम दीक्षायांशङ्खाभंवैष्णवेमुखे ॥ चतुरस्राचतुष्कोणावेदीसर्वफलप्रदा ॥ ३९ ॥ तथाङ्गादिप्रतिष्ठायांपद्मिनीपद्मसन्निभा ॥ राज्ञांस्यात्सर्वतोभद्राचतुर्भद्राभि षेचने ॥ ४० ॥ विवाहेश्रीधरावेदीविंशत्यस्रसमन्विता ॥ वाममार्गेणदीक्षा यांगुप्तात्र्यस्रातुवेदिका ॥ ४१ ॥ स्तम्भानामुपरिस्थाप्यान्यत्रणानिसयूपि च ॥ एकजातीनिपत्राणित्रधास्तम्भगलेन्यसेत् ॥ ४२ ॥ नारिकेलदलैर्वं शकैराच्छादयेत्पुनः ॥ झञ्झामारुतवृष्ट्यादिभयंनस्याद्यथातथा ॥ ४३ ॥ पूर्वोक्तसंसाधितदिक्षुकुर्य्याद्द्वाराणिचत्वारितुमण्डपस्य ॥ पञ्चांशमानाखलुदे हलीस्याद्विधोच्छ्रितेतत्रकपोतशाखे ॥ ४४ ॥ वाममार्गेद्वारमिदंदक्षिणेश्रे ष्ठमण्डपे ॥ कुर्य्याद्देहलिकांरम्यांसार्द्धाङ्गुलकरद्वयाम् ॥ ४५ ॥ मध्यमेमण्डपे कुर्य्यात्सार्धाङ्गुलकरद्वयम् ॥ ४६ ॥ हीनेकरद्वयंतस्यचोच्चताद्विगुणामता ॥ पूर्वद्वाराद्बहिर्हस्तमात्रंत्यक्त्वातुवेश्मतः ॥ ४७ ॥ श्रेष्ठेमध्येकनिष्ठेतुसप्तषट्प ञ्चहस्तकम् ॥ उच्छ्रितंफलकंकुर्य्याद्विस्तृतंतद्गुणाङ्गुलम् ॥ ४८ ॥ तथापञ्चाङ्गु लंस्थूलंविषमंचतुरस्रकम् ॥ वितस्त्याचोन्नताशिखंद्वारस्योभयपार्श्वयोः ॥ ४९ ॥ स्थापयेत्फलकौद्वौतुश्रेष्ठेमध्येकनिष्ठिके ॥ मण्डपेतौदीर्घतायांक्रमा त्सार्धकरद्वयम् ॥ ५० ॥ सपादद्वितयंयुग्महस्तंपञ्चाङ्गकंभुवि ॥ निखनेद ग्निमीडेतिगायत्र्यापार्श्वयोर्द्वयोः ॥ ५१ ॥ तत्सजातीयकाष्ठेनतावद्विस्तार गर्भकम् ॥ चतुरस्रंतुविषमंद्वयोरुपरिकीलयेत् ॥ ५२ ॥ दर्भमालाञ्चबध्नीया त्पूर्वद्वारेविधिस्त्वयम् ॥ एवंतुदक्षिणेद्वारेतद्वारंप्लक्षकाष्ठजम् ॥ ५३ ॥ इषेत्वेतिन्य सेन्मालांबन्धयेत्पूर्ववत्ततः ॥ औदुम्बरमयंकुर्य्यात्पश्चिमद्वारतस्त्विदम् ॥ ५४ ॥ अग्नआयाहिमन्त्रेणप्लक्षजंवैदिकेमखे ॥ प्राग्वदेवंप्रकुर्वीतवटवृक्षमयंतथा ॥ ५५ ॥ शन्नोदेवीतिमन्त्रेणसौम्यदिग्द्वारतोन्यसेत् ॥ तेषामुपरितिर्य्यक्च काष्ठानांमध्यतोबिलम् ॥ ५६ ॥ कृत्वातोरणजातीयकाष्ठेनरचयेच्छुभम् ॥ श्रेष्ठमध्यजघन्येपुशैवयागेत्रिशूलकम् ॥ ५७ ॥ विश्वेशाङ्गाङ्गुलंदीर्घतच्च र्थांशविस्तृतम् ॥ वैष्णवेष्टादशांशेनशङ्खचक्रगदाम्बुजम् ॥ ५८ ॥ प्रागा दिक्रमयोगेनन्यसेत्सौरोपिवैष्णवः ॥ यज्ञेवैमध्यमंशृङ्गंकिञ्चिद्वक्रन्तुपार्श्व

योः ॥ ५६ ॥ एवंशूलोगणपतिःशिवाद्याःशिवजन्मताः ॥ ततस्तुमण्डप
स्याग्रेभूमध्येदशहस्तकः ॥ ६० ॥ भूमौकरद्वयंवंशस्वच्छवस्त्रावकुण्ठितः ॥
विस्तृतश्चैकहस्तेनदीर्घःपञ्चकरैर्द्विजाः ॥ ६१ ॥ मन्त्रदेवंलिखेत्तत्रसायुधञ्च
सवाहनम् ॥ घण्टाचामरसंयुक्तंदेवतावर्णवर्णकम् ॥६२॥ स्थापयित्वाध्वजंतत्र
दशदिक्षुप्रकल्पयेत् ॥ दिगीशानांपताकाश्चध्वजस्यार्धप्रमाणतः ॥ ६३ ॥
वेदोक्ततत्तन्मार्गेणतत्तद्वर्णश्चतद्दिशि ॥ त्रातारमिन्द्रमितिचपीतवर्णाहरेर्दि
शि ॥ ६४ ॥ आग्नेय्यांपिङ्गलीत्वन्नोअग्नेर्वरुणमन्त्रतः ॥ सुगन्नःपन्थामनुना
कृष्णवर्णातुयास्मृता ॥ ६५ ॥ असुन्वन्नेतिमनुनानैर्ऋत्यांधूम्रवर्णिका ॥
तत्त्वायामिब्रह्मणेतिवारुण्यांसितवर्णिका ॥ ६६ ॥ आनोनियुद्भिरितिच
वायव्यांहरिताभवेत् ॥ वयꣳसोमव्रतमितिसौम्यायांचन्द्रवर्णिका ॥ ६७ ॥
तमीशानमितीशान्यामतिश्वेतापताकिका ॥ ईशानपूर्वयोर्मध्येशेषंरक्तपता
किनम् ॥ ६८ ॥ तोयनैर्ऋत्ययोर्मध्येविधिंरक्तपताकिनम् ॥ वाममार्गेवेदम
न्त्रोवज्रपातसमस्स्मृतः ॥ ६९ ॥ ब्राह्मणानांवाममार्गोनरकायैवजायते ॥
मन्त्राभावेनाममन्त्रान्प्रणवाद्यान्हृदन्तकान् ॥ ७० ॥ पठेद्दक्षिणमार्गेतुवामे
प्रणववर्जितान् ॥ मण्डपोपरिबध्नीयादतिश्वेतंवितानकम् ॥ ७१ ॥ अलं
कुर्यात्पुष्पमालादिभिरेवंतुवेष्टयेत् ॥ आम्राश्वत्थदलोत्पन्नयुक्तयादीर्घमाल
या ॥ ७२ ॥ स्तम्भान्दुकूलैस्संवेश्ममध्येकुर्यात्ववेदिकाम् ॥ इष्टिकाभिर
पक्वाभिर्हस्तविस्तृतपिण्डिकाम् ॥७३॥ मण्डपायामरुद्रांशनवसप्तपुरामकैः ॥
अंशैःसमुन्नतांवापितारतम्यंविलोक्यच ॥ ७४ ॥ सामग्र्यादेःसमावेशोय
थास्यादितिमण्डपः ॥ अयुताहुतिहोमस्तुविधेयः स्थण्डिलोपरि ॥ ७५ ॥
एकहस्तमितंकुण्डंदशलक्षावधिस्मृतम् ॥ दक्षिणेदशकेनैकंहस्तंहस्तंविवर्द्ध
येत् ॥ ७६ ॥ दशहस्तेकोटिहोमंवैदिकानामितीरितम् ॥ मद्यमांसादिहोम
स्तुकुण्डएवविधीयते ॥ ७७ ॥ पञ्चाशत्प्रमितेहोमेप्रकोष्ठंकृतमुष्टिकम् ॥
कुण्डस्यमानंभवतिशतेऽरत्निसमंभवेत् ॥ ७८ ॥ सहस्रेहस्तमात्रंस्याद्द्विहस्त
मयुतेमतम् ॥ चतुर्हस्तमितंलक्षेपट्करंदशलक्षके ॥ ७९ कोटिहोमेचाष्टहस्तंकु
ण्डंवामेविधीयते ॥ एककुण्डविधानेतुवह्निभागेभगाकृतिः ॥ ८० ॥ भोगार्थं

चापिकुण्डार्थंकामिनंचतुरस्रवत् ॥ अर्धचन्द्रनिभंयाम्येवैश्यानांसर्वकर्म्मणि ॥ ८१ ॥ अन्येषांमारणेप्रोक्तंचतुष्कुण्डेष्वपीष्यते ॥ त्रिकोणकुण्डंनैर्ऋत्येरिपुघातकरंस्मृतम् ॥ ८२ ॥ विद्वेषकारकंचैतच्छूद्राणाञ्चविशिष्यते ॥ वृत्तंमुख्यंक्षत्रियाणांसर्वेषांशाक्तकर्म्मणि ॥ ८३ ॥ पश्चिमायांतुतत्कार्य्यंबौद्धादीनांचसिद्धिदम् ॥ षट्कोणमुच्चाटपतितच्छेदेषुचविशिष्यते ॥ ८४ ॥ वायव्यांकालयेत्तच्चसङ्कराणांविशिष्यते ॥ उदीच्यांपौष्टिकेकुण्डंवृत्तिदंतुष्टिदंतथा ॥ ८५ ॥ सर्वप्रयोगेष्वनयापरप्रीतिकरंस्मृतम् ॥ अष्टकोणंमुक्तिकरमैशान्यांतद्विधीयते ॥८६॥ कारागृहात्तथारोगाच्चिन्तादेर्मोक्ष्यमाप्नुयात् ॥ अष्टकुण्डीविधानेतुक्रमोऽयंनवकुण्डके ॥ ८७ ॥ नवमंचतुरस्रंस्यात्पूर्वैशानदिगन्तरे ॥ विधानेपञ्चकुण्डीनामीशानेपञ्चमंभवेत् ॥ ८८ ॥ समकुण्डविधानेतुनकार्य्यंवेदिकेबहिः ॥ अन्यदेकंपञ्चकोणमभिचारविनाशनम् ॥ ८९ ॥ तथान्यत्सप्तकोणञ्चकुण्डंभूतनिकृन्तनम् ॥ अथादौचतुरस्रस्यकुण्डस्याविधिरुच्यते ॥ ९० ॥ नाभियोनिसमायुक्तंश्रेष्ठंकुण्डंत्रिमेखलम्॥ द्विमेखलंतुशूद्राणांसङ्कराणांकुमेखलम् । ९१ ॥ यावान्कुण्डस्यविस्तारःखननंतावदेवहि ॥ यावत्कुण्डमिहेष्टंस्याच्चावद्दिक्साधनेकृते ॥ ९२ ॥ चतुरस्रंसमंकुर्य्यात्समकर्णञ्चशिल्पवित् ॥ एकहस्तस्ययत्कर्णोभुजातस्यकाद्वयी ॥ ९३ ॥ द्विहस्तस्यतुकर्णस्यत्रिहस्ताभुजसम्मितिः ॥ चतुर्हस्तादिकेष्वेवंकण्ठःसर्वत्रभूसमः ॥ ९४ ॥ जिनभागसमास्तस्यबहिःकार्य्यास्तुमेखलाः ॥ द्वादशाङ्गुलविस्तारासार्धेषुचतुरङ्गुला ॥ ९५ ॥ तदर्धमपिसादीर्घाष्टाङ्गुलाष्टाङ्गुलोच्चका ॥ चतुर्भिरङ्गुलैर्दीर्घातावदुच्चातदर्धतः ॥ ९६ ॥ दैर्घ्यात्सप्ताङ्गुलायोनिस्त्र्यंशोनाविस्तरेणतु ॥ एकाङ्गुलोच्छ्रितासातुप्रविस्नात्यन्तरेतथा ॥ ९७ ॥ कुम्भद्वयसमायुक्ताचाश्वत्थदलवन्नता ॥ अङ्गुष्ठमेखलायुक्तामध्येचाथघृतिःक्षमा ॥ ९८ ॥ योन्यास्तुपश्चिमेभागेमेखलात्रितयाद्बहिः ॥ चतुरस्रंभवेत्पीठंकुण्डेष्वष्टांशविस्तृतम् ॥ ९९ ॥ तावदेवतथोच्चंचनालंतन्मध्यतोभवेत् ॥ योनिमध्येतुतद्वृत्तंकुण्डेष्वष्टांशमानतः॥ १०० ॥ प्रागाग्नेयाम्यकुण्डानांप्रोक्तायोनिरुदङ्मुखी ॥ शेषापूर्वमुखायोनिःकुण्डयोनिञ्चवर्जयेत् ॥ १०१ ॥ कुण्डमध्येष्टकेन्द्रांस्तुकुर्य्यात्कर्कटकेनतु ॥

प्रसारितेनव्यासोक्तभागतुल्येनतत्परम् ॥ १०२ ॥ पञ्चांशेनतुवृत्तंस्यात्पूर्ववृत्तंतु कर्णिका ॥ कर्णिकाग्रेवाह्यवृत्तात्यन्तरेष्टदलानितु ॥ १०३ ॥ एवंषडङ्गुलोवा स्यान्नाभिर्वेदास्रमीरितम् ॥ इष्टस्यचतुरस्रस्यजिनांशोभागउच्यते ॥ १०४ ॥ सपादैःपञ्चभिर्भागैर्मध्यसूत्रंविवर्धयेत् ॥ प्राच्यामथप्रकुर्य्याच्चचतुर्धाचतुरस्रक म् ॥ १०५ ॥ मध्यतोभ्रामयेत्कर्कटकंपश्चिमसंस्थयोः ॥ अर्धचापाकृतिरुद्ववहि र्दिक्षुतदग्रतः ॥ १०६ ॥ वह्न्यन्तंपातयेत्सूत्रंद्वयोरपितदाभवेत् ॥ एकमेकं त्यजेदंशमथऊर्ध्वंचतन्त्रवित् ॥ १०७ ॥ ज्यासूत्रंपातयेदग्रेतन्मानाद्भ्रामयेत्त तः ॥ अर्धचन्द्रनिभंकुण्डंरमणीयमिदंभवेत् ॥ १०८ ॥ अत्रतद्याम्यपृष्ठंस्यादे कंतन्मार्गणायवै ॥ सौम्यपृष्ठंततोन्यत्रयोनिःपश्चिमदिग्मता ॥ १०९ ॥ आ ग्रंग्राकृतिरस्त्यजेत्कार्य्यंलम्बास्तुल्यास्त्रयोपिच ॥ सान्तरंसर्वतन्त्रेषुप्रोक्तमत्रनिर न्तरम् ॥ ११० ॥ एकहस्तेतुहस्ताद्याभुजाभूद्वादशाचया ॥ द्विहस्तादौत्रयं पञ्चत्रिहस्तेकर्कभूमयः ॥ १११ ॥ चतुर्हस्तेत्रयंचन्द्रःपञ्चहस्तेत्रिगोशराः ॥ षड्ढ स्तेत्र्यब्दरामाश्चनगेत्याकृतिसागराः ॥ ११२ ॥ अष्टहस्तेकृतगज्यादैवीविश्वा मयाग्नयः ॥ वेदानिधृतियुग्मानिदशहस्तभुजास्मृता ॥ ११३ ॥ व्यासार्ध चतुरस्रस्यस्वस्याष्टादशभागयुक् ॥ तावत्कर्कटकाद्वृत्तंवृत्तकुण्डमिहोच्यते ॥ ११४ ॥ रचयेच्चतुरस्रस्यव्यासार्धंनृपभागयुक् ॥ तावत्कर्कटकेनापिकुर्य्याद्वृत्तं मनोहरम् ॥ ११५ ॥ तेनकर्कटमानेनचिह्नषट्कंचपूर्ववत् ॥ कृत्वातत्रभुजांद त्वायन्त्रेभंचंषडस्रवत् ॥ ११६ ॥ इष्टस्यचतुरस्रस्यचतुर्विंशांशकल्पना ॥ कृत्वा तंमध्यतःसूर्य्यभास्वकर्कटकेनतु ॥ ११७ ॥ वृत्तंकुर्य्यात्पुनःसूर्य्यतिथिभागैर्द्वि तीयकम् ॥ दिग्विदिगन्तरालेचसूत्राण्यष्टौप्रपातयेत् ॥ ११८ ॥ ततोन्तर्वृत्त रेखायाईशसूत्राग्रसूत्रतः ॥ रेखांनयेद्वाह्यवृत्तपूर्वसूत्रस्यमूर्द्धनि ॥ ११९ ॥ ततोदक्षिणरेखायामन्तर्वृत्तस्यमूर्द्धनि ॥ तमानयेद्दलंतस्मादेवमष्टदलानि तु ॥ १२० ॥ अंशव्यासार्धकेनापियद्वृत्तंसातुकर्णिका ॥ ततःषडङ्गव्यासार्ध वृत्ततत्केशराणिच ॥ १२१ ॥ व्यासषष्ठांशमानोच्चकर्णिकाकेशराणिच ॥ गुरूक्तयुक्त्यानिखनेद्यथापद्माकृतिर्भवेत् ॥ १२२ ॥ पद्माकृतिम्प्रकुर्वी तकण्ठंमेखलयासह ॥ कार्य्यंतथावालुकाभिश्चतुरस्रंसमंयथा ॥ १२३ ॥

अथेष्टचतुरस्रस्यव्यासः सद्वादशांशयुक् ॥ तेनैव भ्रामयेद्वृत्तं चिह्नान्य त्रदिगष्टके ॥ १२४ ॥ क्रमान्न्यसेत्तदुपरिभुजांदद्यात्समामिति ॥ अ ष्टास्रंजायतेकुण्डंतद्वत्कण्ठश्चमेखलाः ॥ १२५ ॥ इष्टस्यचतुरस्रस्यव्या सार्धस्वनगांशयुक् ॥ तद्व्यासार्धेनवृत्तंस्यात्तत्रचिह्नानिपञ्चतु ॥ १२६ ॥ समभागेन देयानि तेषु सूत्राणि दापयेत् ॥ ज्यारूपाणि धनुर्लोपात्कु ण्डंपञ्चास्रकंभवेत् ॥ १२७ ॥ इष्टस्यचतुरस्रस्यव्यासार्धपञ्चमांशयुक् ॥ भ्रामयेत्तत्रवृत्तंतु सप्तधासकलंतुतत् ॥ १२८ ॥ ख्यातान्यन्यानिकु ण्डानितान्त्रिकस्मार्त्तकर्म्मणि ॥ अनाभिकानिकुण्डानि वियोनीति श्रुतीरितम् ॥ १२९ ॥ आचार्य्यकुण्डंनवमंचतुरस्रन्तुवैदिकम् ॥ अ ष्टाशक्तौतुचत्वारि दिक्षुकुण्डानितान्त्रिके ॥ १३० ॥ तदशक्तावेकमेवचतु रस्रंप्रकल्पयेत् ॥ शक्त्याउपासनेवामपथ्यकंयोनिकुण्डलम् ॥ १३१ ॥ अनेकदोषदंकुण्डंमानन्यूनाधिकंयदि ॥ तस्मात्सम्यक्परीक्ष्येदंकर्त्तव्यंशु भमिच्छता ॥ १३२ ॥ खाताधिकेभवेद्रोगीहीनेधेनुधनक्षयः ॥ वक्रकु ण्डेतुसन्तापोमरणंछिन्नमेखले ॥ १३३ ॥ मेखलारहितेशोकोऽथाधिकेवि त्तसंशयः ॥ भार्य्याविनाशकंकुण्डंप्रोक्तंयोन्याविनाकृतम् ॥ १३४ ॥ अपत्यध्वंसनंप्रोक्तंकुण्डंयत्कण्ठवर्ज्जितम् ॥ शृङ्गाररहितंयच्चकुण्डंजर्जरमेख लम् ॥ १३५ ॥ यजमानविनाशायप्रोद्घातःस्फुटितेभवेत् ॥ सूत्राधि केसुहृद्द्वेषःसूत्रहीनेदरिद्रता ॥ १३६ ॥ अनरेजठरेरोगश्छिद्रेकुण्डेत्ववाच्य ता ॥ यथोक्तकुण्डेप्युत्पातादेवंजातेफलंत्विदम् ॥ १३७ ॥ षड्गुणा ब्धिवह्निनेत्रमितास्स्युःपञ्चमेखलाः ॥ धर्म्मभेदेजातिभेदेचाचार्य्ययजमान योः ॥ १३८ ॥ षष्ठांशेनाष्टमांशेनमेखलाद्वितयंमतम् ॥ कौलिकेवाममार्गेचबौ द्धेजैनेचशाम्बरे ॥ १३९ ॥ एवंकृतेमण्डपेतुवास्तुपीठंसमारभेत् ॥ नूतने तुगृहेकुर्य्यादन्यथोपद्रवोमहान् ॥ १४० ॥ स्मार्त्तेचतान्त्रिकीपूजाद्विवि धासानिगद्यते ॥ वास्तुनामापुराकश्चिद्भूत्वसुरोत्तमः ॥ १४१ ॥ त्रैलोक्यंनिर्जितंतेनत्रिपञ्चाशच्चदेवताः ॥ येरणेसम्मुखेयातास्तेनतेतिनिपी डिताः ॥ १४२ ॥ पुनःपुनर्जितायुद्धेसएवासीत्प्रजापतिः ॥ उवाचवचनं

तुष्टौम्रियतांम्रियतामिति ॥ १४३ ॥ नेन्द्रेणच कुबेरेणममतोषकरंकृतम् ॥ ससैन्येनापितद्युद्धंत्वयातुजटिलेनहि ॥ १४४ ॥ कृतंविष्णुसहायेनपार्वत्यर्धाङ्गहारिणा ॥ तेनाहंतुष्टिमापन्नास्तेषान्तुपरमेश्वरः ॥ १४५ ॥ अदेयंनास्तिमेकिञ्चिच्छ्रावयन्तुत्रयोपिच ॥ इत्याकर्ण्यवचस्तस्यशिवयोर्भ्रूप्रचोदितः ॥ १४६ ॥ हरिःप्राहमहाधन्योदैत्येन्द्रत्वंसमोक्तितः ॥ सत्यंत्रिवारंकुरुष्वतदावाच्योवरोमया ॥ १४७ ॥ शिवेनापिचपार्वत्यादेवएवापरोनहि । त्रिरुवाचतथादैत्यस्तदाविष्णुर्व्यजिज्ञपत् ॥ १४८ ॥ यथातेत्वरितोमृत्युःसउपायःप्रदर्श्यताम् ॥ विष्णोश्छलमितिज्ञात्वादैत्येन्द्रस्तमभाषत ॥ १४९ ॥ अवश्यमेवगन्तव्यंसर्वैःकालमुखेहरे ॥ तथाचस्वप्रतिज्ञार्थयोगच्छतिसजीवति ॥ १५० ॥ परंत्वेकोनमेवंशोयैश्चमत्सेवनंकृतम् ॥ तस्यमार्गंदर्शयित्वादेहोयंविनिपात्यताम् ॥ १५१ ॥ कालेतस्मिंश्चभोदेवावागुवाचाशरीरिणी ॥ दैत्येन्द्रकुरुमाशोकंभुवोजन्मतवाभवत् ॥ १५२ ॥ तत्रैवत्वंलयंयाक्षित्वत्तोषार्थवरंशृणु ॥ येवर्णाःस्वस्यभोगार्थंकरिष्यन्तिनवंगृहम् ॥ १५३ ॥ तत्रत्वदुत्सवमृतेनानादुःखैरुपद्रुताः ॥ कालकर्ण्यादिकादास्योविनायकमुखाश्चते ॥ १५४ ॥ सेवकाःपीडयिष्यन्तिचेत्याज्ञापारमेश्वरी ॥ इत्याकर्ण्यवचस्सोपिगर्तंकृत्वामहाविलम् ॥ १५५ ॥ प्रविवेशततोदेवैर्भृतपाषाणैःप्रपूरितम् ॥ तेनयेनिर्जितादेवाःपुनरुद्गमशङ्कया ॥ १५६ ॥ तस्योर्ध्वन्तुत्रिपञ्चाशन्निवासंचक्रुरुद्यताः ॥ तस्मादवश्यंतेपूज्यागृहेवास्त्वसुखेच्छया ॥ १५७ ॥ शृण्वन्तुतद्विधिन्देवावामदक्षिणमार्गतः ॥ पाषाणेप्रतिमायांवाकुर्य्याद्वास्तोष्यतेतथा ॥ १५८ ॥ प्रतिजानीतिमन्त्रेणतस्यावाहनपूजनम् ॥ नाममन्त्रेणचान्येषांपूजाकृत्वाप्रपूजयेत् ॥ १५९ ॥ नैर्ऋत्यकोणेगेहस्यचतुरस्राकृतिंशुभाम् ॥ कृत्वासमतलांभूमिंवितस्त्युच्चांचवेदिकाम् ॥ १६० ॥ विस्तारायामतोहस्तमात्रांतत्रलिखेद्बुधः ॥ एकाशीतिपदंचक्रंवैदिकस्तत्रदेवताः ॥ १६१ ॥ मध्यकोष्ठेपुनवसुत्वादौब्रह्माणमर्चयेत् ॥ आपवत्सन्तदीशानेप्रागर्य्यमात्रिकोष्ठके ॥ १६२ ॥ आग्नेयेसवितारंचविवस्वन्तमपांत्रिपु ॥ इन्द्रंनैर्ऋत्यदि

ग्भागेमित्रंपश्चिमगंत्रिषु ॥ १६३ ॥ वायव्येराजयक्ष्माणंमुख्यरुंचोत्तरेत्रये ॥ वेदकोष्ठेषुचैशान्यामीशकोणाच्चदेवताः ॥ १६४ ॥ शिखीपर्जन्यआपश्च दितिःप्रोक्ताश्चयोर्द्धयोः ॥ क्रमादेतेपञ्चदेवाज्ञातव्याःसर्वमार्गतः ॥ १६५ ॥ जयन्तेन्द्रौसूर्य्यसत्यवृषाआग्नेयकोणके ॥ अन्तरिक्षंतथावातःपूषासावित्रएवच ॥ १६६ ॥ चतुष्काईशतोदेवास्ततोदक्षिणपञ्चके ॥ युग्मेक्रमाच्चवितथोगृहरक्षयमौतथा ॥ १६७ ॥ गन्धर्व्वाभृङ्गराजश्चनैर्ऋतीस्थचतुष्कके ॥ ईशानीतोजयमृगौपितृदौवालिकौतथा ॥ १६८ ॥ ततःपश्चाद्दिकेपञ्चसुग्रीवःपुष्पदन्तकः ॥ वरुणासुरशेषाश्चवायव्येईशतोबहिः ॥ १६९ ॥ रुद्रश्चपापयक्ष्माचरोगश्चोत्तरपञ्चसु ॥ मुख्योभल्लाटसोमौचभुजङ्गश्चादितिस्तथा ॥ १७० ॥ देवाएतेपञ्चचत्वारिंशदर्च्याश्चभक्तितः ॥ अथतान्त्रिकमार्गेतुचतुष्षष्टिपदेतथा ॥ १७१ ॥ कोणयोःसूत्रयुगलंमध्येब्रह्माणमर्चयेत् ॥ चतुष्कोष्ठेषुतत्पूर्वात्तत्रकोष्ठेद्विकेद्विके ॥ ७१२ ॥ आर्य्यकंचविवस्वन्तंमित्रमन्यंमहीधरम् ॥ सावित्रःसविताशक्रइन्द्रजिद्रुद्रतज्जयौ ॥ १७३ ॥ आपवत्सुरकौचेतिशैव्याःकोलाधकोष्ठयोः ॥ शर्वगुहंचार्य्यमाणंजम्भकंपिलिपिच्छकम् ॥ १७४ ॥ चरकिंचविदारींचपूतनांपूर्वतोयजेत् ॥ ईशानश्चाथपर्जन्योजयन्तःशक्रभास्करौ ॥ १७५ ॥ सत्योवृषोऽन्तकश्चैवपूर्वाशाकोष्ठगाःक्रमात् ॥ अग्निपूषाचवितथोयमोथगृहरक्षकः ॥ १७६ ॥ गन्धर्वभृङ्गराजश्चमृगादक्षिणदिग्गताः ॥ निर्ऋतिश्चाथदौवारिकश्चसुग्रीवकस्तथा ॥ १७७ ॥ वरुणःपुष्पदन्तश्चसुरशेषाख्यरोगकाः ॥ पश्चादथोत्तरेवायुर्नागमुख्यास्ततःपरम् ॥ १७८ ॥ सोमभल्लाटार्य्यमाख्याअदितिर्दितिरुत्तरे ॥ ब्रह्मस्थानंरक्तवर्णदिशपीतैर्विदिक्सितैः ॥ १७९ ॥ ततोदिशस्तुहरितैर्विंशतिःकृष्णवर्णकैः ॥ अरुणापरिधिःकार्यासुन्दरंमन्दरंभवेत् ॥ १८० ॥ व्रीहिमुद्गयवैःक्षौद्रघृतदुग्धप्लुतैःक्रमात् ॥ अष्टोत्तरशतंचाष्टोत्तरविंशतिरेवच ॥ १८१ ॥ प्रत्येकंतैर्हुनेद्द्रव्यैर्येच्चयथाविधि ॥ एवंसिंहगतेभानौपूर्णायांप्रतिवत्सरम् ॥ १८२ ॥ स्वगेहेवारपूजांचमण्डपेषुसमाचरेत् ॥ नाकालमरणंव्याधिर्भूतप्रेतादिभीर्नच ॥१८३ नसर्प्पपीडानान्योन्यकलहाद्यशुभानिच ॥ पुत्रपौत्रधनारोग्यपशुदासीस

च्छिभाक् ॥ १८४ ॥ अरोगीविजयीख्यातश्चिरंजीवतितद्गृहे ॥ राजवेश्म
सुसर्वत्रतथाचमहिषीगृहे ॥ १८५ ॥ सचिवामात्यसेनानीभवनेषु पुरेतथा ॥
विदध्यात्प्रतिवर्षंतुप्रोक्तसिद्ध्यैसुदेशिकः ॥ १८६ ॥ नवाउक्तान्यथारूपफलैः
क्लेशश्चसम्भवेत् ॥ भैरवक्षेत्रपालानांयोगिनीनांविशेषतः ॥ १८७ ॥ वामा
चारैर्बलिःकार्य्योमहिषैर्वापिकुक्कुटैः ॥ आराधितास्तुवामेनजायन्तेतिबुभुक्षि
ताः ॥ १८८ ॥ देवताबलिमिच्छन्तितद्धीनंघ्नन्तिसाधकम् ॥ मद्यमांसप्रम
त्तास्तेप्राक्तनेनप्रचोदिताः ॥ १८९ ॥ कदाचिच्छवमिच्छन्तितस्मात्सद्भिर्न
वामतः ॥ क्रियतेभ्यर्चनंतासांयानंतुनिकटेजने ॥ १९० ॥ यावन्नमद्यमांसा
शीजनस्तावदलोलुपः ॥ भुक्तेतस्मिंस्तन्मनाःस्यात्क्वजपःक्वचदेवताः ॥
१९१ ॥ मद्यमांसादिकत्यागीतस्यवातानिषेवणात् ॥ दृश्यतेतुल्यरूपोयःस
सिद्धोऽन्यस्तुपातकी ॥ १९२ ॥ एवंपरीक्ष्यकर्तव्यासिद्धानामपिसङ्गतिः ॥
अत्रकिंबहुनोक्तेनसर्वनाशस्तुवामतः ॥ १९३ ॥ इतिसञ्चिन्त्यभोदेवाःस्वध
र्म्मःश्रेयसेभवेत् ॥ वास्तुशान्तिंविधायैवंसदसज्ज्ञानहेतवे ॥ १९४ ॥
सप्तभिर्नवभिर्वापिदिनैर्दीक्षादिनात्पुरा ॥ बीजारोपणकर्म्मेदंकर्तव्यंसर्वकाम
दम् ॥ १९५ ॥ मण्डपोत्तरदिग्भागेसुसंवृत्तान्तरेपरे ॥ भवनेमण्डपंकुर्य्याद्
सःप्राग्वरुणायनम् ॥ १९६ ॥ याम्योदीच्ययनंवामदीक्षायांसम्प्रशस्यते ॥ गोम
येनोपलिप्तायांभूमौदक्षेऽथवामके ॥ १९७ ॥ सतैलतण्डुलेनैवसतैलविजयाद्र
वैः ॥ तत्ररेखाःपञ्चकरादीर्घाःकार्य्याश्चपञ्च ॥ १९८ ॥ वितस्त्यन्तरितारुद्ररेखाः
कार्य्यास्तथायताः ॥ चत्वारिंशत्कोष्ठकास्स्युश्चतुर्विंशतिकोष्ठकैः ॥ १९९ ॥
शाव्यक्तैस्तत्रवीथीस्यात्पूरयेद्रक्तचूर्णकैः ॥ पश्चात्कोष्ठचतुष्कंयद्ब्रह्मस्थानंत
दीरितम् ॥ २०० ॥ आग्नेयकोष्ठमारभ्यईशानान्तंप्रपूरयेत् ॥ पीतैरक्तैश्चकृ
ष्णैश्चरजोभिस्सृष्टिमार्गतः ॥ २०१ ॥ कोष्ठद्वयंततोवीथीरक्तेनैवप्रपूरयेत् ॥
विष्णुस्थानंतदग्रेतुज्ञेयंकोष्ठचतुष्टयम् ॥ २०२ ॥ प्राग्वद्रजोभिरापूर्य्यतदग्रेपि
चवीथिकाः ॥ कार्य्याडमरुकाकाराश्चतस्रोविष्णुदेवताः ॥ २०३ ॥ दूर्वाम्र
पल्लवाश्वत्थदलोपेताश्चवेष्टिताः ॥ सूत्रेणविष्णुस्थानस्यचतुष्कोष्ठेनिवेशये
त् ॥ २०४ ॥ वैरञ्च्यःपञ्चमुख्यास्ताःकाष्ठजाःषोडशाङ्गुलैः ॥ आयामोच्छ्राय

दीर्घाख्यैर्युक्ताःपश्चान्निवेशयेत् ॥ २०५ ॥ ब्रह्मस्थानेपल्लवादिसूत्रैःप्राग्वब योजिताः ॥ शैवाःशरावाश्चत्वारोमान्वङ्गुलसमुच्छ्रयाः ॥ २०६ ॥ प्रक्षा ल्यसूत्रैःसंवेष्ट्यप्राग्वदग्न्यादिषुन्यसेत् ॥ शाल्यपुञ्जेषुगन्धादिदर्भकूर्चायनेषु च ॥ २०७ ॥ पूरयेत्तानिपात्राणिबालुकामृत्करीषकैः ॥ शङ्खस्वनेननादै श्चपञ्चभिर्ब्राह्मणाशिवा । २०८ ॥ ततःस्वर्णादिकेपात्रेदशबीजानिवापये त् ॥ वंबीजंजपेन्मन्त्रीदुग्धेनचालयेत्पुनः ॥ २०९ ॥ तानिप्रियङ्गुश्यामाक तिलसर्षपशालयः ॥ मुद्गाढकीस्तुनिष्पावाखल्वामाषाःप्रकीर्तिताः ॥ २१० ॥ ब्रह्मपात्रेतुविकिरेत्प्रथमंवैष्णवेततः ॥ ततःशैवेपञ्चवाद्यब्रह्मघोषपुरस्सरम् ॥ २११ ॥ हरिद्रायैश्चसंसिच्यवस्त्रैराच्छादयेत्ततः ॥ सन्ध्ययोरुभयोश्चैवभूते भ्योयंबलिर्मतः ॥ २१२ ॥ एवंद्वितीयदिवसेपितृभ्यस्तिलमण्डलैः ॥ तृती येसक्तवोलाजायक्षेभ्योदधिसंयुताः ॥ २१३ ॥ शाल्योदनंतिलालाजाःसक्त वःप्रथमेदिने ॥ हरिद्राचूर्णसंयुक्ताभूतेभ्योयंबलिर्मतः ॥ २१४ ॥ नागेभ्यः सक्तवस्तूर्य्यनारिकेलजलप्लुताः ॥ दद्यात्पञ्चाक्षतबलिंपञ्चमेब्रह्मणेमुदा ॥ २१५ ॥ षष्ठेशिवायचापूपयुक्तंभक्तंप्रशस्यते ॥ तत्रौदनंसप्तमेह्निविष्णवेविनि वेदयेत् ॥ २१६ ॥ ब्रह्मस्थानेतुवेतालोमेषस्तस्यबलिःसुराः ॥ विष्णुस्थाने भैरवीस्यादजस्तस्याबलिर्मतः ॥ २१७ ॥ भैरवस्तुशिवस्थानेमहिषंबलि मिच्छति ॥ गौडीमाध्वीचपैष्टीचसुरास्तत्रक्रमान्मताः ॥ २१८ ॥ मत्स्यमां संमद्ययुक्तंभूतेभ्योबलिरिष्यते ॥ पितृभ्यःशशमांसंचयक्षेभ्यःकुक्कुटंमधु । २१९ ॥ भेकोन्दुरबलिर्नागान्नामममार्गबलिस्त्वयम् ॥ एवंगतेषुनवसुदिनेषु चविलोकयेत् ॥ २२० ॥ सम्यक्कस्योद्गमोजातःकिंनष्टंमध्यमंचकिम् ॥ स म्यगभ्युद्गमेसिद्धिःकुण्ठितेविघ्नमाप्नुयात् ॥ २२१ ॥ कीटभुक्तेनास्यफलंस्फु टितेसर्वनाशनम् ॥ सिद्धिःप्रियङ्गुभिर्ज्ञेयाश्यामाकैस्त्रिसुखंभवेत् ॥ २२२ । तिलैःपूज्यजनोल्लासःसर्षपैर्नाभिचारिके ॥ शालिभिःसर्वसम्मानोमुद्गैर्देवत पाभवेत् ॥ २२३ ॥ चतुष्पादास्तथाढक्यांनिष्पावैःक्षेत्रमन्दिरे ॥ खल्वैः त्कर्म्मसिद्धिःस्यान्माषैःशान्तीरणेभवेत् ॥ २२४ ॥ सर्वैस्समुद्गतैर्वामि द्धिःपातस्ततोन्यथा ॥ चैत्रादीक्षाफलंदुःखंप्रतिष्ठारत्नसिद्धये ॥ २२५ ।

हीनतामरणंबन्धुनाशोदुःखंततःक्रमात् ॥ आनन्दोवृद्धिदुःखेथाक्षेपोनिन्दाइतिक्रमात् ॥ २२६ ॥ दारिद्र्यंसर्वज्ञानंचशुभोत्कृष्टत्वसौख्यता ॥ ज्ञानंमेधाविनाशश्चस्वर्णाप्तिर्ज्ञानवर्द्धनम् ॥ २२७ ॥ समृद्धिसिद्धिः श्रेष्ठत्वंमलमासक्षयंत्यजेत ॥ मनस्तापःश्रियःसौख्यंसौख्यंमन्त्रस्यसिद्धयः ॥ २२८ ॥ क्षुद्रदैवतसंसिद्धिःशीघ्रंसिद्धिःशुभामतिः ॥ देवमैत्रीसर्वहानिःकलहश्चमहाभयम् ॥ २२९ ॥ सम्पद्रोगोजयाप्तिसिद्धिःसन्तापस्तापईशिता ॥ सर्वसिद्धिःफलंभानांक्रमाद्वक्ष्येथवामके ॥ २३० ॥ तिथेःफलंबुद्धिनाशःक्रमाज्ज्ञेयाःसुसिद्धयः ॥ [१]गौरीमान्त्रिकाभ्रष्टो[२]विगणेशश्चदुःखिताः ॥ २३१ ॥ सिद्ध्यन्तिमन्त्राःसर्वेपिनसिद्ध्यन्तिकदाचन ॥ समृद्धिर्दुःखसिद्धिश्चमूर्खतागुरुनाशनम् ॥ २३२ ॥ जडतारिष्टनाशश्चसर्वपूर्णंभवेत्फलम् ॥ शुक्लाश्रेष्ठानैवकृष्णाशुभ्राशुभतराहरेः ॥ २३३ ॥ सिद्धिःस्यात्सर्वमन्त्राणांमोक्षंचैवमहाभयम् ॥ सिद्धिर्धातुविशेषेणपुत्रहानिःपितृनृते ॥ २३४ ॥ क्रमाद्वारफलंबुद्धिर्जडतामरणंतथा ॥ नियोगहीनतापुत्राधनाप्तिर्मृत्युरीरिता ॥ २३५ ॥ विष्कुम्भादिकयोगानांनामतुल्यंफलंभवेत् ॥ आनन्दादिकयोगानांसर्वत्राविकलंफलम् ॥ २३६ ॥ विष्टिंविहायकरणेचरेसिद्धिर्द्रुतंभवेत् ॥ सर्वसिद्धिर्विष्टिपुच्छेस्थिरेतुस्थिरताभवेत् ॥ २३७ ॥ अथलग्नफलंदेवाधनंधान्यंसमृद्धयः ॥ राज्यंवादेवतासिद्धिर्हानिर्मेधाविनाशनम् ॥ २३८ ॥ रत्नादिलक्ष्मीलाभश्चधनंधान्यंचसिद्धयः ॥ पूर्णसिद्धिःप्रतापश्चहानिर्विज्ञाननाशनम् ॥ २३९ ॥ पूर्वप्राप्तिर्मन्त्रसिद्धिःपशवोविपुलंधनम् ॥ सदादुःखंतथाहानिर्वामिनांमिथुनंशुभम् ॥ २४० ॥ वामिनांयवनानांचविरुद्धंबहुधाशुभम् ॥ [३]त्रिषडायगताःपापाःशुभाःकेन्द्रत्रिकोणगाः ॥ २४१ ॥ [४]रन्ध्रेमृ

१ तीज तिथि में गौरीजी का मन्त्र लेना शुभ है और देवता का मन्त्रलेनेवाला भ्रष्ट होता है अर्थात् मुक्ति नहीं पाता पतित होता है २ चौथि में गणेश जी का मन्त्र छोडि और मन्त्रलेनेवाले दुःख पाते हैं ३ जेहि लग्न में मन्त्र सुनाना हो उस लग्न से तीसरे छठे गेरहवें घरमें पापग्रह हों अर्थात् सूर्य मङ्गल शनि राहु केतु हों और पहिले चौथे सतयें दशयें घरमें चन्द्र बुध बृहस्पति शुक्र हों या त्रिकोण अर्थात् नवयें पँचयें घर में हों तब मन्त्र लेना ४ अठयें घर में सब ग्रह मृत्यु देनेवाले होते हैं ॥

त्युप्रदाःसर्वेव्ययेखेऽटेरिपौचरुक् ॥ मन्त्रश्चन्द्रबलेग्राह्योऽन्यथास्यादघसम्भवः॥ २४२॥ ताराबलानुरूपेणदेवतायाःकृपाभवेत्॥ धर्म्मदोराज्यदःसिद्धिप्रदोमध्योस्तिनाशकृत्॥ २४३ ॥ प्रातःसङ्गममध्याह्नाःपराह्णंसायमेवच ॥ चन्द्रग्रहेतुदारिद्र्यंसौरेसर्वसमृद्धयः॥ २४४ ॥ गुरावशुभदृष्टेचसिद्धक्षेत्रेसुशोभने॥ २४५॥ आगच्छतिगुरुर्दैवाद्यदादीक्षातदाभवेत्॥ दीक्षादिनात्पूर्वदिनेप्रातःकृत्यंनिवर्त्यच ॥ २४६ ॥ समलंकृत्यदेहंस्वंस्वगृहेपूजनंचरेत्॥ गणेशस्यविधानेनपुण्याहंवाचयेत्ततः ॥ २४७ ॥ नान्दीमुखांस्तर्पयित्वापञ्चवाद्यपुरःसरम्॥ यथोक्तकृतसम्भारोगच्छेद्गुरुगृहंप्रति॥ २४८॥ आचार्य्यमृत्विग्वरणसम्भारोदशधामतः॥ २४९ ॥ श्रीपर्णीवृक्षपीठानिहस्तमानानिमानतः॥अष्टाङ्गुलसमुच्छ्रायसहितानिसमानिच ॥ २५०॥ सप्तविंशतिदर्भाणांवेण्यग्रेग्रन्थिभूषिता ॥ विष्टराःसर्वयज्ञेषुलक्षणंपरिकीर्तितम्॥ २५१॥ सुखोष्णोदकसम्भूताःपाद्यार्थेताम्रगण्डकाः ॥ शङ्खाअर्घ्यप्रदानायगन्धपुष्पजलान्विताः॥ २५२॥ सुताम्रस्यकमण्डल्वआचामोदकपूरिताः ॥ तेयुधामधुपर्कार्थकांस्यादध्यादिपूरिताः ॥ २५३ ॥ महदर्घ्याणिवस्त्राणिमुद्रिकाद्यंसुभूषणम् ॥ मधूलपत्रच्छत्राणिसोष्णीषाणिसमाचरेत्॥ २५४॥ पादुकाश्चाहरेत्तत्रवर्म्माभरणभूषितः॥ कृत्वैतत्फलमप्नोतिमहायज्ञार्हणोपमम्॥ २५५॥ अन्येभ्योमधुपर्केणविप्रेभ्यःपूजनंस्मृतम्॥ भक्त्यातद्द्विगुणंदद्यादाचार्य्यायसुभक्तिमान्॥ २५६ ॥ अन्यैर्द्विजैःसमंयत्रदेशिकस्यप्रपूजनम् ॥ तस्मिन्यज्ञफलंस्वल्पमनावृष्टौयथाक्षितेः॥ २५७॥ एवंगुरुगृहंगत्वाप्रणम्यगुरुपादुके॥ दत्त्वावरणसामग्रींसङ्कल्प्यवृणुयाद्गुरुम्॥२५८॥ उच्चार्य्यमुक्तमन्त्रस्यग्रहणायद्विजोत्तम॥ गुरुत्वेनेतिसम्भाव्यत्वामहंचततोवृणे ॥ २५९ ॥ इत्युक्त्वावृणुयाच्छिष्योवृतोस्मीतिततोगुरुः॥ यथोचितंगुरोकर्म्मकुरुष्वेतिवदेच्छिशुः ॥ २६० ॥ करवाणीतिच

---

१ बारहवें वा छठयें घर में ग्रह होने से रोग होता है २ नान्दीमुख श्राद्ध करि ३ होम करनेवालों का ऋत्विक् नाम है ४ अरणी याने अगेथके काठके पीढ़ा आठअंगुल ऊँचे हाथ भरि लम्बे ५ सत्ताइस कुश एकमें करिकै ऊपर गांठि देइ ६ कुशासन वा कुश समूह ७ तांबे के कोपरा ८ महुवाके पत्तों का छाता ९ सद्गुरुका ॥

चार्य्योगुरेरेवाज्ञयाततः ॥ ब्राह्मणान्वृणुयादष्टौवेदवेदाङ्गपारगान् ॥ २६१॥ तद्देवतोपासकांश्चऋत्विक्केनाथवायदा ॥ चत्वारिकुण्डानितदाचत्वारऋत्विजोमताः ॥ २६२ ॥ ततःशिष्येणसहितोयायाद्यागगृहंगुरुः ॥ उपविश्य चतुद्वारेपरीक्षामारभेत्ततः ॥ २६३ ॥ शिष्यायमूलसञ्जप्तंप्रदद्याद्दन्तधावनम् ॥ दन्तान्विशोध्यपुरतःस्थण्डिलेहस्तमात्रके ॥ २६४ ॥ चैतत्क्षेप्यानयेत्तत्परीक्षेततोगुरुः ॥ तदग्रंयद्दिशासंस्थंतत्रेदंपूर्वतःफलम् ॥ २६५ ॥ भूतिर्हृदयसन्तापोबन्धुनाशस्तथामतिः ॥ शोकश्चव्यग्रतासौख्यंज्ञानलाभःक्रमात्फलम् ॥ २६६ ॥ अमङ्गलस्थानयानप्रायश्चित्तंसमाचरेत् ॥ अष्टाधिकंदहरंवाशतंविंशतिरेववा ॥ २६७ ॥ अस्त्रसम्पुटितेनैषांनाम्नास्वाहान्वितेनच ॥ दोषाञ्जहिजहीत्येवंपदंचैवनमोऽन्तकम् ॥ २६८ ॥ केवलाज्येनजुहुयाद्दुःस्वप्नेचैवमेवहि ॥ दन्तकाष्ठंपुनर्देयंपुनर्दुष्टंचचेत्फलम् ॥२६९॥ तृतीयमपिदुष्टंचेन्नग्राह्यासातुदेवता ॥ वाममार्गेसकृदपिगुरुंशिष्योविनाशयेत् ॥२७०॥ ततःस्वप्नंपरीक्षांचकुर्य्यात्तद्विधिरुच्यते ॥ वैदिकानांदक्षिणानांवैष्णवानांचवामिनाम् ॥ २७१ ॥ यज्जाग्रतोदूरमुदेतिदैवमावृत्यमन्त्रान्प्रयतस्त्रिदेवान् ॥ हविष्यभुग्दक्षिणपार्श्वशायीस्वप्नंपरीक्षेतयथोपदेशम् ॥२७२॥ भगवन्देवदेवेशशूलभृद्वृषवाहन ॥ इष्टानिष्टेसमाचक्ष्वस्वप्नेसुप्तस्ययत्फलम् ॥ २७३ ॥ एवंसुप्तकुशाकीर्णेचैकसुप्तयतमानसः ॥ निशान्तेपश्यतिस्वप्नंशुभंवायदिवाशुभ

---

१ मूल मन्त्र पढ़िकै दतूनदेवै २ चौतरा में ३ चारों दिशा वा कोणों में जहां शिष्य होनेवाला दतून चीरि कै बहावै उसका फल पूर्व दिशा के क्रम से गुरु जानि लेवै भूति अर्थात् ऐश्वर्य्य पूर्व में आग्नेय में हृदय सन्ताप दक्षिण में बन्धुनाश इत्यादि क्रमसे जानो ४ जो दुष्टफलवाली दिशा में दतून पड़ी हो तौ या निषिद्ध स्थान में शिष्य गया हो तौ केवल घीसे स्वाहा देवै प्रायश्चित्तके वास्ते सौ संख्या मूल में स्पष्ट लिखी है ५ फट् अर्थात् अमुकदेव फट्स्वाहा दोषान् जहि जहि नमः यह आहुति देवै को मन्त्र श्लोक से निकसा है एक दफे शिष्य जेहि दिशा में दतून बहावै उसका फल अच्छा न हो तौ तीन दफे तक फिरि दतून देवै जो तीनों दफे अशुभफलवाली दिशा में फेंकै तौ उस देवता का मन्त्र न देवै कि जिस देवता का मन्त्र पढ़िकै दतून दीगई हो ६ यज्जाग्रतोदूरमुदेतिदैवन्तदुसुप्तस्यतथैवैति ॥ दूरंगमंज्योतिषांज्योतिरेकन्तन्मेमनःशिवसङ्कल्पमस्तु ॥ यह मन्त्र पढ़िकै और भगवन्देवदेवेश यह श्लोक मन्त्र है ॥

म् ॥ २७४ ॥ ॐ हृत्सकललोकायविष्णवेप्रभविष्णवे ॥ विश्वेशविश्वरूपायस्व प्नाधिपतयेनमः ॥ २७५ ॥ स्वप्नमानयमन्त्रोयमुपवासीजितेन्द्रियः ॥ दर्भशय्यागतोरात्रौस्वप्नंपश्येद्यथातथा ॥ २७६ ॥ भुक्त्वाशयीतशयनेसुशुद्धेवसुधातले ॥ अर्धरात्रौसमुत्थायपादशौचंविधायच ॥ २७७ ॥ आचम्यदेवंसम्पूज्यतंसंस्मृत्यस्वपञ्चके² ॥ २७८ ॥ शिवदैवतयोरैक्यंभावयेत्तुजपेदिदम् ॥ नमोऽजायत्रिनेत्रायपिङ्गलायमहात्मने ॥ २७९ ॥ वामायविश्वरूपायस्वप्नाधिपतयेनमः ॥ स्वप्नेकथयमेनित्यंसर्वकार्य्यमशेषतः ॥ २८० ॥ क्रियासिद्धिंविधास्यामित्वत्प्रसादान्महेश्वर ॥ दीक्षितोदीक्षितानांचयथास्वप्नेप्रजायते ॥ २८१ ॥ शृण्वन्तुदेवाभोःसर्वेसावधानास्तुतद्विधिम् ॥ पार्थिवेश्वरपूजान्ते रविवर्णंजपेन्मनुम् ॥ २८२ ॥ जुहुयात्तद्दशांशेनबिल्वपत्रैर्घृतप्लुतैः ॥ तर्प्पणंमार्जनंकृत्वाकुर्य्याद्ब्राह्मणभोजनम् ॥ २८३ ॥ सिद्धस्तस्यभवेन्मन्त्रःस्वप्नेवक्तिहृदिस्थितम् ॥ २८४ ॥ तारोहलिद्वयंशूलपाणयेद्विठईरितः ॥ स्वप्नमानयमन्त्रोयंद्वादशाक्षरईरितः ॥ २८५ ॥ स्वप्नेतुप्रथमेयामेवत्सरेतत्फलंभवेत् ॥ षड्भिर्मासैर्द्वियामेतुत्रिभिर्मासैस्त्रियामके ॥ २८६ ॥ चतुर्थेमासमात्रेण प्रातःकालेतुसत्वरम् ॥ स्वप्नेनिद्राफलघ्नीस्यात्स्वभोवाच्योनचान्यथा ॥ २८७ ॥ चिन्ताहृद्गातदीयंयत्तत्फलंनैवविद्यते ॥ वाताधिक्याद्भवेत्स्वप्नस्साहसोद्दानपूर्वकः ॥ २८८ ॥ पित्तात्तेजोग्निपीतादिरक्तंक्रोधादिकंतथा ॥ श्लेष्मणःश्वेतशीतादिशयनाद्यंबलासनम् ॥ २८९ ॥ वातैःप्रातस्त्वङ्गमर्दःपित्तैर्दाहस्तुनेत्रयोः ॥ कफात्प्रवेपतेनित्यंहृद्दद्देबन्धेत्रयंत्रिषु ॥ २९० ॥ सिद्धंवास्वगुरुंदेवंप्रसन्नांचकुमारिकाम् ॥ गङ्गांभागीरथींभानुंलिङ्गिनंलिङ्गमैश्वरम् ॥ २९१ ॥ बालंछत्त्रंरथंदीपंप्रासादंकमलंनदीम् ॥ कुञ्जरंवृषभंमाल्यंसमुद्रंफलितद्रुमम् ॥ २९२ ॥ पर्वतंप्रज्वलद्वह्निमामनांसंसुरासवम् ॥ ग्रहान्भानिविधुंसूर्य्यंरत्नान्याभरणानिच ॥ २९३ ॥ सिंहासनंविमानंचध्वजंत्राद्याभिषेचनम् ॥

---

१ हृत् याने नमः ॥ अर्थात् ॥ ॐनमःसकललोकाय विष्णवे प्रभविष्णवे विश्वेश विश्वरूपायस्वप्नाधिपतयेनमः स्वप्नमानय यह मन्त्र है २ शिर में ३ यह बारह अक्षरका मन्त्र २८५ के श्लोक से निकलताहै ॥ ॐ हलिहलि शूलपाणये स्वाहा स्वप्नमानय यह मन्त्र है ॥

श्वेतचन्दनवस्त्राणिशालयःकुङ्कुमंमधु ॥ २९४ ॥ राजासिद्धार्थकंनार्योनव भाण्डंचपायसम्॥अश्वंफलानिसिद्धान्नंदधिबालंविलासिनम् ॥ २९५॥ दुग्धं वाद्यानिचापंचमयूरंनकुलंमृगम्॥बद्धमेकपरंपुष्पंसद्वाक्यंचक्षुरञ्जनम्॥२९६॥ पूर्णकुम्भंदर्प्पणंचमीनंमद्यंचभोजनम् ॥ शवंरोदनहीनंचपुण्ड्राणिचपताकि का ॥ २९७ ॥ भारद्वाजनृपाणांचवेदशब्दंचगायनम् ॥ कंशामाङ्गल्यगीता निचाङ्कुशंयुद्धदंप्रियम् ॥ २९८ ॥ स्वप्नेदृष्ट्वातुचैतानिसाधकःसिद्धिमाप्नु यात् ॥ व्याध्याद्यार्त्तेनास्तिदुःखंसामान्यःसुखमाप्नुयात् ॥ २९९ ॥ यदाकर्म्म सुकाम्येषुस्त्रियंस्वप्नेषुपश्यति ॥ कामयन्तींनदींसिन्धुंद्विजंश्वेताम्बरन्तथा ॥ ३०० ॥ भास्करोदयनंचैवग्रहणंचन्द्रसूर्य्ययोः ॥ हर्म्यप्रासादनागाश्चवृषशै लाग्निरोहणम् ॥ ३०१ ॥ भोजनंदधिभक्तस्यपक्कमांसस्यभक्षणम् ॥ कृ मिविष्ठानुलेपश्चरुधिरेणाभिषेचनम् ॥ ३०२ ॥ ताम्बूलभक्षणंमद्यपानंद ध्यभिवन्दनम् ॥ प्रचन्द्रकिरणंस्वप्नेकार्य्यसिद्धेसुलक्षणम् ॥ ३०३ ॥ कृष्णा म्बरधरानारीकृष्णगन्धानुलेपना ॥ उपगूहतियंस्वप्नेसारात्रिस्तस्यपश्चिमा ॥ ३०४ ॥ एवन्तुरक्तयाव्याधिःशोकोऽरुणसमानया ॥ नीलयाकलहोहत्यापी तयाकैरदोभवेत् ॥ ३०५ ॥ श्वेताम्बरधरानारीश्वेतमाल्यानुलेपना ॥ उपगू हतियंस्वप्नेतस्यश्रीःसर्वतोमुखी ॥ ३०६ ॥ अशनेशयनेपानेशरीरेवाहनेगृ हे ॥ ज्वलमानेविबुध्येततस्यश्रीःसर्वतोमुखी ॥ ३०७ ॥ सितोरगस्यदंशश्चे ज्जायतेदक्षिणेकरे ॥ दशाहात्सभवेद्रोगीरोगीरोगाद्विमुच्यते ॥ ३०८ ॥ निगडैर्बाहुपाशैश्चबध्यतेवायुतोभवेत् ॥ प्रतिष्ठावर्धतेतस्यदुग्धपानधनात्य यः ॥ ३०९ ॥ सुरांरक्तम्पिबन्विद्यांलभेद्विप्रोधनंपरम् ॥ दध्निदृष्टेभवेत्प्रीति र्गोधूमैश्चधनागमः ॥ ३१० ॥ सिद्ध्याविद्यागमंविद्याल्लाभःसिद्धार्थकैस्त था ॥ दधिलाभोददेदर्थान्घृतलाभाद्ध्रुवञ्जयः ॥ ३११ ॥ घृताशनाद्धनक्ले शोजयस्तुदधिभक्षणात् ॥ लिङ्गानामर्चनन्दृष्ट्वाव्यवहारोत्रजायते ॥ ३१२ ॥ यस्तुमध्येतडागादेर्भुञ्जीतघृतपायसम् ॥ निष्कम्पेपुष्करेपत्रेतंविद्यात्पृथवीप तिम् ॥ ३१३ ॥ देवतालिङ्गिनोगावःपितरोब्राह्मणोनृपः ॥ यंवदन्तिनरंस्व

१ कोड़ा २ देवमन्दिर ३ दण्डपरै ४ लपटाती है ५ उजलेरङ्गका सर्पकाटै ॥

मेतत्तथैवभविष्यति ॥ ३१४ ॥ अन्नैःसंवेष्टयेद्वस्तुग्रामंवानगरन्तथा ॥ ग्रामे मण्डलराज्यंस्यान्नगरेपार्थिवोभवेत् ॥ ३१५ ॥ चन्द्रतारार्कग्रहणंपरिमार्गण मेवच ॥ भूम्यम्बुधीनांग्रसनंशत्रूणांवावधक्रिया ॥ ३१६ ॥ जयोविवादेद्यू तेचशत्रूणाञ्चतथाऽजयः ॥ वडवामहिषीसिंहीगोहस्तिन्यादिदोहनम् ॥ ३१७ ॥ प्रसादोगुरुविप्रेषुदेवसिद्धादिकाच्छुभम् ॥ स्नानंराज्याभिषेकश्च स्वशिरश्छेदनंमृतिः ॥ ३१८ ॥ तीर्थोदकानान्तरणन्तथाविषमलङ्घनम् ॥ गोहस्तिवडवासूतिर्वह्निलाभस्तथैवच ॥ परस्त्र्यालिङ्गनंलोभोतस्यारोदनमे वच ॥ ३१९ ॥ विष्ठालेपःकुन्दजातीबकुलानाञ्चदर्शनम् ॥ रणद्यूतविमर्द्दे षुजयोनिगडबन्धनम् ॥ ३२० ॥ पशुमर्त्यमृगाणाञ्चलब्धिधरध्यासनन्तथा ॥ शिखिलाभःश्वेतवस्त्रंपुष्पचन्दनधारणम् ॥ ३२१ ॥ मणितारसुवर्णादिपात्रे भोजनकन्तदा ॥ पश्येत्तदासाधकस्यज्ञेयासिद्धिरितस्ततः ॥ ३२२ ॥ कार्य्या र्त्तानांकार्य्यसिद्धिरितरेषांधनागमः ॥ वन्ध्याचर्मतुधाग्न्यादिलवणाङ्गारमि न्धनम् ॥ ३२३ ॥ विट्चीवोन्मत्ततैलादिजटिलादिवसौषधम् ॥ रोगीनृणान्तु संन्यासीनग्नस्त्यक्तःक्षुधातुरः ॥ ३२४ ॥ विमुक्तकेशःपतितोभ्यक्तासृक्शर विक्षतः ॥ मार्जारयुद्धंकार्प्पासोगर्भिणीचरजस्वला ॥ ३२५ ॥ गुडस्तक्रञ्च काषायीपङ्कएरण्डकागृहे॥ वस्त्रादिकस्यस्खलनंसुरापशुमलन्तथा ॥ अन्धःकु ब्जोदुर्वचनोबधिरःखञ्जकुब्जकौ ॥ ३२६ ॥ वमनंचघटोरिक्तोरजकोमलिना म्बरः ॥ एतैर्दृष्टैर्नकार्य्यंस्याद्रोगीमृत्युमवाप्नुयात् ॥ ३२७ ॥ अशोकङ्करवीर ञ्चपलाशञ्चापिपुष्पितम् ॥ स्वप्नेपिसलिलन्दृष्ट्वानरःशोकमवाप्नुयात् ॥ ३२८ ॥ रूपान्तरेप्रवेशश्चदक्षिणाशागतिस्तथा ॥ पङ्केनिमज्जनंस्नानंपुत्रभार्य्यावि नाशनम् ॥ ३२९ ॥ गोहस्तिद्विजविप्रादौदृष्टेकृष्णेचशोभनम् ॥ रक्तगन्धा म्बरःस्रग्वीकृष्णोवादक्षिणामुखः ॥ ३३० ॥ खरोष्ट्रमहिषारूढस्त्रिमासन्नस जीवति ॥ स्वप्नेवापिमठेगेहेद्वारंतस्यपिधीयते ॥ ३३१ ॥ नचोत्तिष्ठतियत्त स्मावमतन्तस्यजीवितम् ॥ वांतिमूत्रपुरीषञ्चसन्ताननजननंच्युतिः ॥ शुक्र स्ययस्यचस्वप्नेतस्यायुर्दशमासकम् ॥ ३३२ ॥ बाध्यतेविकृतैःकृष्णैःपुरुषैरुर्ध्वा

---

१ घोड़ीका बियाना २ चमेली ३ सौनश्री ४ मोर ५ चाँदी ६ बस ७ अधोवायु ।

तायुधैः ॥ पाषाणैस्ताड्यतेवापितस्यमृत्युर्नसंशयः ॥ ३३३ ॥ महिषोष्ट्रखरा रूढस्तैलाभ्यक्तश्चमुण्डितः ॥ द[1]क्षिणाशाम्प्रस्थितोयस्तस्यमृत्युर्नसंशयः ॥ ३३४ ॥ पश्येत्प्रासादपतनंगृहस्यशशिसूर्य्ययोः ॥ पर्वतानाञ्चवृक्षाणामधि काराच्युतिर्भवेत् ॥ ३३५ ॥ हानिश्चैवस्वगात्राणांव्याधिताभिभवस्तथा ॥ गृहसम्मार्ज्जनंलेपोगोमयेनमृदापिवा ॥ ३३६ ॥ तीर्त्वानदींसमायातस्ती रेऽन्यद्वसनन्धृतम् ॥ रोगीरोगाद्विमुच्येतहानिःस्वस्थस्यजायते ॥ ३३७ ॥ पुन्नामानो[2]मृगगणाः[3]पोतकीशूकरीतथा ॥ पिङ्[4]गलाछुच्छु[5]ङ्का[6]पल्लीवामाङ्गको किलाःशिवाः ॥ ३३८ ॥ स्त्रीनामानोमृगगणाःश्रीकण्ठो[7]वानरो[8]रुरुः[9] ॥ छिक्करःप्रियंकोभासोदक्षेकाकर्क्षकुक्कुराः ॥ ३३९ ॥ दृष्टाश्चेद्रोगिणोरोगना शःसाधकसिद्धये ॥ स्वस्थस्यधनलाभादिवहुव्यापारशोभनम् ॥ ३४० ॥ त्रिरात्रोयोषितोभूत्वाहविष्याशीपुरोहितः ॥ सं[10]क्षीराणां[11]घृताक्तानांसमिधा नांशतंहुनेत् ॥ ३४१ ॥ पालाशानान्तुगायत्र्याशूद्रःस्नात्वाहविष्यभुक् ॥ दीपन्दद्याद्विप्रगेहेविष्णोर्गेहेशिवालये ॥ ३४२ ॥ एवन्दृष्ट्वाशुभंस्वप्नंगृह्णी यान्मनुमन्यथा ॥ गृहीतेहानिरेवस्याच्चान्यदेवंविचिन्तयेत् ॥ ३४३ ॥ एवंविचार्य्यसततंगुरुपूजांसमारभेत् ॥ विधायाचमनन्तत्र[12]सामान्यार्घ्यंवि धायच ॥ ३४४ ॥ अर्घ्योदकेनसम्प्रोक्ष्यद्वार[13]पूजांसमाचरेत् ॥ ततश्चदे शिकोविघ्नान्दिव्यानास्फोटनेनच ॥ ३४५ ॥ अन्तरिक्षगतानन्तो[14]मन्त्रै

---

१ दक्षिण दिशा २ पुरुष नामवाले ३ कन्या ४ वेश्या ५ छछुंदरी ६ छिपकली ७ नील-कण्ठ ८ मृगविशेष ९ हरिणभेद १० चील्ह ११ दूध घीसे भिगोइकै लकड़ी होमकरै वा गूलरि बरगद पीपर पाकरि इनको क्षीर वृक्ष नाम है इनकी लकड़ी घी में बोरिकै हवन करै १२ छिरकै के वास्ते जो जलपात्रमें धरै उसको सामान्यार्घ्य नामहै १३ द्वारपूजाका प्रकार दीक्षा विधिमें है ॥ सातवार ( ॐफट् ) मन्त्र पढ़िकै द्वारमें जल छिड़कै द्वारेके ऊपर अर्थात् उतरँग में दहिनी ओर ( गं गणपतये नमः ) इस मन्त्रसे गणेशजीकी पूजा करै ॥ बीचमें ( लं लक्ष्म्यै नमः) इससे लक्ष्मीकी पुजा ॥ अन्तमें अर्थात् बाईंओर ( सं सरस्वत्यै नमः ) पढिकै सरस्वती की पूजाकरै द्वारकी दाहिनीबाजू में ( गंगायै नमः ) इससे गंगाकी और उसके समीप ( गं गणेशाय नमः ) इससे गणेशकी तैसेही बाईं बाजूमें (यं यमुनायै नमः) इससे यमुनाकी और ( क्षौं क्षेत्रपालाय नमः) इस मंत्रसे क्षेत्रपालकी पूजाकरै ( ॐ अस्त्रदेवतायै नमः ) यह मन्त्रपढिकै चौखटिके बीच में पूजाकरै १४ बीचमें जे हैं उनको भी निकासै ॐ फट् यह मन्त्र पढिकै ॥

रुत्सारयेत्क्रमात् ॥ पार्थिवान्पार्ष्णिघातैश्च त्रिभिरुत्सारयेत्ततः ॥ ३४६ ॥ अङ्गसङ्कोच्यकिञ्चित्तुशाखांवामगतांस्पृशेत् ॥ उत्सारयेतविघ्नानां ददन्मार्गं तुदक्षिणे ॥ ३४७ ॥ पादेनदक्षिणेनाथ प्रविशेद्योगमण्डपम् ॥ वाममार्गेऽथवाशाक्ते वामपादपुरःसरम् ॥ ३४८ ॥ ब्रह्माणंवास्त्वधीशञ्च नैर्ऋत्यां दिशिपूजयेत् ॥ अर्घ्याम्बुनाचगव्येन योगस्थानेसुसिञ्चयेत् ॥ ३४६ ॥ वीक्षणाद्यैस्ततःशुद्धिं चतुर्धावासमाचरेत् ॥ संवीक्ष्यमूलमनुनास्त्रेणप्रो क्षयेत्ततः ॥ ३५० ॥ कुर्य्यात्ताडनमस्त्रेण कवचेनावसेचयेत् ॥ श्रीखण्डा गुरुमन्त्रैश्चधूपितेऽस्त्रेणसप्तधा ॥ ३५१ ॥ जयाचन्दनसिद्धार्थदूर्वाभ स्माक्षतान्कुशान् ॥ सलाजान्विकरेन्मन्त्रीप्रत्यूहघ्नान्हिमण्डपे ॥ ३५५ ॥ मार्ज्जयेदस्त्रमन्त्रेणतान्मन्त्रीदर्भमुष्टिना ॥ आसनायतुवर्धन्याईशानेस्थाप येच्चतान् ॥ ३५३ ॥ पुण्याहंवाचयित्वाथविप्रान्सन्तोष्ययत्नतः ॥ वेदिकायां लिखेत्पश्चात्सर्वतोभद्रमण्डलम् ॥ ३५४ ॥ शृणुतस्यविधिंश्रौतेस्मार्तेयद्भद्र मिष्यते ॥ धृतिवर्गसमाःकार्य्याःकोष्ठकाश्चतुरस्रकाः ॥ ३५५ ॥ खण्डेन्दुःत्रि पदैःकोणेश्वेतवर्णेनपूजयेत् ॥ कोणस्थैःपञ्चभिःकोष्ठैःशृङ्खलाकृष्णवर्णि का ॥ ३५६ ॥ शृङ्खलोभयतोनीलावल्लीशङ्करकोष्ठका ॥ शृङ्खलोभयतोभद्र मरुणंनवभिःपदैः ॥ ३५७ ॥ वापीजिनपदाश्वेतापीतान्तःपरिधिर्भवेत् ॥

---

१ जे पृथिवी में विघ्नहैं २ पंचगव्य और जल से छिड़कै (ॐफट्) मन्त्र से ३ मूलमन्त्र पढ़िकै मंडपको देवतामयी देखै ४ (ॐफट्) इसका अस्त्रमन्त्र नाम है ५ मंडप में पायें से ठोंकै ६ हुं नमः इस मंत्र से सींचै ७ धृति नाम अठारह उसका वर्ग अठारह को अठारह से गुणने से ३२४ तीनिसौ चौबिस होते हैं इतने कोठा बनावै ॥ उन्नीसरेखा सीधी और उन्नीस रेखा तिरछी खींचे से तीनसौ चौबिस कोठाका चक्र बनजाता है सो चक्रमें गनिलेना कोणों में तीनि कोठा श्वेत चावलों से भरै अर्धचन्द्रसा बनजाता है फिरि बीच में सीधे भीतर तन पांच कोठों में तिलों से पूरिकै श्यामरंग करै ॥ उसका शृंखला नाम है शृंखला के दोऊ तरफ गेरहगेरह कोठा मूँग से पूरै उसका वल्ली नाम है मूल में नीलापद सो हरितरंग का वाचक है ॥ फिरि नवकोठा लालरंगके मसूरकी दाल से भरै उसका भद्र नाम है चौबिस कोठा चावलों से भरै श्वेत रंग उसका वापी नाम है आगेकी पंक्ति चारोंओर के कोठा बीस पीतरंग चनाकी दाल से पूरै परिधिनाम शेष सोरह बीच में श्वेत कमल हैं ॥

मध्येषोडशपद्मंतुरुचिरंवेष्टयेद्बहिः ॥ ३५८ ॥ श्वेतारुणासितैरेवंसर्वतो भद्रमण्डलम् ॥ अथान्यत्सम्प्रवक्ष्यामिकुर्यात्तान्त्रिककर्मणि ॥ ३५९ ॥

तीनिसौपचपनश्लोक से तीनिसौउनसठश्लोकतक वैदिक सर्वतोभद्रचक्र लिखते हैं ॥

| चा | चा | मू | म | म | म | म | म | चा | चा | म | म | म | म | म | मू | चा | चा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| चा | ति | मू | मू | म | म | म | चा | चा | चा | चा | म | म | म | मू | मू | ति | चा |
| मू | मू | ति | म | मू | म | चा | चा | चा | चा | चा | चा | म | मू | मू | ति | मू | मू |
| म | मू | मू | ति | मू | मू | चा | चा | चा | चा | चा | चा | मू | मू | ति | मू | मू | म |
| म | म | मू | मू | ति | मू | मू | चा | चा | चा | चा | मू | मू | ति | मू | मू | म | म |
| म | म | म | मू | मू | ति | मू | मू | चा | चा | मू | मू | ति | मू | मू | म | म | म |
| म | म | चा | चा | मू | मू | पी | पी | पी | पी | पी | पी | मू | मू | चा | चा | म | म |
| म | चा | चा | चा | चा | मू | पी | चा | चा | चा | चा | पी | मू | चा | चा | चा | चा | म |
| चा | चा | चा | चा | चा | चा | पी | चा | चा | चा | चा | पी | चा | चा | चा | चा | चा | चा |
| चा | चा | चा | चा | चा | चा | पी | चा | चा | चा | चा | पी | चा | चा | चा | चा | चा | चा |
| म | चा | चा | चा | चा | मू | पी | चा | चा | चा | चा | पी | मू | चा | चा | चा | चा | म |
| म | म | चा | चा | मू | मू | पी | पी | पी | पी | पी | पी | मू | मू | चा | चा | म | म |
| म | म | म | मू | मू | ति | मू | मू | चा | चा | मू | मू | ति | मू | मू | म | म | म |
| म | म | मू | मू | ति | मू | मू | चा | चा | चा | चा | मू | मू | ति | मू | मू | म | म |
| म | मू | मू | ति | मू | मू | चा | चा | चा | चा | चा | चा | मू | मू | ति | मू | मू | म |
| मू | मू | ति | मू | मू | म | चा | चा | चा | चा | चा | चा | म | मू | मू | ति | मू | मू |
| चा | ति | मू | मू | म | म | म | चा | चा | चा | चा | म | म | म | मू | मू | ति | चा |
| चा | चा | मू | म | म | म | म | म | चा | चा | म | म | म | म | म | मू | चा | चा |

श्वेत रंगकी जगह पर चाउर चा से जानौ तिल से काला मसूर से लाल चना की दाल से पीत मूँगसे हरित रंग जानौ ॥

चक्र के बाहर चावल मसूर तिलों से तीनि रेखा घेरै तेई सत् रज तम गुण हैं ॥

नृपवर्गसमाःकार्याःकोष्ठकाश्चतुरस्रकाः ॥ मध्येपड्वर्गकोष्ठानिमार्ज्जयेत्तत्रसं
लिखेत् ॥३६०॥ आयामद्वादशांशंचबहिस्त्यक्त्वाथमध्यतः ॥ ततोवृत्तत्रयंम
ध्येसमंकुर्य्याद्यथाविधि ॥ ३६१ ॥ कर्णिकामध्यवृत्तेनद्वितीयेनतुकेशरान् ॥
अन्तवृत्तेनपत्राणिपत्राग्रंत्यक्तभागतः ॥३६२॥ किञ्जल्काग्रेषुसंस्थाप्यपार्श्वत
स्त्वर्धचन्द्रकाः ॥ तदग्रेतुत्रिभिःकोष्ठैःपादान्कोणेषुविन्यसेत् ॥ ३६३ ॥ शेषा
णिपीतगात्राणिपरतःपङ्क्तियुग्मकम् ॥ वीथींकुर्य्यान्मार्जयित्वाचतुर्दिक्षुचम
ध्यतः ॥ ३६४ ॥ क्रमादाभ्यांचतुर्भिश्चकोष्ठैर्द्वारचतुष्टयम् ॥ कोष्ठत्रयेणचैके
नप्रत्येकंद्वारपार्श्वयोः ॥ ३६५ ॥ शोभाभवन्त्वतःकोष्ठैरेकतस्त्रिभिरेवच ॥ उप
शोभास्ततःकोष्ठैःषड्भिःकोशानिकल्पयेत्॥३६६॥ शुक्लंतण्डुलचूर्णस्याद्रक्तसे
धायामतस्तथा ॥ अङ्गुलेनसमाःकार्य्याःसीमारेखादलानिच ॥ ३६७॥ पीठ
गात्राणिचद्वारेचतुष्कंतेनपूजयेत् ॥ अविप्रैःपूरणीयानिनक्तेनैवदलान्य
पि ॥ ३६८ ॥ कुसुम्भचूर्णमारक्तंपूरणीयास्तुतेनतु ॥ द्वारशोभाःपीतपादाः
सर्ववर्णैर्विनिश्चयात् ॥ ३६९ ॥ पीतंहरिद्राचूर्णस्यात्पीठगर्भंचकर्णिका ॥
उपशोभाश्चविप्रेणपीतगर्भाश्चकृष्णतः ॥ ३७० ॥ बिल्वपत्रस्यचूर्णोत्थो
हरितस्तेनपूरयेत् ॥ पत्रमूलफलाकारामण्डिताहृदयङ्गमाः ॥ ३७१ ॥ वीथीच
तुष्कमध्येतुकल्पवल्लीःप्रपूरयेत् ॥ सन्धींश्चकल्पवल्लीश्चपीतरक्तेनकेशरान् ॥
३७२ ॥ नानावर्णरजोभिस्तान्रञ्जयेत्कुशलोगुरुः ॥ कृष्णवर्णेनकोणानिब
हीरेखात्रयंततः ॥ ३७३ ॥ शुक्लारुणाख्यकृष्णैस्तुरजोभिर्भूषयेत्क्रमात् ॥ सर्व
तन्त्रेष्विदंप्रोक्तंसर्वतोभद्रमण्डलम् ॥ ३७४ ॥ वक्ष्येथदेवयोनीनांसर्वतोभद्र
मण्डलम् ॥ मार्गेथदक्षिणेतत्रकोष्ठकारविवर्गकाः ॥ ३७५ ॥ प्राग्वदेवतुत
न्मध्येपद्मंषड्भिःपदैःशुभम् ॥ एकपङ्क्त्याभवेत्पीठंद्वारशोभास्वपूर्ववत् ॥ ३७६ ॥
पङ्क्तिःकोष्ठैस्तुकोशानिरञ्जितव्यंचपूर्ववत् ॥ पीठपादाःपरिधयःपद्माद्यंपूर्ववन्म
तम् ॥ ३७७ ॥ वाममार्गेमण्डलंस्यात्कोष्ठैरष्टकवर्गकैः ॥ चतुर्भिःपङ्कजंमध्ये
तद्बाह्येवीथिकातुवा ॥ ३७८ ॥ कल्पवल्लीसमायुक्तातत्पद्मंसर्वदेवहि ॥ दिक्
चतुष्केतुपद्मानिचतुर्भिःकोष्ठकैश्चरेत् ॥ ३७९ ॥ विदिशासुचतुर्भिस्स्युश्चतु
ष्कावेदसङ्ख्यकाः ॥ चतुष्कपद्मवीथीनांमध्येस्वस्तिकसन्निभम् ॥ ३८० ॥

जायतेतच्चतुष्कोष्ठैर्विदिशासुचतुर्ष्वपि ॥ रजोभिःशुक्लहारिद्ररक्तनीलैःप्रपूरयेत् ॥ ३८१ ॥ स्वस्तिकानीशतश्चान्यत्पूर्ववत्परिकीर्तितम् ॥ उदितंमण्डलंह्येतन्नवनागंसुशोभनम् ॥ ३८२ ॥ एतदेवोक्तमार्गेणमध्यद्वारंविदिक्त्यजम् ॥ एककोष्ठचतुष्काद्यंपञ्चपद्मंप्रवक्ष्यते ॥ ३८३ ॥ पद्मंप्राग्वाकृतंद्वारंस्त्रस्तिवच्चचतुष्ककाः ॥ वर्णैःपूर्य्यावीथिकातुपीठेतुसुरयोनिषु ॥ ३८४ ॥ अथमन्त्रप्रतिष्ठार्थेवक्ष्येवारुणमण्डलम् ॥ चतुरस्रंचतुष्षष्टिकोष्ठकंयोनिवेशयेत् ॥ ३८५ ॥ अन्त्यजान्तिमयातास्तुदिक्षुकोष्ठानिमार्जयेत् ॥ मध्यस्थचतुरस्राणिद्वास्थाख्यानितुपूर्वतः ॥ ३८६ ॥ पीतैःश्यामैश्चतेहरिद्रजोभिःपरिपूरयेत् ॥ कोणकोष्ठंविहायैकंपञ्चतेपादसञ्ज्ञिताः ॥ ३८७ ॥ पीतास्यात्पाण्डुरारक्तापीतैःकृष्णैश्चपूरयेत् ॥ आग्नेयीतःकोणकोष्ठान्यारक्तहरितासितैः ॥ ३८८ ॥ पूरयेदथतस्यार्धवितानंबन्धयेद्यथा ॥ श्वेतवर्णेनचत्वारिमेध्यवृत्तानिकारयेत् ॥ ३८९ ॥ षड्ङ्गीशादिव्यासार्धवृत्तमाद्यन्तुपीठतः ॥ तत्पीतंकर्णिकाकारंसितरेखावृतंततः ॥ ३९० ॥ द्वितीयंद्विगुणव्यासरूपकेशरसंयुतम् ॥ पतिरक्तश्वेतवर्णमूलमध्याग्रकेशरम् ॥ ३९१ ॥ द्विसप्तत्यंशिकांश्वेतांतस्याग्रेकुरुतेसिताम् ॥ तृतीयंतुतृतीयांशतुल्यव्यासंचवर्त्तुलम् ॥ ३९२ ॥ श्वेतमष्टदलंतत्ररक्ताग्रंतद्दलैस्तले ॥ श्वेतंबहिःकृष्णवर्णप्राग्वद्रेखांसितांकुरु ॥ ३९३ ॥ तद्बहिर्वृत्तसंलग्नान्षोडशास्रान्प्रकल्पयेत् ॥ श्यामपीतारुणश्वेतैस्तदन्तस्तूपवाह्यतः ॥ ३९४ ॥ सितपीतारुणश्यामहरिताःपञ्चरेखिकाः ॥ कार्य्याःसुरुचिराःपीठस्यान्तरेवंप्रपूरयेत् ॥ ३९५ ॥ वज्रंशक्तिंदण्डखड्गपाशाङ्कुशगदालिखेत् ॥ पूर्वतस्तुतथेशान्यांशूलंचक्राम्बुजान्वितम् ॥ ३९६ ॥ वेदिकायामासनन्तुप्राङ्मुखंसंविशेदथ ॥ पश्चात्पात्रंनिधायाथदीपान्प्रज्वालयेच्छुभान् ॥ ३९७ ॥ व्यजनंमुकुरंछत्रंचामरंदिक्षुमन्त्रवित् ॥ संस्कुर्य्यात्तानिसर्वाणिवक्ष्यमाणविधानतः ॥ ३९८ ॥ करशुद्धिंविधायाथब्रूयात्तारत्रयन्तथा ॥ शरमन्त्रेणदिग्बन्धंकुर्य्यान्मन्त्रीसमाहि

---

१ तार नाम ॐकारकाहै ताको तीनबार पढ़ै शरमन्त्र फट्है अर्थात् ( ॐ ॐ ॐ फट् ) यह पढिकै दिग्बन्धन करै ॥

तः ॥३९९॥ महतस्तुसमुत्पन्नंवक्ष्येयत्ताहिंसर्वतः ॥ भूतशुद्धिन्ततःकृत्वाप्राण स्थापनमाचरेत् ॥ ४०० ॥ न्यासादिकन्ततःकुर्य्याद्देशिकोयतमानसः ॥ ऋषिं न्यसेत्ततोमूर्द्धिच्छन्दोवक्त्रगतंन्यसेत् ॥ ४०१ ॥ देवतांहृदयेन्यस्यमूलमन्त्र स्थदेशिकः ॥ षडङ्गंविन्यसेन्मन्त्रीपश्चाङ्गंवायथाविधि ॥ ४०२ ॥ यस्यमन्त्र स्यपञ्चाङ्गंनेत्रंतस्यविधीयते ॥ अङ्गैर्विहीनस्यमनोरङ्गंतेनैवकल्पयेत् ॥४०३॥

---

१ इसी ग्रन्थमें आगे भूतशुद्धिकी विधि कहैंगे ॥ यहां संक्षेप से अन्यत्रसे लैकै लिखते हैं मूलाधार चक्र जो चारिदल को कमल सब से नीचे है तेहिमें जो कुंडलिनी उलटी है सो सीध करै दोऊ श्वासा छिद्रों के द्वारा वायु पूरिकै पेटमें ऊपरको कुण्डलिनी चढ़ाय ( हंसः )मंत्र पढ़िकै ब्रह्मरन्ध्रमें लेजाय तब फिरि तत्त्वों को विचारकरै कि ॥ पायें से जानु तक चौकोन मण्डल तिरसठि के अंकसे ( लं ) बीज समेत सुवर्ण वर्ण पृथिवीमण्डल है ॥ जानुसे नाभि तक अर्द्धचन्द्राकार ताके दोऊ तरफ दो कमल ( वं ) बीज समेत जलमण्डल है सो श्वेतरंगहै ॥ नाभी से हृदय तक त्रिकोण ताके आगे स्वस्तिक उसको चिह्न तहां (रं) बीज समेत लालरंग अग्निमण्डल है ॥ हृदयसे भौंहों के बीच तक गोल मण्डलमें छा बिन्दु तामें ( यं ) बीज समेत धूम्रवर्ण वायु मण्डलहै ॥ भौंहों के बीच से ब्रह्मरन्ध्र तक गोल स्वच्छ (हं) बीज समेत आकाश मण्डलहै ॥ भूमि को जलमें जलको अग्निमें अग्निको वायुमें वायुको आकाशमें आकाशको अहङ्कारमें अहङ्कारको महत्तत्त्वमें महत्तत्त्वको प्रकृतिमें प्रकृति को परमात्मा में मिलावै ॥ अपने वाम कुक्षिमें कालारंग पापपुरुष का अंगुष्ठ भरि भावना करै ( यं ) वायु बीज जपिकै पूरक प्राणायाम करिकै श्वासा भरिकै तेही पापपुरुष को सुखाय डारै ॥ फिरि श्वासा रोंकि (रं) अग्निबीज जपिकै निजदेह समेत पापपुरुष को जलाय डारै ॥ फिरि रेचक प्राणायाम अर्थात् श्वासा उतारत ( यं ) वायु बीज जपिकै पापपुरुष की भस्म अलग करै ( वं ) जलबीज जपिकै निजदेह की भस्म शुद्धसानै ( लं ) पृथिवी बीज जपिकै तेहिको सघन समुझै फिरि ( हं ) बीज जपिकै तेहिको सुवर्ण अण्डसे शीशासे झलकत जानै तेहिते देह रचना समझै जेहि क्रमसे तत्त्व परमात्मा में लीन हुये हैं उसी क्रमसे सब प्रकट ह्वैकै अपनी अपनी जगह देहमें वसते हैं कुण्डलिनी द्वारा जीवको परमात्मामें मिलाय सोहं जपिकै हृदयमें लौटारि लावै ॥ प्राणप्रतिष्ठा का मन्त्र ॥ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं ॐ क्षं सं हंसः ह्रीं ॐ सोहं अमुकस्य प्राणा इह प्राणाः अमुकस्य जीव इह स्थितः अमुकस्य सर्वेन्द्रियाणि अमुकस्य वाङ्मनश्चक्षुः श्रोत्रंघ्राणः प्राणा इहागत्य सुखंचिरन्तिष्ठन्तुस्वाहा ॐ क्षं सं हंसः ह्रीं ॐ ॥ यह प्राणप्रतिष्ठा का मन्त्र है जो निजदेह में योग पीठ भावना करने को चार सौ चार के श्लोक में है, उसकी विधि आगे इसी ग्रन्थमें थोड़ही दूरपर कहैंगे इससे यहां पर विस्तार नहीं है ॥

ततोमन्त्रोक्तमार्गेणन्यासानन्यान्समाचरेत् ॥ शरीरेस्वस्यमन्त्रज्ञोयोगपी ठंप्रकल्पयेत् ॥ ४०४ ॥ देहात्मकेततःपीठेध्यायेन्मन्त्रस्यदेवताम् ॥ दर्श यित्वाततोमुद्राःस्थापयेदर्घ्यमुत्तमम् ॥ ४०५ ॥ जलप्रपूरितादक्षेप्रोक्षणीं स्थापयेत्ततः ॥ तत्राल्पमल्पंशङ्खाम्बुतत्तद्देवरतोन्यसेत् ॥ ४०६ ॥ पाद्यमा चमनीयञ्चमधुपर्कञ्चमन्त्रवित् ॥ ततोमूलाम्बुनामन्त्रीप्रोक्षरयाद्भिःसमाहि तः ॥ ४०७ ॥ स्वात्मानंमण्डलञ्चान्यत्पूजोपकरणादिकम् ॥ प्रोक्षयेद्गन्धपु ष्पाद्यैर्दैशेस्वेदेशिकोत्तमः ॥ ४०८ ॥ योगपीठंसमभ्यर्च्यन्यासमार्गेणमन्त्र वित् ॥ पीठान्तश्चततस्तत्रपूजयेदिष्टदेवताम् ॥ ४०९ ॥ देवतात्माततःपञ्चकु र्य्याच्चसुमनोञ्जलीः ॥ शीर्षेहृदितथाधारेचरणेसर्वगात्रके ॥ ४१० ॥ पूजये च्चनिवेद्येनविहितैश्चन्दनादिभिः ॥ सर्वोपचारैस्तञ्चेष्टंगुर्व्वादिष्टेनवर्त्मना ॥ ४११ ॥ समापयेदिदंसर्वंप्रोक्षण्यद्भिःसमाचरेत् ॥ पानीयम्प्रोक्षणीसंस्थंत्य क्तासंसिच्यपूर्ववत् ॥ ४१२ ॥ उपचारैश्चन्दनाद्यैर्मण्डलम्पूजयेद्गुरुः ॥ पूरयेत्कर्णिकांपूर्वंशालिभिस्तण्डुलैस्ततः ॥ ४१३ ॥ दर्भान्न्यसेदुपचर्य्येषां साक्षात्तंपूर्वकन्ततः ॥ छिन्नमूलाःकुशादीर्घाःसप्तविंशतिसङ्ख्यकाः ॥ ४१४ ॥ ब्रह्मग्रन्थियुतास्त्वग्रदेशेकूर्चइहोच्यते ॥ यजेदाधारशक्त्यादिपीठमन्त्रावसान कम् ॥ ४१५ ॥ स्वर्णादिरचितन्तत्रकलशंछिद्रवर्ज्जितम् ॥ त्रिगुणात्मकसू त्रेणवेष्टितंसर्वतोबहिः ॥ ४१६ ॥ चन्दनागुरुकर्पूरैर्मध्येसम्यक्प्रपूरितम् ॥ ध्रुवजपंविनाचात्रस्थापयेद्देशिकोत्तमः ॥ ४१७ ॥ नवरत्नानिनिक्षिप्यकुम्भे कूर्चमथोपरि ॥ दूर्वाचन्दनसंयुक्तंविन्यसेद्दक्षिणान्वितम् ॥ ४१८ ॥ पुष्पंनी लञ्चवैदूर्य्यविद्रुमंमौक्तिकन्तथा ॥ मूलमन्त्रञ्जपन्नन्तेचिन्तयन्नैक्यमात्मनः ॥ ४१९ ॥ घटस्यपीठाभेदञ्चचिन्तयेत्साधकोत्तमः ॥ पञ्चाशदोषधीकाथैःपूरये त्तदनन्तरम् ॥ ४२० ॥ एकेनसहितास्ताश्चवर्णौषध्यश्चताइमाः ॥ चन्दन ञ्चापिरक्ताख्यंचन्दनञ्चागुरुस्तथा ॥४२१॥ कर्पूरोशीरकुष्ठानिबालकञ्चापिके शरम् ॥ कङ्कोलकंजातिफलंजटामांसीमुरातथा ॥ ४२२ ॥ ग्रन्थिकंरोचनाजा तिपत्रंपिप्पलबिल्वकौ ॥ पृष्ठपर्णीचित्रकञ्चमुद्गपर्णीकुशाःपुनः ॥ ४२३ ॥

१ खस २ सुगन्धवाला ३ पिपरामूल ४ पिथवन ५ बनमूंग ॥

कट्फलंचापिगुञ्जास्यादुदुम्बरककाश्मरी ॥ पञ्चकोषाशङ्खपुष्पीमयूरस्यशिखातथा ॥ ४२४ ॥ ब्रह्मोग्निर्मन्थश्चतथाशालपर्णीकुशाःपुनः ॥ पाषाणभेदकःकृष्णाशंशिपुष्पीचरोहिणी ॥ ४२५ ॥ स्योनाच्छिन्नरुहाचैवपाटलीमुखकर्णिका ॥ तुलसीशिखरीइन्द्रवल्लीभृङ्गीमिरानृपः ॥ ४२६ ॥ ततोऽजितपातालमूलीचापिकृताञ्जलिः ॥ दूर्वाश्रीदेवकन्याख्याभागथोभद्रमुस्तकम् ॥ ४२७ ॥ लवङ्गसहिताश्चैताःपञ्चाशत्सङ्ख्काइति ॥ दुग्धवृक्षत्वचांक्वाथैर्ब्रह्मभूरुक्तगुड्वैः ॥ ४२८ ॥ गन्धपङ्कप्रसूनादिवासितैर्वाशुभैर्जलैः ॥ क्वाथादितोयैरापूर्य्यशङ्खन्तस्मिन्विलोडयेत् ॥ ४२९ ॥ गन्धाष्टकंतस्यतस्यदेवस्यथप्रकीर्तितम् ॥ चन्दनागुरुकर्पूररोचनाकुङ्कुमंमदम् ॥४३०॥ रक्तचन्दनजंवैरिगाणपत्यमुदाहृतम् ॥ ह्रीवेरञ्चन्दनङ्कुष्ठमगुरुःकुङ्कुमंमुरा ॥ ४३१ ॥ सिद्धवञ्जटामांसीवैष्णवंतदुदीरितम् ॥ चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः ॥ ४३२ जटामांसीकपियुताशाक्तंगन्धाष्टकंविदुः ॥ गोरोचनाचकांस्यञ्चकर्पूरागुरुकुङ्कुमैः ॥ ४३३ ॥ चन्दनेनमदाभ्याञ्चवीरिदेनचपत्रजम् ॥ गन्धाष्टकस्यसंयोगात्सामर्थ्याद्देशिकस्यच ॥ ४३४ ॥ सशक्तिकञ्जलंकुम्भेभवेदेवंविदुर्बुधाः ॥ आदौकृशानुसम्बन्धिकलादशसमर्चयेत् ॥ ४३५ ॥ धूम्रार्चिरूष्माज्वलिनीज्वालिनीविस्फुलिङ्गिनी ॥ सुश्रीःसुरूपाकपिलाहव्यकव्यवहेउभे ॥ ४३६ कलाद्वादशकंसौरम्पूजयेत्तदनन्तरम् ॥ तपिनीतापिनीधूम्रामरीचिज्वालिनीरुचिः ॥ ४३७ ॥ सुषुम्णाभोगदाविश्वाबोधिनीधारिणीक्षमा ॥ कलाःषोडशकञ्चान्द्रंयजेत्पश्चाद्गुरूत्तमः ॥ ३३८ ॥ अमृतामानदापूषापुष्टिस्तुष्टी

---

१ कायफर २ कौड़िल्ला ३ पाकरि ४ अगेथ ५ सरिवन ६ पिपरी ७ गुमा ८ कुटकी ९ गुर्च १० गोरोचन ११ कस्तूरी १२ मुस्ता १३ सुगन्धबाला १४ लोबा १५ नागरमोथा १६ तन्त्र में यह रीति है कि जहांपर देवता की पूजा में विशेष मन्त्र कहागयाहो उस जगहपर पूज्य देवता के नामसे मन्त्र बनालेना ॥ नामका पहिला अक्षर अनुस्वार युक्त तथा पूर्णनाम को चतुर्थ्यन्तकर अन्तमें नमः जोड़ने से मन्त्र बनजाता है इसरीतिको सब जगह के लिये कण्ठ करलेना ॥ उदाहरण जैसे ॥ धूं धूम्रार्चिषेनमः । ऊं ऊष्मायैनमः । ज्वं ज्वलिन्यैनमः । ज्वां ज्वालिन्यैनमः । विं विस्फुलिङ्गिन्यैनमः । सुं सुश्रियैनमः । सुं सुरूपायैनमः । कं कपिलायैनमः । हं हव्यवहायैनमः । कं कव्यवहायैनमः ।

तिर्धृतिः ॥ शशिनीचन्द्रिकाकान्तिर्ज्योत्स्नाश्रीप्रीतिरङ्गदा ॥ ४३९ ॥ पूर्णापूर्णामृताकान्तिर्दीपिन्यश्वरजाःकलाः ॥ वेदादिभेदेसञ्जाताःकलाः पञ्चाशदिन्दुयुक् ॥ ४४० ॥ सन्निधाप्यप्रतिष्ठाप्याभ्यर्चयेत्क्रमशस्तुताः ॥ निवृत्तिप्रतिष्ठाविद्याशान्तिर्ऋद्धिश्चदीपिका ॥ ४४१ ॥ रेचिकामोचिका परासूक्ष्मासूक्ष्मामृतातथा ॥ ज्ञानामृताप्यायिनीचव्यापिनीव्योमरूपिका ॥ ४४२ ॥ अनन्तासृष्टिर्ऋद्धिश्चस्मृतिर्मेधाचकान्तिका ॥ लक्ष्मीर्द्युतिःस्थिरास्थितिस्सिद्धिर्जराचपालिनी ॥ ४४३ ॥ क्षान्त्यैश्वर्य्यौ[1]रतिःकामावरदाह्लादिनीतथा ॥ दीर्घातीक्ष्णारौद्रीचभयानिद्राचतन्द्रिका ॥ ४४४ ॥ क्षुत्क्रोधिनीक्रियोत्कारीमृत्युःपीतासितारुणा ॥ असिताचतथानन्तामध्येमध्ये प्रपूजयेत् ॥ ४४५ ॥ हंसः[2]शुचिषदित्यादि[3]प्रैतद्विष्णुस्तवेतिच ॥ [4]त्र्यम्बकंचैव गायत्रीं[5]विष्णु[6]र्योनिंतथैवच ॥ ४४६ ॥ तारस्यपञ्चभेदोत्थकलानांपूजनेसुधीः ॥ कलादशकमावाह्यसृष्ट्याद्यंसन्निधाप्यच ॥४४७॥ हंसःशुचिषदित्यादिऋचंसञ्जप्यपूजयेत् ॥ प्राणसंस्थापनंकृत्वाकलानांपूजयेच्चताः ॥ ४४८ ॥ एवंजराद्यास्तीक्ष्णाद्याःपीताद्याश्चविधानवित् ॥ निवृत्याद्याश्चापियजेद्दृक्युक्त्या विचक्षणः ॥ ४४९ ॥ अकारोकारकौप्रोक्तौमकारोबिन्दुनादकौ ॥ शक्तिःशान्तिस्त्विमेसप्तध्रुवंभेदाःप्रकीर्त्तिताः ॥ ४५० ॥ अन्तिमौद्वाविमौभेदौपृथगेवसमीरितौ ॥ अथत्वश्वत्थपनसचूतानांपल्लवान्दृढम् ॥ ४५१ ॥ बन्धयेदिन्द्रवारुण्यांलत्तयास्येघटस्यच ॥ कल्पवृक्षधियातंचभावयेत्कलशोपरि ॥ ४५२ ॥ पात्रंतण्डुलसम्पूर्णनारिकेलजलान्वितम् ॥ कल्पवृक्षफलंह्येतत्स्थापयेदनयाधिया ॥ ४५३ ॥ पट्टवस्त्रयुगेनाथवेष्टयेत्कलशंततः ॥ एत

---

१ शान्ति और ईश्वरी ये दो कला हैं सब इक्यावन नाम हैं २ ॐहंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतम्बृहत् ३ ॐप्रतद्विष्णुस्तवतेवीर्य्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियन्तिभुवनानिविश्वा ४ ॐत्र्यम्बकंयजामहेसुगन्धिंपुष्टिवर्द्धनम् उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ५ ॐतत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि धियोयोनःप्रचोदयात् ६ ॐविष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिञ्चतुप्रजापतिर्धातागर्भन्दधातुते ॥

त्प्रधानकुम्भस्यस्थापनंपरिकीर्त्तितम् ॥ ४५४ ॥ अथपूर्वादिकाष्ठासुतोरणानांसमीपतः ॥ यथेच्छयामण्डलानिकुर्य्यादष्टदलानिच ॥ ४५५ ॥ तदूर्ध्वं शालिपुञ्जंतुप्रतिद्वारंसमाचरेत् ॥ तदूर्ध्वपूर्णकलशंतत्रचैतान्प्रपूजयेत् ॥ ४५६ ॥ प्राग्बुधंचवरांदक्षेपश्चाद्वाक्पतिमुत्तरे ॥ विघ्नेशमथचाग्नेय्यांदिक्षुकुम्भांस्तुविन्यसेत् ॥ ४५७ ॥ अमृतंदुर्जयंसिद्धार्थकंमङ्गलमर्चयेत् ॥ पुनारुद्रादिकाष्ठासुक्रमाद्रुद्रादिकान्यजेत् ॥ ४५८ ॥ लोकपालान्मण्डलेषुकुम्भोपरितथैवच ॥ ऐरावतंपुण्डरीकंवामनंकुमुदाञ्जनौ ॥ ४५९ ॥ पुष्पदन्तंसार्वभौमंसुप्रतीकंतदग्रतः ॥ ततोगुरुःस्ववेद्यांतुगत्वास्वस्यासनेविशेत् ॥ ४६० ॥ सञ्चिन्त्यमूलमन्त्रेणमूर्त्तिंतस्मिन्गुरूत्तमः॥ तस्यांमूर्त्तौसमावाह्यपूजयेदिष्टदेवताम् ॥४६१॥ स्मृत्वामूलमनुंमन्त्रीमातृकासुयथाततः ॥ निर्गमध्यचचैतन्यंनासिकाग्रविनिर्गतम् ॥ ४६२ ॥ अञ्जलौमातृकापद्मंमहापुष्पान्वितेगुरुः ॥ मस्तकान्तंसमुत्थाप्यतस्यामावाहयेत्ततः ॥ ४६३ ॥ संस्थापनंसन्निधानंसन्निरोधंततश्चरेत् ॥ सम्मुखीकरणंचापिसकलीकरणंततः ॥ ३६४ ॥ ततोवगुण्ठनंकार्य्यममृतीकरणंततः ॥ परमीकरणंकुर्य्यात्क्रमशस्तस्यमुद्रिकाः ॥ ४६५ ॥ विदध्याच्चक्रमात्तत्तदुपचारान्प्रकल्पयेत् ॥ आसनादिप्रसूनान्तानुपचारान्प्रकल्प्यच ॥ ४६६ ॥ ततोमन्त्रविधानेषुप्रोक्ताङ्गावरणान्यपि ॥ सर्वा

---

१ फूलों से भरीहुई अंजली देवताके आगे करै उसका आवाहनीमुद्रा नामहै । अंजली को अधोमुख अर्थात् उलटा करना सो स्थापनमुद्राहै । दोऊ हाथोंकी मूठी बाँधिकै एकमें मिलावै दोऊ अँगूठा ऊपर का उठेरहैं सो सन्निधानमुद्राहै । दोऊमूठी अलग रहने से यही सम्मुखीकरणमुद्रा है । अँगूठा मूठी के भीतर करिलेइ तौ यही सन्निरोधमुद्रा जानिये । देवता के अंग में षडंगोंका न्यास करने को सकलीकरण कहते हैं । दहिने हाथकी मूठी बाँधिकै अँगूठे के लगेकी अंगुली बाहर राखै उसीका नीचे करके मंडलाकार घुमावै सो अवगुंठनमुद्रा है । अँगुठा छोड़िकै दोऊ हाथों की अंगुली एक एक में क्रम से जोड़नेका धेनुमुद्रा नाम है उसको अमृतीकरणमुद्रा भी कहते हैं । दोऊ हाथों के अंगूठा परस्पर ग्रंथित करिकै अर्थात् फांसिकै बाकी अंगुली पसारिदेनेका महामुद्रा नामहै इसीका परमीकरणमुद्रा जानिये । ये सब मुद्रा कई जगह परैंगी इससे इनको जानिलेना ॥

न्तैलोक[1]पालानांतदस्त्राणांचपूजनम् ॥ ४६७ ॥ विधायपूजामेवंहिधूपदीप निवेद्यकैः॥ कृतेनिवेद्येचततोमण्डलम्परितःक्रमात्॥ ४६८ ॥ प्रवालाङ्कुरपत्राणिस्थापनीयानिमन्त्रिणा ॥ वेदिकायादक्षभागेकृत्वास्थण्डिलमुत्तमम्[2] ॥ ४६९ ॥ संस्थाप्यवह्निंसंस्कृत्यवैश्वदेवंसमारभेत् ॥ यथाविधिततस्तत्रगन्धाद्यैर्देवतांयजेत् ॥ ४७० ॥ तत्रप्रणवपूर्वाभिर्हुत्वाव्याहृतिभिःक्रमात्[3] ॥ जुहुयान्मूलमन्त्रेणपायसेनघृतेनच[4] ॥ ४७१ ॥ पञ्चविंशतिभिःपश्चाद्धुत्वाव्याहृतिभिःक्रमात् ॥ सम्पूज्यतांचन्दनाद्यैःपीठमूर्त्तौनिधापयेत्[5] ॥ ४७२ ॥ अग्निं विसृज्यइष्टेनपायसेनबलिंहरेत् ॥ पार्षदेभ्यश्चन्दनादिपुष्पाक्षतसमन्वितम् ॥ ४७३ ॥ ततउत्थाप्यनैवेद्यंतत्स्थलंशोधयेत्सुधीः ॥ पुनर्यजेच्चोपचारैःपञ्चभिर्दर्शयेत्ततः ॥ ४७४ ॥ दर्प्पणंव्यजनंछत्रंचामरंसुखवासकम् ॥ सहस्रंचजपेन्मन्त्रीमूलमन्त्रंसमाहितः ॥ ४७५ ॥ देवतायैनिवेद्याथतंजपंसम्पदेत्ततः ॥ ईशानदिशियःपूर्वंस्थापितोविकिरोत्रच ॥ ४७६ ॥ सुवर्णवस्त्रसंयुक्तं करकञ्जलपूरितम्[6] ॥ न्यसेदत्रयजेदस्त्रदेवतांघोररूपिणीम् ॥ ४७७ ॥ पश्चिमाद्यन्तःखेटधारिणींसिंहसंस्थिताम् ॥ तिष्ठन्सम्पूज्यचततोगृहीत्वातम्प्रदक्षिणम् ॥ ४७८ ॥ एतदन्तेतुरक्षेतिलोकेशानित्वितीरयेत् ॥ तारमुक्तेनोदकेनदेवतान्तास्येत्ततः ॥ ४७९ ॥ स्वस्थानेस्थापयेत्तत्तुफटमन्त्रेणततोर्चयेत् ॥ उपविश्यतुभूयस्तंगन्धाद्यैर्देशिकोत्तमः ॥ ४८० ॥ ततोवह्निंसुसंस्कृत्यचरुञ्चोपयसोर्पयेत् ॥ देवँतेष्टादिजेपात्रे[7]क्षालितेचर्शराणुना[8] ॥ ४८१ ॥ मूलानुनाभिमन्त्र्या

---

१ लोकपाल इन्द्र अग्नि यम निर्ऋति वरुण वायु कुबेर ईशान अनन्त ब्रह्मा इनके अस्त्र क्रमसे ॥ वज्र शक्ति दण्ड खड्ग पाश अंकुश गदा त्रिशूल चक्र पद्म इनको कण्ठ राखना और नाम के प्रथमाक्षर में सुन्न रख पूरे नामको चतुर्थ्यन्तकर नमः जोड़कर मन्त्र बतालेना जैसे इंइन्द्राय नमः । वं वज्राय नमः इत्यादि २ वेदीके दक्षिण तरफ स्थण्डिल अर्थात् चौरी रचिकै विधिवत् अग्नि स्थापनकरै उस अग्निके मध्यमें कलश स्थित देवताकी भावना करके पूजाकरै ३ ॐ ॐ स्वाहा ॐ भूःस्वाहा ॐ भुवः स्वाहा ॐ स्वःस्वाहा ॐ भूर्भुवस्स्वःस्वाहा ॥ यह व्याहृति होमहै ४ तब मूलमन्त्र अर्थात् जो शिष्यको सुननाहो उस मन्त्रसे पचीसबार स्वाहा देकर फिर अन्त में भी व्याहृतिहोम करै जैसे प्रथम लिखाहै ५ भावना कीहुई देवता का पूजिकै फिरि कलशमें पठावै ६ गेडुवा ७ देवता के प्रियवस्तुके पात्रमें ८ फट्मन्त्र से ॥

थतण्डुलाञ्च्छालिसम्भवान् ॥ तिथिप्रसृतिमानेनशराणुम्प्रजपेत्क्षिपेत् ॥ ४८२ ॥ प्रक्षालितेनपात्रेणयावद्धक्रंपिधायच ॥ हुम्मन्त्रेणततोमूलमन्त्रेणदेशिकोत्तमः ॥ ४८३ ॥ पचेद्गुरुःप्राङ्मुखस्तुसिद्धन्तमभिधारयेत् ॥ मूलेनस्रुवसंस्थेनघृतेनाथावतारयेत् ॥ ४८४ ॥ हुम्मन्त्रेणास्त्रसञ्जप्तेकुशास्तीर्णेविभेद्यतम् ॥ त्रिधात्वेकन्देवतायैपरंवह्नौनिवेदयेत् ॥ ४८५ ॥ शिष्टंशिष्येणसहितोगुरुर्भुञ्जीतमन्त्रवित् ॥ प्रादेशमात्रंहृज्जप्तंयथोक्तंदन्तधावनम् ॥ ४८६ ॥ शिष्यायदद्यात्सरदान्विशोध्यक्षालितंत्यजेत् ॥ ४८७ ॥ आचान्तमन्त्रञ्चयथाविधितंशिखायांबद्धास्वकीयशिखयाप्रविधायमन्त्री ॥ वेद्यांशयीतकुशसंस्तरणेरजन्यांशिष्येणसार्द्धममुनागदितोधिवासः ॥ ४८८ ॥ समुत्थायोषसिपुनःस्नानसन्ध्यादिकंचरेत् ॥ गुरुःशिष्यऋत्विजश्चगच्छेद्यज्ञगृहंप्रति ॥ ४८९ ॥ सर्वेतेस्वस्वकुण्डेषुजुहुयुस्सघृतैस्तिलैः ॥ पुनःसाध्येनममुनाह्यष्टोत्तरसहस्रकम् ॥ ४९० ॥ द्रव्यैर्विधानप्रोक्तैर्वाहुनेदष्टाधिकंशतम् ॥ शिष्यंस्नातंपञ्चगव्यंपाययेन्मन्त्रवित्तमः ॥ ४९१ ॥ कुण्डस्याभ्याशमानीयदिव्यदृष्ट्याविलोकयेत् ॥ हृत्पुण्डरीकचैतन्यंशिष्यस्यात्मनियोजयेत् ॥ ४९२ ॥ आचार्य्यस्त्वध्वनांषट्कंतत्रसंशोधयेत्क्रमात् ॥ तेकलातत्त्वभुवनार्णपदामन्त्रपूर्वकाः ॥ ४९३ ॥ शिष्यस्यपादयोश्चिन्त्यागुरुणाचकलाइमाः ॥ निवृत्तिश्चप्रतिष्ठाचविद्याशान्तिस्तथैवच ॥ ४९४ ॥ शान्त्यतीतेतिपश्चाथशोधनक्रमउच्यते ॥ कूर्चेनचगुरुःशिष्यंस्पृशन्कुण्डेस्वकेहुनेत् ॥ ४९५ ॥ तिलैर्घृताक्तैस्तारोऽस्यत्वमुकाध्वानमत्रच ॥ शोधयामिद्विठान्तेनमन्त्रेणाष्टाहुतीर्हुनेत् ॥ ४९६ ॥ तत्त्वाध्वनिविलीनंतुकलाध्वानंविचिन्तयेत् ॥ ततोलिङ्गप्रदेशेस्यतत्त्वाध्वानंविचिन्तयेत् ॥ ४९७ ॥

---

१ दोटकाकी प्रसृति होतीहै पन्द्रहप्रसृति चावलोंकी जाउर पकावै २ बाकी ३ बीताभरेकी दतून ४ नमःपदिकै ५ जो मन्त्रदेनाहै उससे कलाध्वा १ तत्त्वाध्वा २ भुवनाध्वा ३ वर्णाध्वा ४ पदाध्वा ५ मन्त्राध्वा ६ । ६ जो शिष्यके हृदय कमल में चैतन्यहै उसको गुरु अपने आत्मा में मिलावै अर्थात् वह चैतन्य मुझ में आया ऐसी भावना मन में करै ७ ॐ अस्य शिष्यस्य अमुकाध्वानं शोधयामि स्वाहा जिस जिस अध्वा को शोधै उस उसका नाम जोड़ले और वह अध्वा शिष्यके जिस अङ्ग मेंहो उस अङ्ग में गुरु कूर्च छुवाताजाय बामहाथ से और दक्षिण हाथसे होमकरै ॥

गाणेशानिचशैवानितत्रैतानिरसाग्नयः ॥ तद्यथाशिवशक्तीचसदाशिवम हेश्वरौ ॥ ४९८ ॥ विद्येतिपञ्चशुद्धानिशुद्धाशुद्धानिसप्तच ॥ मायाविद्या कलारागःकालोनियतिरेवच ॥ ४९९ ॥ पुरुषश्चाथशुद्धानिप्रकृतिर्बुद्ध्यहंकृती ॥ मनश्चेन्द्रियदशकंतन्मात्राभूतपञ्चकम् ॥ ५०० ॥ अथवैष्णवतत्त्वानि द्वाविंशत्प्रमितानितु ॥ जीवःप्राणोमनोबुद्धिस्तन्मात्राभूतपञ्चकम् ॥ ५०१ ॥ दशेन्द्रियाणिहृत्पद्मंसूर्य्यसोमाग्नयस्तथा ॥ वासुदेवश्चसङ्कर्षणःप्रद्युम्नोनिरुद्धकः ॥ ५०२ ॥ सौराणिभूततन्मात्रामनोगर्वेन्द्रियाणिच ॥ प्रकृतिर्बुद्धिरितिचचतुर्विंशतिसम्मिताः ॥ ५०३ ॥ दशैवशक्तितत्त्वानिआत्माविद्याशिवाइति ॥ शिवाविद्यातथात्मेतिचात्माविद्याशिवापुनः ॥ ५०४ ॥ सर्वतत्त्वंचेतिपुनःप्राग्वद्देहेनहोमयेत् ॥ तत्त्वाध्वानंविलीनंतुचिन्तयेद्भुवनाध्वनि ५०५ ॥ शिष्यस्यनाभौचिन्त्यानिभुवनानिचतुर्दश ॥ तानिक्रमेणपाताल रसातलमहातलम् ॥ ५०६ ॥ तलातलञ्चसुतलंवितलंचातलञ्चभूः ॥ भुवस्तुस्वर्महश्चापिजनस्तपइतिक्रमात् ॥ सत्यञ्चभुवनाख्यानिहोमःव्यूहस्तुपूर्ववत् ॥ ५०७ ॥ विलीनंभुवनाध्वानंवर्णाध्वनिविचिन्तयेत् ॥ अकारादिक्षकारान्तान्वर्णान्सञ्चिन्तयेद्धृदि ॥ ५०८ ॥ वर्णाध्वानंविलीनन्तुपदाध्वनिविचिन्तयेत् ॥ होमौघःप्राग्वदेवात्रललाटेचिन्तयेत्ततः ॥ ५०९ ॥ पदाध्वानंमूलमन्त्रपदवर्णस्वरूपतः ॥ पदाध्वात्रोहहोमादिप्राग्वदेवसमाचरेत् ॥ ५१० ॥ मन्त्राध्वनिविलीनन्तुपदाध्वानंविचिन्तयेत् ॥ सम्पूर्णमन्त्रोमन्त्राध्वाचिन्तयेच्छिष्यमूर्द्धनि ॥ ५११ ॥ होमोहःप्राग्वदेवात्रविलीनोयम्परेशिवे ॥ ब्रह्मरन्ध्रेस्थितन्ध्यायेदेतत्स्यादध्वशोधनम् ॥ ५१२ ॥ सृजेत्सृष्ट्वाविलीनांस्ताञ्छिवात्तस्माद्गुरूत्तमः ॥ देशिकेन्द्रश्चतंशिष्यंदृष्ट्वादृष्ट्याचदिव्यया ॥ ५१३ ॥ तत्रैतद्यत्स्थितंसर्वस्मिंस्तस्मिंस्तत्रैवयोजयेत् ॥ हुनेन्महाव्याहृति

१ श्रोत्र, त्वक् चक्षु, रसना, घ्राण, ये पांचज्ञानेन्द्रिय और वाक्, पाणि, पाद, गुद, लिङ्ग ये पांचकर्मेन्द्रिय हैं २ शब्द, स्पर्श, रूप, रस, गन्ध ये पांचतन्मात्रा हैं पृथ्वी, जल, अग्नि, वायु, आकाश ये पांच भूत हैं ३ अहंकार ४ जो अपना में लायाहुआ शिष्यका चैतन्य उसका उसमें जानेकी भावनाकर फिर गुरु पूर्वोक्त विधिसे व्याहृतिहोम करै ॥

भिस्ततोदेशिकसत्तमः ॥ ५१४ ॥ अगम्यप्रवृत्त्यावृत्तीनांहुनेच्चयोघृतैनवै ॥ ब्रह्मार्पणाख्यमन्त्रेणसर्वकर्म्मच्छिदेसुधीः ॥ ५१५ ॥ जुहुयादाहुतीरष्टौकेव लाज्येनमन्त्रवित् ॥ हुत्वापूर्णाहुतिंमन्त्रीस्तुत्वामूलानुनाततः ॥ ५१६ ॥ अग्निसम्प्रार्थ्याग्निसाङ्गमन्त्रेणैकाहुतिंहुनेत् ॥ सर्पिषास्रुवमापूर्य्यपुष्पञ्चो पर्य्यधोमुखम् ॥ स्रुवोपरिस्रुचन्दत्त्वापुष्पन्तत्रप्रपातयेत् ॥ ५१७ ॥ सव्यो त्तरकराभ्यांचसम्पुटाभ्याञ्चशङ्खवत् ॥ होमन्तुमांसमाषाभ्यांतीर्थाह्वाभ्यांचपूर्ण ताम् ॥ ५१८ ॥ कुर्य्यात्स्वाहान्तमूलेनफलान्येनतुवैदिकः ॥ दक्षपादम्पुरस्कृत्ये दक्षेःपूर्णाहुतिञ्चरेत् ॥ ५१९ ॥ शक्तिहोमेवाममार्गी[1]वामपादञ्चसर्वतः ॥ पुनः सम्पूज्यगन्धाद्यैर्मूलमन्त्रेणमन्त्रवित् ॥ ५२० ॥ कुण्डादुद्वास्यचाचार्य्यो देवतांकलशेन्यसेत् ॥ साङ्गांसावरणांतत्रपूजयेच्चयथाविधि ॥ ५२१ ॥ सप्त[2] व्याहृत्यग्निजिह्वाङ्गमूर्तीनामथैक्यकम् ॥ दुग्धेनपरिषिञ्च्याग्निंप्रार्थयीतत तोगुरुः ॥ ५२२ ॥ भोभोवह्नेमहाशक्तेसर्वकामप्रदायक ॥ कर्म्मान्तरेपिसम्प्रा प्तेसान्निध्यंकुरुसादरम् ॥ ५२३ ॥ इतिमन्त्रेणसम्प्रार्थ्यमग्निमुद्वासयेदपि ॥ ततोब्रह्माणमुद्वास्यब्राह्मणायप्रपादयेत् ॥ ५२४ ॥ द्वात्रिंशत्पल[3]मात्रेणनि र्मितंताम्रपात्रकम् ॥ तण्डुलैस्तत्समापूर्य्यसहिरण्यंसदक्षिणम् ॥ ५२५ ॥ दद्यात्द्विप्रायतत्तुभ्यैपूर्णपात्रमितीरितम् ॥ ततःपरिस्तरानग्नौपरिधीन्निक्षि पेन्नतु ॥ ५२६ ॥ नित्यनैमित्तिकेतांस्तुक्षिपेद्देशिकसत्तमः ॥ वस्त्रेणनेत्र[4]म न्त्रेणशिष्यनेत्रंनिबध्यते ॥ ५२७ ॥ कुण्डाद्धस्तंसमाधायनयेन्मण्डलस न्निधौ ॥ सुमनोभिःप्रपूर्य्यास्यह्यञ्जलीःक्षेपयेद्धरे ॥ ५२८ ॥ मूलमन्त्रोच्चार पूर्वदेवताप्रीतयेगुरुः ॥ नेत्रबन्धमपास्योपवेशयेत्कुशसंस्तरे ॥ ५२९ ॥ तत श्चपाठयेच्छिष्यंमन्त्रमेनंगुरूत्तमः ॥ गुरुभक्तियुतोभूयाच्छिष्यःश्लोकश्चतत्र वै ॥ ५३० ॥ अज्ञानतिमिरान्धस्यज्ञानाञ्जनशलाकया ॥ चक्षुरुन्मीलितं येनतस्मैश्रीगुरवेनमः ॥ ५३१ ॥ अन्तेपूजाविधानेनसहरेज्जनयेच्चतम् ॥ शिष्योदत्तस्यमन्त्रस्यन्यासं[5]सान्देहेपरिन्यसेत् ॥ ५३२ ॥ पञ्चोपचारैरभ्यर्च्यकल

---

१ दक्षिणमार्गी २ सात व्याहृतियां व अग्नि की जिह्वा व अंगों की एकता की भावनाकरे ३ बत्तिस टकाभरि ताम्रपात्र ४ वौषट्मंत्रेण ५ षडङ्गन्यास ॥

शेस्वेष्टदेवताम् ॥ तन्त्रोक्तवर्त्मनातत्रसकलाकृतिमाचरेत् ॥ ५३३ ॥ अथो पवेशयेच्छिष्यंभूपितंमण्डलान्तरे ॥ कुम्भास्यस्थसुरर्द्धश्चमूर्द्धन्यस्यशिशोर्गुरुः ॥ ५३४ ॥ अथपञ्चनिनादैश्चविप्राशीर्वचनैस्सह ॥ सुस्थितंनियतात्मानंसिञ्चेत्कलशपुष्पकैः ॥ ५३५ ॥ येनप्रकारेणसुरायोजिताश्चसुधामयैः॥ तोयैरक्षरसंयुक्तैर्घटैस्तेनैववर्त्मना ॥ ५३६ ॥ अथशिष्यञ्चाभिषिञ्चेदाशुतंसम्पदाप्तये ॥ गृहीत्वाभ्यर्चितंपूर्वकरकंमन्त्ररूपिणम् ॥ ५३७ ॥ तत्तोयैरभिषिञ्चेत्तंसुशिष्यंदेशिकोत्तमः ॥ जलेनशिष्टेनशिशुंगुरुराचामयेत्ततः ॥ ५३८ ॥ तद्देवतास्वरूपञ्चविदध्यात्सकलीकृतम् ॥ वाससीविमलेरम्येपरिधायाज्ञयागुरोः॥ ५३९ ॥ आचम्यनिकटेतस्यागच्छेत्सम्यङ्मनुंततः ॥ दक्षकर्णेवदेद्विद्वान्विस्योङ्कारपूर्वकम् ॥ ५४० ॥ अन्येषान्तुवदेदेवमेवमन्त्रंविचक्षणः ॥ स्वयंज्योतिर्मयींविद्याङ्गच्छन्तींभावयेद्गुरुः ॥ ५४१ ॥ आगताम्भावयेच्छिष्यो देवोस्मीतिविशेषतः ॥ अष्टोत्तरशतंशिष्यःप्रजपेद्गुरुणोदितम् ॥ ५४२ ॥ अष्टाविंशतिवारंवाचाष्टकृत्वोथवाजपेत् ॥ गुरुदेवात्ममन्त्राणामैक्यंशिष्यो विभावयेत् ॥ ५४३ ॥ प्रणामंगुरवेकुर्य्यात्साधकोभक्तिमान्मुहुः ॥ साष्टाङ्गश्चाथपञ्चाङ्गःपूजाकर्म्मसुसम्मतः ॥ ५४४ ॥ हस्ताभ्याञ्चजानुभ्याप्रणामोवक्षसातथा ॥ मूर्ध्नादृष्ट्यातथाचैवचित्तेनाष्टाङ्गईरितः ॥ ५४५ ॥ हस्तजानुशिरोवाक्यदृष्ट्यःपञ्चाङ्गईरितः ॥ आचार्य्याज्ञांसदाकुर्य्यात्ततःशिष्योविचार्य्य च ॥ ५४६ ॥ अलङ्कारांश्चवासांसिदद्याहृत्विग्भ्यआदरात् ॥ ईश्वरार्प्पणबुद्धयाचद्विजाशीर्भिश्चनन्दितः ॥ ५४७ ॥ प्रदद्याद्गुरवेशिष्यःस्वधनार्धं तदर्धकम् ॥ दशांशंवाप्रदद्याच्चवित्तशाठ्यविवर्ज्जितः ॥ ५४८ ॥ गोभूहिरण्यविपिनगृहक्षेत्रादिकंपुनः ॥ अक्लेशादन्नवस्त्रादिदद्याद्वित्तानुसारतः ॥ ५४९ ॥ प्रकारान्तरमालम्ब्यगुरुंयत्नेनतोषयेत् ॥ तदधीनमनानित्यंतच्चिन्तनपरायणः ॥ ५५० ॥ तत्पादाब्जरजोभूषोभवेत्साधकसत्तमः ॥ ततोनानाविधैर्भक्ष्यैर्लेह्यैश्चोष्यैस्तथापरैः ॥ ५५१ ॥ ब्राह्मणान्भोजयेत्सम्यक्प्रदद्याद्‌

१ गेडुवा २ अपना से ज्योतिरूप विद्या जाती है गुरु ऐसी भावना करै और मुझमें ज्योतिरूप विद्या आगई मैं देवरूपहौं यों शिष्य समझै ॥

रिदक्षिणाम् ॥ एवंक्रियामयीदीक्षासम्प्रदात्रीनिरूपिता ॥ ५५२ ॥ राज्ञांध नाढ्यवैश्यानांविप्राणांव्यवसायिनाम् ॥ अथन्दीक्षाक्रमःप्रोक्तोभोगयुक् सिद्धिमिच्छताम् ॥ ५५३ ॥ अथवर्णमयींदीक्षांशृण्वनुज्ञानदायिनीम् ॥ यत्प्रकृत्यात्मतत्त्वञ्चवर्णानांसमुदीरितम् ॥ ५५४ ॥ तादृक्तत्त्वंशरीरेस्यप्रो क्रमेवास्तिदेशिकैः ॥ ततस्तनौशिशोर्न्यस्येद्वर्णान्देशिकसत्तमः ॥ ५५५ ॥ संहरेद्वैपरीत्येनवर्णांस्तत्स्थानसंस्थितान् ॥ देशिकेन्द्रःस्वसामर्थ्यादापयेद्दे वतात्मताम् ॥ ५५६ ॥ देवतात्माभवेच्छिष्यस्तदासंलीनतत्त्वतः ॥ अथ वक्ष्येकलादीक्षामणिमाद्यष्टसिद्धिदाम् ॥ ५५७ ॥ वेदेपञ्चकलादीक्षादक्षे ष्टत्रिकलामता ॥ कुपञ्चाशत्कलावामेसिद्धमन्त्रगुरोस्तुसा ॥ ५५८ ॥ ग्रा ह्याद्दृतंसिद्धिकर्त्रींविपरीताविपर्य्यया ॥ कलानिवृत्तिप्रमुखाभूतानांपञ्चचे रिताः ॥ ५५९ ॥ शिष्यकायेभूतमयेवेधयेत्ताःक्रमात्सुधीः ॥ पादादिजानुप र्य्यन्तंनिवृत्तिस्संस्थिताकला ॥ ५६० ॥ जान्वोःसकाशादानाभिप्रतिष्ठा ख्याकलास्मृता ॥ नाभितःकण्ठपर्य्यन्तंविद्याख्यासंस्थिताकला ॥ ५६१ ॥ कण्ठतोह्याललाटन्तुशान्त्याख्यासंस्थिताकला ॥ भालाच्छिरोवधिप्रोक्ताशा न्त्यतीताकलातथा ॥ ५६२ ॥ संहृतिक्रमतोविद्वान्वेधयेत्स्थानतोन्यतः ॥ स्थानेस्वीयाज्ञयाचैवदीक्षापञ्चकलास्मृता ॥ ५६३ ॥ अष्टत्रिंशत्कलादीक्षा युक्तिंशृण्वन्तुदेवताः ॥ क्रमेणकादिकावर्णायत्रद्वादशसंस्थिताः ॥५६४ ॥ विलोमाभादिकायत्रतत्रस्थानद्वयेकलाः ॥ भावनीयास्तुसूर्य्यस्यषोडशाशु विधोस्तथा ॥ ५६५ ॥ यकारादिस्थलेवह्नेर्भावनीयाःकलादश ॥ ततोवर्णक लानान्तुवर्णस्थानाच्चसंहृतिः ॥ ५६६ ॥ पुनश्चजनयेच्छिष्यःकलादीक्षावि धिस्त्वयम् ॥ कौलिकेवाममार्गेचावेददीक्षाफलप्रदा ॥ ५६७ ॥ अन्यास्ता दक्षिणेमार्गेऽन्यथातुपतितोभवेत् ॥ दीक्षांवेदमयींवक्ष्येयांलब्ध्वासुखदाज्ञनः ॥ ५६८ ॥ तत्कालएवसंसारेजीवन्मुक्तोभिजायते ॥ मूलाधारेतुशिष्यस्यध्याये त्कञ्जंचतुर्दलम् ॥ ५६९ ॥ तस्यमध्येत्रिकोणन्तुतन्मध्येचापिकुण्डलीम् ॥

१ मूलाधारचक्र चारि दलका है उन दलों में ( वं शं षं सं ) चारि बीज क्रम से जानिये ॥

त्रिरावर्णमयींदेवींविद्युत्पुञ्जस्वरूपिणीम् ॥ ५७० ॥ महादेवमयींसाक्षाज्ज्ञानमात्रेणरूपिणीम् ॥ अणोरणीयसींदेवींचक्रषट्कप्रभेदिनीम् ॥ ५७१ ॥ सुषुम्णावर्त्मनादिव्यांयान्तींशिवगृहम्प्रति ॥ सान्तवादिदलस्थार्णान्पद्मस्थानेसमाहरेत् ॥ ५७२ ॥ षड्दलेकमलेतन्तुलान्तवाद्यर्णयुग्दले ॥ स्वाधिष्ठानेगुरुस्सम्यग्योजयित्वातुवेधयेत् ॥ ५७३ ॥ तदर्णानानयेद्विन्दौविन्दुन्तंनाभिपङ्कजे ॥ फान्तडाद्यर्णसंयुक्तेदिग्दलेवेधयेत्स्वयम् ॥ ५७४ ॥ वर्णास्तान्योजयेद्रुद्रेरुद्रंतंहृत्सरोरुहे ॥ ठान्तकाद्यर्णपत्राब्जेवेधयेदीश्वरेस्वयम् ॥ ५७५ ॥ वर्णास्तानाहरेत्तस्मिन्कण्ठपद्मेचतंतथा ॥ कलादलमयेपद्मेस्वरान्संयोज्ययत्नतः ॥ ५७६ ॥ सदाशिवेथसंयोज्यतंतुभ्रूमध्यपद्मके ॥ द्विदलेलक्षसंयुक्तेवेधयित्वातुदेशिकः ॥ ५७७ ॥ शक्त्यासहैवमात्मानंनयेत्परशिवावधि ॥ देशिकाज्ञावशःशिष्योदग्धाज्ञानस्तदान्वितो ॥ ५७८ ॥ यतेदवाप्तविज्ञानःसर्वज्ञोजायतेततः ॥ सदाशिवःस्वयंभूयात्सत्यमेवनसंशयः ॥ ५७९ ॥ इयंज्ञानप्रदाप्रोक्तादीक्षावेदात्मिकाशिवा ॥ गुरुःस्वयंगुरुंध्यायेत्स्वहस्तेशिवरूपिणम् ॥ ५८० ॥ मूलविद्यांषडङ्गंचमातृकादिमनुंजपेत् ॥ शिष्यस्यमस्तकेदत्त्वाकृपयादक्षिणंकरम् ॥ ५८१ ॥ पश्चादुपदिशेत्प्रोक्तास्पर्शदीक्षातिसिद्धिदा ॥ सदाशिवेतुचिद्रूपेगुरुश्चित्तंनिधापयेत् ॥ ५८२ ॥ मन्त्रान्समस्तांस्तज्जातान्स्वयंध्यायेत्तदात्मकः ॥ जातोगुरोस्तुकृपयाकेवलोहंसदाशिवः ॥ ५८३ ॥ इतिध्यायन्नुपदिशेद्वाग्दीक्षात्वियमीरिता ॥ निमील्यनयनेध्यात्वापरमात्मनिदेवताम् ॥ ५८४ ॥ तद्दर्शनानन्दपूर्णनेत्राभ्यांदर्शयेद्गुरुः ॥ शिष्यंप्रसन्नचित्तःसन्पश्चादुपदिशेदिति ॥ ५८५ ॥ मन्त्रसिद्धस्यसिद्ध्यैस्याद्दृग्दीक्षेयंफलप्रदा ॥ गुरोरालोकमात्रेणभाषणात्स्पर्शनादपि ॥ ५८६ ॥ सद्यःसञ्जायतेज्ञानंसादीक्षाशाम्भवीस्मृता ॥ भुक्तिमुक्तिप्रसिद्ध्यर्थम्परीक्ष्यविधिवद्गुरुः ॥ ५८७ ॥

१ लिंग तटमें षट्दल कमल स्वाधिष्ठाननाम उसके पत्तों में ( बं भं मं यं रं लं ) और नाभिमें दशदल कमल तहां ( डं ढं णं तं थं दं धं नं पं फं ) एक दलमें हैं हृदयमें बारहदल कमल उसके पत्तों में ( कं खं गं घं ङं चं छं जं झं ञं टं ठं ) और कण्ठ में सोरह दलका कमल उन दलोंमें ( अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः और भौं हों के बीच में दो दल का कमल उसके दलों में ( हं क्षं ) क्रमसे जानिये ॥

पश्चाद्दुपदिशेन्मन्त्रमन्यथानिष्फलोभवेत् ॥ अन्यायेनचयोदद्याद्गृह्णात्य न्यायतश्चयः ॥ ५८८ ॥ ददतोगृह्णतोवापिकुलशापोभविष्यति ॥ गुरु शिष्यावुभौमोहादपरीक्ष्यपरस्परम् ॥ ५८९ ॥ उपदेशंददद्गृह्णन्प्राप्नुयात्तांपिशा चताम् ॥ अशास्त्रीयोपदेशन्तुयोगृह्णातिददातियः ॥ ५९० ॥ भुञ्जातेतावुभौ घोरान्नरकानेकविंशतिम् ॥ असंस्कृत्योपदेशंतुयः करोतिविनश्यति ॥ ५९१ ॥ विनश्यन्तिचतन्मन्त्राः सैकतेशालिबीजवत् ॥ अनर्हेमन्त्रविज्ञानंनतिष्ठतिक दाचन ॥ ५९२ ॥ तस्मात्परीक्ष्यकर्त्तव्यंचान्यथानिष्फलंभवेत् ॥ सच्छिष्या यातिभक्तायविज्ञानमुपदिश्यते ॥ ५९३ ॥ तत्प्राप्नोतिश्रीमित्वाङ्क्षीरान्ते यथाघृतम् ॥ धनेच्छाभयलोभाद्यैर्योग्यंयदिदीक्षयेत् ॥ ५९४ ॥ देवताशाप माप्नोतिकृतञ्चविकृतंभवेत् ॥ एवंदत्त्वागुरुर्दीक्षांकुर्य्यात्पूर्णाभिषेचनम् ॥ ५९५ ॥ विनायेनाभिषेकेणसाधकः पूर्णबोधताम् ॥ आचार्य्यत्वंचनाप्नोति सद्गतिञ्चसमीहिताम् ॥ ५९६ ॥ तस्माद्गुरुःप्रियंशिष्यंबोधयित्वाभिषेचयेत् ॥ विरच्यविपुलांश्चक्रान्मण्डपेतिमनोहरे ॥ ५९७ ॥ क्षारतोयभृतंकुम्भंस्थाप येच्चक्रमध्यतः ॥ अन्येषुकलशांस्तत्रवस्त्रहेमसमन्वितान् ॥ ५९८ ॥ दलेषुवि विधाःस्थाप्यास्तत्रवैचेष्टदेवताम् ॥ अभ्यर्च्यमध्येचान्तेषुसाङ्गावरणदेवताः ॥ ५९९ ॥ स्पृशंश्चमध्येकलशमाचार्य्यःप्रपठेदिति ॥ साङ्गाश्चचतुरोवेदास्त तस्तेनजलेनतु ॥ ६०० ॥ अभिषिञ्चेद्गुरुःशिष्यमितिपूर्णाभिषेचनम् ॥ देवे भ्यःसर्वतन्त्राणितन्त्रेभ्योमुनयस्तथा ॥ ६०१ ॥ यतोजातास्ततोशिष्यःसर्व तन्त्रैकभाजनम् ॥ भवेदाचार्य्यनामाचकुर्य्यान्नामान्तरंगुरुः ॥ ६०२ ॥ एता दृशस्ययोदीक्षागृह्णीयात्सतुसिद्धिभाक् ॥ सर्वमन्त्रप्रधानेषुसमर्थःसतुजाय ते ॥ ६०३ ॥ सर्वेदेवावशास्तस्यवेदपन्थास्तुसात्त्विकः ॥ एषएवविधिस्तस्य मार्गःस्याद्दक्षिणाभिधः ॥ ६०४ ॥ विशेषस्तत्रतोयानितीर्थानामाहरेत्सु धीः ॥ गङ्गायायमुनायाश्चसरस्वत्यामहोदधेः ॥ ६०५ ॥ सिन्धुगोदावरी वाकावेरीभ्यःपृथूदकात् ॥ महेन्द्रजायाःसरयूचर्म्मण्वत्योश्चपुष्करात् ॥ ६०६ ॥ महानद्यावेदिकायाःक्षिप्रावेत्रवतीजलम् ॥ कुरुक्षेत्रस्यगण्डक्याः र्णायामानसस्यच ॥ ६०७ ॥ घटेदत्त्वाजपेन्मन्त्रान्नानातन्त्रगतानपि

अभिषिक्तस्तुतैस्तोयैःसिद्धोवैमानवोत्रतु ॥ ६०८ ॥ प्रयोगार्थन्तथान्यस्यदानार्थमथवामके ॥ मध्येतीर्थघटंस्थाप्यशेषास्तोयघटामताः ॥ ६०९ ॥ येयआवाहितादेवागुरुणातुशुभेघटे ॥ तेतेकुर्व्वन्तुसान्निध्यंमन्त्ररूपाश्चतन्मुखे ॥ ६१० ॥ स्वयंसिद्धोहिकस्मैचिन्मूर्द्धानंनैवनामयेत् ॥ यदर्थंनामितोमूर्द्धातस्यमृत्युर्नसंशयः ॥ ६११ ॥ वाममार्गेगुरुर्यस्यचेदृक्सिद्धोभवेद्यदा ॥ शिष्यश्चनिरहङ्कारःसदादैवततत्परः ॥ ६१२ ॥ देवतार्थंयस्यनात्रत्रयाभोगेमनोनच ॥ सएवसिद्धोवामेस्यादन्योनिरयभाजनम् ॥ ६१३ ॥ दरिद्रोदुःखितोमूर्खइहलोकेपरत्रच ॥ क्रियादीक्षाविधिंकुर्य्याद्यथाशक्त्यागुरूक्तितः ॥ ६१४ ॥ एततत्त्वंसमाख्यातंकिमन्यच्छ्रोतुमिच्छथ ॥ ६१५ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेदीक्षाप्रकाशस्तृतीयः ॥ ३ ॥

---

सञ्ज्ञयाप्रार्थितादेवीमुनिभिःश्रोतुकामिभिः ॥ तदिष्टसिद्धयेतत्रदेवंसैव व्यजिज्ञपत् ॥ १ ॥ श्रौतमार्गरताएतेपृच्छन्तिमुनयःशिव ॥ एतेषांसंशयंछिन्धित्वद्दतेन्यःपुमान्नहि ॥ २ ॥ ईश्वरउवाच ॥ पृच्छन्तुऋषयस्तावद्देवाअपिमनोगतम् ॥ यावत्कालःसमायातिजलन्धरवधस्यतु ॥ ३ ॥ मुनयऊचुः ॥ अग्निःक्कचदेवाश्चहूयन्तेग्नौसुराःकथम् ॥ तत्राप्नुवन्तितद्भेदाभिन्नाःकस्माद्वदस्वनः ॥ ४ ॥ ईश्वर उवाच ॥ नस्वर्गेषुनर्तार्थेषुनौषधीषुनभेषुच ॥ ऋषयोदेवताःसन्तिमन्त्राएवतुदेवताः ॥ ५ ॥ साधकानांफलंदातुंतत्तद्रूपंधृतंसुरैः ॥ मुख्यस्वरूपंतेषांतुमन्त्राएवनचेतरत् ॥ ६ ॥ संस्कृताःसात्त्विकामन्त्राःपरत्रेहचशर्म्मदाः ॥ जन्मान्तरेभवेयुश्चबीजरूपानसंशयः ॥ ७ ॥ तत्रापिवैदिकामन्त्राःसुवर्णाःपरिकीर्तिताः ॥ नदुर्गतिमवाप्नोतितेषांसंसेवनान्नरः ॥ ८ ॥ द्विजत्वंप्राप्यये लोकेसेवन्तेतान्त्रिकान्मनून् ॥ त्यक्कासुवर्णंदुर्बुद्ध्याग्राम्यवत्तारचारिणः ॥ ९ ॥ताररूपास्तारकत्वान्मनवस्तान्त्रिकाअपि ॥ फलप्रदाइहामुत्रनसद्बीजाभवान्तरे ॥ १० ॥ किञ्चिद्राजससत्त्वायेयातनान्तेपुनस्तुते ॥ भवन्तिफलदायद्वद्वटोदुम्बरपिप्पलाः ॥ ११ ॥ तामसाःप्राकृतामन्त्राइहलोकेमहाफलाः ॥ नपरत्रयथाद्राक्षाखर्ज्जूरपनसादयः ॥ १२ ॥ तन्मन्त्रै

येद्धुतंवह्नौकीदृग्दहतिपावकः ॥ ग्रहश्चिनोतितच्छ्रेयोयथानाड्योन्नजंरसम् ॥ १३ ॥ निर्दोषातुयदानाडीवहेदन्नरसंलघु ॥ देवयोग्योग्रहस्तद्वच्छ्रेयस्संवहतेसुरः ॥ १४ ॥ सूर्य्यभात्त्रिषुभेष्वर्कनाड्यांश्रेयोभिवर्द्धते ॥ पोषयेद्दैविकान्मन्त्रानितरान्हन्तिवामवत् ॥ १५ ॥ ततस्त्रिभेषुसौम्यस्यनाडीबुद्धिविलासकृत् ॥ तस्मात्त्रिषुसितस्यापिवामानामपिपुष्टिदा ॥ १६ ॥ ततस्त्रिभेषु सौरस्यकुर्य्यान्मन्त्रेतुसंशयम् ॥ चन्द्रस्यसर्वमन्त्राणांपुष्टिकृच्चततस्त्रिषु ॥ १७ ॥ ततस्त्रिष्वारनाडीस्यात्फलानान्तुविनाशकृत् ॥ तस्मात्त्रिषुगुरोर्नाडीसत्वरंमन्त्रसिद्धिदा ॥ १८ ॥ राहुनाडीत्रिषुततोनसत्यैह्यकरेनरे ॥ त्रिष्वतःकेतुनाडीतुसङ्कतेमन्त्रदेवकृत् ॥ १९ ॥ [2]तिथिवासरसंयोगेगुणशेषेहुताशनः ॥ कौस्वर्गेकुतलेतन्त्रेप्रत्यक्षाग्निस्वरूपकम् ॥ २० ॥ मारयेत्साधकंस्वर्गेहरतेभूतलेधनम् ॥ प्रत्यक्षाग्निःफलंधत्तेभूमौवैविश्वरूपकः ॥ २१ ॥ वह्नेस्तुस्थापनंकुर्य्याद्वैदिकःकल्पमार्गतः ॥ तान्त्रिकःकुण्डसंस्कारानष्टादशसमाचरेत् ॥ २२ ॥ मूलमन्त्रेणसम्पश्येत्प्रोक्षयेदस्त्रमन्त्रतः ॥ कुशैस्सन्ताडयेत्कुण्डमस्त्रमन्त्रंपठंस्त्रिधा ॥ २३ ॥ ततः[3]कवचमन्त्रेणकुण्डस्याभ्युक्षणंमतम् ॥ अस्त्रमन्त्रेणखननंकुण्डस्याङ्गुलमात्रतः ॥ २४ ॥ अङ्गुष्ठानामिकाभ्यांतांमृदमस्त्रेणचोद्धरेत् ॥ पुनःशुद्धमृदातंचपूरयेद्[4]हृदयाणुना ॥ २५ ॥ समीकुर्य्यात्तोस्त्रेणसेचयेत्कवचेनतु ॥ काष्ठादिनाकुट्टयेत्तन्मन्त्रेणस्यात्तथादृढम् ॥ २६ ॥ कुशैस्सम्मार्ज्जयेत्कुण्डंततस्तुकवचाणुना ॥ विलेपनंगोमयाद्भिःकवचेनैवकारयेत् ॥ २७ ॥ कवचेनाग्निसूर्य्येन्दुकलाःकुण्डेविचिन्तयेत् ॥ त्रिसूत्री

---

१ जिस नक्षत्रमें सूर्य्यहो उससे वर्तमान नक्षत्रतक गिनने से जितने अङ्कहों उनमें क्रम से तीन तीन नक्षत्रों में सूर्य्य, बुध, शुक्र, शनि, चन्द्र, मंगल, बृहस्पति, राहु और केतु इन नव ग्रहोंकी नाड़ियां होती हैं उन्हींका शुभाशुभ फल मूलमें कहा गयाहै २ शुक्लपक्ष की परेवा से वर्तमान तिथितक गणना करने से जितने अङ्कहों उनमें वार की संख्या अर्थात् रविवार से वर्तमान वारतक गिनने से जितने अंकहों उनको जोड़कर तीनका भाग देनेसे शून्य शेषहो तौ भूमि में एक शेषहो तौ स्वर्ग में दो शेषहों तौ पाताल में अग्निका वास जानिये ३ कवच मन्त्र पढ़कर ४ हुंमन्त्रेण ५ नमः मन्त्रेण ॥

कृतसूत्रेणवेष्टयेत्प्रतिमेखलम्॥ २८॥ त्रिद्वारंवर्म्ममन्त्रेणकुण्डपूजांसमाचरेत् ॥ तारश्चामुककुण्डायआसनायनमस्त्विति ॥ २९ ॥ एवोर्घ्यइत्याद्यूहैश्च स कलंपूजनंचरेत् ॥ नाभेश्चमेखलानांचकुर्य्यादेवंप्रपूजनम् ॥ ३० ॥ सञ्चिन्तयेत्ततोस्त्रेणतत्कुण्डंवज्रवद्दृढम् ॥ वह्नेर्ज्वालानिरासायहृन्मन्त्रेणकुशैस्ततः ॥ ३१ ॥ कुण्डस्यतुचतुर्दिक्षुकुर्य्यान्मार्गचतुष्टयम् ॥ अच्छिन्नाग्रैःकुशैरस्त्रमन्त्रितैःकुण्डभित्तिषु ॥ ३२ ॥ भूतप्रेतादिदृष्टीनामस्त्रादीनांसमाचरेत् ॥ उद्यानन्तइमेप्रोक्ताःसंस्काराश्चेतिसम्मिताः ॥ ३३ ॥ भवेदनेनविधिनाकुण्डस्याप्यक्षपाटनम् ॥ वामहोमेतुसंस्काराआद्याश्चत्वारएवहि ॥ ३४ ॥ त्र्यस्रास्त्र्यस्राभवेद्रेखाप्रागुदक्चहृदाणुना ॥ स्मृताश्चप्राङ्मुखाग्राणांदेवाविष्ण्वीशवासवाः ॥ ३५ ॥ उदङ्मुखाग्ररेखाणांब्रह्मसूर्य्येन्दवःक्रमात् ॥ विलिखेद्दर्भकाण्डेनवाममार्गेस्त्रमन्त्रतः ॥ ३६ ॥ त्रिकोणोपरिषट्कोणंत्रिकोणद्वितयस्यतु॥ विष्ण्वीशवासवादीनांषण्णांतत्रतुपूजनम् ॥ ३७ ॥ वाममार्गेत्विष्टदेव्यास्त्रिकोणेपूजनंभवेत् ॥ सम्प्रोक्ष्यप्रणवेनाथयोगपीठंसमर्चयेत् ॥ ३८ ॥ तद्विधिंसम्प्रवक्ष्यामिमण्डलंचिन्तयेत्तले ॥ कालाग्निरुद्रंतस्योर्ध्वंशक्तियुक्तंविचिन्तयेत् ॥ ३९ ॥ तदूर्ध्वंचिन्तयेत्कूर्म्मंतस्यपृष्ठेवसुन्धराम् ॥ श्वेतद्वीपंतत्रचिन्त्यंसुधासिन्धुसुवेष्टितम् ॥ ४० ॥ मन्दारान्पारिजातांश्चसन्तानान्हरिचन्दनान् ॥ कल्पवृक्षांश्चतत्रैवचिन्तयेत्पूजयेदपि ॥ ४१ ॥ एतादृशगृहेचिन्त्यंरम्यंमणिमयंगृहम् ॥ स्वर्णपीठन्तुतन्मध्येतस्यपादान्विचिन्तयेत् ॥ ४२ ॥ पुरुषार्थांस्तुधर्म्मादीन्धर्म्मोज्ञानंविरागता ॥ ऐश्वर्य्यमपिचाङ्गानिपीठस्योक्तानितत्रतु ॥ ४३ ॥ मध्येविचिन्तयेत्पद्ममानन्दमयकन्दकम् ॥ संविन्नालंच

---

१ हुंमन्त्रेण २ ॐकारः ३ हे सुमुखि ४ तीनितीन कोणों की दो रेखाहोने से षट्कोण यन्त्र होताहै उसके छवों कोणों में विष्णु, शिव, इन्द्र, ब्रह्मा, सूर्य्य और चन्द्रमा की पूजा जानिये और उस षट्कोण यन्त्रके बीचमें एक त्रिकोण लिखना उसमें इष्टदेवता की पूजाकरना अब पीठपूजाकी विधि कहते हैं तहँ एक मण्डल भावनाकरै उसपर शक्ति सहित कालाग्नि रुद्रादिक क्रमसे एक एकके ऊपर जानै धर्म्म, ज्ञान, वैराग्य, ऐश्वर्य्य, ये चारौ पीठके पायाहैं और अधर्म्म अज्ञान अवैराग्य अनैश्वर्य्य ये चारौ ऊपर के पायाहैं ॥

विष्णु
चन्द्र
शिव
इष्ट देवता
सूर्य
इन्द्र
ब्रह्मा

तस्योक्ताविकारमयकेशराः ॥ ४४ ॥ प्रकृत्यात्मकपत्राणिपञ्चाशद्वर्णकर्णि
का ॥ सूर्य्यस्येन्दोःपावकस्यमण्डलत्रितयंततः ॥ ४५ ॥ ततःपूर्वादिकाष्ठा
सुसन्वंरजस्तमस्ततः ॥ अन्तरात्मयुतश्चात्मापरमात्माततःपरम् ॥ ४६ ॥
मायातत्त्वेथज्ञानात्माकलातत्त्वेप्रतिष्ठितः ॥ विद्यातत्त्वंपरंतत्त्वंयोगपीठमितीरि
तम् ॥ ४७ ॥ स्वाग्राद्दिग्रादक्षिण्येनतत्पद्मकेशरेषुतु ॥ मध्यान्तंपूजयेदेताज
याञ्चविजयान्तथा ॥ ४८ ॥ अजिताख्याञ्चापराञ्चजितांनित्यांविलासिनीम् ॥
दोग्ध्रीमघोराञ्चतथामङ्गलामथतत्रतु ॥ ४९ ॥ ह्रींसर्वशक्तिकमलासनायनमउ
च्यते ॥ दत्त्वापुष्पाञ्जलिंकुण्डेपूजयेद्भुवनेश्वरीम् ॥ ५० ॥ आवाहना
दिपरमीकरणान्तञ्चपूजयेत् ॥ कामोन्मत्तांशिवांतत्रदेवीमृतुमतीन्तथा ॥
५१ ॥ गाणेशशैवशाक्तेषुध्यायेत्सम्पूजयेदिति ॥ वैष्णवेचतथासौरेलक्ष्मी
मृतुमतींस्मरेत् ॥ ५२ ॥ नारायणस्यसंयोगाज्जातमग्निंविचिन्तयेत् ॥
आरण्यंविप्रगेहाद्वादद्यादग्निंकुमारिका ॥ ५३ ॥ सुवासिनीवामहस्तात्कृ
तशौचासमाहरेत् ॥ पात्रान्तरेचापिहितेताम्रपात्रादिकेशुभे ॥ ५४ ॥ अ
ग्निप्रणयनंकुर्य्याच्छरावेणाथनूतने ॥ दद्यादस्त्रेणपात्रेग्निंकवचेनविधाय
च ॥ ५५ ॥ जीर्णेशरावेकापालेभिन्नपात्रेतथोल्मुके ॥ नाग्निप्रणय
नंकुर्य्याद्व्याधिहानिभयावहम् ॥ ५६ ॥ क्रव्यादांशञ्चनैर्ऋत्येत्यजेदस्त्रेणव
ह्नितः ॥ देवांशंमूलमन्त्रेणस्थापयेदग्रतःसुधीः ॥ ५७ ॥ पश्चात्तमग्निंसं
स्कारैःसंस्कुर्य्याद्वीक्षणादिभिः ॥ प्रदीपकलिकाकारंतेजआवाहयेत्ततः ॥
५८ ॥ ऐक्यंचायस्येष्टदेववह्निभ्यांगार्थिवस्यच ॥ स्मृत्वाग्निबीजन्तेना
थचैतन्यंयोजयेत्ततः ॥ ५९ ॥ ओङ्कारेणाभिमन्त्र्याथधेनुमुद्रामृतीकृतम् ॥
संरक्ष्यचशरेणाथकवचेनावगुण्ठयेत् ॥ ६० ॥ ततःसम्पूज्यकुण्डस्यभ्रामये
त्रिःप्रदक्षिणम् ॥ प्रणवेनततःस्वस्यसम्मुखंस्वीयकुण्डले ॥ ६१ ॥ देव्यायो

१ अपने आगे से और कमलके अन्तराले केशर तक और बीचमें तथा नीचे पीठमें जयादि नवो पीठशक्तियों की पूजा करै तब ह्रीं सर्वशक्तिकमलासनाय नमः यह मन्त्र पढ़कर त्रिकोणमें श्रीभुवनेश्वरीजीकी पूजाकरै २ कुछ अग्नि निकासिकै नैर्ऋत्य कोणमें फेंकदे उसे क्रव्यादांश कहते हैं शेष अपने आगे धरै ३ तब ओङ्कार मन्त्र पढ़कर अपने सामने कुण्डको देवीकी योनि जानकर उसमें अग्नि को शिवबीज समझकर छोड़ै ॥

नौतत्रजानन्स्पृष्ट्भूमिश्चदेशिकः ॥ शिवबीजमितिज्ञात्वानिक्षिपेदाशुशु क्षणिम् ॥ ६२ ॥ देवदेव्योराचमनंमैथुनान्तेधिय. चरेत् ॥ चितिपिंङ्गलहनहन पचपचदहदह ॥ ६३ ॥ सर्वज्ञापयस्वाहेतितारादिर्जिनवर्णकः ॥ अमुंमनुंप्र भाष्यैवकृशानुंज्वालयेत्ततः ॥ ६४ ॥ अग्निंप्रज्वलितंवन्देजातवेदंहुताशा नम् ॥ सुवर्णवर्णममलंसमिद्धंसर्वतोमुखम् ॥ ६५ ॥ अनेनज्वलितंमन्त्रेणो पतिष्ठेद्धुताशनम् ॥ मुखेनैवधमेदग्निम्मुखादेषव्यजायत ॥ ६६ ॥ कुशैःप लाशादिपर्णैर्नापवित्रेणकेनचित् ॥ ततःसुविन्यसेज्जिह्वादेहेमन्त्रैर्विभाव सोः ॥ ६७ ॥ भाललिङ्गोरुमूर्द्धास्यनासानेत्रेपुचक्रमात् ॥ सर्वाङ्गेषुचजि ह्वास्तावक्ष्यन्तेत्रिविधात्मिकाः ॥ ६८ ॥ हिरण्याकनकारक्ताकृष्णाचैवतुसुप्र भा ॥ बहुरूपाचातिरक्ताजिह्वाःसप्तेतिसात्त्विकाः ॥ ६९ ॥ अनलादिसबिन्दू न्तयादिसान्ताक्षरान्विताः॥मन्त्रीप्रविन्यसेद्भूयोवह्नेरङ्गानिवैक्रमात् ॥ ७० ॥ सहस्रार्चिस्स्वस्तिपूर्णउत्तिष्ठपुरुषस्तथा ॥ धूमव्यापीसप्तजिह्वोधनुर्धरइतीरि ताः ॥ ७१ ॥ न्यसेत्प्रदक्षिणेदेहेवह्निमूर्त्त्यष्टकंक्रमात् ॥ मूर्द्धास्यपार्श्वकट्य ङ्घ्रिकटिपार्श्वांशकेषुच ॥ ७२ ॥ प्रणवादिनमोन्तास्तुअग्नयेपदपूर्वकाः ॥ जातवेदास्सप्तजिह्वोहव्यवाहस्तृतीयकः ॥ ७३ ॥ अश्वोदरजवैश्वानराख्य कौमारतेजसः ॥ विश्वमुखोदेवमुखोमूर्त्तयोष्टौप्रकीर्त्तिताः ॥ ७४ ॥ प्रद क्षिणक्रमेणैवसञ्चिन्त्यचततोजलैः ॥ मेखलोपरिसंशुद्धैःपुनर्दर्भचतुष्टयैः ॥ ७५ ॥ प्रागग्रैरुदग्रैश्चहित्वापूर्वाःपरिस्तरेत् ॥ एकमेखलकेकुण्डेमेखला धःपरिस्तरेत् ॥ ७६ ॥ द्विमेखलेद्वितीयायांमध्यमायांत्रिमेखले ॥ स्थण्डि लेसिकतानांतुबाह्यभूमौपरिस्तरेत् ॥ ७७ ॥ आत्ममेखलयोर्मध्येपरिधि स्थापनस्यच ॥ रन्ध्रंकुर्यात्तथाविद्वान्मध्यमामेखलोपरि ॥ ७८ ॥ पलाशकाश्मरीबिल्वविकङ्कतसमुद्भवान् ॥ एकवृक्षोद्भवानार्द्रान्परिधीन्बाहु मात्रकान् ॥ ७९ ॥ प्राणानायम्यविधिवत्परिस्तार्य्यकुशान्तरैः ॥ स्वगृ ह्योक्तविधानेनवायुदेशाच्चपूर्वतः ॥ ८० ॥ स्रुक्स्रुवौचप्रणीताचप्रोक्षणी

---

१ अग्नि २ ॐ चितिङ्गल हनहनपचपचदहदह सर्व ज्ञापय स्वाहा यह चौबिस अक्षर का अग्निका मन्त्रहै ३ आस्य नाम मुख ४ खम्भारि वृक्ष ५ शमी वा झींगुरिवृक्ष ॥

पात्रयुग्मकम् ॥ आज्यस्थालीञ्चपरिधींस्तथैवकुशमुष्टयः ॥ ८१ ॥ अधोमुखानिपात्राणिहोमद्रव्यंबलिंतथा ॥ गन्धपुष्पाक्षतादीनिसर्वाण्यासादयेत्ततः ॥ ८२ ॥ तान्यभ्युक्ष्यपवित्रेणचासनानिविधायच ॥ प्रोक्षणीपात्रयुगलंपरिपूर्य्यशुभाम्बुना ॥ ८३ ॥ दत्त्वातत्रपवित्रांश्चपरिपूर्य्यनिधापयेत् ॥ दिश्युत्तरस्यांतत्पात्रंप्रणीतेत्युच्यतेबुधैः ॥ ८४ ॥ ततःकिञ्चित्प्रणीताम्बुप्रोक्षणयाधायतज्जलैः ॥ यज्ञसाधनसम्भारान्प्रोक्षयेन्मूलमन्त्रतः ॥ ८५ ॥ वृणुयाद्ब्राह्मणंशाक्तंदेवतामन्त्रदीक्षितम् ॥ कुण्डस्यदक्षिणेभागेवेशयेत्तंकुशासने ॥ ८६ ॥ अमुकामुकगोत्रोहममुकामुकगोत्रिणम् ॥ दीक्षाङ्गभूतहोमेस्मिन्ब्राह्मणंत्वांवृणेत्विति ॥ ८७ ॥ वस्त्रालङ्कारादिकेनवृत्वातंपरिपूजयेत् ॥ कुर्य्यात्कुशवटुंचापिलभ्यतेब्राह्मणोनचेत् ॥ ८८ ॥ कुंडमध्येतुषट्कोणेवर्णितंस्वर्णकर्णिकम् ॥ नानाकेशरसंयुक्तंचतुर्द्वारसमावृतम् ॥ ८९ ॥ चिन्तयेदष्टदलकंचतुरस्रतयावृतम् ॥ पूजापीठन्तुतद्वह्नेस्तत्रमण्डलकादिना ॥ ९० ॥ ज्ञानात्मानंयोगपीठंसम्पूज्याष्टदलेषुच ॥ प्रादक्षिण्येनमध्यान्तंपीतांश्वेतांतथारुणाम् ॥ ९१ ॥ कृष्णांधूम्रांचतीव्रांचपूजयेद्विस्फुलिङ्गिनीम् ॥ रुचिरांज्वालिनींञ्चेतिसर्वपीठम्प्रपूजयेत् ॥ ९२ ॥ सर्वशक्तिकमलासनायहृद्द्वादशाक्षरः ॥ समस्तपीठपूजायांवह्निमन्त्रउदाहृतः ॥ ९३ ॥ ततोहुताशनन्ध्यायेद्वरस्वस्तिकशक्तितः ॥ अभयेनचसंयुक्तैर्भुजैःसम्यग्विराजितम् ॥ ९४ ॥ सिन्दूरवर्णपद्मस्थंस्वर्णालङ्कारभूषितम् ॥ त्रिनेत्रञ्चजटामौलिम्पीतवस्त्रारुणस्रजम् ॥ ९५ ॥ ध्यात्वैवंमनुनानेनपूजयेदुपचारकैः ॥ वैश्वानरजातवेदइहावहलोहिताक्ष ॥ ९६ ॥ सर्वकर्म्माणिसाधयस्वाहान्तःप्रणवादितः ॥ सप्तविंशत्यक्षरोयंमन्त्रःस्याद्वह्निपूजने ॥ ९७ ॥ ततःषट्कोणमध्येचजिह्वाध्यानंचपू

---

१ अट्ठासी के श्लोक से आगे कई श्लोकों में अग्निके यंत्रपूजाकी विधि कहते हैं उसी यंत्रको अग्निस्थापन से प्रथम कुण्ड में लिखकर पूजा करना उचित है व अग्निस्थापन किेपर भी भावना से पूजा करना तन्त्रमें यह सर्वत्रका नियम है कि अपने और बीचमें पूज्य देवताके मध्यमें जो कोनहै उसको पूर्व जानना जहां पूर्वसे पूजा कहैं वहां यही समझना भूपुरमें दिक्पालोंकी पूजा अपनी अपनी दिशाओंमें सदा होतीहै वहां पूजक पूज्य मध्य पूर्वका नियम नहींहै अर्थात् प्रधान पूर्वादि दिशा जानिये अत्र अग्निका यन्त्र देखिये ॥

चक्रमें त्रिकोण में अग्निका मंत्र लिखा है ॥ और अग्नि पूजा समय में न्यास भी करना चही सो, यथा ॥ ॐसहस्रार्चिषेअङ्गुष्ठाभ्यांनमः ॥ ॐस्वस्तिपूर्णायतर्जनीभ्यांनमः ॥ ॐउत्तिष्ठपुरुषायमध्यमाभ्यांनमः ॥ ॐधूमव्यापिनेअनामिकाभ्यांनमः ॥ ॐसप्तजिह्वायकनिष्ठिकाभ्यांनमः ॥ ॐधनुर्धरायकरतलकरपृष्ठाभ्यांनमः ॥ इति करन्यासः ॥ ॐसहस्रार्चिषेहृदयाय नमः ॥ ॐस्वस्तिपूर्णायशिरसेस्वाहा ॥ ॐउत्तिष्ठपुरुषायशिखायैवषट् ॥ ॐधूमव्यापिनेकवचाय हुम् ॥ ॐधनुर्धरायअस्त्रायफट् ॥ इति हृदयादिन्यासः ॥ ये दोनों न्यास करने के बाद यंत्र में पूजा करना उचित है ॥

वं ब्रह्मणे नमः पं पद्माय नमः




अं अनन्तायनमः चं चक्रायनमः ॥

जनम् ॥ जिह्वाज्वालारुचःसर्वावराभयकरास्तथा ॥ ९८ ॥ ऐश्यांहिरण्यास्व
र्णाभाशान्तिपौष्टिककर्म्मणि ॥ वैदूर्य्यवर्णाकनकाप्राच्यांस्तम्भनकार्य्यकृ
त् ॥ ९९ ॥ विद्वेषेतरुणादित्यनिभारक्ताग्निकोणके ॥ कृष्णाञ्जनचयप्रख्या
नैर्ऋत्यांमारणक्षमा ॥ १०० ॥ सुप्रभापद्मरागाभावारुण्यांधनदायका ॥ अति
क्काजयाभासावश्येवायुदिशङ्गता ॥ १०१ ॥ बहुरूपातुषट्कोणमध्येषड्वर्णस
युता ॥ अनेककार्य्यसंसिद्धिर्नाशकर्त्रीचसामता ॥ १०२ ॥ यथाकार्य्यंतथाजि
ह्वादृश्यतेचेत्स्वदिग्गता ॥ ज्वालारूपातथासिद्धिर्विपरीतेविपर्य्ययः ॥ १०३
[1]प्रभादीप्तिःप्रकाशाचमरीचिस्तापिनीतथा ॥ करालालेलिहाचेतिजिह्वावैष्ण
वकर्म्मणि ॥ १०४ ॥ ईशप्राग्वह्निनैर्ऋत्यपश्चाद्वायव्यमध्यतः ॥ संस्थिता
सकलाजिह्वावरदाभयसत्कराः ॥ १०५ ॥ एवंपूजांविधायाशुदेवाग्रेचापि
क्षुच ॥ पूजयेच्चषडङ्गानिपत्रेष्वावृत्तिदेवताः ॥ १०६ ॥ इन्द्रादीन्सायुधान
श्चात्सम्पूर्णाग्निंपुनर्यजेत् ॥ ततश्चाधोमुखौकृत्वास्रुक्स्रुवौचप्रतापयेत् ।
१०७ ॥ कुशाग्रैस्तुतयोरग्रंमध्यंमध्यैश्चमार्ज्जयेत् ॥ मूलेमूलैस्त्रिधाचैवमा
र्ज्जयित्वाप्रतापयेत् ॥ १०८ ॥ धृत्वातौवामहस्तेनप्रोक्षयेत्प्रोक्षणीजलैः ॥
दक्षिणेनकराग्रेणपुनःसन्तापयेच्चतौ ॥ १०९ ॥ कुशान्क्षिप्त्वाततोवह्नौस्व
क्षेतुकुशास्तरे ॥ संस्थाप्यस्रुक्स्रुवौपश्चाद्घृतसंस्कारमाचरेत् ॥ ११० ॥
मादायघृतस्थालींमन्त्रेणसेचयेत्ततः ॥ घृतंतत्रसमापूर्य्यवीक्षणादिसुसंस्
तम् ॥ १११ ॥ वायव्येबाह्यतोङ्गारान्कृत्वातेपुहृदान्यसेत् ॥ तापनन्तुस
द्दिष्टंकुशद्वयमतःक्षिपेत् ॥ ११२ ॥ अभिद्योतनमेतत्स्यादुद्योतनमथोच्यते ।
कुशंप्रज्वलितंचोद्यदर्शयेत्तंहृदाक्षिपेत् ॥ ११३ ॥ वह्नावुद्वास्यचघृतमङ्गार
ग्निपुनिक्षिपेत् ॥ अपसंस्पृश्यमन्त्रज्ञःकुर्य्यादुत्प्लवनंततः ॥ ११४ ॥ अ
मन्त्रंजपेन्मन्त्रीकुशौप्रादेशमात्रकौ ॥ अङ्गुष्ठानामिकाभ्यांचगृहीत्वाघृत
त्प्लवेत् ॥ ११५ ॥ ततोहृदंकुशाभ्यान्तुस्वाभिमुख्येनसम्प्लवेत् ॥ घृतंतत्स्य
त्सम्प्लवनंषट्संस्काराइतीरिताः ॥ ११६ ॥ उत्तमंगोघृतंप्रोक्तंमध्यमंमहि

[1] हिरण्यागगनारक्तादि जिह्वाओं की जगह में वैष्णव कर्म्म में प्रभा, दीप्ति, प्रकाश
मरीचि, तापिनी, कराला और लेलिहा ये सात जिह्वाओंको क्रमसे जानिये ॥

भवम् ॥ अधमंछागलीजातंनिषिद्धंत्वेडकादिजम् ॥ ११७ ॥ क्रीतंयदा पणेचाज्यंस्वाद्बुचेद्द्रव्यवच्चतत् ॥ कुशद्वयंघृतेन्यस्यततःप्रादेशसम्मितम् ॥ ११८ ॥ ग्रन्थिंकृत्वाकुशाग्रौद्वौशुक्लकृष्णौविचिन्तयेत् ॥ पक्षौवामइडांदक्षे पिङ्गलांमध्यतस्ततः ॥ ११९ ॥ सुषुम्णांसंस्मरेन्मन्त्रीततोहोमंसमाचरेत् ॥ दक्षभागात्स्रुवेणाज्यंप्रगृह्णीयादध्रदाणुना ॥ १२० ॥ दक्षेनेत्रेहुताशस्या ग्नयेस्वाहेतिहोमयेत् ॥ पुनस्त्वाज्यंवामभागाद्धृन्मन्त्रेणसमाहरेत् ॥ १२१ ॥ अग्निवक्त्रेऽग्नयेस्विष्टकृतेस्वाहेतिहोमयेत् ॥ सैताराभिर्व्याहृतिभिराज्येन जुहुयात्पुनः ॥ १२२ ॥ जुहुयादग्निमन्त्रेणत्रिवारंदेशिकोत्तमः ॥ गर्भा धानादिकावह्नेस्समुद्वाहावसानिकाः ॥ १२३ ॥ शुभेकर्म्मणिकर्त्तव्या आज्याहुत्यष्टकैःक्रियाः ॥ प्रणवंपूर्वमुच्चार्य्यकर्म्मनामसमुच्चरेत् ॥ १२४ ॥ सम्पादयामिस्वाहेतिसर्वकर्म्मस्वयंविधिः ॥ गर्भाधानंपुंसवनंसीमन्तंजात कर्म्मच ॥ १२५ ॥ निष्काशनञ्चकथितंप्राशनञ्चतथाबुधैः ॥ चौलोपनय नंवह्नेर्महानामव्रतंतथा ॥ १२६ ॥ महाव्रतञ्चोपनिषद्व्रतङ्गोदानमेवच ॥ समावर्त्तसमुद्वाहौशाक्तेवाग्भवपूर्वकाः ॥ १२७ ॥ ततश्चवह्नेःपितरौदेवदे व्यादिकौतथा ॥ पूजयित्वाविसृज्याथमूलाग्रेषुघृतप्लुताः ॥ १२८ ॥ समिधोऽग्नौक्षिपेत्पञ्चवह्नावथचपूर्ववत् ॥ सबीजस्वस्वनाम्नावैचैकाकामाहु

---

१ घृत २ बीताभरि ३ पात्रमें धरेहुये घृतसे दक्षिण ओरसे स्रुवा में लेकर, ॐ अग्नये स्वाहा, इस मंत्रसे कुंडस्थ अग्निमें दक्षिण ओर स्वाहा देने से अग्निका दक्षिण नेत्र होता है तथा, ॐ सोमायस्वाहा, इस मंत्र से अग्निके वाम नेत्र में स्वाहा देना और घृत वाम ओरसे लेना ॥ तथा पात्रके बीचसे स्रुवामें घृत लेकर, ॐअग्नीषोमाभ्यांस्वाहा ॥ इस मन्त्रसे कुंडस्थ अग्निके बीचमें छोड़ना उसको अग्निके मध्य नेत्रमें समझना ॥ ॐअग्नयेस्विष्टकृतेस्वाहा ॥ इस मंत्रसे दीहुई स्वाहाको अग्निके मुखमें जानिये ४ ॐ भूःस्वाहा, ॐ भुवस्स्वाहा, ॐ स्वः स्वाहा, ॐ भूर्भुवस्स्वः स्वाहा, ५ ॐ वैश्वानरजातवेदइहावहलोहिताक्षसर्वकर्म्माणिसाधय स्वाहा ६ गर्भाधानादि कर्म्मों में, ॐ अमुककर्म्मसम्पादयामिस्वाहा, इस मन्त्रसे घृतकी आठ आठ आहुतिदे तब अग्निके माता पितारूप शिवा शिव दोऊ जनोंकी पूजाकर बिदाकरने के अनन्तर अग्नि मन्त्रसे पंच समिधों को होमकरै ॥

तिंहुनेत् ॥ १२९ ॥ ततश्चाङ्गानिजुहुयाद्वह्नेर्मूर्त्यष्टकंतथा ॥ १३० ॥ इन्द्रादिलोकपालांश्चआयुधानिततःपरम् ॥ पूर्वोक्तेनाग्निमन्त्रेणवौषडन्तेन वैततः ॥ १३१ ॥ तारांद्यैर्दशभिर्भेदैःपूर्वंपूर्वसमन्वितैः ॥ मनुनागाणपत्येन हुनेत्पूर्वंदशाहुतीः ॥ १३२ ॥ जुहुयाच्चचतुर्वारंसमस्तेनैवतेनतु ॥ संपूज्य देवतापीठंवह्नौसम्यक्ततोगुरुः ॥ १३३ ॥ अग्निरूपधरांतत्रपूजयेदिष्टदेवताम् ॥ आज्येनचाग्निमनुनापञ्चविंशतिसङ्ख्यकम् ॥ १३४ ॥ हुनेन्मन्त्रीचाग्निमुखेवक्त्रैकीकरणंत्विदम् ॥ आत्माग्निदेवतानांचचिन्तयन्नैक्यमात्मवित् ॥ १३५ ॥ एकादशाथमूलेनहुनेदाज्येनचाहुतीः ॥ नाडीसन्धानमेतद्धि प्रोक्तंदेशिकसत्तमैः ॥ १३६ ॥ अङ्गप्रभृत्यावृत्तीनामेकैकामाहुतिंहुनेत् ॥ पूर्वादिदिक्षुसर्वासुकुण्डेपुचयथाविधि ॥ १३७ ॥ गुरुर्वह्निंप्रविहरेत्संस्कृतंतूक्तवर्त्मना ॥ सर्वर्त्विजश्चन्दनाद्यैस्सम्पूज्यप्रोक्तदेवताम् ॥ १३८ ॥ सर्वावरणसंयुक्तां मूलेनजुहुयुस्ततः ॥ पञ्चविंशतिधासर्पिस्संयुतेनप्रियान्धसा ॥ १३९ ॥ स्रुवेणाज्यंसमित्पाण्यास्रुचाशेषंकरेणतु ॥ तत्रदिव्येनहोतव्यंतीर्थेणार्षेणवातथा ॥ १४० ॥ योनर्चिपिजुहोत्यग्नौव्यङ्गाग्नौचैवमानवः ॥ मन्दाग्न्यामयसंयुक्तो दरिद्रश्चापिजायते ॥ १४१ ॥ दद्याद्बलिंगन्धपुष्पधूपपूर्वकमादरात् ॥ नक्षत्राणांचवाराणांराशिनांचपृथक्पृथक् ॥ १४२ ॥ देवताभ्यःपदंप्रोक्तादिवानक्तंवदेत्ततः ॥ वारेभ्यश्चाथसर्वेभ्योभूतेभ्यश्चनमोवदेत् ॥ १४३ ॥ इत्येषतान्त्रिकोहोम

---

१ ॐ सहस्रार्चिषे स्वाहा, ॐ स्वस्तिपूर्णाय स्वाहा, ॐ उत्तिष्ठपुरुषायस्वाहा, ॐ धूमव्यापिने स्वाहा, ॐ सप्तजिह्वाय स्वाहा, ॐ धनुर्धराय स्वाहा ॐ अग्नयेजातवेदसे स्वाहा, ॐ अग्नये सप्तजिह्वाय स्वाहा, ॐ अग्नयेहव्यवाहाय स्वाहा, ॐ अग्नयेअश्वोदरजाय स्वाहा, ॐ अग्नये वैश्वानराय स्वाहा, ॐ अग्नयेकौमारतेजसे स्वाहा, ॐ अग्नयेविश्वमुखाय स्वाहा, ॐ अग्नयेदेवमुखाय स्वाहा २ इन्द्रादिकों के वा उनके हथियारों के मन्त्र चक्रके भूपुरमें लिखाहै ॥ ३ ॐ ॐ स्वाहा १ ॐ श्रींस्वाहा २ ॐ श्रींह्रीं स्वाहा ३ ॐ श्रींह्रींक्लीं स्वाहा ४ ॐ श्रींह्रींक्लींग्लौं स्वाहा ५ ॐ श्रींह्रींक्लींग्लौंगं स्वाहा ६ ॐ श्रींह्रींक्लींग्लौंगंगणपतये स्वाहा ७ ॐ श्रींह्रींक्लींग्लौंगंगणपतयेवरवरद स्वाहा ८ ॐ श्रींह्रींक्लींग्लौंगंगणपतयेवरवरदसर्वजनंमे वशं स्वाहा ९ ॐ श्रींह्रींक्लींग्लौंगंगणपतयेवरवरद सर्वजनंमेवशमानय स्वाहा १० । ४ फिर इस पूरे गणेशके मन्त्रसे चार स्वाहादे ५ अग्निमें देवपीठ भावना करके देवता का अग्निरूप जानिके मानसी पूजाकरे ६ पूर्वोक्त अग्निमन्त्र ॐ वैश्वानरजातवेदइहावह इत्यादि ॥

विधिःप्रोक्तोमयासुराः ॥ पृच्छन्त्वन्यद्गूढमपिवक्ष्यामिशरणागताः ॥१४४॥

इति श्रीमहामायामहाकालानुमतेशिवप्रणीतेमेरुतन्त्रेहोमविधिप्रकाशश्चतुर्थः ॥ ४ ॥

---

श्रीदेव्युवाच ॥ धनिनांमध्यमानांच दरिद्राणांगृहासिनाम् ॥ परदेशस्थितानांचकारागेहादिवासिनाम् ॥ १ ॥ कायादौर्व्याहतानांचयुक्तानांशूकरादिभिः ॥ कार्य्याङ्गवस्त्वभावेवाकामिकानांकृपानिधे ॥ २ ॥ षडाम्नायरहस्येनकथंनित्याह्निकंभवेत् ॥ लोकलज्जावतांचापिदिनचर्य्यांवदप्रभो ॥ ३ ॥ ईश्वरउवाच ॥ महाकालेनयत्प्रोक्तंयन्महामाययाश्रुतम् ॥ रहस्यातिरहस्यंयत्सर्वतन्त्रेषुगोपितम् ॥ ४ ॥ आम्नायानांरहस्यंयदाह्निकंप्रोच्यतेमया ॥ शृण्वन्तुसर्वेभोदेवाःसाधकानांप्रसिद्धिदम् ॥ ५ ॥ तत्रनित्यंत्रिधाप्रोक्तंगुणत्रयविभेदतः ॥ अधिकारिविभेदेनतदपित्रिविधंभवेत् ॥ ६ ॥ शुद्धंमिश्रंचगलितंतत्तथैवफलप्रदम् ॥ अकृतेप्रत्यवायोनगलितेसफलञ्शनैः ॥ ७ ॥ अहङ्कारविहीनंचेन्मानसञ्ज्ञानपूर्वकम् ॥ स्वस्थचित्तेनयतिनाकृतंतच्छुद्धमिष्यते ॥ ८ ॥ तादृशंचेद्गृहस्थेननिर्द्धव्येणचवाकृतम् ॥ रुग्णेनपथिकेनापिकारागृहगतेनवा ॥ ९ ॥ भक्तितोवापितन्मिश्रंबाह्यपूजाधिकारतः ॥ शीतादिभीत्यावावित्तसंक्षयादन्यकार्य्यतः ॥ १० ॥ स्त्र्यादेर्नियोगाद्गलितंगृहिणोमानसम्मतम् ॥ बाह्यपूजादिकंयच्चएकान्तेनियमेनच ॥ ११ ॥ भक्त्याकृतंगृहस्थेनतच्छुद्धंराजसम्मतम् ॥ पूजार्थंयद्याचयित्वाश्रद्धाभक्तिंविधायच ॥ १२ ॥ लोकभीत्यादेवभीत्यायत्तदायासमिश्रितम् ॥ प्रतारणार्थंलोकानांयाचितंदेवनामतः ॥ १३ ॥ द्रव्यंकृतंतदुद्देशोगलितंतत्तुराजसम् ॥ वाममार्गंसमाश्रित्यकौलंधर्म्मंविचार्य्यच ॥ १४ ॥ अन्यधर्म्मस्यचाद्वेषात्कृतंशुद्धंतुतामसम् ॥ कृतंयत्कामतःकर्म्मचैहिकंपारलौकिकम् ॥ १५ ॥ वाममार्गंसमाश्रित्यमिश्रितंतत्तुतामसम् ॥ जिह्वालोभेनयत्पानंभक्षणंकामतोरतम् ॥ १६ ॥ अथवामारणाद्यर्थंगलितंतत्तुतामसम् ॥ शुद्धसत्त्वेनमोक्षःस्यात्स्वर्गःस्यान्मिश्रसत्त्वतः ॥ १७ ॥ सिद्धिर्गलितसत्त्वात्स्यादैहिकीचमनुष्यता ॥ स्वर्गःस्याद्राजसाच्छुद्धात्कामःस्यान्मिश्रराजसात् ॥ १८ ॥ गलिताद्राजसात्तिर्य्यग्योनावपिसुखंभवेत् ॥

सात्त्विकात्तामसाद्दैवयोनित्वंप्राप्नुयान्नरः ॥ १६ ॥ मिश्रतामसतोदुःखीनार कीचान्त्यतामसात् ॥ कर्म्मपञ्चविधंप्रोक्तंपञ्चधामुक्तिदायकम् ॥ २० ॥ प्रसर्प णमुपादानमिज्याध्यायस्तथाद्युतिः ॥ सम्मार्ज्जनोपलेपादिसंस्कारादेवमन्दि रे ॥ २१ ॥ भक्ताज्र्जवंसर्प्पणंस्यादेवमारोग्यकारकम् ॥ पूजासाधनसाम ग्र्यामेलनंभक्तसेवनम् ॥ २२ ॥ तत्प्रीतिःस्यादुपादानंदेवतारूपदायकम् ॥ पीठपूर्वाङ्गपूर्वञ्चषोडशाद्युपचारकैः ॥ २३ ॥ मूर्त्तौयन्त्रेथवापूजासेज्यास्यादि ष्टकारिका ॥ तच्छास्त्राध्ययनंसम्यक्कृत्वामन्त्रार्थभाजनम् ॥ २४ ॥ कृत्वाज पन्तुवाध्यायोदेवतायुज्यकारकः ॥ गुरुदेवात्मकालानांसम्यगैक्यविभावन म् ॥ २५ ॥ संयोगोलिङ्गदेहस्यनाशकःकालयोगकृत् ॥ निशायांपश्चिमे यामेस्मरेदिष्टांचदेवताम् ॥ २६ ॥ उत्थायदक्षिणाङ्गेनवामपादंन्यसेद्भुवि ॥ ततोगृहाद्बहिर्गत्वाकृत्वावश्यकमादरात् ॥ २७ ॥ रात्रिवासःपरित्यज्यवास सीपरिवीयच ॥ आचम्यशुद्धदेहःस्याद्देवतायोगमन्दिरे ॥ २८ ॥ निर्माल्य मपकृत्वाथदद्यात्पुष्पाञ्जलिन्तथा ॥ अर्घ्यपात्रेनिवेद्याथदद्याद्धैदन्तधावनम् ॥ २९ ॥ मुखप्रक्षालनंकृत्वादद्यादाचमनीयकम् ॥ करस्यप्रोक्षणायाथदद्याद्वा सोऽमलंशुभम् ॥ ३० ॥ ततस्तुमस्तकेचिन्त्यंसहस्रदलपद्मकम् ॥ कर्पूराभं स्मरेत्तत्रश्रीगुरुंनिजरूपिणम् ॥ ३१ ॥ सुप्रसन्नंलसद्भूपामण्डितंश्वेतचन्द नम् ॥ वराभयज्ञानमुद्रापुस्तकैर्व्याप्तैःकरैः ॥ ३२ ॥ युक्तंश्वेताम्बरंशान्तं श्वेतपुष्पविभूषितम् ॥ वामाङ्कगतयाशक्त्यालिङ्गितंरक्तवर्णया ॥ ३३ ॥ रक्त वस्त्राभरणयारक्तचन्दनमाल्यया ॥ वामलीलाकमलयालिङ्गन्त्यादक्षिणेन च ॥ ३४ ॥ ध्यायेदन्तर्मुखंशाक्तंयोगिनंशिवरूपिणम् ॥ तत्पादपद्मयुगल च्युतपीयूषधारया ॥ ३५ ॥ अभिषिक्तंस्वस्यदेहमेवंशिष्योविचिन्तयेत् ॥ अर्चयेद्गन्धपुष्पाद्यैर्बाह्यस्थैर्मानसैस्तुवा ॥ ३६ ॥ नामभिस्तस्यविविधैस्संसि द्धैर्गुरुकीर्त्तनैः ॥ प्रणम्येत्थंहन्मनुनाभावयेत्तल्लयंहृदि ॥ ३७ ॥ ततस्तुमूला धारादिब्रह्मरन्ध्रान्तमुद्यताम् ॥ तेजोदण्डंसुषुम्णान्तंसहस्त्रविशसन्निभम् ॥ ३८ ॥ तदात्मकंमूलमन्त्रंध्यात्वातत्तेजसावृतम् ॥ स्वशरीरंविचिन्त्याथप्राणायामत्र

१ हजार दलका कमल ॥

यंचरेत् ॥ ३९ ॥ मूलमन्त्रेणमन्त्रस्यऋष्यादिन्यासमाचरेत् ॥ ४० ॥ त्रैलोक्यचैतन्यमयादिदेवश्रीशङ्करत्वच्चरणाज्ञयाच ॥ प्रातःसमुत्थायतवप्रियार्थंसंसारयात्रामनुवर्त्तयिष्ये ॥ ४१ ॥ संसारयात्रामनुवर्त्तमानंत्वदाज्ञयाशङ्करदेवदेव ॥ स्पर्द्धातिरस्कारबलिप्रमादाःकदापिनैवात्रभवन्तिनाथ ॥ ४२ ॥ इतिसम्प्रार्थ्यदेवेशमाज्ञामादायतस्यतु ॥ प्रार्थयित्वाधरांश्वासयुक्तंपादंनिधापयेत् ॥ ४३ ॥ समुद्रमेखलेदेविपर्वतस्तनमण्डले ॥ विष्णुपत्निनमस्तुभ्यंपादस्पर्शंक्षमस्वमे ॥ ४४ ॥ ततोगृहाद्बहिर्याम्यांनैऋर्तींवादिशंव्रजेत् ॥ पदेपदेस्मरेद्देवन्दूरेयायाद्द्विजालयात् ॥ ४५ ॥ अतीत्यबाणमात्रन्तुक्षुवंग्रामाद्विलोक्यच ॥ कीटयोषादिरहितंशौचस्थानमिदम्पठेत् ॥ ४६ ॥ उत्तिष्ठन्त्वृषयोदेवागन्धर्वायक्षराक्षसाः ॥ परितस्त्यज्यतांस्थानंविण्मूत्रोत्सर्ज्जनायमे ॥ ४७ ॥ अनेनमनुनालोष्ठात्तृणैरुद्धास्यदेवताः ॥ कुर्य्यान्मलच्युतिंतत्रवाससाकंप्रवेश्यच ॥ ॥ ४८ ॥ तांदिशांचनपश्येत्तुशौचमुद्धृत्यवारिभिः ॥ एकालिङ्गेगुदेसप्तदशवामकरेतथा ॥ ४९ ॥ उभयोस्सप्तदातव्यास्तिस्रोङ्घ्र्योश्चापिमृत्तिकाः ॥ ५० ॥ मूत्रोत्सर्गेवामहस्तेलिङ्गेपञ्चैवमृत्तिकाः ॥ तिस्रःकरद्वयेचैकापादयोरथवाचरेत् ॥ ५१ ॥ गन्धलेपक्षयकरंमनोग्लानिहरंपरम् ॥ कुर्य्याद्द्वादशगण्डूषान्पुरीषोत्सर्ज्जनान्तरे ॥ ५२ ॥ प्रक्षाल्याग्रेतुचरणेआचमेत्त्रिस्ततःपरम् ॥ आम्रन्यग्रोधखदिरकरञ्जककुभादिजम् ॥ ५३ ॥ कनीन्यग्रसमस्थूलंप्रमितंद्वादशाङ्गुलैः ॥ दन्तधावनकाष्ठंतुप्रोक्तंतन्त्रविचक्षणैः ॥ ५४ ॥ क्लिंमुक्त्वाकामदेवायसर्वजनप्रियायच ॥ नमोन्तस्तिथिवर्णोयंमन्त्रोदन्तविशोधने ॥ ५५ ॥ प्रक्षाल्यदन्तकाष्ठंचमूर्द्धदेशेपुरस्त्यजेत् ॥ वक्तुंमूलानुनोनित्यंलक्षयेत्सिद्धिहेतवे ॥ ५६ ॥ अथपूजाहोमकर्म्मसिद्ध्यर्थेस्नानमुच्यते ॥ शङ्कुनास्त्राभिजप्तेनशुचिस्थानात्तुमृत्तिकाम् ॥ गृहीत्वास्त्रेणसंसिच्ययायाज्जलनिकेतनम् ॥ ५७ ॥ तत्रादौजलकूलंस्यात्क्षालयेदस्त्रवारिणा ॥ मृष्टंकृत्वातटंतत्रचैकभागेविचक्षणः ॥ ५८ ॥ निधायगोमयंदर्भांस्तिलांश्चाप्यभिमन्त्रिता

---

१ फट् इति मन्त्रम् २ जल ३ दोऊ पावों में ४ कुल्ला ५ विष्ठा ६ वट ७ अर्जुनवृक्ष ८ क्लिंकामदेवायसर्वजनप्रियाय नमः ९ फट् ॥

न् ॥ मृत्तिकागोमयाभ्याञ्चकट्यन्तंस्नानमाचरेत् ॥ ५९ ॥ बहिरुद्धृत्यतो येनमलस्नानंततःपरम् ॥ विधायवैदिकस्नानंतदङ्गंतर्प्पणंतथा ॥ ६० ॥ ततस्तान्त्रिकस्नानस्यविधिरस्त्रेणमृत्तिकाम् ॥ समादायास्त्रमन्त्रेणमन्त्रयित्वातृण.दिकम् ॥ ६१ ॥ शिखामन्त्रेणापहृत्यत्रिर्मूलेनाभिमन्त्रयेत् ॥ मूर्द्धादिपादपर्य्यन्तंविलिप्यप्रणमेज्जलम् ॥ ६२ ॥ आधारःसर्वभूतानांविष्णोरतुलतेजसः ॥ तद्रूपाश्चततोजातास्ताआपःप्रणमाम्यहम् ॥ ६३ ॥ सम्मुखीकरणींमुद्रांबद्ध्वाप्राणान्नियम्यच ॥ निमज्यतूष्णीमुत्थायनाभिमात्रेजलेनरः ॥ ६४ ॥ तान्त्रिकस्नानसङ्कल्पंमासोल्लेखादिपूर्वकम् ॥ कृत्वायंमूलमन्त्रेणप्राणायामत्रयंचरेत् ॥ ६५ ॥ विन्यस्यचषडङ्गानिकल्पयेत्तीर्थमग्रतः ॥ चतुरस्रेहस्तमात्रेतज्जलेपरिकल्पिते ॥ ६६ ॥ ब्रह्माण्डोदरतीर्थानिकरैःस्पृष्टानितेरवे ॥ तेनसत्येनदेवेशतीर्थंदेहिदिवाकर ॥ ६७ ॥ इतिसूर्य्यंप्रार्थयित्वाक्रोमित्यङ्कुशमुद्रया ॥ भित्त्वार्कमण्डलंतस्मात्तीर्थान्यावाहयेदिह ॥ ६८ ॥ गङ्गेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिन्धुकावेरिजलेस्मिन्सन्निधिंकुरु ॥ ६९ ॥ एवमुक्त्वातुतीर्थानितस्मिंस्तोयेनियोजयेत् ॥ मूलमन्त्रेणाथतीर्थशक्तिंतत्रसमाह्वयेत् ॥ ७० ॥ अर्कस्यमण्डलंध्यात्वातन्मन्त्रेणचपूजयेत् ॥ ७१ ॥ सर्वानन्दमयीमशेषदुरितध्वंसांमृगाङ्कप्रभां त्र्यक्षामूर्ध्वकरद्वयेनदधतीं पाशंसृणिं वामतः ॥ अन्तश्चामृतपूर्णहस्तकलशांमुक्ताक्षमालावतीं गङ्गासिन्धुसरिद्वरादिसहितांश्रीतीर्थशक्तिंभजे ॥ ७२ ॥ अथ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रःसर्वानन्दमयेपदम् ॥ तीर्थशक्तिंतथाहिलियुगलंवह्निगेहिनी ॥ ७३ ॥ द्वाविंशत्यक्षरःप्रोक्तस्तीर्थशक्तेर्महामनुः ॥ तज्जलंगाङ्गमन्त्रेणमन्त्रयेदष्टवारकम् ॥ ७४ ॥ तारोनमोभगवतिब्रूयादम्बततोऽम्बिके ॥ अम्बालिकेमहामालिन्येह्येहिभगवत्यथ ॥ ७५ ॥ अशेषतीर्थालवालेमायाश्रीबीजमुच्चरेत् ॥ शिवजटाधिरूढेचगङ्गेगङ्गाम्बिकेद्विठः ॥ ७६ ॥ गङ्गामन्त्रोयमाख्यातस्त्रिपञ्चाशाद्भिरक्षरैः ॥

---

१ वषट्मन्त्रेण २ अङ्कुश ३ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः सर्वानन्दमयेतीर्थशक्ते हिलि हिलि स्वाहा ४ ॐ नमोभगवति अम्बअम्बिके अम्बालिके महामालिनि एह्येहि भगवति अशेषतीर्थालवाले ह्रींश्रींशिवजटाधिरूढेगङ्गेगङ्गाम्बिके स्वाहा ॥

भुवनेश्यासमालोड्यामृतीकृत्वासुधानुना ॥ ७७ ॥ कवचेनावगुण्ठ्याथसंर क्ष्यास्त्रेणमन्त्रवित् ॥ मूलेनदेवतांतत्रसाङ्गांसावरणान्तथा ॥ ७८ ॥ समावा ह्यजलेध्यात्वातत्पादद्वयनिर्गतम् ॥ ध्यात्वातीर्थंस्मरेन्मूलमन्त्रंस्नायाज्जले त्रिशः ॥ ७९ ॥ हृदिदेवंस्मरेत्पश्चात्सिञ्चेत्कंकुम्भमुद्रया ॥ त्रिभिर्लोकैर्मूलम न्त्रैस्तारवंबीजपूर्वकैः ॥ ८० ॥ सिसृक्षोर्निखिलंविश्वंमुहुःशुक्रंप्रजायते ॥ मातरःसर्वभूतानामापोदेव्यःपुनन्तुमाम् ॥ ८१ ॥ अलक्ष्मीमलरूपायासर्व भूतेषुसंस्थिता ॥ क्षालयन्तुनिजस्पर्शादापोदेव्यःपुनन्तुमाम् ॥ ८२ ॥ यन्मे केशेषुदौर्भाग्यंसीमन्तेयच्चमूर्द्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नन्तुवोन मः ॥ ८३ ॥ नमःस्वाहान्तमूलेनत्रिराचमनमाचरेत् ॥ त्रिधादेवंचसन्तर्प्य तोयमध्यात्तटंव्रजेत् ॥ ८४ ॥ धौतवस्त्रयुगंधृत्वाप्रक्षाल्यचकरौतथा ॥ मृदाद्भि स्ततआचम्यदेवस्नानविधिस्स्मृतः ॥ ८५ ॥ मन्त्रस्नानंप्रकर्तव्यंशीतयांदे शकालयोः ॥ तोयाभावेगतेदुर्गेकायास्वास्थ्येचवार्द्धके ॥ ८६ ॥ प्रक्षाल्य पादावाचम्यप्रोद्धृतेनतुवारिणा ॥ स्थानंदशदिशःप्राग्वत्संशोध्योपाविशेत्त तः ॥ ८७ ॥ जलंहस्ततलेन्यस्यकुम्भन्यासांस्ततश्चरेत् ॥ मातृकादींस्तथा मूलमन्त्रन्यासानशेषतः ॥ ८८ ॥ न्यासान्तेसंस्पृशेत्तोयंमन्त्रस्नानमिदंवर म् ॥ केवलादुदकस्नानात्संस्कारपरिवर्ज्जितात् ॥ ८९ ॥ स्वस्थितंपुण्डरी काक्षंमन्त्रमूर्तिम्प्रभुंस्मरेत् ॥ तत्पादोदकजांधारांनिपतन्तींस्वमूर्द्धनि ॥ ९० ॥ चिन्तयेत्सूक्ष्मरन्ध्रेणप्रविशन्तींस्वकान्तनुम् ॥ तस्मात्संक्षालयेत्सर्वंमे तद्देहगतंमलम् ॥ ९१ ॥ तत्क्षणाद्विरजामन्त्रीजायतेस्फटिकोपमः ॥ इदं स्नानवरंमन्त्रस्नानादष्टगुणंमतम् ॥ ९२ ॥ सदाशुद्धमनायस्तुसशुद्धःसर्व कर्म्मसु ॥ अथमानसिकस्नानंमनसामूलमन्त्रतः ॥ ९३ ॥ प्राणानायम्यकु र्वीतद्दृष्टतीर्थेषुभावतः ॥ यदाशिवात्मकैर्मन्त्रैःकृत्वातीर्थंशिवात्मकम् ॥ ९४ ॥ मार्ज्जनंसंहितामन्त्रैःशिवस्नानमितीरितम् ॥ स्नानपूर्वाःक्रियाःशुद्धाःस र्वाःसिद्धिंप्रयान्तिच ॥ ९५ ॥ तस्मात्स्नानंपुराकुर्य्यादेव्वेकंदेहशङ्कितः ॥

---

१ ॐ वं भूर्भुवः स्वः इत्यादि मन्त्रैः ह्रीं मन्त्रेण सुधानुना वंबीजेन २ कलश का आकार दोऊ हाथों से बनादे उसको कुम्भमुद्रा कहते हैं ॥

ततस्तुतिलकंकुर्य्याज्जातेर्वादैवतस्यच ॥ ९६ ॥ यद्यच्छुभफलंतीर्थमृद्भिर्वा
क्तिभावतः ॥ ब्राह्मणस्योर्ध्वपुण्ड्रंस्यात्त्रिपुण्ड्रंशिवसेवने ॥ ९७ ॥ अर्धचन
न्तुवैश्यस्यशूद्राणांवर्त्तुलाकृति ॥ ऊर्ध्वपुण्ड्रंमृदाकुर्य्यात्त्रिपुण्ड्रंचैवभस्मना ।
९८ ॥ केशरेणचकस्तूर्य्याशेषंशीतंयथारुचि ॥ वैष्णवस्योर्ध्वपुण्ड्रंस्यात्क्ष
यस्यत्रिपुण्ड्रकम् ॥ ९९ ॥ अर्धचन्द्रंगणेशस्यदेवीभक्तस्यवर्त्तुलम् ॥ नारा
णपरोयस्तुचन्द्रंतस्यत्रिशूलकम् ॥ १०० ॥ भालेविभूतिवान्योसौब्रह्मविष्णु
शिवात्मकः ॥ भूतिदातुविभूतिःस्याद्विधिनाविधृतायदि ॥ १०१ ॥ यथाव
थञ्चिद्विधृताभस्मसात्कुरुतेत्वघम् ॥ शिवाग्नेर्भस्मसञ्ज्ञाह्यमग्नीषोमोभवन्तु
वा ॥ १०२ ॥ वैवाह्याग्न्युद्भवंवापिपक्वंशुचिसुगन्धिच ॥ कपिलायाःश
त्पृष्टंगृहीतंगगनेपतत् ॥ १०३ ॥ नक्लिन्नंनापिकथितंनदुर्गन्धिनवोषितम् ।
उपर्य्यधःपरित्यज्यगृह्णीयात्पतितंहृदा[1] ॥ पिण्डीकृत्यशिवाग्नौतुतत्क्षिपेन्मूल
मन्त्रतः ॥ १०४ ॥ अपक्वमपिपक्वंचसन्त्यज्यभसितंसितम् ॥ आदायवासस
लोड्यभस्माधारेविनिक्षिपेत् ॥ १०५ ॥ भस्मसङ्ग्रहणंकुर्य्याद्दैवेनुद्वासनेस
ति ॥ उद्वासनेकृतेयस्माच्चण्डभस्मप्रजायते ॥ १०६ ॥ यद्वाद्विजातिभस
त्थं[2]सद्येनानीयगोमयम् ॥ वामेन[3]पात्रेसंयोज्याघोर[4]मन्त्रेणनिर्दहेत् ॥ १०७
पुरुषेण[5]समुद्धृत्यईशानेन[6]विशोधयेत् ॥ इत्थन्तुसंस्कृतंभस्मअग्नि[7]रित्यादि
न्त्रतः ॥ १०८ ॥ याते[8]रुद्रेतियजुषामन्त्रयेद्रुद्रसञ्ज्ञया ॥ प्रणवाद्यै[9]श्चतुर्थीह
न्तैर्नामभिरंशकैः ॥ १०९ ॥ पञ्च[10]वर्णाद्यक्षराद्यैर्मालांशैर्हरहद्युतैः ॥ त्रिपुर

---

१ नमःमन्त्रेण २ ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमः भवेभवेनातिभवेभवस्वमांभ
द्भवायनमः ३ ॐवामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकालविकरण
नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमो नमस्सर्वभूतदमनाय नमो मनोन्मथ
यनमः४ ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः सर्वतस्सर्वेभ्यो नमस्तेस्तु रुद्ररूपेभ्यः ५
तत्पुरुषायविद्महेमहादेवायधीमहितन्नोरुद्रःप्रचोदयात् ६ ईशानः सर्वविद्यानामीश्वरःसर्वभू
नाम् ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ७ ॐ अग्निरितिभस्म, १
जलमितिभस्म, २ ॐ स्थलमितिभस्म, ३ ॐ वायुरितिभस्म, ४ ॐ व्योमेतिभस्म, ५
सर्वंहवाइदंभस्म ६ । ८ ॐ यातेरुद्रशिवातनूरघोरापापकाशिनी । तयानस्तन्वाशन्तमया
गिरिशन्ताभिचाकशीहि ९ ॐ भवायनमः, ॐ सर्वायनमः, ॐ पशुपतयेनमः, ॐ उग्रायन
ॐ महादेवायनमः, ॐ भीमायनमः, ॐ ईशानायनमः, १० ॐ नमःशिवाय इत्यादिमन्त्रै

धारणंकुर्य्यान्मूर्ध्निपञ्चाक्षरेणतु ॥ ११० ॥ एभिश्चनामभिर्धार्य्यंपुनर्भस्मद्विजातिभिः ॥ ब्रह्माललाटेविज्ञेयोहृदयेहव्यवाहनः ॥ १११ ॥ नाभौस्कन्दोगलेपूषारुद्रादक्षिणबाहुके ॥ आदित्योबाहुमध्येचशशीचमणिबन्धने ॥ ११२ ॥ वामदेवोवामबाहौबाहुमध्येप्रभञ्जनः ॥ मणिबन्धेचवसवःपृष्ठदेशेहरिःस्मृतः ॥ ११३ ॥ शम्भुःककुदिसम्प्रोक्तःपरमात्माशिवःस्मृतः ॥ कस्तूर्य्यादिकसंयुक्तंभस्मस्यात्तत्तुधारयेत् ॥ ११४ ॥ अद्भिजैर्मूलमन्त्रेणशिवपञ्चाक्षरेणवा ॥ त्रिपुण्ड्रंकारयेद्भालेब्रह्मविष्णुशिवात्मकम् ॥ ११५ ॥ मध्याङ्गुलिभिरादायतिसृभिर्मूलमन्त्रितम् ॥ अनामामध्यमाङ्गुष्ठैरथवास्यात्त्रिपुण्ड्रकम् ॥ ११६ ॥ वक्ष्येथतान्त्रिकींसन्ध्यांमूलेनाचमनत्रयम् ॥ शिखांबद्ध्वातुमूलेनप्राणायामत्रयंचरेत् ॥ ११७ ॥ अङ्गानिविन्यसेद्देहेकरन्यासपुरस्सरम् ॥ अमृतीकृत्यपुरतोजलंवैधेनुमुद्रया[1] ॥ अभिमन्त्र्यचमूलेनसप्तवारन्ततःपरम् ॥ ११८ ॥ अकारादिक्षकारान्तैर्मातृकार्णैस्सबिन्दुभिः[2] ॥ प्रत्यर्णंप्रोक्षयेन्मूर्ध्निकुशैर्मूलेनचत्रिधा ॥ ११९ ॥ देवंध्यात्वाचमनुनाज्ञानमण्डलसंस्थितम् ॥ आदायतोयमामन्त्रैर्बीजैर्भूतात्मकैस्तथा ॥ १२० ॥ लंवंरंयंहंइतिचतन्मन्त्रैःसप्तधाजलम् ॥ मन्त्रयित्वापुनःसप्तवारंमूलेनमन्त्रयेत् ॥ १२१ ॥ तज्जलंवामहस्तेनधार्य्यंतत्प्लुतबिन्दुभिः ॥ दक्षहस्तेनसम्प्रोक्ष्यंकं[3]पठेन्मूलमन्त्रकम् ॥ १२२ ॥ हस्तव्यत्यासतोवामाचारीसेचनमाचरेत् ॥ नासामाश्रित्यशिष्टेनतेजोरूपेणतेनतु ॥ १२३ ॥ प्रविश्यान्तर्गतोदेवोमलंसंशोध्यनिर्गतः ॥ दक्षनासापुटेनैतत्स्मृत्वार्द्दक्षिणहस्तकम्[4] ॥ १२४ ॥ वामभागेवज्रशिलांध्यात्वास्त्रेणतत्क्षिपेत् ॥ प्रक्षाल्यहस्तावाचम्यमूलमन्त्रेणमन्त्रवित् ॥ १२५ ॥ गायत्र्यावाथमूलेनदद्यादर्घ्यत्रयन्ततः ॥ रविमण्डलसंस्थायस्वेष्टदेवायतर्प्पयेत् ॥ १२६ ॥ जलेनमूलमन्त्रेणह्यमुकंतर्प्पयामिच ॥ उक्तात्रिधातर्प्पणीयं

---

१ दोऊहाथों की चारों अंगुली एकएकमें क्रमसे मिलाकर धेनुमुद्रा जानिये इसको कण्ठराखना कईजगह में पड़ेगी २ अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं लं क्षं इति मातृकाक्षरैः ३ कं नाम जल ४ दहिने हाथमें जो जल है ॥

वामकैःकारणेनतु ॥ १२७ ॥ इष्टदेवस्यगायत्रीमष्टाविंशतिसङ्ख्यकाम् ।
जपेदभावेब्राह्मींतुवैदिकंमतमाश्रितः ॥ १२८ ॥ तान्त्रिकःशिवगायत्रींजपे
त्साथनिरूप्यते ॥ ॐतन्महेशायविद्महेवाग्विशुद्धायधीमहि ॥ तन्नःशिवःप्रचो
दयात् ॥ १२९ ॥ ततःशुद्धमनामौनीमूलमष्टोत्तरंशतम् ॥ जपित्वाचार्ण्य
येदेवंस्तुत्वानत्वेष्टदेवताम् ॥ १३० ॥ सूर्य्यमण्डलतोदेवंविन्यसेद्धृदयेस्वके ॥
ततोगुरुंश्चप्रणमेदितिसन्ध्यातुतान्त्रिकी ॥ १३१ ॥ त्रिकालमेवंकर्त्तव्या
सन्ध्यालोपात्फलंनहि ॥ दैवतोयदिलोपश्चतदामूलंशतंजपेत् ॥ १३२ ॥ प्राय
श्चित्तार्थंतत्कृत्वाकुर्वीतसमयागतम् ॥ वैदिकंतर्प्पणंकृत्वाततस्तान्त्रिकमाच
रेत् ॥ १३३ ॥ प्राणायामत्रयंकृत्वामूलेनन्यासमाचरेत् ॥ ऋष्यादित्रित
यस्याथपुरतोधेनुमुद्रया ॥ १३४ ॥ वंजपन्नमृतीकृत्यजलंतत्रसचक्रकम् ॥
साङ्गावरणकंदेवंध्यात्वामूलंसमुच्चरेत् ॥ १३५ ॥ अमुकंतर्प्पयामीतिप्रोक्ताचा
ष्टोत्तरंशतम् ॥ तदर्थमथवाविंशदष्टयुक्तंमुखाब्जके ॥ १३६ ॥ देवस्यामृतबु
द्धयातत्तीर्थतोयैःप्रतर्प्पयेत् ॥ तदावरणदेवांश्चतद्वदेकैकवारकम् ॥ १३७ ॥
सन्तर्प्यदेवंस्वहृदितीर्थेसूर्य्यंविसर्ज्जयेत् ॥ गुरुंदिगीशांश्चखगान्नत्वाभाण्डं
करेदधत् ॥ १३८ ॥ एकान्तंनिर्जनंयायान्मनोज्ञंदोषवर्जितम् ॥ दिगन्तं
नवीक्षेतयावत्प्राप्नोतिवैगृहम् ॥ १३९ ॥ प्रदक्षिणंयज्ञवाटंकृत्वापादौचहस्त
कौ ॥ प्रक्षाल्याचम्यपूजायागृहद्वारान्तरेस्थितः ॥ १४० ॥ गेहेचद्वारदेश
स्थःप्रणम्यमनसागुरुम् ॥ प्रणमेदिष्टदेवंस्वंदिक्पालानपिचेतसा ॥ १४१ ॥
यत्पूर्वमर्ज्जितंपापंतद्दिनेन्यदिनेपिवा ॥ तत्पापस्यापनोदार्थंमन्त्रद्वयमुदीर
येत् ॥ १४२ ॥ हेदेवप्राकृतंचित्तंपापाक्रान्तमिदम्मनः ॥ तन्निस्सारयचित्ता
न्मेपापंफट्हुंचतेनमः ॥ १४३ ॥ सूर्य्यःसोमोयमःकालोमहाभूतानिपञ्चच ॥
एतेशुभाशुभस्येहकर्म्मणोनृपुसाक्षिकाः ॥ १४४ ॥ हुंफडितिब्रूयात्क्रोधद
ष्ट्यापश्येच्चपार्श्वयोः ॥ एवंकृतेप्रथमतःपापोत्सादनकर्म्मणि ॥ १४५ ॥ य
त्स्याद्दृढतरंपापंतद्दूरेचात्रतिष्ठतु ॥ अतीतेपूजनस्थानंस्वंप्रयातुपुनश्चरेत् ॥
१४६ ॥ यत्स्यादल्पतरंपापंतन्नाशमुपगच्छति ॥ पूजांत्यक्तास्यपापायका

१ इस मूल मन्त्रके जपको संध्या न करने के प्रायश्चित्त के लिये करे ॥

ममिष्टंक्षणाद्भवेत् ॥ १४७ ॥ ततःप्रक्षाल्यपादौचहस्तावाचम्ययत्नतः ॥ दद्या
दर्घ्यंदिनेशायतत्प्रकारइहोच्यते ॥ १४८ ॥ गोमयेनोपलिप्तायाभूमौकृत्वा
तुमण्डलम् ॥ सिन्दूरेणततःपश्चादुपविश्यनिजासने ॥ १४९ ॥ प्राङ्मुखः
प्रणमेदिष्टदेवतांभक्तितत्परः ॥ प्राणायामत्रयंकृत्वासूर्य्यमन्त्रेणमन्त्रवित् ॥
१५० ॥ ह्रींह्रींसःइतिसूर्य्यस्यत्र्यक्षरोमन्त्रईरितः ॥ विन्यस्यचतथेन्द्रादीन्ध्या
त्वासूर्य्यमनन्यधीः ॥ १५१ ॥ पद्मंदयाभयवरान्दधतंकराब्जैर्माणिक्यमौ
लिमरुणाङ्गरुचिंत्रिनेत्रम् ॥ रक्ताम्बुजासनमशेषगुणैकसिन्धुंभानुंसमस्तज
गतामधिपंभजामि ॥ १५२ ॥ तत्कल्पोक्तविधानेनपूजयेदुपचारकैः ॥ पुर
तोमण्डलंकृत्वाजलेनचतुरस्रकम् ॥ १५३ ॥ निधायतत्रसाधारंसजलंताम्र
पात्रकम् ॥ गन्धपुष्पाक्षतान्दर्भदूर्वासर्षपसंयुतान् ॥ १५४ ॥ सतिलान्युक्त
पुष्पाणियवांश्चापिप्रविन्यसेत् ॥ सूर्य्यमन्त्रेणतत्पात्रंस्पृशन्नष्टोत्तरंशतम् ॥
१५५ ॥ अभिमन्त्र्यचतत्पात्रंसमुत्थायकरद्वयात् ॥ मूर्द्धान्तंसूर्य्यमन्त्रेणद
द्यादर्घ्यंविचक्षणः ॥ १५६ ॥ [1]ह्रींह्रींसःसग्रहराशिनक्षत्रपदमुच्चरेत् ॥ ततश्च
योगकरणेपरिवृत्तासनेतिच ॥ १५७ ॥ संस्थितश्रीसूर्य्यायैषतेर्घ्यःस्वाहामनु
स्स्मृतः ॥ चतुस्त्रिंशदक्षरोयंसूर्य्यस्यार्घ्यनिवेदने ॥ १५८ ॥ जपेत्तुयथा
शक्त्यासूर्य्यमन्त्रमनन्यधीः ॥ तदर्घ्योदुत्सुतंसूर्य्यंध्यायेद्देशिकसत्तमः ॥
१५९ ॥ स्तुत्वाप्रणम्यविसृजेन्मण्डलात्तंदिवाकरम् ॥ ततउत्थायविधिवद्द्वा
रपूजांसमाचरेत् ॥ १६० ॥ द्वारमर्घ्याम्बुनाप्रोक्ष्यतन्मध्येविघ्नपंयजेत् ॥
तद्दक्षिणेमहालक्ष्मींवामेचापिसरस्वतीम् ॥ १६१ ॥ द्वारश्रियंचतन्मध्ये
शाखयोर्दक्षिणान्ययोः ॥ ऊर्ध्वभागोत्तरंयावत्पञ्चपञ्चविभागके ॥ १६२ ॥
[2]नाम्नश्चाद्याक्षरंबिन्दुनामयुक्तंचङेन्तकम् ॥ समुच्चार्य्यहृदन्तंचदेवानेतान्प्र

---

१ ह्रींह्रींसःसग्रहराशिनक्षत्रयोगकरणपरिवृत्तासनसंस्थितश्रीसूर्य्यायैषतेर्घ्यः स्वाहा ॥
२ नामके पहिले अक्षर में ऊपर अनुस्वार मिलाकर फिरि चतुर्थ्यन्त नामके अन्तमें नमः
मिलाने से उस उस देवता का पूजा मंत्र होजाता है कि जिस जिसके नाम में मिलाया
जावै ॥ यथा, गंगणपतयेनमः ॥ क्षेंक्षेत्रपालायनमः॥ वसुन्धारासंयुताय शंशङ्खनिधयेनमः॥
वसुमत्यसंयुतायपंपद्मनिधयेनमः ॥ मांमायाशक्त्यैनमः ॥ हंहत्त्वक्त्यैनमः ॥ गंगङ्गायैनमः ॥
यंयमुनायैनमः ॥ धांधात्रेनमः ॥ विंविधात्रेनमः ॥ और एक सौ इकसठ वा एकसौ बासठ
श्लोक में जे विघ्नेशादि नामहैं उनको भी इसी रीति से पूजामंत्र बना लेना उचित है ॥

पूजयेत् ॥ १६३ ॥ गणपतिंक्षेत्रपालंततश्चवसुधारया ॥ युक्तंशङ्खनिधिं दक्षेवामेवसुमतीयुतम् ॥ १६४ ॥ पूजयित्वापद्मनिधिंतदधोदक्षवामतः ॥ मायाशक्तिंचहृच्छक्तिंगङ्गांचयमुनांतथा ॥ १६५ ॥ धातारंचविधातारंदंदे हल्यैनमोनमः ॥ आदौतुपश्चिमद्वारपूजाचेयम्प्रकाशिता ॥ १६६ ॥ नन्दीचापिमहाकालोद्वारयोर्दक्षवामयोः ॥ सम्पूज्यैवसुदग्द्वारंप्राग्याम्येचप्र पूजयेत् ॥ १६७ ॥ द्वारपालौक्रमात्तेषुगणेशवृषभावपि ॥ भृङ्गिरीटीतथास्क न्दउमाचण्डेश्वरौतथा ॥ १६८ ॥ विष्णोर्नन्दःसुनन्दश्चचण्डश्चापिप्रच ण्डकः ॥ बलश्चप्रबलश्चैवभद्रश्चापिसुभद्रकः ॥ १६९ ॥ वक्रतुण्डश्चैकदं ष्ट्रोमहोदरगजाननौ ॥ लम्बोदरश्चविकटोगणेशाद्वारपालकाः ॥ १७० ॥ विघ्नराजोधूम्रवर्णःक्रमात्पश्चिमद्वारतः ॥ देव्याश्चैवतुयोगिन्योष्टावेताद्वार पालिकाः ॥ १७१ ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचतथे न्द्राणीचामुण्डाचश्रियासह ॥ १७२ ॥ अथवक्ष्येद्वारदेवध्यानंतन्त्रेषुगोपि तम् ॥ देवद्वारंद्वारदेवाःस्वयमुद्घाटयन्तियत् ॥ १७३ ॥ पाशाङ्कुशफलाम्भो जपर्णपाणिंचतुन्दिलम् ॥ वीरंविघ्नेश्वरंवन्देगजवक्त्रंत्रिलोचनम् ॥ १७४ ॥ पद्मद्वयवराभीतिलसत्पाणिचतुष्टयाम् ॥ निदग्धहेमगौराङ्गींमहालक्ष्मींत्रि लोचनाम् ॥ १७५ ॥ अक्षस्रक्पुस्तकाभीतिवरहस्तांत्रिलोचनाम् ॥ श्वेत पद्मासनांशुक्लांश्वेतवस्त्रांसरस्वतीम् ॥ १७६ ॥ कपालशूलविलसत्पाणं कृष्णविग्रहम् ॥ त्र्यक्षंतीक्ष्णंभावयामिक्षेत्रेस्मिन्क्षेत्रनायकम् ॥ १७७ ॥ व सुन्धरान्दक्षभुजेनालिङ्ग्यतुसुभाण्डिनम् ॥ वामेशङ्खधरंमुक्तानिभंशङ्खनिधि म्भजे ॥ १७८ ॥ आलिङ्गन्तंवसुमतींललाटेपद्मचिह्नितम् ॥ भजेपद्मनिधिं नित्यंवामेनोत्पलधारिणम् ॥ १७९ ॥ वराङ्कुशाभीतिपाशहस्तांसंसारमूलि काम् ॥ त्रिनेत्रांश्यामवर्णान्तांश्यामांमायामहंभजे ॥ १८० ॥ पाशाङ्कुशव राभीतिंदधानामरुणप्रभाम् ॥ ग्राहारूढामहंवन्देगङ्गांसर्वसरिद्वराम् ॥ १८१ ॥ कृष्णकच्छपमारूढांकण्ठेनीलोत्पलस्रजम् ॥ वराभयकरांवन्देकालिन्दींकाल विग्रहाम् ॥ १८२ ॥ कर्त्तारंजगतांवन्देशङ्खचक्रगदाम्बुजम् ॥ बिभ्राणंगरु

१ वक्रतुंडादि छः गणेशजी के द्वारपाल हैं उनके नाम मूलमें स्पष्ट हैं ॥

डारूढंधातारंकृष्णविग्रहम् ॥ १८३ ॥ रक्तंरक्तारविन्दाक्षंवराभयकमण्डलुम् ॥ हंसारूढंविधातारंवन्देत्र्यक्षसमन्वितम् ॥ १८४ ॥ सिंहारूढांश्यामवर्णांखड्ग खेटकधारिणीम् ॥ अधःस्थांदेहलिंवन्देपश्चिमास्यांसुदक्षिणीम् ॥ १८५ ॥ पश्चिमद्वारमासाद्यतालत्रितयपूर्वकम् ॥ द्वारमुद्घाट्यचास्त्रेणमन्त्रितान्सर्ष पाक्षतान् ॥ १८६ ॥ पुष्पयुक्तांस्तुविकिरेन्मण्डपाभ्यन्तरेबुधः ॥ नाराचमुद्र यासम्यगस्त्रमन्त्रेणदेशिकः ॥ १८७ ॥ अपक्रामन्तुभूतानिपिशाचाःसर्वतो दिशम् ॥ येचात्रनिवसन्त्यन्येदेवताभुविसंस्थिताः ॥ १८८ ॥ अपसर्पन्तु तेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्त्तारस्तेनश्यन्तुशिवाज्ञया ॥ १८९ ॥ श्लोकयोरन्ततश्चास्त्रंपठन्नाराचमुद्रया ॥ जह्यात्तान्मण्डपस्यान्तस्त तोविघ्नांस्तुनिर्गतान् ॥ १९० ॥ स्ववामाङ्गस्यसङ्कोचान्मार्गन्दत्त्वापसारये त् ॥ अस्त्रमन्त्रंस्मरन्वामपार्ष्णिघातत्रयेणच ॥ १९१ ॥ भौमानुत्सादयेत्ता लत्रितयेनान्तरिक्षगान् ॥ तिर्य्यग्दृष्ट्यावलोकेनदिव्यान्विघ्नान्निवारयेत् ॥ १९२ ॥ दक्षपादम्पुरस्कृत्यप्रविशेद्देवमन्दिरम् ॥ शाक्तस्तुवामपादेनद्वारसा च्छाद्यवाससा ॥ १९३ ॥ पञ्चगव्यार्घ्यतोयाभ्यांप्रोक्षयेन्मण्डपान्तरम् ॥ स म्मार्जनोपलेपाद्यैर्दर्प्पणोदरवत्कृतम् ॥ १९४ ॥ विमलंधूपदीपादिपुष्पदामा भिशोभितम् ॥ पञ्चवर्णरजश्चित्रंस्थानशुद्धिरियंमता ॥ १९५ ॥ नैर्ऋत्याम र्चयेद्वास्तुपुरुषंचन्दनादिभिः ॥ तत्रैववास्त्वधीशंचब्रह्मणेनमइत्यपि ॥ १९६ ॥ रक्तवर्णंरक्तवर्णशक्तिद्वादशसंयुतम् ॥ पूजयित्वादीपनाथंभैरवंप्रार्थयेदिति ॥ १९७ ॥ अतितीक्ष्णमहाकायकल्पान्तदहनोपम ॥ भैरवायनमस्तुभ्यमनु ज्ञांदातुमर्हसि ॥ १९८ ॥ ॐफेमितिचमन्त्रेणपूजावेदींततोविशेत् ॥ संस्कु र्य्यादासनस्थानंचतुर्भिर्वीक्षणादिभिः ॥ १९९ ॥ संस्कारेतत्रसम्पूज्यावेद्यांताः पीठदेवताः ॥ आधारशक्तिमारभ्यस्वासनंतत्रविन्यसेत् ॥ २०० ॥ पूजास नमथात्मीयंचैलाजिनकुशोत्तरम् ॥ तत्रोपविश्यविधिवत्स्मरेद्विष्णुंगुरुंतथा ॥ २०१ ॥ मेरुपृष्ठऋषिःप्रोक्तःसावित्रीछन्दईरितम् ॥ पृथिवीदेवताप्रोक्ताविनि

१ नाराचमुद्रया ॥ नाराचमुद्रादत्तमुष्टेस्तर्जन्यादीर्घया भवेत् ॥ दहिने हाथकी मूठी बाँधकर तर्जनी अंगुलीको लम्बीकर करने से नाराचमुद्रा होती है २ फूलोंकी मालाओंसे शोभित ॥

योगोनिजासने ॥ २०२ ॥ पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनम् ॥ २०३ ॥ आसनस्यचतुष्कोणेगणेशं चसरस्वतीम् ॥ दुर्गांक्षेत्रपतिञ्चापि वह्न्यादिषुसमर्चयेत् ॥ २०४ ॥ उदङ्मुखः प्राङ्मुखोवास्वस्तिकासनमास्थितः ॥ पद्मासनगतोवापिऋजुकायोमनस्थिरः ॥२०५॥ स्थापयेद्दक्षिणेभागेपूजाद्रव्याणिचात्मनः ॥ सुवासिताम्बुसम्पूर्णसव्येकुम्भंसुशोभनम् ॥ २०६ ॥ प्रक्षालनायकरयोःपात्रेपृष्ठेनिवेशयेत् ॥ घृतादिज्वलितान्दीपान्स्थापयेत्परितःशुभान् ॥ २०७ ॥ दर्पणंचामरंछत्रं तालवृन्तञ्चपादुके ॥ यथायथन्तुसंस्थाप्यसंकुर्य्यात्तानिचात्मवान् ॥ २०८ ॥ पुष्पनैवेद्यगन्धादीन्ह्रींहूंफडितिमन्त्रतः ॥ नाशचसुदयाद्दृष्ट्वासमयांश्चविलोकयन् ॥ २०९ ॥ दृष्टंवाचात्मविज्ञातंसम्यक्पुष्पादिदूषणम् ॥ अस्पृश्यस्पर्शनंवापियदन्यायार्जितञ्चवा ॥ २१० ॥ तथानिर्माल्यसंस्पृष्टंकीटाद्यारोहणञ्चयत् ॥ तत्पूर्वन्नाशमायातिनैवेद्याद्यवलोकनात् ॥ २११ ॥ ततोरमितिमन्त्रेणशिखांदीपस्यसंस्पृशेत् ॥ सतुस्याच्छुभदोदीपोनिःकव्यादःसुखप्रदः २१२ ॥ पतङ्गकीटकेशादिदाहात्क्रव्यादसञ्ज्ञितः ॥ वसामज्जादिसम्भूतैर्द्दाद्यैरुपयोजितुम् ॥ २१३ ॥ अज्ञानरूपंतत्सर्वंदोषंस्पर्शाद्विनश्यति ॥ चौंबीजमुच्चरेन्मन्त्रीदेवतीर्थेनसंस्पृशेत् ॥ २१४ ॥ पानीयंघटमध्यस्थंदृष्ट्वासम्यक्

---

१ आग्नेयमें, गंगणेशायनमः, नैर्ऋत्यकोणमें, संसरस्वत्यैनमः, वायव्यमें, दुंदुर्गायै नमः, ईशानमें, क्षंक्षेत्रपतयेनमः २ जानूर्वोरन्तरे सम्यग्धृत्वा पादतलेउभे । समकायं सुखासीनं स्वस्तिकं तत्प्रचक्षते । दोनों जांघों के बीचमें दोनों पाद तल धरकर समकायसे अवस्थित होने कोही स्वस्तिकासन कहते हैं ३ वामोरूपरि दक्षिणं हि चरणं संस्थाप्य बामं तथा दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् अङ्गुष्ठे हृदये निधाय चिबुकं नासाग्रमालोकयेदेतद्व्याधिविनाशनाशनकरं पद्मासनं चोच्यते ॥ टी० ॥ दक्षिण पाद बामऊरु के ऊपरमें और बाम पाद दक्षिण ऊरू में रखकर पीछे से दोऊ हाथ घुमाकर दोऊ पांवके अंगूठोंको धर हृदयमें ठोडी राख नासिकाके अग्रभागमें दृष्टि राखनेको पद्मासन कहते हैं और पूजा समय में हाथों से अँगूठे न धरै ४ अँगुलियों के अग्रभागको देवतीर्थ नाम है अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम् । मध्येङ्गुष्ठाङ्गुल्योः पैत्रं मूले त्वङ्गुष्ठस्य ब्राह्मम् बाणमुद्रादक्षमुष्टिस्तर्जन्यादीर्घयाभवेत् ॥ दक्षिणहाथकी मूठी बांधकर तर्जनी अंगुली लम्बी करदे ॥

साधकः ॥ वामेनपाणिनाधृत्वावामपार्श्वस्थितंघटम् ॥ २१५ ॥ पात्राधारेन्यसे
न्न्यूनंयदत्राज्ञानतोभवेत् ॥ जलाशयशवस्पर्शाज्जलंस्थानेचसङ्गतम् ॥ २१६ ॥
इत्यादिदूषणंनश्येत्तत्प्रियंदेवपूजने ॥ ततःकृताञ्जलिःपूतोवामदक्षिणपार्श्व
योः ॥ २१७ ॥ गुरुंगणपतिंनत्वापुरतःस्वेष्टदेवताम् ॥ सुगन्धपुष्पाण्यादा
य[1]चन्दनाक्तानिमन्त्रवित् ॥ २१८ ॥ हौंमन्त्रेणकरयोरस्त्रमन्त्रेणमर्द्दयेत् ॥
तत्पुष्पंवामहस्तेनसमादायचमस्तकम् ॥ २१९ ॥ भ्रामये[2]त्परित[3]स्तारंजप
न्नाघ्रायतत्पुनः ॥ [4]हौंॐपूर्वम्पठेत्श्लोकमिमंसाधकसत्तमः ॥ २२० ॥ सर्व
त्रविलयंयान्तुयेमांहिंसन्तिहिंसकाः ॥ मृत्युरोगभयक्लेशाःपतन्तुरिपुमस्तके ॥
२२१ ॥ [5]अस्त्रमन्त्रेणनाराचमुद्रयेशदिशित्यजेत् ॥ करशुद्धिंततोस्त्रेणकुर्य्या
त्तालत्रयंततः २२२ ॥ ऊर्ध्वोर्ध्वमस्त्रमन्त्रेणदिग्बन्धमपितेनच ॥ तेनसम्प
त्तितंतेजोवह्निप्राकारमुद्रया ॥ २२३ ॥ रक्षेदात्मनिशूलेनप्राणायामत्रयंचरे
त् ॥ भूतशुद्धिंततःकुर्य्यात्तत्प्रकारमथब्रुवे ॥ २२४ ॥ पादतोजानुपर्य्यन्तं
चतुरस्रंसचक्रकम् ॥ लंयुतंपीतवर्णंचभूस्थानंब्रह्मदैवतम् ॥ २२५ ॥ अधि
ष्ठितंनिवृत्त्याख्यकलयास्थानमुच्यते ॥ समुत्पत्तेस्तुजीवानामेवंरूपंविचिन्त
येत् ॥ २२६ ॥ जान्वोरानाभिपर्य्यन्तमपांस्थानंसितप्रभम् ॥ अर्धचन्द्रनिभं
शृङ्गद्वयंतत्पद्मलाञ्छितम् ॥ २२७ ॥ षट्कोणंबिन्दुभिःषड्भिर्युतंवंबीजसंयुतम् ॥
प्रतिष्ठाकलयायुक्तंध्यायेत्तद्विष्णुदैवतम् २२८ ॥ नाभ्यादिकण्ठपर्य्यन्तमार
क्तंरुद्रदैवतम् ॥ रंबीजयुक्तंक[?]यायुतंविद्याख्ययातथा ॥ २२९ ॥ दीप्तिम
त्स्वस्तिकोपेतंत्रिकोणाकारतांगतम् ॥ महाप्रलयवत्स्थानंवह्नितत्त्वंविचिन्त
येत् ॥ २३० ॥ कण्ठाद्भ्रूमध्यपर्य्यन्तंषट्कोणाकारतांगतम् ॥ षड्बिन्दुला

---

१ चन्दन लगेहुये २ चारों ओर उसी फूलको घुमाताहुआ ३ ॐ मन्त्र जपताहुआ ४ हौं ॐ सर्वत्र विलयं यान्तु यह श्लोक पढ़ै ॥ फट्मन्त्र से बाण मुद्राकर उस फूल को ईशान कोणमें फेकदे । वह्निप्राकारमुद्रा तुत्रिशूलाग्रावुभौकरौ । व्यत्यस्ता भ्रमितोवह्नेर्नये दस्त्रा ह्वयापिच ॥ दोनोंहाथोंमें तीन अंगुली उठा त्रिशूलाकारकरके उलटि के घुमाने से वह्नि प्राकार मुद्राहोतीहै इसीका अस्त्रमुद्रानामहै ॥ त्रिशूलाख्याभवेन्मुद्रा अङ्गुष्ठेन कनिष्ठिकाम् । बद्ध्वाप्रसारयेच्छेषमङ्गुलीनां त्रयंतदा ॥ अँगुठा से कनिष्ठा अंगुलीको दबाकर शेष तीन अंगुली ऊपरका पसारनेसे त्रिशूलमुद्राहोतीहै ॥

ञ्छितंवृत्तंवेष्टितंकृष्णवर्णकम् ॥ २३१ ॥ वायुस्थानंशान्तिकलाधिष्ठितंशिव दैवतम् ॥ यंबीजरूपंध्यात्वेत्थंप्राणरूपंविचिन्तयेत् । २३२॥ भ्रूमध्याद्ब्रह्मरन्ध्रान्तमाकाशस्थानमुच्यते ॥ वृत्ताकारन्धूम्रवर्णमहोचध्वजलाञ्छितम्॥ २३३॥ शान्त्यतीताख्यकलयाधिष्ठितंशिवदैवतम् ॥ हंबीजयुक्तंध्यात्वेत्थंदेहेभूतानि विन्यसेत्॥ २३४ ॥ धर्म्मकन्दसमुद्भूतंज्ञाननालसुशोभितम् ॥ कृत्वातत्कर्णिकासंस्थंप्रदीपकलिकानिभम् ॥ २३५ ॥ सुषुम्नावर्त्मनाजीवंपरमात्मनि योजयेत् ॥ योगयुक्तेनविधिनासोहंमन्त्रेणसाधकः ॥ २३६ ॥ तेनैवसर्वभूतानिविलीनानिविचिन्तयेत् ॥ शरीरेवामकुक्षौतुचिन्तयेत्पापपूरुषम् ॥ २३७ ॥ वामकुक्षिस्थितंपापपूरुषंकज्जलप्रभम् ॥ ब्रह्महत्याशिरस्कन्धंस्वर्णस्तेयभुजद्वयम् ॥ २३८ ॥ सुरापानहृदायुक्तं गुरुतल्पकटिद्वयम् ॥

---

१ अब भूत शुद्धि की विधि कहते हैं ॥ धर्म मूल और ज्ञान नालहै जिसका उस हृदयस्थ कमल की कर्णिका में स्थित दीपशिखाके समान जीवात्मा को सोहंमन्त्र से मूलाधारस्थ कुण्डलिनी के साथ मिलाकर सुषुम्ना नाड़ीके द्वारा, मूलाधार स्वाधिष्ठान, मणिपूरक, अनाहत, विशुद्ध और आज्ञा नामक षट् चक्र भेदकर शिरस्थ अधोमुख सहस्रदल कमल की कर्णिका के मध्यस्थ परम शिवमें एक चित्तकर उसमें उक्त पृथिव्यादि चतुर्विंशति तत्त्वोंको विलीन चिन्ताकरके बांयें श्वासा से वायु खींचता हुआ षोड़शवार यं बीज जप करके देह परिपूर्णकर पुनः दोऊ नासा पुट दबाकर चौंसठवार उक्त वायु बीज जप द्वारा कुम्भक अर्थात् वायु रोंककर वाम कुक्षिस्थ उक्त लक्षण पाप पुरुष के साथ निज शरीर का शोषण करै ॥ तदनन्तर वायु बीजको बत्तीसवार जपकर वायुको उतारले, तत्पश्चात् दक्षिण नासा पुटमें वह्निबीज ( रं ) चिन्ताकरके षोड़शवार जप पूर्वक वायुद्वार देहको पूर्ण करे पुनः चौंसठिवार ( रं ) बीज जपद्वारा कुम्भक प्राणायाम में कृष्णवर्ण पापपुरुष के साथ शरीरको मूलाधारस्थ अग्नि से जलादे पुनः बत्तिसवार ( रं ) बीज जपकर वाम नासा पुटसे वायुका परित्यागकर भस्मको फेंकदे ॥ तदनन्तर वाम श्वासा को खींचकरवर्ण चन्द्र बीज ( ठं ) इस मन्त्र की चिन्ताकर षोड़शवार जपद्वारा ललाट में लेजावै और कुम्भक प्राणायाम में चौंसठिवार ( वं ) यह वरुण बीज जपकर ललाट देशस्थ चन्द्रसे विनिर्गत अमृतद्वारा निज शरीर भस्मको सानकर मातृकामय समस्त देहरचित करे ॥ तदनन्तर ( लं ) यह पृथिवी बीजको बत्तिसवार जपकर उस देहको दृढीभूत भावना करके दक्षिण नासा पुटसे वायुका परित्यागकरे ॥ और परमशिवमें लीन पृथिव्यादि तत्त्वों को निज निज स्थान में आईहुई भावना करता हुआ ( हंसः ) इस मन्त्रको जपकर परमशिवमें जो लीन जीवात्मा उसको देहमें लेआवै ॥ इति ॥

तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥ २३९ ॥ उपपातकरोमाणंरक्तश्मश्रु विलोचनम् ॥ खड्गचर्म्मधरंक्रूरंरुष्टंपापंविचिन्तयेत् ॥ २४० ॥ तथासंशोष येदेनंपूरकादिक्रमेणवै ॥ विधायप्राणसंरोधंवायुबीजेनवायुना ॥ २४१ ॥ मूलाधारोत्थितेनैववह्निनानिर्द्दहेच्चतत् ॥ एवंसन्दह्यपरितोद्वात्रिंशन्मात्रया ततः ॥ २४२ ॥ भस्मनासहितंमन्त्रीरेचयेदिडयापुनः ॥ वामनाड्यां चन्द्र बीजं कुन्देन्दुयुतसुप्रभम् ॥ २४३ ॥ भालेन्दुराजेसंयोज्यततःषोडशमात्रया ॥ सुषुम्णयाचतुष्षष्टिमात्रयातोयबीजकम् ॥ २४४ ॥ ध्यात्वामृतमयींसृष्टिंपञ्चा शद्वर्णरूपिणीम् ॥ तयादेहंविचिन्त्यैवंमनसापिङ्गलाध्वना ॥ २४५ ॥ द्वा त्रिंशन्मात्रयामन्त्रीलंबीजेनदृढंनयेत् ॥ सञ्जातेसकलेदेहेदेवतोपासनक्ष मे ॥ २४६ ॥ आत्मलीनानितत्त्वानिस्वस्थानंप्रापयेत्ततः ॥ आत्मानं हृदयाम्भोजादानयेत्परमात्मनः ॥ २४७ ॥ हंसमन्त्रेणविधिवत्तेजोरू पंकलेवरम् ॥ देवताराधनेयोग्यमुत्पन्नमितिभावयेत् ॥ २४८ ॥ भू तशुद्धिविहीनेनकृतापूजाभिचारवत् ॥ विपरीतफलंदद्यादभक्त्यापूजनंय था ॥ २४९ ॥ भूतशुद्धिंविधायेत्थंप्राणस्थापनमाचरेत् ॥ प्राणंप्रतिष्ठामन्त्र स्यमुनयोजेशपद्मजाः॥२५०॥ ऋग्यजुस्सामच्छन्दांसिप्राणशक्तिस्तुदेवता ॥ ऋषीञ्छिरसिवक्त्रेतुच्छन्दांसिहृदिदेवताम् ॥ २५१ ॥ आम्बीजायनमोगुह्ये पादेह्रींशक्तयेनमः ॥ नाभौनमः क्रोंकीलायनियोगोऽसुस्थिताविति ॥ २५२ ॥ ॐ आंह्रींक्रोंअङ्कवर्गसानुस्वारंनमोहृदि ॥ पञ्चतत्त्वंसमुच्चार्य्यदीर्घाकारंतथै

---

१ ॐ अस्यश्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वराःऋषयः ऋग्यजुस्सामानिच्छन्दांसिचैतन्यरूपाप्राणशक्तिर्देवताप्राणस्थापनेविनियोगः ॥ ब्रह्मविष्णुमहेश्वरेभ्यःऋषिभ्योनमः शिरसि,ऋग्यजुस्सामच्छन्दोभ्योनमोमुखे प्राणशक्त्यैदेवतायैनमोहृदि ॥ २५१ ॥ आंबीजायनमोगुह्ये,ह्रीं शक्तयेनमः पादयोः क्रोंकीलकायनमः सर्वाङ्गे ॥ २५२ ॥ अथहृदयादिन्यासः ॥ ओं आं ह्रीं क्रों अं कं खं गं घं ङं आकाशवायुवह्निजलपृथिव्यात्मने आं हृदयायनमः ॥ ओं आं ह्रीं क्रों इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसेस्वाहा ॥ ओं आं ह्रीं क्रों उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायैवषट् ॥ ओं आं ह्रीं क्रों एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं कवचायहुम् ॥ ओं आं ह्रीं क्रों ओं पं फं बं भं मं वक्तव्यादानगमनविसर्गानन्दात्मने औं नेत्रत्रयायवौषट् ॥ ओं आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं

वच ॥ २५३ ॥ इश्ववर्गश्चशब्दादिशिरसेवह्निगेहिनी ॥ तानिबीजानिउंता
ह्रक्टवर्गंश्रोत्रकादिच॥२५४॥प्रोक्कातदात्मनेत्रैवशिखायैचवषड्वदेत्॥तानि
बीजानिएंतुंचवागादीनितदात्मने ॥ २५५ ॥ ऐमुक्त्वाकवचायेतिहुंवदेत्तदन
न्तरम् ॥ चतुर्बीजंचपूर्वोक्तमोंपवर्गंचतादृशम् ॥ २५६ ॥ वाएयाद्यात्मनऔं
नेत्रायवौषट्चतथावदेत्॥चतुर्बीजंचअन्तादृग्यवर्गमनआदिच ॥ २५७॥
तदात्मनेस्वरश्चान्त्योस्त्रायफट्चेतिसंवदेत् ॥ अङ्गुष्ठादौहस्ततलान्तेन्यसेदेव
मेवहि ॥ २५८ ॥ नाभ्यधश्चापिकण्ठाधोमूर्द्धाधोथतदन्तकम् ॥ आंह्रींक्रोंक्र
मतोन्यस्यहृत्पद्माष्टदलेषुच ॥ २५९ ॥ पूर्वतःक्रमतोवर्णान्कर्णिकायांहृदन्त
कान् ॥ लंरंहंषंयंचवंचसंशंक्षंइतिवर्गतः ॥ २६० ॥ दिक्षुन्यसेत्ततोध्यायेत्प्राण
शक्तिंहृदिस्थिताम् ॥ तस्याध्यानंयदत्रैवतद्ब्रवीमिशृणुप्रिये ॥२६१॥ रक्ताब्धि
पोतारुणपद्मसंस्थांपाशाङ्कुशेष्वासवरासिबाणान् ॥ शूलंकपालंदधतींकरा
ब्जैरक्तांत्रिनेत्राम्प्रणमामिदेवीम् ॥ २६२ ॥ इति प्राणशक्तिध्यानम्॥हस्तंनि

---

मनोबुद्ध्यहङ्कारचित्तात्मने अःअस्त्रायफट् ॥ अथकरन्यासः ॥ ओं आं ह्रीं क्रों अं कं खं गं
घं ङं आकाशवायुवह्निजलात्मने आं अङ्गुष्ठाभ्यांनमः ॥ ओं आं ह्रीं क्रों इं चं छं जं झं
ञं शब्दस्पर्शरूपरसगन्धात्मने आं तर्जनीभ्यांस्वाहा ॥ ओं आं ह्रीं क्रों उं टं ठं डं ढं णं
श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यांवषट् ॥ ओं आं ह्रीं क्रों एं तं थं दं धं नं वाक्पा
णिपादपायूपस्थात्मने ऐं अनामिकाभ्यांहुम् ॥ ओं आं ह्रीं क्रों ओं पं फं बं भं मं वक्तव्यादा
नगमनविसर्गानन्दात्मनेऔंकनिष्ठिकाभ्यांवौषट् ॥ ओं आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं
क्षं मनोबुद्ध्यहङ्कारचित्तात्मने अः करतलकरपृष्ठाभ्यांफट् ॥ २५८ ॥ आंनमोनाभेरारभ्य
पादान्तम् ॥ ह्रीं नमोनाभितःहृदयपर्य्यन्तम् ॥ क्रोंनमोहृदयान्मस्तकान्तम् ॥ २५९ ॥ अब
अङ्गन्यासकी विधि अन्यत्रसे लेकर कहते हैं ॥ यथा ॥ यंत्वगात्मनेनमोहृदि, रं असृगात्मने
नमोदक्षिणांसे, लंमांसात्मनेनमःककुदि ॥ वंमेदआत्मने नमोवामस्कन्धे, शं अस्थ्यात्मने नमो
हृदयादक्षिणभुजाग्रान्तम् ॥ षंमज्जात्मनेनमोहृदयाद्वामभुजाग्रान्तम् ॥ संशुक्रात्मनेनमोहृदयाद
क्षिणपादाग्रान्तम् ॥ हौं ओजआत्मनेनमोहृदयाद्वामपादाग्रान्तम् ॥ हं प्राणात्मनेनमोहृदयान्ना
भ्यन्तम् ॥ संजीवात्मनेनमोहृदयान्मस्तकान्तम् ॥ इसप्रकार उक्त न्यासों को करके हृदय क
मलके आठोंदल और कर्णिका में पूर्वादिक्रम से लं, रं, हं, षं, यं, वं, सं, शं और क्षं
इन नवों वर्णों के न्यासकी भावना करने के अनन्तर मूलोक्त ध्यान करना उचित है ॥

धायहृदयेप्रांग्बीजंयादिकाष्टकम् ॥ हंसःसोहंममप्राणावदेदिहाद्धिरुक्तितः ॥ २६३ ॥ प्रोक्तातथैवचपुनर्ममजीवइहस्थितः ॥ पुनस्तद्वक्ताममतुवाङ्मनश्च क्षुरुच्चरेत् ॥ २६४ ॥ श्रोत्रंघ्राणम्प्राणइहागत्यसुखंचिरन्ततः ॥ तिष्ठन्तुवह्नि जायान्तमुक्त्वातारंततोजपेत् ॥ २६५ ॥ वपुर्ज्योतिर्म्मयंध्यायेदितिस्यात्प्रा णसंस्थितिः ॥ प्राणायामत्रयंकृत्वामातृकान्यासमाचरेत् ॥ २६६ ॥ प्राणा यामास्त्रिधाप्रोक्तास्तान्त्रवैदिकयौक्तिकाः॥ संसिद्धिःपापनाशाययोगसिद्धिः फलंक्रमात् ॥ २६७ ॥ मातृकाख्यश्चमन्त्राख्यस्तान्त्रिकोद्विविधोमतः ॥मा तृकाख्योजपस्यादौजपस्यान्तेकृतोयदि ॥ २६८ ॥ वर्णव्यत्यासादिदोषान शेषान्हन्तितंशृणु ॥ वामयापूरयेद्वायुंस्वरैःकाद्यैश्चकुम्भके ॥ २६९ ॥ रेच येद्यादिभिर्दक्षनासायांमातृकादिभिः ॥ यावच्छक्त्यानियम्यासुंमनसैवमनुं जपेत् ॥ २७० ॥ कनिष्ठानामिकाङ्गुष्ठैर्नासांधृत्वातुमान्त्रिकः ॥ प्राणायाम त्रयंप्रोक्तंयदन्यमनसाकृतम् ॥ २७१ ॥ जपपूजादिकंतस्यदोषमेषव्यपोहति॥ गायत्रींशिरसासार्द्धंसप्तव्याहृतिपूर्वकाम् ॥ २७२ ॥ प्रतिप्रणवसंयुक्तांत्रिर्जपे त्सइहोत्तमः ॥ मध्यमूलाद्यावदग्रमङ्गुष्ठेननिपीड्यते ॥ २७३ ॥ मात्रासाप्रोच्य

---

१ आंह्रींक्रोंयंरंलंवंशंषंसंहंहंसःसोहंममप्राणाइहप्राणाममजीवइहस्थितःममवाङ्मनश्चक्षुःश्रोत्रंघ्राणंप्राणाइहागत्यसुखंचिरंतिष्ठन्तुस्वाहाओम् ॥ मूलके तीन श्लोकों से यह मन्त्र निकल आता है ॥ परन्तु मन्त्रमहोदधि में कहाहुआ प्राणप्रतिष्ठाका मन्त्र इससे श्रेष्ठतर समझा जाताहै ॥ जैसे ॥ पाशंमायांसृणिंप्रोच्ययादीन्सप्तेन्दुसंयुतान् । तारान्वितंनभस्सप्तवर्णमन्त्रं ततोजपम् ॥ ममप्राणाइहप्राणाममजीवइहस्थितः । ममसर्वेन्द्रियाण्युक्त्वाममवाङ्मनईरयेत् ॥ चक्षुःश्रोत्रंघ्राणपदंप्राणाइहसमीर्य्यच ॥ आगत्यसुखमुच्चार्य्यचिरंतिष्ठन्त्विदंपठेत् ॥ वह्निजायां चसप्तार्णम्मन्त्रमेतंपुनर्वदेत् ॥ प्राणप्रतिष्ठामन्त्रोयंस्मृतःप्राणनिधापने ॥ सबिन्दवोमेरुहंसाकाशाःसर्गीभृगुःपुनः ॥ मायेतितारुद्धोयंमन्त्रःसप्ताक्षरोमतः ॥ एवंप्राणान्प्रतिष्ठाप्यमातृकान्यासमाचरेत् ॥ इन श्लोकों से निकला हुआ मन्त्र जैसे ॥ आंह्रींक्रोंयंरंलंवंशंषंसंहोंओंक्षंसंहंसःह्रीं ओंसोहंममप्राणाइहप्राणाममजीवइहस्थितः ममसर्वेन्द्रियाणिममवाङ्मनश्चक्षुःश्रोत्रंघ्राणंप्राणाइहागत्यसुखंचिरंतिष्ठन्तुस्वाहाओंक्षंसंहंसःह्रींओम् ॥ जिसकी प्राणप्रतिष्ठा करनाहो उसके नामका षष्ठ्यन्त पद बनाकर इस मन्त्रमें ममपद के स्थान में जोड़लेना ॥ इसी मन्त्र से सब देवताओं की प्राणप्रतिष्ठा होती है ॥

तेसद्धियोगेभीष्टंप्रयच्छति ॥ जानुंप्रदक्षिणीकुर्य्याद्यावत्कालेनहस्तकः ॥ २७४ ॥ तावत्कालमितामात्रास्वनिश्वाससमापिच ॥ जघन्योरविमात्रःस्याज्जिनमात्रस्तुमध्यमः ॥ २७५ ॥ श्रेष्ठःषड्वर्गमात्रःस्याद्योगत्रयसुसाधकः ॥ केवलेकुम्भकेसिद्धेसिद्धिस्स्याद्राजयोगजा ॥ २७६ ॥ वीर्य्यस्तम्भश्चवह्यायुर्वलीपलितनाशनम् ॥ पूरकेकुम्भकेसिद्धेक्रियायोगस्यसिद्धयः॥ २७७॥ पूर्वोक्तंचनशीतोष्णबाधाक्षुत्तृड्भवापिच ॥ पूरकःकुम्भकोरेचोयदातुल्यःप्रजायते ॥ २७८ ॥ हठयोगस्तदासिद्धोह्यणिमाद्यष्टसिद्धये ॥ ईषत्फलंजघन्येतुमध्यंमध्येपरेखिलम् ॥ २७९ ॥ निरन्तराब्दत्रितयाभ्यासात्सर्वं भवेत्फलम् ॥ प्राणायामविधिःप्रोक्तामयातुभ्यं वरानने ॥ २८० ॥ ऋषिर्गुरुत्वाच्छिरसिवर्णत्वाच्छन्दआनने ॥ चित्तज्ञादेवतायास्तुहृदयेधारणंमतम् ॥ २८१ ॥ ऋगताविितिधातुस्तुऋवर्णःप्रापकोमतः ॥ षिःषणार्थस्तुविज्ञानमतस्तत्प्रापकस्तुसः ॥ २८२ ॥ छतीधातुरितीच्छायामत्रयस्मात्प्रवर्तते ॥ मुखइच्छाप्रदंछन्दोमन्त्रार्थच्छादनात्तुवा ॥ २८३ ॥ क्रीडार्थकोदिवुर्धातुःसम्पूर्णदेवतापदम् ॥ साधकेष्टंददातीतिदेवतापरिकीर्त्तिता ॥ २८४ ॥ रक्षमाणोयदात्मीयंहृदयेस्तिचिदात्मकः ॥ तस्मात्तत्रनमस्कुर्य्यान्मुख्याङ्गुष्ठेनसंस्पृशेत्॥ २८५॥ स्वाहयाक्रियतेसम्यग्विष्टपाहरणंयतः ॥ अनामातर्ज्जनीभ्यांसाचाकृष्टाभ्यामिहेष्यते ॥ २८६ ॥ शिखावषट्पदंयच्चशिखयात्मतनुग्रहः ॥ यस्मात्तस्माद्वषडितिक्रियतेंगुलिमध्यया ॥ २८७॥ ग्रहणार्थःकवचधातुर्हुंहस्तेनतु गृह्यते ॥ शरीरतस्तुकवचंतर्ज्जन्यानामयाऽपितत् ॥ २८८ ॥ यथार्थज्ञानकृद्वौषट्तन्नेत्राभ्यांप्रजायते ॥ तस्माद्धक्तंतत्रवौषट्तर्ज्जन्याद्यैस्तुतत्स्मृतम् ॥ २८९॥ एकाक्षत्वात्कुबेरादिदेवेष्वेकंतमुच्चरेत् ॥ भ्यान्तंविष्णवादिकेरुद्रादौतुनेत्रत्रयात्मकम् ॥ २९० ॥ आध्यात्मिकादिरूपंयत्साधकस्यविनीयते ॥ अविद्याजातमस्त्रंतत्फट्करभ्यांप्रपञ्च्यते ॥ २९१ ॥ प्राणायामंमातृकायाःकृत्वान्यासान्समाचरेत् ॥ तेचैकविंशतिःप्रोक्ताःकामनाभेदतोपिच ॥ २९२ ॥ अधिकारिविभेदेनानित्यत्वेनापिकेनचित् ॥ देवताभेदतोवापितद्रहस्यन्निरुप्यते ॥ २९३ ॥ पुरुषेदैवतेनित्याकेवलंस्वरमातृका ॥ यन्यासादुपचर्य्याद्या

धर्म्माःसिद्ध्यन्तिसाधके ॥ २९४ ॥ ऋषिर्ब्रह्मादेवतातुमातृकाख्यासरस्वती ॥ हलोबीजानिगायत्रीछन्दःशक्तिःस्वरास्स्मृताः ॥ २९५ ॥ अव्यक्तंकीलमुद्दिष्टंनियोगोभीष्टसिद्धये ॥ दक्षेकरतलेतस्यपृष्ठेचकरभेतथा ॥ २९६ ॥ अंगुष्ठादिष्वथोवामेविपर्य्यासेन विन्यसेत् ॥ बिन्दुयुक्तान्क्रमेणैवस्वरान्न्यासोऽयमादिमः ॥ २९७ ॥ अयंचेन्न्यासतोवामःसंहारन्यासउच्यते ॥ पापशत्रुक्षयाद्यर्थंक्रमेणादौसमाचरेत् ॥ २९८ ॥ सविसर्गैःस्वरैर्यस्तुकेवलंन्यासवत्कृतः ॥ सृष्टिन्यासःप्रयोगादौकर्त्तव्यस्तस्यसिद्धये ॥ २९९ ॥ वामात्करतलात्तुकनिष्ठान्तंतुविन्यसेत् ॥ अष्टौस्वरांल्लृकारादींस्तथादक्षतलादपि ॥३००॥ अकाराद्यान्बिन्दुसर्गयुक्तान्न्यासोयमीरितः ॥ स्थित्यादौमुनिदेवादिप्राग्वत्कायस्थितावयम् ॥ ३०१ ॥ कंकारादिणकारान्तान्वर्णान्पञ्चदशैवहि ॥ अंगु

---

१ ॐ अस्यश्रीमातृकान्यासस्यब्रह्माऋषिर्गायत्रीछन्दः मातृकाख्यासरस्वतीदेवताहलोबीजानिस्वराःशक्तयःअव्यक्तंकीलकम्, अभीष्टसिद्ध्येविनियोगः ॥ ब्रह्मर्षयेनमःशिरसि, गायत्रीछन्दसेनमोमुखे, मातृकासरस्वत्यैदेवतायैनमोहृदि ॥ हल्भ्योबीजेभ्योनमोगुह्ये, स्वरेभ्यःशक्तिभ्योनमःपादयोः अव्यक्तायकीलकायनमोनाभौ २ दक्षिण हाथका करतल, कर पृष्ठ और करभ (अर्थात् पहुँचे से कनिष्ठा अंगुली के मूलतक हाथका बहिर्भाग, ) और अंगुष्ठादिक अंगुलियों में अं आं इं ईं उं ऊं ऋं ॠं, इन आठ मातृकाओं को और वामहाथकी कनिष्ठा, अनामिका, मध्यमा, तर्जनी, अंगुष्ठ, करभ, करपृष्ठ और करतल में, ऌं ॡं एं ऐं ओं औं अं अः, इन आठ मातृकाओंको क्रमसे न्यास करना ॥ अं नमो दक्षिणहस्तस्य करतले, आंनमो दक्षिणकरपृष्ठे, इं नमो दक्षिणकरभे, ईं नमो दक्षिणांगुष्ठे, उं नमो दक्षिणतर्जन्याम्, ऊं नमो दक्षिणमध्यमांगुल्याम्, ऋं नमो दक्षिणानामिकायाम्, ॠं नमो दक्षिणकनिष्ठिकांगुल्याम्, ऌं नमो वामहस्तस्य कनिष्ठिकांगुल्याम्, ॡं नमोवामानामिकायाम्, एंनमो वाममध्यमायाम्, ऐं नमो वामतर्जन्याम्,ओं नमोवामांगुष्ठे, औं नमो वामकरभे, अं नमो वामकरपृष्ठे अःनमोवाम करतले ॥ इति स्थितिन्यासः ३ और इसीको उलटा न्यासकरनेकोही संहार न्यास कहते हैं ४ और जो स्थितिन्यासहीके क्रमसे मातृकाओंमें विसर्ग मिलाकर न्यास किया जाताहै उसका सृष्टिन्यास नामहै ॥ जैसे अःनमो दक्षिण करतले, आः नमो दक्षिणकरपृष्ठे, इः नमो दक्षिणकरभे इस रीति से समझलेना ५ ककार से णकारतक पन्द्रह अक्षरों को दाहिने हाथके पन्द्रहों पोरों में और तकार से शकारतक उतनेही अक्षरोंको वाम हाथके पोरोंमें न्यासकरे ॥ जैसे ॥ कं नमःदक्षांगुष्ठमूले खं नमः अंगुष्ठमध्ये, गं नमः अंगुष्ठाग्रे, घं नमः तर्जनीमूले, ङं नमः तर्जनीमध्ये, चं नमः तर्जन्यग्रे, छं नमः मध्यमामूले, जं नमः मध्यमामध्ये, झं नमः मध्यमाग्रे, ञंनमः अनामिकामूले, टं नमः अनामिकामध्ये, ठं नमः अनामिकाग्रे, डं नमः कनिष्ठामूले, ढं नमः कनिष्ठामध्ये, णं नमः कनिष्ठाग्रे, ॥ योंही वामहस्त में तादि अक्षरोंका न्यास करे जैसे ॥ तंनमः वामांगुष्ठमूले, थं नमः वामांगुष्ठमध्ये, दं नमः वामांगुष्ठाग्रे, इत्यादि ॥ न्यासकरके ॥

ष्ठादिकनिष्ठान्तं दक्षहस्तस्यपर्वसु ॥ ३०२ ॥ न्यसेद्विन्दुयुतान्सर्वान्वामेप्ये वंतुतादिकान् ॥ अंगुष्ठादिकनिष्ठान्तंहस्तयुग्मेपिविन्यसेत् ॥ ३०३ ॥ युगप त्पादिकान्वर्णान्ब्रूयात्पञ्चनमोन्तकान् ॥ तत्तत्स्थानेकरंदत्त्वाकरशुद्धिकरस्त्व यम् ॥ ३०४ ॥ अंआंमध्येकवर्गःस्यादिंईंमध्येचवर्गकः ॥ उंऊंमध्येटवर्गस्तु एंऐंमध्येतवर्गकः ॥ ३०५ ॥ ओंऔंमध्येपवर्गःस्यादंअःमध्येतयादिकाः ॥ एभिःसबिन्दुकैरङ्गुल्यादिन्यासोहृदादिकः ॥ ३०६ ॥ कर्त्तव्योस्यापिऋष्या दिविनियोगस्यासिद्धये ॥ षडङ्गशुद्ध्यैक्रोधादिजातपापनिवृत्तये ॥ ३०७ ॥ तालत्रये ग्दिग्बन्धंप्रकुर्य्याद्ब्रह्ममन्त्रतः ॥ ततोध्यायेद्धर्णपद्मंश्वेतंशिरसिसं स्थितम् ॥ ३०८ ॥ कर्णिकायां निजं मन्त्रं संस्मरेत्केशराष्टके ॥ स्वरयुग्मंत थापत्रेष्वपिसप्तसु कादिकान् ॥ ३०९ ॥ सप्तवर्गानष्टमेऽत्रलंक्षमेवंविचिन्त येत् ॥ एवंचिन्तय नीरोगोह्यपमृत्युर्विनश्यति ॥ ३१० ॥ अथान्तर्मातृ कान्यासंवक्ष्येऽन्तःसिद्धिकारकम् ॥ यंकृत्वायोगिनांचित्तंपातके न प्रवर्त्ते

१ पुनःषसंहंलंक्षंनमो दक्षहस्ते, षसंहंलंक्षं नमो वामहस्ते २ जैसे ॥ अं कं खं गं घं ङं आं अं गुष्ठाभ्यां नमः, इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः, उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः, एं तं थं दं धं नं ऐं अनामिकाभ्यांनमः, ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः, अं यं रं लं वं शं षं सं हं लं क्षं अः करतलकरपृष्ठाभ्यां नमः ॥ ऐसेही हृदयादि न्यासको भी करलेना उचित है ३ और इस न्यास के भी प्रथम ऋष्यादिकों का स्मरण और न्यास करना चाहिये जैसे अस्य श्रीमातृकान्यासस्यब्रह्माऋषिर्गायत्रीछन्दःमातृकाख्यासरस्वतीदेवताहलोबीजानि इत्या- दि सो सब प्रथमही लिखागयाहै उसी रीतिसे न्यास करलेना ४ शिरमें अष्टदल कमल का ध्यानकर उसकी कर्णिका अर्थात् बीचमें जो फल होताहै उसमें ( हंसः ) और केशर अर्थात् एक पत्तेके बाद जो द्वितीय पत्ता होताहै उन दोनोंके बीचों में दो दो स्वरोंका और सात पत्तों में कादि सात वर्गोंका और अठयें पत्ते में लं क्षं इस मन्त्रका ध्यान करना इसका चक्र लिखते हैं ५ और जो मूलमें, अथान्तर्मातृकान्यासंवक्ष्येऽन्तःसिद्धिकारकम् ॥ यह कहा गया परन्तु इसके अन्तर्मातृकान्यास का प्रकार प्रकट नहीं किया उसकी विधि तन्त्रान्तर से लेकर लिखते हैं ॥ अं इं उं ऋं लृं एं ऐं ओं औं नमः इतिकण्ठदेशस्थेधूम्राभेषोडशदलेविशुद्धचक्रे ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं नमः इतिहृदयस्थेप्रवालवर्णेद्वादशदले अनाहतचक्रे ॥ डं ढं णं तं थं दं धं नं पं फं नमः इति नाभ्युपरिस्थेनीलवर्णेदशदलेमणिपूरकचक्रे ॥ बं भं मं यं रं लं नमः इति नाभ्यधोभागस्थेविद्युद्वर्णेषड्दलेस्वाधिष्ठानचक्रे ॥ वंशंषंसंनमः इति सुवर्णभेचतुर्दलेमूलाधारचक्रे ॥ हं क्षं नमःइति भ्रूमध्यदेशस्थे चन्द्राभे द्विदले आज्ञाचक्रे ॥ सहस्रारेहिमानिभेसर्ववर्णविभूषिते ॥ अकथादित्रिरेखासुआलक्षत्रयभूषिते ॥ परबिन्दुभ्योनम

ते ॥ ३११ ॥ मूलाधारेध्वनिंश्रुत्वाप्रबुद्धाशक्तिकुण्डली ॥ क्वचित्पावकस ङ्काशासूक्ष्मतेजस्स्वरूपिणी ॥ ३१२ ॥ बहिर्न्यासमथोवक्ष्येपूर्वोक्तब्रह्मरन्ध्रके ॥ वर्णारविन्देसन्ध्यायेन्मातृकाख्यांसरस्वतीम् ॥ ३१३ ॥ पञ्चाशद्वर्णभेदैर्नि जमुवदनदोःपादयुक्कुक्षिवक्षोदेशांभास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दा वदाताम् ॥ अक्षस्रक्कुम्भचिन्तालिखितवरकरांत्रीक्षणांपद्मसंस्थामच्छाकल्पा मतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ ३१४ ॥ ललाटेमुखवृत्ते

---

इति न्यसेत् ॥ मूलादिब्रह्मरन्ध्रान्तेबिन्दुं चिदात्मकं ध्यात्वातत्स्रुतसुधासारैर्मातृकां ध्येयेत् ॥

तीनसौ आठके श्लोक से तीन सौ दश के श्लोक तकका यह चक्र है ॥ तन्त्रान्तरों में हंसः के स्थान में हंसौं देखा




जाता है ॥ भूपुर में पूर्वोक्त दिक्पाल व आयुधों की पूजा एवं भावना करनी चाहिये ॥

१ तीनसौ चौदहवें श्लोक से तीनसौ अठारहवें श्लोकतक मातृकान्यास की विधि मूल में है जैसे अंनमो ललाटे, आं नमो मुखे, इं नमो दक्षनेत्रे, ईंनमोवामनेत्रे, उं नमोदक्षकर्णे, ऊंनमोवामकर्णे, ऋं नमो दक्षनासायाम्, ॠंनमोवामनासायाम्, लृं नमोदक्षकपोले, ॡंनमो वामकपोले, एंनमः ओष्ठे, ऐं नमः अधरे, ओंनमः ऊर्ध्वदन्तपङ्क्तौ, औंनमः अधोदन्तपङ्क्तौ, अं नमः मूर्ध्नि, अः नमोमुखे, अं और अः, इन दोनों मातृकाओं के न्यास का स्थान इस ग्रंथ में शिर और मुख कहागया है परन्तु वीरचूडामण्यादि अन्यतन्त्रों में अं नमो जिह्वामूले अःनमो जिह्वाग्रे यह देखाजाताहै सो भी उचित है ॥ कंनमः दक्षिणबाहुमूले, खंनमःकूर्परे गंनमो मणिबन्धे, घं नमः अंगुलिमूले, ङं नमः अंगुल्यग्रे, चं नमोवामबाहुमूले, छं नमः कूर्परे, जंनमः मणिबन्धे, झं नमः अंगुलिमूले, ञं नमः अंगुल्यग्रे, टं नमः दक्षपादमूले, ठं नमः जानुनि, डं नमो गुल्फे, ढं नमो दक्षपादांगुलिमूले, णं नमः अंगुल्यग्रे, तं नमः वामपादमूले, थं नमः जानुनि, दंनमः गुल्फे, धं नमः वामपादांगुलिमूले, नं नमः वामपादांगुल्यग्रे, पं नमः दक्षपार्श्वे, फं नमः वामपार्श्वे, बं नमः पृष्ठे, भं नमो नाभौ, मं नमो जठरे, यंत्वगात्मनेनमोहृदये

रं असृगात्मनेनमः दक्षांसे, लं मांसात्मने नमः ककुदि, वं मेदआत्मनेनमः वामांसे, शं अस्थ्यात्मनेनमः हृदयाद्दक्षभुजाग्रान्तम् ॥ षं मज्जात्मने नमो हृदयाद्वामभुजाग्रान्तम्, सं शुक्रात्मनेनमः हृदयाद्दक्षिणपादाग्रान्तम् ॥ हं आत्मनेनमः हृदयाद्वामपादाग्रान्तम् ॥ लंअन्तरात्मनेनमः हृदयान्मस्तकान्तम्, और ग्रंथान्तरों में देखाजाता है कि, लं नमः हृदयादुदरपर्य्यन्तम्, इति सृष्टिक्रममातृकान्यासः ॥क्षंपरमात्मने नमः हृदयान्मुखपर्य्यन्तम् ॥ इन्हीं मातृकाओंसे बिन्दु निकालकर और विसर्ग जोड़कर भी मातृकान्यास उक्त स्थानों में होताहै ॥ जैसे अः नमः ललाटे, आः नमः मुखे, इः नमः दक्षनेत्रे, ईः नमः वामनेत्रे इत्यादि ॥ और बिन्दुयुक्त इसी उक्त न्यासको उलटा करनेकोही संहारन्यास कहते हैं यह क्षकार से लेकर अकारतक पूर्ण होताहै ॥ जैसे, क्षं परमात्मनेनमः हृदयान्मुखपर्य्यन्तम्, लं अन्तरात्मनेनमः हृदयादुदरपर्य्यन्तम्, हं आत्मने नमः हृदादिवामपादपर्य्यन्तम्, सं शुक्रात्मने नमः हृदादिदक्षपादपर्य्यन्तम्, षं मज्जात्मनेनमः हृदयाद्वामबाहुपर्य्यन्तम्, शं अस्थ्यात्मने नमः हृदयाद्दक्षबाहुपर्य्यन्तम्, वं मेदात्मने नमः वामस्कन्धे, लंमांसात्मने नमः ककुदि, रं असृगात्मने नमः दक्षांसे, यंत्वगात्मने नमः हृदये, मं नमः उदरे, भं नमो नाभौ, बं नमः पृष्ठे, फं नमो वामपादे, पं नमः दक्षपादे, नं नमः वामपादांगुल्यग्रे, धं नमः वामपादांगुलिमूले, दं नमः वामपादगुल्फे, थं नमः वामपादजानुनि, तं नमः वामपादमूले, णं नमः दक्षपादांगुल्यग्रे, ढं नमः दक्षपादांगुलिमूले, डंनमः दक्षपादगुल्फे, ठं नमःदक्षपादजानुनि, टं नमःदक्षपादमूले, ञं नमोवामकरांगुल्यग्रे, झं नमो वामकरांगुलिमूले, जं नमः वामकरमणिबन्धे, छं नमः वामबाहुकूर्परे, चं नमः वामबाहुमूले, ङं नमो दक्षकरांगुल्यग्रे, घं नमः दक्षकरांगुलिमूले, गं नमः दक्षकरमणिबन्धे, खं नमः दक्षबाहुकूर्परे, कं नमः दक्षबाहुमूले, अःनमः मुखे, अं नमः मूर्ध्नि, औं नमः अधोदन्तपङ्क्तौ, ओं नमः ऊर्ध्वदन्तपङ्क्तौ, ऐं नमः अधरे, एं नमः ऊर्ध्वोष्ठे, ॡं नमः वामकपोले, ऌं नमःदक्षकपोले, ॠं नमः वामनासापुटे, ऋं नमः दक्षनासापुटे, ऊं नमः वामकर्णे, उं नमः दक्षकर्णे, ईं नमः वामनेत्रे, इं नमः दक्षनेत्रे, आं नमः मुखवृत्ते, अं नमः ललाटे, इति संहारमातृकान्यासः ॥ और ड से लेकर ठकारतक स्थितिमातृकान्यास करना चाहिये जैसे ॥ डं नमः दक्षपादगुल्फे, ढं नमः दक्षपादांगुलिमूले, णं नमः दक्षपादांगुल्यग्रे, तं नमः वामपादमूले, थं नमः जानुनि, दं नमः गुल्फे, धं नमः वामपादांगुलिमूले, नं नमः वामपादांगुल्यग्रे, पं नमः दक्षपार्श्वे, फंनमः वामपार्श्वे, बं नमः पृष्ठे, भं नमः नाभौ, मं नमः जठरे, यं त्वगात्मने नमः हृदि, रं असृगात्मने नमः दक्षांसे, लं मांसात्मने नमः ककुदि, वं मेदात्मने नमः वामांसे, शं अस्थ्यात्मने नमः हृदयाद्दक्षिणबाहुपर्य्यन्तम्, षं मज्जात्मने नमः हृदयाद्वामबाहुपर्य्यन्तम्, सं शुक्रात्मने नमः हृदयाद्दक्षिणपादपर्य्यन्तम्, हं आत्मने नमः हृदयाद्वामपादपर्य्यन्तम्, लं अन्तरात्मने नमः हृदयादुदरपर्य्यन्तम्, क्षं परमात्मने नमः हृदयान्मुखपर्य्यन्तम्, अं नमः शिरसि, आं नमः मुखवृत्ते, इं नमः दक्षनेत्रे, ईं नमः वामनेत्रे, उं नमः दक्षकर्णे, ऊं नमः वामकर्णे, ऋं नमः दक्षनासापुटे, ॠं नमः वामनासापुटे, ऌं नमः दक्षकपोले, ॡं नमः वामकपोले, एं नमः ऊर्ध्वोष्ठे, ऐं नमःअधरे, ओं नमः ऊर्ध्वदन्तपङ्क्तौ, औं नमः अधोदन्तपङ्क्तौ, अं नमः मूर्ध्नि, अः नमः मुखे, कं नमः दक्ष

क्षिश्रवोनासासुगण्डयोः ॥ ओष्ठयोर्दन्तपङ्क्त्योश्चमूर्द्धिवक्त्रेन्यसेत्स्वरान् ॥ ३१५ ॥ बाहुसन्धिषुसाग्रेषुकचवर्गौन्यसेत्सुधीः ॥ टतवर्गौपदोस्तद्वत्पार्श्वयोःपृष्ठदेशतः ॥ ३१६ ॥ नाभौकुक्षौपवर्गंचहृदंसककुदंततः ॥ न्यस्ययादिचतुर्वर्णाञ्छ्वादिषट्कंततोन्यसेत् ॥ ३१७ ॥ हृदादिकरयोरंघ्र्योर्जठरेवदने तथा ॥ न्यासस्त्वयंवर्णमात्राहीनपाठप्रपूरकः ॥ ३१८ ॥ क्षमारभ्यअकारान्तो न्यासश्चेत्क्रियतेतदा ॥ संहारन्यासनामासौबिन्दुन्यासइतीरितः ॥ ३१९ ॥ वाममार्गेप्रवृत्तानांशक्तिसेवनकारिणाम् ॥ अन्तर्न्यासात्परंबिन्दुन्यासेस्या च्छुक्रधारणम् ॥ ३२० ॥ यावत्क्लिन्नाभवेच्छक्तिस्तावद्भोगोविधीयते ॥ वामदक्षिणमार्गेणदेवताध्यानमुच्यते ॥ ३२१ ॥ अक्षस्रजंहरिणपोतमुदग्रटंकं विद्यांकरैरविरतंदधतींत्रिनेत्राम् ॥ अर्धेन्दुमौलिमरुणामरविन्दवासांवर्णेश्वरींप्रणमतस्तनभारनम्राम् ॥ ३२२ ॥ शक्तैर्मनोरथःपूर्णोविसर्गन्यासमाचरेत् ॥ ततोबिन्दुःपतेत्तस्मादतोबिन्दुविसर्गकौ ॥ ३२३ ॥ न्यासौप्रोक्तौयदाशक्तवामिनःकौलिकस्यवा ॥ शक्तेस्तृप्तिंविनासर्वन्यासेनापिविमुच्यते ॥ ३२४ ॥ तदासौनिरयंयातियावच्चन्द्रदिवाकरौ ॥ इहलोकेप्यवंशस्स्याद्विहीनोब्रह्मतेजसा ॥ ३२५ ॥ भोगमोक्षधियावामेपतितुंयेसमुद्यताः ॥ विनामन्त्रंसर्पमणिंतेगृहीतुंसमुद्यताः ॥ ३२६ ॥ विसर्गमातृकान्यासोभवेत्केवलमातृवत् ॥ विशेषस्तुविसर्गान्तोवर्णोच्चारोभवेदिति ॥ ३२७ ॥ बिन्दुसर्गयुतान्डादिठान्तान्वर्णान्स्थितौन्यसेत् ॥ पूर्वोक्ताएवमन्त्राद्याःषडङ्गंध्यानमुच्यते ॥ ३२८ ॥ सिन्दूरकान्तिममिताभरणान्त्रिनेत्रां विद्याक्षसूत्रमृगपोतवरान्दधानाम् ॥ पार्श्वस्थितांभगवतीमपिकाञ्चनाभां ध्यायेत्कराब्जधृतपुस्तकवर्णमालाम् ॥ ३२९ ॥ न्यासाःकार्य्यास्तुवटुभिस्स्थितिसंहारसृष्टयः ॥ संहारसृष्टिस्थितयोगृहस्थस्तु न्यसेत्क्रमात् ॥ ३३० ॥ वानप्रस्थाश्रयतयोसृष्टिस्थि

---

बाहुमूले, खं नमः कूर्परे, गं नमः मणिबन्धे, घं नमः अंगुलिमूले, ङं नमः अंगुलयग्रे, चं नमः वामबाहुमूले, छं नमः कूर्परे, जं नमः मणिबन्धे, झं नमः अंगुलयग्रे, टं नमः दक्षपादमूले, ठं नमः दक्षपादजानुनि इति स्थितिन्यासः ॥ सृष्टि और स्थितिन्यास बिन्दु वा विसर्गयुक्तमातृकाओं से होताहै और संहारन्यास केवल बिन्दुयुक्त उक्त मातृकाओंसे होताहै सो जानिये ॥

तिलयान्क्रमात् ॥ ३३१ ॥ न्यासान्कुर्य्युरितिप्रोक्तोमातृकान्यासविस्तरः ॥ वक्ष्येकलामातृकायान्यासंतस्यऋषिःस्मृतः ॥ ३३२ ॥ प्रजापतिश्चगायत्रीछन्दःस्यादत्रदेवता ॥ सरस्वतीमातृकाख्यानियोगोभीष्टसिद्धये ॥ ३३३ ॥ तारैःषडङ्गंकुर्वीतह्रस्वदीर्घान्तरस्थितैः ॥ ध्यानंकलामातृकायान्यासेवक्ष्येशृणुप्रिये ॥ ३३४ ॥ हस्तैःपद्मंरथाङ्गंगुणमथहरिणंपुस्तकंवर्णमालांटंकंशुभ्रंकपालंस्रवदमृतलसद्धेमकुम्भं वहन्तीम् ॥ मुक्ताविद्युत्पयोदस्फटिकमणिजपाबन्धुरैः पञ्चवक्त्रैस्त्र्यक्षैर्वक्षोजनम्रां सकलशशिनिभां शारदां तां नमामि ॥ ३३५ ॥ ध्यात्वैवंतारपूर्वान्तामकाराद्यांचमातृकाम् ॥ बिन्दुयुक्तांङेन्तकलानामाढ्यांनमसान्विताम् ॥ ३३६ ॥ पूर्वोक्तशुद्धमात्राणांन्यासस्थानेषुविन्यसेत् ॥ निवृत्तिश्चप्रतिष्ठाचविद्याशान्तिस्तथर्द्धिका ॥ ३३७ ॥ दीपिकारेचिकाचापिमोचिका चापराभिधा ॥ सूक्ष्मासूक्ष्मामृताज्ञानामृताचाप्यायिनीततः ॥ ३३८ ॥ व्यापिनीव्योमरूपाचानन्तासृष्टिःसमृद्धिका ॥ स्मृतिर्मेधाततःकान्तिर्लक्ष्मीर्द्युतिःस्थिरास्थितिः ॥ ३३९ ॥ सिद्धिर्जरापालिनीचक्षान्तिरीश्वरिकारतिः ॥ कामिकावरदाचान्याह्लादिनीप्रीतिसंयुता ॥ ३४० ॥ दीर्घातीक्ष्णातथारौद्रीमायाँनिद्राचतन्द्रिका ॥ क्षुधास्यात्क्रोधिनीपश्चात्क्रियोत्कारीसमृत्युका ॥ ३४१ ॥ पीताश्वेताऽरुणापश्चादसितानतयान्विता ॥ उक्ताकलामातृकेयंस्थानेऽकारादिकेन्यसेत् ॥ ३४२ ॥ तत्रनादात्मनोजाताःस्वरजास्तुसदाशिवात् ॥ अक्षमालाम्पुस्तकंचपाशञ्चापिकपालकम् ॥ ३४३ ॥ हस्तैर्दधत्योध्येयास्ताःपीतगन्धानुलेपनाः ॥ विष्णो

---

१ अं ॐ आं अंगुष्ठाभ्यां नमः, इं ॐ ईं तर्जनीभ्यां नमः, उं ॐ ऊं मध्यमाभ्यां नमः, एं ॐ ऐं अनामिकाभ्यां नमः, ओं ॐ औं कनिष्ठिकाभ्यां नमः, अं ॐ अः करतलकरपृष्ठाभ्यां नमः इतिकरन्यासः एवंहृदयादिन्यासः उक्तरीति से हृदयादिन्यासकोभी करलेना २ ॐकार और बिन्दुयुक्त अकारादि मातृकाओंकेसमेत निवृत्त्यादि कलाओं के चतुर्थ्यन्त नामके अन्त में नमः पदको जोड़कर पूर्वोक्त ललाटादि स्थानों में न्यासकरना जैसे, ॐ अं निवृत्त्यै नमः ललाटे, ॐ आं प्रतिष्ठायै नमः मुखवृत्ते, ॐ इं विद्यायै नमः दक्षनेत्रे, ॐ ईं शान्त्यैनमः वामनेत्रे, ॐ उं ऋद्धिकायै नमः दक्षकर्णे, ॐ ऊं दीपिकायैनमः वामकर्णे ॥ इत्यादि ॥ ३ भया इति पाठान्तरम् ॥

रुकारात्सञ्जाताःकचवर्गकलादश ॥ पद्महस्तास्तथारक्ताअक्षमालाधरावराः ॥ विष्णोरुकारात्सञ्जाताटतवर्गकलादश ॥ ३४४ ॥ श्यामाअभयशङ्खाब्ज वरहस्तास्समीरिताः ॥ मकाराद्रुद्रतोजाताःपयवर्गकलानव ॥ ३४५ ॥ शर च्चन्द्रनिभाहस्तैरभयंशूलमेवच ॥ कपालंचवरन्ध्येयादधत्यइतिसाधकैः ॥ ३४६ ॥ शकारादिकपञ्चानामीश्वरोबिन्दुतोभवेत् ॥ अभयंहरिणंटङ्कंवरंच करपल्लवैः ॥ ३४७ ॥ दधत्योरक्तवर्णाश्चध्येयान्यासेकलात्मके ॥ केशवा दिमातृकायाःसाध्योनारायणोमुनिः ॥ ३४८ ॥ अमृताद्यातुगायत्रीछन्दो लक्ष्मीहरिःसुरः ॥ द्विरुक्तैःशक्तिश्रीकामैःषडङ्गानिसमाचरेत् ॥ ३४९ ॥ श ङ्खचक्रगदापद्मकुम्भादर्शाब्जपुस्तकम् ॥ बिभ्रतंमेघचपलावर्णंलक्ष्मीहरिंभ जे ॥ ३५० ॥ शक्तयस्तुप्रियाःकेपुनिषण्णाःसस्मिताननाः ॥ एवंध्यात्वान्यसे च्छक्तिश्रीकामपुटिताक्षराम् ॥ ३५१ ॥ तारादिहृदयान्ताश्चकेशवाद्याश्च शक्तयः ॥ ङ्यान्तानमोन्ताउच्चार्य्याःस्थानेकाशादिकेन्यसेत् ॥ ३५२ ॥ कला मात्रातुशक्तानांनित्योयंविष्णुसेवने ॥ केशवःकीर्तिसंयुक्तःकान्तिर्नारायणा न्विता ॥ ३५३ ॥ माधवस्तुष्टिसंयुक्तोगोविन्दःपुष्टिसंयुतः ॥ विष्णुश्चधृति संयुक्तःशान्तियुङ्मधुसूदनः ॥ ३५४ ॥ त्रिविक्रमःक्रियायुक्तोवामनोदयया न्वितः ॥ श्रीधरोमेधयायुक्तोहृषीकेशश्चहर्षया ॥ ३५५ ॥ पद्मनाभयुताश्र द्धालज्जादामोदरान्विता ॥ वासुदेवश्चलक्ष्मीयुङ्मधुसूदनसरस्वती ॥ ३५६ ॥ प्रद्युम्नःप्रीतिसंयुक्तोनिरुद्धोरतिसंयुतः ॥ चक्रीजयागदीदुर्गाशार्ङ्गी तुप्रभयान्वितः ॥ ३५७ ॥ खड्गीतुसमयायुक्तःशङ्खीचण्डासमन्वितः ॥ हली वाणीसमायुक्तोमुशलीचविलासिनी ॥ ३५८ ॥ शूलीविजय³यायुक्तःपाशी

---

१ ह्रीं हृदयायनमः श्रीं शिरसेस्वाहा क्लीं शिखायैवषट् ह्रीं कवचायहुम् श्रीं नेत्राभ्यांवौ- षट् क्लीं अस्त्रायफट् २ प्रथम ॐकार और ह्रीं श्रीं क्लीं इन तीन बीजों करके सम्पुटित अं आदि मातृकाओं से युक्त केशवकीर्ति इत्यादि चतुर्थ्यन्त द्विवचन नामों में नमः पद जोड़कर उक्त ललाटादि स्थानों में न्यास करना ॥ जैसे॥ ॐ ह्रीं श्रीं क्लीं अं क्लीं श्रीं ह्रीं केशवकी- र्तिभ्यांनमः ललाटे ॐ ह्रीं श्रीं क्लीं आं क्लीं श्रीं ह्रीं नारायणकान्तिभ्यांनमः मुखवृत्ते ॐ ह्रीं श्रीं क्लीं इं क्लीं श्रीं ह्रीं माधवतुष्टिभ्यांनमः दक्षनेत्रे ॐ ह्रीं श्रीं क्लीं ईं क्लीं श्रीं ह्रीं गोविन्द पुष्टिभ्यांनमः वामनेत्रे इसी रीतिसे पूर्वोक्त स्थानोंमें न्यासकरना ३ विनदया इतिपाठान्तरम् ॥

विरजयान्वितः ॥ अंकुशीविश्वयायुक्तोमुकुन्दोविनयान्वितः ॥ ३५९ ॥ नन्दजःसुनदायुक्तोनन्दीसत्यासमन्वितः ॥ नरस्त्वृद्ध्यानरकजित्समृद्ध्याशुद्धियुग्घरिः ॥ ३६० ॥ कृष्णोबुद्ध्याभूत्यासत्योमत्यायुक्तसात्वतस्स्मृतः ॥ सूधरःक्लेदिनीयुक्तोविश्वमूर्त्तिश्चक्लिनया ॥ ३६१ ॥ वैकुण्ठोवसुधायुक्तोवसुदापुरुषोत्तमौ ॥ बलीतुपरयायुक्तोबलानुजपरायणे ॥ ३६२ ॥ बालसूक्ष्मे वृषघ्नस्तुसन्ध्यायुक्तप्रज्ञयावृषः ॥ हंसःप्रभासमायुक्तोवराहोनिशयान्वितः ॥ ३६३ ॥ विमलोमेघयायुक्तोनृसिंहोविद्युतान्वितः ॥ केशवाद्यामातृकोक्तायौदियोगश्चपूर्ववत् ॥ ३६४ ॥ वक्ष्येथशिवभक्तानांश्रीकण्ठादिकमातृकाम् ॥ मुनिःस्याद्दक्षिणामूर्तिर्गायत्रंछन्दईरितम् ॥ ३६५ ॥ अर्धादिजोहरोदेवोनियोगःसर्वसिद्धये ॥ हलोबीजानिगुह्येतुस्वराञ्छक्तीःपदोर्न्यसेत् ॥ ३६६ ॥ ह्रस्वदीर्घान्तरेकृत्वाप्राग्वद्वर्गान्ह्सौंतथा ॥ षैड्दीर्घसंयुतंकृत्वाषडङ्गानिन्यसेत्तनौ ॥ ३६७ ॥ बन्धूककाञ्चननिभंरुधिराक्षमालापाशांकुशौचवरदंनिजबाहुदण्डैः ॥ बिभ्राणमिन्दुशकलाभरणंत्रिनेत्रमर्धाम्बिकेशमनिशंवपुराश्रयामः ॥ ३६८ ॥ ह्सौंतेमातृकामुक्तादेवान्तेचसमुच्चरेत् ॥ ङेन्तफेन्तकतच्छक्तिंनमोन्तामातृकास्थले ॥ ३६९ ॥ त्वगसृङ्मांसमेदास्थिमज्जाशुक्राण्यसून्वदेत् ॥ शक्तिक्रोधन्तथात्मानंफेन्तंयादिदशस्वपि ॥ ३७० ॥ श्रीकण्ठपूर्णोदर्य्यौचानन्तोविरजयान्वितः ॥ सूक्ष्मेशःशाल्मलीयुक्तोलोलाक्षीयुक्त्रिमूर्तिकः ॥ ३७१ ॥ अमरेशोवर्त्तुलाक्ष्यावर्षीशोदीर्घघोणया ॥ भारभू

---

१ बलानुजपरायणा २ बाल और सूक्ष्मा ३ यकारादि दश पूर्वोक्त मातृकाओंका उच्चारणकरके त्वगात्मभ्यां इत्यादि पदों को उच्चारणपूर्वक पुरुषोत्तम वसुदाभ्यांनमः इत्यादि पदोंका न्यासकरना उचितहै निजनिज स्थानों में ४ आं ह्सौं हृदयाय नमः ईं ह्सौं शिरसे स्वाहा ऊं ह्सौं शिखायैवषट् ऐं ह्सौं कवचायहुम् औं ह्सौं नेत्रत्रयाय वौषट्, अः ह्सौं अस्त्रायफट् ह्सौं अं श्रीकण्ठेशपूर्णोदरीशक्तिभ्यांनमः ललाटे इत्यादि और यकारादि दश मातृकाओं में त्वगात्मभ्यांआदि पदोंको जोड़कर उक्त नामोंका मातृका न्यासके क्रमसे न्यास करना और श्रीकण्ठादिक जिस नाममें ईशपद न हो उसके अन्तमें ईश पदको और पूर्णोदरी आदि नामों में शक्तिपदको जोड़कर ह्रीं श्रीं क्लीं बीजोंसे सम्पुटित करके न्यास करना जैसे ह्रीं श्रीं क्लीं अं क्लीं श्रीं ह्रीं श्रीं कण्ठेशपूर्णोदरीशक्तिभ्यांनमः ललाटे ५ दीर्घेश इति पाठान्तरम् ॥

तिर्दीर्घमुख्यातिथीशोगोमुखीयुतः ॥ ३७२ ॥ स्थाण्वीशोदीर्घजिह्वायुग्ह
रःकुण्डोदरीयुतः॥ झिण्टीशश्चोर्ध्वकेशीचभौतिकोविकृतास्यया॥ ३७३॥
सद्योज्वालामुखीचानुग्रहश्चोल्कामुखीयुतः ॥ अक्रूरःश्रीमुखीमहासेनोवि
द्यामुखीयुतः ॥ ३७४ ॥ क्रोधनश्चमहाकाल्याचण्डेशश्चसरस्वती ॥ प
ञ्चान्तकःसर्वसिद्धिगौरीयुक्तःप्रकीर्तितः ॥ ३७५ ॥ शिवोत्तमेशोविन्यस्यो
युक्तस्त्रैलोक्यविद्यया ॥ एकरुद्रोमन्त्रशक्तिःकूर्मेशश्चाष्टशक्तियुक् ॥ ३७६॥
एकनेत्रोभूतमात्रायुक्तःस्याच्चतुराननः ॥ लम्बोदर्य्यायुतःप्रोक्तस्त्वजेशोद्रा
विणीयुतः ॥ ३७७ ॥ सर्वेशोनागरीयुक्तःसोमेशःखेचरीयुतः ॥ लांगलीश
श्चमञ्जर्य्यादारुकेशश्चरूपिणी ॥ ३७८ ॥ वारिण्याचार्धनारीशोह्युमाका
न्तःपुनर्युतः ॥ काकोदर्य्यातथाषाढीपूतनायुक्तईरितः ॥ ३७९ ॥ चण्डीशो
भद्रकालीयुगत्रीशोयोगिनीयुतः ॥ मीनेशःशङ्खिनीयुक्तोमेषेशस्तर्जनीयु
तः ॥ ३८० ॥ लोहितःकालरात्र्याचशिखीशःकुब्जिनीयुतः ॥ छगलण्डः
कपर्दिन्याद्विरण्डेशश्चवज्रया ॥ ३८१ ॥ महाकालोजयायुक्तोबालीशःसु
मुखेश्वरी ॥ भुजङ्गोरेचनीयुक्तःपिनाकीमाधवीयुतः ॥ ३८२ ॥ खड्गीशोवा
रुणीयुक्तोबकेशोवायवीयुतः ॥ श्वेतोरक्षोविदारिण्याभृगुःसहजयायुतः ॥
नकुलीशश्चलक्ष्मीयुक्शिवेशोव्यापिनीयुतः ॥ ३८३ ॥ संवर्त्तकोमहामा
यायुक्तएतास्तुमातृकाः ॥ श्रीकण्ठाख्याइहेशान्तंपदंङेन्तंप्रयोजयेत् ॥
३८४ ॥ सर्वेरुद्राःस्मृतारक्ताधृतशूलकपालकाः ॥ शक्तयोरुद्रपीठस्थाःसिन्दूरा
रुणविग्रहाः ॥ ३८५ ॥ रक्तोत्पलकपालाभ्यामलंकृतकराम्बुजाः ॥ येनोपा
स्यामहाविद्यादशतस्याधिकारिता ॥ भुवनेशीबीजपूर्वमातृकान्यसनेसुराः॥
३८६ ॥ ऋषिःशक्तिस्तुगायत्रीछन्दस्स्यान्मातृकामयी ॥ भुवनेशीदेवताथ
नियोगोभीष्टसिद्धये ॥ ३८७ ॥ ह्रस्वदीर्घान्तरगतैःषड्वर्गैर्दीर्घसंयुतैः ॥ प्रा

---

१ ह्रीं अं कं खं गं घं ङं हृदयायनमः ऐसेही षड्वर्गों से षडङ्गन्यास और अंगुष्ठादि न्यासका करना समझलेना ह्रीं अं नमः ललाटे, ह्रीं आंनमःमुखवृत्ते इत्यादिरीति से पूर्वोक्त स्थानों में न्यासहोता है और धनकी कामनावाले श्रींबीजपूर्वक मातृकान्यासकरें और कामिनी की इच्छावाले पुरुष कामबीज अर्थात् क्लीं पूर्वक अकारादि क्षकारान्त न्यासकरें ॥

ग्वच्छरेषडङ्गंस्यादंगुष्ठादितथैवच ॥ ३८८ ॥ उद्यत्कोटिदिवाकरप्रतिनिभोत्तु ङ्गोरुपीनस्तनीवद्धार्धेन्दुकिरीटहाररशनामञ्जीरसंशोभिता ॥ बिभ्राणाकरपङ्कजैर्जपवटींपाशांकुशंपुस्तकं दिश्यान्नोजगदीश्वरीत्रिनयनापद्मेनिषण्णासुखम् ॥ ३८९ ॥ लज्जाबीजंपूर्वमुक्त्वामातृकान्यासएवहि ॥ भुवनेशीमातृकाणांन्यासोनार्पत्यसाधने ॥ ३९० ॥ श्रीबीजपूर्वकःकार्य्योलक्ष्मीकामैर्गृहस्थितैः ॥ ऋषिर्भृगुश्चगायत्रीछन्दोमातृस्वरूपिणी ॥ ३९१ ॥ लक्ष्मीस्तुदेवताप्रोक्ताहरस्थानेशरौकुरु ॥ न्यासार्थंतुषडङ्गादिशेषंश्रीबीजपूर्वकम् ॥ ३९२ ॥ विद्युद्दामसमप्रभाहिमगिरिप्रख्यैश्चतुर्भिर्भुजैःशुण्डादण्डसमुद्धृतामृतघटैरासिच्यमानामिमाम् ॥ बिभ्राणांकरपङ्कजैर्जपवटींपद्मद्वयंपुस्तकं भास्वद्दलसमुज्ज्वलांकुचनतांध्यायेज्जगत्स्वामिनीम् ॥ ३९३ ॥ कामिनीमात्रसिद्ध्यर्थंकामबीजादिपूर्वकम् ॥ कुर्य्याच्चमातृकान्यासंमुनिःसम्मोहनःस्मृतः ॥ ३९४ ॥ गायत्रीछन्दउद्दिष्टंदेवतामातृकामयी ॥ सम्मोहनीमहादेवीपूर्वयुक्त्यापडङ्गकम् ॥ ३९५ ॥ बालार्ककोटिरुचिरांस्फटिकाक्षमालांकोदण्डमिक्षुजनितंस्मरपञ्चबाणान् ॥ विद्यांचहस्तकमलैर्दधतींत्रिनेत्रांध्यायेत्समस्तजननींनवचन्द्रचूडाम् ॥ ३९६ ॥ शक्तिश्रीकामबीजानांमातृकान्यासतोनृणाम् ॥ शत्रुत्वाद्यामन्त्रदोषानश्यन्तिबहुवर्णिताः ॥ ३९७ ॥ महासम्मोहनऋषिर्गायत्रीछन्दईरितम् ॥ सम्मोहनीनामदेवीन्यासःप्राग्मातृकासमः ॥ ३९८ ॥ ध्यायेयमक्षवलयेक्षुशरौसपाशपद्मद्वयांकुशकरान्नवपुस्तकंच॥आबिभ्रतींनवभुजैररुणांकुचार्त्तांसम्मोहनींत्रिनयनांनवचन्द्रचूडाम्॥३९९॥सर्वविघ्ननिरासार्थमवश्यंन्यासमाचरेत्॥ गणेशमातृकायास्तुमुनिर्गणकईरितः ॥ ४०० ॥ निविद्गायत्रिकाछन्दोदेवःशक्तिविनायकः ॥ स्मृत्यादीर्धाद्ययाचाङ्गंकृत्वाध्या

---

१ गां गीं गूं गैं गौं गः इन छह अक्षरों को हृदयादि वा अंगुष्ठादि स्थानों में न्यास करना जैसे ॥ गां अंगुष्ठाभ्यांनमः गीं तर्जनीभ्यांनमः ॥ इत्यादि और गं ह्रीं श्रीं क्लीं अं क्लीं श्रां ह्रीं नमः ललाटे गं ह्रीं श्रीं क्लीं आं क्लीं श्रीं ह्रीं नमः मुखवृत्ते इत्यादि पूर्वोक्त क्रम से न्यास करना ॥ और यकारादि दश अक्षरों में त्वगात्मभ्यां आदि पदों का जोड़ कर लेना पूर्वोक्त रीतिसे ॥

येद्गजाननम् ॥ ४०१ ॥ शूलांकुशवराभीतिपाणिंरक्ताब्जहस्तया ॥ प्रियया लिङ्गितंरक्तंत्रिनेत्रंगणपंभजे ॥ ४०२ ॥ विघ्नेशोह्रीसमायुक्तोविघ्नराजःश्रिया युतः ॥ विनायकःपुष्टियुतःशान्तियुक्तःशिवोत्तमः ॥ ४०३ ॥ विघ्नकृत्स्वस्ति संयुक्तोविघ्नहर्तासरस्वती ॥ गणस्तुस्वाहयायुक्तएकदन्तःसुमेधया ॥ ४०४ ॥ द्विदन्तःकान्तिसंयुक्तोगजवक्त्रश्चकामिनी ॥ निरञ्जनोमोहिनीयुक्कपर्दीतु नटीयुतः ॥ ४०५ ॥ दीर्घजिह्वःपार्वतीयुक्शंकुकर्णश्चज्वालिनी ॥ वृषध्व जोनन्दयायुक् सुयशांगणनायकौ ॥ ४०६ ॥ गजेन्द्रःकामरूपिण्याशूर्प्पक र्णस्तथोमया ॥ त्रिलोचनस्तेजोवत्यालम्बोदरस्तुसत्यया ॥ ४०७ ॥ महान न्दश्चविघ्नेश्याचतुर्मूर्तिःस्वरूपया ॥ सदाशिवःकामदायुगामोदोमदजिह्व या ॥ ४०८ ॥ दुर्मुखोभूतिसंयुक्तःसुमुखोभौतिकायुतः ॥ प्रमोदःसितयायुक्तएक पादोरमायुतः ॥ ४०९ ॥ द्विजिह्वोमहिषीयुक्तःशूरश्चापितुजम्भिनी ॥ वीरो विकर्णयायुक्तःषण्मुखोभ्रूकुटीयुतः ॥ ४१० ॥ वरदोलज्जयावामदेवःस्याद्दीर्घ घोणया ॥ धनुर्धरोवक्रतुण्डोद्विरदोयामिनीयुतः ॥ ४११ ॥ सिनीशोरात्रिसं युक्तःकामान्धोग्रामणीयुतः ॥ मत्तःशशिप्रभायुक्तोविमत्तोलोललोचनः ॥ ४१२ ॥ मत्तवाहनचञ्चलोजटीदीप्तिसमन्वितः ॥ मुण्डीसुभगयायुक्तःखड्गीदु र्भगयातथा ॥ ४१३ ॥ वरेण्यश्चशिवायुक्तोभगायुग्वृषकेतनः ॥ भक्तप्रियश्च भगिनीगणेशोभोगिनीयुतः ॥ ४१४ ॥ मेघनादश्चसुभगाव्यापीस्यात्का लरात्रियुक् ॥ गणेश्वरःकालिकेतिप्रोक्ताविघ्नेशमातृका ॥ ४१५ ॥ त्वगादि योगेयादीनांपूर्ववत्परिकीर्तितः ॥ प्रपञ्चयागन्यासोयंवक्ष्यतेभुक्तिमुक्तिदः ॥ ४१६ ॥ महागणेशमन्त्रेणप्राणायामत्रयंचरेत् ॥ ऋषिःप्रपञ्चयागस्यगणकः छन्दईरितम् ॥ ४१७ ॥ गायत्रीतुनिवृत्पूर्वामहागणपतिःसुरः ॥ शीर्षादिषुन्य सेत्तांश्चगंवीजंचापिगुह्यके ॥ ४१८ ॥ स्वाहाशक्तिंपादयोस्तुनियोगोभीष्ट सिद्धये ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं इति पूर्वषड्दीर्घयुग्मकम् ॥ ४१९ ॥ उ

१ सुरेशा इति पाठान्तरम् २ ॐ गां हृदयाय नमः, श्रीं गीं शिरसे स्वाहा, ह्रीं गूं शिखायै वषट्, क्लीं गैं कवचायहुम्, ग्लौंगौं नेत्रत्रयाय वौषट्, गंगः अस्त्राय फट् ऐसे अंगुष्ठादि न्यास को भी करलेना ॥

चार्घ्यंकुर्य्यादङ्गानितथांगुष्ठादिषुन्यसेत् ॥ तलद्वयंतथास्त्रेणकृत्वादिग्बन्धमा चरेत् ॥ ४२० ॥ मध्यातर्जन्यंगुष्ठेनदशादिक्ष्वथचिन्तयेत् ॥ ततोध्यानंप्रकुर्वी तगणपस्येष्टसिद्धये ॥ ४२१ ॥ हस्तीन्द्राननमिन्दुचूडमरुणच्छायंत्रिनेत्रंरसा दाश्लिष्टंप्रिययासपद्मकरयास्वाङ्कस्थयासन्ततम् ॥ बीजापूरगदाधरंत्रिशि खुक्रूकाब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशान्हस्तैर्वहन्तंभजे ॥ ४२२ ॥ महागणपतेर्मन्त्रमष्टवारंजपेत्ततः ॥ गमित्येकाक्षरंबीजंगणकोस्यमुनिर्मतः ॥ ४२३ ॥ देवोविघ्नेश्वरश्छन्दोनिवृद्गायत्रिकाभिधा ॥ प्रपञ्चाख्यस्ययागस्य साङ्गतासिद्धिहेतवे ॥ ४२४ ॥ चतुश्चत्वारिंशत्सङ्ख्यजपार्थविनियोजनम् ॥ अथषड्दीर्घयुक्तेनकुर्य्यादङ्गानिगेनतु ॥ ४२५ ॥ गदापाशांकुशवरकरंत्र्यक्ष चतुर्न्दिलम् ॥ सिन्दूराभंचन्द्रमौलिंसर्पभूषंगलन्मदम् ॥ ४२६ ॥ एकवारंज पेत्पश्चाद्गणानांत्वेतिवैदिकम् ॥ गणेशमालामन्त्रस्यमुनिस्तुगणकः स्मृतः ॥ छन्दोमितंगणपतिर्देवतापरिकीर्त्तिता ॥ ४२७ ॥ ह्रींक्रोंतारोनमःसर्वङेन्त विद्याधिपंततः ॥ सर्वार्थसिद्धिदायेतिसर्वदुःखप्रशेतिच ॥ ४२८ ॥ ततोमन यएह्येहिभगवन्खादयेतिच ॥ स्तम्भयेतिद्वयंह्रींगंगांनमोवह्निगेहिनी ॥ ४२९ ॥ क्रोंह्रीमित्थंपञ्चपञ्चाशद्वर्णोमन्त्रउच्यते ॥ जपेदिमंचतुर्वारंमुन्यादिसहितंन्य सेत् ॥ ४३० ॥ न्यासपूर्वंत्रिवारंतुमातृकाध्यानपूर्वकम् ॥ स्वरादिसप्तवर्गैश्च ग्रहान्सप्तविन्यसेत् ॥ ४३१ ॥ मुखेबाह्वोःपादयोश्चजठरेहृदयेक्रमात् ॥ तां मायाचहंसश्चसोहंस्वाहेतिवैपुनः ॥ ४३२ ॥ प्रपञ्चयागमन्त्रोयमष्टार्णं मुदीरितः ॥ प्रपञ्चयागमन्त्रस्यमुनिर्ब्रह्मासमीरितः ॥ ४३३ ॥ परमात्मा माख्यातागायत्रीछन्दउत्तमम् ॥ महःपरंसमाख्यातंदेवताचिन्मयात्मकम् ॥ ४३४ ॥ त्र्यन्तेऽबाधितंनित्यंसर्वव्यापिनिरञ्जनम् ॥ विलोमगैःपञ्चवर्णै

---

१ गां गीं गूं गैं गौं गः इन छह अक्षरों से क्रमसे षडङ्गन्यास करना जैसे गां हृदयाय नमः २ ॐ गणानांत्वा गणपति ँ हवामहे प्रियाणांत्वाप्रियपति ँ हवामहे निधीनांत्वा निधिप ँ हवामहे वसोमम आहमजानिगर्भधमात्वमजासिगर्भधम् ३ ह्रीं क्रों ॐ नमः सर्वविद्याधिप सर्वार्थसिद्धिदायसर्वदुःखप्रशमनायएह्येहि भगवन् खादयखादयस्तम्भयस्तम्भय ह्रीं गं गां न स्वाहा क्रों ह्रीं ४ ॐ ह्रीं हंसः सोहं स्वाहा ५ ॐ ह्रीं अं कं खं गं घं ङं आं हं सं सं ह हृदयाय नमः ॐ ह्रीं इं चं छं जं झं ञं ईं हं सं सं हं शिरसे स्वाहा इत्यादि न्यास करना ॥

प्रपञ्चमनुसंस्थितैः ॥ ४३५ ॥ ह्रस्वदीर्घान्तस्थकादिवर्गैःपूर्वसमन्वितैः ॥ तारमायादिकैरेतैर्युक्तैर्हरिहराक्षरैः ॥ ४३६ ॥ षडङ्गानिप्रकुर्वीतजातियुक्तानि देशिकः ॥ वेदादिपञ्चमनुभिःपरिचीयमानंमानंनिरस्यमुनिभिर्जगदेकमूल म् ॥ सच्चित्समस्तगमनश्वरमच्युतंतत्तेजः परंभजतपूर्णकृपाम्बुराशि ॥ ४३७ ॥ वेदादिमाययोरन्तेक्षकारान्तान्सविन्दुकान् ॥ पृथगुच्चार्य्यहंससोहं स्वाहेतिवदन्हृदि ॥ ४३८ ॥ विभावयेदिमान्वर्णानात्मवह्नौजुहोम्यहम् ॥ एवंहुत्वाक्षकारान्तानकारान्तान्पुनर्हुनेत ॥ ४३९ ॥ सविसर्गान्क्षका रान्तान् विन्यसेन्मातृकास्थले ॥ एवंप्रपञ्चयागाख्यमातृकान्यासईरितः ॥ ४४० ॥ एकविंशन्ततोयोगपीठाख्यंन्यासमाचरेत् ॥ तत्पूर्वमुक्तंचततःस्वे ष्टमन्त्रस्यसंचरेत् ॥ ४४१ ॥ तत्तत्कल्पोदितान्पश्चात्तत्तन्मुद्राःप्रदर्शयेत् ॥ आगमोक्तेनमार्गेण न्यासान्नित्यंकरोतियः ॥ ४४२ ॥ देवताभावमाप्नोति मन्त्रसिद्धिःप्रजायते ॥ योन्यासकवचच्छन्नो मन्त्रजापपरप्रियः ॥ ४४३ ॥ दृष्ट्वाविघ्नाःपलायन्ते सिंहंदृष्ट्वायथागजाः ॥ अकृत्वान्यासजालंयो मूढात्मा कुरुतेजपम् ॥ ४४४ ॥ विघ्नैस्सबाध्यतेनूनं व्याघ्रैर्मृगशिशुर्यथा ॥ न्यासानां प्रचुरत्वेन फलानामपिभूरिता ॥ ४४५ ॥ उक्तन्यासोनहित्याज्यः कामतस्त्व धिकंचरेत् ॥ ॐक्लींइतितुबीजाभ्यां मुद्रयाबन्धनंचरेत् ॥ ४४६ ॥ दर्शयेन्मू लमन्त्रेण हसौंबीजेनसन्न्यसेत् ॥ ध्यानंकुर्य्यात्ततोमन्त्री तत्तत्कल्पोक्तवर्त्म ना ॥ ४४७ ॥ तदपिद्विविधंप्रोक्तं सगुणंनिर्गुणंतथा ॥ आत्मनोहृदयाम्भो जे कर्णिकाकेशरोज्ज्वले ॥ ४४८ ॥ प्रफुल्लेसोमसूर्य्याग्निमण्डलेनविराजि ते ॥ स्वस्येष्टदेवतांतत्र यजेदागमबोधिताम् ॥ ४४९ ॥ एवंयद्वेदनंतद्धि सगुणंध्यानमीरितम् ॥ यज्जीवब्रह्मणोरैक्यं सोहंस्यामितिवेदनम् ॥ ४५० ॥

---

१ ॐ ह्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं हंसः सोहं स्वाहा यह कहकर भावना करे कि इन वर्णोंको हृदयमें आत्मरूप अग्नि में हवन करताहूं पुनः इन्हीं अक्षरों को उलटाकरके क्षकारसे लेकर अकारतक और अंतमें हंसः सोहं स्वाहा यह कहकर उसी रीतिकी भावनाकरे ॥

तदेवंनिर्गुणंध्यानमितिवेदविदोविदुः ॥ अथान्तर्यतनंवक्ष्ये यथावदवध
य ॥ ४५१ ॥ वामनाडींसमाकृष्य किञ्चिदाकुञ्चयेद्गुदम् ॥ रेचयेत्समम
ण जिह्वांतालुगतांचरेत् ॥ ४५२ ॥ शक्तिंशिवेपरेयोज्यकिञ्चिदाकुञ्चयेदधः
कृत्वेत्थंतुयजेत्पीठे न्यासमार्गेणमन्त्रवित् ॥ ४५३ ॥ तस्मिन्पीठेस्थिता
देवतांमूर्त्तिविग्रहाम् ॥ ध्यात्वायजेचन्दनाद्यैर्मानसैर्भोजनान्तकैः ॥ ४५४
भोजनावसरेत्वन्तर्वैश्वदेवंसमाचरेत् ॥ मूलाधारेस्मरेत्कुण्डं कुंडल्यग्नि
समुज्ज्वलम् ॥ ४५५ ॥ आत्मान्तरात्मपरमज्ञानात्मचतुरस्रके ॥ धर्माधर्म
न्वितेत्र्यस्रे मूलमन्त्रपुरःसरम् ॥ ४५६ ॥ अहंजुहोमिस्वाहेति प्रत्येकंजुहु
त्ततः ॥ अहन्ताऽसत्यपैशुन्यकामक्रोधादिकंहविः ॥ ४५७ ॥ मनएवस्रु
प्रोक्तोसुषुम्णादिगुदीरिता ॥ तदन्तेतन्मयीभूत्वा जपेदष्टोत्तरंशतम् ॥ ४५८
मूलंतत्सर्वसम्पत्त्यै देवतायैनिवेदयेत् ॥ ततःप्रणम्यचगुरुं पूजाचक्रंसमुद्ध
त् ॥ ४५९ ॥ सुवर्णरचितेपीठे भूपालावशवर्त्तिनः ॥ रजतालंकृतंयन्त्रंसर्वैश्व
र्यप्रदंमतम् ॥ ४६० ॥ यन्त्रंतुस्फाटिकंस्वच्छं मनोभिलषितंददेत् ॥ मा
क्यरचितंयन्त्रं राज्यदंभुक्तिमुक्तिदम् ॥ ४६१ ॥ कृतंमरकतैर्यन्त्रं सर्वशत्रु
नाशनम् ॥ लोहत्रयोद्भवंयन्त्रं सर्वसिद्धिकरंमतम् ॥ ४६२ ॥ श्रीखण्ड
क्तिदंज्ञेयं पौष्टिकंरक्तचन्दनम् ॥ श्रीपर्णीपीठमुद्दिष्टं पूजार्थधनराज्यदम्
४६३ ॥ बैल्वकेबहुलासम्पद्भूर्जपत्रेचतुष्पदाः ॥ गण्डकीभवपाषाणे भु
मुक्तिरदूरतः ॥ ४६४ ॥ भूमौसिन्दूररजसारचितंसर्वकामदम् ॥ सीसकां
कृतंयन्त्रंसम्पत्तिसन्ततिंहरेत् ॥ ४६५ ॥ फलकायांपरेभित्तौस्थापयेन्नक
चन ॥ स्थापितंयदिमोहेननाशयेत्तस्यतत्कुलम् ॥ ४६६ ॥ अरत्न्यंगुल
स्तारंप्राक्प्रत्यग्दक्षिणोत्तरे ॥ पलप्रमाणंकर्तव्यमर्चापीठंमनोहरम् ॥ ४६७
पर्वार्धोचंप्रकुर्वीतचतुरस्रंसमन्ततः ॥ तस्मिन्पीठेतुनिर्माणंपूजाचक्रस्यका
त् ॥ ४६८ ॥ माणिक्यादिकपीठेषुमानंन्यूनंनदोषयेत् ॥ श्रीपर्णीचन्दना
नामधिकंचेन्नदोषकृत् ॥ ४६९ ॥ अग्रेशुभग्रहोघेष्वनुकूलगुणवत्सुच ॥ न

[1] गुरुत्वा [2] भावनामें कुण्डलिनी शक्तिरूप अग्निसे प्रज्वलित मूलाधारचक्रमें कुण्
स्मरणकरके शेषकर्म हवनादि उसी में करना [3] खम्भारी वृक्ष ॥

र्चाकारयेदेषांसतितिथ्यादिकेक्षणे ॥ ४७० ॥ क्षौद्राज्यदुग्धैःप्रथमंनारिकेलाम्भसाततः ॥ अभिषिच्याथतोयेनक्वथितेनवरौषधैः ॥ ४७१ ॥ आवाह्याभ्यर्च्यतल्लग्नेचक्रेसंस्थाप्यपूजयेत् ॥ गन्धपुष्पैर्नवैर्धूपैर्दीपैर्नैवेद्यदर्पणैः ॥ ४७२ ॥ त्रिरात्रंपूजयेद्देवित्रिसन्ध्यंचततोनिशि ॥ मकारैःपञ्चभिर्युक्ताश्चरेयुर्वामिनोर्चनम् ॥ ४७३ ॥ निशायांशक्तिपूजांचद्वितीयायांचकौलिकः ॥ एवंदिनत्रयंकृत्वाततोनित्यक्रमंभवेत् ॥ ४७४ ॥ एवंदेवीप्रतिष्ठायांक्रमस्सान्निध्यकारकः ॥ स्त्रीशूद्राणांवामिनांचकौलिकानामयंविधिः ॥ ४७५ ॥ महापापंनकुर्वन्तिपशुवद्वेदमार्गतः ॥ औरुयानदेशचरैर्घुभिःसन्ध्यावन्दननाशितैः ॥ ४७६ ॥ पातकैस्तेनलिप्यन्तेतस्मात्तेऽपशवःस्मृताः ॥ वामिनोपासितंयन्त्रंतेषांदृष्टिपथंगतम् ॥ ४७७ ॥ तद्देवताक्षोभकरंविच्छिन्नःसाधकोभवेत् ॥ दक्षिणोपासितंयन्त्रंसूर्य्याग्निसमतेजसम् ॥ ४७८ ॥ पापिनोनैवपश्यन्तियथोलूकास्तमोदृशः ॥ यथानृभिर्दिनकरोदयःसर्वैरिहेष्यते ॥ ४७९ ॥ दक्षसंस्थापितंयन्त्रंतथापुण्यात्मनांमतम् ॥ सर्वेषामेवभूतानांतुल्यौदुःखसुखावुभौ ॥ ४८० ॥ वामदक्षिणमार्गौतुतद्वन्मार्गौदिवौकसाम् ॥ प्राधान्यंतुपुरस्त्रीणांवामाङ्गेदक्षिणाङ्गके ॥ ४८१ ॥ पुंसांतथैवमार्गेपिकार्य्याकार्य्यविभेदतः ॥ कुण्डाश्चगोलकाजातिविच्युतायेद्विजादयः ॥ ४८२ ॥ असंस्कृताश्चयेविप्रास्तेव्रात्याःपरिकीर्तिताः ॥ ब्राह्मण्यंहानिकृत्तेषांमद्यंमांसंचमैथुनम् ॥ ४८३ ॥ अब्राह्मणावाममार्गेप्रवृत्तास्तैस्तुसेवितम् ॥ कौलेनवाथवामेनसिद्ध्यन्त्येवनसंशयः ॥ ४८४ ॥ सिद्धिःसंजायतेन्येषांनरकायैवकेवलम् ॥ आदौवेदोदितै

---

१ नामों के देनेवाले अर्थात् पापही से जन्म होताहै तबहीं जीवों के नाम धरे जातेहैं इससे ये नामों के देनेवाले हैं २ लोकसे लोकान्तरमें जीवों के लेजानेवाले गत्यर्थक रघि धातुसे रघुरद होताहै ३ अमृतेजारजःकुण्डोमृतेभर्त्तरिगोलकः ॥ पतिके जीवतेही अन्य पुरुषसे हुआ लड़का कुण्ड और पतिके मरनेपर अन्य पुरुषसे हुआ लड़का गोलक कहा जाता है ४ नीच और पतितलोगों की वाममार्ग में प्रवृत्ति होती है मद्यमांसादि का सेवन करतेहुये भी देवताओंकी पूजा मन्त्र जपादिके करने से बहुत दिनों में निजकर्म्मोंका भोग करके फिर मुक्तहोतेहैं कौंका बिचारे उनका तौ वेदों का अधिकारही नहीं है और उत्तम लोग तौ सदैव वेदाधिकारीहो दक्षिण मार्गद्वारा शीघ्रही संसारसे मुक्त होते हैं ॥

मन्त्रैर्विप्रोग्न्युत्तारणंचरेत् ॥ ४८५ ॥ अग्निःसप्तिंवाजमितिसप्तर्चंसूक्तमुच्य ते ॥ मुनिस्त्रिष्टुप्छन्दउक्तंदेवताग्निःप्रकीर्तिता ॥ ४८६ ॥ अग्निशब्देनसहि तंसूक्तमेतच्छतंजपेत् ॥ अभिषिञ्चेद्गन्धतोयैस्ततःसम्पूर्णसूक्तकैः ॥ ४८७ ॥ अ भिषिञ्चेच्छतावृत्त्याग्न्युत्तारणमिदंस्मृतम् ॥ क्षालयेद्धातुजंयन्त्रंमृदाचाद्भिस् नित्यशः ॥ ४८८ ॥ पिष्टान्तकाद्यैःकाष्ठस्यमण्यादेःकेवलंजलात् ॥ एवंप्रक्षा लितंयन्त्रंमण्डयेच्चन्दनादिना ॥ ४८९ ॥ पुरतःस्थापयेत्पीठेदद्यात्पुष्पाञ्जलिं तः ॥ मूलमन्त्रेणाथतेपांस्वस्यदेवांगतश्चरेत् ॥ ४९० ॥ वृत्तेनवेष्टितंसम्यक् त्रिकोणंचन्दनाम्भसा ॥ तद्बहिश्चतुरस्रंचविदध्यान्मत्स्यमुद्रया ॥ ४९१ ॥ सम्पूज्यगन्धैर्देवाद्यमण्डलायनमोणुना ॥ अङ्गानिचतुरग्न्यादिकोणेषुपुरतस्

---

१ अथ अग्निसूक्तम् ॥ अग्निः सप्तिंवाजंभरंददात्यग्निर्वीरंश्रुत्यंकर्म्मनिष्ठाम् ॥ अग्नीरोद सीविचरत्समञ्जन्नग्निर्नारींवीरकुक्षिंपुरन्धिम् ॥ १ ॥ अग्नेरप्नसःसमिदस्तुभद्राग्निर्मही रोदसी आविवेश ॥ अग्निरेकंचोदयत्समत्स्वग्निर्वृत्राणिदयतेपुरूणि ॥ २ ॥ अग्निर्हत्यंजरतःकर्णम् वाग्निरद्भ्योनिरदहज्जरूथम् ॥ अग्निरत्रिंघर्म्मउरुष्यदन्तरग्निर्नृमेधंप्रजयासृजत्सम् ॥ ३ ॥ अग्निर्दाद्द्रविणंवीरपेशाअग्निर्ऋषिंयःसहस्रासनोति ॥ अग्निर्दिविहव्यमाततानाग्नेर्धामानिवि भृतापुरुत्रा ॥ ४ ॥ अग्निमुक्थैर्ऋषयोविह्वयन्तेग्निंनरोयामनिबाधितासः ॥ अग्निंवयोअन्त रिक्षेपतन्तोग्निःसहस्रापरियातिगोनाम् ॥ ५ ॥ अग्निंविशईलतेमानुषीर्याअग्निंमनुषोनहुषोवि जाताः ॥ अग्निर्गान्धर्वींपथ्यामृतस्याग्नेर्गव्यूतिर्घृतआनिषत्ता ॥ ६ ॥ अग्नयेब्रह्मऋभवस्ततक्षु रग्निंमहामवोचामासुवृक्तिम् ॥ अग्नेप्रावजरितारंयविष्ठाग्नेमहिद्रविणमायजस्व ॥ ७ ॥ २ वाम हस्तके पृष्ठपर दक्षिण हस्तका तल धरने से नीचेकी चार अंगुलियोंपर ऊपरकी चार अंगु लियां रहैं और दोनों अंगूठे दोऊ ओर निकसे रहैं इसीका मत्स्यमुद्रा नामहै कण्ठ करलेना बहुत जगह कामपरैगा ॥ अब चारसौ इक्यानवेके श्लोकसे अर्घस्थापनकी विधि कहतेहैं मूल में त्रिकोण व वृत्त व चतुरस्र बनानेका लिखा है परन्तु त्रिकोण, षट्कोण और चतुरस्र बनाना बहुत ठीकहै मंत्रमहोदधि आदि ग्रन्थों में यही कहागया है ॥ यथा ॥ स्ववामाग्रेतुषट्कोण वृत्तभूपुरवेष्टितम् ॥ कृत्वात्रिकोणमूर्धाग्रेस्तम्भयेच्छङ्खमुद्रया ॥ वाममुष्ट्यन्तरंगुष्ठंनिवेश्यसरलां गुलीः ॥ दक्षिणस्यकरस्यैवत्वामांगुष्ठेनसंस्पृशेत् ॥ अर्थ ॥ वाम मूठीके भीतर दक्षिण अं गूठे को कर और दक्षिण हाथकी अंगुलियां व बामहाथका अंगूठा लम्बाकर एकमें मिला देनेसे शंखमुद्रा होती है और मूलमें इस जगहपर मत्स्यमुद्रा इस ग्रन्थको छोड़ अन्य ग्र न्थोंमें नहीं पाई जाती इससे शंखमुद्रा विशेष है ॥ ४९१ ॥ तब उस त्रिकोणमें अमुकदेव मण्डलायनमः इस मन्त्र से वा मूलमन्त्रके तीन खण्डकर एक एक खण्डको पढ़कर एक एक कोणमें पूजाकरे और छःकोणों में आग्नेय से लेकर इष्टदेवके छःअंग देवताओं की

था॥४६२॥पठंश्चास्त्रंसमभ्युक्ष्यशङ्खाधारंप्रविन्यसेत्॥उक्त्वाशङ्खादिचाधा रंमण्डलेस्थापयेत्त्वथ॥४६३॥मंरंधर्म्मप्रदेत्युक्त्वादेदशकलात्मकम्॥ङेन्तं वह्नेर्मण्डलंचदेवनामचकीर्त्तयेत्॥४६४॥ततोर्घ्यपात्राधारायनमःशङ्खंस्व मन्त्रतः॥प्रक्षाल्यामुकदेवार्घ्यपात्रंप्रतिष्ठापयामि॥४६५॥एवमुक्त्वातदा धारेसंस्थाप्यैनंचतत्रहि॥अंसूर्य्यमण्डलंप्रोक्त्वाङेन्तंदेवस्यनामतु॥अर्घ्यपा त्रायचनमोमनुनानेनपूजयेत्॥४६६॥तत्पात्रमर्पितत्रैवभावयेद्भूमिमण्डल म्॥षट्कोणंतत्रचाङ्गानिपूजयेत्पूर्ववत्ततः॥४६७॥कलाद्वादशसूर्य्यस्यप्रोक्तास्त

---

पूजाकरे॥ आं आधारशक्तयेनमः आधारशक्ति को पूजि॥ ४९२॥ तदनन्तर फट् मन्त्र पढ़कर शंखाधार अर्थात् तिपाई में जल छिड़के॥ ४६३॥ मंरंधर्मप्रदवह्निमण्डलायदशक लात्मनेअमुकदेवार्घ्यपात्राधारायनमः॥ इस मन्त्र से पूर्वोक्त मण्डल में धरदे॥ अन्य ग्रंथों में रंधर्म्मप्रद ये पांच अक्षर नहीं कहेगये॥ ४६४॥ आधार में पूर्वादि क्रम व ऊपर नीचे अग्नि की दश कलाओं की मानसी वा प्रकट पूजाकरे॥ जैसे॥ यंधूम्रार्चिषे नमः। रं ऊष्मायै नमः। लंज्वलिन्यै नमः। वंज्वालिन्यै नमः। शंविस्फुलिङ्गिन्यै नमः। षंसुश्रियै नमः। संसुरूपायै नमः हंकपिलायै नमः। लंहव्यवाहायै नमः। क्षंकव्यवाहायै नमः फिर शंशङ्खाय नमः इस मन्त्र से वा ॐक्लींमहाजलचरायहुंफट्स्वाहापाञ्चजन्याय नमः। इस मन्त्र से शंखको जलसे प्रोक्षणकरे अंसूर्य्यमण्डलायद्वादशकलात्मनेअमुकदेवार्घ्यपात्रायनमः। इस मन्त्र से शंखको आधार के ऊपर धरे व पूजे॥४९५। ४६६॥ और उस शंखमें श्रीसूर्य्यनारायण की बारह कलाओं की पूजाकरे॥ परन्तु चारसौ छानवे के श्लोक से आगे इस ग्रन्थ में कुछ विधि अधिकहै उसको लिखते हैं॥ उस शंखमें पृथिवीमंडलकी भावनाकर षट्कोण में इष्टदेवकी षडङ्ग देवताओं की मानसी पूजा करने के बाद सूर्य्य कलाओं की पूजाकरे॥

---

१ अर्घ्यपात्रशङ्ख में सूर्य्यकी द्वादश कलाओं की पूजा, जैसे कं भं तपिन्यैनमः खं बं, तापिन्यैनमः, गं फं धूम्रायैनमः, घं पं मरीच्यैनमः, ङं नं ज्वालिन्यैनमः, चं धं रुच्यैनमः, छं दं सुषुम्णायैनमः, जं थं भोगदायैनमः, झं तं विश्वायैनमः, ञं णं बोधिन्यैनमः, टं ढं धारिण्यैनमः, ठं डं क्षमायैनमः, प्रथमकलाओं की पूजाकरले तब पूर्वोक्त षट्कोण में षडंगों की मानसीपूजाकरे॥ तदनन्तर उलटा मूलमन्त्र और उलटी मातृका पढ़कर शङ्खमें जल पूर्ण करे॥ उलटीमातृका जैसे क्षं लं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॣं ऌं ॠं ऋं ऊं उं ईं इं आं अं, और उस में मूलोक्त द्रव्य छोड़कर, उं सोममण्डलाय षोडशकलात्मने अमुकार्घ्यामृताय नमः, इसमन्त्रसे पूर्णकर अर्घ्यको पूजकर उसमें चन्द्रमाकी सोरहकलाओं की पूजाकरे जैसे अं अमृतायैनमः, आं मानदायैनमः, इं पूषायैनमः, ईं तुष्ट्यैनमः, उं पुष्ट्यैनमः,

त्रप्रदक्षिणम् ॥ ततःसुधामयैस्तोयैर्मूलान्तेमातृकांजपेत् ॥ ४९८ ॥ विलोमांपूरयेत्तस्मिन्पूजकोमनुनामुना ॥ ॐसोममण्डलायेतिषोडशेतिकलात्मने ॥ ४९९ ॥ अमुकार्घ्यामृतायेतिनमःशङ्खप्रपूरणे ॥ गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ॥ ५०० ॥ दूर्वाइत्यर्घ्यपात्रस्यप्रोक्तंद्रव्याष्टकंसुराः ॥ ततोयंगन्धपुष्पाद्यैःपूजयित्वासमर्चयेत् ॥ ५०१ ॥ कलाषोडशकंचान्द्रंपश्चात्सर्वकलासुच ॥ प्राणप्रतिष्ठांकुर्वीतपूजान्तेसाधकस्ततः ॥ ५०२ ॥ प्राग्वत्तीर्थसमावाह्यमूलमन्त्रेणतत्रतु ॥ संयोज्यमूलमन्त्रेणपुष्पंन्यस्यशराणुना ॥ ५०३ ॥ प्रदर्श्यगालिनींमुद्रांमुद्रयाधेनुसञ्ज्ञया ॥ अमृतीकृत्यविधिवत्सुधाबीजेनसाधकः ॥ ५०४ ॥ ध्यात्वेष्टदेवतांतत्रसकलीकरणंचरेत् ॥ अङ्गन्यासेनचास्त्रेणकल्पयेच्चदिशोदश ॥ ५०५ ॥ तत्रमन्त्रेणसंवीक्ष्यमुद्रयाशङ्खसञ्ज्ञया ॥ अवष्टभ्यततोदीप्यमुद्रयायोनिरूपया ॥ ५०६ ॥ गन्धपुष्पादिभिस्तत्रपूजयेदिष्टदेवताम् ॥ षडङ्गानिचसम्पूज्यमन्त्रयेन्मूलमन्त्रतः ॥ ५०७ ॥ अष्टकृत्वस्ततश्चार्घ्यंदापयेन्मत्स्यमुद्रया ॥ तच्छङ्खस्थंजलंकिञ्चित्कुम्भतोयेविनिक्षिपेत् ॥ ५०८ ॥ अर्घ्यस्योत्तरदिग्भागेपाद्यमाचमनीयकम् ॥ मधुपर्कंच संस्थाप्यत्रिकोणेपुयथाक्रमम् ॥ ५०९ ॥ एकैकपात्रंमूलेनह्यष्टकृत्वोभिमन्त्रयेत् ॥ मधुपर्कस्तुतत्क्षौद्रंदधितत्रनलभ्यते ॥ ५१० ॥ दधिदुग्धंगुडक्षौद्रेघृतप्रतिनिधिर्नहि ॥ परमंतत्पदंदेवामधुसञ्ज्ञंयदुच्यते ॥ ५११ ॥ तदाप्यायनं

---

ॐ वृत्यैनमः, ऋं धृत्यैनमः, ॠं शशिन्यैनमः, ऌं चन्द्रिकायैनमः, ॡं कान्त्यैनमः, एं ज्योत्स्नायै नमः, ऐं श्रियैनमः, ओं प्रीत्यैनमः, औं अंगदायैनमः, अं पूर्णायै नमः, अः पूर्णामृतायैनमः ॥ तदनन्तर रविमण्डल से तीर्थों का आवाहन करे - गङ्गेचयमुनेचैवगोदावरिसरस्वति ॥ नर्म्मदेसिन्धुकावेरिजलेस्मिन्सन्निधिंकुरु ॥ ब्रह्माण्डोदरतीर्थानिकरैःस्पृष्टानितेरवे ॥ तेनसत्येनमेदेवतीर्थंदेहिदिवाकर ॥ और गालिनीमुद्रायथा ॥ कनिष्ठांगुष्ठकौयुक्तौकरयोरितरेतरम् ॥ तर्जनीमध्यमानामासंहताभुग्नवर्जिताः ॥ इति सुधाबीजनवंइतिबीजेन, धेनुमुद्रा देखाकर अमृतीकरण करे धेनुमुद्रायथा ॥ नियोज्यतर्जनींमध्यांवामयानामयातथा ॥ मध्यदक्षिणयावामांतर्जनींचनियोजयेत् ॥ वामयानामयादक्षांकनिष्ठांचनियोजयेत् ॥ दक्षयानामयावामांकनिष्ठांचनियोजयेत् ॥ विहिताधोमुखीचैवधेनुमुद्राप्रकीर्तिता ॥ शङ्खमुद्राका लक्षण पूर्व समीपहीमें लिखाहै योनिमुद्रायथा ॥ तर्जन्यनामिकेमध्येकानिष्ठेचक्रमादपि ॥ करयोर्योजयेच्चैवकनिष्ठामूलभेदतः ॥ अंगुष्ठाग्रन्तुनिक्षिप्यमहायोनिःप्रकीर्तिता ॥ विशेषोयोनिमुद्रायामंगुष्ठाग्रंनिक्षिपेत् ॥ और मत्स्यमुद्रा पूर्व लिखचुके हैं इससे यहां नहीं लिखते हैं ॥ ५०८ ॥

यत्कर्म्मतत्प्रोक्तंमधुपर्ककम् ॥ कांस्यस्यवाथरौप्यस्यशैवंशङ्खवरंहरौ ॥५१२॥ महाशङ्खोवाममार्गेस्फाटिकंग्रहनायके ॥ दक्षिणेप्रोक्षणीपात्रमाधायाद्भिःप्रपूरयेत् ॥ ५१३ ॥ किञ्चिदर्घ्याम्बुसंगृह्यप्रोक्षण्यम्भसियोजयेत् ॥ पुनराचमनीयार्थपात्रंसंस्थापयेत्ततः ॥ ५१४ ॥ पाद्यंश्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते ॥ जातीलवङ्गकङ्कोलैर्मतमाचमनीयकम् ॥ ५१५ ॥ कुशपुष्पयवव्रीहितद्ग्रहुमूलतमालकम् ॥ पादयेत्प्रोक्षणीपात्रेललितंप्रणवेनच ॥ ५१६ ॥ शुद्धाभिरद्भिर्विहितंपुनराचमनीयकम् ॥ द्रव्याभावेप्रदातव्याःक्षालितास्तण्डुलाःशुभाः ॥ ५१७ ॥ अथार्घ्यादिकपात्राणांफलंवक्ष्येशुभाशुभम् ॥ सर्वकामप्रदंस्वर्णंरौप्यमायुःसुतप्रदम् ॥ ५१८ ॥ सौभाग्यंताम्रपात्रेणधर्म्मवृद्धिस्तुमृण्मये ॥ नारिकेलेदेवतुष्टिर्भवेत्पात्रेतथैवच ॥ ५१९ ॥ लक्ष्मीप्राप्तिर्बिल्वपात्रेब्राह्मण्यंब्रह्मवृक्षजे ॥ मारणोच्चाटनेलौहंस्तम्भेपाषाणजंभवेत् ॥५२०॥ मन्त्रस्याराधनेकाष्ठंवाममार्गेतुतौम्बिकम् ॥ रत्नादीनांतुपात्राणिशुभलेखाङ्कितानिच ॥ ५२१ ॥ अर्घ्यनैवेद्यपूजार्थेञ्जलिदानेप्रपूजयेत् ॥ पात्राणामादरःकार्य्योपात्राण्येवोत्तमानिच ॥ ५२२ ॥ बलिहोमाक्रियाद्यंचविनापात्रंनसिद्ध्यति ॥ षट्त्रिंशदंगुलंपात्रमुत्तमंपरिकीर्त्तितम् ॥ ५२३ ॥ मध्यमंतत्त्रिभागोनंकनिष्ठंद्वादशांगुलम् ॥ वस्वंगुलविहीनंचनपात्रंकारयेत्क्वचित् ॥५२४॥ नाभीविवररूपाणिपुंडरीकाकृतीनिच ॥ शङ्खनीलोत्पलाभानिपात्राणिपरिकल्पयेत् ॥ ५२५ ॥ श्वेतादीन्यतिशस्तानिविप्रादीनांक्रमेणच ॥ सेचयेत्प्रोक्षणीपात्रतोयैर्मूलंसमुच्चरेत् ॥ ५२६ ॥ आत्मानंयागवस्तूनिपूजाद्रव्यादिमण्डलम् ॥ दर्शयेद्धेनुमुद्रांचद्रव्यशुद्धिरियंमता ॥ ५२७ ॥ योगपीठेन्यासदेवांस्तत्तत्स्थानेषुपूजयेत् ॥ मणिपीठेभावनयाततःपूज्यास्वदेवता ॥ ५२८ ॥ आत्मानंदेवतारूपंध्यायेन्मूलेनपञ्चतु ॥ पुष्पस्याञ्जलयोदेयामस्तकेहृदयेगुदे ॥ ५२९ ॥ पादयोःसर्वगात्रेचपूजयेच्चन्दनादिभिः ॥ चतुर्भिरुपचारैश्चनैव

---

१ सूर्य्य २ जावित्री वा जायफल ३ साँवां वा साठीके चावल ४ खस ५ चन्दन ६ पीपरका वृक्ष ७ आठअंगुल ८ कमलके आकार ९ अन्योन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः ॥ तथाच तर्जनीमध्या धेनुमुद्रा प्रकीर्तिता ॥

र्घ्यंविनिवेदयेत् ॥ ५३० ॥ गुरूपदिष्टविधिनाशेषमन्यत्समापयेत् ॥ प्रोक्षण
द्भिःप्रयुञ्जीतसर्वमेतत्समाहितः ॥ ५३१ ॥ ततश्चार्घ्यकरंकार्य्यंयज्ञकार्य्यमथ
च्यते ॥ मूलाधारेचतुष्कोणमग्निकुण्डंविचिन्तयेत् ॥ ५३२ ॥ तत्राग्निकुण्
लीरूपंध्यायेन्मूलंसमुच्चरन्॥धर्म्माधर्म्महविर्दीप्तआत्माग्नौमनसातुवै ५३३।
सुषुम्णावर्त्मनानित्यमक्षवृत्तीर्जुहोम्यहम् ॥ पुण्यंजुहोमिस्वाहेतिश्लोकान्ते
च्चरेत्पुनः ॥ ५३४ ॥ पुनर्मूलंपुनःश्लोकःपुनःपापंजुहोमिच ॥ कृत्याकृत्ये
सङ्कल्पोविकल्पोधर्मएवच ॥ ५३५ ॥ उक्त्वापृथक्चस्वाहान्तंपुनःश्लोकमि
पठेत् ॥ प्रकाशामर्शहस्ताभ्यामवलम्ब्योन्मनीस्रुच ॥ ५३६ ॥ धर्म्माधर्म्मक
स्नेहपूर्णंवह्नौजुहोम्यहम् ॥स्वाहान्तेनाहुतिंदत्त्वाप्राणायामनिरोधतः॥५३७
निरस्तनिखिलोपाधिमात्मानंचिन्मयंस्मरेत् ॥ प्राणायामत्रयंकृत्वाऋष्यादि
न्यासमाचरेत् ॥ ५३८ ॥ पूजापीठंविनिर्माय पूजयेत्पीठदेवताः ॥ गुरुग
रुदक्पूज्यामहागणपतिस्त्ववाक् ॥ ५३९ ॥ पूजयेदनलादीनिदेवस्याधस्तु
मच ॥ मंडूकश्चापितस्योर्ध्वंरुद्रःकालानलस्तथा ॥ ५४० ॥ मूलप्रकृतिमाधा
रशक्तिंकूर्मंतथान्तकम् ॥ वराहंतस्यदंष्ट्राग्रेपृथिवीमर्चयेत्पुनः॥५४१॥तस्य
सुधार्णवंतस्मिन्दीपञ्चनवरत्नकम् ॥ स्वर्णशैलंचतन्मध्येतदूर्ध्वंनन्दनंवनम् ।
५४२ ॥ तन्मध्येकल्पवृक्षांश्चतन्मध्येरत्नभूमिकाम् ॥ स्वर्णप्राकारमस्यान्त
न्मध्येरत्नमण्डपम् ॥ ५४३ ॥ तस्यान्तःस्वर्णवेदीचरत्नसिंहासनंपुनः ॥ वेदी
मध्येभावनीयंपूजयेच्चन्दनादिना ॥५४४॥ पूजाचक्राधारपीठंसिंहासनमिति
स्मरेत् ॥ तत्पादेषुयजेत्सम्यगाग्नेयादिशिवान्तकम् ॥५४५॥ धर्मंवृषतनुं
त्रंज्ञानंकृष्णंचसिंहवत् ॥ वैराग्यंभूतवत्पीतमैश्वर्य्यंकृष्णहस्तिवत् ॥ ५४६ ॥
अधर्मादींश्चित्रवर्णान्पीठस्याधःसमर्चयेत् ॥ मायाविद्येचतन्मध्येऽनन्तंतत्त्वा

१ धर्म्माधर्म्महविर्दीप्ते इस श्लोक के अन्त में पुण्यंजुहोमिस्वाहा यह कहकर फिर मूल मन्त्र और पूर्वोक्त श्लोक कहने के बाद पापंजुहोमिस्वाहा इसी क्रमसे अर्थात् पहिले धर्म्मा धर्म्म श्लोक फिर अमुकं जुहोमि स्वाहा उसका नाम लेना फिरि मूलमन्त्र फिर अमुकंजुहो मिस्वाहा इस रीति से ॥ कृत्य अकृत्यादिकों के नाम लेकर आहुति करना पुनःप्रकाशामर्श श्लोक के अन्त में स्वाहापदका उच्चारण करके आहुति देना यह सब विधि भावना से होसकती है २ मं मंडूकायनमः इसी रीतिसे सब मन्त्र बनालेना ॥

कृतिंयजेत् ॥ ५४७ ॥ तस्यमूर्द्धियजेत्पद्ममष्टप्रकृतिपत्रकम् ॥ आनन्दकन्द कंसंविन्नालंविकारकेशरम् ॥ ५४८ ॥ मातृकाकर्णिकोपेतंतत्पत्रेषुक्रमाद्य जेत् ॥ सिद्ध्यष्टकंचाणिमाद्यंतन्नामानिब्रवीम्यहम् ॥ ५४६ ॥ अणिमामहि माचैवगरिमालघिमातथा ॥ प्राप्तिःप्राकाम्यमीशित्वंवशित्वंचाष्टसिद्धयः ॥ ५५० ॥ अधोधःकर्णिकायास्तुसूर्य्यस्सोमस्तथानलः ॥ गुणान्सत्त्वादिकां स्तत्रतद्वदग्रेत्रयंयजेत् ॥ ५५१ ॥ ब्रह्मविष्णुमहेशांश्चततोदिक्षुचमध्यतः ॥ ज्ञानंमायाकलाविद्यापरपूर्वंचतत्त्वकम् ॥ ५५२ ॥ केशरेषुतथामध्येपूर्वादिषु यथाक्रमम् ॥ तत्तन्मन्त्रोक्तपीठस्यनवशक्तीःप्रपूजयेत् ॥ ५५३ ॥ पीठमन्त्रेण गन्धाद्यैःपीठंसमन्ततोर्चयेत् ॥ चतुर्थीनमसायुक्तैःस्वस्वदैवतनामभिः ॥ ५५४ ॥ मध्येपुष्पाञ्जलिंदद्यात्पीठमन्त्रेणसाधकः ॥ मूलमन्त्रंसमुच्चार्य्यषष्ठ्य न्तंपीठनामच ॥ ५५५ ॥ मूर्तिंचकल्पयामीतिमूर्त्तिमध्येविनिक्षिपेत् ॥ पुनर्मू लंसमुच्चार्य्यदेवनामततःपरम् ॥ ५५६ ॥ मूर्त्तिंचपूजयामीतितांपुष्पेणसम र्चयेत् ॥ एकपीठेन्यपूजांचविनायन्त्रंकरोतियः ॥ ५५७ ॥ देवताशापमाप्नो तिरौरवंनरकंव्रजेत् ॥ तन्त्रेणपूजयेद्यन्त्रंदेवताशापमाप्नुयात् ॥ ५५८ ॥ आवाह्यदेवतामेकामर्चयेन्नान्यदेवताम् ॥ अन्ययन्त्रेन्यपूजावादेवताशा पकारिणी ॥ ५५६ ॥ पूजनंबहुमूर्त्तीनामेकपीठेभवेद्यदि ॥ पृथक्चन्द नपुष्पाणिधूपदीपादिमन्त्रतः ॥ ५६० ॥ खण्डितस्फुटितेदग्धेभ्रष्टेमानवि वर्जिते ॥ व्यङ्गेनष्टेपशुस्पृष्टेपतितेदुष्टभूमिषु ॥ ५६१ ॥ अन्यमन्त्रार्च्चितेचैवप तितस्पर्शदूषिते ॥ देशेष्वेतेषुनोकुर्य्युःसन्निधानंदिवौकसः ॥ ५६२ ॥ गणेशसूर्य्यविष्णवीशदेवीनांपूजनंक्रमात् ॥ दशस्थानानिदेवानांपूजनेक ल्पितानिच ॥ ५६३ ॥ सान्निध्यंसर्वदेवानामवश्यंमन्त्रतोभवेत् ॥ मन्त्रस्तु जीववत्प्रोक्तःप्रतिमाद्यंशरीरवत् ॥ ५६४ ॥ सिद्धायामपिसामन्त्र्यांविनाम न्त्रंफलंनहि ॥ शिवलिङ्गमणौयन्त्रेशालग्रामेघटेरवौ ॥ ५६५ ॥ स्थण्डिले ग्नौमूर्ध्निहृदिस्थानेष्वेतेषुपूजयेत् ॥ भूमौचैवकृतापूजापुत्रायुर्धननाशिनी ॥ ५६६ ॥ दशांगुलप्रमाणावातिथ्यंगुलमितापुनः ॥ अभ्यर्चाप्रथमाविष्णोर्गृ हेपुगृहमेधिभिः ॥ ५६७ ॥ पञ्चसूत्रसमायुक्तंशिवलिङ्गंसमर्चयेत् ॥ गृह

स्थानांभुक्तिमुक्तिधनारोग्यप्रदंतुतत् ॥ ५६८ ॥ लिङ्गमस्तकविस्तारो ताषचदीर्घतः ॥ लिङ्गस्यलिङ्गशालाकपाजलाहार्य्यास्तथैवच ॥ ५६९ लिङ्गपीठस्यपश्चानांसमतापञ्चसूत्रिका ॥ शालग्रामसमुत्पत्तिंशृणवन्तु माद्भुताम् ॥ ५७० ॥ गण्डक्याप्राक्तनपस्तसंभवन्तुममदेवताः ॥ पुत्राःसुखंदातुंजनानामितिलेसुराः ॥ ५७१ ॥ वरंदातुंसमुद्युक्तावभ्रे पिस्वपुत्रताम् ॥ अशक्तास्तेवरंदातुंतदाशप्तास्तयाक्रुधा ॥ ५७२ ॥ रणंभमसुराःकृतंयस्मात्पुनःपुनः ॥ कीटयोनिंप्रपद्येथाःक्रुद्धास्तेप्यशपंस्त म् ॥ ५७३ ॥ अविचार्यवियंशप्तास्त्वयायत्तपसोद्धते ॥ तेनकर्मवि केन यदाकृष्णानदीभवेत् ॥ ५७४ ॥ अन्योन्यशापंश्रुत्वेथंमहान्को हलोभवत् ॥ प्रकम्पिताःसुरायाताब्रह्माणंतंव्यजिज्ञपुः ॥ ५७५ ॥ त्राहिमहाशापादन्योन्यपतितान्क्रुधा ॥ इतिदेववचःश्रुत्वाब्रह्माशङ्करमब्र त् ॥ ५७६ ॥ शिवःप्रोवाचधातारमहंसंहारकारकः ॥ त्वंसृष्टिकर्ताविष् स्तुपालकोबुद्धिमत्तरः ॥ ५७७ ॥ सम्प्रष्टव्योयथासंख्यमुभयोःसम्भवेदिति तत्रमाहेश्वरंश्रुत्वावचनंविष्णुरब्रवीत् ॥ ५७८ ॥ शृणुब्रह्मन्महादेवभू देविगजानन ॥ मद्वर्णौत्राह्मणौब्राह्मतङ्गौशापतोयदा ॥ ५७९ ॥ भ ष्यतस्तयोर्मोक्षंकरिष्यामिकलेवरम् ॥ शीर्णंभविष्यतियदातन्मेदोमज् सम्भवाः ॥ ५८० ॥ पाषाणान्तर्गताःकीटावज्राख्याःप्रभविष्यथ ॥ अहं गण्डकीपुण्यागङ्गातुल्यामहानदी ॥ ५८१ ॥ गण्डक्यांगिरिराजस्यद ऐदशयोजनम् ॥ विस्तीर्णंतन्मनुक्षेत्रम्पुण्यंक्षेत्रंमहीतले ॥ ५८२ ॥ क्ततीर्थमिदंख्यातंत्रिलोकेषुचविश्रुतम् ॥ शालग्रामशिलायत्रयत्रद्वारवत् शिला ॥ ५८३ ॥ उभयोःसङ्गमोयत्रमुक्तिस्तत्रनसंशयः ॥ सर्वदेव तिकराभुक्तिमुक्तिप्रदायिनी ॥ ५८४ ॥ नद्यांतस्यान्तुपाषाणायेतदन्त ताःसुराः ॥ पार्थिवांशंविनासर्वेवज्रकीटाभवन्त्विति ॥ ५८५ ॥ अने वतुगण्डक्याःपुत्रत्वंभवतामपि ॥ प्रीताःसुरानमूर्तेश्चनवृक्षस्यापिपूजन त् ॥ ५८६ ॥ सन्तोषोजायतेतेषांगण्डकयश्मार्चनाद्यथा ॥ इतिविष्णु चःश्रुत्वाब्रह्मावचनमब्रवीत् ॥ ५८७ ॥ कीदृक्पूज्याशिलाविष्णोःकिंरि

त्कस्यचवल्लभा ॥ किंफलंकोधिकारीचकेनमार्गेणतद्वद ॥ ५८८ ॥ इति ब्रह्मवचःश्रुत्वाविष्णुर्वचनमब्रवीत् ॥ [1]स्वीयवर्णशिलापूज्याब्राह्मणाद्यैःसुखासये ॥ ५८९ ॥ स्निग्धाशिलामन्त्रसिद्धिंरूक्षासिद्धिंकरोतिन ॥ पाण्डुरापापशमनीमलिनापापधीकरा ॥ ५९० ॥पीतापुत्रफलंदद्यादाम्रवर्णासुतान्हरेत् ॥ नीलासन्दिशतेलक्ष्मींधूम्राभाहरतेमतिम् ॥ ५९१ ॥ रोगप्रदारक्तवर्णासिन्दूराभामहाकलिम् ॥ दारिद्र्यकारिणीवक्रासमासर्वार्थसाधिका ॥ ५९२ ॥ स्थूलानिहन्तिचैवायुःसूक्ष्मास्वल्पमतिंहरेत् ॥ पूजाफलंलाञ्छितयानिष्फलंलाञ्छनंविना ॥ ५९३ ॥ कपिलाचित्रकैकल्पेनेत्ररोगञ्चकर्बुरा ॥ लग्नाभङ्गकलिंदद्याद्बहुचक्राप्रधानताम् ॥ ५९४ ॥ लक्षणान्तरहीनाचेदचक्राविविधापदम् ॥ विकृतावर्त्तनाभिश्चवित्तान्नंकुरुतेबहु ॥ ५९५ ॥ वंशच्छेदोगृहस्थानांनारसिंह्यांप्रजायते ॥ रेखावर्त्ता दुःखदात्रीयथासूक्ष्मातथामृतम् ॥ ५९६ ॥ यथासिद्धातथालक्ष्मीस्तद्भिदानतःशृणु ॥ लक्ष्मीहरिःसविज्ञेयोयत्रपद्मंसचक्रकम् ॥ ५९७ ॥ केवलावनमालाचागृहस्थानामभीष्टदः ॥ वासुदेवःसविज्ञेयोयद्द्वारेचक्रयुग्मकम् ॥ ५९८ ॥ निरन्तरंसमंचापिसश्वेतःपापनाशनः ॥ सङ्कर्षणःसविज्ञेयःप्राक्पश्चाच्चक्रयुग्मकम् ॥ ५९९ ॥ संलग्नंपूर्वभागस्थंमहद्दलसुशोभनम् ॥ प्रद्युम्नेसूक्ष्मचक्रंस्याच्छिद्रंदीर्घंविचिन्तयेत् ॥ ६०० ॥ शुषिरान्तर्बहुच्छिद्रंपीतमिष्टप्रदायकम् ॥ अनिरुद्धस्तुनीलाभोवर्तुलश्चातिशोभनः ॥ ६०१ ॥ रेखाद्वयंतुतद्द्वारिपृष्ठंपद्मेनलाञ्छितम् ॥ केशवःसतुविज्ञेयएकंवाद्वयमेवच ॥ ६०२ ॥ प्राग्वापश्चाच्चचक्रंस्याच्चतुष्कोणस्सभाग्यकृत् ॥ नारायणःश्यामवर्णोनाभौचक्रंतथोन्नतम् ॥ ६०३ ॥ दीर्घरेखासमायुक्तंदक्षिणेसुकरंपृथु ॥ हरिरूपाशिलासास्याद्यस्याऊर्ध्वमुखंभवेत् ॥ ६०४ ॥ हरिवद्दृश्यतेद्वारंभुक्तिमुक्तिप्रदातुसा ॥ परमेष्ठीसविज्ञेयःपद्मचक्रान्वितस्तुसः ॥ ६०५ ॥ बिल्वाकृतिश्चशुक्लाभःपृष्ठेचशुषिरंमहत् ॥ विष्णुस्तुकृष्णवर्णःस्यात्स्थूलचक्रे

---

१ निजवर्ण के रंगकी मूर्त्ति की पूजा उचित है ॥ पीछे पृथ्वी की पहिचान में रंग लिखा है ॥

शुभानने ॥ ६०६ ॥ द्वारोपरितथारेखा दृश्यतेमध्यदेशतः ॥ नरसिंह
कपिलःपृथग्वक्रोबृहन्मुखः ॥ ६०७ ॥ त्रयोवापञ्चवातत्र बिन्दवोग
र्णांनसन् ॥ कपिलोनरसिंहस्तुगुडलाक्षानिभोभवेत् ॥ ६०८ ॥ स्थू
क्रद्वयंमध्ये द्वाररेखासुशोभना ॥ महानृसिंहोविज्ञेयःपूर्वोक्तैर्लक्षणैर्युत
६०९ ॥ रेखाश्चकेशराकारासुखंदीर्घभयानकम् ॥ लक्ष्मीनृसिंहोवि
श्चतुरचक्रस्सबिन्दुकः ॥ ६१० ॥ पूर्वोक्तलक्षणैर्युक्तोवनमालाविराजित
वराहोसौशक्तिलिङ्गचक्रेचविषमेतथा ॥ ६११ ॥ इन्द्रनीलनिभस्थूलसि
लाञ्छितोभवेत् ॥ पृथ्वीवराहनाम्नीसायावराहाकृतिःशिला ॥ ६१२
अभुग्नानैवरेखैकागतराज्यप्रदायिका ॥ मत्स्याख्यासाशिलाज्ञेया।बिन्दु
विभूषिता ॥ ६१३ ॥ कांस्योद्भवास्वर्णनिभादीर्घासाभुक्तिमुक्तिदा
कूर्म्माख्यातुशिलापृष्ठेवर्तुलाचोन्नताभवेत् ॥ ६१४ ॥ हरितंवर्णमाधत्ते
स्तुभेनचचिह्निता ॥ शिलाकूर्म्मस्यविज्ञेयाकूर्म्माकारातुयाभवेत् ॥ ६१
चक्राङ्कितातथावृत्तापूजितासापदप्रदा ॥ हयग्रीवोंकुशाकाररेखाचक्र
पगा ॥ ६१६ ॥ बहुविन्दुसमायुक्तंपृष्ठंनीरदनीलकम् ॥ ज्ञेयःसौम्यो
ग्रीवोहयग्रीवसमाशिला ॥ ६१७ ॥ दीर्घयारेखयायुक्तारेखावातादृ
वेत् ॥ ६१८ ॥ हयशीर्षःसविज्ञेयोमुखंयस्यहयाकृति ॥ पद्माकृतिभवेद्व
साक्षमालंशिरस्तथा ॥ ६१९ ॥ वैकुण्ठस्तिलवर्णाभश्चक्रमेकन्तथ
जः ॥ द्वारोपरितथारेखापूजकायसुशोभनः ॥ ६२० ॥ श्रीधरस्तुत
वश्चिह्नितोवनमालया ॥ कदम्बकुसुमाकाररेखापञ्चकभूषितः ॥ ६२
वामनःसतुविज्ञेयोयोतिह्रस्वश्चवर्तुलः॥अतसीकुसुमप्रख्योबिन्दुनोपरिशो
तः ॥ ६२२ ॥ दधिवामननामाचऊर्ध्वाधश्चक्रसंयुतः॥महाद्युतिश्चह्रस्व
सुभिक्षक्षेमदायकः ॥ ६२३ ॥ सुदर्शनस्तथादेवश्श्यामवर्णोमहाद्युति
वामपार्श्वेतथाचक्रंरेखैकैवतुदक्षिणे ॥ ६२४ ॥ सहस्राज्र्जुननामासौ
नारेखामर्याभवेत् ॥ वक्राकारायत्रपङ्क्तिःसनष्टद्रव्यदायकः ॥ ६२५
स्थूलोदामोदरोयस्यमध्येचक्रंप्रतिष्ठितम् ॥ दूर्वाभोद्वारसङ्कीर्णपीतरेखो
प्रदः ॥ ६२६ ॥ राधादामोदरोज्ञेयऊर्ध्वाधश्च क्रमान्वितम् ॥ नातिव

मुखंमध्येलम्बरेखःसभोगदः ॥ ६२७ ॥ दामोदरःसविज्ञेयोयश्चक्रद्वयला
ञ्छितः ॥ सूक्ष्मंभवेच्चविवरंपूजितस्सुखदस्सदा ॥ ६२८ ॥ अनन्तोवहु
वर्णःस्यान्नागभोगेनचिह्नितः ॥ अनेकचक्रसम्भिन्नः सर्वकामफलप्रदः ॥
६२६ ॥ पुरुषोत्तमनामासौयस्यदिक्षुविदिक्षुच ॥ ऊर्ध्वंमुखानिदृश्यन्तेपुरु
षार्थफलप्रदः ॥ ६३० ॥ योगेश्वरःसविज्ञेयोलिङ्गंयस्यशिरोगतम् ॥ ब्रह्म
हत्यादिपापानांनाशकोयोगसिद्धिदः ॥ ६३१ ॥ पद्मनाभस्तथारक्तःपङ्क
जच्छत्रसंयुतः ॥ तुलस्यापूजयित्वातंदरिद्रोपीश्वरोभवेत् ॥ ६३२ ॥ रश्मि
ज्वालोहिरण्याक्षश्चन्द्राभःस्फटिकोपमः ॥ अथवाजायतेनानास्वर्णरेखाभि
रन्वितः ॥ ६३३ ॥ गरुडःसविज्ञेयोमध्येपक्षद्वयान्विते ॥ सुदीर्घादृश्यते
रेखासस्सर्पविषनाशकः ॥ ६३४ ॥ जनार्दनःसविज्ञेयः केवलानिस्फुटानि
च ॥ यस्योदरेतुचक्राणि चत्वारि पितृतृप्तिकृत् ॥ ६३५ ॥ लक्ष्मीनारा
यणोज्ञेयोवनमालाङ्कितोदरः ॥ सूक्ष्मद्वारश्चतुश्चक्रोभुक्तिमुक्तिप्रदायकः ॥
६३६ ॥ हृषीकेशःसविज्ञेयोयोर्धचन्द्राकृतिर्भवेत् ॥ तमभ्यर्च्यलभेत्स्वर्गं
विषयांश्चसमीहितान् ॥ ६३७ ॥ लक्ष्मीनरहरिर्ज्ञेयःकृष्णवर्णःसबिन्दुकः ॥
वामपार्श्वेसमेचक्रे गृहस्थाभीष्टदायकः ॥ ६३८ ॥ त्रिविक्रमःसविज्ञेयः
श्यामवर्णोमहाद्युतिः ॥ वामपार्श्वेचक्रयुग्ममेकरेखातुदक्षिणे ॥ ६३९ ॥
कृष्णोज्ञेयःशिलाकृष्णासचक्रोवाविचक्रकः ॥ प्रदक्षिणावर्तकृतोवनमाला
विभूषितः ॥ ६४० ॥ चतुर्मुखःसविज्ञेयोद्वेचक्रेमध्यदेशतः ॥ चतस्रःपार्श्व
गारेखावेदशास्त्रागमप्रदः ॥ ६४१ ॥ विष्णोर्भेदाइमेप्रोक्ताअत्रैवावाहयेद्ध
रिम् ॥ विसर्जयेच्चपूजान्तेप्रतिष्ठांतत्रकारयेत् ॥ ६४२ ॥ शालग्रामाः
समाःपूज्याःसमेषुद्वितयंनहि ॥ असमानैवपूज्यन्तेसर्वकामफलार्थिभिः ॥
६४३ ॥ शिलाद्वादशयोनित्यंभक्त्यासम्पूजयेन्नरः ॥ दिनेदिनेधर्मवृद्धिः
पापनाशोभवेदिह ॥ ६४४ ॥ शिवनामासविज्ञेयोयोलिङ्गाकारताङ्गतः ॥
स्वयन्तुलिङ्गाकृतिमान्मन्त्रसिद्धिविधायकः ॥ ६४५ ॥ त्र्यम्बकःसतुविज्ञेयो
योबिन्दुत्रयभूषितः ॥ शूलाकारातथारेखाततापुंस्त्वप्रदायकः ॥ ६४६ ॥
धूर्जटिस्सतुविज्ञेयोयत्ररेखाजटासमा ॥ तिस्रोयत्रप्रदृश्यन्तेसोर्चितोज्ञानदा

यकः ॥ ६४७ ॥ शम्भुस्तुपाण्डुरोज्ञेयोबिन्दुःकृष्णस्तुमस्तके ॥ बिल्व प्रमाणस्तेजस्वीपूजितःशिवशङ्करः ॥ ६४८ ॥ ईश्वरस्सतुविज्ञेयोरक्तोबिन्दु स्तुमस्तके ॥ एकचक्रोद्विचक्रोवाप्यन्तरेधश्चगोपदम् ॥ ६४९ ॥ मृत्युञ्ज यस्सविज्ञेयोह्यपमृत्युविनाशकः ॥ अग्रचक्रंतदूर्ध्वञ्चश्वेतरेखात्रिशूल वान् ॥ ६५० ॥ चन्द्रशेखरनामासावर्धचन्द्रोस्तिमस्तके ॥ मध्येचक्रद्व यंतस्यसेवनाद्रोगनाशनम् ॥ ६५१ ॥ चन्द्रःसएवविज्ञेयःकपिलोमूर्ध्निरु क्षितः ॥ चक्रमध्येभवेद्रेखामारयेद्रिपुसन्ततिम् ॥ ६५२ ॥ शालग्रामानथो वक्ष्ये शाक्तान्कीटसमुद्भवान् ॥ येषांपूजनतोदेवीभवानीसुप्रसीदति॥६५३॥ श्रीविद्यासातलेचक्रमूर्ध्वंछत्रंप्रदृश्यते ॥ वाह्येघण्टाङ्कितोमूर्द्धा स्निग्धा सेव्याखिलैस्तदा ॥ ६५४ ॥ महाकालीतुसाज्ञेया योक्तचिह्नसमन्विता ॥ द्विच्छिद्राद्यास्सर्वशिलास्त्रिकोणेनाङ्किताःस्तुयाः ॥ ६५५ ॥ यदायुधाकृ तिश्चान्तर्देवीं तत्रविनिर्दिशेत् ॥ देवीशिलासचक्राया दक्षमार्गेणतांयजे त् ॥ ६५६ ॥ सार्चितावाममार्गेण लोकद्वयसुखावहा ॥ याचक्ररहितादेवी शिलातांवामतोर्चयेत् ॥ ६५७ ॥ स्पर्शःकार्य्योनविप्राणां तस्यायाक्षोभकृ द्भवेत् ॥ सौरीशिलादुर्लभैव प्रायःकलियुगेसुराः ॥ ६५८ ॥ स्फटिकाभाभ वेत्सातुघर्मेमुक्ताविमुञ्चती ॥ सूर्य्यस्योर्ध्वस्थितं वह्निंसाभिषिक्ताप्रवर्षण म् ॥ ६५९ ॥ कुरुतेशपथेमिथ्या कृतेस्यांकुष्ठकारिका ॥ इत्यादिलक्षणैर्यु क्ताशिलासूर्य्यस्यसम्मता ॥ ६६० ॥ गणेशःसतुविज्ञेयो यस्तुशुण्डाङ्कितो भवेत् ॥ शुण्डाकाराशिलावापि गजाननसमापिवा ॥ ६६१ ॥ यस्यामध्ये महच्चक्रं सूक्ष्मचक्रंचयाद्दिशि ॥ साशिलातस्यादिक्पस्यसेव्यातद्दिशिराज्य दा ॥ ६६२ ॥ अर्धचन्द्राकृतिर्यत्र दृश्यतेशकलद्वयम् ॥ सातुचन्द्रशिला ज्ञेयस्त्रयुक्ताभौमशिलामता ॥ ६६३ ॥ बाणाकारेणचिह्नेन ज्ञेयाबुधशिला सुराः ॥ दीर्घेणचतुरस्रेण युक्तागुरुशिलामता ॥ ६६४ ॥ पञ्चकोणातु शुक्रस्य चापाकाराशनेर्मता ॥ शूर्पाकारातुराहोःस्यात्केतोस्तुध्वजरूपि णी ॥ ६६५ ॥ प्राप्तेकलियुगेघोरे वामाचारविमिश्रिते ॥ भक्ष्याभक्ष्यविचारा दिरहितेम्लेच्छसंकुले ॥ ६६६ ॥ कामक्रोधादिभिर्व्याप्ते जनेस्त्रीभिर्विनि

र्जिते ॥ क्वशिष्यःक्वगुरुर्मन्त्रः क्वजपःक्वचसिद्धयः ॥ ६६७ ॥ अयुताब्देक लेर्यातित्यजेद्विष्णुशिलामहीम् ॥ तदर्धाज्जाह्नवीतोयं तदर्धाद्देवताशि ला ॥ ६६८ ॥ जपएवकलौश्रेयाञ्छालग्रामार्चनंतथा ॥ सूर्य्यार्घ्यदानस मयेदानं विभवतःपरम् ॥ ६६९ ॥ आवाहनादिकंकार्य्यं मूर्त्यादौत्रिविधंतु तत् ॥ आदावावाहनंकार्य्यं त्रिर्जपेन्मूलमन्त्रकम् ॥ ६७० ॥ स्वालोकात्सू क्ष्मरूपेणदेवआगत्यमूर्तिषु ॥ स्थितएवंभावयित्वासुषुम्णावर्त्मनासुधीः ॥ ६७१ ॥ आनीयतेजःस्वस्थानान्नासिकारन्ध्रनिर्गतम् ॥ करपुष्पाञ्जलौस्था प्यतद्दद्याद्देवमूर्द्धनि ॥ ६७२ ॥ देवस्यतेजस्तन्मूर्त्तौआवाहिन्याख्यमुद्र या ॥ स्थापयेदुच्चरेन्मूलमेतदावाहनंमतम् ॥ ६७३ ॥ विभोर्निवेशनंयन्त्रं स्थापनंकथितंबुधैः ॥ ततःसंस्थापनंकुर्य्यादिहतिष्ठेतिर्तिष्ठच ॥ ६७४ ॥ मू लान्तेदेवतानामतस्यान्तेचपठेदिति ॥ ओंस्थापनीयमुद्रांचदर्शयित्वाविभा वयेत् ॥ ६७५ ॥ यावुस्थिरादेवतेतिपश्चात्सम्प्रार्थयेदिति ॥ देवेशभक्ति सुलभसर्वावरणसंयुत ॥ ६७६ ॥ यावत्त्वांपूजयिष्यामितावत्त्वंसुस्थिरोभव॥ एवंसम्प्रार्थ्यदेवेशंसन्निधापनमाचरेत् ॥ ६७७ ॥ मूलमन्त्रंसमुच्चार्य्यसम्बु ध्येत्तांचदेवताम् ॥ इहत्वंसन्निधेहीतिद्विरुक्त्वास्वस्यसन्निधौ ॥ ६७८ ॥ स्थि तंदेवंतोषयेच्चसन्निधापनमुद्रया ॥ सन्निरोधंततःकुर्य्यान्मूलमुच्चार्य्यदेवताम्॥ ६७९ ॥ सम्बुध्यतांवदेत्पश्चात्सन्निरुद्धोभवेतिच ॥ द्विरुच्चरेत्कृपापूर्णाभक्ति भावनिरोधिताम् ॥ ६८० ॥ प्रतिमायांस्थिरंयातांदेवतामितिचिन्तयेत् ॥ सम्मुखीकरणंकुर्य्यान्मूलमुच्चार्य्यदेवताम् ॥ ६८१ ॥ सम्बुध्यतांवदेत्पश्चा त्सम्मुखोभवइत्यपि ॥ ध्यायेत्स्वसम्मुखंदेवंसुप्रसन्नाननाम्बुजम् ॥ ६८२ ॥ सम्मुखीकरणींमुद्रांदर्शयेदितितत्स्मृतम् ॥ ततोवगुण्ठनंकार्य्यमूलमुच्चार्य्यदे

---

१ सम्यक्सम्पूरितापुष्पैःकराभ्यांकल्पिताञ्जलिः ॥ आवाहनीसमाख्यातामुद्रादेशिकस त्तमैः २ अधोमुखीकृतासैवप्रोक्तास्थापनकर्म्मणि ३ आश्लिष्टमुष्टियुगलाप्रोन्नतांगुष्ठयुग्मका॥ सन्निधानेसमुद्दिष्टामुद्रेयंतन्त्रवेदिभिः ४ अंगुष्ठगर्भिणीसैवसन्निरोधेसमीरिता ॥ देवताङ्गेषडङ्गा नांन्यासःस्यात्सकलीकृता ॥

वताम् ॥ ६८३ ॥ सम्बुध्यतामवगुण्ठितोभवेदितिप्रदर्शयेत् ॥ अवगुण्ठनमुद्राश्वदर्शयेच्चिन्तयेदिति ॥ ६८४ ॥ भक्त्यासम्मोहितंदेवंविस्मयोत्फुल्ललोचनम् ॥ सकलीकरणंचैवदेवस्यहृदयादिषु ॥ ६८५ ॥ षडङ्गमन्त्रान्विन्यस्य मूलमुच्चार्य्यदेवताम् ॥ सम्बुध्यतांचसकलीकृतोभववदेत्ततः ॥ ६८६ ॥ ध्यायेदङ्गानिदेवेतुप्रतिष्ठाप्याङ्गदेवताः ॥ यस्माद्भिन्नस्वभावानांयदभिन्नंप्रयोजनम् ॥ ६८७ ॥ अङ्गानामङ्गिनासार्द्धंसकलीकरणाद्भवेत् ॥ अमृतीकरणं वक्ष्येपीठेसंस्थाप्यदेवताम् ॥ ६८८ ॥ वद्ध्वासम्यग्धेनुमुद्रांदेवमूर्ध्निप्रवर्षणम् ॥ जायतेचामृतश्चैतिध्यायन्नर्घ्योदकेनच ॥ ६८९ ॥ त्रिःसिञ्चेन्मूलमन्त्रेण दीपिनीमन्त्रमन्त्रितम् ॥ अकारादिक्षकारान्तमातृकाभिस्त्रिधापुनः ॥ ६९० ॥ वाग्भवंवदयुग्मंचवाग्वादिनिचवाग्भवम् ॥ क्लींक्लिन्नेक्लेदिनिक्लेदयमहाक्षोभमित्यपि ॥ ६९१ ॥ कुरुयुग्मंकामवीजमोंमोक्षंकुरुयुग्मकम् ॥ प्रासादश्च पुनःप्रासादःसप्तत्रिंशदक्षरः ॥ ६९२ ॥ दी[२]पिनीमनुराख्यातोदेवतायाहि द्धिकृत् ॥ मूलंसम्बोधनान्तंचदेवनामामृतीकृतः ॥ भवेतिचवदेदित्थममृतीकरणंत्विदम् ॥ ६९३ ॥ परमीकरणंवक्ष्येमहामुद्रांचबन्धयेत् ॥ उच्चार्य्य मूलंदेवंचपूर्ववत्परमीकृती ॥ कृतोभवेतिचप्रोक्त्वाध्यायेद्देवस्यमस्तके ॥ परमामृतवृद्धिंचदेवस्यहृदयंस्पृशन् ॥ ६९४ ॥ कुर्य्यात्प्राणप्रतिष्ठांचममस्थानेवदेत्तथा ॥ देवतानामशेषंचसर्वप्राग्वत्तदेवहि ॥ ६९५ ॥ तत्तद्दैवतकल्पोक्तास्ततोमुद्राःप्रदर्शयेत् ॥ मुद्रंस्वपूरताभास्यांदेहद्वारेणचात्मनः ॥ ६९६ ॥ याअर्पयन्त्ययत्नेनमुद्रास्ताःशक्तयोमताः ॥ मोदयन्तिग्रहादिभ्यःपापौघंद्राव

---

१ सव्यहस्तकृतामुष्टिर्दीर्घाधोमुखतर्ज्जनी ॥ अवगुण्ठनमुद्रेयमभितोभ्रामितामता ॥ अन्योन्याभिमुखाश्लिष्टाकनिष्ठानामिकापुनः ॥ तथाचतर्जनीमध्याधेनुमुद्राप्रकीर्तिता ॥ अमृतीकरणंकुर्य्यात्तयादेशिकसत्तमः ॥ अन्योन्यग्रन्थितांगुष्ठप्रसारितकरांगुलिः ॥ महामुद्रेयमुदितापरमीकरणेबुधैः ॥ सम्मुखीकरणीमुद्रासाज्ञेयामुष्टियुग्मकम् ॥ देवतास्थाप्यतेयस्यामंगुष्ठद्वयमुत्तकम् ॥ प्रथम भाषामें अर्थ लिखा है इससे यहां नहीं कहा गया ॥ मूलमन्त्र पढ़कर देवता का नाम और आवाहितोभव इत्यादि जानलेना २ ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं ॐ मोक्षं कुरु कुरु ह्रौं ह्रौं ॥ इति दीपिनीमन्त्रः मूलमन्त्रपूर्वकसम्बोधनान्तदेवनाम अर्थात् हे अमुकदेव ! अमृतीकृतोभव ॥ इसी रीति से परमीकरणका कर्त्तव्य जानिये ४ पूर्वोक्त प्राणप्रतिष्ठा मन्त्रसे प्राणप्रतिष्ठा होती है परंममके स्थानपर अमुकदेवस्य इस पदको जोड़ लेना ॥

यन्तिच ॥ ६९७ ॥ मोदनंद्रावणंयस्मादतोमुद्राःप्रकीर्त्तिताः ॥ ततःसम्पूज येद्देवंशक्त्यालभ्योपचारकैः ॥ ६९८ ॥ तत्रादौपूजनंकार्य्यंषोडशैरुपचार कैः ॥ आसनंस्वागतंचार्घ्यंपाद्यमाचमनीयकम् ॥ ६९९ ॥ मधुपर्कोथाचम नंस्नानंवस्त्रमलंकृतिः ॥ गन्धपुष्पाणिधूपश्चदीपनैवेद्यवन्दनम् ॥ ७०० ॥ प्रयोजयेदर्चनायामुपचाराणिषोडश ॥ दशोपचारामध्यास्यात्सागृहस्थैर्वि धीयते ॥ ७०१ ॥ अर्घ्यंपाद्यंतथाचामोमधुपर्कस्तथाचमः ॥ गन्धादयोनि वेद्यान्ताउपचारादशस्मृताः ॥ ७०२ ॥ गन्धादयोनिवेद्यान्ताःपूजापञ्चोप चारिका ॥ अगृहस्थैर्गृहस्थैर्वाकर्त्तव्याकार्य्यतत्परैः ॥ ७०३ ॥ आदौकुर्य्या द्देशिकस्तुवेदमन्त्रेणपूजनम् ॥ ततश्चतान्त्रिकैर्मन्त्रैर्वामीशूद्रश्चतन्त्रतः ॥ ७०४ ॥ [1]ॐअंहंहंइदमिदमिदंगृहाणठद्वयम् ॥ योज्यःसर्वोपचारेषुमन्त्रः पञ्चदशाक्षरः ॥ ७०५ ॥ पठेद्वावैदिकस्यान्तेतत्रतन्त्रंतुवैदिकः ॥ सर्वत्रव ह्निजायायाःस्थानेशूद्रोनमःपठेत् ॥ ७०६ ॥ देवस्यवामभागेतुदद्यान्मूलेन चासनम् ॥ पौष्पंदारुमयंवास्त्रंचार्म्मंकौशंचतैजसम् ॥ ७०७ ॥ पौष्पंपुष्पा दिरचितंकुशदूर्वादिसंयुतम् ॥ नानावर्णसुगन्धंचकोमलंसर्वकामदम् ॥ ७०८ ॥ यस्ययानिनिषिद्धानिपुष्पाण्युक्तानितैःकृतम् ॥ केवलैरासनंहन्ति साधकस्यमनोरथान् ॥ ७०९ ॥ [2]यज्ञदारुसमुद्भूतंबैल्वंवाचन्दनोद्भवम् ॥ [3]गम्भार्य्यावासमाख्यातं[4]श्रीपर्णस्येप्सितप्रदम् ॥ ७१० ॥ सकण्टकक्षीरयुत तालशालविवर्जितम् ॥ [5]चैत्येश्मशानेसम्भूतंवर्ज्जयेच्च[6]बिभीतकम् ॥ ७११ ॥ रोमजंवाल्कलंकौशजातंकर्पाससम्भवम् ॥ वस्त्रंचतुर्विधंश्रेष्ठंपूर्वंपूर्वमुदाहृत म् ॥ ७१२ ॥ सिंह[7]व्याघ्रतरक्षाणांछागस्यमहिषस्यच ॥ गजानांतुरगा णांचकृष्णसारस्यचर्म्मणः ॥ ७१३ ॥ आसनंनिर्मितंश्रेष्ठंनिषिद्धंखरकुक्कु रम् ॥ शृगालस्यवृकस्यापिगोःशशस्यकपेस्तथा ॥ ७१४ ॥ कुशःकाशः शरोग्रन्थिर्य्यवोदूर्वाश्चबल्वजाः ॥ वीरणंचनडोगुन्द्रःपूर्वाभावेपरःपरः ॥

---

१ ॐ अं हं हं इदमिदमिदं गृहाण स्वाहा २ आम पाकरि पलाशादि ३ खम्भारी ४ अरणी वा अगेथु ५ देवस्थान और श्मशान में जमेहुये वृक्षों का आसन निषिद्ध है ६ बहेड़ा ७ चीता ८ मृगविशेष ९ भेड़िया १० खरगोश ११ बन्दर १२ पतावरि १३ भरुही १४ जवक्षीनरई १५ बबई १६ तिन गाड़र १७ नरई वा नरकुल १८ गोंद वा नागरमोथा ॥

योगवीउस्यसहशमेतेषामासनंस्मृतम् ॥ पूर्वंपूर्वंश्रेष्ठतमंकौशंदशविधंस्मृतम् ॥ ७१५ ॥ सुवर्णंतारताम्राणांसर्वङ्गानांपरंपरम् ॥ हीनंनिषिद्धंलोहंतुकांस्यंसीसंचपित्तलम् ॥ ७१६ ॥ साङ्गंसावरणंदेवंपूजार्थमिहचागतम् । इतिध्यात्वातुमूलान्तेस्वागतंपरिकीर्त्तयेत् ॥ ७१७ ॥ ततोर्घ्यंमूर्ध्निदद्याच्चकालोस्यत्रिविधोमतः ॥ आगतायतथार्चायांस्नातुमासनगायच । ७१८ ॥ पूजान्तेगन्तुकामायदेवायार्घ्यंप्रदापयेत् ॥ अर्घ्यद्रव्ययुतैस्तोयैरुपचारमनुंपठन् ॥ ७१९ ॥ आगतेस्नानकालेचनैवेद्योपक्रमेपिच ॥ त्रिविधःपाद्यकालःस्यात्पाद्यंस्यात्पादधावनम् ॥ ७२० ॥ पाद्येचमधुपर्केचस्नानेयज्ञोपवीतयोः ॥ भोजनेचाचमःशुद्धतोयैःषोढाप्रकीर्तितः ॥ ७२१ ॥ क्षौद्रंकृत्वाकांस्यपात्रेदद्याद्देवमुखाम्बुजे ॥ दिवसेदधिसंयुक्तमुपचारमनुंपठन् ॥ ७२२ ॥ जातीफललवङ्गैलाचन्द्रकङ्कोलचूर्णयुक् ॥ पुनराचमनीयार्थतोयंदेवमुखेऽर्पयेत् ॥ ७२३ ॥ सुगन्धतैलैरभ्यज्यसुगन्धामलकादिभिः । उद्वर्तनंविधायाथस्नापयेदुष्णवारिणा ॥ ७२४ ॥ गन्धोदकैश्चमूलेनयथाशक्त्याभिषेचयेत् ॥ दुग्धदध्याज्यमधुभिःखण्डेनचपृथक्पृथक् ॥ ७२५ ॥ नारिकेलोदकेनापितथातालफलाम्बुना ॥ गन्धद्रव्यैश्चबहुभिस्तथागन्धोदकेनच ॥ ७२६ ॥ ऐक्षवेनोदकेनापिसकर्पूरादिगन्धिना ॥ शुद्धोदकैश्चमूलेनयथाशक्त्याभिषेचयेत् ॥ ७२७ ॥ कदलीपनसाश्वत्थरसेनापिसुगन्धिना ॥ शतंसहस्रमयुतंशक्त्यावाथाभिषेचयेत् ॥ ७२८ ॥ शङ्खंसम्पूज्यतेनैवस्नापयेत्तमनन्यधीः ॥ सर्वेषांप्रीतिदःशङ्खोनसूर्य्यस्यकदाचन ॥ ७२९ ॥ पञ्चामृतैस्तीर्थतोयैरभिषिक्तःशिवोमुदम् ॥ लभतेनाथशङ्खोदैस्ततःशुद्धोदकेनच ॥ ७३० ॥ स्नानंपुरुषसूक्तेनकार्य्यंमूलेनवात्रिभिः ॥ प्रदेयंविष्णवेसुरम्यंपीतंकौशेयमम्बरम् ॥ ७३१ ॥ शिवायचसरस्वत्यैपार्श्वनाथायशुभ्रकम् ॥ रक्तंशक्त्यर्कविघ्नानांभौमसौगतयोरपि ॥ ७३२ ॥ कृष्णंभैरवकाल्यादे

१ चांदी २ रांगा ३ जायफल ४ इलायची ५ कपूर ६ उबटन ७ घृत ८ ईखका रस ९ दशहजार १० पुरुषसूक्त सहस्रशीर्षादि मूलमन्त्र और स्नानका मन्त्र मिलकर तीनहोते हैं ११ सफेद १२ देवी सूर्य्य गणेश मङ्गल और जिन वा बुद्धदेव जिनसे बौद्धमत है ॥

रथादेर्नीलमम्बरम् ॥ अच्छिद्रंमलहीनंचसद्यदनन्यधारितम् ॥ ७३३ ॥ कार्पासजंवाकौशेयंरोमजंवाविशिष्यते॥ तैलादिदूषिताद्रोगःसच्छिद्राद्दीत्यता भवेत् ॥ ७३४ ॥ परकायाच्चदारिद्र्यंजीर्णादायुःक्षयोभवेत् ॥ दग्धेद्विपद्भवेद्दास्यंदत्तेगात्रावलम्बिते ॥ ७३५ ॥ सूचीविद्धात्स्फोटकादिर्मलिनात्कान्तिहीनता ॥ उत्तकेशेपुत्रनाशःपूजनादौप्रयोजिते ॥ ७३६ ॥ तानिनानाविधानिस्युर्मुकुटादिप्रभेदतः ॥ स्त्रीपुम्प्रभेदतश्चापिविज्ञेयानिविचक्षणैः ॥ ७३७ ॥ चूर्णंघृष्टंधूमसारःसम्मर्द्दःप्राणिसम्भवः ॥ गन्धःपञ्चविधोज्ञेयोमोददः स्वर्गवासिनाम् ॥७३८॥ प्रशस्तगन्धयुक्तानांपत्रचूर्णानियानिच ॥ तानिगन्धाढ्यानिस्युश्चूर्णाख्यःप्रथमःस्मृतः ॥ ७३९ ॥ घृष्टोमलयजोगन्धस्सरलोदेवदारुच ॥ कृष्णागुरुःकदम्बश्चद्वितीयोयंप्रकीर्तितः ॥ ७४० ॥ शतपत्रीरसेमग्नाच्चन्दनागुरुकादिकात् ॥ पिप्पलीयन्त्रतःकाचकूप्यांसिद्धस्तृतीयकः ॥ ७४१ ॥ कृष्णागुरुश्चन्दनदेवदारुकालीयकंबालकभद्रमुस्तम् ॥ शिलारसःकुन्दरकोलकंचसेवन्तिकाकंतुरगाभिधानम् ॥ ७४२ ॥ मृत्कर्प्पटैःसंयुतकाचकूप्यांदत्त्वामुखेलोहमलोहसूत्रैः ॥ निष्कासितोधूमरसस्तुतस्यसौगन्धिकैःकाचकठोरकेयः ॥ ७४३ ॥ महामोदनामासुरामोदकारीतयाभूतयक्षोरगातङ्ककारी ॥ ज्वरारोचकच्छर्दिशङ्कापहारीललाटेस्थितोदृष्टिदोषापहारी॥ ७४४ ॥ यथाभागमनेकेतुसुगन्धागन्धवारिभिः ॥ मर्दितास्सचतुर्थस्तुसम्मर्द्दइतिकीर्त्यते ॥ ७४५ ॥ कस्तूरिकाचैकभागाद्द्वौभागौमुस्तकस्यच ॥ तदर्धैलाजटामांसीत्वक्कुष्ठंचशिलारसः ॥ ७४६ ॥ चतुर्भागंबालकंचघृतभृष्टातथानखी ॥ सुगन्धकोकिलालोहैर्बाणोराजचचातथा ॥ ७४७ ॥ अष्टौभागाः केशरस्यमुरायाश्चैवषोडश ॥ कृष्णागुरुश्चकालीयंतद्भागाष्टकमुच्यते ॥ ७४८ ॥ तथासेवन्तिकाकस्यभागानेकत्रमर्दयेत् ॥ कामोदनामासम्मर्दोदेवताराजतोषकृत् ॥ ७४९ ॥ कास्तूरिकश्चौतुमदःप्राणजातइतीर्य्यते ॥ पञ्च

---

१ संस्कारहीन विम वा दुनसल का ब्रात्य नाम है २ देवदारु का भेद चीर इति प्रसिद्ध ३ शतावरि ४ पीतचन्दन वा जायक नाम सुगन्ध द्रव्य ५ सुगन्धबाला ६ नागरमोथा ७ गहूला ८ सेवतीका फूल ९ असगन्ध १० सुगन्ध द्रव्य विशेष ११ लोबान ॥

मोयंसुगन्धस्तुदेवदानवतोषकृत् ॥ ७५० ॥ पुष्पंपञ्चविधंप्रोक्तंपरंचापरमे
च ॥ उत्तमंमध्यमंहीनन्तेषांवक्ष्यामिलक्षणम् ॥ ७५१ ॥ परंसुवर्णपुष्पंस्यात
त्सदायोग्यमेवहि ॥ अभ्यङ्गपूर्वकंदेयमर्चनार्हंसदाभवेत् ॥ अपरंराजतंपुष्पंत
म्रजंचप्रकीर्तितम् ॥ ७५२ ॥ सदायोग्यश्चेदमपित्रिवर्षचैकवर्षकम् ॥ तुलसी
केतकीपद्मंकरवीरश्चमौलती ॥ ७५३ ॥ पञ्चैतान्युत्तमान्याहुर्मध्यमानितथ
दश ॥ मल्लिकाकुन्दमन्दारवकुलार्जुनकिंशुकाः ॥ ७५४ ॥ पारिजातमशो
कंचबिल्वंचम्पकमेवच ॥ एतद्भिन्नंसुवर्णंचसुगन्धहतमुच्यते ॥ ७५५ ॥ त
त्तन्मन्त्रविधानेषुविहितानिसमर्चयेत् ॥ नार्पयेद्भूमिपतितंकोर्षणकंक्रमिभक्षि
तम् ॥ ७५६ ॥ अङ्गलग्नंसमाघ्रातंम्लानंपर्य्युषितंतथा ॥ उग्रगन्धमगन्धंच
ध्याद्भस्नानतस्तथा ॥ ७५७ ॥ पत्रंवायदिवापुष्पंफलंनेष्टमधोमुखम् ॥ दुःख
न्तुसमाख्यातंयथोत्पन्नंतथार्पणम् ॥ ७५८ ॥ चित्रपूजासुसर्वासुनविरुद्धस
दूषणम् ॥ अधोमुखार्पणंनेष्टंपुष्पाञ्जलिविधौनतत् ॥ ७५९ ॥ नपर्य्युषितदो
षोस्तितुलसीबिल्वचम्पके ॥ जलजेवकुलेगस्त्येमालाकारगृहेषुच ॥ ७६० ॥
केतकीकुटजैर्नैशंनार्चयेदक्षतैर्हरिम् ॥ नदूर्वयायजेद्दुर्गांबिल्वपत्रैर्दिवाकरम् ॥
७६१ ॥ लम्बोदरन्तुलस्याचएतद्धीनैःसमर्चयेत् ॥ नार्कपुष्पैर्यजेद्देवीमादित
तगरेणच ॥ ७६२ ॥ गणेशायचसूर्य्यायरक्तपुष्पमतिप्रियम् ॥ पुष्पाभावेप्रव
लैर्वातदभावेचकोरकैः ॥ ७६३ ॥ तदभावेफलैःपत्रैस्तदभावेतृणैःकुशैः ॥
कपित्थंदाडिमंकोलंजम्बूचिञ्चामलाम्रकम् ॥ ७६४ ॥ मातुलुङ्गंचजम्बीरंपन
संश्रेष्ठमुच्यते ॥ अथपुष्पोपचारान्तेकुर्य्यादावरणार्चनम् ॥ ७६५ ॥ मन्त्रस
म्पुटितैर्वर्णैर्मातृकायाःसबिन्दुकैः ॥ क्रमेणगन्धपुष्पाद्यैर्देवस्याङ्गंसमर्चयेत् ॥
७६६ ॥ लयाङ्गत्वेनमातॄणांस्थानाङ्गेषुततःपरम् ॥ आदावावरणंपूज्यंतद
न्तेदेवतांयजेत् ॥ ७६७ ॥ एवमभ्यर्च्यसर्वास्तायथोक्तावृत्तिदेवताः ॥ केशरेष्व

---

१ कनेर २ चमेली वा मालती प्रसिद्ध है ३ बेला ४ मौनसिरी ५ पलाश जो फुलवा
रियों में लगायाजाता है ६ तपेहुये ७ बासी ८ मालीके घरमें ९ कुरैया १० कर्त
११ बेर का फल १२ अँबिली १३ आँवला १४ आम १५ चकोतरानिम्बू १६ जम्भीरी
निम्बू १७ कटहर ॥

ग्निकोणादौहृदयादीनिपूजयेत् ॥ ७६८ ॥ नेत्रंमध्येदिशास्वस्त्रंध्यातव्या श्चाङ्गदेवताः ॥ तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः ॥ ७६९ ॥ वर दाभयदारिण्यःप्रधानतनवःस्त्रियः ॥ अग्नीशासुरवायव्यमध्यदिक्षुक्रमा त्स्थितः ॥ ७७० ॥ देवस्यपुरतःप्राचीज्ञेयावरणपूजने ॥ तदादिपरिवाराणां प्रादक्षिण्येनपूजनम् ॥ ७७१ ॥ अङ्गमन्त्रास्तुपूजायामोन्ताश्चौन्ताहुतौत था ॥ स्वाहान्ताअथदेवस्याभिमुखंतास्समवस्थिताः ॥ ७७२ ॥ ततोयजेल्लो कपालान्स्वस्वदिक्षुव्यवस्थितान् ॥ आयुधानितदग्रेचतेषांध्यानमथोच्य ते ॥ ७७३ ॥ इन्द्रंसुराधिपंपीठमैरावतगतंविभुम् ॥ सहस्रनेत्रंद्विभुजंपीठव ज्रधरंभजे ॥ ७७४ ॥ अग्निंतेजोधिपंरक्तंश्वेतशक्तिकरंप्रभुम् ॥ सभूषणंमेष वाहंदेवरंकान्तलोचनम् ॥ ७७५ ॥ यमंप्रेताधिपंकृष्णंमहिषोपरिसंस्थित म् ॥ करदण्डकरंक्रूरंवृतंदूतैर्भयानकैः ॥ ७७६ ॥ रक्षोधिपंचनिर्ऋतिंशवास नसमास्थितम् ॥ धूमाभंखड्गहस्तञ्चपिङ्गलश्मश्रुकूर्चकम् ॥ ७७७ ॥ मकरेसं स्थितंविद्युन्निभंपाशकराम्बुजम् ॥ शुभ्राङ्गंतुन्दिलंवन्देवरुणंयादसांपतिम् ॥ ७७८ ॥ वायुंप्राणप्रियंधूम्रंरक्तांकुशकरंपरम् ॥ वानप्रस्थसमारूढंधावन्तंवेग तोभजे ॥ ७७९ ॥ यक्षाधिपंकुबेरंचशुक्लंशुक्लगदाधरम् ॥ नारसिंहासनारू ढंपानपात्रयुतंभजे ॥ ७८० ॥ विद्याधिपंनीलशूलधरंवृषभवाहनम् ॥ त्रिनेत्रं भालचन्द्रंचजटाजूटधरंसितम् ॥ ७८१ ॥ गौरंनागाधिपंमूर्द्धिफणामण्डलभू षितम् ॥ पीनोत्तुङ्गंचक्रधरमनन्तंविश्वलंभजे ॥ ७८२ ॥ लोकाधिपंविधा तारंरक्तंपद्मकरंशुभम् ॥ हंसारूढंवेदपाठंकुर्वन्तंतमहंभजे ॥ ७८३ ॥ पुनर्मू लंसमुच्चार्य्यसाङ्गायैसपरीतिच ॥ वारायैचनामदेव्याश्चचतुर्थ्यन्तमुदीरयेत् ॥ ७८४ ॥ नमइत्यर्च्चयेद्गन्धपुष्पाद्यैस्साधकस्त्रिधा ॥ धूपपात्रंततोस्त्रेणलक्षये त्पूजयेत्ततः ॥ ७८५ ॥ हृदाणुनाथचास्त्रेणघण्टांसम्पूज्यवादयेत् ॥ धूपंदेयं गणेशस्यप्रियःप्रोक्तस्तुगुग्गुलुः ॥ ७८६ ॥ सैर्जंदेयंमहेशस्यनिर्यासोदेवदा

---

१ बीचमें पूज्य देव रहता है उसके और अपने बीचको पूर्वदिशा समझिये २ ओं अ- न्तमें है जिनके ३ लोकपालों की पूजाकरने के बाद मूलमन्त्रकहकर सांगायै सपरिवा- रायैदेव्यै नमः इस मन्त्र से पूजाकरे ४ नमःमन्त्रेण ५ राल धूप इति प्रसिद्ध ६ लाह वगादि ॥

रुजः ॥ विष्णोः कृष्णागुरुः सिह्लं भास्करस्य प्रियं मतम् ॥ ७८७ ॥ शक्तेर्देशां शं वक्ष्यामि शैलेयं मलयोद्भवम् ॥ नखं कुष्ठं सर्ज्जरसमेकैकांशं प्रकल्पयेत् ॥ ७८८ ॥ शिलारसागुरु जटामांसी भागद्वयं मतम् ॥ पँरमाक्षिकं सितां चाष्टौ धूपोयं शक्तिमोहनः ॥ ७८९ ॥ हरीतकी सर्ज्जरसं मुरां मांस्यः कुंभागिकाः ॥ लाक्षात्रिभागा चत्वारो भागाः शैलजमुस्तयोः ॥ ७९० ॥ पञ्चभागं नखं प्रोक्तं षड्भागं कुष्ठमुच्यते ॥ द्वादशांशो गुरुः केशैर्विघ्नविष्णुदशाङ्गकः ॥ ७९१ ॥ मधुमुस्ताघृतं गन्धो गुग्गुल्वगुरुशैलजम् ॥ सरलं सिह्लसिद्धार्थैः शेषदेवदशाङ्गकः ॥ ७९२ ॥ वामेन तु तथा धूपमग्रे वा न तु दक्षिणे ॥ न धूपं वितरेद्भूमौ नासने न पटे तथा ॥ ७९३ ॥ यथा तथा धारगतं कृत्वा तं विनिवेदयेत् ॥ मेदोमज्जायुतो नेष्टो विष्णवे दारुसम्भवः ॥ ७९४ ॥ पूजयित्वा स्वमन्त्रेण घण्टावादनपूर्वकम् ॥ दीपं दद्याच्च विभवैर्नानावाद्यपुरस्सरम् ॥ ७९५ ॥ तारो जयध्वनिपदं मन्त्रमाने ग्निगेहिनी ॥ एकादशाक्षरो मन्त्रो घण्टायास्सर्वसिद्धिदः ॥ ७९६ ॥ आवाहनार्घ्यधूपेषु पुष्पे नैवेद्यदीपयोः ॥ घण्टानादं प्रकुर्वीत विशेषाद्धूपदीपयोः ॥ ७९७ ॥ पूजाकालं विनान्यत्र कुर्य्यात्तस्या न वादनम् ॥ नानया च विना पूजां कारयेत्सिद्धिलालसः ॥ ७९८ ॥ गोसर्पिषा वा तैलेन वर्त्त्या चलघुगर्भया ॥ उच्चैः प्रदर्शयेद्दीपं न च मेदादिना क्वचित् ॥ ७९९ ॥ न मिश्रीकृत्य दद्यात्तु दीपं स्नेहाद्घृतादिकान् ॥ दत्त्वा मिश्रीकृतस्नेहा तामिस्रं नरकं व्रजेत् ॥ ८०० ॥ पैँरावतभ्रमाकारं भ्रामयेच्च प्रदर्शयेत् ॥ देवस्य सर्वावयवाञ्श्लोकमेकं ततः पठेत् ॥ ८०१ ॥ सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ॥ सबाह्याभ्यन्तरं ज्योतिर्दीपोयं प्रतिगृह्यताम् ॥ ८०२ ॥ दक्षिणे सार्षपं तैलं तिलतैलस्य वामतः ॥ सितावर्तिर्दक्षिणतो वामतो रक्तवर्त्तिका ॥ ८०३ ॥ पात्रेषु दीपो दातव्यो न तु भूमौ कदाचन ॥ कृत्वा तु पृथिवीभागे दीपमुत्सृजते नरः ॥ सतापपापं नरकं प्राप्नोति च शतं समाः ॥ ८०४ ॥ नैव निर्वापयेद्दीपं लक्ष्मीनाशकरो यतः ॥ पाद्य

१ लोबान २ मैनशिल ३ चन्दन ४ प्रसिद्ध है ५ कूट ६ मैनशिल वा शिलाजीत ७ छाभाग ८ ममाखी जिसको शहद कहते हैं ९ सफेदशकर १० हड़ ११ मुरहरी १२ जटामांसी १३ एकभाग १४ ब्रह्मा शिव , गणेश १५ सेरसों १६ ॐ जयध्वनिमन्त्रमाने स्वाहा १७ कबूतर का घूमना १८ बुझावे ॥

माचमनीयंचदत्त्वानैवेद्यमर्पयेत् ॥ ८०५ ॥ निधायस्वर्णकंपात्रंसाधारंमण्डले त्विह ॥ संस्थाप्यचतुरस्रंचसंस्कुर्य्याच्छास्त्रमार्गतः ॥ ८०६ ॥ अस्त्रमन्त्रेण सम्प्रोक्ष्य चक्रमुद्राभिरक्षितम् ॥ स्पर्शदृष्ट्यादिदोषांश्चवायुबीजेनशोषयेत् ॥ ८०७ ॥ स्पृशन्दक्षकराग्रेणवह्निबीजेननिर्दहेत् ॥ वंबीजेनामृतीकृत्यमूल मन्त्रेणतत्पुनः ॥ ८०८ ॥ स्पृशेत्कराभ्यांविधिवदष्टवाराभिमन्त्रितम् ॥ धेनुमुद्रांप्रदर्श्याथगन्धपुष्पैःसमर्चयेत् ॥ ८०९ ॥ देवमभ्यर्च्यकुर्य्याच्चपुष्पा ञ्जलिमनन्यधीः ॥ हेमपात्रस्थितंदिव्यंपरमान्नंसुसंस्कृतम् ॥ ८१० ॥ पञ्चधा षड्रसोपेतंगृहाणममसिद्धये ॥ मूलमन्त्रंसमुच्चार्य्यस्वाहान्तंजलमर्प्पयेत् ॥ ८११ ॥ कराभ्यांसंस्पृशन्पात्रंनैवेद्यान्तेनमोवदेत् ॥ देवस्यदक्षिणेहस्तेजलंद त्त्वापठेदिदम् ॥ ८१२ ॥ अमृतोपस्तरणमसिस्वाहेतिभैवाक्षरः ॥ दर्शयेद्दक्ष हस्तेनविकचोत्पलसन्निभाम् ॥ ८१३ ॥ दर्शयित्वाग्रासमुद्रांपञ्चप्राणाहुतिंचरे त् ॥ कनिष्ठानामिकांगुष्ठयोगःप्राणस्यमुद्रिका ॥ ८१४ ॥ तथाग्रासंगृहीत्वा प्राँणायस्वाहेतिसंवदेत् ॥ तर्जनीमध्यमांगुष्ठयोगेपानपदंवदेत् ॥ ङेन्तंस्वाहा न्तमथव्यानायचततोवदेत् ॥ ८१५ ॥ स्वाहान्तमध्यमानामांगुष्ठयोगेन निर्वपेत् ॥ हित्वाकनिष्ठांसर्वाभिरुंदानायाग्निगेहिनी ॥ ८१६ ॥ सर्वाभि स्तुसमानायस्वाहोक्त्वाग्रासमर्पयेत् ॥ ततःस्वर्णादिजेपात्रेसुतोयंधेनुमुद्रया ॥ ८१७ ॥ अमृतीकृत्यदेवायदेयंमन्त्रमिमंपठेत् ॥ नमस्तेदेवदेवेशसर्वतृप्तिक रंपरम् ॥ अन्नंनिवेदितंशुद्धंप्रकृतिस्थंसुशीतलम् ॥ ८१८ ॥ परमानन्दस म्पूर्णंगृहाणजलमुत्तमम् ॥ उक्त्वैवंदेवतावामेजलपात्रंनिवेशयेत् ॥ ८१९ ॥ त्रिभिर्वर्णैःप्रदातव्यंदेवार्थंशाकभोजनम् ॥ घृतपक्वंदुग्धसिद्धंसाधितंकेवला ग्निना ॥ ८२० ॥ युक्तंभैक्षवपङ्केनतच्छूद्रस्यप्रशस्यते ॥ ततःपुष्पाञ्जलिंद

---

१ हस्तौतुसम्मुखौकृत्वासंलग्नौसुप्रसारितौ ॥ कनिष्ठांगुष्ठकौलग्नौमुद्रैषाचक्रसञ्ज्ञिता ॥ दोनों हाथोंको जोड़कर अंगुष्ठों को अनामिका और कनिष्ठा अंगुलीके बीच में प्रवेश करने से चक्रमुद्रा होतीहै २ यं इति मन्त्रेण ३ रं इति बीजेन ४ फिर आठवार मूल मन्त्र पढ़कर अभिमन्त्रित कियेहुये तिसी पात्रको दोनों हाथों से छुवे ५ गेरह अक्षरोंका मन्त्र ६ फूले कमलके आकार दहिने हाथकी पांचों अंगुलियों को करनेसे ग्रसमुद्रा होतीहै ७ प्राणाय स्वाहा ८ अपानायस्वाहा ९ व्यानायस्वाहा १० उदानायस्वाहा ११ समानायस्वाहा ॥

द्यादस्त्रमन्त्रेणबन्धनम् ॥ ८२१ ॥ दिशांकृत्वायेषनिकांदेवस्यपरितोन्यसे
त् ॥ अमृतात्मैकनैवेद्यंनमइत्युच्चरेत्पुनः ॥ ८२२ ॥ धेनुमुद्रांप्रदर्श्याथमुञ्चा
नांदेवतांस्मरेत् ॥ अष्टोत्तरशतंजप्त्वामूलमन्त्रंददेज्जलम् ॥ ८२३ ॥ नैवे
द्यान्तेत्वाचमनंदत्त्वाहोमविधिंचरेत् ॥ पूर्ववत्संस्कृतेवह्नौदेवमावाह्यमन्त्रवि
त् ॥ ८२४ ॥ सम्पूज्यमूलमनुनापञ्चविंशतिमाहुतीः ॥ हुनेदाज्येनहविषा
तिलैर्वापायसैःशुभैः ॥ ८२५ ॥ तण्डुलैस्तिलमिश्रैर्वाकेवलैर्वापिपुष्पकैः ।
अङ्गावरणदेवानामेकैकामाहुतिंहुनेत् ॥ ८२६ ॥ उद्वास्यदेवंवह्निंचपूजास्थ
नंव्रजेत्ततः ॥ उपविश्यासनेमन्त्रैर्दद्याद्भूतबलिंततः ॥ ८२७ ॥ ईशानेमण्ड
लंकृत्वासाधारंतत्रनिक्षिपेत् ॥ अन्नंव्यञ्जनतोयाढ्यंपात्रंपुष्पादिपूरितम् ।
८२८ ॥ तत्रभूतानिसम्पूज्यततस्तेभ्योबलिंहरेत् ॥ येरौद्रारौद्रकर्म्माणोरौ
स्थाननिवासिनः॥ ८२९ ॥ योगिन्योप्यग्निरूपाश्चगणानामधिपाश्चये ।
भूचराःखेचराश्चैवयेतिष्ठन्त्यन्तरिक्षगाः ॥ ८३० ॥ सर्वतःप्रीतमनसोभूताग्र
ह्णन्त्विमंबलिम् ॥ वामहस्तेनतत्पात्रेजलधारांसमर्प्पयेत् ॥ ८३१ ॥ पुष्पाञ्ज
लिंसमादायभूतानिप्रार्थयेदिति ॥ ८३२ ॥ भूतानियानीहवसन्तिभूमौबलिं
गृहीत्वाविधिवत्प्रयुक्तम् ॥ सन्तोषमासाद्यव्रजन्तुसर्वेसमन्ततोन्यत्रनमोस्तु
भ्यः॥ ८३३ ॥ दत्त्वापुष्पाञ्जलिंनत्वाविहरन्तुयथासुखम् ॥ भूतादीनिचना
चमुद्रयाविसृजेत्ततः ॥ ८३४ ॥ देवंतृप्तमितिध्यात्वानैवेद्यंगतसारकम् ॥
श्चिन्त्यरक्षोदिग्भागेपात्रंतत्स्थापयेत्ततः ॥ ८३५ ॥ गोमयाद्भिस्तदस्त्रेणनैवे
द्यंस्थापयेत्ततः ॥ देवोच्छिष्टंगृहीत्वातुनिर्माल्यभोजिनेनमः ॥ ८३६ ॥ ईशा
न्यांतुविनिक्षिप्यहस्तंप्रक्षालयेत्ततः ॥ पुनराचमनंदद्यात्करोद्वर्त्तनमेवच ।
८३७ ॥ शुद्धमाचमनंदत्त्वासुगन्धैर्गन्धयेत्करौ ॥ ततोदद्याच्चताम्बूलंवि
वेद्वादशाङ्गकम् ॥ ८३८ ॥ खदिरैलालवङ्गेन्दुचूर्णपर्णतमालकम् ॥ जाति
फलंचजावित्रीकस्तूरीकेशरैर्युतम् ॥ ८३९ ॥ पूँगीफलमथप्रोक्तंद्शाङ्गंभास्

१ कनात २ धेनुमुद्राका लक्षण प्रथम कई जगह में कहाहै और इस ग्रन्थके आ
प्रकाशमें सब मुद्राओं के लक्षण लिखेहैं जिस मुद्राका काम लागै उसका लक्षण देखलो
३ खैर, इलायची, लवंग, कपूर, चून, पान, तमालनाम सुगन्ध द्रव्य, जायफल, जावि
कस्तूरी, केशर ४ सुपारी ॥

रस्यतु ॥ मृगनाभितमालाभ्यांहीनंविघ्नेश्वरस्यतु ॥ ८४० ॥ पञ्चाङ्गंचूर्णख
दिरपर्णपूगीफलेन्दुकम् ॥ शैवंदेव्याजातिकोशयुतंतच्चमहेशितुः ॥ ८४१ ॥
ततश्चमुकुटादीनिदद्याद्भूषणकानिच ॥ दर्शयेच्चतथादर्शंकल्पयेच्छत्रचाम
रे ॥ ८४२ ॥ शिरस्यारोप्यदेवस्यदूर्वाक्षतपवित्रकम् ॥ आरात्रिकंततःकुर्य्या
द्धर्म्मकामार्थसिद्धये ॥ ८४३ ॥ सौवर्णेराजतेकांस्येलोकनेत्रमनोहरे ॥ कुंकु
मेनलिखेत्पद्ममष्टपत्रंसुशोभनम् ॥ ८४४ ॥ कर्णिकायांमहादीपंतत्पत्रेष्व
ष्टदीपकान् ॥ वलयाञ्चितशोभाभिःशोभितान्घृतपूरितान् ॥ ८४५ ॥ अभि
मन्त्र्यततोमन्त्रीरत्नेश्वर्य्यानवार्णतः ॥ श्रींह्रींग्लूंस्तूंत्वथप्राग्वत्ततःश्रींह्रीमि
तिक्रमात् ॥ ८४६ ॥ रत्नेश्वर्य्याःसमुद्दिष्टस्ततोमूलेनतांयजेत् ॥ ततस्तत्पात्र
मुद्धृत्यमस्तकान्तंपुनःपुनः ॥ ८४७ ॥ नववारंभ्रामयेच्चचक्रमुद्रांप्रदर्शयेत् ॥
देवंप्रणम्यचततोप्राणायामत्रयंचरेत् ॥ ८४८ ॥ मूलमन्त्रेणाथपूर्वन्यासपूर्वा
न्समाचरेत् ॥ अष्टोत्तरसहस्रंतुनवद्वेत्रिशतंतुवा ॥ ८४९ ॥ अष्टोत्तरशतंचा
पिजपेन्मूलमतन्द्रितः ॥ समाप्तेतुजपेमालांनिदध्यान्मस्तकोपरि ॥ ८५० ॥
अर्घ्यपात्राज्जलंचैवगृहीत्वेदंपठेत्पुनः ॥ गुह्यातिगुह्यगोप्तात्वंगृहाणास्मत्कृ
तंजपम् ॥ ८५१ ॥ सिद्धिर्भवतुमेदेवत्वत्प्रसादाज्जगत्पते ॥ देवस्यदक्षिणेह
स्तेतोयंदत्त्वासमर्चयेत् ॥ ८५२ ॥ जपंचजपमालाचस्थाप्यारहसिवेष्टिता ॥
ततस्तुगीतस्तुतिभिर्घण्टावादनपूर्वकम् ॥ ८५३ ॥ ब्राह्मणोवेदमन्त्राद्यैःक्ष
त्रियःसंहितादिभिः ॥ पौराणिकाद्यैर्वैश्यस्तुशूद्रस्तुप्राकृतादिभिः ॥ ८५४ ॥
वामिनस्तूपचारान्तेकुर्य्युर्मद्येनतर्प्पणम् ॥ तेषामनित्योहोमस्तुनित्यंतर्प्पण
सेवनम् ॥ ८५५ ॥ कौलिकैःशक्तिसहितैस्तदुच्छिष्टञ्चसेचयेत् ॥ मोहा
द्वाकामतःशूद्रःपुराणंवास्मृतिंपठेत् ॥ ८५६ ॥ संहितान्नरकमाप्नोतिपितृ
भिस्सहपापकृत् ॥ यःशूद्रोबुद्धिपूर्वन्तुशृणुयाच्छ्रावयेद्द्विजः ॥ ८५७ ॥
वेदांस्तौदुःखितावस्मिन्भवेन्यत्रचनारकौ ॥ अधिकारमदाद्यस्तुधनस्य
मदतोपिवा ॥ ८५८ ॥ शूद्रस्तुशृणुयाद्वेदंसनिर्वंशस्तुनिर्धनः ॥ अज्ञा

---

१ श्रीं ह्रीं ग्लूं स्तूं श्रीं ह्रीं ग्लूं स्तूं ह्रीं ॥ इति नवाक्षरः रत्नेश्वरीमन्त्रः ॥

नाचेच्छ्रुतोवेदःश्राविर्तोवाद्विजन्मनाः ॥ ८५६ ॥ प्राजापत्यत्रयंकृत्वातौ संशुद्धौभविष्यतः ॥ ततोर्घ्यपात्रमादायमूलमुच्चार्य्यमन्त्रतः ॥ ८६० ॥ साधुवासाधुवाकार्म्मयद्यदाचरितंमया ॥ तत्सर्वंभगवन्देवगृहाणाराधनंवरम् ॥ ८६१ ॥ इत्यर्घ्योदकमुत्सृज्यकिञ्चिद्देवस्यदक्षिणे ॥ करेसमर्प्पयेद्विद्वान्कृतमाराधनंततः ॥ ८६२ ॥ भक्त्याप्रणम्यदेवेशंश्लोकैरेभिःसमर्प्पयेत् ॥ यद्दत्तंभक्तिमात्रेणपत्रंपुष्पंफलंजलम् ॥ ८६३ ॥ निवेदितंचनैवेद्यंतद्गृहाणानुकम्पया ॥ आवाहनंनजानामिनजानामिविसर्ज्जनम् ॥ ८६४ ॥ पूजांचैवनजानामित्वंगतिःपरमेश्वर ॥ कर्म्मणामनसावाचात्वत्तोनान्यामतिर्मम ॥ ८६५ ॥ अन्तश्चारेणभूतानांद्रष्टात्वंपरमेश्वर ॥ नाथयोनिसहस्रेषुयेषुयेषुव्रजाम्यहम् ॥ ८६६ ॥ तेषुतेष्वचलाभक्तिरव्ययास्तिसदात्वयि ॥ देवोदाताचभोक्ताचदेवस्सर्वमिदंजगत् ॥ ८६७ ॥ देवोजयतिसर्वत्रयोदेवःसोहमेवहि ॥ ततोर्घ्यपात्रतोयेनकुर्य्यादाराधनार्प्पणम् ॥ ८६८ ॥ ब्रह्मार्प्पणस्यमनुनाकुर्य्याद्ब्रह्मार्प्पणंततः ॥ तारस्तत्सत्पूर्वमितिप्राणबुद्धीतिसंवदेत् ॥ ८६९ ॥ देहधर्म्माधिकारेतिजाग्रत्स्वप्नसुषुप्त्यवस्थासूक्त्वामनसावाचाकर्म्मणाभ्यन्तराततः ॥ ८७० ॥ यच्छब्दश्चोदरेणेतिशिश्नवायचस्मृतंचयत् ॥ उक्तंयच्चकृतंतच्चसर्वंब्रह्मार्प्पणंभव ॥ ८७१ ॥ भूस्स्वाहेतिचमन्त्रोयंपद्दषड्वर्णःसमीरितः ॥ उद्वासयेत्ततोदेवंपरिवारगणैस्सह ॥ ८७२ ॥ इतिपुष्पाञ्जलिंदत्त्वाप्रणम्यपरिभावयेत् ॥ देवस्याग्रेविलीनंतुरश्मिवृन्दमशेषतः ॥ ८७३ ॥ तेजोरूपंशिवंध्यात्वाक्षमस्वेतिपुनःपुनः ॥ क्षमाप्यारोपयेत्स्वीयेहृदम्भोजेतुदेवताम् ॥ ८७४ ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानं

---

१ तीनदिन प्रभात काल और तीनदिन शाममें व तीनदिन अयाचित भोजन करै और तीनदिन उपवास करै इसको प्राजापत्य व्रत कहते हैं २ ब्रह्मार्प्पणमन्त्रसे उसको कहते हैं ॐतत्सत्प्राणबुद्धिदेहधर्म्माधिकारजाग्रत्स्वप्नसुषुप्त्यवस्थासुमनसावाचाकर्म्मणाभ्यन्तरायच्चोदरेणशिश्नवायच्चस्मृतंयदुक्तंयच्चकृतंतत्सर्वंब्रह्मार्प्पणंभवेत्भूस्स्वाहा, गीतामें श्रीकृष्णजी के मुख कमलसे निकला ब्रह्मार्प्पण मन्त्र सो अन्यहै जैसे–ब्रह्मार्प्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणाहुतम् । ब्रह्मैवतेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ॥

परमेश्वर ॥ यत्तेब्रह्मादयोदेवानविदुःपरमंपदम् ॥ ८७५ ॥ विसृज्यानेनमन्त्रेणततःपूरकवायुना ॥ ध्यायेच्चमन्त्रेणानेनध्यात्वातांस्थापयेद्धृदि ॥ ८७६॥ तिष्ठतिष्ठपरस्थानेस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयःसर्वेसुरास्तिष्ठन्तिमेहृदि ॥ ८७७ ॥ इतिसंस्थाप्यसम्पूज्यस्वात्मानंतन्मयंस्मरेत् ॥ ईशान्यांमण्डलंकुर्य्याद्द्वारिपद्मविवर्जितम् ॥ ८७८ ॥ निर्माल्यमोक्तुंपूजार्थपञ्चायतनपूजने ॥ कर्त्तव्यानितुपञ्चैवईशानाद्यंसमर्चयेत् ॥ ८७९ ॥ लम्बोदरोगणेशस्यतेजश्चन्द्रोविवस्वतः ॥ विष्वक्सेनोहरेःप्रोक्तईश्वरीचमहेशितुः ॥ ८८० ॥ चण्डेश्वरोभवान्याश्चमन्त्रैरेताद्दर्शंचरेत् ॥ लेह्यचोष्यान्नपानादिनिर्माल्यंप्रविलेपनम् ॥ ८८१ ॥ निर्माल्यभोजिनेतुभ्यंददामिश्रीशिवाज्ञया ॥ इतिनैवेद्यशेषंतुदत्त्वानत्वाविसर्ज्जयेत् ॥ ८८२ ॥ अथह्रींह्रींसःबीजैस्तुसहितैर्नमसापुनः ॥ मन्त्रेणभास्करायार्घ्यमच्छिद्रार्थनिवेदयेत् ॥ ८८३ ॥ यन्नच्छिद्रंतपरिछिद्रंयच्छिद्रंपूजनेमम ॥ सर्वंतदच्छिद्रमस्तुभास्करस्यप्रसादतः ॥ ८८४ ॥ अर्घ्यतोयेनचततोगन्धपूजावशेषितम् ॥ आलोड्यकिञ्चिन्मूलेनमन्त्रयेदष्टधापुनः ॥ ८८५ ॥ प्रोक्षयेत्तेनतोयेनतत्स्थानंमूलमन्त्रतः॥ निर्माल्यंमस्तकेधार्य्यंमूलमन्त्रेणमन्त्रिणा ॥ ८८६ ॥ प्राश्यपादोदकंपश्चान्नैवेद्यंविभजेत्ततः ॥ तद्भक्तेभ्यःस्वयंभुक्त्वातन्मयोह्विवसेत्सुखम् ॥ ८८७ ॥ शैवस्तुशिवनिर्माल्यप्रसादस्याधिकारवान् ॥ अन्योनिरयमाप्नोतिनदोषःपञ्चसङ्गमे ॥ ८८८ ॥ स्वयंतुलिङ्गतीर्थत्राप्रासादंवापिभक्तितः ॥ कृत्वाशैवाद्यशैवावामुच्यन्तेपापराशितः ॥ ८८९ ॥ शूद्रसंस्थापितंलिङ्गंपूजयेद्वानमेत्तदा ॥ तत्सम्बन्धिप्रसादादिगृह्णन्निरयमाप्नुयात् ॥ ८९० ॥ प्रातरुत्थायगुर्वादिस्मृत्वाशौचंसमाचरेत् ॥ स्नानंसन्ध्यातर्पणंचवैदिकंतान्त्रिकंतथा ॥ ८९१ ॥ आगत्यचगृहेपश्चात्प्राणायामत्रयंचरेत् ॥ कुर्य्याच्चमातृकान्यासंतथाछन्दर्षिदैवतम् ॥ ८९२ ॥ तन्मन्त्रस्यकराङ्गाख्यंन्यासंकृत्वातथास्थितिम् ॥ मन्त्रस्नानंदेवतायाःपूजापञ्चोपचारिका ॥ ८९३ ॥ वैश्वदेवान्तरे

१ पा निर्लज्जादिगम्बराः, योगीजन रमते हैं जिसमें उसको परम कहते हैं २ पांचमण्डल ३ ह्रीं ह्रीं सः भास्करायनमः इति मन्त्रेण ॥

तत्रददेदाहुतिपञ्चकम् ॥ मूलेनहोमयेत्तत्र जपेच्चाष्टोत्तरंशतम् ॥ ८६४ ॥ वैदिकीकाकबल्यन्तापूजाचोच्छिष्टभोजनम् ॥ ततःसम्प्रार्थयेद्देवंसायंसन्ध्यां समाचरेत् ॥ ८६५ ॥ देवागारेदीप्यमानेप्रोक्तंसंक्षेपमाह्निकम् ॥ अथापराह्णिकंवक्ष्येतत्स्थानदशकेभवेत् ॥ ८६६ ॥ मार्गेप्रवासेदुर्गेचरोगग्रासेमहाभये ॥ कारागृहेऽशुभेस्थानेसर्पव्याघ्रादिजेभये ॥ ८६७ ॥ पैरचक्रागमेकुर्य्यात्करायन्तुयथातथा ॥ तत्रस्नानादिजंचिन्त्यंकृत्वामानसपूजनम् ॥ ८६८ ॥ मनसाहृदयेतच्चध्यात्वायोगाख्यपीठकम् ॥ तत्रैवपृथवीमध्येपूजां देवस्यचाचरेत् ॥ ८६९ ॥ यथापुष्पादिभिःपूजाबहिर्देशेविधीयते ॥ तथाहृद्यपिकर्त्तव्यासर्वाशाप्रतिपत्तये ॥ ९०० ॥ मनसाचचरेद्धोममेतद्धिपदिचाह्निकम् ॥ अथातश्चाह्निकंवक्ष्येनित्यंस्वास्थ्याधिकस्यतत् ॥ ९०१ ॥ यदि लङ्घनपर्य्यन्तेव्याधिरात्मनिदृश्यते ॥ तदापूजानकर्तव्यास्थण्डिलेप्रतिमासुच ॥ ९०२ ॥ नस्नानंदन्तकाष्ठंवाकुर्य्याद्धोममथापिवा ॥ रविमण्डलमालोक्यप्रतिमामथवापुनः ॥ ९०३ ॥ मूलमन्त्रंसकृज्जप्त्वापुष्पंसाक्षतमुत्सृजेत् ॥ क्रान्तोव्याधिभिरत्युग्रैर्जरयाचेन्द्रियैस्तथा ॥ ९०४ ॥ निजसामयिकैर्वापिस्वकर्तव्यंसमापयेत् ॥ रुग्निवृत्तस्ततस्स्नात्वापूजयित्वाग्निदेवताः ॥ ९०५ ॥ गुरून्विप्रांस्तदग्रेचवाक्यमेतदुदीरयेत् ॥ एतावत्कालविच्छिन्नापूजायुष्मत्प्रसादतः ॥ ९०६ ॥ नदोषोस्त्विति सम्प्रार्थ्यपुनःपूर्ववदाचरेत् ॥ यस्तुरोगवशाद्दोषोयतस्तत्क्षालनंचरेत् ॥ ९०७ ॥ जपेनचाथध्यानेनहोमेनदानतोपिवा ॥ अथसूतकिनांनित्यंवैदिकन्तुश्रुतीरितम् ॥ ९०८ ॥ कृत्वातान्त्रिकपूजादिमनसैवसमाचरेत् ॥ कामनार्थप्रयोगश्चेत्तदापूर्ववदाचरेत् ॥ ९०९ ॥ सूतगेहंपरित्यज्यवामाचारेनसूतकम् ॥ स्पृहांहित्वाज्ञानपूर्वंकुलतोधर्ममार्गतः ॥ ९१० ॥ यथालभेद्ध्यानधर्म्मंभक्त्यावामेकरोतियः ॥ शास्त्रतत्त्वंदेवतत्त्वंनोवेत्तिसतुगुह्यकः ॥ ९११ ॥ ज्ञानंवामेनभजतेसुखार्थीतत्रजायते ॥ क्षुत्तृड्भ्यामर्दितःप्रेतस्तस्याधर्म्मंविचारयेत् ॥ ९१२ ॥ पूजोदकेनकर्तव्यातद्यन्त्रंनैवविद्यते ॥ तदासम्पूजयेद्देवंभावनाकुसुमादिभिः ॥ ९१३ ॥

१ अपने देशमें अन्य देशके राजाकी सेना चढ़आवे उसको परचक्रागम कहते हैं ॥

भक्तिःश्रद्धाभावनाचपूजानांजीवउच्यते ॥ जडानामाह्निकंवक्ष्येतथासंक्षेप कर्म्मणि ॥ ६१४ ॥ रत्नमण्डपधर्म्मादिचतुष्कमरुणाम्बुजम् ॥ मूलमूर्त्तिष डङ्गानितेषांपूजाभिधीयते ॥ ६१५ ॥ सर्वेषामपिवस्तूनामलाभेभावनैवहि ॥ निर्मलेनोदकेनैवपूजयेत्स्थिरमानसः ॥ ६१६ ॥ सामान्यतस्त्रिधापूजाचोत्त माधममध्यतः ॥ अधिकारिनिमित्ताभ्यांभिद्यतेशतधापुनः ॥ ६१७ ॥ यासोपकरणापूजाक्रियमाणोत्तमामता ॥ यथालब्धैर्विनिष्पाद्याद्रव्यैःपूजा तुमध्यमा ॥ ६१८ ॥ पत्रपुष्पाम्बुनिष्पाद्यापूजासाधमसञ्ज्ञका ॥ विहिता खिलवेदोक्तैर्ब्रह्मर्षिभिरकल्मषैः ॥ ६१९ ॥ क्रियमाणांतुयापूजासात्त्विकीसा विमुक्तिदा ॥ राजर्षिभिस्तपोनिष्ठैर्भगवत्तत्त्ववेदिभिः ॥ ६२० ॥ यापूजा क्रियतेसम्यग्राजसीसासुखप्रदा ॥ स्त्रीबालवृद्धमुख्याद्यैर्भक्तैरक्षुण्णमनुषैः ॥ ६२१ ॥ यापूजाक्रियतेनित्यंतामसीसाप्रकीर्त्तिता ॥ वेदेकर्त्तुंतुनोशक्तास्त न्त्राणितुयुगेयुगे ॥ ६२२ ॥ कल्यंशसम्भवैर्विप्रैर्यैर्नाम्नाकीर्त्तितानितु ॥ कलि नाप्रेरिताविप्रास्तत्तन्त्रपथगामिनः ॥ ६२३ ॥ कामलोभादिभिर्ग्रस्ताब्राह्मण्य रहितानराः ॥ म्लेच्छास्तेतुभविष्यन्तिक्षीणपुण्याश्चरौरवे ॥ ६२४ ॥ पतिष्यन्तीतिविज्ञायनवैवैदिकमुत्सृजेत् ॥ उल्लासैरहितंगोप्यंपटलैर्विष्णुगो पनम् ॥ ६२५ ॥ अध्यायैर्यैकृताग्रन्थास्स्वाध्यायास्तेद्विजन्मनाम् ॥ यमुद्दि श्यकृतंतन्त्रंतस्यतत्रप्रधानता ॥ ६२६ ॥ मेरुतन्त्रेतुयत्प्रोक्तंतत्स्थिरंनान्यथा भवेत् ॥ इतिदेवाःसमाख्यातोयुष्मत्प्रश्नविनिर्णयः ॥ ६२७ ॥ यद्धिचार्य्ये कृतंकर्म्मनदुःखायप्रवर्तते ॥ अतोवेदोदितंकर्म्मकार्य्यंनिःश्रेयसायवै॥६२८॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतआह्निकप्रकाशःपञ्चमः ॥ ५ ॥

---

१ पूजामें जो जो वस्तु न हो उसके देनेकी भावना मनही से करलेना २ कामक्रोधादि कलिदोषों से युक्त अजितेन्द्रिय मनुष्यों को वैदिक धर्म्म में अनधिकार जानकर पूर्वाचार्य्यों ने तंत्रोंकी रचनाकी उनमें जो वैदिक धर्म्म सो सबको कर्त्तव्य है और बलि वाममार्गादि जो वेद विरुद्ध वह केवल किसी सूरतसे मूर्ख शूद्रादिकोंकी देवभक्ति में प्रवृत्ति होनेके लिया कहागयाहै तन्त्राचार्य्यों के आशयको न समझकर जे उसी वेदविरुद्ध धर्म्मको मुख्य मानतेहुये करते कराते हैं वे ब्रह्मतेज से रहित होकर नरक में पड़ते हैं ॥

श्रीदेव्युवाच ॥ पुरश्चरणशब्दस्यब्रूह्यर्थंचविधिंप्रभो ॥ वैदिका स्सर्वेमन्त्रानसिद्ध्यन्तिचर्यंविना ॥ १ ॥ ईश्वरउवाच ॥ रहस्यंसर्वमन्त्रा कथयामितवाग्रतः ॥ कल्पयर्थंसर्वतन्त्रेषुयत्सारंतत्तुगोपितम् ॥ २ ॥ धर्म्म कामोक्षाणांसाधकोमन्त्रउच्यते ॥ तत्सिद्धयेपुराय च चर्य्यतेतत्प्रकीर्त्तित ३ ॥ पुरश्चरणकर्म्माख्यंवेदादौशाबरान्तके ॥ मन्त्रोयस्तुतथासस्या कारंप्रवीम्यहम् ॥ ४ ॥ जपोहोमस्तर्पणंचमार्ज्जनंविप्रभोजनम् ॥ प कंस्वरूपंतदाहुःकेचनतत्रतु ॥ ५ ॥ चतुरङ्गास्त्वथत्र्यङ्गाद्व्यङ्गाएकाङ्गि पिच ॥ मन्त्रास्तिष्ठन्तिवेदेषुतथातन्त्रेचशाबरे ॥ ६ ॥ केचित्षडङ्गामन्त्रा स्तदङ्गाञ्ज्ञापयामिवै ॥ अघमर्षणसूर्य्यार्घेनजपेनप्रणामकैः ॥ ७ ॥ देव यापञ्चभिश्चएवंपञ्चाङ्गकाःस्मृताः ॥ हुतिर्यागस्तथाचार्चाकर्म्मतश्चक नात् ॥ ८ ॥ ध्वजलिङ्गसमायोगाज्जपाच्चबलिदानतः ॥ महाबलिप्रदा च्चभवत्येकादशाङ्गकः ॥ ९ ॥ षोडशाङ्गोकौलिकानांगणानामधिकारिता सर्वपापक्षयंकुर्य्यादथवासिद्धिवन्धकृत् ॥ १० ॥ यावत्पापंतस्यनाशंकृ कुर्य्यात्पुरस्कृतिम् ॥ यथाप्रोक्तेनमार्गेणतस्यसिद्धिरदूरतः ॥ ११ ॥ सर्व क्षयस्तत्रभवेद्वैदिकवर्त्मनाम् ॥ तान्त्रिकानांकौलिकानांवामिनांनाधि रिता ॥ १२ ॥ तस्मिन्कर्म्मणितेषान्तुनाधिकारोस्तिवैदिके ॥ ऋकृशा ध्यायिभिःकार्य्योगणकोयोथतद्विधिः ॥ १३ ॥ स्नातःकृतक्रियःपती तोदर्भसंस्तरः ॥ प्राणानायम्यसङ्कल्प्यपूजयित्वागणेश्वरम् ॥ १४ ॥ स्वो ह्योक्तविधानेनसंस्थाप्याग्निंचसंश्रयेत् ॥ आज्यंविलिप्यतद्धव्यंद्विरावो तेततः ॥ १५ ॥ अग्नेनयेतिसूक्तेनषडर्चेनहुनेत्पुनः ॥ प्रतिमन्त्रंवदे गोग्नयेचेदंनवैमम ॥ १६ ॥ इत्यथात्रऋचोवक्ष्येमास्तुशाखाविपर्य्ययः १७ ॥ ॐअग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ यु ध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमउक्तिंविधेम ॥ १८ ॥ प्रवःशुक्रायभा

---

१ कलियुगमें उत्पन्न जनोंकी भुक्तिमुक्तिके लिये २ अपने गृह्यसूत्रमें कहेहुये विधा ३ ॐ अग्नेनयइत्यादि एक एक मंत्र पढकर स्वाहा देना और अग्नयेचेदंनवैमम इस वा स्वाहा के अन्तमें कहते जाना ॥

भरध्वंहव्यंमनिचाग्नयेसुयुतम् ॥ योदैव्यानिमानुषाजनुष्यन्तर्विश्वानिविद्मनाजिगाति ॥ १९ ॥ अच्छागिरोमतयोदेवयन्तिरग्निंपतिद्रविणंभिक्षमाणाः ॥ सुसंदृशंसुप्रतिकंस्वंचहव्यवाहमरतिंमानुषाणाम् ॥ २० ॥ अग्नेत्वमस्मद्युयोध्यमीवाअनग्नित्वाअभ्यमन्तकृष्टीः ॥ पुनरस्मभ्यंसुवित्तायदेवाक्षाविश्वेभिरमरेभिर्यजत्रा ॥ २१ ॥ अग्नेत्वंपारयानव्योअस्मान्स्वस्तिभिरतिदुर्गाणिविश्वा ॥ पूश्चपृथ्वीबहुलानउर्वीभवातोकायतनयायशंयोः ॥ २२ ॥ प्रकारवोमननावच्यमानादेवद्रीचींनयथदेवयन्तः ॥ दक्षिणावाड्वाजिनीप्राचोतिहविर्भरन्त्यग्नयेघृताची ॥ २३ ॥ पुनरष्टादशर्चेनपौरुषेणततोहुनेत् ॥ जगद्बीजायपुरुषायनममेतिसन्त्यजेत् ॥ २४ ॥ अवैष्णवोवैष्णवस्तुनारायणायनमम ॥ देवदेवीप्रियंसूक्तंतदिदानींनिगद्यते ॥ २५ ॥ ॐ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलम् ॥ २६ ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २७ ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ २८ ॥ त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ २९ ॥ तस्माद्विराडजायतविराजोअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ३० ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसन्तोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ ३१ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायज्ञंतन्वानाअबध्नन्पुरुषंपशुम् ॥ ३२ ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाअयजन्तसाध्याऋषयश्चये ॥ ३३ ॥ तस्माद्यज्ञात्सर्वहुतःसम्भृतंपृषदाज्यम् ॥ पशूंस्तांश्चक्रेवायव्यानारण्यान्ग्राम्यांश्चये ॥ ३४ ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥ छन्दांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ ३५ ॥ तस्माअश्वाअजायन्तयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ ३६ ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकि

---

१ अवैष्णव प्रति मंत्रके अन्तमें स्वाहा देनेके समय, जगद्बीजायचेदंनममम, इस वाक्य को और वैष्णव नारायणायचेदंनममम, इसका उच्चारण करे ॥

मस्यकौवाहूकाऊरूपादाउच्येते ॥ ३७ ॥ ब्राह्मणोऽस्यमुखमासीद्बाहूराजन्
कृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ ३८ ॥ चन्द्रमामनसो
तश्चक्षोस्सूर्य्योअजायत ॥ मुखादिन्द्रश्चाग्निश्चप्राणाद्वायुरजायत॥३९
नाभ्याआसीदन्तरिक्षंशीर्ष्णोद्यौःसमवर्त्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्
लोकानकल्पयन् ॥ ४० ॥ वेदाहमेतंपुरुषंमहान्तमादित्यवर्णंतमसस्तुपा
सर्वाणिरूपाणिविचित्यधीरोनामानिकृत्वाभिवदन्यदास्ते ॥ ४१ ॥ धात
रस्तात्यमुदाजहारशक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभव
नान्यःपन्थाअयनायविद्यते॥ ४२ ॥यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणि
थमान्यासन् ॥ तेहनाकंमहिमानःसचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ॥ ४३
अग्नेर्मन्वेतिसूक्तेनद्वाविंशत्यृचकेनतु ॥ हुनेत्त्वत्रिषुत्यागस्त्वंग्नयेन
तिच ॥ ४४ ॥ तुर्य्येचेन्द्रायनममत्यागःपञ्चमषष्ठयोः ॥ मित्रावरुणाभ्यामि
सप्तमाष्टमयोस्तथा ॥ ४५ ॥ वायुसूर्य्याभ्यामितिनवमेदशमेतथा ॥ अ
भ्यांचमरुद्भ्यस्तुद्वादशैकादशेभवेत् ॥ ४६ ॥ विश्वेभ्योदेवेभ्यइतित्रयोद
चतुर्दश ॥ अनुमत्यैहव्यवाहाग्नयेचतिथिसङ्ख्यके ॥ ४७ ॥ अनुमत्यै
शेस्यात्तुततःसप्तदशेभवेत् ॥ वैश्वानरायाग्नयेच तथैवाष्टादशेपिच ॥ ४८
द्यावापृथिवीभ्यामितिविंशत्येकोनविंशयोः ॥ शेषयोरग्नयेचेतिऋचर
शृणुसाम्प्रतम् ॥ ४९ ॥ अग्नेर्मन्वेतिप्रथमस्यप्रचेतसोयंपाञ्चजन्यंबहव
समिन्धतेविश्वस्यांविशिप्रविविशिवासमीमहेसनोमुञ्चत्वंहसः ॥ ५०
यस्येदंप्राणनिमिषद्यदेजातियस्यजातंजनमानंचकेवलम् ॥ स्तौम्यग्निना
तोजोहवीमिसनोमुञ्चत्वंहसः ॥ ५१ ॥ इन्द्रस्यमन्येप्रथमस्यप्रचेतसोवृत्र
स्तोमाउपमामुपागुः ॥ योदाशुषःसुकृतोहवमुपगन्तासनोमुञ्चत्वंहसः
५२ ॥ यःसंग्रामंनयतिसंवशीयुधेयःपुष्टानिसंसृजतित्रयाणिस्तौमीन्द्र
थिनोजोहवीमिसनोमुञ्चत्वंहसः ॥ ५३ ॥ मन्वेवांमित्रावरुणातस्यवित्त

१ अग्नयेचेदंनमम इस मंत्रसे स्वाहा देना इसी रीतिसे आगे के नामों में वाक्य ब
जोड़कर स्वाहा देताहुआ २ चौथे, इन्द्रायचेदंनमम ३ पञ्चम षष्ठ में, मित्रावरुणाभ्यां
४ सप्तमअष्टममें वायुसूर्य्याभ्यांनमम आगे यही रीतिहै ॥

सत्यौजसादृंहणायन्नुदेथे ॥ त्याराजानंसरथपाथउग्रातौनामुञ्चतमागसः ॥ ५४ ॥ योवांरथःसजूरश्मिःसत्यधर्म्मामिथश्चरत्वंसमुपयातिदूषयन् ॥ स्तौमिमित्रावरुणौनाथितोजोहवीमितौनोमुञ्चतमागसः ॥ ५५ ॥ वायोस्सवितुर्विदथानिमन्महे यावात्मन्वद्विभृतौयौचरक्षतः ॥ यौविश्वस्यपरिभूवभूवतुस्तौनोमुञ्चतमागसः ॥ ५६ ॥ उपश्रेष्ठानआशिषोदेवयोर्धर्मेअस्थिरन् ॥ स्तौमिवायुंसवितारंनाथितोजोहवीमितौनोमुञ्चतमागसः ॥ ५७ ॥ रथीतमौरथीनामह्वऊतयेशुभङ्गमिष्ठौसुयमेभिरश्वैः ॥ ययोर्वान्देवौदेवेष्वनिशितमोजस्तौनोमुञ्चतमागसः ॥ ५८ ॥ यदयातंवहतुंसूर्य्यायाश्त्रिचक्रेणसंसदमिच्छमानौ ॥ स्तौमिविश्वान्देवान्नाथितोजोहवीमितौनोमुञ्चतमागसः ॥ ५९ ॥ मरुतांमन्वेअधिनोब्रुवन्तुप्रेमांवाचंविश्वामवन्तुविश्वे ॥ आसून्हवेसुयमानूतयेतेनोमुञ्चन्त्वेनसः ॥ ६० ॥ तिग्मायुधवीडितंसहस्वद्दिव्यःसर्व्वःपृतनासुविष्णुः ॥ स्तौमिदेवान्मरुतोनाथितोजोहवीमितेनोमुञ्चन्त्वेनसः ॥ ६१ ॥ देवानांमन्वेअधिनोब्रुवन्तुप्रेमांवाचंविश्वामवन्तुविश्वे ॥ आसून्हवेसुयमानूतयेतेनोमुञ्चन्त्वेनसः ॥ ६२ ॥ यदिदंमाभिशोचतिपौरुषेयेणदैव्येनस्तौमि विश्वान्देवान्नाथितोजोहवीमितेनोमुञ्चन्त्वेनसः ॥ ६३ ॥ अनुनोद्यानुमतिर्यज्ञंदेवेषुमन्यताम् ॥ अग्निश्चहव्यवाहनोभवतांदाशुषेमयः ॥ ६४ ॥ अन्विदनुमतेत्वंमन्यासैशंचनःकृधि ॥ क्रत्वेदक्षायनोहिनुप्रणआयूंषितारिषः ॥ ६५ ॥ वैश्वानरोनऊतयेप्रयातुपरावतः अग्निर्नःसुष्टुतीरुप ॥ ६६ ॥ पृष्ठोदिविपृष्ठोअग्निःपृथिव्यापृष्ठोविश्वाओषधीराविवेश ॥ वैश्वानरःसहसापृष्ठोअग्निःसनोदिवासरिषःपातुनक्तम् ॥ ६७ ॥ येअप्रथेताअमितेभिरोजोभिर्येप्रतिष्ठेअभवतांवसूनाम् ॥ स्तौमिद्यावापृथिवींनाथितोजोहवीमितेनोमुञ्चतमंहसः ॥ ६८ ॥ उर्वीरोदसीवरिवःकृणोतंक्षेत्रस्यपत्नीअधिनोब्रूयातम् ॥ स्तौमिद्यावापृथिवींनाथितोजोहवीमितेनोमुञ्चतमंहसः ॥ ६९ ॥ यत्तेवयंपुरुषत्रायविष्ठाविद्वांसश्चकृमाकच्चनागः ॥ कृधास्वस्मानदितेरनागाव्येनांसिशिश्रथोविष्वगग्ने ॥ ७० ॥ यथाहताद्वसवोगौर्य्यंचित्पदिषितामुञ्चतायजत्राः ॥ एवोष्वस्मन्मुञ्चता

मंहःप्रतार्य्यग्नेप्रतरंनआयुः ॥ ७१ ॥ यावामिन्द्रावरुणेतिचतुर्भिःसूक्तकैस्त तः ॥ इन्द्रावरुणाभ्यामितित्यागःसर्वत्रनान्यथा ॥ ७२ ॥ यावामित्रावरुणा यतव्यातनूस्तयेममछंहसोमुञ्चतम् ॥ ७३ ॥ यावामिन्द्रावरुणासहस्यातनू स्तयेममछंहसोमुञ्चतम् ॥ ७४ ॥ यावामिन्द्रावरुणारक्षस्यातनूस्तयेमम छंहसोमुञ्चतम् ॥ ७५ ॥ यावामिन्द्रावरुणातेजस्यातनूस्तयेममछंहसो मुञ्चतम् ॥ ७६ ॥ योवामिन्द्रावरुणेति ततोष्टभिश्चहोमयेत् ॥ इ न्द्रावरुणाभ्यामितित्यागःसर्व्वत्रनान्यथा ॥ ७७ ॥ योवामिन्द्रावरुणा वग्नावग्नौस्नामस्तंवामेतेनावयजे ॥ ७८ ॥ योवामिन्द्रावरुणाद्विपात्सु पशुषुस्नामस्तंवामेतेनावयजे ॥ ७९ ॥ योवामिन्द्रावरुणौषधीषुस्नाम स्तंवामेतेनावयजे ॥ ८० ॥ योवामिन्द्रावरुणावनस्पतिषुस्नामस्तंवामेते नावयजे ॥ ८१ ॥ पावमानानुवाकोयःख्यातःसप्तदशार्चकः ॥ त्रिषष्टिवा क्यैस्तत्राद्यात्रकृत्त्रिवाक्यात्रशाक्तिकैः ॥ ८२ ॥ पावमानीभ्योनममत्या गोवाच्यस्त्वशाक्तिकैः ॥ पावमान्यैअथोशैवैःपवमानायनान्यथा ॥ ८३ ॥ पवमानःसोअद्यपवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ ८४ ॥ द्विती यापित्रिवाक्यादेवजनेभ्योमरुद्भ्यश्च ॥ विश्वेभ्यश्चतथायुञ्ज्यान्नममत्या गईरितः ॥ ८५ ॥ पुनन्तुमांदेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वा भूतानिजातवेदःपुनीहिमाम् ॥ ८६ ॥ तृतीयापिचतुर्वाक्याअग्नयेजा तवेदसे ॥ इदंनममइत्युक्त्वात्यागःसोपिप्रकाश्यते ॥ ८७ ॥ जातवेदःपवि त्रवत्पवित्रेणपुनीहिमा ॥ शुक्रेणदेवदीव्यदग्नेक्रत्वाक्रतूँरनु ॥ ८८ ॥ चतुर्थीतुत्रिवाक्याअग्नयेनममेतिच ॥ त्रिवाक्यापञ्चमीत्यागःसवित्रेच उभेयथा ॥ ८९ ॥ यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेनपुनी हिनः ॥ ९० ॥ उभाभ्यांदेवसवितःपवित्रेणसवेनच ॥ मांपुनीहिविश्व तः ॥ ९१ ॥ ऋचाषष्ठीचतुर्वाक्यात्यागश्चास्यानिरूप्यते ॥ वैश्वदेव्यै इतिवदेन्नममेतिचसायथा ॥ ९२ ॥ वैश्वदेवीपुनन्तीदेव्यागाद्यस्यामि

---

१ सूक्तकैःसूक्तप्रोक्तमन्त्रैः, सूक्त में कहेहुये चार मन्त्रों से ॥

माबह्वयस्तन्वोवीतपृष्ठाः ॥ तयामदतःसधमादेषुवयछंस्यामपतयोरयीणा म् ॥ ९३ ॥ वैश्वानरायवातायइषिरायमयोभुवे ॥ द्यावापृथिवीभ्याचेति सप्तम्यांत्यागइष्यते ॥ ६४ ॥ वैश्वानरोरश्मिभिर्मापुनातुवातःप्राणेनेषि रोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः शतावरीयज्ञियेमापुनीताम् ॥६५॥ सप्तमीतुचतुर्वाक्यात्रिवाक्याचाष्टमीमता ॥ सवित्रेग्नयेनममत्यागोष्टम्यां चसायथा ॥ ६६ ॥ बृहद्भिःसवितुस्त्रिभिर्वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैः पुनीहिमा ॥ ६७ ॥ अतःपरंचतुर्वाक्यादिव्यायब्रह्मणेत्यजेत् ॥ नवम्यां पावमानीभ्योदशम्यादिषुतायथा ॥ ६८ ॥ येनदेवाअपुनन्तयेनापोदिव्यं कशः ॥ तेनदिव्यंब्रह्मणाइदंब्रह्मपुनीहिमा ॥ ६६ ॥ यःपावमानीरध्येत्यृषि भिःसम्भृतछंरसम् ॥ सर्वसपूतमश्नातिस्वदितंमातरिश्वना ॥ १०० ॥ पाव मानीर्योअध्येत्यृषिभिःसम्भृतरसम् ॥ तस्मैसरस्वतीदुहेक्षीरंसर्पिर्मधूदक म् ॥ १०१ ॥ पावमानीःस्वस्त्ययनीःसुदुघाहिपयस्वतीः ॥ ऋषिभिःसम्भृ तोरसोब्राह्मणेष्वमृतछंहितम् ॥ १०२ ॥ पावमानीर्दिशन्तुनइमंलोकम थोअमुम् ॥ कामान्समर्द्धयन्तुनोदेवैर्देवीःसमाहिताः ॥ १०३ ॥ पावमा नीःस्वस्त्ययनीःसुदुघाहिघृतश्चुतः ॥ ऋषिभिःसम्भृतोरसः ब्राह्मणेष्वमृ तंहितम् ॥ १०४ ॥ येनदेवाःपवित्रेणआत्मानंपुनतेसदा ॥ तेनसहस्रधारे ण पावमान्यःपुनन्तुमाम् ॥ १०५ ॥ प्राग्वत्त्यागस्तुषोडश्यांविशेषःश्रो त्रियस्यतु ॥ प्राजापत्यायपवित्रायचेतिषोडशीभृणु ॥ १०६ ॥ प्राजाप त्यंपवित्रंशतोद्यामंहिरण्मयम् ॥ तेनब्रह्मविदोवयंपूतंब्रह्मपुनीमहे ॥ १०७ ॥ सुनीत्यासहितेन्द्रायस्वस्त्यासहितसोमाय ॥ समीच्यासहितायेतिवरुणायत तोवदेत् ॥ १०८ ॥ प्रमृणाभिःसहिताययमायराज्ञईरयेत् ॥ ऊर्ज्जयन्त्या सहितायजातवेदसइत्यपि ॥ १०६ ॥ नममेतिवदेत्सप्तदश्यास्त्यागेथयैर्न रैः ॥ मार्जनंकृतमेताभिस्तैःस्नातंजाह्नवीजले ॥ ११० ॥ इन्द्रःसुनीत्यास हमापुनातुसोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनापुमा जातवेदामोर्ज्जयन्त्यापुनातु ॥ १११ ॥ यद्देवादेवहेडनंविशत्यर्चेनहो मयेत् ॥ त्यागःप्रथमके तत्र आदित्येभ्यश्च नान्यथा ॥ यद्देवादेवहे

डनंदेवासश्चकृमावयम् ॥ आदित्यास्तस्मान्मामुञ्चतर्तस्यर्तेनमामुतः ॥ ११२ ॥ अग्नयेगार्हपत्यायनममेतिद्वितीयके ॥ द्यावापृथिवीभ्यांसरस्वत्यै चेतिऋ१चेयथा ॥ ११३ ॥ देवाजीवनकाम्यायद्वाचानृतमूदिम ॥ अग्निर्मा तस्मादेनसोगार्हपत्यःप्रमुञ्चतुदुरितायानिचकृमकरोतुमामनेहसम् ॥ ११४ ॥ ऋतेनद्यावापृथिवीऋतेनत्वꣳसरस्वति ॥ कृतान्नःपाह्येनसोयत्किञ्चानृतमू दिम ॥ ११५ ॥ जातवेदसेनममचतुर्थेत्वथपञ्चमे ॥ अग्नयेगार्हपत्यायत्या गस्तद्वत्कृतोयथा ॥ ११६ ॥ सजातशꣳसाडुतजामिशꣳसाज्यायसशꣳ साडुतवाकनीयसाः ॥ अनाज्ञातंदेवकृतंयदेनस्तस्मात्त्वमस्माञ्जातवेदोमु ग्धि ॥ ११७ ॥ यद्वाचायन्मनसायद्वाहुभ्यामूरुभ्यामष्ठीवकट्याꣳशिश्नैर्य दनृतञ्चकृमवयम् ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुञ्चतुदुरितायानिचकृ मकरोतुमामनेहसम् ॥ ११८ ॥ राष्ट्रभृतेभरसेभ्यःषष्ठेत्यागोष्टसप्तमे ॥ अग्न येगार्हपत्याय नवमेचाग्नयेवदेत् ॥ ११९ ॥ यद्धस्ताभ्यांचकरकिल्बिषाण्य क्षाणांवसुमुपजिघ्नमानः ॥ दूरेपश्याचराष्ट्रभृचतान्यभरसावनुदत्तामृणानि ॥ १२० ॥ अदीव्यन्नृणांयदहंचकारयद्वादास्यन्सञ्जगाराजनभ्यः ॥ अग्निर्मात स्मादेनसोगार्हपत्यः प्रमुञ्चतुदुरितायानिचकृमकरोतुमामनेहसम् ॥ १२१ ॥ यन्मयिमातागर्भेसत्येनश्चकारयत्पिता ॥ अग्निर्मातस्मादेनसोगार्हपत्यः प्रमुञ्चतुदुरितायानिचकृमकरोतुमामनेहसम् ॥ १२२ ॥ यदापिपेषमातरंपि तरंपुत्रःप्रमुदितोधयन् ॥ अहिꣳसितौपितरौमयातत्तदग्नेअनृणोभवामि ॥ १२३ ॥ अग्नयेगार्हपत्यायदशमैकादशेवदेत् ॥ द्वादशेत्वग्नयेथाग्नेग्नये गार्हपत्यायच ॥ १२४ ॥ यदन्तरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिꣳ सिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यः प्रमुञ्चतुदुरितायानिचकृमकरोतुमा मनेहसम् ॥ १२५ ॥ यदाशसानिशसायत्पराशसायदेनश्चकृमानूतनंयत्पु राणम् ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुञ्चतुदुरितायानिचकृमकरोतुमा मनेहसम् ॥ १२६ ॥ अतिक्रामामिदुरितंयदेनोजहामिरिप्रंपरमेसधस्थे ॥

१ ऋचे, तीसरी ऋचा में ( द्यावापृथिवीभ्यांसरस्वत्यैचेदंनमम ) इस वाक्य का उ- च्चारण करे ॥

यत्रयन्तिसुकृतोनापिदुष्कृतस्तमारोहामिसुकृतान्नुलोकांत्रिते ॥ १२७ ॥ देवा अमृजतैतदेनस्त्रितएतन्मनुष्येषुमामृजे ॥ ततोमायदिकिञ्चिदानशेग्निर्मात स्मादेनसोगार्हपत्यःप्रमुञ्चतुदुरितायानिचकृमकरोतुमामनेहसम् ॥ १२८ ॥ चतुर्दशेतिथौत्वद्व्योवरुणायततोद्वयोः ॥ अष्टादशेचोनविंशेत्वग्नविरुणा भ्यामिति ॥ १२९ ॥ दिविजाताअप्सुजातायाजाताओषधीभ्यः ॥ अथोया अग्निजाआपःतानःशुन्धन्तुशुन्धनीः ॥ १३० ॥ यदापोनक्तंदुरितंचरामय द्वादिवानूतनंयत्पुराणम् ॥ हिरण्यवर्णास्ततउत्पुनीतनः ॥ १३१ ॥ इमम्मेव रुणश्रुधीहवमद्याचमृडयत्वामवस्युराचके ॥ १३२ ॥ तत्त्वायामिब्रह्मणावन्द मानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणोहवोध्युरुशꣳसमान आयुःप्रमोषीः ॥ १३३ ॥ त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासि सीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ १३४ ॥ सत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳररा णोवीहिमृडीकꣳसुहवोनएधि ॥ १३५ ॥ अग्नयेचाथविंशेतुसूक्तंवैश्वानरं ततः ॥ अग्नयेवैश्वानरायाष्टर्चान्त्यागोयमीरितः ॥ १३६ ॥ त्वमग्नेअया स्यथासन्मनसाहितः ॥ अयासन्हव्यमूहिषेयानेधिहिभेषजम् ॥ १३७ ॥ वै श्वानरोनऊतयेप्रयातुपरावतः ॥ अग्निर्नःसुष्टुतीरुप ॥ १३८ ॥ ऋतावानं वैश्वानरमृतस्यज्योतिषस्पतिम् ॥ अजस्रंघर्ममीमहे ॥ १३९ ॥ वैश्वानरस्य दꣳसनाभ्योबृहदरिणादेकःस्वपस्ययाकविः ॥ उभापितरामहयन्नजायता ग्निर्द्यावापृथिवीभूरिरेतसा ॥ १४० ॥ पृष्टोदिविपृष्टोअग्निःपृथिव्यांपृष्टो विश्वाओषधीराविवेश ॥ वैश्वानरःसहसापृष्टोअग्निःसमोनोदिवासरिषःपा तुनक्तम् ॥ १४१ ॥ जातोयदग्नेभुवनाव्यख्यः पशुंनगोपाइर्यःपरिज्मा ॥ वैश्वानरब्रह्मणेविन्दगातुंयूयंयातस्वस्तिभिःसदानः ॥ १४२ ॥ त्वमग्नेशो चिषाशोशुचानआरोदसीअपृणाजायमानः ॥ त्वंदेवानभिशस्तेरमुचोवैश्वा नरजातवेदोमहित्वा ॥ १४३ ॥ अस्माकमग्नेमघवत्सुधारयानामिक्षत्रमजरꣳ

---

१ पन्द्रहवें में, अर्थात् चौदहवें और पन्द्रहवें मन्त्र में ( अज्ञचश्चेदंनवैमम ) यह वाक्य है ॥

सुवीर्यम्॥वयअयेमशतिनथ्ंसहास्रिणंवैश्वानरवाजमग्नेतवोतिभिः॥१४४
वैश्वानरस्यसुमनौस्यामनौस्यामगजाहिकंभुवनानामभिःश्रीः ॥ इतोजा
विश्वमिदंविचष्टेवैश्वानरोयततेसूर्य्याय ॥ १४५ ॥ ततःस्विष्टकृतंकृत्वापरि
न्पर्य्यगृह्यच ॥ पूर्णंकलशमादायनैर्ऋत्यान्तुचतुष्पथे ॥ १४६ ॥ पादप्रक्षा
नंकृत्वाथाचम्यप्राङ्मुखस्तथा ॥ पत्नीभिःसहवीक्षेत्तच्छायांतस्मिञ्छुभाशु
म् ॥ १४७ ॥ सिंहेमेमन्युरस्यांप्रेमेनुवाकंजपेत्ततः ॥ [1]सुमित्रियानआपओ
धयः सन्त्वितिक्षिपेत् ॥ १४८ ॥ भूम्यांकिञ्चिज्जलंपश्चादुत्तिष्ठेत्कलशान्
तः ॥ [2]दुर्मित्रियास्तस्मैसन्तुपृष्ठतःकलशंक्षिपेत् ॥ १४९ ॥ यस्यामस्यदि
द्वेष्योभवेत्तत्रैवनिक्षिपेत् ॥ पश्चादपउपस्पृश्यस्वगृहंप्रविशेत्ततः ॥ १५०
त्रिसन्ध्यमेवंसप्ताहंकुर्य्याद्रूपंनिरीक्षयेत् ॥ यदापश्येत्तोयमध्येछायामक्षा
दाभवेत् ॥ १५१ ॥ यजमानःसुपूतोयमन्यथापुनराचरेत् ॥ ततआशीर्व
गृह्याद्ब्राह्मणान्भोजयेत्ततः ॥१५२॥ यावत्कर्म्मप्रकुर्व्वीततावन्मौनंसमाचरेत्
सकृदेवसमश्नीयाद्धविष्यंब्रह्मचर्य्यभाक् ॥ १५३ ॥ जितेन्द्रियोभूमिशाय
पूर्वजन्मार्जितादघात् ॥ मन्त्रसिद्धेर्विघ्न[3]कर्तुर्मुक्तोभवतिनान्यथा
१५४ ॥ अज्ञानाच्चप्रमादाद्वाजन्मन्यस्मिंश्चयत्कृतम् ॥ पातकंतस्यनाश
कूष्माण्डीभिस्तुहोमयेत् ॥ १५५ ॥ वैदिकेयस्यनिस्नाताःपितरोज्ञानद
तः॥पतित्वाकौलिकेमार्गेदारिद्र्यादिभिरर्दितः ॥ १५६ ॥ मनसाउपतस्
न्नित्यंसर्वसुखाप्तये ॥ लोकद्वयप्रतिष्ठार्थंसोपिगुप्तंसमाचरेत् ॥ १५७ ॥ स्व
चौर्य्येसुरापानेगोवधेब्रह्मघातने॥ गुरुतल्पगमेवर्षंव्रतमेतत्समाचरेत्॥१५८
चौर्य्येच[4]भ्रूणहत्यायामयोनौवीर्य्यसिञ्चने ॥ विश्वासघातने[5]न्यासहरणेत्व
चरेत् ॥ १५९ ॥ इष्टाप्राप्तौग्रहेघोरेग्रहणेचन्द्रसूर्य्ययोः ॥ जलेशिवालयेद
गृहीत्वायुतमेककम् ॥ १६० ॥ [6]कूटसाक्ष्येवा[7]र्द्धुषिके[8]र्वृत्तिहारेकरग्रहे ॥ देव

---

१ सुमित्रियानआपओषधयःसन्तु २ दुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टि यञ्च वयं द्विष्
३ विघ्न करनेवाले पूर्वजन्मार्जित पापोंसे छूटता है ४ लड़का के मारने में ५ विश्वा
अपने इहां धरेहुये किसीके धनकेलेनेमें ६ झूँठ गवाहीदेनेमें ७ ब्याज बढ़ाना रूप रोज
करने में ८ किसीकी जीविकादि हरलेने में ॥

प्राधिकारेचापदन्तेलक्षमाचरेत् ॥ १६१ ॥ संस्कारभोजनेवेश्यागमनेपशुघातने ॥ [1]देवाद्यर्थाशनेलक्षंत्रिसन्ध्यालोपनेत्वहः ॥ १६२ ॥ केशश्मश्रून्वापयित्वास्नात्वापुण्येजलाशये ॥ आज्यभागानन्तरंचकूष्माण्डीभिस्तुहोमयेत् ॥ १६३ ॥ [3]सावित्रींचजपेन्नित्यं [4]पवित्राणिचशक्तितः ॥ ब्राह्मणोदुग्धपायीस्यात्क्षत्रियस्तु[5]यवागुलेट् ॥ १६४ ॥ [6]आमिक्षांभक्षयेद्वैश्योयदाशक्तोभवेत्तदा ॥ ओदनंसक्तवोधानाघृतंवापिसमाश्रयेत् ॥ १६५ ॥ एतद्भिन्नेनभोक्तव्यंब्रह्मचर्यादिपूर्ववत् ॥ होमस्तुगोघृतेनैवतदभवेतुमाहिषम् ॥ १६६ ॥ प्रथमामन्त्रिकातत्र[7]यद्देवादेवहेडनम् ॥ देवेभ्यआदित्येभ्यश्चत्यागस्तत्रसमीरितः ॥ १६७॥ [8]विश्वेभ्योदेवेभ्यइतिद्वितीयायाश्चसोच्यते ॥ [9]प्राग्वत्त्यागस्तृतीयायाऋग्भिन्नासाचकथ्यते ॥१६८॥ यद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ आदित्यास्तस्मान्मामुञ्चतर्तस्यर्त्तेनमामुतः ॥ १६९ ॥ देवाजीवनकाम्यायद्वाचानृतमूदिम ॥ तस्मान्नइहमुञ्चतविश्वेदेवाःसजोषसः॥ १७० ॥ ऋतेनद्यावापृथिवीऋतेनत्वंसरस्वति ॥ कृतान्नःपाह्येनसोयत्किञ्चानृतमूदिम ॥ १७१ ॥ इन्द्राग्निमित्रावरुणसोमधातृबृहस्पतिभ्यस्त्यागस्तु चतुर्थी या अधुना सा ऋगुच्यते ॥ ॥ १७२ ॥ इन्द्राग्नीमित्रावरुणौसोमोधाताबृहस्पतिः ॥ तेनोमुञ्चन्त्वेनसोयत्किञ्चानृतमूदिम ॥ १७३ ॥ [10]संजातसथंसादितिपूर्वोक्ता

---

१ विपत्तिके बीतजाने के बाद फेरि सुख मिलने में २ देवादिकोंकी पूजाके लिये जो द्रव्य उसके खाने में ३ सव्याहृति गायत्री वा तत्सवितुर्मन्त्रमात्र ४ पुनन्तुमांदेवजनाःपुनन्तुमनसाधियः पुनन्तुविश्वाभूतानिजातवेदाःपुनीहिमाम् ॥ इत्यादि पवित्र मन्त्र ५ यवागूः षड्गुणेतोयेसंसिद्धाघनसिक्थका । पृथग्द्रवैस्तुविरलैः संयुक्ताज्वरणेहिता ॥ छहगुने जलमें चावलोंको पकाकर छानले उसको यवागू कहते हैं ६ताते दूध में दही छोड़देने पर जो होती है उसको आमिक्षा कहते हैं ७ प्रथमयद्देवादेवहेडनं इस मन्त्र से स्वाहा दे तब देवेभ्य आदित्येभ्यश्चेदन्नवैमम इस वाक्यका उच्चारण करना और इसी रीति से आगे के मन्त्रों में मूलोक्त देवताओं के नामों से वाक्य बनालेना ८ दूसरे मन्त्रमें विश्वेभ्योदेवेभ्यः ९ और तीसरे मन्त्रमें द्यावापृथिवीभ्यांसरस्वत्यैच, इदन्नवैमम इस वाक्यका सर्वत्र जोड़लेना १० सजातसथंसादुतजामिशथंसाज्यायसःशथंसादुतवाकनीयसाःअनाज्ञातंदेवकृतंयदेनस्तस्मात्वमस्मान्जातवेदोमुमुग्धि ।जातवेदसेचेदंनवैमम ॥

पञ्चमीमता ॥ यद्वाचायन्मनसाषष्ठीपूर्वमुदीरिता ॥ १७४ ॥ ज्योति
नममत्यागःसप्तम्यांसाचकथ्यते ॥ अग्नयेनममत्यागस्तथाष्टम्याथसो
ते ॥ १७५ ॥ येनत्रितोअर्णवामिर्वभूवयेनसूर्य्यंतमसन्निर्मुमोच ॥ येनेन
विश्वाअजहादग्नीस्तेनाहंज्योतिषांज्योतिरानशानआक्षि ॥ १७६
यत्कुसीदमप्रतीतंमयेहयेनयमस्यनिधिनाचरामि ॥ एतत्तदग्नेअनृणोभ
मिजीवन्नेवप्रतितत्तेदधामि ॥ १७७ ॥ यन्मयिमातेतिपूर्वोक्ताप्राग्वत्सान
माहुतिः ॥ यदायियेषमातरंप्राक्प्रोक्तादशमाहुतिः ॥ १७८ ॥ यद
रिक्षंपृथिवीप्राक्प्रोक्तैकादशाहुतिः ॥ यदाशसानिशसाप्राक्प्रोक्ताद्वादश
हुतिः ॥ १७९ ॥ तंदग्नेतुऋचस्तिस्रएवंपञ्चदशाहुतीः ॥ यदापोनक्तं
तिपूर्वोक्तापोडशीभवेत् ॥ १८० ॥ अद्भ्योहिरण्यवर्णाभ्यस्तस्यांत्याग
भिधीयते ॥ इमम्मेवरुणेत्यादिपञ्चर्चःपूर्वमीरिताः ॥ १८१ ॥ सत्याग
स्तेनैकविंशदाहुतयःसमीरिताः ॥ इन्द्राग्निभ्यांचद्वाविंशेत्यागःसाऋग
च्यते ॥ १८२ ॥ उग्रंपश्येराष्ट्रभृत्किल्बिषाणि यदक्षवृत्तमनुदत्तमेतत्
तेनऋणानृणवइत्समानोयमस्यलोकेअधिरज्जुराय ॥ १८३ ॥ अदी
नृणंयदहमित्याद्याःषट्चपूर्ववत् ॥ ततोद्भ्योहिरत्यागोवरुणायनवैमम
१८४ ॥ अवतेहेलोवरुणनमोभिरवयज्ञेभिरीमहेहाविर्भिः ॥ त्वयंनसमभ्यम

१ पांचईसंख्या यदेवादेवहेडनंइत्यादि मन्त्रों के क्रमसे जानिये इसी रीति से आगे
संख्या में भी समझना २ यद्वाचायन्मनसाबाहुभ्यामूरुभ्यां० इस पूर्वोक्त मन्त्र से
अग्नयेगार्हपत्यायनवैमम ३ यन्मयिमातागर्भसत्येनश्वकारयदितेति मन्त्रसे नवमाहुति,अग्न
गार्हपत्यायनवैमम ४ इस मन्त्र से अग्नयेचेदंनवैमम ५ इस पूर्वोक्त मन्त्र से अग्नयेगा
पत्याय० ६ इस पूर्वोक्त मन्त्र से अग्नयेगार्हपत्याय० ७ अतिक्रमामिदुरितं इससे, अग्न
चेदंनवैममत्रयोदशीआहुति ॥ पुनः, देवा अमृजतैतदेनस्त्रित, इस पूर्वोक्त मन्त्र से अग्नयेगा
पत्यायचेदंनवैमम ॥ दिविजाताअप्सुजाता इससे, अद्भ्योनवैमम ८ यदापोनक्तंदुरितंचरा
इस पूर्वोक्त मन्त्र से अद्भ्योहिरण्यवर्णाभ्यश्चेदंनवैमम, इसको सोलहवीं आहुति जानि
पुनःपूर्वोक्त पांच आहुति अर्थात्, इमम्मे वरुणश्रुधी इससे वरुणायचेदंनवैमम, तत्त्वा
मिब्रह्मणावन्दमानः इससे वरुणाय० ९ त्वन्नोअग्नेवरुणस्यविद्वान् इस से अग्नीवरुण
भ्याम्० सत्वंनोअग्ने इससे अग्नीवरुणाभ्याम्०, त्वमग्नेअयास्ययासन्मनसाहितः ॥ अव
सन्हव्यमूहिषेयानेभिहिभेषजम् इससे अग्नयेचेदंनवैमम, ऐसे इकीस आहुतियां होतीहैं ॥

प्रचेतोराजन्नेताछंसिशिश्रथःकृतानि ॥ १८५ ॥ उदुत्तमंवरुणपाशमस्मद बाधमंविमध्यमंश्रथया ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्याम ॥ १८६ ॥ एकत्रिंशेशंकुशुकौविकुशुकौचनिर्ऋथैः॥ निःस्वनेभ्यस्त्याग उक्तःसाऽऽचामोच्यतेऽधुना ॥ संकुशुकोविकुशुकोनिर्ऋथोयश्चनिःस्वनः ॥ तेयेस्मद्यक्ष्ममनागसोदूराद्दूरमवीवतम् ॥ १८७ ॥ ततोद्वयोरग्नयेचत्वष्ट्रेत्याग स्तदग्निमे ॥ आयुष्मतेऽग्नयेत्यागःपञ्चत्रिंशत्तमेमतः ॥ १८८ ॥ निर्यक्ष्म मवीवतेकृत्यांनिर्ऋतिंच ॥ तेनयोस्मत्समृच्छातेतस्मैप्रसुवामसि ॥ १८९ ॥ दुःशछंसानुशछंसाभ्यांघणेनानुघणेनच ॥ तेनात्योरस्मत्समृच्छातेतस्मै सुप्रसवामसि । १९० ॥ संवर्चसायशसासन्तनूभिरगन्महिमनसाशछंशिवेन ॥ त्वष्टानोअत्रविदधातुरायोनुमार्ष्टतन्वोयद्विलिष्टम् ॥ १९१ ॥ आयुष्टे विश्वतोदधदयमग्निर्वरेण्यः ॥ पुनस्तेप्राणआयातिपरायक्ष्मछंसुवामिते ॥ १९२ ॥ आयुर्दायाग्नयेत्यागःषट्त्रिंशेथतदग्निमे ॥ १९३ ॥ अग्नयेवरुणायादित्यैविश्वेभ्योदेवेभ्यश्च ॥ १९४ ॥ आयुर्दाअग्नयेहविषोयुषाणो घृतप्रतीकोघृतयोनिरेधि ॥ घृतंपीत्वामधुचारुगव्यंपितेवपुत्रमभिरक्षतादिमम् ॥ १९५ ॥ इममग्नआयुषेवर्चसेकृधितिग्ममोजोवरुणसछंशिशाधि ॥ मातेवास्माअदितेशर्मयच्छविश्वेदेवाजरदष्टियथासत् ॥ १९६ ॥ अग्नये पवमानायत्यागोष्टत्रिंशतस्त्रिषु ॥ ततोद्वयोर्जातवेदसेग्नयेत्यागउच्यते ॥ १९७ ॥ अग्नआयूछंषिपवसआसुवोर्ज्जमिषंचनः ॥ आरेबाधस्वदुच्छुनाम् ॥ १९८ ॥ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्य्यम् ॥ दधत्पोषछंरयिंमयि ॥ १९९ ॥ अग्नऋषिःपवमानःपाञ्चजन्यःपुरोहितः ॥ तमीमहेमहागयम् ॥ २०० ॥ अग्नेजातान्प्रणुदानःसपत्नान्प्रत्यजाताञ्जातवेदोनुदस्व ॥ अस्मेदीदिहसुमनाअहेडंशर्मंतेस्यामात्रिवरूथउद्भौ ॥ २०१ ॥ सुवीर्य्यसहसाजातान्प्रणुदानः सपत्नान्प्रत्यजाताञ्जातवेदोनुदस्व ॥ अधि

---

१ इस मन्त्र से सैंतीसवीं आहुति, २ आगे के तीन मन्त्रों से अग्नये पवमानाय चेदं नवैमम, और दो मन्त्रों से जातवेदसे अग्नयेचेदंनवैमम ऐसे सब मिलकर यहांतक बयालीस आहुतियां होती हैं ॥

नोब्रूहिसुमनस्यमानोवयᳬस्यामप्रणुदानःसपत्नान् ॥ २०२ ॥ अग्नये
त्रायेतित्रिचत्वारिंशकेपुनः ॥ अग्नयेइतितस्मात्तुउपसेनिम्रुचेभवेत् ॥२०३
अग्नेयोनोभितोजनोवृकोवाराजिघाᳬसति ॥ तांत्वंवृत्रहञ्जहिवस्व
भ्यमाभर ॥ २०४ ॥ अग्नेयोनोभिदासमानोयश्चनिष्ठ्यः ॥ तंत्रयᳬसमि
कृत्वातुभ्यमग्नेपिदध्मसि ॥ २०५ ॥ योनःशपादशपतोयश्चनशपतःश
त् ॥ उपाश्चतस्मैनिम्रुक्चसर्वंपापᳬसमूहताम् ॥ २०६ ॥ षट्चत्वारिंश
त्यागोदेवेभ्यश्चतदग्रिमे ॥ जातवेदसेऽग्नयेचततस्त्यागोग्नयेभवेत्
२०७ ॥ योनःसपत्नोयोरणोमर्तोभिदासतिदेवाः ॥ इध्मस्येवप्रक्षायतोमा
स्योच्छेषिकिञ्चन ॥ २०८ ॥ योमांद्वेष्टिजातवेदोयंचाहंद्वेष्मियश्चमाम्
सर्वाᳬस्तानग्नेसन्दहयाᳬश्चाहंद्वेष्मियेचमाम् ॥ २०९ ॥ योअस्मभ्य
रातीयाद्यश्चनोद्वेषतेजनः ॥ निन्दाद्योअस्मान्दिप्साश्चसर्वाᳬस्तान्म
पाकुरु ॥ २१० ॥ श्रोत्रियायब्रह्मणेचाग्नयेपञ्चाशकेमतः ॥ तदग्रिमेपि
तथान्तिमेवैश्वानरायच ॥ २११ ॥ सᳬशितंमेब्रह्मसᳬशितंवीर्य्यबलम्
सᳬशितंक्षत्रंमेजिष्णुयस्याहमस्मिपुरोहितः ॥ २१२ ॥ उदेषांबाहूअतिर
द्वर्चोअथोबलम् ॥ क्षिणोमिब्रह्मणामित्रानुन्नयामिस्वांअहम् ॥ २१३
पुनर्मनःपुनरायुर्मआगात्पुनश्चक्षुःपुनःश्रोत्रंमआगात्पुनः ॥ प्राणःपुनराकू
मआगात्पुनश्चित्तंपुनराधीतंमआगात् ॥ २१४ ॥ वैश्वानरोमेदब्धस्तन्
याअवबाधतांदुरितानिविश्वा ॥ २१५ ॥ एवंहुत्वाततस्तिष्ठेत्समित्पाणिरु
ञ्मुखः ॥ अग्नेर्दक्षिणतोवह्निंस्तुवीतद्वादशर्चभिः ॥ २१६ ॥ वैश्वानराय
तिवेदयामोयदीनूणᳬसङ्गरोदेवतासु ॥ सएतान्पाशान्प्रमुञ्चन्वेदसनोमुञ्चतु
दुरितादवद्यात् ॥ २१७ ॥ वैश्वानरःपवयान्नःपवित्रैर्यत्सङ्गरमभिधावाम्याशा

१ इस मन्त्रसे अग्नयेवृत्रघ्नायचेदंनवैमम, तेंतालिसवीं आहुति २ इस मन्त्रसे अग्नयेचेदं
वैमम चवालिसवीं आहुति ३ इसमन्त्रसे, उपसे निम्रुचेचेदंनवैमम, पैंतालीसवीं आहुति
४ इस छियालिसवेंमन्त्रसे, देवेभ्यश्चेदंनवैमम, ५ इस सैंतालिसवेंमन्त्रसे, जातवेदसे अग्नये
६ इस अड़तालीसवें मन्त्रसे अग्नयेचेदं० ७ इस उंचासवेंमन्त्रसे, श्रोत्रियायब्रह्मणेचेदंनवैमम
८ पचासवें मन्त्रसे, अग्नये० ९ इस इकावनवें मन्त्रसे अग्नयेचेदंनवैमम, १० इस मन्त्रसे
वैश्वानरायचेदंनवैमम, ऐसे बावन आहुतियां होती हैं ॥

व ॥ अनाजानन्मनसायाचमानोयदत्रैनोअवतत्सुवामि ॥ २१८ ॥ अमीये सुभगेदिविवृत्तौनामतारकीप्रेहामृतस्ययच्छतामेतद्बद्धकामोचनम् २१६ ॥ विजिहीर्ष्वलोकान्कृधिबन्धान्मुञ्चासिबद्धकम् ॥ योनेरिवप्रच्युतोगर्भःसर्वा न्यथोअनुष्व ॥ २२० ॥ सप्रजानन्प्रतिगृणीतविद्वान्प्रजापतिःप्रथमजाऋ तस्य ॥ अस्माभिर्दत्तंजरसःपरस्तादच्छिन्नंतन्तुमनुसञ्चरेत् ॥ २२१ ॥ नतं तन्तुमन्वेकेअनुसञ्चरन्तियेषांदत्तंपित्र्यमायनवत् ॥ अबन्ध्वेकेददतःप्रयच्छ द्दातुंचेच्छक्नवाꣳसस्वर्गएषाम् ॥ २२२ ॥ आरभेथामनुसꣳरभेथाꣳसमानंप न्थामवथोघृतेन ॥ यद्वांपूर्तंपरिविष्टंयदग्नौतस्मैगोत्रायेहजायापरीक्षꣳरभे थाः ॥ २२३ ॥ यदन्तरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवावजिहिꣳसिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुञ्चतुदुरितायानिचकृमकरोतुमामनेहसम् ॥ २२४ ॥ भूमिर्मातादितिर्नोजनित्रंभ्रातान्तरिक्षमभिशस्तरानः ॥ द्यौर्नःपि तापितृयाच्छम्भवासिजामिमित्वामाविवित्सिलोकात् ॥ २२५ ॥ यत्रसुहा र्दःसुकृतोमदन्तेविहायरोगंतन्वास्वया ॥ अश्लोणाङ्गैरह्रुताःस्वर्गेतत्रपश्ये मपितरंचपुत्रम् ॥ २२६ ॥ यदन्नमद्म्यनृतेदेवादास्यन्नदास्यन्नुतवाकरिष्य न् ॥ यद्देवानांचक्षुष्यागोअस्तियदेवकिञ्चप्रतिजग्राहमग्निर्मातस्मादनृणंकृ णोतु ॥ २२७ ॥ यदन्नमपिबहुधाविरूपवासोहिरण्यमुतगामजामवियद्देवा नांचक्षुष्यागोअस्तियदेवकिञ्चप्रतिजग्राहमग्निर्मातस्मादनृणंकृणोतु २२८ ॥ एवमग्निमुपस्थायकरस्थांसमिधंहुनेत् ॥ वक्ष्यमाणेनमन्त्रेणत्यागोवैश्वान रायच ॥ २२९ ॥ यन्मयामनसावाचाकृतमेनःकदाचन ॥ सर्वस्मात्तस्मा न्मेलितोमोग्धित्वꣳहिवेत्थयथातथꣳस्वाहा ॥ २३० ॥ जपादिहोमंचततःकु र्यादेतन्निरूपितम् ॥ इहजन्मकृताघानांप्रायश्चित्तंनिवारणम् ॥ २३१ ॥ इदमु क्तंद्विजातीनांशूद्राणामथचोच्यते ॥ मार्गशीर्षसिताष्टम्यांकृतनित्यक्रियः शुचिः ॥ २३२ ॥ एकभक्तंहविष्येणनवम्यामेवमाचरेत् ॥ अयाचितंदशम्यां चएकादश्यामुपोषणम् ॥ २३३ ॥ द्वादश्यांवपनंकृत्वापूजयेद्विप्रदेवताः ॥ नमोनारायणायेतिस्वेष्टबीजादिकंमनुम् ॥ २३४ ॥ अष्टाक्षरंगुरुमुखाद्गृहीत्वा जपमाचरेत् ॥ अष्टलक्षंद्विजोच्छिष्टभोजीतत्सेवनेरतः ॥ २३५ ॥ आमध्या

हंजपंकुर्य्याद्भूशायीब्रह्मचर्य्यकृत् ॥ निष्पापोजायतेपूर्णेजपेनोचेत्पुनश्च
त् ॥ २३६ ॥ निष्पापचिह्नंवक्ष्येत्रतथापूर्वोक्तहोमयोः ॥ होमाद्यारम्भदिव
श्मन्मयंनिर्व्रणंदृढम् ॥ २३७ ॥ आनयेच्छुद्धकलशंस्थापयेन्निर्मलेस्थले
तस्मिंस्तीर्थादिजंतोयंनिःक्षिपेत्कलशोन्मितम् ॥ २३८ ॥ शृङ्गलद्वीपगं
त्रेकाचपात्रेनिधापयेत् ॥ पलमात्रंद्वयोस्तुप्रकुर्य्याद्धरिहरार्चनम् ॥ २३९
परीक्षादिवसेपूजांकृत्वातत्प्रार्थयेज्जलम् ॥ आपोनारायणःसाक्षादप्सुस
तिष्ठितम् ॥ २४० ॥ तेनसत्येनमत्पापंज्ञानंसत्यंममास्तुते ॥ इतितोयंप्र
यित्वादद्यात्पुष्पाञ्जलिंततः ॥ २४१ ॥ पश्येत्स्वस्यशरीरस्यच्छायांतोये
थारसे ॥ यथारसेतथातोयेदृष्टाचेत्पातकंगतम् ॥ २४२ ॥ म्लानातोयेयदा
यातदापापंगतंनहि ॥ प्रायश्चित्तंततःकुर्य्याद्यदिच्छायातिनिर्मला ॥२४३
सष्टपापोभवेदेवंपुरश्चरणसिद्धिभाक् ॥ यःकश्चिद्वैदिकोमन्त्रोजप्तश्चेदर्बुद
क्षरम् ॥ २४४ ॥ एकजन्मकृतंपापंनाशयेन्नाममन्त्रकः ॥ विष्णोर्ममग
शस्यरवेस्तवतदर्धकम् ॥ २४५ ॥ हन्तिपापंतान्त्रिकस्तुतदर्धंप्राकृतोदल
थ ॥ अपदंशस्तदर्धंचेत्येतत्सर्वत्रगोपितम् ॥ २४६ ॥ जपस्थानानिवक्ष्य
मिकृत्रिमाकृत्रिमाणिच ॥ गुप्तानिसर्वतन्त्रेषुदेवतानांपृथक्पृथक् ॥ २४७
महागणपतिक्षेत्रंमापुरंनर्मदातटे ॥ महाश्मशानंमापूरंगणेशमनुसिद्धि
म् ॥ २४८ ॥ प्रभासंचकुरुक्षेत्रंपुष्करंभृगुपर्वतम् ॥ यमुनायास्तटंकाश्यां
नेशमनुसिद्धिदम् ॥ २४९ ॥ अयोध्यामथुरामायाकाशीबदरिकाश्रमः ॥
गयाचगण्डकीतीरंद्वारकाविष्णुसिद्धिदा ॥ २५० ॥ केदारस्त्र्यम्बकंकाशी
काञ्च्यवन्त्यौवनानिच ॥ गङ्गातीरंवैद्यनाथंरामेशःशिवसिद्धिकृत् ॥ २५१ ॥
ज्वालामुखीप्रयागश्चकामिनीमालिकापदम् ॥ सरस्वत्यास्तथातीरंशाक्तमन्
स्यसिद्धिकृत् ॥ २५२ ॥ तीरञ्चकमलेश्वर्य्यामेकलोयक्षपर्वतः ॥ अङ्गवङ्गकलि

१ कोई वेदोक्तमन्त्रहो उसके जपकरने में सब जोड़कर दशकरोड़ अक्षरहोजावें त
जापकलोग पापसे छूटजाते हैं २ हरिद्वार ३ विष्णुमन्त्रोंकी सिद्धिकी देनेवाली ४ नासि
क नामप्रसिद्ध ५ काञ्चीपुरी ६ उज्जयिनी ७ ज्वालामुखीदेवी ८ कामादेवी ९ मालिक
स्थान १० मेकलनामपर्वत ॥

ज्ञाश्चक्षुद्रदैवतसिद्धिदाः ॥ २५३ ॥ कामरूपश्चतत्स्थानंहिंगुलाविन्ध्यवासिनी ॥ जालन्धरंपूर्णगिरिर्वामसार्गस्यसिद्धिदाः ॥ २५४ ॥ तीरंपद्माकराणांचकदलीक्ष्वर्कवाटिकाः ॥ विद्रुमाकुलितोदेशोगणेशस्यातिवल्लभः ॥ २५५ ॥ पद्माकरंतदारण्यंकरवीरार्कवाटिकाः ॥ गोधूमदूर्वाक्षेत्राणिशिलाभानुमतःप्रिया ॥ २५६ ॥ तुलस्यश्वत्थधात्रीक्षुशालग्रामादिसन्निधौ ॥ गोष्ठेश्रोत्रिययुग्रामेहरेर्मुद्वैदिकान्तिके ॥ २५७ ॥ पश्चिमाभिमुखेलिङ्गेनन्दिवर्ज्जेशिवालये ॥ शिवतीरेवंटस्यारात्सङ्गमेविपिनेहृदे ॥ २५८ ॥ कदलीचूतचम्बेलीसेवन्तीचर्चरीवने ॥ ग्रन्थाख्यातनदीतीरेशक्तेःप्रीतिश्चनिर्जने ॥ २५९ ॥ पैल्वलाग्रेनिम्बकोलेशाखोरमधुकाकुले ॥ वल्मीकेशुष्कनद्यांचमोदन्तेक्षुद्रदेवताः ॥ २६० ॥ पितृगृहेश्मशानेचत्रिपथेचचतुष्पथे ॥ शून्यालयेशवार्काख्येस्थानेतुष्यन्तिवामकाः ॥ २६१ ॥ गृहेगोष्ठेतथोद्यानेतथापर्वतमस्तके ॥ नद्यांतत्सङ्गमेदेवालयेस्याद्वैदिकोधिकः ॥ २६२ ॥ यस्मिन्देशेनगोहत्यानापिब्रह्मवधोभवेत् ॥ नश्रावयन्तिशूद्रांश्चसिद्धिस्तत्रतुवैदिकी ॥ २६३ ॥ म्लेच्छाःपाखण्डिनोधूर्त्ताराजानःसचिवादयः ॥ युवत्यश्चनवर्तन्तेतत्रसिद्धिरदूरतः ॥ २६४ ॥ जीर्णदेवालयोद्यानगृहवृक्षनदीषुच ॥ नदीकूलाद्रिकूलेषुभूछिद्रादिषुनोवसेत् ॥ एवमाचार्य्यमतिमान्कुर्य्याद्भूमिपरिग्रहम् ॥ २६५ ॥ पृथ्वींवराहंसम्पूज्यभूसुतस्यबलेनच ॥ ब्रूयादमुकमन्त्रस्यपुरश्चरणसिद्धये ॥ २६६ ॥ मयेयंगृह्यतेभूमिर्मन्त्रोयंसिध्यतामिति ॥ न्यग्रोधदुग्धसस्यस्थवृक्षान्यतरवृक्षजान् ॥ २६७ ॥ वितस्तिप्रमितान्वृत्तान्गृहीयात्कीलकान्दश ॥ अष्टौनिखातयेदष्टदिशास्वीशानपूर्वयोः ॥ २६८ ॥ मध्येनिखन्यंनवममूर्ध्वबुध्यातथाप्यधः ॥ पश्चान्नैर्ऋत्ययोर्मध्येयन्त्रमस्त्रेणकीलयेत् ॥ २६९ ॥ पूजातथास्त्रमन्त्रेणतेष्वस्त्रंचप्रपूजयेत् ॥ क्षेत्रेचकीलितेमन्त्री

---

१ बटके समीप २ ग्रन्थों में कहीहुई नदियोंके तीरमें ३ छोटीतलैयों के आगे ४ बेरका वृक्ष ५ महुवा ६ बीता बीताभरके दश कीलोंको बनवाकर आठ दिशों में एकएक कीले को गाड़दे और ईशान व पूर्वदिशाके मध्य में एक और पश्चिम व नैर्ऋत्य के मध्यमें एक कीले को फट्मन्त्र पढ़कर गाड़दे ॥

नविघ्नैःपरिभूयते ॥ २७० ॥ दिक्पालेभ्योमाषभक्तबलिंदिक्षुप्रकल्पयेत् । क्षेत्रमध्येक्षेत्रपालंपूजयेच्चगणेश्वरम् ॥ २७१ ॥ तृतीयंवास्तुगुरुपन्तेभ्योद द्यादबलित्रयम् ॥ क्षेत्रमध्येसमाश्रित्यकूर्म्मचक्रंविचारयेत् ॥ २७२ ॥ कूर्म्मच क्रमविज्ञातुर्महाविघ्नोभिजायते ॥ परदेशग्रामगृहभेदात्कूर्म्मश्चतुर्विधः ॥ २७३ ॥ वृत्तद्वयंप्रकुर्वीतनवकोष्ठकभेदितम् ॥ कवर्गाद्याःसप्तलेख्याःपूर्वाशा दिपुलक्षकौ ॥ २७४ ॥ ईशान्यांविलिखेन्मध्यवृत्तेकोष्ठेद्वयंद्वयम् ॥ स्वराणां पूर्वतोलेख्यंश्रीबीजंमध्यकोष्ठके ॥ २७५ ॥ प्राङ्मुखःपरकूर्म्मस्तुसर्वदैवप्रजा यते ॥ देशनामाद्यिमोवर्णोयस्यांदिशिव्यवस्थितः ॥ २७६ ॥ देशकूर्म्ममुखं तस्यांदिशिस्याद्ग्रामकूर्म्मके ॥ मुखद्वयंतुविज्ञेयंस्वराद्यञ्जनतस्तथा ॥ २७७ ॥ गृहकूर्म्मस्यवदनंयद्दिग्द्वारंगृहंभवेत् ॥ मुखस्यपार्श्वयोःपाणीकुक्षीपादौतत स्ततः ॥ २७८ ॥ पुच्छमेकमथोमध्येपृष्ठमेकंपडङ्गवान् ॥ महारिक्तेजीवना शोवैरेस्याद्धननाशनम् ॥ २७९ ॥ किञ्चिद्वैरेसुखाल्पत्वंतदिदानींनिगद्य ते ॥ अगौऋच्छौलृपौजाहौपषौएनौइरौउलौ ॥२८० ॥ फधौभशौयसौचेतिम हारीपरिकीर्त्तितौ ॥ जछौओटूयडौगादौजटौराखौबुधौरलौ ॥ २८१ ॥ वैर न्तुपञ्चमेवर्गेतत्किञ्चित्करयोर्भवेत् ॥ चटयोःपचयोश्चापितरयोरलयोरपि ॥ २८२ ॥ एकवर्गेपराप्रीतिःस्वैवर्गंद्विगुणंकुरु ॥ स्थानवर्गयुतंतष्टमष्टभिश्चा पिउच्यते ॥ २८३ ॥ स्थानवर्गोद्विगुणितःस्ववर्गाढ्योष्टशेषितः ॥ स्थानाय उभयोःकार्य्यमधिकंयस्यशेषकम् ॥ २८४ ॥ यावत्स्थितंसोर्थदःस्यात्साधकोर्थ

---

१ पर व देश व ग्राम व गृह, इनभेदों से कूर्म्म चारतरहका होता है २ प्रथम दो वृत्त व आठ कोठोंको बनाकर पूर्वादि दिशों के क्रमसे उन कोठों में कादि सातवर्ग व आठयें कोठे में लं लं ईशानकोण में लिखकर क्रमही से अ आ आदि सोलहस्वरोंको और मध्यमें श्रीबीज लिखे ३ परकूर्मका मुख सदा पूर्वदिशामें रहता है ४ जिस वर्ग में अपने नामका प्रथमाक्षरहो उस वर्गकी संख्या में, स्थानवर्ग अर्थात् जिस जगह में स्थान बनायाजावैगा उस दिशाकी संख्याको जोड़कर आठका भाग देनेसे शेष अक्षरोंको फल कहते हैं तथा स्थान वर्गको द्विगुणकर निजवर्ग संख्यासे संयुक्त किये उन अंकोंमें आठका भाग देनेसे शेषअक्षरों का फल मूलमें स्पष्टहै ॥

प्रदोनसत् ॥ मुखेसर्वार्थसिद्धिःस्यात्करयोरत्नसिद्धयः ॥ २८५ ॥ कटौनकि ञ्चिद्दासत्वंपादयोःपुच्छतोमृतिः ॥ कुरुक्षेत्रेप्रयागेचगङ्गासागरसङ्गमे ॥ २८६॥ महाकालेचकाश्यांचकूर्म्मस्थानंनचिन्तयेत् ॥ क्षेत्रसाधकमन्त्राणामेकमेवा द्यमक्षरम् ॥ २८७ ॥ यदिस्यात्सध्रुवंमन्त्रःसर्वसिद्धिफलप्रदः ॥ अमृतोवृष भःशैलराजोवासुकिरेवच ॥ २८८ ॥ अथकृच्छ्रक्रिकृत्पूर्वकाष्ठादौबलिनार्च येत् ॥ पद्मयोनिमहाशङ्खंछायाख्यंचापिमध्यमे ॥ २८९ ॥ कूर्म्मपृष्ठेगृहंकृ त्वागृहस्थोजयमाचरेत् ॥ अथमालांप्रवक्ष्यामिद्विविधासास्थिराचरा ॥ २९०॥ स्थिरातुस्थिरचित्तानांचञ्चलाचलचेतसाम् ॥ अकारादिक्षकारान्तैर्बिन्दुवन्मा तृकाक्षरैः ॥ २९१ ॥ अनुलोमविलोमस्थैः क्लृप्तयावर्णमालया ॥ प्रत्येकमन्त्र युग्मन्त्राजप्तव्याःसर्वसिद्धिदाः ॥ २९२ ॥ ऋचाद्याअपिकिञ्चान्येप्रोक्ताच स्थिरमालिका ॥ अकारादिक्षकारान्ताप्रोक्ताचाक्षरमालिका ॥ २९३ ॥ जपे चाष्टोत्तरशतेपुनर्वर्णस्ययोजनम् ॥ चराथकथ्यतेमालाभिचारेतिथिसङ्ख्य कैः ॥ २९४ ॥ मुक्त्यर्थंपञ्चविंशत्याभसङ्ख्यैःसर्वदाजपेत् ॥ त्रिंशद्भिर्धर्म्मवृ द्धिःस्याच्चतुःपञ्चाशतेप्सितम् ॥ २९५ ॥ शतात्साम्यंतथाष्टाधिशतात्सकल सिद्धयः ॥ समस्तसिद्ध्यैरुद्राक्षामणयोधनदामताः ॥ २९६ ॥ गतस्वाप्तिकरः शङ्खोभोगकृत्स्फटिकोमतः ॥ पुत्रप्रदाःपुत्रजीवाःपद्माक्षाःपुष्टिवर्द्धनाः ॥ २९७॥ विद्रुमोत्थावश्यकरामौक्तिकामुक्तिदामताः ॥ पापापहाःकुशमयास्स्वर्णजाः कामदायकाः ॥ २९८ ॥ कामवृद्धिस्तारजातैरिन्द्राक्षैःस्वागतम्पदम् ॥ स्त्री वश्यार्थंचहारिद्रादार्व्यापुरुषवश्यकृत् ॥ २९९ ॥ ज्वरहन्त्रीतुलाक्षायःशङ्ख स्यपितृतृप्तिकृत् ॥ अर्कजोच्चाटनेकार्य्याश्रीफलैर्ज्ञानसाधने ॥ ३०० ॥ पद्म काष्ठोद्भवातुष्टोदेवादारूद्भवानिरुक् ॥ कृष्णकाष्ठसमुद्भूतैस्तामसंकर्म्मसिद्ध्य ति ॥ ३०१ ॥ गजदन्तस्यसर्वार्थंमोहनेताम्रजामता ॥ मारणेचायसीप्रोक्ता धनार्थंश्वेतपद्मजा ॥ ३०२ ॥ विषान्तरेचन्दनोत्थाशक्तिकृच्छ्वेतकाष्ठजा ॥

---

१ और कवर्गादिवर्ग व निज नाम जिस दिशामें हो उसका शुभाशुभ फल कूर्म्मके मुखादिस्थानों से जानिये २ गतद्रव्यकी प्राप्तिकरनेवाला ३ चांदी की गुरियों से ४ लोहेकी गुरियों की माला ॥

रक्तचन्दनबीजोत्थायक्षिण्यादिकसाधने ॥ ३०३ ॥ भूतस्तम्भेनिम्बजाताज नस्तम्भेशमीभवा ॥ महानिम्बेनडाकिन्याभूनिम्बैःस्तम्भनंरुजाम् ॥ ३०४ ॥ इन्द्रवृक्षाद्गुणस्तम्भोभिचारोवानरास्थितः ॥ ऋक्षास्थितोवन्यसिद्धिःशार्दूला त्तस्यदेवताः ॥ ३०५ ॥ नरास्थ्नाराक्षसावश्यावीरावश्याहयास्थिभिः ॥ रा सभास्थ्नाक्षुद्रसिद्धिर्मान्यतातुगजास्थिभिः ॥ ३०६ ॥ मृत्तिकाभृष्टमणिजा मालाशाबरसिद्धिकृत् ॥ कुशग्रन्थ्याजपेद्विप्रःसुवर्णमणिभिर्नृपः ॥ ३०७ ॥ पुत्रजीवैर्जपेद्वैश्यःपद्माक्षैःसर्वएवहि ॥ रुद्राक्षस्फटिकेन्द्राक्षमध्येकिंचिन्नदापये त् ॥ ३०८ ॥ मध्येदत्त्वाजपंकुर्वन्काममोक्षौविनाशयेत् ॥ चतुर्थ्यांप्रोतयेन्मा लांगणनाथस्यमन्त्रकैः ॥ ३०९ ॥ मध्याह्नेऽर्कस्यसप्तम्यांरवौवातस्यमन्त्र कैः ॥ द्वादश्यांवैष्णवीमालाप्रोतव्याविष्णुमन्त्रतः ॥ ३१० ॥ त्रयोदश्यांतु सन्ध्यायांतन्मन्त्रैःशिवमालिका ॥ अष्टम्यांवाचतुर्दश्यांनवम्यांभूमिनन्दने ॥ ३११ ॥ शक्तीनामपिकर्तव्याशुक्ररात्रौयथाविधि ॥ ग्रन्थितापट्टसूत्रेणदेव्याः प्रीत्यैतुमालिका ॥ ३१२ ॥ कार्य्यासावैष्णवीमालापट्टसूत्रैरथापिवा ॥ ऊ र्णाभिर्वावल्कलैर्वाशैवीकार्पाससूत्रकैः ॥ ३१३ ॥ प्रायशःसर्वदेवानांसूत्रो त्पत्तिविधिंशृणु ॥ सूत्रंद्विजेन्द्रपुत्रस्त्रीनिर्मितंग्रन्थिवर्जितम् ॥ ३१४ ॥ त्रिगुणंत्रिगुणीकृत्यग्राह्यंप्रक्षाल्ययत्नतः ॥ ३१५ ॥ एकवक्त्रैर्द्विवक्त्रैश्चचतु र्वक्त्रैश्चपञ्चभिः ॥ षड्वक्त्रैर्वाथकर्तव्यामिथोमिश्रांस्तुवर्ज्जयेत् ॥ ३१६ ॥ मुखंमुखेनसंयोज्यपृष्ठंपृष्ठेनयोजयेत् ॥ रुद्राक्षस्योन्नतंप्रोक्तंमुखंपृष्ठंतुनिम्न कम् ॥ ३१७ ॥ धात्रीफलप्रभःश्रेष्ठोमध्योबदरसन्निभः ॥ अधमश्चणकाभः स्यात्ततोहीनोविपत्तिकृत् ॥ ३१८ ॥ एकोमेरुस्तत्रदेयःसर्वत्रस्थोऽल्पयुक्त चयः ॥ आद्यंस्थूलंततस्तस्मान्न्यूनंन्यूनतरंततः ॥ ३१९ ॥ सर्पाकारंप्र कुर्वीतब्रह्मग्रन्थिर्मणिंप्रति ॥ अथवाग्रन्थिरहितंदृढचक्रसमन्वितम् ॥ ३२० ॥ त्रिरावृत्त्याथमध्येनचार्धावृत्त्यातुदेशतः ॥ ग्रन्थिःप्रदक्षिणावर्त्तः स ब्रह्मग्र न्थिरुच्यते ॥ ३२१ ॥ एकभक्तंविधायादौसाधकोग्रन्थयेत्स्वयम् ॥ कृत नित्यक्रियःशुद्धउक्तेष्वक्षेष्वतन्द्रितः ॥ ३२२ ॥ श्वेतारक्तासुवर्णाभाकृष्णा

१ खीगुरि वृक्ष २ बकैना ३ चिरायता ४ पितौजिया ॥

चैवद्विजादितः ॥ एतेपुत्राह्मणश्रेष्ठोजपमालाकृतेभृशम् ॥ ३२३ ॥ अला
भेतुद्विजातीनामपिवास्वस्वजातयः ॥ कलौतुदुर्लभोविप्रोयथाविप्राःस्वधर्म्म
गाः ॥ ३२४ ॥ अतिस्थूलोतिसूक्ष्मश्चस्फुटितोभंगुरोलघुः ॥ भिन्नःपुराधृ
तोजीर्णोरुद्राक्षोनशुभःस्मृतः ॥ ३२५ ॥ अन्योन्यघर्षणादेवजपहानिर्भवेद्
ध्रुवम् ॥ मध्यतोग्रन्थयःकार्य्यानात्रमुक्तादिविन्यसेत् ॥ ३२६ ॥ एकवक्रः
शिवस्तस्यमालातुजपतोहरेत् ॥ ब्रह्महत्यादिपापानितथाभक्ताद्विकेष्टदः ॥
३२७ ॥ उमाशङ्करनामाख्योद्विमुखोयंव्यपोहति ॥ गोहत्यादिकपापानि
गृहस्थाश्रमसौख्यदः ॥ ३२८ ॥ त्रिमुखस्त्वग्निरूपःस्यात्स्त्रीहत्यादिकपाप
हा ॥ धर्म्मार्थकामाःसिद्ध्यन्तिधारणात्तज्जपादपि ॥ ३२९ ॥ चतुर्मुखोभवे
द्ब्रह्मागुरुहत्यादिनाशकः ॥ स्फुरन्तिसकलाविद्यावाक्सिद्धिश्चापिजायते ॥
३३० ॥ पञ्चवक्त्रःशिवःसाक्षात्सर्वपापापहारकः ॥ शैवगाणेशशाक्तानांहुत
सिद्धिस्तुतज्जपात् ॥ ३३१ ॥ कार्त्तिकेयस्तुषड्वक्त्रःस्खलितव्रतपापहा ॥ विधि
तोदक्षिणेबाहौधारणात्समरेजयः ॥३३२॥ सप्तवक्त्रोमहानागोनन्तोनामाथत
ज्जपात् ॥ अनन्ताःसिद्धयःसर्पविषमृत्युर्नजायते ॥ ३३३ ॥ अष्टवक्त्रोगणे
शःस्यात्सर्वविघ्ननिवारकः ॥ नश्यन्तितज्जपात्सर्वेकामक्रोधादिशत्रवः ॥
३३४ ॥ नववक्त्रोभैरवःस्याद्वाममार्गस्थदेवताः ॥ जपादेवप्रसीदन्तिवामबाहौ
स्थितोघहा ॥ ३३५ ॥ जनार्दनोदशमुखोजपान्नश्यन्तिधारणात् ॥ पिशाच
ग्रहवेतालब्रह्मराक्षसपन्नगाः ॥ ३३६ ॥ एकादशमुखःसाक्षाद्रुद्रएवास्यधार
णात् ॥ जपाच्चहयमेधादियज्ञानांफलभाग्भवेत् ॥ ३३७ ॥ द्वादशास्योभा
स्करःस्याद्धारणात्तज्जपादपि ॥ तेजस्वीचप्रतापीचगोमेधफलभाग्भवेत् ॥
३३८ ॥ त्रयोदशमुखःसाक्षाद्विश्वदेवात्मकःस्मृतः ॥ श्राद्धकालेधृतोदद्या
त्पितॄणामक्षयाङ्गतिम् ॥ ३३९ ॥ चतुर्दशमुखैर्जप्तंतदानन्त्यायजायते ॥
पूज्यतेदेवमनुजैरक्षयांलभतेगतिम् ॥ ३४० ॥ अथमालाकृतिंवक्ष्येक्षालये
त्पञ्चगव्यकैः ॥ दुग्धंकाञ्चनवर्णायाःश्वेतायाश्चैवगोमयम् ॥ ३४१ ॥
गोमूत्रंताम्रवर्णायानीलायाश्चभवेद्दधि ॥ घृतन्तुकृष्णवर्णायाएवंपञ्चामृते
पिच ॥ ३४२ ॥ गवांवर्णास्तुसुलभाःसन्तिदेशेषुकुत्रच ॥ तत्रवर्णविभागे

नपञ्चगव्यानिचाहरेत् ॥ ३४३ ॥ वर्णालाभे न दोषोस्तिमात्राहीनन्तु वर्ज्जयेत् ॥ गोशकृद्द्विगुणंमूत्रंसर्पिर्दद्याच्चतुर्गुणम् ॥ ३४४ ॥ क्षीरमष्टगुणंप्रोक्तंपञ्चगव्यंतथादधि ॥ गायत्र्यादायगोमूत्रंगन्धद्वारेतिगोमयम् ॥ ३४५ ॥ [3]आप्यायस्वेतिचक्षीरंदधिक्राव्णेतिवैदधि ॥ ते[5]जोसिशुक्रमित्याज्यं देवस्यत्वाकुशोदकम् ॥ ३४६ ॥ क्षालयेत्पञ्चगव्याद्यैःसद्योजातादिमन्त्रतः ॥ चन्दनागुरुगन्धाद्यैर्वामदेवेनघर्षयेत् ॥ ३४७ ॥ धूपयेदप्यघोरेण चासितागुरुगुग्गुलैः ॥ तत्पुरुषाख्यमन्त्रेणलेपयेच्चन्दनादिभिः ॥ ३४८ ॥ [11]ईशानःसर्वमितिचप्रत्येकंमन्त्रयेच्छतम् ॥ तेनैवमन्त्रयेन्मेरुमघोरेणचमन्त्रयेत् ॥ ३४९ ॥ अथान्यमालासंस्कारंवक्ष्येश्वत्थस्यपत्रकैः ॥ पद्माकारेणनवभिःस्थापितेतत्रविन्यसेत् ॥ ३५० ॥ मणीन्सूत्रंचगन्धोदैःक्षालयित्वाथमन्त्रयेत् ॥ ॐह्रींपूर्वैर्मातृकार्णैःक्रमादेकैकशोमणिम् ॥ ३५१ ॥ सूत्रंचतत्रविन्यस्यपूजयित्वाहुनेत्ततः ॥ तिलाद्यैःकेवलाज्यैर्वासद्योजातादिभिःपृथक् ॥ ३५२ ॥ पञ्चमन्त्रैःशतंचाष्टावष्टाविंशतिमेववा ॥ होमाभावे जपःप्रोक्तःप्रोतयेन्मालिकांततः ॥ ३५३ ॥ गोपुच्छसदृशीकार्य्याएकाग्रावासमेरुका ॥ आवाहनादिमुद्राणामष्टकंदर्शयेत्ततः ॥ सद्योजातादिभिर्मन्त्रैः पूर्ववत्क्षालनादिकम् ॥ ३५४ ॥ कौलिकादौविशेषोयंसुरयामणितर्पणम् ॥

---

१ ॐतत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् २ गन्धद्वारान्दुराधर्षांनित्यपुष्टांकरीषिणीम् । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ३ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ४ दधिक्राव्णोअकारिषञ्जिष्णोरश्वस्यवाजिनः । सुरभिनोमुखाकरत्प्राणआयूंषितारिषत् ५ तेजोसिशुक्रमस्यमृतामायुष्याआयुर्मेपाहि ६ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् । अश्विनोर्भैषज्येनतेजसोब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येनवीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिञ्चामि ७ सद्योजातंप्रपद्यामिसद्योजातायवैनमः । भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ८ वामदेवायनमोज्येष्ठायनमःश्रेष्ठाय नमोरुद्रायनमःकालायनमः कालविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमोनमः सर्वभूतदमनाय नमो मनोन्मथनायनमः ९ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः । सर्वतःसर्वसर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः १० तत्पुरुषायविद्महेमहादेवायधीमहितन्नोरुद्रःप्रचोदयात् ११ ईशानः सर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥

शिरोमालातुषट्त्रिंशद्द्वात्रिंशत्कण्ठमालिका ॥ ३५५ ॥ कूर्परे षोडशप्रोक्ताद्वात्रिंशन्मणिबन्धयोः ॥ अष्टोत्तरशतैर्युक्तमुपवीतंविधीयते ॥ ३५६ ॥ तदर्धंमुरसोमालाशिखायामेकउच्यते ॥ कर्णयोश्चापिषट्सङ्ख्याधारणक्रम ईरितः ॥ ३५७ ॥ सङ्ख्याहीनंनकर्त्तव्यमधिकंनैवदूष्यति ॥ रुद्राक्षंधारयन्नेवदेहान्तेसशिवोभवेत् ॥ ३५८ ॥ बहुलंलभतेपुण्यंभाग्यवानिहजायते ॥ स्नानेदानेजपेहोमेवैश्वदेवेसुरार्चने ॥ ३५९ ॥ प्रायश्चित्तेतथाश्राद्धे दीक्षाकालेविशेषतः ॥ रुद्राक्षधारीभूत्वाचयत्किञ्चित्कर्मवैदिकम् ॥ ३६० ॥ योविप्रःसततंकुर्य्यात्तत्कर्म्मसफलंभवेत् ॥ कण्ठेशिरसिहस्तेचकर्णयोरुपवीतके ॥ ३६१ ॥ रुद्राक्षधारणादेवरुद्रोभवतिमानवः ॥ खादन्मांसंपिबन्मद्यंसङ्गच्छन्नन्त्यजादिषु ॥ ३६२ ॥ सद्योभवतिपूतात्मारुद्राक्षंमूर्ध्निधारयेत् ॥ देवान्पुष्णन्तियेदेवाःपशवस्तेत्रवैदिकाः ॥ ३६३ ॥ तान्घातयन्तियेकौलेतेषांशास्तास्त्यययंयमः ॥ तेषांसंरक्षणार्थायनान्योरुद्राक्षतोभुवि ॥ ३६४ ॥ रुद्राक्षाःसर्वदेवानांमन्त्रसिद्धिविधायकाः ॥ रुद्राक्षंकण्ठमाश्रित्य शूकरोम्रियतेयदि ॥ ३६५ ॥ सोपिरुद्रत्वमाप्नोतिकिंपुनर्मानुषादयः ॥ उच्छिष्टोवाविकर्म्मस्थोयुक्तोवासर्वपातकैः ॥ ३६६ ॥ मुच्यतेसर्वपापेभ्योनरोरुद्राक्षधारणात् ॥ रुद्राक्षमालिकांकण्ठेधारयेद्भक्तिवर्ज्जितः ॥ ३६७ ॥ पापकर्म्मापियोनित्यंरुद्रलोकेमहीयते ॥ अरुद्राक्षधरोभूत्वायत्किञ्चित्कर्म्मवैदिकम् ॥ ३६८ ॥ कुर्य्याद्विप्रोपियोमोहात्नासावाप्नोतितत्फलम् ॥ शूद्रार्थञ्चस्त्रियामर्थेमालासंस्कारउच्यते ॥ ३६९ ॥ गणेशसूर्य्यविष्णवीशदुर्गाःसम्पूज्यभक्तितः ॥ मालांतामयतामालांकोम्बीजेनाभिमन्त्रिताम् ॥ ३७० ॥ अष्टोत्तरशतंपञ्चगव्येतांस्थापयेत्त्र्यहम् ॥ चतुर्थेतुसमुद्धृत्यक्षालयेदस्त्रमन्त्रतः ॥ ३७१ ॥ हृन्मन्त्रेणग्रन्थयित्वास्थण्डिलेतांनिधापयेत् ॥ तत्रप्रक्षालितांमालांस्थापयेद्धेमपात्रके ॥ ३७२ ॥ पञ्चामृतेनसंस्नाप्यशीतलेनजलेनच ॥ चन्दनेनसुगन्धेनकस्तूरीकुंकुमादिभिः ॥ ३७३ ॥ अभिषेकंततःकुर्य्यात्तह्सौंमन्त्रेणचसाधकः ॥ नवग्रहान्पूजयित्वादिक्पालांश्चापिपूजयेत् ॥ ३७४ ॥ तिलेनघृतयुक्तेनशक्तितोहोमयेत्ततः ॥ स्वर्णन्तुदक्षिणांद

द्याद्गुरवेमणिसङ्ख्यकम् ॥ ३७५ ॥ तन्मन्त्रजापिनोविप्रान्भोजयेद्वा
वैदिकान् ॥ अभावेस्वर्णपात्रस्यग्राह्यमश्वत्थपत्रकम् ॥ ३७६ ॥ माला
स्कारइत्युक्तोजपःस्यात्सिद्धिदायकः ॥ कीकसादिकमालानांकौलिकान
ञ्चवामिनाम् ॥ ३७७ ॥ सिद्धचैवक्ष्यामिसंस्कारंसर्वतन्त्रेषुगोपितम् ।
शिल्पिनंपूजयेदादौवस्त्रगन्धानुलेपनैः ॥ ३७८ ॥ संहृष्टःकारयेन्मात
मन्त्रपूतंपिबेन्मधु ॥ पञ्चाशन्मणिभिःकार्य्याऋतुमत्याभगेक्षिपेत् ॥ ३७९
निशामेकांसमुद्धृत्यतान्मणीन्क्षालयेत्ततः ॥ शुद्धोदैर्मूलमन्त्रेणभिषिञ्चे
जयारसैः ॥ ३८० ॥ प्रक्षाल्यधूपयेत्पश्चात्प्रोतयेदिष्टसूत्रकैः ॥ सूत्रंस
ष्टजपेनीलंकृष्णंमारणकर्म्मणि ॥ ३८१ ॥ मोहनेहरितंस्तम्भेधूम्रांभंद्वि
तालभम् ॥ शान्तौपुष्टौसितंद्वेषेरक्तमुच्चाटनेभवेत् ॥ वश्येपीतंकषायन्तुवि
षकरणेमतम् ॥ ३८२ ॥ चक्रपूजांततःकृत्वात्वष्टोत्तरसहस्रकम् ॥ हुनेन्मद्य
पलाभ्याञ्चमूलमन्त्रेणसाधकः ॥ ३८३ ॥ ततोबलिंयथान्यायंमहिषादेः
दापयेत् ॥ शिल्पिनःसाधकांश्चापिभोजयेन्मणिसङ्ख्यकान् ॥ ३८४ ॥
एवंसम्मार्जितांमालांगुरवेतांप्रदर्शयेत् ॥ येनमन्त्रेणयामालाकृतातन्तुजपे
या ॥ ३८५ ॥ अन्यमन्त्रजपाच्छापोदेवतायाःप्रजायते ॥ दृढंसूत्रंनियुञ्जी
तजपेत्तुस्थगितोयथा ॥ ३८६ ॥ जीर्णंसूत्रेपुनःसूत्रंग्रन्थयित्वाशतंजपेत् ।
तर्जन्यानस्पृशेत्सूत्रंकम्पयेन्नैवधूनयेत् ॥ ३८७ ॥ नस्पृशेद्वामहस्तेनक
रस्तांनकारयेत् ॥ अक्षाणांचालनेंगुष्ठश्चान्यमक्षंनसंस्पृशेत् ॥ ३८८ ।
जपकालेतदाविद्वान्मन्त्रंनैवविलङ्घयेत् ॥ परिवर्त्तनकालेतुसङ्घट्टंनैवका
येत् ॥ ३८९ ॥ कलिःखटखटाशब्देदोलनेचचलन्मतिः ॥ चलितेचैवविघ्न
पःस्फुटितेव्याधिसम्भवः ॥ ३९० ॥ हस्तच्युतेमहाविघ्नःसूत्रच्छेदेविनाश
नम् ॥ अथवांगुलिमालाभिर्जपंकुर्य्यात्तदुच्यते ॥ ३९१ ॥ अनामाम
मारभ्य कनिष्ठातुक्रमेणतु ॥ मध्यमामूलपर्य्यन्ता करमालाप्रकीर्तिता ।
३९२ ॥ मध्यमानामिकामध्यपर्वयुग्मंप्रकल्पयेत् ॥ मेरुंचानामिकामूलात्क
निष्ठातुक्रमेणच ॥ ३९३ ॥ तर्ज्जन्यग्रादितोमध्यामूलान्तंदशसङ्ख्यकाः ।
अथवाकल्पयेन्मेरुंमध्यामध्यादिपर्वकम् ॥ ३९४ ॥ अनामामध्यमेत

तर्ज्जनीमूलकावपि ॥ जपसङ्ख्याजपःप्रोक्तस्तथायन्त्रिविधोमतः ॥ ३६५ ॥ तत्रादौत्रिविधःप्रोक्तःपूर्वोक्तोयंजपोमया ॥ अंगुल्याख्योजपःप्रोक्तोमतोन्यो नममैवच ॥ ३६६ ॥ अंगुलीगर्तलेखाभिर्जपालेखाजपोभवेत् ॥ अंगुलीं नावियुञ्जीतजपकालेकदाचन ॥ ३६७ ॥ अंगुलीनांवियोगेनच्छिद्रेषुस्रवते जपः ॥ नोल्लङ्घयेच्चगुणमानंकिञ्चित्सङ्कोचयेत्तलम् ॥ ३६८ ॥ नदर्शयेत्क रतश्चेत्फलंगृह्णन्तिराक्षसाः ॥ त्यजेद्विंशतिकर्म्माणिसिद्धिविघ्नकराणिच ॥ ३९९ ॥ कुर्य्याद्विंशतिकर्म्माणिजपसिद्धिकराणिच ॥ लोभंक्रोधंचमात्स र्य्यंकामंद्वेषञ्चताडनम् ॥ ४०० ॥ दम्भमुच्चाटनाभ्यङ्गाप्रियमिथ्यावचस्त था ॥ गीतंवाद्यंमधुच्छायांविभीतककरञ्जयोः ॥ ४०१ ॥ मांसंप्रतिग्रहं माल्यंताम्बूलंपापिभाषणम् ॥ एतानिवर्ज्जयेद्विद्वान्कर्तव्यान्यथभेशृणु ॥ ४०२ ॥ मन्त्रोनिरोधोमन्त्रार्थचिन्तनंनित्यकर्म्मच ॥ नैमित्तिकंश्रौतमौने परसङ्गस्यवर्ज्जनम् ॥ ४०३ ॥ भूमिशय्यात्रिषवणस्नानंप्रात्यहिकार्चन म् ॥ नित्यदानंगुरोःपादपूजाहारनिमन्त्रणे ॥ ४०४ ॥ स्नानञ्चपञ्चग व्येनपवित्रकरधारणम् ॥ त्रिसन्ध्यावन्दनंपञ्चयज्ञास्तर्पणमेवच ॥ ४०५ ॥ यथोक्तवस्त्रधरणंप्रायश्चित्तमथोच्यते ॥ सकृदुच्चरितेशब्देप्रणवंसमुदीरयेत् ॥ ४०६ ॥ प्रोक्तेपामरशब्देपिप्राणायामंसकृच्चरेत् ॥ बहुप्रलापेचावश्यंन्यस्याङ्गा नितत्तोजपेत् ॥ ४०७ ॥ क्षुतेप्येवंतथास्पृश्यस्थानानांस्पर्शनेपिच ॥ मौन त्यागेजपेन्मन्त्रंवैष्णवंवास्मरेद्धरिम् ॥ ४०८ ॥ पतितान्त्यजसन्दर्शतेजोव न्तंनिरीक्षयेत् ॥ सूर्य्योग्निश्चन्द्रमाःखेटामुनयोभानितारकाः ॥ ४०९ ॥ विद्वांसोब्राह्मणाश्चेतितेजोहीनाःपरेपरे ॥ क्षुतेधोवायुगमनेपतितादिकभा षणे ॥ ४१० ॥ त्यक्त्वाजपंतथाचम्यप्राणायामंषडङ्गकम् ॥ कृत्वापश्चा ज्जपेन्मन्त्रमम्भोलाभेहरिंस्मरेत् ॥ ४११ ॥ मार्जारंकुक्कुटंक्रौञ्चंश्वानंगृध्रं खगंकपिम् ॥ दृष्ट्वाचम्यचरेत्कर्म्मस्पृष्ट्वास्नानंविधीयते ॥ ४१२ ॥ दैवाद सत्यभाषीचेत्सरौद्रंपौरुषंजपेत् ॥ बहुवस्त्रैकवस्त्रोवामुक्तकेशोगलावृतः ॥ ४१३ ॥ उष्णीषीकञ्चुकीनग्नःशिरसिप्रावृतोपिवा ॥ चिन्ताद्याकुलचि त्तोवाक्रुद्धोत्रान्तःक्षुधाचितः ॥ ४१४ ॥ जङ्घानगूढपादोवायानशय्याग

तस्तथा ॥ शयानोवाधौतपादःपश्चाद्वादक्षिणामुखः ॥ ४१५ ॥ म्लान वस्त्रोर्धवस्त्रश्चतथाद्विगुणवस्त्रकः ॥ च्युतवस्त्रोरक्तवस्त्रःस्निग्धवस्त्रोद्वि च्छकः ॥ ४१६ ॥ बहिःकच्छोनुत्तरीयोविकच्छश्चैककच्छकः ॥ कौपी नीप्रोढपादश्चतथासीवितवस्त्रवान् ॥ ४१७ ॥ जपेशक्तःप्रमादाद्वाराक्षै गृह्यतेफलम् ॥ तत्कारणंपरित्यज्यतज्जपंपुनराचरेत् ॥ ४१८ ॥ स्वभार्य्या यांप्रमादेनस्खलितश्चेत्तदोषसि ॥ स्नात्वार्द्रवासामौनेनदशकुम्भमितंजल म् ॥ ४१६ ॥ श्रोत्रियस्यगृहेदद्यात्परनार्य्यांसहस्रकम् ॥ जपःस्यादक्षरा त्तिःसत्रेधापरिकीर्त्तितः ॥ ४२० ॥ हीनोवाग्जःकायिकस्तुमध्यःश्रेष्ठस्तु मानसः ॥ यउच्चनीचैःस्वरितैःशब्दैःस्पष्टैःपदाक्षरैः ॥ ४२१ ॥ मन्त्रउच्चार्य्य तेहीनोसौजपोवाचिकःस्मृतः ॥ शनैरुच्चारयेन्मन्त्रमीपदोष्ठौप्रचारयेत् ॥ ४२२ ॥ कस्यचिच्छ्रवणायोग्यःकायिकःसतुमध्यमः ॥ बुद्ध्यायदोक्षरश्रे णींयथास्थानेपुचोच्चरेत् ॥ ४२३ ॥ अर्थस्मरणपूर्वन्तुसश्रेष्ठोमानसोजपः ॥ पट्कर्म्मकृद्वाचिकःस्यात्कायिकःसर्वसिद्धिकृत् ॥ ४२४ ॥ मानसःसाधये न्मोक्षंततोन्यःक्षुद्रकर्म्मकृत् ॥ जपेनदेवतानित्यंस्तूयमानाप्रसीदति ॥ ४२५ ॥ जपात्सिद्धिर्जपात्सिद्धिर्जपात्सिद्धिरदूरतः ॥ यथाधनेनसन्तुष्टोजायतेक्षुद्रको नरः ॥ ४२६ ॥ तथैवबलिदानेनपूजयाक्षुद्रदेवताः ॥ यथामहागुणैर्वश्योजाय तेगुणवान्प्रभुः ॥ ४२७ ॥ तथाहंत्वंचविष्णवकौजपादेवफलप्रदाः ॥ आसन न्तुद्विधाप्रोक्तंनित्यकामिकभेदतः ॥ ४२८ ॥ कुशाजिनोत्तरैर्युक्तंचतुरंगुल मूर्ध्वतः ॥ चतुरस्रंद्विहस्तञ्चसुन्दरंमृदुनिर्मलम् ॥ ४२६ ॥ इदंसुखासनंनि त्यंजपसिद्धिविधायकम् ॥ अथकाम्यानिवक्ष्यन्तेज्ञानसिद्ध्यायिहाजिनम् ॥ ४३० ॥ सर्व्वसिद्ध्यैव्याघ्रचर्म्मत्वाविकंरोगनाशनम् ॥ कौशेयंपौष्टिकंप्रो

---

१ जो स्वप्न में अपनी स्त्रीका भोगकरनेसे वीर्य पतितहो तौ प्रातःकाल स्नानकर भीगे कपड़े पहिनेहुये दश घड़ा जल भरकर स्वधर्माचारी ब्राह्मणके घरमें देनाही प्रायश्चित्त है और स्वप्नही में परस्त्रीमें वीर्य पतितहोने से हजार घड़ा जल भर देना उचित है २ अन्तरी की पंक्ति ३ यहांपर चकार अनुक्तसमुच्चय अर्थ में है उससे गणेशजीको जानिये क्योंकि पञ्च देव अर्थात् विष्णु, शिव, शक्ति, सूर्य्य, गणेश मुक्तिदायक प्रसिद्ध हैं ४ भेड़ की ऊनका वस्त्र

क्त्वेत्रजं श्रीविवर्द्धनम् ॥ ४३१ ॥ श्वेतेतुकम्बलेधर्म्मसिद्धीरक्तेर्थसिद्धयः॥ पीतेकामोद्विजान्येषां[1] मोक्षदोकृष्णकम्बलः ॥ ४३२ ॥ दुःखमुक्त्यैरञ्जित[2] स्तुनीलंरङ्गेनशोभनः[3] ॥ त्यजेन्निषिद्धंनातिमांस्तत्रनिषिद्धेषुसंविशेत् ॥ ४३३ ॥ निषिद्धान्यथवक्ष्यन्तेशोकःस्याद्दारुकासने ॥ वंशासनेदरिद्रःस्याद्ध स्त्रेस्थानविनाशनम् ॥ ४३४ ॥ पाषाणेचतथोच्चाटोज्वरःस्यान्मृन्मयासने ॥ ४३५ ॥ त्वित्यासनेभवेत्पीडापल्लवेचित्तविभ्रमः ॥ तृणासनेभवेत्पीडानि षिद्धंत्विष्टिकासनम्[4] ॥ ४३६ ॥ चित्तक्षोभोगृहस्थस्यकृष्णसाराजिनेभवे त् ॥ वटुर्वनस्थःसंन्यासीस्नातकःसिद्धिमाप्नुयात् ॥ ४३७ ॥ शुभेमुहूर्त्ते नक्षत्रेतिथौस्नात्वायथाविधि ॥ विप्रान्सन्तर्प्ययत्नेनभोजनाच्छादनादिभिः ॥ ४३८ ॥ भूवित्तैर्[5]वस्त्रभूषाद्यैः[6]सन्तोष्यगुरुमात्मनः ॥ आरभेच्चजपंपश्चात्तद नुज्ञापुरस्सरम् ॥ ४३९ ॥ जपस्थानेततःकुर्य्यात्त्रिकोणंवर्तुलंबहिः ॥ तद्बहिश्चतुरस्रंचतत्रक्षेत्रेसमर्चयेत् ॥ ४४० ॥ इहागच्छेत्यादिवाक्यैस्त्रिको णादग्रतःपुनः ॥ अन्नोदकादिसम्पूर्णंबलिपात्रंनिधापयेत् ॥ ४४१ ॥ वामिभिर्महिषोदेयःकौलिकैर्बर्करस्तथा ॥ अविःसिद्धान्तिभिस्तत्रनिवेद्यो मनुनासुराः ॥ ४४२ ॥ एँह्येहिविद्रषीत्युक्त्वा[7]पुरुषंजययुग्मकम् ॥ नर्त्तयद्वि तयंपश्चाद्विघ्नविघ्नमहेतिच ॥ ४४३ ॥ भैरवपदपूर्वन्तुक्षेत्रेशमितिचोच्चरेत् ॥ क्षेत्रपालबलिंगृह्णगृह्णस्वाहेतिवैवदेत् ॥ ४४४ ॥ त्रिचत्वारिंशदर्णोयं क्षेत्रपालबलेर्मनुः ॥ तस्मैसपरिवारायबलिंदद्यान्नभक्षयेत् ॥ ४४५ ॥ प्रारभे तपुरश्चर्य्यांदीक्षोक्तदिवसेशुभे ॥ प्रणम्यादौगुरून्विप्रान्गणेशंपरिपूज्यच ॥ ४४६ ॥ पुण्याहवाचनंकृत्वाकुशहस्तोवदेदिति ॥ सूर्य्यःसोमोयमःकालः सन्ध्येभूतान्यहः[8]क्षपा[9] ॥ ४४७ ॥ पवनोदिक्पतिर्भूमिराकाशंखेचरामराः ॥ ब्रह्मशासनमास्थायकल्पध्वमिहसन्निधिम् ॥ ४४८ ॥ पठित्वेदंताम्रपात्रे कृत्वाकुशतिलाक्षतान् ॥ उदङ्मुखस्तुसङ्कल्पंकुर्य्यात्संवत्सरादिकान् ॥ ४४९ ॥

---

१ ब्राह्मणों को छोड़ अन्यजातियों का काली कमरी मुक्तिकी देनेवाली होतीहै २ दुःख छूटजाने के लिये ३ रँगाहुआ आसन उचितहै ४ ईंटों का आसन ५ द्रव्य ६ गहने ७ एह्येहिविद्रषी पुरुषजयजयनर्त्तयनर्त्तयेविघ्नविघ्नमहाभैरवक्षेत्रेशक्षेत्रपालबलिंगृह्णगृह्णस्वाहा ८ दिन ९ रात्रि॥

कामनान्तानुचेरन्तत्रविंशतिसंख्यकान् ॥ संवत्सरमृतुंमासंपक्षंपञ्चाङ्गमेव च ॥ ४५० ॥ नवग्रहस्थितिंचस्वभागमुहूर्त्तकेतिथिति ॥ स्वदेशभेदानुच्चार्य कामनासहितान्वदेत् ॥ ४५१ ॥ द्वीपमुकेमुकेखण्डेगोत्रप्रवरमुच्चरेत ॥ स्व नामजातिनामान्तंपुनःशर्मेचवर्म्मेच ॥ ४५२ ॥ गुप्तोदासोथामुकस्यमन्त्रस्यसिद्धिकामुकः ॥ करिष्येहंपुरश्चर्य्यामेतत्सङ्ख्यजपात्मिकाम् ॥ ४५३ ॥ अथवेयद्दिनैरेतैरसतिप्रतिबाधके ॥ करिष्यइतिसङ्कल्पंमनसैवप्रकल्पयेत् ॥ ४५४ ॥ वदेद्वाचाभिलापंचकर्म्मणाचोपपादयन् ॥ गुरुंगणपतिंदुर्गांमहं नत्वाचपूजनम् ॥ ४५५ ॥ कृत्वास्वमूलमन्त्रेणप्राणायामत्रयंचरेत् ॥ कृत्वा ऋष्यादिविन्यासमङ्गन्यासंतथैवच ॥ ४५६ ॥ ध्यायेचहृदयेदेवंपात्रेसंस्थाप्यमालिकाम् ॥ अर्घ्योदकेनसम्प्रोक्ष्यततस्तांप्रार्थयेदिति ॥ ४५७ ॥ ॐ मालेमालेमाहामायेसर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मे सिद्धिदाभव ॥ ४५८ ॥ पूजयित्वाततोमालांगृह्णीयाद्दक्षिणेकरे ॥ बीजं गणपतेःपूर्वमुच्चार्य्यतदनन्तरम् ॥ ४५९ ॥ अविघ्नंकुरुमालेत्वंगृह्णीयात्तदनन्तरम् ॥ हस्तेथदक्षिणेपश्चाच्चिन्तयेन्मनसाशिवम् ॥ ४६० ॥ चिन्तये च्चगुरुंमूर्द्धिनयथावर्णादिकंभवेत् ॥ मन्त्रंध्यायेत्कण्ठमध्येपीतवर्णंहिरण्मयम् ॥ ४६१ ॥ महामायांचहृदयेस्वात्मानंगुरुपादयोः ॥ आज्ञाचक्रेततः पश्चाद्गुरोर्मन्त्रस्यचात्मनः ॥ ४६२ ॥ देव्याश्चाप्येकतांनीत्वासुषुम्णावर्त्मनाततः ॥ गुरुस्वरूपमेकंतंषट्चक्रंप्रतिलङ्घयेत् ॥ ४६३ ॥ षट्चक्रेपिमहामायांचक्षणंध्यात्वाप्रयत्नतः ॥ लम्बयेन्मूलमन्त्रेणचादिषोडशचक्रकम् ॥ ४६४ ॥

---

१ ब्राह्मणशर्म्मा क्षत्रियवर्म्मा वैश्य गुप्त और शूद्र दास पदको अपने नाम के आगे जोड़ले २ गं बीजम् गं अविघ्नं कुरु माले त्वम् ३ हृदय कमल में जगदम्बा का ध्यान श्रीसद्गुरुके चरण कमल में पराहुआ अपना को भावना करने के बाद भौंहों के मध्य द्विदल आज्ञा नामक चक्रमें गुरु, मंत्र, आप, और इष्टदेवता देवीजीकी एकत्व भावना कर पुनः षट्चक्रोंमें देवता का ध्यानकर ॥ अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः इन स्वरोंमेंसे दलपति एक एक स्वरसंयुक्त षोडश दल आज्ञाचक्र में इष्टदेवता का ध्यान कर जपकर्म का प्रारम्भ करे ॥

आदिषोडशचक्रेतांसाधकानन्ददायिनीम् ॥ चिन्तयेत्साधकोदेवींजपक
र्म्मसमारभेत् ॥ ४६५ ॥ भ्रुवोरुपरिनाडीनांत्रयाणांप्रान्तउच्यते ॥ तत्प्रा
न्तेंत्रिपथस्थानंषट्कोणंचतुरंगुलम् ॥ ४६६ ॥ चक्रंचकुलयोगज्ञैराज्ञाच
क्रमितीरितम् ॥ कण्ठेत्रयाणांनाडीनांवेष्टनंविद्यतेनृणाम् ॥ ४६७ ॥ सुषुम्णे
डापिङ्गलानांषट्कोणंतत्षडंगुलम् ॥ तत्त्वचक्रमितिप्रोक्तंशुक्लंकण्ठस्यमध्यग
म् ॥ ४६८ ॥ त्रयाणामपिदेवानांहृदयेचैकताभवेत् ॥ तत्स्थानेषोडशारंस्या
त्सप्तांगुलप्रमाणतः ॥ ४६९ ॥ तत्पूर्वमुक्तयोगानामादिषोडशचक्रगम् ॥
ध्येयानामथमन्त्राणांचिन्तितस्यजपस्यच ॥ ४७० ॥ यस्मादाद्यंतुहृदयं
तस्मादादिर्निगद्यते ॥ तत्रप्रणवउत्पन्नः पूर्वमादिसुतःसतु ॥ ४७१ ॥ निस्से
तुकंयथातोयंक्षणान्निम्नंप्रसर्प्पति ॥ मन्त्रस्तथैवनिस्सेतुःक्षणात्क्षरतियज्वना
म् ॥ ४७२ ॥ तस्मात्सर्वप्रयत्नेषुचतुर्वर्णादिजातयः ॥ पार्श्वयोःसेतुमादा
यजपकर्म्मसमारभेत् ॥ ४७३ ॥ मन्त्राणांप्रणवःसेतुर्द्विजानांपरिकीर्तितः ॥
चतुर्दशस्वरोन्येषांचन्द्रानुस्वारसंयुतः ॥ ४७४ ॥ एवंविचिन्त्यमध्यायामध्ये
भागेतुमालिकाम् ॥ अस्पृशंस्तर्ज्जनींमालामंगुष्ठाग्रेणचालयेत् ॥ ४७५ ॥
पूर्वमन्त्रंजपन्यस्तुसंस्पृशेदपरंमणिम् ॥ अंगुष्ठेनभवेत्तस्यसजपोनिष्फलः
सदा ॥ ४७६ ॥ मालांसहृदयासन्नांधृत्वादक्षिणपाणिना ॥ मालांमन्त्रस्तु
ह्रींसिद्ध्यैनमःसम्प्रार्थयेदिति ॥ ४७७ ॥ त्वंमालेसर्वदेवानांप्रीतिदाशुभदा
भव ॥ शिवंकुरुष्वमेभद्रेयशोवीर्य्यंचवर्धय ॥ ४७८ ॥ इहप्रार्थनपूजायांप्रो
क्तोयंमालिकामनुः ॥ पञ्चाक्षरस्ततोदेवंस्वेष्टंसम्प्रार्थयेदिति ॥ ४७९ ॥ गुह्या
तिगुह्यगुप्तस्त्वंगृहाणास्मत्कृतंजपम् ॥ सिद्धिर्भवतुमेदेवत्वत्प्रसादाज्जगत्प
ते ॥ ४८० ॥ मूलमन्त्रंसमुच्चार्य्यदेवहस्तेनिवेदयेत् ॥ तंजपंचार्घ्यतोयेनम
ध्याह्नसमयेत्विदम् ॥ ४८१ ॥ तदर्थंपूर्ववत्स्नात्वाविशेषेणविधानवित् ॥

---

१ आदि अंतमें ॐकारोच्चारण युक्त मंत्र जप करना उचित है २ बीचकी अंगुली के बीचवाले पोर में मालाको धरके अंगुष्ठाग्रसे गुरिया पकरे तर्जनी अर्थात् अँगूठे के लगेकी अंगुली मालामें न छूजाने पावे जपकरनेवाला साधक माला में एक गुरिया के पीछे एक गुरिया पकरे दूसरी गुरियामें अंगुठा न जानेपावे ३ ह्रींसिद्ध्यैनमः ॥

न्यासावसानमखिलंकर्म्मकुर्य्यात्पुरोदितम् ॥ ४८२ ॥ पूजाग्निहोमपर्य्यन्तंततश्चजपमारभेत् ॥ यावद्दिनावसानंतुभूयःस्नात्वाततोद्विजः ॥ ४८३॥ उपास्यपूर्ववत्सन्ध्यांदेवंसम्पूजयेत्पुनः ॥ विसृज्यभोजनंकुर्य्यात्सततंतारकोदये ॥ ४८४ ॥ सत्कन्दफलमूलाशीसद्भिक्षाशीहविष्यभुक् ॥ पयोव्रतीभवेच्छ्रेष्ठस्तेषांलक्षणमुच्यते ॥ ४८५ ॥ आयुष्करंपद्ममूलंपिंडालुककसेरुकम् ॥ रक्तहस्तीशङ्खमधुशालुकंश्रेष्ठमुच्यते ॥ ४८६ ॥ प्राक्षाम्रजम्बूपनसंकपित्थंखर्ज्जूरिकादाडिमनारिकेलम् ॥ पैरूषकंक्षीरिणिकाकदल्योःफलंतुधान्याश्चभवेत्पवित्रम् ॥ ४८७ ॥ पत्रमूलंत्वचामूलंविमूलंपञ्चमीजटी ॥ अकवाकुःकुवाकुश्चमूलेपाविघ्यकारकम् ॥ ४८८ ॥ वैदिकाचारयुक्तानांशुचीनांश्रीमतांसताम् ॥ सत्कुलस्थानजातानांभिक्षाशश्चाग्रजन्मनाम् ॥ ४८९ ॥ चरुमूलफलक्षारदधिभिक्षान्नसक्तवः ॥ एतत्सप्तविधंभिक्षालब्धंभक्ष्यंव्रतस्थितैः ॥ ४९० ॥ हविष्याणितुपञ्चाशच्छ्रेताःस्विन्नाहिमोद्भवाः ॥ तण्डुलाःषष्टिनीवारशालिजास्त्रिविधामताः ॥ ४९१ ॥ मुद्गायवास्तिलाःकृष्णाःकुलमाषास्त्रिपुटाअपि ॥ कङ्गवश्चमकुष्ठाश्चयावन्नालकणशिका ॥ ४९२ ॥ कालकंशो वर्वास्तूकं करम्बुर्हिलमोचिका ॥ चक्रवतीचक्रमर्दःपलङ्कःशैतपुष्पिका ॥ ४९३ ॥ मूलंहैमन्तजंश्वेतंराजिकांमापजंतिलम् ॥ मृणालंमुशलीघोरंटाशतमूलीविदारिका ॥ ४९४ ॥ सर्वेपिरैंडालवश्चैवपञ्झोर्वारवुपातथा ॥ आयुष्करःकञ्चुकश्चशृङ्गाटककसेरुको ॥ ४९५ ॥ सामुद्रंसैन्धवंचैवदध्याज्यंगोजमाहिषम् ॥ दुग्धंससारंमधुरंपयोन्यत्त्वल्पबीजकम् ॥ ४९६ ॥ पनसाम्रामलंचिर्ञ्चाविर्फाणितगुडैक्षवम् ॥ हविष्यंभेषजंसर्वंहित्वामीनान्सुरांपलम् ॥ ४९७ ॥ श्रेष्ठंगवांदुग्धमुक्तंमध्यमंसुरभीभवम् ॥ अधमंमाहिषंचान्यद्व्रतस्थानांनिषिध्यते ॥ ४९८ ॥ त्यजन्निषिद्धमन्नाद्यंमध्योसौशास्त्रतश्च

१ फिर २ पिंडालुक गोल आकारकी आलू ३ छोहार ४ फालसा ५ खिन्नी ६ खुरथी ७ खेसारी ८ कांकुनि ९ वनमूँग व मोथी १० नारीसाग ११ सोवा १२ बथुई १३ शाकभेद हुरहुर आदि १४ प्रसिद्ध है १५ चकौंड़ १६ पलाँकी १७ संफ वा दूब १८ राई १९ कमलकीजड़ २० मूसरि २१ वेरकेफल २२ शतावरि २३ बिलाईकन्द २४ पँदार २५ कमलगट्टा २६ केलाकीछियाँ २७ सिंघाड़े २८ अँविली २९ शकर ३० राब ॥

यः ॥ निषिद्धंदेशकुलतःप्रशस्तंसोधमःस्मृतः ॥ ४६६ ॥ निषिद्धान्यथक ध्यन्तेसप्तविंशामितानितु ॥ श्वेतमुद्गामसूराश्चकोद्रवाश्चणकास्त्रिधा ॥ ५०० ॥ माषाश्चभूमिलवनंयत्रजातंरसान्तरम् ॥ क्षौद्रंक्षारंपलाण्डुश्चगृञ्जनं कांस्यभोजनम् ॥ ५०१ ॥ मांसंचस्विन्नलवणंरामठंचैवनालकम् ॥ अन्नंपर्य्यु षितंतैलंताम्बूलंक्षुद्रधान्यकम् ॥ ५०२ ॥ पटोलंचापिवृन्ताकंमूलकंचकलिञ्ज कम् ॥ दग्धान्नंचद्विपक्वंचागुणान्नंतालजंफलम् ॥ ५०३ ॥ देवाविशेषंभृण्व न्तुवर्णाश्रमविभेदतः ॥ तिलतैलंमन्त्रपूतंपावनंदेवदुर्लभम् ॥ ५०४ ॥ मर्दयि त्वागृहस्थेनस्नानंकार्य्यंतुसर्वदा ॥ द्विजैस्तुभोजनंकार्य्यमुपस्तीर्य्याभिधा र्य्यच ॥ ५०५ ॥ पावयेद्वैदिकैर्मन्त्रैःप्रोक्षणादिककर्मणा ॥ पुनर्मूलेनसम्म न्त्र्यभुञ्जीयाद्धृदयाणुना ॥ ५०६ ॥ मूलाभिमन्त्रितंतोयंभोजनेतृषितःपि बेत् ॥ पलाशपत्रेभुञ्जीयान्मध्यपत्रविवर्ज्जितम् ॥ ५०७ ॥ तदभावेकद ल्यांवामधूकेसर्ज्जकेपिच ॥ भुक्त्वाशयीतशयनेसुशुद्धेवसुधातले ॥ ५०८ ॥ अहतास्तरणास्तीर्णेसन्दर्भेणायनेशुचौ ॥ मन्त्रितेमूलमन्त्रेणजितक्रोधोजि तेन्द्रियः ॥ ५०६ ॥ अभीष्टदेवतांध्यायन्प्राक्शिरस्कोनिशिस्वपेत् ॥ अर्ध रात्रौसमुत्थायपादशौचंविधायच ॥ ५१० ॥ आचम्यदेवंसम्पूज्यशीघ्रंसंस्पृ श्यपूर्ववत् ॥ जपंकुर्य्याद्यथाशक्तित्वर्प्पयेच्चतथेश्वरे ॥ ५११ ॥ स्वपेत्ततस्तुयद्दृष्टं स्वप्नंतंगुरवेवदेत् ॥ जपश्चायंवनस्थानांप्रोक्तोवैब्रह्मवादिनाम् ॥ ५१२ ॥ दे शाद्युपद्रवत्रासात्स्वैरंयावत्समापनम् ॥ कर्तव्यंवेदेऽयंकालःप्रोक्तोत्यावश्यके पिच ॥ ५१३ ॥ आमध्याह्नंजपःश्रेष्ठोमध्यमःप्रहरत्रयम् ॥ सार्धयामत्रयंही नोऽत्यावश्यकेप्रोक्तलक्षणः ॥ ५१४ ॥ पञ्चधातुविधिःप्रोक्तोजपसम्पूर्णकारकः ॥ आद्यःकल्पःप्रतिदिनमामध्याह्नंजपंचरेत् ॥ ५१५ ॥ तद्दशांशेनकल्पोक्तद्रव्यै र्होमंप्रकल्पयेत् ॥ तर्प्पणंमार्जनंकृत्वातथाब्राह्मणभोजनम् ॥ ५१६ ॥ तस्यद शांशतश्चायंप्रथमःकल्पईरितः ॥ अयंद्वितीयःकल्पस्तुलक्षमेकंजपंचरेत् ॥ ५१७ ॥ होमादिकंतस्यकृत्वाभिमलक्षंसमारभेत् ॥ अयंतृतीयःकल्पस्तुसम्पू

---

१ पियाज २ गाजर ३ कांसकेपात्रमें भोजन करना ४ हींग ५ बासी अन्न ६ बैंगन ७ कलौंजी ८ जप के दशांश होम करना ॥

र्णंजपमाचरेत् ॥ ५१८ ॥ पूर्णेहोमेतर्प्पणादिपूर्वमेवाचरेदिति ॥ चतुर्थस्तु तथाकल्पोदरिद्रैर्द्विगुणोजपः ॥ ५१९ ॥ होमाद्यभावेकर्तव्यस्त्र्यादिनिग्नोत्पादिकैः ॥ पञ्चमस्तुतथाकल्पोयस्यदेवस्ययत्प्रियम् ॥ ५२० ॥ तदेवद्विगुणं कार्य्यंशीघ्रंदैवततुष्टये ॥ जपप्रियास्सर्वदेव्योवाममार्गेबलिप्रियाः ॥ ५२१ ॥ होमप्रियोमहादेवोभास्करस्तर्प्पणप्रियः ॥ मार्ज्जनंतुगणेशस्यविष्णोर्ब्राह्मणभोजनम् ॥ ५२२ ॥ प्रायश्चित्तंतुनकृतंतदाशुद्धोभवेद्द्विजः ॥ पुरश्चर्य्याचतुष्केणत्रिद्व्याद्यैःक्षत्रियादयः ॥ ५२३ ॥ अथवान्यप्रकारेणपुरश्चरणमुच्यते ॥ ग्रहणेर्कस्यचेन्दोर्वाशुचिःपूर्वमुपोषितः ॥ ५२४ ॥ नद्यांसमुद्रगामिन्यां नाभिमात्रेजलेस्थितः ॥ स्पर्शादिमुक्तिपर्य्यन्तंजपेन्मन्त्रंसमाहितः ॥ ५२५ ॥ तावत्कालंजपेदित्थंततोहोमादिकंचरेत् ॥ ब्राह्मणान्भोजयेत्पश्चात्पुरश्चर्य्यासमन्विदस्[1] ॥ ५२६ ॥ प्रायश्चित्तंप्रयोगस्यप्रत्यवायस्यनाशनम् ॥ येषांजपेचहोमेचसङ्ख्यातन्त्रेपुनोदिता ॥ ५२७ ॥ तत्रचेयंपुरश्चर्य्यासर्वतन्त्रेपुगोपिता ॥ वाममार्गीयमन्त्राणामेवमेवान्यदुच्यते ॥ ५२८ ॥ कृष्णाष्टमींसमारभ्ययावत्कृष्णचतुर्दशी ॥ देवंध्यात्वाजपेन्मन्त्रमयुतानां[2]चतुष्टयम् ॥ ५२९ ॥ दशांशंहोमयेत्पश्चात्तर्प्पयेदभिषेचयेत् ॥ असिद्धत्वाद्गुरोर्देवाः[3]शिष्यसिद्धिर्नजायते ॥ ५३० ॥ तदोपायंप्रकुर्य्याद्यत्तद्गोप्यमधुनोच्यते ॥ अनुलोम[4]विलोमेनबिन्दुमन्मातृकाक्षरैः ॥ ५३१ ॥ जपेत्सम्पुटितंमन्त्रंप्रत्यहंशतसङ्ख्या ॥ एकमासंततोहोमादिकात्सिद्धोभवेन्मनुः ॥ ५३२ ॥ पुरश्चर्य्योक्तमखिलमाह्निकंचसमाचरेत् ॥ एववैदिकमन्त्रस्यसिद्धयेत्रचसस्वराः ॥ ५३३ ॥ वर्णादेयाबिन्दुयुक्ताःक्रमतश्चोत्क्रमेणच ॥ ह्रस्वदीर्घप्लुतैर्भेदैरइउऋत्रिधामताः ॥ ५३४ ॥ ह्रस्वःप्लुतोलृद्विविधएं[5]चोपिद्विविधामताः ॥ दीर्घप्लुतविभेदेनह्यनुस्वारविसर्गकैः ॥ ५३५ ॥ चतुर्विंशतिराख्याताःस्वराएवंक्रमैःस

---

१ जे दरिद्रीलोग धनके अभाव से होमादि कर्मको नहीं करसक्ते उनके लिये मन्त्रका द्विगुण जप करनेका उपदेश है और क्षत्रिय त्रिगुण वैश्य चतुर्गुण शूद्र पंचगुण जप करे २ चालिसहजार ३ देवाः यह सम्बोधनपद है ४ उलटे सीधे मातृकाक्षरों से सम्पुटित मन्त्रका अष्टोत्तरशत जप प्रतिदिन एक महीना तक कर्तव्यहै ५ ए ओ ऐ औ ॥

ह ॥ चत्वारःकादिकावर्णाजिह्वामूलीययुक्चकः ॥ ५३६ ॥ एवंकवर्गोदश धाचाद्याःपञ्चदशस्मृताः ॥ उपोध्मानीयसंयुक्तःपकारस्तेनतत्रषट् ॥ ५३७॥ याद्यष्टावपिसम्प्रोक्तायज्ञेवेदेतुमातृकाः ॥ लृत्त्वौद्यावधिकौऋक्षुक्षोधिकोथर्ववे णिस्मृतः ॥ ५३८ ॥ जपश्चाष्टोत्तरशतंप्रत्यहंमासमात्रकम् ॥ अनध्याया न्वर्जयित्वाचत्वारिंशद्दिनंतथा ॥ ५३९ ॥ होमादिसकलंप्राप्यनित्यमेवप्रक ल्पयेत् ॥ क्षुद्रदैवतमन्त्रंतुसूतलिप्यापुटीकुरु ॥ ५४० ॥ क्रमोत्क्रमाच्छता वृत्तिंकुर्य्यात्सिद्धिस्तुमासतः ॥ अंचोहयवरलाआद्यन्तिमद्विचतुर्थकम् ॥ ५४१ ॥ तृतीयंचक्रमेणैववर्गाणामक्षरंपठेत् ॥ ऊष्मत्रयंततश्चैवंद्विचत्वारिंश दक्षरैः ॥ ५४२ ॥ इत्युग्रदैवतेजाप्यस्त्वष्टोत्तरसहस्रकम् ॥ त्रिकालंगन्धपुष्पा द्यैर्निशीथेपरतःपुनः ॥ ५४३ ॥ षण्मासंकौलिकाद्यैश्चेदर्चितासुप्रसीदति ॥ अंत्ययोग्यैर्गुरुतोलब्धाचार्य्यादिस्थानमाश्रितैः ॥ ५४४ ॥ उद्देशाद्वापुरश्चर्य्या कर्त्तव्येत्युच्यतेनहि ॥ राज्ञांभाग्यव्रतोवापिसुकुमारस्यवायथा ॥ ५४५ ॥ सिद्धिर्भवेत्तथावक्ष्येवर्णौषधिपुरस्क्रियाम् ॥ सप्तधासापरिज्ञेयावर्णमासैस्तुसि द्धिदा ॥ ५४६ ॥ मन्त्रवर्णौषधीकाष्ठैरचयेद्गुटिकाःशुभाः ॥ वर्णक्रमेण ताःप्रोक्ताअनुलोमविलोमता ॥ ५४७ ॥ मूलादिभ्यश्चबहुशःकर्त्तव्यार्मे णयोयथा ॥ सर्प्पद्वयाकृतिर्मालाभवेन्नित्यंततोजपेत् ॥ ५४८ ॥ मालाया मणिसङ्ख्याकःप्रथमोयंजपःस्मृतः ॥ सर्वेसमानामणयःप्रोतव्याःसार्णसूत्र कैः ॥ ५४९ ॥ कण्ठेधार्य्याकण्ठमालानित्यमेषद्वितीयकः ॥ तथैवराजतेसू त्रेप्रोय्यंताःपरिपूजयेत् ॥ ५५० ॥ तद्देवकल्पमार्गेणप्रक्रमोयंतृतीयकः ॥ वर्णौषधीनांक्वाथेननित्यंस्नानंचतुर्थकः ॥ ५५१ ॥ वर्णौषधिजलादिभ्योगो

---

१ क ख से पूर्व रहनेवाला अर्द्धविसर्ग के समान जिह्वामूलीय कहा जाता है २ प फ के पूर्व अर्ध विसर्गकार को ही उपाध्मानीय कहते हैं ३ ऋग्वेदमें ४ अथर्ववेद में ५ अं इं उं ऋं लृं एं ऐं ओं औं हं यं वं रं लं कं ङं खं घं गं चं ञं छं झं जं टं णं ठं ढं डं तं नं थं धं दं पं मं फं भं बं शं षं सं ६ उग्र देवताओं की प्रीति के लिये इस मन्त्रका जप करना ७ नीचलोग गुरुकृपा से आचार्य्यादि स्थानमें स्थित होकर भी उद्देशसे पुरश्चरण नहीं करसक्ते उनका मुक्तिके लिये जप करने का उपदेश है ८ गुरिया ९ चांदी के तार में १० गूँधिके ११ काढासे ॥

घृतेनतुपञ्चमः ॥ तच्चूर्णोद्वर्त्तनंकुर्य्यादेषषष्ठःप्रकीर्त्तितः ॥ ५५२ ॥ तद्भस्मधारणंनित्यंकुर्य्यादितितुसप्तमः ॥ ब्रह्मद्वेषादगुरोर्द्वेषात्स्त्रीद्वेषाच्चे[2]न्नजायते ॥ ५५३ ॥ शापतोवाकीलितत्वात्तत्रोपायाष्टकंभवेत् ॥ सन्तापाप्यायनंद्रावोबोधनंचवशीकृतिः ॥ ५५४ ॥ पीडनंपोषशोषौचदहनंतत्क्रियोच्यते ॥ भूर्ज्जपत्रंसमानीयपद्ममष्टदलंलिखेत् ॥ ५५५ ॥ अष्टगन्धेनदेवस्यरोचनाचन्दनेनवा । साधकस्यतुनामाणैर्मन्त्रंसन्दर्भितंलिखेत् ॥ ५५६ ॥ यावद्वयोःसमाप्तिःस्यात्तस्यचाद्यन्तयोर्लिखेत् । तारादिकंसाधकस्यनामाथाष्टदलेषुच ॥ ५५७ ॥ द्वौद्वौलेख्यौस्वरौतत्रसम्यग्ध्यायन्सुधात्मकम् । तत्संवेष्ट्यमृदासम्यग्वेष्टयेद्ब्राह्मणादिकः ॥ ५५८ ॥ शुक्लादिवर्णयापश्चात्सद्वस्त्रेणचवेष्टयेत् ॥ क्षिपेत्रिमधुरेतत्तुमृन्मयेलघुभाजने ॥ ५५९ ॥ क्षीरपूर्णेनवेकुम्भेतत्क्षिपेल्लघुभाजनम् ॥ अग्निसंस्थापनंकृत्वासन्निधौतस्यसङ्कटम् ॥ ५६० ॥ संस्थापयेत्त्रिमधुरैर्मूलमन्त्रेणहोमयेत् ॥ अष्टाधिकसहस्रंतुसम्यक्तंकलशंक्षिपेत् ॥ ५६१ ॥ होमंसमाप्यतंकुम्भंनिःक्षिप्यचजलाशये ॥ स्वगुरुंब्राह्मणांश्चान्नैस्तोषयेद्दक्षिणादिभिः ॥ ५६२ ॥ सन्तापाप्यायनंचैतदुक्तंसिद्धिर्नचेद्भवेत् ॥ द्रावणंतुतदाकुर्य्यात्तत्प्रकारइहोच्यते ॥ ५६३ ॥ वंबीजेनग्रन्थयित्वाभूर्ज्जपत्रेलिखेन्मनुम् ॥ उशीररोचनाभ्याञ्चशिलाकर्पूरकुंकुमैः ॥ ५६४ ॥ क्षीराज्यमधुतोयानांमध्येतंलिखितंक्षिपेत् ॥ पूजनाच्चजपाद्धोमाद्द्रावितःफलदोभवेत् ॥ ५६५ ॥ द्रावितापिनसिद्धश्चेद्बोधनंतस्यकारयेत् ॥ वाग्भवेनचबीजेनसम्पुटीकृत्यतंजपेत् ॥ ५६६ ॥ एवंबुद्धोभवेत्सिद्धोनोचेत्कुर्य्याद्वशीकृतिम् ॥ कुंचन्दनंमहादारुहरिद्राचमनःशिला ॥ ५६७ ॥ एतैस्तुलिखितोमन्त्रोभूर्ज्जपत्रेसुशोभने ॥ कण्ठेधृतोभवेद्वश्योनोचेत्कुर्य्यात्प्रपीडनम् ॥ ५६८ ॥ अनुदात्तस्वरेणाद्यमुदात्तेनद्वितीयकम् ॥ तृतीयमनुदात्तेनपठेत्तुर्य्यमुदात्ततः ॥ ५६९ ॥ एवंपदानिसर्वाणिपठेन्मन्त्रस्यसाधकः ॥ अनुदात्तपदोच्चारेदेवंध्या

१ देवकलोक्त ओषधि काष्ठके चूर्णका उबटन २ जो सिद्धि न हो ३ ग्रन्थित ४ वंबीज ५ दूध घृत शहद में ६ ऐं मन्त्रसे सम्पुटित स्वेष्ट मन्त्रका जप करे ७ लालचन्दन ८ देवदारु ९ मैनशिल ॥

येदधःस्थितम् ॥ ५७० ॥ ऊर्ध्वस्थितमुदात्तस्योच्चारेष्टाधिसहस्रकम् ॥ जपेन्म न्त्रंततोभूर्ज्जेभानुदुग्धेनलेखयेत् ॥ ५७१ ॥ मन्त्रंतमाक्रमेद्वामपादेनाथच होमयेत् ॥ अष्टोत्तरशतंमन्त्रःपीडितःसप्रसीदति ॥ ५७२ ॥ नसिद्धश्चेत्त दापोष्यःप्रोच्यतेतत्क्रियाधुना ॥ सोम्बीजपुटितंमन्त्रंलिखेद्भूर्ज्जस्यपत्रके ॥ ५५३ ॥ रोचनाकुंकुमाभ्यांचधारयेद्दधिदुग्धयोः ॥ इदंपोषणमित्युक्तमथशो षणमुच्यते ॥ ५७४ ॥ यज्ञस्यभस्मनालेख्यवायुबीजविदर्भितम् ॥ भूर्ज्जपत्रे स्वेष्टमन्त्रंतत्कण्ठेधारयेदिति ॥ ५७५ ॥ एतच्छोषणमित्युक्तंदहनंप्रोच्यते धुना ॥ पृथक्पृथक्चमन्त्राणांश्चतुर्दिक्षुसमावृतान् ॥ ५७६ ॥ रंबीजेनपला शस्यबीजतैलेनसंलिखेत् ॥ भूर्ज्जपत्रेथतद्धार्य्यंकण्ठेदाहक्रियात्वियम् ॥ ५७७ ॥ अथशाबरमन्त्राणांपुरश्चरणमुच्यते ॥ कामरूपाख्यदेशेतुकामा क्षायत्रदेवता ॥ ५७८ ॥ कामशैलेस्तियत्रासौकामपीठन्तदुच्यते ॥ तत्रसं लेख्यमन्त्रंहिवंशोपरियथाक्रमम् ॥ ५७६ ॥ गुरुणावाचनीयःसस्वयंपश्चा त्पठेन्मनुम् ॥ गुरोरभावेतस्यैवमूलेशैलस्यपर्वणि ॥ ५८० ॥ लिखित्वाप्रपठे न्मन्त्रंकामपीठंगुरुर्मतः ॥ अथवायोगिनीशैलेदक्षिणस्यांदिशिध्रुवम् ॥ ५८१ ॥ योगाम्बायत्रदेवीसालिखित्वात्रपठेन्मनुम् ॥ ज्वालामुखीसमीपेवा हिंगुलाजसमीपतः ॥ ५८२ ॥ लिखित्वाप्रपठेन्मन्त्रंनान्यथैवप्रसिद्ध्यति ॥ मुख्यतःस्त्रीसमीपेतुकामपीठेमनोग्रहः ॥ ५८३ ॥ अथवासर्वदेशेषुमन्त्रग्रह णमुच्यते ॥ तालपत्रेलिखेन्मन्त्रंपूर्णकुम्भेनिधापयेत् ॥ ५८४ ॥ भास्कर न्तुगुरुंध्यात्वावाचयेत्रिर्गुरुरविः ॥ अथतान्त्रिकमन्त्राणांदीक्षांशृणुगु रुंविना ॥ ५८५ ॥ शुक्लपक्षेत्रयोदश्यांचन्द्रताराबलान्विते ॥ गत्वाचद क्षिणामूर्त्तेःसन्निधौपूजयेच्चतम् ॥ ५८६ ॥ कलशस्थापनंकृत्वातदग्रेतुपरि क्षिपेत् ॥ तालपत्रेलिखित्वाथमन्त्रंदेवंचपूजयेत् ॥ ५८७ ॥ देवोगुरुरिति ध्यात्वामन्त्रंव्यक्तंतुवाचयेत् ॥ अष्टोत्तरशतंचैवमन्त्रग्रहणमुच्यते ॥ ५८८ ॥ एतत्तत्त्वंसमाख्यातंगोप्यंमातरिजारवत् ॥ गुरौलोभादयोदोषास्तस्माद्बुद्धि जतेजनः ॥ ५८६ ॥ अतःशास्त्रंगुरुंकृत्वादक्षिणामूर्तितोमनुः ॥ एवंसिद्धे

१ मदारके दूधसे लिखे २ यंबीज ३ मकट ४ अन्यपति ॥

मनोदेविमोक्षमार्गनिबन्धकाः ॥ ५६० ॥ तपःक्षयकराश्चैवजायन्तेने सिद्धयः ॥ स्वल्पसिद्धौनिमग्नश्चेन्नजायन्तेणिमादयः ॥ ५६१ ॥ णिमादिषुमग्नश्चेन्मोक्षवार्तातिदुर्लभा ॥ अल्पंतपःक्षणान्नश्येन्मध्यमंचा गर्वतः ॥ ५६२ ॥ सिद्धिद्वारमिदंतस्यमयालक्षणमुच्यते ॥ स्वप्नेवाक्षिसम वाआश्चर्य्यमतिहर्षदम् ॥ ५६३ ॥ अकस्माद्यदिजायेतनख्यातव्यंगुरु ना ॥ प्रकाशनीयंनक्वापिऐहिकींसिद्धिमिच्छता ॥ ५६४ ॥ प्रकाशयति मोहादौत्सुक्यान्मन्त्रजंसुखम् ॥ निकटस्थाश्चतास्तस्यसिद्धयोयान्तिदूरतः ५६५ ॥ आभवन्तिचदुःखानिशोकाश्चविविधाअपि ॥ अल्पाशनंस्वल्प द्रासदाचित्तप्रसन्नता ॥ ५६६ ॥ प्रकाशयुक्शरीरंचवाक्यंसत्यंप्रजायते ॥ न्त्राराधनशक्तस्यप्रथमंवत्सरत्रयम् ॥ ५६७ ॥ जायन्तेबहवोविघ्नानियमत गहेतवः ॥ नोद्वेगंसाधकोयातिकर्म्मणामनसायदि ॥ ५६८ ॥ ततोवर्षत्रय दूर्ध्वंराजानश्चमहीभृतः ॥ प्रार्थयन्तेनुरोधेनगर्विताअपिमानिनः ॥ ५६६ ॥ प्रसादःक्रियतांनाथममोद्धरणकारणम् ॥ प्रज्वलन्तंप्रपश्यन्तितेजसाविश्वेन च ॥ ६०० ॥ अतस्तेमुनिशार्दूलंविस्तरंवक्तुमक्षमाः ॥ नवमाद्वत्सरादूर्ध्वं यंसिद्धयतिमन्त्रराट् ॥ ६०१ ॥ वाङ्मनोरथसंसिद्धोदाताभोक्ताह्ययाचकः अथवक्ष्येदरिद्रस्यमन्त्रसिद्धिर्यथाभवेत् ॥ ६०२ ॥ होमकर्म्मण्यशक्तस्यवि स्यद्विगुणोजपः ॥ इतरेषान्तुवर्णानांत्रिगुणादिर्विधीयते ॥ ६०३ ॥ होम गुणजप्येनसम्पूर्णंतर्पणंभवेत् ॥ अकृतेमार्ज्जनेप्रोक्तस्तर्पणाद्द्विगुणोजपः ६०४ ॥ प्रत्याम्नायोब्रह्मभोज्येनकुत्रापिश्रुतौश्रुतः ॥ सर्वथाभोजयेद्विप्रान्क साङ्गत्वसिद्धये ॥ ६०५ ॥ विप्राराधनमात्रेणव्यङ्गंसाङ्गंप्रजायते ॥ यानिय निचकर्म्माणिहीयन्तेद्विजभोजनैः ॥ ६०६ ॥ निरर्थकानितानिस्युर्बीजान् परगानिच ॥ गुरुंसन्तोषयेत्पश्चाद्गोहिरण्याम्बरादिभिः ॥ ६०७ ॥ गुरौतु हिसन्तुष्टेमन्त्रःसिद्ध्यतिमन्त्रिणः ॥ यदृच्छयाश्रुतोमन्त्रश्छद्मेनापिबलेनवा ६०८ ॥ पैरेरितोवागाथावातज्जपोनैवचार्थकृत् ॥ पुस्तकेलिखितान्मन्त्रान्

१ क्षत्रिय त्रिगुण, वैश्य चतुर्गुण और शूद्र पंचगुण जप करै २ छल से ३ हठपूर्वक गु से सुना हुआ मंत्र ४ दूसरे के लिये गुरुमुखसे निकला ॥

लोक्यप्रजपन्तिये ॥ ६०९ ॥ ब्रह्महत्यासमंतेषांपातकंपरिकीर्त्तितम् ॥ अनेक कोटिमन्त्राणांचिन्तयन्नाकुलःकविः ॥ ६१० ॥ मन्त्रोगुरुमुखात्प्राप्तएकःस्या त्सर्वसिद्धिदः ॥ ६११ ॥ कुलप्राप्तःकुलाचारोमानितःसर्वसाधकैः ॥ सिद्धिल क्षणसम्पूर्णःप्राणिमात्रस्ययस्समः ॥ ६१२ ॥ मित्रंनशत्रवोयस्यसर्वमार्गप्रद र्शकः ॥ सएवतुगुरुःकार्य्योनान्योवा[1]मेकदाचन ॥ ६१३ ॥ इहलोकेपरत्रा पिकौलःपततिनान्यथा ॥ सिद्धेरभावेदक्षे[2]तुपापहानिःप्रजायते ॥ ६१४ ॥ सेवनान्मे[3]चतुष्कस्यवामेतुनिरयःपुरः ॥ इत्थंप्रोक्तापुरश्चर्य्याकिमन्यच्छ्रोतु मिच्छथ ॥ ६१५ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेपुरश्चर्य्याप्रकाशःषष्ठः ॥ ६ ॥

---

श्रीदेव्युवाच ॥ अस्मिन्घोरेकलियुगेस्वल्पसिद्ध्यातिदर्प्पिताः ॥ भविष्य न्तिजनास्तेषांस्थिरासिद्धिःकथंभवेत् ॥ १ ॥ अग्रेवंशादिवृद्धिश्चवंशेदेवकृपा तथा ॥ मोक्षःकथंसाधकस्यतथावदकृपानिधे ॥ २ ॥ ईश्वरउवाच ॥ अहङ्कार परित्यागःकाम्यकर्म्मविवर्ज्जनात् ॥ स्वधर्म्माचरणात्सर्वमनायासेनजायते ॥ ३ ॥ एतत्कर्त्तुमशक्तश्चेन्निषिद्धंतुपरित्यजेत् ॥ विहितंकर्म्मकुर्वीतसिद्धिःस्या त्पुत्रपौत्रिकी ॥ ४ ॥ तत्रादौकथयिष्यामिनिषिद्धानिसवैःसह ॥ देवस्थाने गुरुस्थानेश्मशानेचचतुष्पथे ॥ ५ ॥ पा[5]दुकासनविण्मूत्रमैथुनादिविवर्ज्जये त् ॥ प्रमत्तामन्त्य[6]जांकन्यांपुं[7]ष्पितांपतितस्तनीम् ॥ ६ ॥ विरूपांमुक्तकेशीं चकामार्त्तांचननिन्दयेत् ॥ कन्यायोनिंपशुक्रीडांदिग्वस्त्रांप्रकटस्तनीम् ॥ ७ ॥

---

१ वाममार्ग में २ विना सिद्ध भये वाममार्गी लोग इसलोक वा परलोकसे पतित होते हैं ३ दक्षिणमार्गमें सिद्धि के न होने पर भी पापों की हानि होती है इससे वेदसम्मत दक्षिण मार्ग उत्तम है ४ मद्य, मैथुन, मत्स्य, मांस चार मकार के सेवी वाममार्गियों का नरक होता है यहांपर यह भाव है कि जे लोग मद्य मांसादि में प्रवृत्त हैं उनके कुछ कल्याण के लिये उसके समेत देवपूजादिकों का उपदेश है मद्य मांसादि में प्रवृत्ति कराने के लिये उपदेश नहीं है और जे लोग उसका उपदेश मानकर मद्य मांसादिक में प्रवृत्त होते हैं उनके लिये रौरवादि नरकोंकी रचना कीहीगई है ५ खड़ाउओं पर बैठाहुआ पेशाब न करे ६ नीचजातिकी स्त्री ७ रजोधर्म हुई स्त्री ॥

नालोकयेत्परद्रव्यंपरदारांश्चवर्ज्जयेत् ॥ धान्यगोगुरुदेवाग्निकोशपुस्तकसम्मुखम् ॥ ८ ॥ नैवप्रसारयेत्पादौनचैतानिविलङ्घयेत् ॥ आलस्यमदसम्मोहशापपैशुन्यविग्रहान् ॥ ९ ॥ असूयामात्मसम्मानंपरनिन्दांचवर्ज्जयेत् ॥ लिङ्गिनंव्रतिनंविप्रंवेदवेदाङ्गसंहिताः ॥ १० ॥ पुराणागमशास्त्राणिमनसापिनदूषयेत् ॥ युगंमुशलमश्मानंदामचुल्लीमुलूखलम् ॥ ११ ॥ शूर्पसम्मार्जनींदण्डंध्वजंवैतूर्य्यमायुधम् ॥ कलशंचामरंछत्रंदर्प्पणंभूषणंतथा ॥ १२ ॥ भोगयोग्यानिचान्यानियागद्रव्याणियानिच ॥ महास्थानेषुवस्तूनियानिवा देवतालये ॥ १३ ॥ दिव्योक्तानिपदार्थानिभूताविष्ठानियानिवै ॥ लङ्घयेज्जातुनैतानिनचैतानिपदास्पृशेत् ॥ १४ ॥ यागोष्ठीलोकविद्विष्टायाचस्वैरविसर्प्पिणी ॥ परहिंसात्मिकायाचनतामवतरेत्क्वचित् ॥ १५ ॥ प्रतिग्रहान्नगृह्णीयादात्मभोगविधित्सया ॥ देवतातिथिपूजार्थंदानतोप्यर्ज्जयेद्धनम् ॥ १६ ॥ विभीतककरञ्जार्कस्नुहीछायांनसंश्रयेत् ॥ स्तम्भदीपमनुष्याणामन्येषांप्राणिनांतथा ॥ १७ ॥ नखाग्रकेशनिर्धूतस्नानवस्त्रपटोदकम् ॥ एतत्स्पर्शंत्यजेद्दूरं खरश्वाजैरजस्तथा ॥ १८ ॥ लिङ्गस्थानंचनिर्माल्यंनद्यांनैवचलङ्घयेत् ॥ नद्यांप्रवाहयेत्सर्वंदद्याद्वाशिवदीक्षिते ॥ १९ ॥ नलङ्घयेद्गुरोराज्ञामुत्तरं नवदेत्तथा ॥ अप्रियंचतथाकालेकामंक्रोधंविशेषतः ॥ २० ॥ नापृच्छन्नमुखोब्रूयाद्गुरोरग्रेकदाचन ॥ अद्वैतंदेवपूजांचगुरोरग्रेपरित्यजेत् ॥ २१ ॥ पादुकायोगपट्टादिगुरुचिह्नानिसाधकः ॥ नलङ्घयेत्स्पृशेन्नैवतत्समक्षंनधारयेत् ॥ २२ ॥ पर्य्यङ्कशयनंतद्वत्तथापादप्रसर्प्पणम् ॥ अङ्गभङ्गंचलीलांच नकुर्य्याद्गुरुसन्निधौ ॥ २३ ॥ छायांनलङ्घयेत्तस्यगच्छेन्नपुरतोगुरोः ॥ नकुर्वीतगुरोरग्रेप्रभावंस्वस्यशिष्यकः ॥ २४ ॥ अहङ्कारंनकुर्वीतनोल्बणंधारयेद्वपुः ॥ प्रगुरोःसन्निधौनैवस्वगुरुंप्रणमेद्बुधः ॥ २५ ॥ नमस्कारायचोद्युक्तंगुरुर्दृष्ट्वानिवारयेत् ॥ नंनियोगंगुरोर्दद्यात्युष्मदानैवभाषयेत् ॥ २६ ॥ श्रीनाथ

---

१ पराये दोषोंका प्रकट करना २ सेहुँड़ा ३ गधा ४ कुत्ता ५ भेड़ी ६ धूलि ७ गुरुके गुरु उनके समीप प्रथम स्वगुरुके प्रणाम न करे ८ गुरुको हुकुम न दे ९ गुरु लोगों को तुम न कहे अर्थात् देव, स्वामी, आप कहे ॥

देवस्वामीतिबोधनेभाषणेवदेत् ॥ जातायामापदिक्कापिशपथंगुरुसञ्ज्ञितम् ॥ २७ ॥ नकुर्य्याच्छिवसञ्ज्ञंवाप्रसादेनक्रियेतचेत् ॥ तदर्थंनिर्वहेद्यत्नादन्ते पूजाजपाहुतीः ॥ २८ ॥ अनिर्वहंस्तुकार्य्यंतद्यदर्थंशपथःकृतः ॥ प्रायश्चित्तंमनोःकुर्य्यान्मूलस्यैवसहस्रकम् ॥ २९ ॥ लोकोद्वेगकरीयाचयाचमर्म्मनिकृन्तिनी ॥ स्थित्युद्वेगकरीयाचतांगिरंनैवभाषयेत् ॥ ३० ॥ अरण्यमुज्ज्वलमपिमनसापिसमीप्सितम् ॥ लोकविद्वेषणंवेषंनगृह्णीयात्कदाचन ॥ ३१ ॥ तन्त्रोक्तान्यसमाचारानैहिकामुष्मिकांश्चतान् ॥ आचरन्नादराच्छान्तिंदीक्षितःसोधिगच्छति ॥ ३२ ॥ सामान्यसिद्धौरक्षार्थंपरेषांनकदाचन ॥ प्रयोक्तव्यःस्वस्यमन्त्रोमहापद्यपिसाधकैः ॥ ३३ ॥ गुरोरुद्भूतवाक्येनभयात्स्वार्थेनवापुनः ॥ कृपयापरयाकुर्य्यादनाथेषुदयांसदा ॥ ३४ ॥ यत्रयत्रपुरीष्वेवमात्सर्य्यंश्रूयतेगुरोः ॥ तत्रतत्रनवस्तव्यंप्रयायात्संस्मरन्हृदि ॥ ३५ ॥ विष्णोःशिवस्यशास्त्रस्यवेदस्यार्कगणेशयोः ॥ भवान्यायत्रनिन्दातुतस्मिन्स्थानेननैवसेत् ॥ ३६ ॥ कर्म्मणामनसावाचानहीच्छेत्परदारकान् ॥ वक्तव्यंचवचःसत्यंसौशील्यंसमतांधृतिम् ॥ ३७ ॥ शक्तिंदयामवस्थांचदिव्यांशक्तिंचसर्वदा ॥ गमनागमनेकुर्य्यात्प्रणम्यगुरुपादुके ॥ ३८ ॥ पश्चात्पादेननिर्गच्छेत्प्रणम्यचगुरोर्गृहात् ॥ मलयुक्तादिरहितःकेशश्मश्रुविलुञ्चनात् ॥ ३९ ॥ सोमसूर्य्योत्तरस्थांचगवाश्वत्थादिमध्यगाम् ॥ भावयेद्देवतांविष्णुंगुरुविप्रशरीरगाम् ॥ ४० ॥ सेवेतमातापितरौविष्णुंतद्वत्प्रियातिथिम् ॥ ज्ञेयोविश्वाश्रयोविष्णुरात्माज्ञेयश्चविष्णुवत् ॥ ४१ ॥ स्वानुष्ठानेतुयत्कर्म्मसर्वंसर्वस्यगोपयेत् ॥ मन्त्रगुप्तिश्चकर्त्तव्यासततंमन्त्रसिद्धये ॥ ४२ ॥ गुरोर्नामनगृह्णीयाद्दद्यादावश्यकेत्विति ॥ ॐश्रीपूर्वंगुरोर्नामदेवनामतदुत्तरम् ॥ ४३ ॥ पादशब्दसमेतंतुकृत्वामूर्ध्न्यञ्जलिंपुनः ॥ नमोऽन्तंचवदेन्नामतिथ्यर्णचहरेर्मम ॥ ४४ ॥ नित्यंनैमित्तिकंकाम्यंसापेक्षंपूर्वपूर्वतः ॥ अन्यथाभजनंदेविकरोत्यापत्परांपराम् ॥ ४५ ॥ प्रत्यहंक्रियतेपूजासातुनित्याप्रकीर्त्तिता ॥

---

१ किसी के लिये अपने इष्टमंत्र से पुरश्चरण न करे २ प्रथम ॐ श्री फिर गुरुनाम फिर देवनाम मिलाकर पादेभ्योनमः इस पदको जोड़दे ॥

नैमित्तिकापितत्संख्यापञ्चतुल्यापरेदिने ॥ ४६ ॥ अभावेपिकदाचित्स्यान्नित्यनैमित्तिकात्वियम् ॥ शुद्धानैमित्तिकापूजाप्रोक्ताविंशतिभेदिका ॥ ४७ ॥ पर्वाणि[1]चमहायोगाव्यतीपातःसवैधृतिः ॥ मन्वादयो[2]युगाद्याश्च[3] यदाङ्गंदेवताभवम् ॥ ४८ ॥ पुष्यश्चरविवारश्चत्रिगुरूणांस्वकीयकम् ॥ जन्माहश्चापिदीक्षायादिवसंनवरात्रकम् ॥ ४६ ॥ गण्डान्तान्यथपूजाया आवश्यकदिनंशृणु ॥ विशेषेणकृतापूजायस्मिन्भवतिनिष्फला ॥ ५० ॥ देशिकागमनेचैववीरस्वजनदर्शने ॥ चन्द्रसूर्य्योपरागेचलाभेहोमेमहोत्सवे ॥ ५१ ॥ पीठेपीठगमेपुण्येतीर्थदैवतदर्शने ॥ रोगेष्वापत्सुदोषेषुदुस्सङ्गेदुर्निमित्तके ॥ ५२ ॥ यथाकालोयथाश्रद्धायथाद्रव्यंयथोचितम् ॥ यथाबलंयथादेशस्तथापूजांसमाचरेत् ॥ ५३ ॥ नैमित्तिकार्चनेकालाःप्रातर्मध्याह्नसङ्गवाः ॥ प्रदोषेचात्रिविघ्नेशरविविष्णवीशशक्तयः ॥ ५४ ॥ दमनेनचयोदेवं वर्षमध्येनपूजयेत् ॥ तस्यवर्षकृतापूजाफलंगृह्णातिकामराट् ॥ ५५ ॥ चैत्रादयस्त्रयोमासाःप्रशस्ताःपूर्वपूर्वतः॥अष्टमीनवमीपूर्णमास्यमाचचतुर्दशी॥ ५६॥एतन्मध्येतुकस्मिंश्चित्प्राग्दिनेतुप्रदोषके ॥ कृतनित्यक्रियश्शुद्धोयुक्तःसामयिकैर्जनैः ॥ ५७ ॥ दमनस्यसमीपन्तुगत्वासनउपाविशेत् ॥ प्राणायामत्रयंकृत्वाऋष्यादीन्विन्यसेत्ततः ॥ ५८ ॥ कामभस्मसमुद्भूतरविपोष्यजलोद्भव ॥ ऋषिगन्धर्वदेवादिमोहनायनमोस्तुते ॥ ५६ ॥ सांवत्सरिकपूजायाः परिपूर्णत्वसिद्धये ॥ दमनत्वंसमायाहिक्षमस्वचनमोस्तुते ॥ ६० ॥ शिवप्रसादसम्भूतअत्रसन्निहितोभव॥शिवकार्य्येसमुत्थेद्यनेतव्योसिशिवाज्ञया॥ ६१ ॥ एवंदमनमामन्त्र्यकामदेवंतथारतिम् ॥ प्रीतिंचपूजयेत्तत्रतत्तन्मन्त्रेणसाधकः ॥ ६२ ॥ तारः[4]क्लींकामदेवायनमश्चेतिनवाक्षरः ॥ [5]श्रींश्रींश्रींक्रो

१ चतुर्दशी कृष्णपक्षकी अष्टमी अमावस संक्रांति २ चैत्रसुदी तीज वा पूर्णमासी कार्त्तिक सुदी द्वादशी पूर्णमासी जेठ सुदी पूर्णमासी आषाढ सुदी दशमी पूर्णमासी फाल्गुन सुदी पूर्णमासी कार सुदी नवमी माघसुदी सप्तमी पूस सुदी एकादशी भादौं सुदी तीज और सावन बदी अष्टमी व अमावस ये सब मन्वादि तिथी कहलाती हैं ३ कार्त्तिक सुदी नवमी वैशाख सुदी तीज भादौं बदी तेरसि और माघ बदी अमावस ये युगादि तिथी हैं ४ ॐ ५ श्रीं श्रीं श्रीं क्रौं रत्यैनमः इति रतिमन्त्रः ॥

मितिप्रोक्तारत्यैहृच्चाष्टवर्णकः ॥ ६३ ॥ रतिस्थाने[1]प्रीतिपदादयमप्यष्टवर्णकः ॥ ततःस्वगृहमागच्छेद्द्वितीयेदिवसेपुनः ॥ ६४ ॥ कृतनित्यक्रियस्स्वेष्टैर्युक्तोदमनमाव्रजेत् ॥ उत्पाटयेच्छेदयेद्वास्वमूलेनास्त्रमन्त्रतः ॥ ६५ ॥ गृहमानीयतेयेनमन्त्रेणानेनसेचयेत् ॥ ॐ अघोरेऐंच ॐचघोरेह्रींमितिकीर्त्तयेत् ॥ ६६ ॥ घोरघोरतरेश्रींचसर्वतःसर्वसर्वेभ्यः ॥ नमस्तेरुद्ररूपेभ्योह्रींश्री मितिमनुःस्मृतः ॥ ६७ ॥ चतुस्त्रिंशदक्षरात्मादमनेतंनिधापयेत् ॥ पूजास्थानेचपीठादौनवाशान्तस्यकारयेत् ॥ ६८ ॥ कृत्वाचाष्टदलंपद्मंतत्रभागान्प्रकल्पयेत् ॥ चन्दनागुरुकर्पूरचन्दनैर्लेपयेच्चतान् ॥ ६९ ॥ आनन्देशोबीजवर्णैर्बिन्दुयद्भिर्नमोन्तकैः ॥ पृथक्पूज्यस्तुतद्बीजंजपन्निहक्षमापयेत् ॥ ७० ॥ पूजास्थानेप्रकुर्वीतसर्वतोभद्रमण्डलम् ॥ तस्याष्टदिक्षुसंस्थाप्याघटाः स्वर्णादिनिर्मिताः ॥ ७१ ॥ मध्येवाकुम्भमेवैकमशक्तःस्थापयेत्ततः ॥ तत्र स्वासनपूजादियोग[3]पीठान्तमर्चयेत् ॥ ७२ ॥ तस्यदक्षिणदिग्भागेसिन्दूरेणाष्टपत्रकम् ॥ पद्मंकुर्य्याद्वृत्तयुग्मवेष्टितंभूपुरेणच ॥ ७३ ॥ पञ्चवर्णरजोभिश्चकर्णिकायामशोककम् ॥ लिखित्वाप्रार्थयित्वातंपूजयेच्चन्दनादिभिः ॥ ७४ ॥ अशोकायनमस्तुभ्यंकामस्त्रीशोकनाशक ॥ शोकार्त्तिंहरमेनित्यमानन्दंजनयस्वमे ॥ ७५ ॥ तस्यदक्षिणतस्ताद्दृङ्मण्डलेपूजयेत्ततः ॥ वरखड्गधरंकालंपञ्चरङ्गैर्विचित्रितम् ॥ ७६ ॥ त्रुट्यादिप्रलयान्तोयःकालरूपोमहाबलः ॥ कलयत्यपिविश्वंयस्तस्मैकालात्मनेनमः ॥ ७७ ॥ अशोकस्यततोधस्तात्त्रिकोणेमण्डलेशुभे ॥ [4]मण्डूकादिज्ञानात्मान्तांपीठपूजांसमाचरेत् ॥ ७८ ॥ तद्बाह्येष्टदलेप्रोक्तःशक्त्यष्टकसमर्चनम् ॥ सौभाग्यांचतथाहृद्यांवृषांचापिधृतिंरतिम् ॥ ७९ ॥ प्रीतिंवासन्तिकांनिर्वाणाख्यांमध्येतुकामुकाम् ॥ आवाह्य कामदेवंचतद्गायत्र्यातदुत्तरम् ॥ ८० ॥ कामदेवायविद्महेपुष्पबाणायधीमहि ॥ तन्नोनङ्गःप्रचोदयात् ॥ ८१ ॥ कृत्वाप्राणप्रतिष्ठान्तंततोमुद्राःप्रदर्शयेत् ॥

---

१ श्रीं श्रीं श्रीं क्रौं प्रीत्यैनमः इति प्रीतिमन्त्रः २ ॐ अघोरेऐं ॐ घोरेह्रीं घोरघोरतरे श्रीं सर्वतः सर्वसर्वेभ्यो नमस्तेरुद्ररूपेभ्यो ह्रींश्रीं इतिचतुस्त्रिंशदक्षरोमन्त्रः ३ योगपीठपूर्वोक्त ४ मंडूकसे लेकर ज्ञानात्मा और परतत्त्व पर्य्यन्त पूर्वोक्त रीतिसे पूजाकरे ॥

पाशांकुशधनुर्बाणाभिधाध्यायेत्ततःपरम् ॥ ८२ ॥ रक्ताम्बरंरक्तवर्णंरक्तगन्धानु लेपनम् ॥ रक्तमाल्यंचतरुणंवामदक्षिणयोर्युतम् ॥ ८३ ॥ रत्याप्रीत्येक्षुकोदण्ड पुष्पबाणमधःकरे ॥ ऊर्ध्वंपाशस्ततःपूज्यंपूर्वोक्तमनुभिस्त्रयम् ॥ ८४ ॥ रक्त वस्त्रपरीधानांसर्वाभरणभूषिताम् ॥ पद्मद्वयकरांगौरवर्णांध्यायेद्रतिंशुभाम् ॥ ८५ ॥ श्यामवर्णांरक्तवस्त्रांसर्वाभरणभूषिताम् ॥ ताम्बूलास्यांभजेप्रीतिघ टपुष्पलसत्कराम् ॥ ८६ ॥ अग्रेतुकामदेवस्यवसन्तंपरिपूजयेत् ॥ सुधाकु म्भंवामहस्तेदक्षिणेकुसुमाकरम् ॥ ८७ ॥ कदम्बवनमध्यस्थंरक्तमाल्यांशुका वृतम् ॥ ध्यायेद्वसन्तंगौराङ्गंसुरूपंलोकमोहनम् ॥ ८८ ॥ [1]वंवसन्तायहृदयं तस्यसप्ताक्षरोमनुः ॥ पूजाद्यर्थंततोग्नीशरक्षोवायव्यमध्यतः ॥ ८९ ॥ चतु र्दिक्षुवषट् दीर्घयुगनङ्गस्यबीजकम् ॥ पठित्वाहृदयादीनिषडङ्गानिप्रपूजयेत् ॥ ९० ॥ तदग्राष्टदलेदेवमुखतस्तुप्रदक्षिणम् ॥ कामंभस्मशरीरंचानङ्गमन्मथ मेवच ॥ ९१ ॥ वसन्तस्यसखायंचस्मरामीक्षुधनुर्धरम् ॥ पुष्पबाणंतदग्रेतु लोकपानायुधानिच ॥ ९२ ॥ ततस्तुकामगायत्र्यायथासंख्यंजपंचरेत् ॥ वसन्तंकामदेवंचश्लोकाभ्यांप्रार्थयेदिति ॥ ९३ ॥ वसन्तायनमस्तुभ्यंवृक्ष गुल्मलताप्रिय ॥ सहस्रमुखसंवाहकामरूपनमोस्तुते ॥ ९४ ॥ नमोस्तुपुष्प बाणायजगदानन्दकारिणे ॥ मन्मथायजगन्नेत्रेरतिप्रीतिप्रियायच ॥ ९५ ॥ कामदेवंप्रणम्याथमूलन्यासंसमाचरेत् ॥ आवाहयेन्मध्यकुम्भेदेवंसाङ्गंचपूज येत् ॥ ९६ ॥ आवाहितोसिदेवेशसद्यःकालेमयाविभो ॥ कर्त्तव्यंतुयथाला भंपूर्णंपर्वत्वदाज्ञया ॥ ९७ ॥ इतिसावरणंदेवंदमनैःपूजयेत्ततः ॥ धूपदीपा दिकंकृत्वानित्यहोमंसमाचरेत् ॥ ९८ ॥ द्रव्यैस्तुदेवकल्पोक्तैर्होमस्तुत्रिगुणो जपात् ॥ पूजाशेषंसमाप्याथप्रार्थयेद्देवतामिति ॥ ९९ ॥ सर्वरूपजगन्नाथ वाञ्छितार्थफलप्रद ॥ हृत्स्थान्पूरयमेदेवकामान्कामेश्वरेश्वर ॥ १०० ॥ एवंसम्प्रार्थ्यदेवेशंविसृज्यचगुरुंततः ॥ द्रव्याद्यैस्तोषयेद्विप्रान्भोजयेदितित द्विधिः ॥ १०१ ॥ पवित्रनामनागायवरोदत्तस्तुशम्भुना ॥ पवित्रारोपणं

[1] वंवसन्तायनमः इतिमन्त्रः ॥

येस्तुनकृतंतत्फलंतव ॥ १०२ ॥ कुर्य्यान्मिथुनसंक्रान्तेस्तुलासंक्रमणावधि॥
आषाढउत्तमोमासः श्रावणोमध्यमोभवेत् ॥ १०३ ॥ हीनोभाद्रपदःपक्षःश्वे
तःसन्मध्यमोसितः ॥ अष्टम्यांचचतुर्थ्यांचचतुर्दश्यांपवित्रकम् ॥ १०४ ॥ नव
म्यामपिकर्त्तव्यंकृतादिषुयथाक्रमम्॥सौवर्णंराजतंताम्रंकलौकर्पासकंशुभम्॥
१०५ ॥ पट्टजंतुगृहस्थानांवनस्थानांतुवाष्कलम् ॥ पद्मजातंसौगतानांशूद्रा
णांक्षौममिष्यते ॥ १०६ ॥ वटूनांदर्भसञ्जातंवैश्यानांतुशणोद्भवम् ॥ मुञ्जजातं
व्रतस्थानामाविकंसमरैषिणाम् ॥ १०७ ॥ सरस्तुनवसूत्राणांत्वष्टोत्तरशतैः
सरैः ॥ पवित्रंपरमंप्रोक्तंतदर्धंमध्यमंस्मृतम् ॥ १०८ ॥ कनिष्ठंसप्तविंशत्याता
वदंगुलदीर्घकम् ॥ पूजावरणदेवानांतुल्यानिचरयेद्बुधः ॥१०९॥ षट्त्रिंशां
गुलयःश्रेष्ठेचतुर्विंशाश्चमध्यमे॥ द्वादशैवकनिष्ठेस्युरथान्यच्चपवित्रकम्॥११०॥
स्कन्धाच्चनाभिपर्य्यन्तंदशग्रन्थिसमन्वितम् ॥ क्रमज्ञानाञ्चशिष्यानांपवित्रं
तदुदाहृतम् ॥ १११ ॥ अन्येषांस्वेच्छयाकुर्य्यात्तनुग्रन्थियुतानिच ॥ ग्र
न्थीनांवेष्टनंश्रेष्ठंषड्विंशद्भिश्चतन्तुभिः ॥ ११२ ॥ चतुर्विंशतिभिर्मध्यमधमं
भौनुभिःस्मृतम् ॥ ग्रन्थयोवर्म्ममन्त्रेणकर्त्तव्याःप्राग्दिनेततः ॥ ११३ ॥
रात्रौसामयिकैःसार्धंपवित्राणिसमानयेत् ॥ पूजास्थानेथसिन्दूरकुंकुमारक्त
चन्दनैः ॥ ११४ ॥ कस्तूरीविधुलाक्षाभिर्गैरिकाद्यैर्विचित्रयेत् ॥ ग्रन्थिस्था
नेषुसंस्थाप्यपीठेतन्नवतन्तुषु ॥ ११५ ॥ देवतानवकम्पूज्यमोङ्कारश्चन्द्रमा
स्तथा ॥ वह्निर्ब्रह्मानागगुरूरविश्चापिशिवाशिवः ॥ ११६ ॥ सर्वेदेवाश्चा
पिपूज्याःशिरोमन्त्रेणमन्त्रयेत् ॥ अभ्युक्षयेच्चहृन्मन्त्रेणास्त्रमन्त्रेणरोधयेत् ॥
११७ ॥ तेषांदशग्रन्थिषुचसम्पूज्यादशशक्तयः ॥ क्रियाचपौरुषीवीरागायत्री
चापराजिता ॥ ११८ ॥ विजयाचजयामुक्तिः सदाशिवमनोन्मनी ॥ पवि
त्रेषुततःपूज्यंमूलमन्त्रषडङ्गकम् ॥ ११९ ॥ घटेचविन्यसेदाद्यंपवित्रंचमहत्त
था ॥ कृत्वान्यासादिकंतत्रप्राग्वत्पूजांप्रकल्पयेत् ॥ १२० ॥ कुम्भेदेवंसमा
वाह्ययजेदावरणैःसह ॥ देवस्यमूलमन्त्रेणपवित्रस्यसमर्पणम् ॥ १२१ ॥ दे

---

१ डोरा २ बारह ३ हुं मन्त्रेण ४ कपूर ५ स्वाहा ॥

वताभ्यः पवित्राणि दीनानाथांश्चतर्पयेत् ॥ दत्त्वा च भूयसीं पश्चात्स्वयम्भुञ्जी वाग्यतः ॥ १२२ ॥ अतिस्पष्टोत्रसम्प्रोक्तः पवित्रारोपणेविधिः ॥ काम्यकर्माणि वक्ष्यामि तत्रादौ शान्तिरुच्यते ॥ १२३ ॥ शान्तिर्नाम मनुष्याणां रोगहत्यादिनाशनम् ॥ विभज्य षोढा होरात्रं पञ्चमेंशे तु शान्तिकम् ॥ १२४ ॥ हेमन्ते च प्रकर्त्तव्यं नासा धश्चलते यदा ॥ वायुस्तदा त्वपस्तत्त्वं तास्मिञ्छान्तिकमाचरेत् ॥ १२५ ॥ श्वेतवर्णेन निर्माय चतुरस्रं तु मण्डलम् ॥ पूजयेच्चन्दनाद्यैर्म्बीजेन शत्रुशान्तिके ॥ १२६ ॥ उत्तराभिमुखो भूत्वा शान्तिकन्तु समाचरेत् ॥ शान्तिकादौ रतिः पूज्या पद्ममुद्रां च दर्शयेत् ॥ १२७ ॥ बद्ध्वा पद्मासने स्थेयं नमोन्तः शान्तिके मनुः ॥ शान्तौ कुशासनं ग्राह्यं होमयेन्मृगमुद्रया ॥ १२८ ॥ मुक्त्वा कनिष्ठिकां यत्र हूयते सा मृगी भवेत् ॥ त्रिपूत्तरासु पूर्वासु शान्तिकं स्याद्धि जन्मसु ॥ १२९ ॥ अथ वश्यं प्रवक्ष्यामि स्वायत्तीकरणं तु तत् ॥ देवरक्षोराजलोकसर्प्पस्त्रीहयहस्तिनाम् ॥ १३० ॥ प्रथमेंशे वश्यकर्म्म वसन्ते च प्रसिध्यति ॥ नासोर्ध्वं वहते वायुरग्नितत्त्वं वहेत्तदा ॥ १३१ ॥ वश्यं कर्म्म त्रिकोणेन रं बीजेनाग्निपूजनम् ॥ रक्तवर्णेन निर्माय वश्यम्पूर्वमुखश्चरेत् ॥ १३२ ॥ वाणीं सम्पूजयेद्वश्ये पाशमुद्राम्प्रदर्शयेत् ॥ स्वस्तिकासनमारुह्य स्वाहान्तं मन्त्रमुच्चरेत् ॥ १३३ ॥ छागलं चर्म्म वश्ये स्याद्धोमयेन्मृगमुद्रया ॥ रक्तद्रव्यैरत्र होमो ध्यानमारक्तकं मतम् ॥ १३४ ॥ मृगान्त्यं चित्रामित्रर्क्षं विशाखा कृत्तिका त्रतु ॥ अथ स्तम्भम्प्रवक्ष्यामि तद्वद्योगनिवारणम् ॥ १३५ ॥ शिशिरे स्तम्भनम्प्रोक्तं षष्ठांशे तु दिनस्य तत् ॥ अग्नेरपां च सैन्यस्य क्रुद्धस्य विषदंष्ट्रिणः ॥ १३६ ॥

---

१ वःप्रकार २ पद्मुमुद्राकरतलेत्वंगुष्ठौमिलितौयदा । हस्तौतुसम्मुखौकुर्य्यात्संहता उन्नतांगुलीः ॥ दोनों हाथोंको जोड़ मिलीहुई अंगुलियों को कमलाकार बनाकर ऊपरको उठाये उसको पद्ममुद्रा कहते हैं ३ पद्मासनके लक्षणका श्लोक प्रथम लिखचुके हैं बाम ओरकी चोटी जांघपर दाहिने पायें को और दाहिनी जांघमें बायें पायेंको धरे पूजासमय में इसका पद्मासन नाम है और शान्तिकर्म्म में गोचर्म्मके आसन में बैठना यह ग्रन्थान्तरों से जानाजाताहै और रति की पूजा होती है ४ दिनके प्रथम भाग में ५ तर्जनीमध्यमे बामे ऊर्ध्वमुख्यौविधायच । दक्षिणेद्वेअधोमुख्यौसुमुख्यौच परस्परम् ॥ पाशमुद्राभवेदेषा मिथः सम्पीडनेतयोः ६ अन्यग्रन्थोंमें गैंडाका चर्महै ७ रेवती ८ अनुराधा ९ दिनके दूसरेभागमें ॥

तर्प्पणार्थंमेषरक्तमिश्रितन्तोयमावहेत् ॥ जानुभ्यामवनींगत्वास्तम्भनस्यक्रियांचरेत् ॥ १३७ ॥ जारबौद्धरुजांस्तम्भोधर्म्मः प्रेतादिरक्षसाम् ॥ नासादण्डेनसंलग्नोवायुश्चेद्भूदयोभवेत् ॥ १३८ ॥ स्तम्भकर्म्मतदाकुर्य्याल्लंबीजेनवसुन्धराम् ॥ अष्टकोणयुतेपीतेमण्डलेतांसमर्चयेत् ॥ १३९ ॥ प्राङ्मुखः स्तम्भनंकुर्य्याद्रमान्तत्रप्रपूजयेत् ॥ विकटासनगोदेव्यैगदामुद्रांप्रदर्शयेत् ॥ १४० ॥ स्तम्भनेवषडन्तश्चहोमेमन्त्रःप्रकीर्तितः ॥ गजचर्म्मासनंस्तम्भेगदामुद्राहुतौतथा ॥ १४१ ॥ पीतद्रव्यैश्चात्रहोमः पीतवस्त्रादिधृक्स्वयम् ॥ स्तम्भनेभरणीचित्रारोहिणीचोत्तरात्रयम् ॥ १४२ ॥ अथविद्वेषणंवक्ष्येप्रीतिनाशस्सतुद्वयोः ॥ ग्रीष्मेविद्वेषणंचैवस्यांशकेतुद्वितीयके ॥ १४३ ॥ नासायांमध्यगेवायौखोदयेद्वेषणंमतम् ॥ वर्त्तुलेधूम्रवर्णेतुमण्डलेखंसमर्चयेत् ॥१४४॥ हंबीजेनाथविद्वेषंनैर्ऋत्याभिमुखश्चरेत् ॥ पूज्याधूमावतीद्वेषेमुद्रातुमुशलाभवेत् ॥ १४५ ॥ होममन्त्रःफडन्तोत्रविशेत्कुक्कुटकासने ॥ विद्वेषेजाम्बुकश्चर्मलोहासनमथापिवा ॥ १४६ ॥ धूम्रवर्णैश्चहोतव्यंताद्दग्वस्त्रादिसाधकः ॥ आर्द्राचतुष्टयंमूलंज्येष्ठाविद्वेषणेमता ॥ १४७ ॥ उच्चाटनमथोवक्ष्येतदरीणांप्रवासनम् ॥ प्रावृड्डुचाटनेशस्तातृतीयांशेदिनस्यतत ॥ १४८ ॥ तिर्य्यग्गतेसमीरेतुवायुंर्वहतितत्रतु ॥ शत्रोरुचाटनंकुर्य्याद्यंबीजेनतमर्च्चयेत् ॥ १४९ ॥ षट्कोणंमण्डलंवायोःकृष्णंषड्बिन्दुलाञ्छितम् ॥ मृगचर्म्मादिकंतत्रवाय

१ भूमितत्त्व का उदयहोताहै २ जानुजङ्घान्तरालेचभुजयुग्मंप्रकल्पयेत् । विकटासनमेतत्स्यान्मुनिभिःपरिभाषितम् ॥ जांघ वा मुरवोंके बीचमें भुजाडारके बैठनेसे विकटासन है ३ गदातुसरलौ हस्तौत्वन्योन्यग्रन्थितांगुली। अंगुष्ठौमध्यमेभूयःसंलग्ने सुप्रसारिते ॥ दोनों हाथोंको सीधेकर अंगुलियों को परस्पर फांस और अँगूठे व मध्यमा अंगुलियों को जोड़कर पसारदे सो गदामुद्रा है ४ दिनके छठे वा दूसरे भागमें ५ आकाशतत्त्वका उदय ६ ज्येष्ठादेवी ७ मुशलाख्या भवेन्मुद्रावामस्योपरिदक्षिणम्। हस्तयोर्मुष्टियुगलंकुर्य्यात्साविघ्ननाशिनी ॥ वाम मूठीपर दक्षिण हाथकी मूठी धरने से मुशलामुद्रा होतीहै ८ कृत्वोत्कटासनंपूर्वंसमपादद्वयंततः । अन्तर्जानुकरद्वन्द्वंकुक्कुटासनमीरितम् ॥ विकटासनको कर दोनों पावोंको सम करदे और जानुओंके बीचमें से दोनों हाथों को निकालकर बैठे सो कुक्कुटासन है ९ वर्षाऋतु १० वायुतत्त्व ॥

न्यास्यं चकर्म्मणि ॥ १५० ॥ दुर्गांसम्पूजयेन्मुद्रामशनिन्तुप्रदर्शयेत् ॥ वज्रासनसमारूढः फडन्तश्चहुतौमनुः ॥ १५१ ॥ धूम्रमुच्चाटने ध्यानंकृष्णद्रव्यैस्तथाहुनेत् ॥ उच्चाटनंतथाकर्म्मक्षिप्रभेषुप्रशस्यते ॥ १५२ ॥ मारणंप्राणहरणंशत्रूणामीरितंतुतत् ॥ मारणेवर्ज्जयेद्विप्राननन्यांश्चापिसुधार्मिकान् ॥ १५३॥ स्त्रीबालव्यतिरिक्तेषुराजवैरिषुयोजयेत् ॥ स्वरोपतोवालोकानांरक्षार्थंतुतदाहरेत् ॥ १५४ ॥ नतुलोभाद्भयान्मन्त्रीकुर्य्याच्चैवतुमारणम् ॥ प्रायश्चित्तंचकर्त्तव्यंदेवितद्दोषशान्तये ॥ १५५ ॥ अयुतंप्रजपेन्मन्त्रंजुहुयात्तावदेवहि ॥ सघृतैःपायसैःकृष्णतिलैर्वाघृतसंयुतैः ॥ १५६ ॥ आत्मरक्षाप्रकर्त्तव्याकर्म्मकालेसदाबुधैः ॥ अह्नश्चतुर्थषष्ठांशःशरन्मारणकर्म्मणि ॥ १५७ ॥ वश्यवन्मारणेकार्य्यंपूजाद्यंवह्निमण्डले ॥ दक्षिणाभिमुखःकुर्य्याद्भद्रकालींसमर्चयेत्॥ १५८ ॥ दर्शयेत्खड्गमुद्राञ्चविशेद्भद्रासनेहुनेत् ॥ हुंकारान्तेनमन्त्रेणमाहिषंवाथलोहजम् ॥ १५९ ॥ आसनंशूकरीमुद्राकरसङ्कोचतोभवेत् ॥ ध्यानंकुर्य्यात्कृष्णवर्णंकृष्णद्रव्यैश्चपूजनम् ॥ १६० ॥ उग्रतीक्ष्णोडुषुस्वस्यचन्द्रताराबलादिके ॥ शत्रोश्चैवबलाभावेचैकपादोपरिस्थितः ॥ १६१ ॥ उष्णोदकंसमरिचंतर्प्पणार्थन्तुमारणे ॥ तिष्ठन्कुर्य्यान्मारणंवाभूमौपादंनिवेशयेत्॥ १६२ ॥ वामपादनिविष्टः स चरेत्तत्रतुतर्प्पणम् ॥ प्रकीर्णान्यथवक्ष्यन्तेत्व

---

१ कनिष्ठांगुष्ठयुङ्मुद्रात्रिकोणात्वशनेर्मता ॥ कनिष्ठा व अँगूठे को जोड़ शेष अंगुलियों के पसारने से वज्रमुद्रा होती है २ ऊरु अर्थात् कटि समीप मोटी जांघोंपर पांवोंको परस्पर धर और जानु याने मोरवों पर सीधी अंगुलियोंवाले हाथोंके धरने को वज्रासन कहते हैं तथा प्रोक्तम् ॥ ऊर्वोः पादौक्रमान्न्यस्य जान्वोः प्रत्यङ्मुखांगुली ॥ करौनिदध्यादाख्यातंवज्रासनमनुत्तमम् ३ हस्त, अश्विनी, पुष्य, अभिजित इनकी क्षिप्रसंज्ञा है ४ ऊर्ध्वस्य वामहस्तस्यतर्जन्याद्यंगुलित्रयम् ॥ प्रसार्य्य योजयेदन्ये मिथोंगुष्ठकनिष्ठिके ॥ खड्गमुद्रेयमुदितासर्वशत्रुनिकृन्तनी ॥ बायें हाथको ऊपरकर तीन तर्जन्यादि अंगुलियों को पसार और अंगूठा व कनिष्ठा के जोड़ने से खड्गमुद्रा होती है ५ सीवन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मंसुनिश्चलम् । वृषणाधः पादपार्ष्णी पाणिभ्यांपरिबन्धयेत् ॥ गुदा वा लिंगके बीचमें जो नस होती है वह सीवनी कहलाती है उस के दोनों तरफ पांवों के गुल्फों को रख वृषणों के नीचे ऐंड़ियों को करके दोनों हाथों से बांधलेने से भद्रासन होता है ६ पूर्वाफाल्गुनी, पूर्वाषाढ़, पूर्वभाद्रपद, भरणी, मघा ये उग्रसंज्ञक हैं ७ आर्द्रा, श्लेषा, मूल, ज्येष्ठा ये तीक्ष्णसंज्ञक नक्षत्र हैं ॥

भिचारांश्चतत्रच ॥ १६३ ॥ दक्षिणाभिमुखःकुर्य्यान्मेषीचर्म्मणिसंस्थितः ॥ लोहासनगतोवापिशूकर्य्यामुद्रयाहुनेत् ॥ १६४ ॥ धनसिद्धिकरंकर्म्मप श्चिमाभिमुखश्चरेत् ॥ मृगान्त्यचित्रामैत्रेषुदेवध्यानन्तुराजसम् ॥ १६५ ॥ गोचर्म्मणासनंमोहेस्वाहान्तंमन्त्रमुच्चरेत् ॥ हरिद्रामिश्रितन्तोयंतर्पणार्थंप्र योजयेत् ॥ १६६ ॥ स्वातीचरोहिणीतत्रश्रेष्ठाचापिसुखासनम् ॥ अथस र्वाणिकर्म्माणिरौद्रभेतुप्रसाधयेत् ॥ १६७ ॥ नानाविधेषुकार्येषुव्याघ्रचर्म्म समीरितम् ॥ सर्वरक्षनिभाकारंध्यायेन्निश्चलमानसः ॥ १६८ ॥ पीयूषवर्ष संयुक्तंपूर्णचन्द्रसमप्रभम् ॥ ध्यायेदेवंविधंवापिसर्वकार्येषुसाधकः ॥ १६९ ॥ आयुःकरस्तुश्रवणेध्यायेदेवंचराजसम् ॥ अपमृत्युजयेप्रोक्तंपूर्वाचैत्रोत्तरात्रय म् ॥ १७० ॥ वषडन्तोहोममन्त्रोध्यायेद्राजसदैवतम् ॥ आकर्षणंवह्निकोण सम्मुखस्तुसमाचरेत् ॥ १७१ ॥ वश्योक्तमखिलंज्ञेयमाकर्षेकार्य्यसिद्धये ॥ सर्वज्ञानप्रसिद्ध्यर्थमीशानाभिमुखोभवेत् ॥ १७२ ॥ सर्वविज्ञानकार्य्येषुश्वे तकम्बलमासनम् ॥ पुष्ट्यादिसाधनेमन्त्रोवौषट्पल्लवसंयुतः ॥ १७३ ॥ हं सीस्यात्तर्जनीमुक्तामुद्राहोमस्तुपौष्टिके ॥ यथोक्तदेवताध्यानंकुर्यात्पौष्टिक कर्म्मणि ॥ १७४ ॥ सर्वत्रभयनाशायवषडन्तोहुतौमनुः ॥ महासुखसमा युक्तध्यानंवैनिर्भयम्भवेत् ॥ १७५ ॥ मन्त्रभञ्जनकार्येषुवषडन्तोहुतौमनुः ॥ खण्डनेतुफडन्तःस्याद्धोमोध्यानन्तुतामसम् ॥ १७६ ॥ सौख्यायोदङ्मुखः कु र्याज्जपञ्चरुरुचर्मणि॥कल्पान्ताग्निसमंयुद्धेध्यायेदेवंचतामसम् ॥ १७७ ॥ अथवक्ष्यामिकाम्यादौसम्पूज्यायाश्चदेवताः ॥ नित्यंसमर्चयेद्धिम्नंवारेशौच तिथीश्वरम् ॥ १७८ ॥ नक्षत्रेशास्ततःपूज्यास्तत्तत्कर्म्माधिदेवताः ॥ ततो र्चयेदिष्टदेवन्ततोहोमंसमाचरेत् ॥ १७९ ॥ क्रमाद्वारेश्वरौसूर्यशिवौसोमा म्बिकेतथा ॥ गुहाङ्गारौज्ञविष्णूचचतुर्वक्त्रबृहस्पती ॥ १८० ॥ शुक्रेन्द्रौश निकालौचसूर्यादौपूज्यदेवताः ॥ प्रोक्तावारेश्वरादेवितिथीशांस्त्वमथोशृ

---

१ इतवार के सूर्य्य व शिव, सोमवार के चन्द्र व दुर्गादेवी इसीरीति से एक एक वार के दो दो देवता होते हैं वे मूल में स्पष्ट लिखे हैं क्रमसे जानलेना ॥

णु ॥ १८१ ॥ ब्रह्माविधाताविष्णुश्चयमोशीतकरोगुहः ॥ इन्द्रश्चवसवो नागाधर्म्मःशिवदिवाकरौ ॥ १८२ ॥ कन्दर्पश्चकलिर्विश्वेदेवाश्चपित रस्तथा ॥ आश्विनेयौयमोवह्निर्ब्रह्माचन्द्रःशिवोऽदितिः ॥ १८३ ॥ गुरुःस र्पाश्चपितरोभगोर्यमदिवाकरौ ॥ त्वष्टावायुरथेन्द्राग्नीमित्रश्चैवसुरेश्वरः ॥ १८४ ॥ निर्ऋतिश्चजलंविश्वेदेवाश्चापिविधिर्हरिः ॥ वसवोवरुणोऽजैक पादहिर्बुध्न्यपूषकौ ॥ १८५ ॥ नक्षत्रेशाइमेसाभिजित्काअष्टौचविंशतिः ॥ प्रणवादिचतुर्थ्यन्तानमसाचसमन्विताः ॥ १८६ ॥ एतेषांनाममन्त्रास्तुग्रा ह्याःपूजादिसाधने ॥ १८७ ॥ सिद्धमन्त्रःप्रकुर्वीतकाम्यकर्माणिनान्यथा ॥ कृतानिविपरीतानि भूत्वानिरयमाप्नुयात् ॥ १८८ ॥ गुरुभक्तःशुचिःस्नातः काम्यकर्म्मविधानवित् ॥ आत्मनश्चपरस्यापिकाम्यकर्म्माणिचाचरेत् ॥ १८९ ॥ षट्कर्माणिपरार्थञ्चकुर्य्यान्मन्त्रविदुत्तमः ॥ एतेषामेवकुर्वीतनान्ये षान्तुकदाचन ॥ १९० ॥ राज्ञोवाराजपुत्रस्यधनाढ्यस्येतरस्यवा ॥ अस्ति कस्यापिभक्तस्यन्यायार्जितधनस्यच ॥ १९१ ॥ कृतज्ञस्यवदान्यस्यगुरुदेव स्यकस्यच ॥ सुशीलस्यसुभक्तस्यकार्य्यंकुर्य्याचदेशिकः ॥ १९२ ॥ राजाका रयितान्योवाप्रणिपत्यचसाधकम् ॥ वृणुयात्कर्मकर्तारंदीक्षोक्तविधिनाततः ॥ १९३ ॥ साधकःप्रयतोभूयाद्द्विजःसन्तोषवाञ्छुचिः ॥ जितेन्द्रियोजितक्रो धोमानक्षोभविवर्जितः ॥ १९४ ॥ नित्यनैमित्तिकेरक्तःकुर्य्यात्कामाननेक धा ॥ क्रूरकर्म्मयथोक्तन्तुकृत्वाभ्यङ्गंसमाचरेत् ॥ १९५ ॥ स्नात्वासावरणांसा ङ्गांपूजयेदिष्टदेवताम् ॥ अष्टोत्तरसहस्रञ्चरक्षार्थंप्रजपेन्मनुम् ॥ १९६ ॥ मांरक्षरक्षेत्युक्त्वाचनत्वादेवंसमुत्सृजेत् ॥ अन्यैःसुहृद्भिःसुस्निग्धैरात्मरक्षान्तु कारयेत ॥ १९७ ॥ मृत्युञ्जयादिभिर्मन्त्रैःसूर्य्यसेवार्घ्यदानकैः ॥ जपहो

---

१ ब्रह्मा जी से लेकर विश्वेदेवों तक पंद्रह नाम होते हैं वे परीवा से पूर्णमासी त क्रम से तिथियों के देवता हैं और अमावस के देवता पितर कहेगये हैं २ अश्विनेय लेकर पूषापर्य्यन्त क्रमही से सहित अभिजित् अश्विन्यादिक अट्ठाइस नक्षत्रों के देवता ३ ॐकारादि चतुर्थ्यन्त नामके अन्तमें नमः पदको जोड़कर इन देवताओं की पूजा के बना लेना ॥ जैसे, ॐब्रह्मणेनमः ॐ विधात्रे नमः इत्यादि ॥

मार्चनाद्यैश्चब्राह्मणाराधनादिभिः ॥ १९८ ॥ प्रयोगकरणंसम्यग्गुरुतःशास्त्रतस्तथा ॥ ज्ञात्वाप्रयोगान्कुर्वीतनान्यथादुःखमाप्नुयात् ॥ १९९ ॥ ततःकारयिताराजातोषयेत्साधकन्धनैः ॥ प्रणिपत्यमुहुश्चापियथास्याचुष्टिमांस्तथा ॥ २०० ॥ सिद्धमन्त्रस्यसिद्ध्यन्तिषट्कर्म्माणिनसंशयः ॥ नैवसिद्ध्यन्त्यसिद्धस्यदेवताशापमाप्नुयात् ॥ २०१ ॥ काम्यप्रयोगकाराणांपरलोकोनविद्यते ॥ प्रयोगसिद्धिरेवैषांफलमन्यन्नविद्यते ॥ २०२ ॥ होमतर्प्पणमन्त्राद्यैर्नानाध्यानविशेषकैः ॥ आत्मनश्चपरस्यापिषट्कर्म्माणिसुसाधयेत् ॥ २०३ ॥ एकलक्षंजपेन्मन्त्रीध्यानविन्यासयोगतः ॥ प्रयोगदोषशान्त्यर्थमात्मरक्षार्थमेवच ॥ २०४ ॥ नचेन्नफलमाप्नोतिदेवताशापमाप्नुयात् ॥ अग्निप्रभाधूमवर्णध्वनिगन्धशिखाकृतीः ॥ दूतचेष्टादिकंसर्वंकथयीतशुभाशुभम् ॥ २०५ ॥ मन्त्रयित्वानुसन्धानंदेहावेशादिलक्षणम् ॥ गुरुभक्तिःसदाकार्य्याकर्म्मकालेविशेषतः ॥ २०६ ॥ ऐहिकामुष्मिकानान्तुगुरुरेवपरायणम् ॥ मारणोच्चाटनादीनिक्षुद्राणांवाममार्गिणाम् ॥ २०७ ॥ क्षुद्रदेवास्साधयन्ति सुखंदातुंनतेक्षमाः ॥ परनिष्ठापराणान्तुवामिनांपरमागतिः ॥ २०८ ॥ यावद्दिष्टंतावदेवप्रतिष्ठाचधनादिकम् ॥ दाक्षिणात्यानकुर्वन्तिकदाचिदिहनिन्दितम् ॥ २०९ ॥ तेषांप्रभावसंसिद्धिःपरलोकश्चशाश्वतः ॥ येनराःकुलसंशुद्धाःकल्पोक्तैर्नैवसंस्कृताः ॥ २१० ॥ तेचेन्निपतितावामेपातकंकिमतःपरम् ॥ इयंप्रोक्तोत्तराचर्य्याकिमन्यच्छ्रोतुमिच्छसि ॥ २११ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतःसिद्धिस्थिरीकरणप्रकाशःसप्तमः ॥ ७ ॥

---

श्रीदेव्युवाच ॥ मुद्राणांलक्षणंब्रूहियास्तुल्यावामदक्षिणे ॥ सर्वदेवप्रियायाश्चपूजासाफल्यदायकाः ॥ १ ॥ श्रीशिवउवाच ॥ वक्ष्येथनामपूर्वाणि मुद्राणांलक्षणानितु ॥ नित्यंयःकुरुतेसर्वादेवास्स्युस्तस्यसौख्यदाः ॥ २ ॥ अंकुशाख्याभवेन्मुद्रापृष्ठेनामाकनिष्ठया ॥ अंगुष्ठेतर्जनीवक्रासरलाचापिमध्यमा ॥ ३ ॥ साकण्ठमुद्राहस्ताभ्यांसर्वकण्ठोनिबध्यते ॥ यत्रैकमुष्टिरंगुष्ठोदक्षोवामंसमाश्रितः ॥ ४ ॥ वह्निप्राकारमुद्रातुत्रिशूलाग्रावुभौकरौ ॥ व्यत्यस्ता

वभितोवह्नेर्नयेदस्त्राह्वयापिच ॥ ५ ॥ अंगुलीन्यासमुद्रास्तुपञ्चांगुल्यःस्पृ
त्क्रमात् ॥ अंगुष्ठेनचतस्रस्तुतर्जन्यांगुष्ठमेवच ॥ ६ ॥ हृदयाख्याभवेन्मुद्रां
गुष्ठवर्ज्जाःप्रसारिताः ॥ चतस्रोंगुलयोऽयस्ताहृदयेतस्यमन्त्रतः ॥ ७ ॥ शि
रोमुद्रातुसाज्ञेयातलंपाशेप्रसारितम् ॥ चतस्रोंगुलयश्चापिप्रसार्य्यशिरसा
ताः ॥ ८ ॥ शिखामुद्रातुसाज्ञेयामुष्टिंचांगुष्ठपल्लवम् ॥ बद्ध्वातेनाशिखांस्पृष्ट्वा
शिखामन्त्रेणसाधकैः ॥ ९ ॥ कवचाख्यात्वियंमुद्राह्यंगुल्यःकृतनालिकाः ।
स्कन्धादानाभिपर्य्यन्तं पाण्योस्तुप्रक्रमोभवेत् ॥ १० ॥ त्रिनेत्रमुद्राख्यातेयं
तर्ज्जनीदक्षनेत्रगा ॥ भालेमध्यात्वनामातु वामेत्र्यक्षदिवौकसाम् ॥ ११ ॥
द्विनेत्रमुद्राख्यातेयं तर्ज्जनीदक्षनेत्रगा ॥ मध्यमावामनेत्रेच सूर्य्यविष्ण्वा
दिभेदयोः ॥ १२ ॥ अष्टमुद्राःसमाख्याताः सर्वारिष्टनिवारिणीः ॥ अंगुष्ठ
तर्जन्यग्राभ्यांहस्तयोरभिशब्दिताः ॥ १३ ॥ नित्येनैमित्तिकेचैताअङ्गषट्कस्य
मुद्रिकाः ॥ अथकाम्येपुवक्ष्यामिपरमुद्राणान्तुलक्षणम् ॥ १४ ॥ अंगुष्ठयोः
पार्श्वयोगस्तर्जन्यौसरलेयुते ॥ मध्यमेऽन्योन्यकरयोःपृष्ठलग्नेपरेतथा ॥ १५ ॥
अन्योन्यान्तर्गतेकेचिद्गुच्चेचकरपृष्ठतः ॥ एषानमस्कारमुद्राललितायाःप्रकी
र्तिता ॥ १६ ॥ तर्ज्जन्यौसरलेकृत्वाशेषांगुल्योनखैर्युताः ॥ कनिष्ठामध्यपर्व
स्थावंगुष्ठौक्षोभिणीमता ॥ १७ ॥ सरलेतर्जनीमध्येकनिष्ठानामिकेयुते ॥
अग्रयोश्चकनिष्ठास्थावंगुष्ठौद्राविणीभवेत् ॥ १८ ॥ कनिष्ठामध्यमांगुष्ठौ त
र्जन्यौविनतेर्धतः ॥ मध्यमेसरलेशेषामुखयुक्तानुकर्षिणी ॥ १९ ॥ हृन्मुद्रा
स्यादियंकाम्येतथाशैवागमेषुच ॥ कृतमुष्टिपदौहस्तौकृत्वांगुष्ठौहृदिन्यसेत् ॥
२० ॥ शिरोमुद्राललाटाग्रे कृतमुष्टियुतौकरौ ॥ कुर्य्यादूर्ध्वप्रसक्ताग्रेतर्जन्यौ
ज्येष्ठयायुते ॥ २१ ॥ शिखामुद्राकरौयुक्तौ कृतमुष्टियुताकृती ॥ ज्येष्ठांगुल्यौ
प्रसक्ताग्रे कनिष्ठेतूर्ध्वतःस्थिते ॥ २२ ॥ कवचाख्याप्रसक्ताख्यावंगुष्ठौचत्रि
कोणवत् ॥ तर्जन्यौनीतयेन्मूर्ध्नि मुखेपार्श्वेकरेहृदि ॥ २३ ॥ नेत्रमुद्रातुसर
लामध्यातर्जन्यनामिके ॥ धनुषाभेसंयुताग्रावंगुष्ठककनिष्ठिके ॥ २४ ॥ अस्त्र
मुद्राकरद्वन्द्वस्फोटेचापितदुत्तरम् ॥ तर्जन्याशब्दयेत्ताभ्यां ज्येष्ठाग्रवलिता
या ॥ २५ ॥ गालिनीतुकनिष्ठांगुष्ठौयुतावितरेतरम् ॥ करयोस्तर्जनीमध्या

नामायुक्तानवक्रिताः ॥ २६ ॥ धनुर्मुद्राकनिष्ठानामिकेचान्योन्यहस्तयोः ॥ तर्जनीमध्यमेचापि दक्षस्कन्धेप्रदर्शयेत् ॥ २७ ॥ शङ्खमुद्रातुवामाख्यमंगुष्ठंदक्षमुष्टिगम् ॥ वामांगुल्यग्रदक्षांगुष्ठस्ययोगेप्रजायते ॥ २८ ॥ योनिमुद्रान्योन्यकरकनिष्ठातर्जनीयुतिः ॥ २९ ॥ न्यस्तेतलेतुशेषांगुल्यावंगुष्ठावनामिके॥३०॥मत्स्यमुद्राधोमुखन्तुवामहस्तंतदूर्ध्वतः ॥ तादृशंदक्षिणंन्यस्यांगुष्ठकौचालयेदिति ॥ ३१ ॥ आवाहनीतुमुद्रास्यात्कराभ्यामञ्जलिंचरेत् ॥ अनामयोर्मूलपर्वण्यंगुष्ठौनिक्षिपेत्तदा ॥ ३२ ॥ स्थापनीसातुमुद्रास्यादेषावाहनमुद्रिका ॥ अधोमुखीकृतासाचेत्सर्वसंस्थापनेक्षमा ॥ ३३ ॥ सम्मुखीकरणीमुद्रा साज्ञेयामुष्टियुग्मकम् ॥ देवानांस्थापनेयास्यादंगुष्ठद्वयमुन्नकम् ॥३४॥ सकलीकरणीमुद्रासाप्रोक्तायःषडङ्गके ॥ देवानांक्रियतेन्यासोह्यङ्गानामङ्गिनेसकृत् ॥ ३५ ॥ अवगुण्ठनमुद्रातुदीर्घाधोमुखतर्जनी॥मुष्टिबद्धस्यहस्तस्यसव्यस्यभ्रामयेच्चताम् ॥ ३६ ॥ महामुद्रासमुद्दिष्टापरमीकरणेतुया ॥ अन्योन्यग्रथितांगुष्ठप्रसारितकरांगुली ॥ ३७ ॥ सन्निधापनमुद्रास्याद्योगोमुष्टिद्वयस्यतु ॥ सम्यक्कृतौउभौजातौ त्वंगुष्ठावुच्छ्रितौयदि ॥ ३८॥ संरोधिनीतुसामुद्रामुष्ट्योरन्तःप्रवेशितौ ॥ द्वावंगुष्ठौमुष्टियोगोनिश्छिद्रश्चभवेद्यदि ॥ ३९॥ दन्तमुद्रागणेशस्य वल्लभादक्षहस्तजा ॥ उत्तानोर्ध्वमुखीमध्यसरलाबद्धमुष्टिका ॥ ४० ॥ पाशाह्वयातुवामस्य तर्जन्यांदक्षतर्जनीम् ॥ क्षिप्त्वाबद्धामुष्टियुगंतर्जन्यंगुष्ठयोर्युतिः ॥ ४१ ॥ अन्योन्यान्तर्गतालग्नाः करांगुल्यस्त्वधोमुखाः ॥ अंगुष्ठौचोत्थितौलग्नौमुद्रावशकरीमता ॥ ४२ ॥ कनिष्ठाग्रेतुचान्योन्यंसम्प्रसारितहस्तयोः ॥ मध्यमाभ्यांदृढंबद्धानामिकाग्रेतुयोजयेत् ॥ ४३ ॥ तर्ज्जन्यौनामिकाग्रेतुप्रापयेन्मध्यमोपरि ॥ अन्योन्यांगुष्ठकौलग्नौ मुद्राचोन्मादिनीमता ॥ ४४ ॥ मध्यमाभ्यांदृढंबद्धाकनिष्ठांगुलयःपराः ॥ संयोज्यानामिकामुख्यौ सरलौस्यान्महांकुशा ॥ विघ्नमुद्रादीर्घरूपा मध्यमाधोमुखीयदा ॥ ४५ ॥ तर्ज्जनीमध्यमासन्धिनिर्गतांगुष्ठमुष्टिका ॥ परशोश्चभवेन्मुद्रातिर्य्यक्संयोज्यचांगुलीः ॥ प्रसृतासंयुताहस्ता तलंहस्ततलान्वितम् ॥ ४६ ॥ लड्डुकाख्याभवेन्मुद्राऊर्ध्वास्यंदक्षिणंकरम् ॥ अंगुल्यौविरला

नम्रानिम्नंकरतलंतथा ॥ ४७ ॥ वीजपूरणयावामसुष्टौउत्तानकेसति ॥ दन्ता
द्याःपङ्कणेशस्यांकुशमुद्राचसप्तमी ॥ ४८ ॥ वराख्यासातुमुद्रास्यादातिसन्नि
हितांगुलिम् ॥ उत्तानंदक्षिणंहस्तंकृत्वाधोनामयेच्छनैः ॥ ४६ ॥ अभयस्य
तुमुद्रैषाकथिताचोभयप्रदा ॥ पराङ्मुखंवामहस्तंबद्धांगुष्ठकनिष्ठिकम् ॥ ५० ॥
दक्षहस्तस्यमध्याचतर्जनीप्रसृतेयुते ॥ चर्म्ममुद्रावामहस्तन्तिर्य्यक्चसम्प्रसार्य्य
हि ॥ ५१ ॥ आकुञ्चितगतिंकुर्य्यादियंशक्तिप्रियामता ॥ धनुर्मुद्रावाममध्या
ग्रंतर्ज्जन्यग्रयोजितम् ॥ ५२ ॥ वामस्कन्धेकनिष्ठाग्रेदक्षिणांगुष्ठपीडितम् ॥
मुशलाख्याभवेन्मुद्रावामस्योपरिदक्षिणम् ॥ ५३ ॥ हस्तयोर्मुष्टियुगलंकुर्य्या
द्विघ्नविनाशनम् ॥ दुर्गामुद्रातुकरयोर्मुष्टिंकृत्वानियोजयेत् ॥ ५४ ॥ वाम
स्योपरिदक्षञ्चशिरसिस्थापयेदिति ॥ बाणमुद्रादक्षमुष्टेस्तर्जन्यादीर्घयाभवेत् ॥
५५ ॥ अष्टौवराद्याः पाशश्चांकुशःशक्रेर्दशस्मृताः ॥ चक्रमुद्राकरतलेवि
रीतेविधायच ॥ ५६ ॥ अंगुष्ठौवेशयेच्चैवकनिष्ठानामिकान्तरे ॥ गदातुस
लौहस्ताअन्योन्यग्रन्थितांगुली ॥ ५७ ॥ अंगुल्यौमध्यमेभूयःसल्लग्नेसुप्रस
रिते ॥ पद्ममुद्राकरतलेत्वंगुष्ठौमिलितौयदा ॥ ५८ ॥ हस्तौतुसम्मुखौकुर्य्यात
हताउन्नतांगुली ॥ वेणुमुद्रावामदक्षकनिष्ठांगुष्ठयोगतः ॥ ५९ ॥ वामांगुष्ठोध
शेषा चक्राश्चोर्ध्वंकनिष्ठिका ॥ श्रीवत्समध्यमानामेंगुष्ठबद्धौकरौयुती ॥ ६० ॥
कनिष्ठयोर्मूलगतेतर्जन्यौभवतोयदि ॥ कौस्तुभामध्यमानामांगुष्ठाश्चोर्ध्व
मुखायुताः ॥ ६१ ॥ कनिष्ठातर्ज्जनीग्रन्थिःस्थाप्यौतिर्य्यङ्मुखौकरौ ॥ वनमा
लाद्वयामुद्रातर्जन्यंगुष्ठमुष्टिका ॥ ६२ ॥ करद्वयेनमालावत्स्पृशेदाकण्ठ
दकम् ॥ ज्ञानमुद्राहृदिन्यस्तौ तर्ज्जन्यंगुष्ठकौयुतौ ॥ ६३ ॥ वामहस्ताम्बु
वातु यदिमूर्द्धनिविन्यसेत् ॥ विश्वाख्यादक्षिणांगुष्ठवेष्टितंवाममुच्छ्रितम्
६४ ॥ अन्योन्यहस्तांगुलयस्तन्निष्ठाःस्थापयेद्धृदि ॥ प्रकोष्ठंवेष्टयित्वाच
णिबन्धौचकूर्प्परौ ॥ ६५ ॥ सम्यक्कृतंयोज्यमध्येच तर्ज्जनीभ्यांसुवेष्टयेत
योगंमध्यमयोःकृत्वाद्धावंगुष्ठौपरांगुली ॥ ६६ ॥ अन्योन्यान्तर्गतेदक्षक
न्तेखेचरीमता ॥ ६७ ॥ आद्यपर्वणिचान्योन्यंसम्यग्योज्यकनिष्ठिके ॥ अना
मिकेचतदधोमध्यपर्वणियोजयेत् ॥ ६८ ॥ तासामूर्ध्वमनामेचनखाग्रेसंनि

जयेत् ॥ सान्तरौकरमौकृत्वातर्जन्यंगुष्ठयोर्युतिः ॥ ६६ ॥ एषातुत्र्यरयोन्या ख्यामुद्राबीजाह्वयामता ॥ बीजविद्यांविनासर्वंवृथापूजाजपादिकम् ॥ मुद्रागरुडस्यहस्तकौ विपरीतौग्रथितेकनिष्ठिके ॥ तर्जन्यपिसंयुतामिथःपद तुल्येउभयांगुलीचरे ॥ ७० ॥ नृसिंहमुद्राचिबुकाधरौतुजान्वोस्तु मध्येथक रौकुलग्नौ ॥ चेत्कम्पतेव्यात्तमुखस्यजिह्वा संलेलिहानानयतेतुभीमे ॥ ७१ ॥ मुद्रानरहरेःसर्वाअंगुल्यश्चेदधोमुखाः ॥ अंगुष्ठाभ्यांचकरयोराक्रमेत कनिष्ठिके ॥ ७२ ॥ वाराहीदक्षमुत्तानं न्युब्जंवामंतदूर्ध्वतः ॥ अंगुल्यग्राणि संयोज्याधस्तात्सन्नमयेदिति ॥ ७३ ॥ हयग्रीवावामहस्तेतुल्यांगुल्यस्त्वधो मुखाः ॥ रुद्ध्वामध्यमयामध्यांनामयेदितिसाभवेत् ॥ ७४ ॥ कामाख्यासंपु टौहस्तौमध्यमेपृष्ठगेयदा ॥ तर्जन्यौमध्यमासंस्थमंगुष्ठयुगलंयदि ॥ ७५ ॥ त्रैलोक्यमोहिनीमुद्रा मूर्ध्निसांगुष्ठमुष्टिकैः ॥ चक्राद्याश्चधनुर्बाणपर्य्य न्ताश्चहरेरिमाः ॥ ७६ ॥ विधुमुद्राकरौपद्मानिभौश्लिष्टचमध्यमे ॥ अंगु ल्यौधारयेत्तस्मिंश्चन्द्राग्रेसम्प्रदर्शयेत् ॥ ७७ ॥ सौरमुद्रावामहस्तमधश्चो त्तानमूर्ध्वतः ॥ कमलाकृतिमुद्रास्याद्धस्तौभास्करप्रिये ॥ ७८ ॥ लिङ्गमुद्रा दक्षिणाख्यंवामांगुष्ठेनवेष्टयेत् ॥ वामांगुल्योदक्षिणाभिर्वेष्टयेत्साशिवप्रिया ॥ ७९ ॥ त्रिशूलाख्याभवेन्मुद्रा अंगुष्ठेनकनिष्ठिकाम् ॥ बद्ध्वाप्रसारयेच्छेषमंगु लीनांत्रयंतदा ॥ ८० ॥ मालामुद्रांगुष्ठतर्जन्यग्रंतुग्रन्थयेद्दृढम् ॥ प्रसारयेदंगु लीनांत्रयंजपसुसिद्धये ॥ ८१ ॥ मृगमुद्रातर्जनीचकनिष्ठाचोच्छ्रिताग्रका ॥ अनामिकांगुष्ठमध्याग्राणितिर्य्यग्युतानिच ॥ ८२ ॥ खट्वाङ्गमुद्रापट्टकाशि वस्यातिप्रियाभवेत् ॥ पञ्चांगुल्योदक्षिणाश्चेन्मिलिताऊर्ध्वमुच्छ्रिताः ॥ ८३ ॥ कपालिनीभवेन्मुद्रावामांसेवामहस्तकम् ॥ स्थापयित्वापात्रवच्चकुर्य्या त्साभैरवप्रिया ॥ ८४ ॥ डमरुःशिथिलांमुष्टिं कृत्वामध्यांसमुन्नताम् ॥ प्रचाल येत्कर्णपार्श्वेदर्शिताःशूलिनोमताः ॥ ८५ ॥ आसनाख्यापद्ममुद्रासूपविष्टः सुखासने ॥ स्वस्वजानुस्थितौहस्तौ कलिकाभावधोमुखौ ॥ ८६ ॥ कुशला ख्याभवेन्मुद्रा करावुन्नामितौयदि ॥ आन्दोलितौफणाकारौ स्वस्वदिग्भाग संस्थितौ ॥ ८७ ॥ वाममुष्टिंद्दढंबद्ध्वा तर्जनींसम्प्रसारयेत् ॥ आनयेद्वामकर्णे

तांमुद्रासौभाग्यदण्डिनी ॥ ८८ ॥ अंगुष्ठगुम्फितांमुष्टिं बध्नीयाद्दक्षपाणि
ना ॥ रिपुजिह्वाग्रहाख्येयंमुद्रिका शत्रुनाशिनी ॥ ८९ ॥ स्वागताख्याभवे
न्मुद्रा वितस्त्यन्तरगौकरौ ॥ उत्तानावूरुदेशस्थासन्नौनमस्तथापुमान् ॥ ९० ॥
अर्घ्यमुद्रातुसाज्ञेया हृद्योनिरिछिद्रएवच ॥ अञ्जलिस्तुयदाबद्धौमुष्टौकर्णवदा
श्रितौ ॥ ९१ ॥ पाद्यमुद्रात्वर्घ्यमुद्रासमायन्तुविशेषकः ॥ अंगुष्ठतर्ज्जनीयो
गः कर्त्तव्योहस्तयोर्द्वयोः ॥ ९२ ॥ मुद्राचमनसञ्ज्ञातुनिम्नेकरतलेयुताः ॥
हीन :कनिष्ठजास्तिस्त्रोऽगुष्ठाग्रंतर्ज्जनीयुतम् ॥९३ ॥ मधुपर्कस्यमुद्रास्यादियं
चाधोमुखायदि ॥ अनामिकांगुष्ठयोश्चेदग्रयोगःप्रजायते ॥ ९४॥ स्नानमुद्रा
दक्षहस्तमुष्टिःस्याच्चेदधोमुखी ॥ कनिष्ठयापियुक्तासास्नानेनन्तफलप्रदा ॥
९५ ॥ वस्त्रमुद्रादक्षहस्तं कृत्वोत्तानञ्चमध्यमाम् ॥ अंगुष्ठेनस्पृशेदेपादानेव
स्त्रस्यधारणे ॥९६ ॥ आभूषणस्यमुद्रास्यादियंचाधोमुखायदि॥अनामिकांगु
ष्ठयोश्चेदग्रयोगःप्रजायते ॥ ९७ ॥ स्नानमुद्रासमाख्याता कनिष्ठांगुष्ठयोग
तः ॥ उपवीतस्यकरणादिकेस्खलितधारणे ॥ ९८ ॥ गन्धस्यमुद्राविज्ञे
याथोत्तानंहस्तमाचरेत् ॥ श्रेष्ठाग्रेणकनिष्ठाग्रे स्पृशेतस्याद्गन्धधारणे ॥ ९९ ॥
पुष्पाख्याचभवेन्मुद्रा हस्तंचाधोमुखंकुरु ॥ तर्जन्यग्रेतथांगुष्ठाग्रंसंयोज्येतिपूज
ने ॥ १०० ॥ धूपमुद्रातुदेवादिधूपनेसम्प्रसारिता ॥ अंगुष्ठाग्रेणतर्ज्जन्याः
स्पृशेदग्रंचपूर्ववत् ॥ १०१ ॥ दीपमुद्राप्रोच्यतेथदीपेसर्वप्रियङ्करी ॥ ज्येष्ठाग्रे
ण स्पृशेदग्रं मध्यमायाश्चपूर्ववत् ॥ १०२ ॥ नैवेद्यमुद्रादेवानां पूर्ववत्परि
कीर्त्तिता ॥ विशेषोनामिकाग्रन्तु ज्येष्ठाग्रेणतुयोजयेत् ॥ १०३ ॥ ग्रासमुद्रास
व्यहस्तंप्रफुल्लकमलाकृतिम् ॥ दर्शयेतपञ्चवायूनामुच्यन्तेपञ्चमुद्रिकाः ॥
१०४ ॥ प्राणमुद्रामथोवक्ष्ये भोजनादौप्रदर्शयेत् ॥ कनिष्ठानामिकेसम्यगंगु
ष्ठाग्रेणयोजयेत् ॥ १०५॥ मुद्रापानस्यविज्ञेयातर्ज्जनीमध्यमायोर्युतौ ॥ एतद्दर्श
नतोवायुरोधाद्योगीविमुच्यते ॥ १०६ ॥ व्यानमुद्रातुसाज्ञेया मध्यमाना
मिकेयुते ॥ समस्तदेहगोवायुर्दृष्ट्वातांसुप्रसीदति ॥ १०७॥ उदानवायोर्मुद्रा
स्यादंगुष्ठेनसमन्विताः ॥ तर्जनीमध्यमानामास्सर्वरोगापनोदिनी ॥ १०८॥
समानवायोर्मुद्रास्याद्यदापञ्चांगुलीयुतिः ॥ प्रणवादिचतुर्थ्यन्ता नमोऽन्ता

नाममन्त्रकाः ॥ १०९ ॥ कनिष्ठांगुष्ठसंयोगेसरलंचांगुलीत्रयम् ॥ महायो न्यभिधामुद्रा सुन्दर्य्यानन्ददायिनी ॥११०॥ करौसंवलितौकृत्वाचान्योन्यास क्तकांगुली ॥ अन्तर्वलितमुत्थाप्य तर्जन्यौसरलेकृते ॥ १११ ॥ कुर्य्यान्न मस्कृतिम्पश्चाच्छक्त्युत्थापनमुद्रिका ॥ आनीताशक्तिरनयास्वस्थानेवरदा भजेत् ॥ ११२ ॥ सप्तजिह्वाख्यमुद्रातु प्रसूतांगुलिकौकरौ ॥ कनिष्ठांगुष्ठयुग लंमणिबन्धौचसंयुतौ ॥ ११३ ॥ मुद्रासूतबलेःप्रोक्तासर्वांगुलिसमागमः ॥ अ न्तश्चशुषिरेहस्ते काकतुण्डनिभेमुखे ॥ ११४ ॥ नाराचाग्रेवामहस्तं पृष्ठेदक्षं समानयेत् ॥ शनैःशनैश्चसरले तर्जन्योमुद्रिताःपराः ॥११५॥ संहाराख्या धोमुखोवामहस्तोदक्षस्योर्ध्वग्रन्थितांगुल्यएवम् ॥ पर्यस्तौबद्धौकगौस्याद्धिस गेवल्यादीनांदेवतातुष्टिकर्त्री ॥ ११६ ॥ अशनिर्नामसामुद्राऊर्ध्वास्यावाम तर्जनी ॥ अधोवक्त्रापरातत्र संयुक्तारिविनाशिनी ॥ ११७ ॥ निष्ठुरांगु लिभिश्चेन्मुद्राबद्धातुमुष्टिका ॥ तर्जन्यंगुष्ठसंयोगःपूर्णकर्मणियोजयेत् ॥ ११८ ॥ कालकर्णीभवेन्मुष्टयोरंगुष्ठावुन्नतौयदा ॥ पार्श्वयोश्चापिसंलग्नौ द्वावेवाभिमुखौतदा ॥ ११९ ॥ मुद्राविस्मयसञ्ज्ञास्याद्विस्मयावेशकारिणी ॥ दक्षिणानिविडामुष्टिर्नासिकार्पिततर्जनी ॥ १२० ॥ नादमुद्रातुतर्जन्या मु ष्टावंगुष्ठकोयदि ॥ निबद्धोयतिनां सेव्या ब्रह्माभिव्यक्तिकारिणी ॥ १२१ ॥ प्रार्थनाख्याभवेन्मुद्रा हस्तौकुर्य्याद्धृदिस्वके ॥ प्रसृतांगुलिकौद्वश्यौमिथःश्लि ष्टौचसम्मुखौ ॥ १२२ ॥ लक्ष्मीमुद्रापराह्येषासर्वसम्पत्प्रदायिनी ॥ हस्तौतुसं युतौकृत्वाप्रसृतांगुलिकौतथा ॥ १२३ ॥ अन्नाख्यमुद्रिकाहस्तौनाभिदेशेप्र सार्य्यच ॥ अधोमुखंस्पृशेत्तस्यतर्जनीभ्यांतदान्नदा ॥ १२४ ॥ दंष्ट्रामुद्रा चक्रमुद्रामादौकृत्वाप्रपीडयेत् ॥ मध्यमेतर्जनीभ्यान्तुसर्वपातकनाशिनी ॥ १२५ ॥ भवेत्पृष्ठकमुद्राचदक्षहस्तःप्रसारितः ॥ नाभ्यग्रेचान्तरिक्षेच स्थापि तश्चनिरीक्षितः ॥ १२६ ॥ गजकर्णाख्यमुद्रातु हस्तयोःपृष्ठमेलनम् ॥ कृ त्वाचोर्ध्वमुखौहस्तौग्रन्थिरंगुष्ठयोर्भवेत् ॥ १२७ ॥ वस्त्रस्फालनमुद्रातु कनिष्ठा वामतर्जनी ॥ मध्यमानामयोरग्रेमूलेपृष्ठेचतद्द्वयम् ॥ १२८ ॥ वापीमुद्रादक्ष हस्तानामार्धवामजेततः ॥ ज्येष्ठाकनिष्ठादक्षास्यात्तयोरूर्ध्वन्तुवामजे ॥१२९॥

शकटाख्याभवेन्मुद्रा तर्जनीभ्यामनामिके॥ अन्योन्यमध्ययोःपृष्ठान्मध्यापरि
निपीडिते ॥ १३० ॥ गायत्र्याअथवक्ष्यन्ते चतुर्विंशतिमुद्रिकाः ॥ जपादौद
र्शयेत्तासां देवताश्चतथाफलम् ॥ १३१ ॥ सुमुखेसंहतौहस्तावुक्तावाकुञ्चितां
गुली ॥ प्रह्लादिनीतत्रशक्तिःसुसुखानन्ददायिनी ॥ १३२ ॥ सम्पुटंपद्मकोशा
मौकरावन्योन्यसंहतौ॥तस्यशक्तिर्नित्यविश्वाविश्वस्यातिप्रियङ्करी ॥ १३३॥
विततंसंहतौहस्तावुक्तंचानायतांगुली ॥ हृदयानामतच्छक्तिःसर्वेषांहृदयंग
मा ॥ १३४ ॥ विस्तीर्णंसंहतौपाणी मिथोमुक्तांगुलीद्वयम् ॥ शक्तिस्तुविम
लातस्याःप्रभावादमलोभवेत ॥१३५॥ द्विमुखाख्याहस्तयोस्तुसम्मुखंसक्तयो
र्द्वयोः ॥ कनिष्ठयोरेवयोगःशक्तिस्तस्यास्सदाभिधा ॥ १३६ ॥ त्रिमुखाख्या
हस्तयुग्मेसुशक्तेनामिकाद्वयम् ॥ संयुक्तंशेषमंगुल्यो भिन्नाःशक्तिःप्रभावती ॥
१३७ ॥ चतुर्मुखंहस्तयुग्मं संसक्तंमध्यमायुतिः ॥ शेषांगुल्यस्तुसम्भिन्नाली
लाशक्तिःप्रकीर्त्तिता ॥ १३८ ॥ मुद्रापञ्चमुखातद्वत्तर्जन्योर्यत्रसंयुतिः ॥ अ
परांगुलयोभिन्नाःशक्तिःशान्तिश्चशान्तिकृत् ॥ १३९ ॥ भवेत्षण्मुखमुद्रास
सम्पूर्णांगुलियोजनम् ॥ कनिष्ठाद्वितयंहित्वा शक्तिर्दुर्गाप्रकीर्तिता ॥१४०॥
अधोमुखंनाममुद्रान्युब्जौहस्तौत्वधोमुखौ॥आकुञ्चिताग्रौसंयुक्तौशक्तिरस्याः
सरस्वती ॥ १४१ ॥ व्यापकाञ्जलिकंनाममुद्राहस्तौतुतादृशौ ॥ विशेषोत्र
तुचोत्तानौविश्वरूपास्तिदेवता ॥ १४२ ॥ शकटंनाममुद्रासा बद्धाग्रांगुलि
कौकरौ ॥ अधोमुखौबद्धमुष्टी विशाख्याशक्तिरत्रतु ॥ १४३ ॥यमपाशंबद्धमु
ष्टयोःकरयोर्ग्रथितेयदा ॥ तर्जन्यौतत्रसंलग्नौ वामालेपात्रदेवता ॥ १४४ ॥
ग्रन्थिताख्यान्योन्यसन्धिलग्नाश्चांगुलयोयदि ॥ उत्तानौचोच्छ्रितांगुष्ठौव
माशक्तिःसमीरिता ॥ १४५ ॥ सम्मुखोन्मुखमुद्रातुसम्बद्धाधोंगुलीकरौ ।
दक्षिणोधोमुखोवामऊर्ध्वमाप्यायिनीभवेत् ॥ १४६ ॥ विलम्बंनाममु[illegible]ासा
त्तानोन्नतिकोटिकौ ॥ यस्यांकरौतुविमलातस्याःशक्तिःप्रकीर्तिता ॥ १४७
मुष्टिकन्तुयदामुष्टी भवतोन्योन्यसंयुते ॥ उत्तानौतुकरौतत्र शक्तिःप्रोक्तात
मयी ॥ १४८ ॥ मत्स्यस्तुसम्मुखीभूतौ युक्तानामाकनिष्ठिकौ ॥ अंगुल्यश्
र्चयुक्ताग्राःशेषाःशक्तिर्हिरण्मयी ॥ १४९ ॥ कूर्मस्त्वधोमुखोवामो ग्रस्तो

त्रेणपृष्ठके ॥ समाक्रान्तस्तुतच्छक्तिःसूक्ष्मासूक्ष्मार्थसाधिका ॥ १५० ॥ वाराहीदक्षिणस्योर्ध्वं वाममुत्तानकङ्करम् ॥ स्थापयित्वाधोमुखं तन्नामयेद्धिस्वयोनिका ॥ १५१ ॥ सिंहाक्रान्तंनाममुद्रास्त्वंगुल्यःपल्लवीकृताः ॥ देव्यग्रेदर्शयेच्छक्तिर्गदारूपाप्रकीर्त्यते ॥ १५२ ॥ नजातुदर्शयेन्मुद्रांमहाजनसमागमे ॥ क्षुभ्यन्तिदेवतास्तस्य विफलन्तुकृतंभवेत् ॥ १५३ ॥ यथाबालस्याभिनयंदृष्ट्वाहृष्यन्तिमातरः ॥ तथाभक्तकृतामुद्रांदृष्ट्वाहृष्यन्तिदेवताः ॥ १५४ ॥ उत्तराम्नायसम्प्रोक्तादेवास्तुष्यन्तिपञ्चमैः ॥ छिन्नःपदार्थएकश्चेत्साधकन्तेशपन्तिच ॥ १५५ ॥ पश्चिमाम्नायदेवानांसुरापानंकृताकृतम् ॥ मचतुष्टयमिच्छन्ति तंविनाप्रशपन्तिच ॥ १५६ ॥ पूर्वाम्नायोक्तदेवानां तन्मांसञ्चकृताकृतम् ॥ आवश्यकमत्रपञ्चतंविनाप्रशपन्तिच ॥ १५७ ॥ दक्षिणाम्नायदेवानां निषिद्धंमचतुष्टयम् ॥ मेनैकेनविनातेपि प्रशपन्तिचसाधकम् ॥ १५८ ॥ तस्मान्मुद्राःशिक्षणीयाःसम्प्रदायानुसारतः ॥ सर्वत्रमोक्षंलभते मुद्राविन्नात्रसंशयः ॥ १५९ ॥ इतितेसर्वमाख्यातं सर्वतन्त्रेषुगोपितम् ॥ मुद्राणांपरमंतत्त्वंकिमन्यच्छ्रोतुमिच्छसि ॥ १६० ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेमुद्रालक्षणप्रकाशोऽष्टमः ॥ ८ ॥

---

श्रीदेव्युवाच ॥ प्रयोगात्परलोकोन परार्थीनेहसौख्यकृत् ॥ सिद्ध्यर्थीचकलौशिष्योधनार्थीगुरुरेवच ॥ १ ॥ पूजार्थिनस्तथादेवा विषयार्थीतथासनः ॥ दूरेस्मादैहिकीसिद्धिः पारकीयाकथंभवेत् ॥ २ ॥ तस्मात्कश्चिदुपायश्चेत्पुरश्चर्य्यादिकंविना ॥ परत्रेहचसिद्धिःस्याद्विनानिन्दांवदस्वतत् ॥ ३ ॥ ईश्वरउवाच ॥ आयान्तियान्तिनपुनर्भन्यन्तेसर्वजन्तुभिः ॥ तेमदंशकृताग्रन्था आगमाख्याःप्रसारिताः ॥ ४ ॥ कलेःसहस्रद्वितयंसार्द्धंदेवायदागतम् ॥ सर्वदेवगणैस्त्यक्तंतदातुपृथिवीतलम् ॥ ५ ॥ वेदोनारायणःसाक्षात्संस्थास्यत्ययुगावधि ॥ आगमैर्भासितेदेशे सोप्यगम्योभविष्यति ॥ ६ ॥ उद्धारायचसाधूनां महाकालाज्ञयामया ॥ कथितंचिरजीविभ्यःपार्थिवंलिङ्गपूजनम् ॥ ७ ॥ तद्विधिंसंप्रवक्ष्यामि देवाःशृण्वन्तुसादरम् ॥ इहलोकेपरत्रापिसि

द्भिः करतलेस्थिता ॥ ८ ॥ तत्रपार्थिवलिङ्गानांपूजनेस्यादयंविधिः ॥ स्नात्वानित्यंविधायादौगच्छेच्छुद्धांभुवंसुधीः ॥ ९ ॥ स्थानाष्टकेस्थितायामृत्सा चसर्वार्थसिद्धिदा ॥ शमीगर्भाश्वत्थमूले नदीकूलेचनिर्जने ॥ १० ॥ पर्वताग्रेच तीर्थेच गोष्ठेवातुलसीवने ॥ वटाधस्तात्तत्रभूमिं मन्त्रयेत्प्रार्थयेदिति ॥ ११ ॥ ह्रींपृथिव्यैनमइतिमन्त्रःप्रोक्तःषडक्षरः ॥ अनेनपूजयित्वातुधरणींप्रार्थयेदिति ॥ १२ ॥ सर्वाधाराधरात्वंहि पाहिमांमृत्तिकामिमाम् ॥ ग्रहीष्यामिप्रसन्नात्वं लिङ्गार्थंभवमेसदा ॥ १३ ॥ ततोमृदमुपादायसम्यग्भिःशर्करांचरेत् ॥ पात्रेनिदध्यात्संशुद्धेप्रत्यहंपूजनायताम् ॥ १४ ॥ सद्दिनेसद्गुरोर्वाथसूर्य्याद्वादेवतान्तरात् ॥ गृह्णीयात्सप्तपूजायास्तथागुहगणेशयोः ॥ १५ ॥ मृत्तिकाहरणेतारोहरायनमइत्ययम् ॥ तारोमहेश्वरायेतिनमःसंघट्टनंभवेत् ॥ १६ ॥ तारोङेन्तःशूलपाणिर्नमःप्रस्थापनेभवेत् ॥ वस्त्राद्याच्छादितेपीठेॐपिनाकधृजेनमः ॥ १७ ॥ स्थापयेदितिमन्त्रेण शिवाकान्तंशिवप्रदम् ॥ कामनायास्तुभेदेन तत्रध्यायेच्छिवंप्रभुम् ॥ १८ ॥ ॐपशुपतयेनमः स्नापयेदितिमन्त्रतः ॥ ॐशिवायनमइतिपूज्यःपञ्चोपचारकैः ॥ १९ ॥ ॐमहादेवायनमोमन्त्रेणेतिविसर्जयेत् ॥ ह्रींगंग्लौंगणपतयेग्लौंगंह्रींभवाक्षरः ॥ २० ॥ ऐंहुंक्षेंक्लींकुमारायनमोन्तःस्याद्दशाक्षरः ॥ इमान्मनून्गृहीत्वातुजपेदष्टसहस्रकम् ॥ २१ ॥ दत्त्वाधूपंहविष्यान्नाशुतन्मन्त्रसिद्धये ॥ अथार्चनंशुभेवक्ष्येप्रारमेतेष्टसिद्धये ॥ कृतनित्यक्रियःशुद्धःप्रादायार्घ्यंविवस्वते ॥ २२ ॥ मृदमादायतोयञ्चवंबीजेनाभिमन्त्रयेत् ॥ आसिच्यपिण्डयेत्स्वेष्टमानंपात्रेनिधापयेत् ॥ २३ ॥ ततःकालमनुस्मृत्यकामनामपिहृद्गताम् ॥ लिङ्गानिपार्थिवानीहपूजयेमुकसंख्यया ॥ २४ ॥ सङ्कल्प्यैवंमृदःपिण्डादादायाल्पांमृदंसुधीः ॥ गणेश्वरस्यमन्त्रेण कुर्य्याद्वारगणेश्वरम् ॥ २५ ॥ फलाभयलसत्पाणिंतुन्दिलंचोन्दुरस्थितम्[1] ॥ निर्माय स्थापयेत्पीठेततोविप्रस्समाचरेत् ॥ २६ ॥ न्यासंरुद्रस्यविधिवत्सम्पुटीकरणान्वितम् ॥ अपिप्राणाग्न्यूणुन्यासंगोप्यंपार्थिवपूजने ॥ २७ ॥ अस्यश्रीपा

---

१ मूशपर सवार ॥

र्थिवाख्यस्यविद्याचिन्तामणेर्मनोः ॥ निग्रहानुग्रहंकर्त्ता ब्रह्मानिगदितोमुनिः ॥ २८ ॥ देवतास्यात्कामदुघागायत्रीछन्दईरितम् ॥ ॐह्रींह्रौंबीजंह्रींशक्तिर्नमःकीलकमुच्यते ॥ २९ ॥ अभीप्सितार्थसिद्ध्यर्थे नियोगोलिङ्गपूजने॥ ॐह्रींह्रौंबीजपूर्वांस्तु न्यासेमन्त्रान्प्रविन्यसेत् ॥ ३० ॥ शिवायेतिपरंचोन्तेत तोङ्गादिसमुच्चरेत् ॥ सर्वज्ञायप्रथमतःसर्वतृप्तायचोत्तरम् ॥ ३१ ॥ नित्यमलुप्तशक्तयेसर्वज्ञानशक्तयेच ॥ नित्यानन्दशक्तयेचानन्तशक्तिशिवायच ॥ ३२ ॥ कृत्वाचांगुलिविन्यासं विन्यसेद्धृदयादिषु।केवलःश्रोत्रियस्तत्रसद्योजातेनमृत्तिकाम् ॥ ३३ ॥ गृहीत्वावामदेवेन जलंदत्त्वाविमर्दयेत् ॥ लिङ्गंकुर्य्यादघोरेणार्चयेत्तत्पुरुषेणच ॥ ३४ ॥ संस्थाप्यरुद्रसूक्तेन ईशानेनविसर्जयेत् ॥ आदौकृत्वागणेशानंपीठमध्येनिवेशयेत् ॥ ३५ ॥ पश्चाल्लिङ्गानिकुर्वीतयथेष्टानिसमानिच ॥ अंगुष्ठमानादधिकंवितस्त्यवधिसुन्दरम् ॥ ३६ ॥ पार्थिवंरचयेल्लिङ्गंनन्यूनंनाधिकंक्वचित् ॥ पक्वजम्बूफलाकारं सर्वकामसमृद्धिदम् ॥ ३७॥अतिपुष्टेतुदारिद्र्यं चिपिटेरोगसम्भवः ॥ मानाधिकेवियोगःस्यात्स्वल्पेसिद्धिर्नजायते ॥ ३८ ॥ द्विखण्डेतुभवेन्मृत्युर्वियोनौनसुखंभवेत् ॥ अवाग्दिष्टमृदाकुर्य्यात्कुमारन्तस्यमन्त्रतः ॥ ३९ ॥ स्थापयेल्लिङ्गपर्य्यन्तेस्वमन्त्रेणार्चयेच्चतम् ॥ अर्चयन्पार्थिवंलिङ्गंयथोक्तफलभाग्भवेत् ॥ ४० ॥ तारोह्रौंह्रींजूंसइतिपञ्चबीजादिकैस्तुतैः॥ तान्त्रिकोमासमन्त्रैस्तुकृतार्थीशिवमर्चयेत्॥४१॥ प्रासादबीजपूर्वैस्तु वाममार्गीसमर्चयेत्॥ पराप्रासादबीजाद्यैःपूजयेत्कौलिकैस्तुतैः ॥ ४२ ॥ आवाहनस्यसमयईदृशंशिवमागतम् ॥ लिङ्गेप्रतिष्ठितंध्यासे

---

१ ॐ ब्रह्मणेऋषयेनमः शिरसि, ॐ गायत्रीछन्दसेनमोमुखे, ॐ कामदुघायैदेवतायैनमोहृदये, ॐ ह्रींह्रौंबीजायनमोगुह्ये, ॐ ह्रींशक्तयेनमःपादयोः, ॐ नमःकीलकायनमोनाभौ २ ॐ ह्रींह्रौं, इन तीन बीजों को न्यासमन्त्रों के पहले जोड़लेना ॐ शिवाय सर्वज्ञायअंगुष्ठाभ्यांनमः, ॐ शिवायसर्वतृप्तायतर्जनीभ्यांनमः, ॐ शिवायनित्यमलुप्तशक्तयेमध्यमाभ्यांनमः, ॐ शिवायसर्वज्ञानशक्तये अनामिकाभ्यांनमः, ॐ शिवायनित्यानन्दशक्तयेकनिष्ठिकाभ्यांनमः, ॐ शिवायानन्तशक्तिशिवायकरतलकरपृष्ठाभ्यांनमः,और इन मन्त्रों सेही हृदयादिन्यास करलेना ३ सद्योजातादि पांच मन्त्र कई जगह में प्रथम लिखा है इस से यहांपर नहीं लिखते हैं ४ ह्रौं, इति प्रासादबीजम् ॥

त्कामनाभेदनात्तुतत् ॥ ४३ ॥ भवेन्नानाविधंध्यानंयोनिकामंप्रपूजयेत् ॥ तत्रध्यानमिदंज्ञेयं नोक्तंत्रायत्रतत्रच ॥ ४४ ॥ अथात्मानंशिवात्मानं पञ्चास्यंचिन्तयेद्बुधः ॥ त्रिलोचनंचतुर्बाहुं सर्वाभरणभूषितम् ॥ ४५ ॥ नीलग्रीवंशशाङ्काङ्कंशुद्धस्फटिकसन्निभम् ॥ व्याघ्रचर्म्मोत्तरीयंच नागयज्ञोप वीतकम् ॥ ४६ ॥ कमण्डलुधरंदेवमक्षमालान्वितंप्रभुम् ॥ वरदाभयहस्तंच नमज्जनवरप्रदम् ॥ ४७ ॥ वृषपृष्ठसमारूढमुमादेहार्धधारिणम् ॥ जटिलंक पिलंदन्तनखाभिद्योतकारिणम् ॥ ४८ ॥ अमृतेनाप्लुतंदिव्यं दिव्यभोगसम न्वितम् ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् ॥ ४९ ॥ नित्यंचशाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥ सर्वव्यापिनमीशानं रुद्रंवैविश्वरूपिणम् ॥ ५० ॥ एवंध्यात्वाद्विजःसम्यक् ततोयजनमारभेत् ॥ आराधितोमनुष्यैस्त्वंसिद्धैर्दे वासुरादिभिः ॥ ५१ ॥ आराधयामिभक्त्यात्वांमांगृहाणमहेश्वर ॥ स्वामि न्सर्वजगन्नाथयावत्पूजावसानकम् ॥ ५२ ॥ तावत्त्वंप्रीतिभावेन लिङ्गेस्मि न्सन्निधौभव ॥ इतिसम्प्रार्थ्यदेवेशं पार्थिवंपूजयेत्ततः ॥ ५३ ॥ एकैकंपूजये ल्लिङ्गमेकैकंचविसर्जयेत् ॥ अन्तेपूज्यःकार्त्तिकेयःप्रोक्तापूजेयमुत्तमा॥५४॥ सर्वेषामेवलिङ्गानां शीघ्रमेकत्रपूजनात्॥ प्रोक्तापूजाविधिज्ञैःसापूजेयंमध्यमा तदा ॥ ५५ ॥ प्रत्येकमाचरेद्ध्यानङ्गन्धंपुष्पंपृथक्पृथक् ॥ धूपदीपनिवेद्या दि यथांशेननिवेदयेत् ॥ ५६ ॥ प्रागादिवामवर्तेन दिक्ष्वष्टौपरिपूजयेत् ॥ शर्वंभवंरुद्रमुग्रंभीमंपशुपतिंतथा ॥ ५७ ॥ महादेवंतथेशानंक्रमात्क्षित्यादि मूर्तिकान् ॥ क्षित्यपतेजोनिलाकाशयजमानेन्दुभास्कराः ॥ ५८ ॥ क्षित्यादयः स्युःशर्वाद्यास्ततइन्द्रादिकान्यजेत्॥ धूपदीपनिवेद्यादिनमस्कारप्रदक्षिणाः॥ ५९ ॥ ततोजपंप्रकुर्वीतॐह्रौंह्रींह्रंसमुच्चरेत् ॥ ॐनमश्चशिवोऽन्तःप्रसन्नाये दमुच्चरेत् ॥ ६० ॥ पारिजातायस्वाहेति एकविंशतिवर्णकः ॥ पूजान्तेष्टोत्तर

१ ॐशर्वायक्षितिमूर्तयेनमःपूर्वे, ॐभवायजलमूर्तयेनमःईशानकोणे,ॐरुद्रायाग्निमूर्तयेनम उत्तरे, ॐउग्रायवायुमूर्तयेनमः वायव्यकोणे, ॐभीमायाकाशमूर्तयेनमः पश्चिमे, ॐपशुपत यजमाननमूर्त्तयेनमःनैर्ऋत्यकोणे, ॐ महादेवायेन्दुमूर्त्तये नमःदक्षिणे, ॐ ईशानायसूर्यमू येनमःआग्नेयकोणे, इसरीतिसे आठ दिशाओंमें पूजाकरे २ इन्द्रादिदशदिक्पालोंकीपूजा ३ ॐ ह्रौंह्रींह्रूं ॐ नमःशिवायप्रसन्नाय पारिजातायस्वाहा इस इक्कीसअक्षरकेमंत्रका जप करे ॥

शतंजपेन्मन्त्रमनन्यधीः ॥ ६१ ॥ बिल्वंवाबिल्वपत्रंवाघृताक्तंसतिलंहुनेत् ॥ एकादशाहुतीःपश्चात्प्रणमेद्दण्डवत्क्षितौ ॥ ६२ ॥ प्रणवादिचतुर्थ्यन्तान न्तदेवनमोन्वितैः ॥ षष्ठीयुक्तंचतन्नाम पत्नींङेन्तांनमोन्विताम् ॥ ६३ ॥ पुनश्चतर्पणंकार्य्यं तादृशैरेवनामभिः ॥ द्वितीयान्तैस्तर्प्पयामिबिल्वपत्रैर्ज लाक्षतैः ॥ ६४ ॥ भवःशर्वस्तथेशानस्तुर्य्यःपशुपतिर्मतः ॥ रुद्रोग्रभीमम हतस्त्वष्टौतेपरिकीर्तिताः ॥ ६५ ॥ दम्पतीभोजयेन्नित्यं पार्वतीशमनीषया॥ मासैवंभोजयेदेकमभावेवेदवित्तमम् ॥ ६६ ॥ एवमर्चयतःपुंसःपार्थिवंलिङ्ग मुत्तमम् ॥ मासमात्रेणसिद्धिस्स्यान्नात्रकार्य्याविचारणा ॥ ६७ ॥ अकृत्वा पार्थिवंलिङ्गं योन्यदेवंप्रपूजयेत् ॥ वृथाभवतिसापूजास्नानदानादिकाःक्रि याः ॥ ६८ ॥ काम्यकर्म्मण्ययंकार्य्यो विधिःशृणुविशेषकम् ॥ तण्डुलो द्भवपिष्टेन विद्यार्थीतुसहस्रकम् ॥ ६९ ॥ द्वयोःपूजनमेकत्र मासमेकंकरोति चेत् ॥ अवश्यंलभतेविद्यांध्यानमस्यनिरूप्यते ॥ ७० ॥ अनेनैवविधानेन पूजयेन्नवनीतजम् ॥ भवेद्विद्याचसम्पदिचतुर्दिक्षुतथायशः ॥ ७१ ॥ वन्देम हेशंसुरसिद्धसेव्यं विद्याप्रदंपुस्तकदत्तदृष्टिम् ॥ भक्तैर्जनैःपूजितपादपद्मं ध्या येसदाकामप्रदंप्रभुंतम् ॥ ७२ ॥ इत्थंश्वेतागुरोर्लिङ्गं पूजितंबुद्धिवृद्धिकृत् ॥ एवंकृष्णागुरोर्लिङ्गं पूजितंधारणप्रदम् ॥ ७३ ॥ चणकोद्भवपिष्टस्यप्राग्व ल्लिङ्गंतुबुद्धिकृत् ॥ प्राग्वद्व्रीहिमयंलिङ्गं कृत्वाहन्यात्स्खलद्गिरम् ॥ ७४ ॥ विद्याकामैश्चिन्तनीयः परशुंहरिणंवरम् ॥ ज्ञानमुद्रांदधद्धस्तैर्वटमूलमुपाश्रि तः ॥ ७५ ॥ योर्चयेत्प्रत्यहंपञ्चशतान्येकंपृथक्पृथक् ॥ पार्थिवानितुलि ङ्गानिमासात्सासर्वतोमुखी ॥ ७६ ॥ दक्षाङ्कस्थंगजपतिमुखंप्रामृजन्दक्षदो ष्णावामोरुस्थागपतितनयाङ्कगुहंचापरेण ॥ दृष्टाभीतीपरिकरयुगेधारयन्निन्दु कान्तिस्त्व्यादस्मांस्त्रिभुवननतोनीलकण्ठस्त्रिनेत्रः ॥ ७७ ॥ पुंसोर्विरुद्धयोस्स

१ ॐअनन्तदेवायनमः २ ॐअनन्तदेवस्यपत्न्यैनमः ३ ॐभवंतर्प्पयामि, भवपत्नींतर्प्पया मि, ॐ शर्वंतर्पयामि, शर्वपत्नींतर्पयामि,ॐ ईशानंतर्पयामि, ईशानपत्नींतर्पयामि, ॐपशुपतिं तर्पयामि, पशुपतिपत्नींतर्पयामि, ॐरुद्रंतर्पयामि, रुद्रपत्नींतर्पयामि, ॐउग्रंतर्पयामि, उग्रप त्नींतर्पयामि, ॐभीमंतर्पयामि, भीमपत्नींतर्पयामि, ॐमहान्तंतर्पयामि, महत्पत्नींतर्पयामि, इस रीति से तर्पणकरे ४ सुफेद अगर ॥

न्यौकुर्यादयुतसङ्ख्यया ॥ नदीतीरद्वयानीतमृदा तानिच पूजयेत् ॥ ७८ ॥ तत्रध्येयोहिहरिणाशङ्खपद्मादिशूलभृत् ॥ इन्द्रनीलशरच्चन्द्रनिभोभूषणपुङ्गवान् ॥ ७९ ॥ दम्पत्योरभियानार्थमर्धनारीश्वरःस्मृतः ॥ पीयूषपूर्णकलशं दधत्पाशांकुशावपि ॥ ८० ॥ पुत्रार्थीसार्धसाहस्रं कुर्य्यात्तण्डुलपिष्टजम् ॥ पार्थिवान्यथवाकुर्य्यादर्धलक्षमितानितु ॥ ८१ ॥ दक्षाङ्कस्थमितिध्यानं पूजनंच पृथक्पृथक् ॥ दधिभक्तस्तुनैवेद्ये पैष्टेनात्रयथेच्छया ॥ ८२ ॥ आढकीपिष्टसम्भूतं कान्तार्थीशतपञ्चकम् ॥ पृथग्द्वयंद्वयंपूज्यंध्यानमत्रनिरूप्यते ॥८३॥ कर्पूरगौरंकरुणावतारंसंसारसारंभुजगेन्द्रहारम् ॥ सदारमन्तंहृदयारविन्देभवंभवानीसहितंनमामि ॥ ८४ ॥ मारणार्थंसप्तशतंलिङ्गं केशास्थिसम्भवम् ॥ अथवालोहलिङ्गानितुषजान्यथवापिच ॥ ८५ ॥ सहस्रमिक्षुदण्डस्य लिङ्गान्युच्चाटनेयजेत् ॥ श्मशानमृत्तिकायास्तु विद्वेषेयुतमाचरेत् ॥ ८६ ॥ पूजयेत्कार्य्यवशतोलक्षावधिसहस्रतः ॥ उच्चाटेमारणेद्वेषे ध्यातव्यःपुनरीदृशः ॥ ८७ ॥ कालीहस्ताम्बुजालम्बःशूलप्रोतद्विषच्चर्यः ॥ मुण्डमालालसत्कण्ठोरौद्रवित्रासिताखिलः ॥ ८८ ॥ विनाज्ञानेनमोक्षस्तु नराणांपरिजायते ॥ तदातुकोटिलिङ्गानि पूजयेद्ध्यानमुच्यते ॥ ८९ ॥ योयोगमायापहृतंचपुंसां ज्ञानंविधत्तेखिलवस्तुनिष्ठम् ॥ तंविश्वनाथंकलिकिल्बिषघ्नंध्यायेशिवालिङ्गितहृष्टदेहम् ॥ ९० ॥ भोगार्थीलक्षमेकन्तुकुर्य्यात्पुष्पमयानितु ॥ दिव्यान्भोगानवाप्नोतिध्यानमत्रनिरूप्यते ॥ ९१ ॥ वन्देमहेशंसुरसिद्धसेवितं कल्पद्रुमारण्यगतंप्रसन्नम् ॥ पर्य्यङ्कगंशैलसुतासमेतंदेवाङ्गनागीतसुनृत्यहृष्टम् ॥ ९२॥निर्विघ्नकाशीवासार्थं लोकद्वयजिगीषया ॥ लिङ्गान्ययुतसङ्ख्यानिधात्रीफलभवानितु ॥ ९३ ॥ सहस्रमात्रंपित्तल्यायोलिङ्गानिप्रपूजयेत् ॥ यथेष्टंलभतेभूमिंत्रिसन्ध्यंत्वेकमेववा ॥ ९४ ॥ सहस्रत्रितयंरूपकामोगोरोचनोद्भवम् ॥ तावत्सङ्ख्यंकान्तिकामःकाश्मीरीसम्भवंजयेत् ॥ ९५ ॥ मधूकपुष्पोद्भवंलिङ्गं वसन्तेशतमर्चयेत् ॥ प्रत्यहंजायतेकामीस्त्रियांतुध्यानमत्रतु ॥ ९६ ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गंपरशुमृग

१ अरहरि २ फरहा ३ वैरी ४ समूह ५ शब्द ६ केशर ७ महुवाकाफूल ॥

वराभीतिहस्तंप्रसन्नम् ॥ पद्मासीनंसमन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंवि
श्वाद्यंविश्ववन्द्यंनिखिलभयहरंपञ्चवक्त्रंत्रिनेत्रम् ॥ ९७ ॥ तीर्थार्थीद्विसह
स्राणिसम्यग्लिङ्गानिपूजयेत् ॥ पृथक्पृथग्बिल्वदलैस्तत्रध्यानमुदीर्य्यते ॥
९८ ॥ विजितमदनदर्प्पःसर्प्पराजोपवीती धवलवृषभगामीयामिनीनाथमू
र्द्धा ॥ विधिहरितपनाद्यैःपूजितःपूजनीयोदिशतुगिरिसुतायावल्लभोनोवि
भूतीः ॥ ९९ ॥ यक्षकर्दमजंलिङ्गंसहस्रंप्रीतिवर्धनम् ॥ सहस्रपञ्चकंकुर्य्या
द्गुडजंप्रीतिवृद्धये ॥ १०० ॥ लक्षन्तुगुडलिङ्गानांपूजनात्पार्थिवोभवेत् ॥
स्त्रीसहस्रंपूजयित्वाभर्तुःप्रियतराभवेत् ॥ १०१ ॥ नवनीतस्यलिङ्गानिसम्पूज्ये
ष्टमवाप्नुयात् ॥ भस्मनोगोमयस्यापिवालुकायास्तथाफलम् ॥ १०२ ॥ त्रि
सहस्रंसुहृत्कामीमासिमासिसमर्चयेत् ॥ वर्षैकंनिश्चलमनाजगन्मित्रःसजा
यते ॥ १०३ ॥ प्रत्यहंयस्त्वष्टशतंमासमात्रंसमर्चयेत् ॥ सशास्त्राभ्यसनादेव
गुरुतोप्यधिकोभवेत् ॥ १०४ ॥ प्रातर्गोमयलिङ्गानिनित्यंयस्त्रीणिपूजयेत् ॥
बृहतीबिल्वजैःपत्रैर्नैवेद्यंगुडमर्प्पयेत् ॥ १०५ ॥ एवंमासत्रयंकुर्वन्ननल्पंलभ
तेधनम् ॥ एकादशैवलिङ्गानिगोमयस्यैवयोजयेत् ॥ १०६ ॥ प्रातर्मध्याह्न
योःसायंनिशीथेप्रतिवासरम् ॥ ससर्वाःसम्पदोयायात्षण्मासानेवमाचरेत् ॥
१०७ ॥ यत्रकुत्रापिमोहार्थं चौराणांवापिशुल्किनाम् ॥ दुर्भूपानामष्टशतंत्रि
पक्षंनित्यमर्चयेत् ॥ १०८ ॥ योयजेत्पिचुमन्दोत्थैःपत्रैर्गोमयजंशिवम् ॥ क्रु
द्धंमहेश्वरंध्यायेत्सपराजयतेरिपून् ॥ १०९ ॥ हरिद्रापिष्टजंलिङ्गंसहस्रंयःप्रपूज
येत् ॥ स्तम्भयेत्ससहस्राणांपञ्चकेनमहीपतिम् ॥ ११० ॥ नित्यंपञ्चशतंकु
र्य्यान्मासंनिगडमोचनम् ॥ दुर्गनिर्मुक्तिकामस्तुकुर्य्यात्पञ्चसहस्रकम् ॥ १११ ॥
कारागृहादिमुक्त्यर्थमयुतंकारयेत्सुधीः ॥ महादुर्गनिबद्धस्तुषण्मासान्मोक्ष
माप्नुयात् ॥ ११२ ॥ पूजयायुतलिङ्गानांमहाराजभयंहरेत् ॥ प्रत्यहंवापञ्च
शतंपूजयेच्चत्रिपक्षकम् ॥ ११३ ॥ शान्तःप्रत्यहंयोमासमेकंसमर्चयेत् ॥ तस्य
चौरभयंनास्ति सुखेनायातिदेशतः ॥ ११४ ॥ डाकिन्यादिभयेसप्तसहस्रंवा

---

१ कुंकुमागुरुकस्तूरीकर्पूरंचन्दनंतथा । महासुगन्धमित्युक्तं नामतोयक्षकर्दमः ॥ इति धन्वन्तरिः २ नींबकी पाती ॥

थनित्यशः ॥ षरमासंपञ्चशतकंयोर्चयेत्तुतदन्तकः ॥ ११५ ॥ सहस्रपञ्चकं मासियोर्चयेद्वर्षपञ्चकम् ॥ पूर्वजन्मार्जिताद्वापि दारिद्र्यात्परिमुच्यते ॥ ११६ ॥ एकादशयजेन्नित्यंशालिपिष्टमयानिच ॥ लिङ्गानिमासमात्रेण सकलंकल्मषंदहेत् ॥ ११७ ॥ यःकृष्णैश्चतिलैस्सम्यग्लिङ्गंकृत्वार्चयेन्नरः ॥ वर्षत्रयंतस्यसर्वं पापनाशःप्रजायते ॥ ११८ ॥ शिशिरेसर्वपुष्पोत्थं लिङ्गंयोर्चयेन्नरः ॥ निष्पापःस्यात्रिवर्षंवापूजयेत्स्फाटिकंतथा ॥ ११९ ॥ बालवैधव्ययोगस्य नाशार्थमयुतत्रयम् ॥ लिङ्गानामयुतेनैव कन्यकासत्पतिंलभेत् ॥ १२० ॥ यस्त्वेकादशलिङ्गानि रजतोत्थानिपूजयेत् ॥ प्रत्यहंतंसर्वगुणाजायन्तेसमुपस्थिताः ॥ १२१ ॥ लिङ्गान्ययुतसङ्ख्यानितिलपिष्टस्ययोर्चयेत् ॥ प्रत्यहंवारुद्रसङ्ख्यंवर्षाद्ग्रामपतिर्भवेत् ॥ १२२ ॥ ब्रह्मस्वपरिहारार्थं सौवर्णलिङ्गमर्चयेत् ॥ त्रिसन्ध्यंनक्तभोजीचरुद्रसूक्तपरायणः ॥ १२३ ॥ लवणोद्भवलिङ्गानियोयुतंचपृथक्पृथक् ॥ पूजयेत्तस्यसौभाग्यं निर्धनस्यापिवर्धते ॥ १२४ ॥ यस्त्वन्नस्यशिवंकृत्वाऋतुमेकंप्रपूजयेत् ॥ शतमेकंप्रत्यहंचेदन्नंक्षेत्रेभवेद्बहु ॥ १२५ ॥ अयुतंशर्करालिङ्गं वर्षाकालेथवापुनः ॥ धत्तूरकुसुमोत्थानि लिङ्गान्येकादशार्चयेत् ॥ १२६ ॥ यवपिष्टोद्भवान्येवलिङ्गानिलवणस्य वा ॥ कृत्वाचायुतसङ्ख्यानिवशीकुर्य्याज्जगत्त्रयम् ॥ १२७ ॥ पृथक्शतत्रयंयस्तुगोमयोत्थानिपूजयेत् ॥ क्षुद्ररोगविनाशःस्यात्षरमासाच्चमहागदाः ॥ १२८ ॥ फलंनजायतेहष्ट्वायस्यकस्यापिकर्म्मणः ॥ फललिङ्गानिपूज्यानितेन चायुतसङ्ख्यया ॥ १२९ ॥ दूर्वायाश्चगुडूच्यावायुतंलिङ्गानियोर्चयेत् ॥ तस्याल्पमृत्युनाशःस्यात्तथानीवारपिष्टजात् ॥ १३० ॥ इन्द्रनीलस्ययोलिङ्गं मासषट्कंप्रपूजयेत् ॥ अथवाताम्रजंलिङ्गंतस्यसिद्ध्यतिपौष्टिकम् ॥ १३१ ॥ स्फटिकस्यतुयल्लिङ्गं सयोगेश्वरउच्यते ॥ लक्षस्यपूजनात्तस्य बहुस्त्रामित्वमाप्नुयात् ॥ १३२ ॥ पितृगेहादिमोक्षार्थमथवापितृमुक्तये ॥ रजतस्ययल्लिङ्गमयुतंपरिपूजयेत् ॥ १३३ ॥ अयुतंस्वर्णलिङ्गस्यपूजनंप्रकरोतियः ॥ ससत्यलोकमाप्नोति सङ्कल्पेनात्रसंशयः ॥ १३४ ॥ नागस्यवात्रयश्चायुष्क

१ सीसेका ॥

मः कांस्यस्यकीर्तये ॥ देहसौगन्धलाभायगन्धकोत्थंसमर्चयेत् ॥ १३५ ॥ आद्यकर्षणजंकाष्ठजातमेकन्तुनिर्धनः ॥ सहस्रंपूजयेद्यस्तुदारिद्र्यात्प्रतिमुच्यते ॥ १३६ ॥ कर्पूरजंशक्तिकामो गोर्थगोधूमपिष्टजम् ॥ मुद्गपिष्टान्मुदोन्नत्यंलिङ्गंपूज्यंत्रयंद्विजैः ॥ १३७ ॥ कस्तूरीसम्भवंनित्यंसहस्रंगन्धकामुकः ॥ माषपिष्टमयंलिङ्गं नित्यपिष्टान्नसिद्धिदम् ॥ १३८ ॥ यवधान्यमयंलिङ्गंयमलोकनिवारणम् ॥ प्रियंगुपिष्टजंलिङ्गं प्रियदंसर्वदेहिनाम् ॥ १३९ ॥ यःकरोतितिलैःश्वेतैःश्वेतद्वीपमहीपतिः ॥ येस्ययच्चप्रियंतस्यलिङ्गंकृत्वातदाप्नुयात् ॥ १४० ॥ ग्रीष्मेतुमल्लिकापुष्पसम्भवानिसहस्रतः ॥ अयुतंपूजयेद्यस्तु तस्यस्याद्विगुणाकृतिः ॥ १४१ ॥ नीलोत्पलमयंलिङ्गं कृत्वाशरदिमानवः ॥ यस्यकस्यापिकार्यस्यसिद्धिंप्राप्नोत्यसंशयः ॥ १४२ ॥ हेमन्तेजातिकुसुमैर्लिङ्गंकृत्वामनोहरम् ॥ भक्त्यासमर्च्यमतिमाञ्छिवेनसहमोदते ॥ १४३ ॥ कोमलेपुतुलिङ्गेषुपार्थिवंश्रेष्ठमुच्यते ॥ कठिनेषुतुपाषाणं पाषाणात्स्फाटिकंपरम् ॥ १४४ ॥ स्फाटिकात्पद्मरागंच काश्मीरंपद्मरागतः ॥ काश्मीरात्पुष्परागोत्थमिन्द्रनीलोद्भवंततः ॥ १४५ ॥ इन्द्रनीलात्तुगोमेदं गोमेदाद्विद्रुमोद्भवम् ॥ विद्रुमान्मौक्तिकंश्रेष्ठंतस्माच्छ्रेष्ठंतुराजतम् ॥ १४६ ॥ हैरण्यंराजताच्छ्रेष्ठंहैरण्याद्धीरकंपरम् ॥ हीरकात्पारदंश्रेष्ठंबाणलिङ्गंततःपरम् ॥ १४७ ॥ नर्म्मदाजलमध्यस्थं बाणलिङ्गमितिस्मृतम् ॥ बाणासुरार्चितंलिङ्गंबाणलिङ्गमितीरितम् ॥ १४८ ॥ बाणलिङ्गेस्वयम्भूतेचन्द्रकान्तादृतेसिते ॥ चान्द्रायणशतंकार्य्यं शम्भोर्नैवेद्यभक्षणात् ॥ १४९ ॥ ग्राह्याग्राह्यविभागोयं बाणलिङ्गेन विद्यते ॥ तदर्पितंजलंचान्नं ग्राह्यंप्रासादसञ्ज्ञया ॥ १५० ॥ शिवनाममयंलि

---

१ कांकुनि धान्यविशेष २ यहांपर यह जानने योग्य है कि श्रीमहादेवजी तन्त्र शास्त्र के आचार्य्य हैं और जीवों की मुक्ति के लिये शास्त्रका उपदेश है विना परमेश्वर में भक्ति हुये मुक्ति होतीही नहीं और जीव संसारसुख छोड़ भक्ति में प्रवृत्त होते नहीं इससे उनके परम कल्याण के लिये लोकसुख कार्य्यसिद्धि आदिकों का लाभ दिखलाकर मुक्ति के देनेवाली पूजारूप भक्ति की प्रशंसा करते हैं जैसे माता पिता बालकों को लड्डुओं का लालच दिखलाकर उनके फोड़ा आदि दुःख रोगों को कटाडालते हैं ऐसेही यहां समझ लीजिये ॥

ङ्गंसदापूज्यंमहर्षिभिः ॥ यतश्चसर्वलिङ्गेभ्यस्तद्धिपूज्यतमंमतम् ॥ १५१ ॥ चतुरंगुलमुच्छ्रायंरम्यंवेदिकयायुतम् ॥ उत्तमंलिङ्गमाख्यातं पञ्चसूत्रैःसु साधितम् ॥ १५२ ॥ तदर्धमधमंप्रोक्तं तदर्धमवरंस्मृतम् ॥ तस्मान्न्यूनंपूज नीयंनकदापिनसत्फलम् ॥ १५३ ॥ रुद्राक्षंशिवलिङ्गंचस्थूलंस्थूलंप्रशस्यते॥ शालग्रामोनार्म्मदश्च सूक्ष्मसूक्ष्मोविशिष्यते ॥ १५४ ॥ ब्राह्मणःक्षत्रियो वैश्यः शूद्रोवाप्यनुलोमजः ॥ पूजयेत्सततंलिङ्गं तत्तन्मन्त्रेणसादरम् ॥ १५५ ॥ विप्राणांवैदिकेनैव मन्त्रेणाराधनंवरम् ॥ तन्त्रोक्तदीक्षितानांच तन्त्रोक्तेनविधानतः ॥ १५६ ॥ स्मृतमाराधनंशम्भोर्नचावैदिकवर्त्मना ॥ दधीचिगौतमादीनां शापनिर्दग्धचेतसाम् ॥ १५७ ॥ नजायतेतथाश्र द्धा पूतावैदिककर्म्मणि ॥ योवैदिकमनादृत्यस्मार्तकर्म्मतथैवच ॥ १५८ ॥ अन्यत्समाचरेन्मर्त्यो नसकर्म्मफलंलभेत् ॥ बहवःसिद्धिमेष्यन्ति कलौपार्थि वलिङ्गतः ॥ १५९ ॥ कृतेरत्नमयंलिङ्गं त्रेतायांहेमसम्भवम् ॥ द्वापरेपारदंश्रेष्ठं

---

१ जब दक्षजी दशो प्रचेतों के पुत्र हुये और उनकी यज्ञमें सब देवता व ऋषि मनुष्यादिकों को देखा और श्रीशिवजी को न देखकर भक्तप्रधान श्रीदधीचि मुनि ने शिव सुयश वर्णनपूर्वक दक्षजी से कहा कि कल्याणकर्त्ता उमाभर्त्ता इस यज्ञमें क्यों नहीं आये यह सुन शिवनिन्दा करतेहुये दक्षजी बोले कि, यहाँ अनेकन रुद्र हैं उस पिशाचसङ्गी बहुरुद्रकी क्या काम है तब च्यवन पुत्र श्रीदधीचि जीने शापदिया कि तुम सबलोग तत्त्व से विमुख होजावो और वैदिक मतमें श्रद्धा न हो जिससे शङ्कर की निन्दा कहते व सुनते हो और इतना कहकर उस यज्ञसे चलेगये २ एक समय सूखामें भूँखे प्यासे देश देश के मुनि लोग गौतमजी के आश्रम को गये जोकि गोदावरी के तीर नाशिक के समीप में था और उन्हों ने देवभक्तिबलसे सब मुनियों को यथेच्छित सुखपूर्वक वास दिया कुछ वर्षोंमें श्रीनारदमुनि घूमते २ आय गौतममुनि से आदर पाय बोले आज तुम्हारी बड़ाई इन्द्रलोक में होती रही है यह सुन सब मुनिलोग अनखाने व पानी पड़ेपर निज निज आश्रम जानेवाले होकर गणेश जीकी पूजाकर एक गाय बनाय गौतमऋषि के खेतों में चरनेको भेजा वह उनके छूतेही गिरपड़ी तब कुटिल मुनिलोग बड़ी निन्दाकर चलदिये तब गौतमजी तपोबल से सब जानकर शाप दिया कि तुम लोग वेदतत्त्व से विमुख हो जावो तदनन्तर शापित ब्राह्मणों के हित के लिये श्रीशिव जीने तन्त्रशास्त्र बनाया इसमें कहीं कहीं वेदविरुद्धभी वाममार्गादि धर्म हैं उनमें मोहित लोग प्रवृत्त होते हैं उनको मुक्ति किसकारण विलम्बकर होती है और सतोगुणियोंको शीघ्र मुक्ति फल मिलताहै ॥

पार्थिवंतुकलौयुगे ॥ १६० ॥ यथालब्धोपचारैश्च भक्तिश्रद्धासमन्वितः ॥ पूजयेत्पार्थिवंलिङ्गं शास्त्रोक्तविधिनानरः ॥ १६१ ॥ पञ्चसूत्रविचारंच पार्थिवे नविचारयेत् ॥ यथाकथंचिद्विधिना रमणीयंप्रकल्पयेत् ॥ १६२ ॥ द्विखण्डंतु प्रकुर्वाणो नैवपूजाफलंलभेत् ॥ रत्नहेमधरासूतपिष्टस्फटिकसम्भवम् ॥१६३॥ एकखण्डम्भवेल्लिङ्गमितरेचचराचरे ॥ कुर्य्यात्तदेकखण्डंतुद्विखण्डंतुस्थिरंस्मृतम् ॥ १६४ ॥ विप्राणांमृत्तिकाश्वेता क्षत्रियाणांतथारुणा ॥ विशांपीताचशूद्राणां कृष्णावालभ्यतेयथा ॥ १६५ ॥ भवायभवनाशाय महादेवायधीमहि ॥ उग्रायचोग्रनाशाय शर्वायशशिमौलिने ॥ १६६ ॥ विलोमानांपूजनार्थं मन्त्रोयंपरिकीर्तितः ॥ ततःपूजासमाप्तौतु दद्यात्पुष्पाञ्जलित्रयम् ॥ १६७ ॥ जपंपञ्चाक्षरस्यापि कुर्य्यादष्टोत्तरंशतम् ॥ वक्ष्यमाणांस्तुतिंपश्चात्पठेद्देवस्यतुष्टये ॥ १६८ ॥ नमोङ्कारस्वरूपाय नमोक्षरवपुर्धृते ॥ नमोनादात्मनेतुभ्यं नमोबिन्दुकलात्मने ॥ १६९ ॥ अलिङ्गलिङ्गरूपाय रूपातीतायवैनमः ॥ त्वं मातासर्वलोकानां त्वमेवजगतःपिता ॥ १७० ॥ त्वंत्रातात्वंसुहृन्मित्रं त्वंप्रियःशिवरूपधृक् ॥ त्वंगुरुस्त्वंगतिःसाक्षी त्वंपितात्वंपितामहः ॥ १७१ ॥ नमस्तेभगवन्रुद्रभास्करामिततेजसे ॥ नमोभवायदेवायधर्म्मरूपहितायच ॥ १७२ ॥ शिवायक्षितिपालाय सदासुरभिदेनमः ॥ पशूनांपतयेचैव पावकामिततेजसे ॥ १७३ ॥ भीमायव्योमरूपाय शब्दमात्रायतेनमः ॥ महादेवायसोमाय अमृतायनमोस्तुते ॥ १७४ ॥ उग्राययजमानाय नमस्तेकर्म्मयोगिने ॥ ओङ्कारायनमस्तुभ्यं धर्म्मगोवाहनायच ॥ १७५ ॥ पार्थिवस्यचलिङ्गस्य यन्मयापूजनंकृतम् ॥ अनेनभगवान्रुद्रो वाञ्छितार्थंप्रयच्छतु ॥१७६॥ इतिस्तुत्वाजपंकृत्वा प्रणिपत्यविसर्जयेत् ॥ अथैकादशलिङ्गानां विधानमभिधीयते ॥ १७७ ॥ एकंलिङ्गंप्रतिदिनं षोडशैरुपचारकैः ॥ पूजयेद्वै द्रोणपुष्पैर्घृतमेवसमर्प्पयेत् ॥ १७८ ॥ एवंशतदिनंसर्वऋणान्मुक्तिःप्रजायते ॥ लिङ्गद्वयंप्रतिदिनंषोडशैरुपचारकैः ॥ पुष्पाणिमल्लिकायास्तु नैवेद्यार्थंगुडस्स्मृतः ॥ १७९ ॥ दिनानांत्रिशतंकुर्य्यादयुतंपुत्रमाप्नुयात् ॥ दिनंप्रतित्र

---

१ गूमाके फूल ॥

यंकृत्वा षोडशैरुपचारकैः ॥ १८० ॥ करञ्जपुष्पैःकर्पूरं नैवेद्यंसम्प्रदर्शयेत् ॥ दिनानांपञ्चशतकं कन्याभवतिशोभना ॥ १८१ ॥ चतुष्टयंप्रतिदिनं षोडशैरुपचारकैः ॥ पूजयेद्यवनैवेद्यं पुष्पाणिचम्पकस्यतु ॥ १८२ ॥ दिनंपञ्चशतं कृत्वा विवाहोजायतेध्रुवम् ॥ षट्षट्वकुलपुष्पैश्च नैवेद्यंक्षौद्रमेवच ॥१८३॥ महतःकलहान्मुक्तिर्दिनानांस्याच्छतत्रयात् ॥ सप्तप्रतिदिनंपुष्पैः शतपत्रैःप्रपूजयेत् ॥ १८४ ॥ दध्योदनंचनैवेद्यं दिनपञ्चशतैर्युतम् ॥ उद्दिष्टंमनसियत्तीर्थं तद्भवेद्देवतापिच ॥ १८५ ॥ अष्टप्रतिदिनंयस्तु बिल्वपत्रैःसमर्चयेत् ॥ नैवेद्यंतत्रलड्डूका उपचाराश्चषोडश ॥ १८६ ॥ शतत्रयदिनंकृत्वा महाविद्यागमोभवेत् ॥ नवप्रतिदिनंकृत्वा नैवेद्यंपञ्चमासकम् ॥ १८७ ॥ बन्धुपुष्पैश्चपूजास्याद्दणमुक्तोधनीभवेत् ॥ दशप्रतिदिनंवर्षमेकंकञ्चनपुष्पकैः ॥ १८८ ॥ नैवेद्यार्थमपूपास्स्युर्दूरदेशागमोभवेत् ॥ एकादशप्रतिदिनं नैवेद्यं पञ्चखाद्यकम् ॥ १८९ ॥ पुष्पाणिकरवीरस्य काञ्चनंरजतादिकम् ॥ मुक्ताफलप्रवालादि यदिष्टंप्राप्नुयाच्चतत् ॥ १९० ॥ उद्यापनविधिंवक्ष्ये समासोतत्समाचरेत ॥ लिङ्गार्चनेचसम्पूर्णे सञ्जातेचमनोरथे ॥ १९१ ॥ कुर्य्याल्लिङ्गंतुसौवर्णं रौप्यंताम्रमथापिवा ॥ वित्तशाठ्यंनकुर्वीत तत्प्रमाणेननिर्मितम् ॥ १९२ ॥ महाशैवाख्ययोगोयमार्द्रासोमश्चतुर्दशी ॥ द्वयोर्योगेशैवयोग एकस्मिंस्तु दिनंशिवम् ॥ १९३ ॥ महायोगेनन्तफलं बहुलंशिवयोगके ॥ यथोक्तंशिवयोगेतु फलंप्राप्नोतिमानवः ॥ १९४ ॥ उपोष्यप्रथमेचाह्नि सम्पूज्यपरमेश्वरम् ॥ आचार्य्यंब्राह्मणांश्चापि होमार्थंवृणुयात्ततः ॥ १९५ ॥ गणेशमम्बांसंपूज्यशिवंसंस्थाप्यपूजयेत् ॥ प्राणप्रतिष्ठापूर्वन्तु वह्निस्थापनमाचरेत् ॥ १९६॥ आचार्य्यमृत्विजश्चापि वरयेद्दक्षिणादिना ॥ यत्सङ्ख्याकंयजेल्लिङ्गंतन्मितंहोममाचरेत् ॥ १९७ ॥ आयुष्कामोघृतैस्तत्र धनार्थीवापिपायसैः ॥ तिलाज्याभ्यांचरेद्धोममेतद्भिन्नंयदर्थयेत् ॥ १९८ ॥ रात्रौजागरणंकुर्य्याद्गीतवाद्यपुरस्सरम् ॥ तर्पणंमार्जनंकुर्य्यात्ततोब्राह्मणभोजनम् ॥ १९९ ॥ वटुकानांकुमारीणां गणंसाम्बिकतुष्टये ॥ पुनर्लिङ्गंपूजयित्वादद्यात्तंगुरवे

१ मौनसिरी २ कुमल ३ दुपहरीका भेद ॥

पुनः ॥ २०० ॥ वस्त्रालङ्करणाद्यैश्च गुरुंयत्नेनतोषयेत् ॥ दक्षिणांभूयसीं दत्त्वासुहृद्भिस्सहभोजनम् ॥ २०१ ॥यथाकुर्य्यादितिप्रोक्तं लिङ्गस्योद्यापनम्प रम् ॥ विधिःप्रोक्तःपार्थिवानां सर्वकामप्रपूरकः ॥ २०२ ॥ उद्यापनेनसहितः किमन्यच्छ्रोतुमिच्छसि ॥ २०३ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेपार्थिवपूजाविधिःप्रकाशोनवमः ॥ ९ ॥

श्रीदेव्युवाच ॥ क्वचिद्दक्षंक्वचिद्वामंक्वचित्सौरंचशाम्भवम् ॥ ऊर्ध्वाम्नायं क्वचिद्दक्षमुत्तरंपश्चिमंक्वचित् ॥ १ ॥ अधआम्नायकंचापि गाणपत्यंचवैष्ण वम् ॥ पारसीकंक्वचिद्बौद्धं पाखण्डंचक्वचित्क्वचित् ॥ २ ॥ तत्तत्प्रकरणेस्तौ पि क्वचिन्निन्दासितंपुनः ॥ क्वचिन्निर्दैवतंमार्ग वेदान्तंवैदिकंक्वचित् ॥३॥ द्वी पधर्म्मान्खण्डधर्म्मान्कुलधर्म्मान्क्वचित्क्वचित् ॥ देशधर्म्मान्कालधर्म्माञ्जाति धर्म्मान्क्वचित्क्वचित् ॥ ४ ॥ तत्रोत्तममिदंतन्त्रंप्रसन्नश्चेन्ममोपरि ॥ तदातत्त्वं ममब्रूहिनिःसन्देहांचमांकुरु ॥ ५ ॥ श्रीशिवउवाच ॥ अहोकालस्यमाहात्म्यं तन्त्रेतन्त्रेत्वयापुनः ॥ पृच्छतेतत्तदाधिक्यंसाहङ्कारंब्रवीमितत् ॥ ६ ॥ प्रश्नेयंसा त्त्विकीकाचिज्जाताकालस्ययत्त्वया ॥ उपकारायसर्वेषांपृष्टंतत्त्वंब्रवीमितत् ॥ ७ ॥ यथाबालस्यपितृगीस्तथावेदध्वनिर्हिता ॥ कलेर्दशसहस्राणियदावर्षा णियान्तिच ॥ ८ ॥ वेदोनारायणःसाक्षात्कालावयवजन्तुभिः ॥ नश्रूयतेतदा देविज्ञेयःकालःसमागतः ॥ ९ ॥ वाग्जृम्भाक्षुतपादादिशब्दाउत्पत्तिनश्वराः ॥ वेदभिन्नानिशास्त्राणितथाजानन्तुदेवताः ॥ १० ॥ यस्यशास्त्रस्यलोकेस्मिन्प्र चारोयावदस्तिह ॥ तावत्तन्मार्गिणांसौख्यंवेदमार्गोद्यकुण्ठितः ॥ ११ ॥ तस्मा त्तन्मार्गकर्तारःशिष्यांस्तत्सम्प्रदायिनः ॥ तानानयन्तिस्वेमार्गेयत्ततावत्सुखं भवेत् ॥ १२ ॥ नृणांज्ञानंयथाषड्भिरिन्द्रियैरभिजायते ॥ तथाषडङ्गैर्वेदार्थज्ञानंभ वतिनिश्चितम् ॥ १३ ॥ कर्म्मेन्द्रियाणिचनृणांयथापञ्चमितानिच ॥ तथाका लमहेशस्यपञ्चाम्नायामयोदिताः ॥ १४ ॥ ऊर्ध्वाम्नायंसमुद्दिष्टंवाचिकंकर्म्मतस्य तत् ॥ तत्रप्रमाणंवेदास्स्युस्तदंशाःस्मृतयस्तथा ॥ १५ ॥ तदङ्गानिपुराणा निगायत्र्याद्याश्चदेवताः ॥ ब्रह्मबीजं[1]तथाक्षेत्रं[2]संस्कारा[3]द्ब्राह्मणामताः ॥ १६ ॥

---

१ ब्राह्मणके बीजसे उत्पन्नहुआहो २ माता ब्राह्मणीहो ३ ब्राह्मणोंका संस्कारकियागयाहो ॥

ब्राह्मणाचरणंब्रह्मविद्याभिर्ब्राह्मणोभवेत् ॥ यस्यवश्यावयंयस्यवाचमर्थोऽनुधावति ॥ १७ ॥ एकस्मिल्लँक्षणेहीनेवागर्थमनुधावति ॥ द्विहीनेलक्षणेदेविस्वाचाराद्ब्राह्मणोभवेत् ॥ १८ ॥ लक्षणत्रयहीनोयस्तन्त्रमार्गेणसिद्ध्यति ॥ चतुर्लक्षणहीनाङ्कमार्गास्स्युःकौलिकादयः ॥ १९ ॥ एतल्लक्षणभिन्नेनयथादेशंयथाकुलम् ॥ यथाजातियथाकालंकर्तव्योधर्म्मसंग्रहः ॥ २० ॥ मिथ्यासम्भाषणंस्तेयस्सर्वमार्गेषुगर्हितम् ॥ यत्किञ्चिज्जन्मयत्कर्म्मनजपोनतपःक्रियाः ॥ २१ ॥ जीवन्मुक्तःसत्यवक्तासत्येसर्वंप्रतिष्ठितम् ॥ अहिंसापरमोधर्म्मःसोपिवाक्कायकर्म्मभिः ॥ २२ ॥ द्वन्द्वेयत्रनचाचारोनजातिःसचमुक्तवत् ॥ इहलोकेसुखंभुक्त्वायात्यन्तेपरमंपदम् ॥ २३ ॥ परसन्तापरहितेतन्निष्ठायस्यचेतसि ॥ मुक्तंकालेपिजानीहिजीवन्मुक्तंनसंशयः ॥ २४ ॥ यदिन्द्रियज्ञानवतीसृष्टिर्भवतिमैथुनात् ॥ त्यक्तंतन्मनसायेनजीवन्मुक्तःसएवहि ॥ २५ ॥ यथेच्छालाभसन्तुष्टःस्तौतिनोनचनिन्दति ॥ नसुखेनदुःखंस्यात्कर्म्मणासविमुच्यते ॥ २६ ॥ हित्वाविषयसौख्यंचपरंसन्तोषमास्थितः ॥ यावद्देहस्यनिर्वाहस्तावत्कालंपरिक्षिपेत् ॥ २७ ॥ कामक्रोधादिरहितस्तपस्तपतिनिर्जने ॥ नफलंकामयेत्किञ्चिज्जीवन्मुक्तःसएवहि ॥ २८ ॥ दुर्विज्ञेयादुर्निवारामहाकालस्यगेहिनी ॥ तदंशाराधनात्सैवप्रसन्नाचेद्विमुञ्चति ॥ २९ ॥ सुबुद्धिभिःप्रियैःपुत्रैर्यथामाताप्रतार्य्यते ॥ तथाप्रतार्य्यतेचेयंजीवन्मुक्तःसउच्यते ॥ ३० ॥ कृतंबन्धार्थमनयाभक्ष्यंपानंचमैथुनम् ॥ येनैवंविदितंबन्धात्स्वयंमुक्तस्तदाभवेत् ॥ ३१ ॥ देवाःपूजनमिच्छन्तितस्माद्बद्धाःपरिग्रहात् ॥ शुकवद्योप्रतिग्राहीजीवन्मुक्तःसकोपिहि ॥ ३२ ॥ शौरंप्रकुर्वतोनित्यंविष्ठाबुद्धिःकलेवरे ॥ देहाभिमानोगलितोजीवन्मुक्तस्सएवहि ॥ ३३ ॥ एतत्तुसुगमोपायोनात्रकार्याविचारणा ॥ वेदस्याभ्यासतःसर्वयोनयेत्सतुमोक्षवान् ॥ ३४ ॥ कोहंकिंदृश्यतेकर्ताकोस्यातिकश्चेतसि ॥ इतिसम्भावयन्नित्यंमहाकालेलयंव्रजेत् ॥ ३५ ॥ वामिकैः

१ ब्राह्मणों के कर्म्म करताहो, २ वेदादि विद्या पढ़ेहो, वह ब्राह्मण कहाजाताहै पांच लक्षणों से युक्त उत्तम और चार तीन लक्षणों से युक्त मध्यम ब्राह्मण होता है इसी रीतिसे दो एक लक्षण में भी समझ लेना ॥

कौलिकैस्तस्मादज्ञातैश्चगुरुंविना ॥ समस्तैरथवाज्ञातैर्वञ्चितेयंन चेतरैः॥३६॥ बद्धेयंबन्धनैस्तस्यत्रोटयेद्बन्धनानिच ॥ भावयेद्योमहाकालंजीवन्मुक्तस्तदा भवेत् ॥ ३७ ॥ बन्धमोक्षप्रकारास्तुतन्त्रेसङ्कलितामया ॥ यैर्ज्ञातागुरुमार्गेण तैर्बन्धोयंविमोचितः ॥ ३८ ॥ कुगुरोर्मुखतोवापिज्ञानाभासाच्चपुस्तकात् ॥ स्वधर्म्मंयेपरित्यज्ययेत्रमग्नास्तुतेहताः ॥ ३६ ॥ तस्माद्धर्म्मंप्रवक्ष्यामिवामि नामधिकारिणाम् ॥ येषांभोगोपिमोक्षोपिभवेद्येषांचदुर्गतिः ॥ ४० ॥ अव श्यमेवकर्तव्याःशिष्यावामेधिकारिणः ॥ गुरोस्तेनभवेत्तेजःशिष्योपिलभते सुखम् ॥ ४१ ॥ मोहेनचाथलोभेनदीक्षामनधिकारिणे ॥ योदद्यात्सदरिद्रः स्याच्छिष्यःस्याद्दुःखभाजनम् ॥ ४२ ॥ पूर्वोक्तलक्षणेष्वेकंयस्मिन्विप्रेनदृ श्यते ॥ उपतापंसवैकुर्य्यात्किञ्चिद्ब्राह्मणतांगतः ॥ ४३ ॥ अधिकारोनमेजा तःसमस्तब्रह्मकर्म्मणाम् ॥ इहलोकेपरत्रापिकथंलप्स्याम्यहंसुखम् ॥ ४४ ॥ अन्धश्चयःपरद्रव्येपरस्त्रीपुनपुंसकः ॥ परापवादेयोमूकोनित्यमित्थंविचारये त् ॥ ४५ ॥ तस्यैवब्राह्मणस्यात्राब्राह्मणस्याधिकारिता ॥ अब्राह्मणास्तुयेके चिन्मांसेमद्येरतावयम् ॥ ४६ ॥ कथंलभामहेमोक्षमितिचिन्तापरायणाः ॥ पू र्वोक्तलक्षणैर्युक्तास्तेपिशिष्याःप्रकीर्तिताः ॥ ४७ ॥ पंचलक्षणसंयुक्तोब्राह्मणः कालएवसः ॥ अहंब्रह्मातथाविष्णुस्तस्याज्ञावशवर्त्तिनः ॥ ४८ ॥ सचेद्वामप थंप्राप्तःपुनःश्वाचापिजायते॥ चतुर्लक्षणसम्पन्नोविप्रोज्ञोप्यस्तिमध्यमः॥४६॥ ताभ्यांदत्तोऽभाग्यवशात्तान्त्रिकःकोपिचेन्मनुः ॥ सद्यःफलतिचाद्यस्यक्रिय याचापरस्यतु ॥ ५० ॥ लक्षणत्रयुक्तोयस्तस्यवैदिकतान्त्रिके ॥ यथोक्ताच रणादेवफलदेस्तोनवामके ॥५१॥ लक्षणद्वयसंयुक्तस्तस्यवामश्चदक्षिणः ॥ मनूतुल्यफलौस्यातांनकदाचनवैदिकः ॥ ५२ ॥ एकलक्षणसंयुक्तोवामस्तस्य

---

१ पूर्वोक्तपाँच लक्षणों में से जिसके एकहू लक्षण ठीक न हो अर्थात् ब्राह्मण से अन्य जातिकी स्त्री में पैदाहुआहो कुछ ब्राह्मणत्व उसमें भी होताहै इत्यादिकों को छोड़ शुद्ध ब्राह्मणों का वाममार्ग में प्रवृत्त होना महापापहै वे लोग अन्त में कुत्ता वा विष्ठा के कीट होते हैं २ पूर्वोक्त शिष्यों के लक्षण गुरु आज्ञाकरण तत्पर इत्यादि ३ ब्रह्मबीजादि पूर्वोक्त पांच लक्षण ॥

फलप्रदः ॥ शूद्रादियवनान्तानांसिद्धिर्वामपथेस्थिता ॥ ५३ ॥ [1]वाममार्गस्थितोविप्रस्तुलसींनस्पृशेत्क्वचित् ॥ नस्पृशेद्वैष्णवंविप्रंप्रणमेन्नचवैदिकम्॥५४॥ हीनोविप्रःक्षत्रियाद्यावाममार्गरताअपि ॥ तद्वर्त्मत्वाद्गतैर्विष्णोःपूतानिष्किल्विपास्तथा ॥ ५५ ॥ वक्ष्येथप्रकटंधर्म्मवामिकानांसुखावहम् ॥ सत्सङ्गश्चविवेकश्चनिश्चलंनयनद्वयम् ॥ ५६ ॥ यस्यनास्तीतरस्सोपिकथंवामेसुखंलभेत् ॥ संसारिकसुखासक्तंब्रह्मज्ञोस्मीतिवादिनम् ॥ ५७ ॥ कर्म्मब्रह्मोभयंनष्टंत्यजेदुत्पथगंयथा ॥ मद्यंमांसंसुरापानंमत्स्यस्त्रीबान्धवास्तथा ॥ ५८ ॥ अनेकायत्रजायन्तेतत्रवामोगतिप्रदः ॥ स्थित्वातुदक्षिणेमार्गेगुरुंशुक्रंपलादिकम् ॥ ५६ ॥ सयातिनरकंघोरं विष्ठायांजायतेक्रिमिः ॥ अतोद्विजैःसदासेव्योवैदिकोधर्म्मसञ्चयः ॥ ६० ॥ विनाबलिंपलंयोत्तिविनापूजांसुरांपिबेत् ॥ दूतीयज्ञंविनान्यस्यस्त्रीगोवापिसनारकी ॥ ६१ ॥ अबुद्ध्वासमयाचारंकुलधर्म्मंचरेद्यदि ॥ सगुरुश्चैवशिष्यश्चयोगिनीनांभवेत्पशुः ॥ ६२ ॥ वाममार्गमजानन्योधिकारीमोक्षमिच्छति ॥ पारावारमपारंसबाहुभ्यांतर्तुमिच्छति ॥ ६३ ॥ [2]सर्वकर्म्मविहीनायेवर्णाश्रमविवर्जिताः ॥ कौलेवावाममार्गेतेभुक्तिमुक्त्योश्चभाजनम् ॥ ६४ ॥ निन्दन्तुबान्धवास्सर्वेत्यजन्तुसुतादयः ॥ जनाहसन्तुमांदृष्ट्वाराजानोदण्डयन्तुवा ॥ ६५ ॥ रोगदारिद्र्यदुःखाद्यैःपीडितोप्यनिशंत्वहम् ॥ लक्ष्मीस्तिष्ठतुवायातुनमुञ्चामिपथंत्विदम् ॥ ६६ ॥ एवंयस्यदृढाभक्तिस्सवामेसिद्धिमाप्नुयात् ॥ नार्थलोभान्नचक्रोधान्नद्वेषान्नचमत्सरात् ॥ ६७ ॥ नकामान्नभयाद्वापिमार्गंप्राप्तंपरित्यजेत् ॥ प्रत्यहंनार्चयेद्देवींमार्गेस्मिन्विघ्नमाप्नुयात् ॥ ६८ ॥ गुरुकारुण्यपूतोहिदेहिनिर्धूतकल्मपः ॥ कुलपूजारतोयस्तुसोयंकौलोनचेतरः ॥ ६६ ॥ परोक्षेकोनुजानीतेकस्यकिञ्चभविष्यति ॥ यद्वाप्रत्यक्षफलदन्तदेवोत्तमदर्शनम् ॥ ७० ॥ गुरूपदेशरहिताम

---

[1] कदाचित् ब्राह्मण, विना विचारे वाममार्गी होगयाहो वह पतितहोने के कारणसे तुलसी इत्यादिक पवित्र वस्तुओं को मत छूवे और ब्राह्मणों के नमस्कार के योग्य नहीं [2] कौल धर्म्म है वर्ण वा आश्रम धर्म्म के करनेका जिनको अधिकार नहीं है उन पतितलोगों के लिये वाममार्गादिधर्म्मों से शुद्धि होती है ॥

हान्तइतिकेचन ॥ मोहयन्तिजनान्केचित्स्वयंपूर्वविमोहिताः ॥ ७१ ॥ पेयं मद्यंपलंखाद्यंसमालोक्यंप्रियामुखम् ॥ इत्येवाचरणंप्रोक्तंपामराःप्रवदन्तिच ॥ ७२ ॥ मद्यपानेनमुनयोयदिसिद्धिंलभन्तिचेत् ॥ मद्यपानरताःसर्वेकिंसिद्धा नभवन्त्विमे ॥ ७३ ॥ मांसभक्षणमात्रेणयदिपुण्यगतिर्भवेत् ॥ क्रव्यादानां तदामोक्षोमांसादन्यन्नभुञ्जते ॥ ७४ ॥ स्त्रीसम्भोगेनभोदेवायदिमुक्तिःप्रजायते ॥ तदासर्वेपिमुक्तास्स्युःकस्यजन्मभविष्यति ॥ ७५ ॥ कृपाणधारागमनं व्याघ्रकर्णावलम्बनम् ॥ भुजङ्गावरणंनूनंशक्यंवैकुलवर्त्मतः ॥ ७६ ॥ वृथा पानंतुदेवेशिसुरापानमिहोच्यते ॥ तन्महापातकंज्ञेयंवेदादिषुनिरूपितम् ॥ ७७ ॥ अनाघ्रेयमनालोक्यमवश्यंचाप्यपेयकम् ॥ मद्यंमांसंपशूनांतुकौलिकानांमहत्फलम् ॥ ७८ ॥ अमेध्यानिद्विजातीनांमद्यान्येकादशैवहि ॥ द्वादशंतुसुरामद्यंसर्वेषामुत्तमंस्मृतम् ॥ ७९ ॥ तस्माद्विप्रोहिराजन्योवैश्यश्चन सुरांपिवेत् ॥ सुरादर्शनमात्रेणकुर्य्यात्सूर्य्यावलोकनम् ॥ ८० ॥ तस्यसंसर्ग मात्रेणप्राणायामत्रयंचरेत् ॥ आजानुभ्यांभवेत्स्नानंनाभ्यामुपवसेदहः ॥ ८१ ॥ ऊर्ध्वंनाभेस्त्रिरात्रंतुमद्यस्यस्पर्शनेविधिः ॥ सुरापानेकृतेवह्निज्वलद्दण्डं प्रवेशयेत् ॥ ८२ ॥ मुखेतेनविनिर्दग्धेतच्छुद्धिंसमवाप्नुयात् ॥ अभिघातेनयो हन्यादात्मार्थंप्राणिनःप्रिये ॥ ८३ ॥ निवसेन्नरकेघोरेदिनानिपशुरोमभिः ॥ सम्मितानिदुराचारस्तिर्य्यग्योनिषुजायते ॥ ८४ ॥ अनुमन्ताविभक्ताचनिहन्ताक्रयविक्रयी ॥ संस्कर्ताचोपभोक्ताचखादत्यष्टौचतेसमाः ॥ ८५ ॥ धनेनाक्रीयतंहन्तिखादिताचोपभोगतः ॥ घातकोवधबन्धाद्यैरित्येकस्त्रिविधोमतः ॥ ८६ ॥

---

१ "कौलिकानांमहत्फलं" इससे शिवजी यह सूचित करतेहैं कि जे पतित शूद्रादि वेद धर्म्म के अनधिकारी होकर मद्यमांसादिकों में आसक्त हैं उनके लिये "नांगभला कि टेके मचवा" इस रीतिसे मांसादि भोजनसमेत, देवताओंकी पूजा स्तुति ध्यानादिकोंका उपदेश है और कुछ मांसादि खाने पीनेसे पाप छोड़ पुण्य नहीं होती सो पूर्वही कहचुकेहैं कि, मद्यपानेनमुनयोयदिसिद्धिंलभन्तिचेत् । मद्यपानरताःसर्वेकिंसिद्धानभवन्त्विमे ॥ इत्यादि ॥
२ उस मद्यके ३ जो पांवोंसे जांघोंतक मद्य छूजावे तो स्नानसे और नाभीतक उपवास से और नाभी के ऊपर तीन उपवासों से शुद्धि होती है ॥

तृणंचाप्यविधानेनच्छेदयेन्नकदाचन ॥ विधिवद्वांछिजंवापिहत्वापापैर्नलिप्यते ॥ ८७ ॥ सर्वेभ्यःकौलिकःश्रेष्ठऊर्ध्वाम्नायीचवामगः ॥ अधिकारीभक्तियुक्तोयोभवेत्सचसेवकः ॥ ८८ ॥ संहारःपश्चिमाम्नायेउत्तरेनुग्रहोभवेत् ॥ मन्त्रयोगंविदुःपूर्वंभक्तियोगंतुदक्षिणम् ॥ ८९ ॥ पश्चिमंकर्म्मयोगंतुज्ञानयोगंतथोत्तरम् ॥ मातृकान्याससंस्थानेवामेकौलिकवर्त्मनि ॥ ९० ॥ प्रपञ्चयोगनामानंन्यासंकुर्य्यात्तदुच्यते ॥ श्रीप्रपञ्चेद्वीपमायेकमलाजलधीतथा ॥ ९१ ॥ गिरिविष्णुवल्लभेचपट्टनंपद्मधारिणी ॥ समुद्रतनयापीठेक्षेत्रयुग्लोकमातृका ॥ ९२ ॥ वनंकमलवासिन्यपीन्दिराचाश्रमस्तथा ॥ मागुहेतुरमागुह्योपद्माचलरकौतथा ॥ ९३ ॥ नारायणप्रियोद्भिज्जोद्भिलक्ष्मीःस्वेदजान्विता ॥ अण्डजाश्चमहालक्ष्मीस्तुजरायुजलक्ष्मिका ॥ ९४ ॥ स्वरस्थानेषोडशैवयुग्मानिस्पर्शकेष्वथ ॥ आर्य्यालवौत्रुस्तुमेचचरिडकाचकलान्विता ॥ ९५ ॥ काष्ठादुर्गेनिमेषाख्यशिवेश्वासोह्यपर्णिका ॥ अम्बिकाघटिकेचैवमुहूर्तेश्चसतीयुतः ॥ ९६ ॥ ईश्वरीप्रहरौचैवशाङ्करीदिवसान्विता ॥ ईशानीचापिसन्ध्याचपार्वतीरात्रिसंयुता ॥ ९७ ॥ सर्वमङ्गलयायुक्तांस्थितिंन्यस्येत्ततःपरम् ॥ दाक्षायिण्यातथावारंहेमवत्यायुतंन्यसेत् ॥ ९८ ॥ नक्षत्रंचमहामायायुक्तंयोगंन्यसेत्ततः ॥ माहेश्वर्य्याचकरणंमृडान्यापक्षएवच ॥ ९९ ॥ रुद्राणीमाससंयुक्ताशर्वाणीराशिसंयुता ॥ अथर्त्तुपरमेश्वर्य्यौकालीचायनसंयुता ॥ १०० ॥ कात्यायनीवत्सरयुग्गौरीयुगसमन्विता ॥ भवानीप्रलयौचाथय।दिस्थानेषुविन्यसेत् ॥ १०१ ॥ पञ्चभूतयुताब्राह्मीपञ्चतन्मात्रसंयुता ॥ वागीश्वरीततोवाणीपञ्चकर्म्मेन्द्रियान्विता ॥ १०२ ॥ सुज्ञानेन्द्रियसावित्रीसानिलाचसरस्वती ॥ गायत्रीगुणयुक्ताचवागन्तःकरणान्विता ॥ १०३ ॥ अवस्थायुक्शारदाचधातुयुक्ताचभारती ॥ दोषयुक्ताप्रियाचेति व्यापकंविद्ययान्यसेत् ॥ १०४ ॥ त्रितारमूलविद्यान्ते मातृकाक्षरतःपरम् ॥ वदेत्प्रपञ्चरूपायै श्रियैनमइतिक्रमात् ॥ १०५ ॥ प्रपञ्चादिभिराढ्यान्त्यवर्णंऽयक्तिंतुयोजयेत् ॥ मातृकान्यासंप्रोक्तस्थानेषुतदनन्तरम् ॥ १०६ ॥ त्रितारमूलकस्यैव प्रपञ्चस्यस्वरूपतः आर्य्यापराम्बादेव्यै च नमोक्त्याव्यापकंन्यसेत् ॥ १०७ ॥ प्रपञ्चन्यासएवंस्या

भुवनन्यासउच्यते ॥ त्रितारमूलमन्त्रान्ते विभागेनाक्षराणिच ॥ १०८ ॥ सानुस्वाराणिचोच्चार्य्य भूतलादिकनामच॥लोकानीहशतान्तेतुकोटिगुह्यपदं वदेत् ॥ १०९ ॥ योगिनीमूलदेव्यास्तु नामाथाधारशक्तिच ॥ देव्यैनमइति प्रोक्ता प्रोक्ताङ्गेषुप्रविन्यसेत् ॥ ११० ॥ अक्षराणांविभागस्तु अकारादित्रयं त्रयम् ॥ अर्धेन्दुयुक्ततःस्थाने स्थानयुग्मेद्वयंद्वयम् ॥ १११ ॥ कादिकास्त सवर्गाश्च लक्षंचापिचतुर्दश॥ अथनामानिलोकानामनलंवितलंतथा॥११२॥ सुतलाख्यंमहातलं तलातलरसातलम् ॥ पातालंभूर्भुवःस्वश्च महर्जनस्तप स्तथा ॥ ११३ ॥ सत्यंचेत्यथगुह्यादिस्थानेयत्रतदुच्यते ॥ गुह्यान्तरंद्वितीये थचातिगुह्यमचिन्त्यकम् ॥ ११४ ॥ महागुह्यंस्वतन्त्रंच परमंगुह्यमग्रतः ॥ ओङ्कारंयोगिनीस्थाने रहस्यंज्ञानमग्रतः ॥ ११५ ॥ रहस्यंचक्रियामुक्ताथाष्ट मेविनियुज्यते ॥ रहस्यंडाकिनीचाथ महारहस्यहाकिनी ॥ ११६ ॥ महागुप्तं काकिनीच गुप्ततरंचशाकिनी ॥ गुप्तंश्रीहाकिनीपश्चान्महाकायंचयाकि नी ॥ ११७ ॥ न्यसेद्वामीक्रमान्न्यासौ गुल्फौजघनजानुनी ॥ ऊरुगुल्फौच मूलाधारं स्वाधिष्ठाननाभिकम् ॥ ११८ ॥ हृदंसकण्ठभालानि ब्रह्मरन्ध्रमिति क्रमात् ॥ त्रितारमूलमन्त्रान्ते चतुर्दशतुवंवदेत् ॥ ११९ ॥ अधिपायैपराम्बा यै देव्यैहृद्व्यापकंन्यसेत् ॥ मूर्तिन्यासंप्रवक्ष्यामितत्रादौप्रणवत्रयम् ॥ १२० ॥ मूलमन्त्रंसमुच्चार्य्य न्यासंकुर्य्यात्तदुच्यते ॥ चतुर्थीनमसायुक्तान्प्रोक्ताङ्गेषुप्र विन्यसेत् ॥ १२१ ॥ पुमानादौप्रियाचान्ते मस्तकेकेशवाक्षये ॥ मुखेनाराय णेष्टेच दक्षस्कन्धेचमाधवः ॥ १२२ ॥ ईशान्यासहितोवामे गोविन्दश्चोग्रया न्वितः ॥ विष्णूर्ध्वनयनेदक्षपार्श्वेतुमधुसूदनः ॥ १२३ ॥ ऋद्धिश्चवामपा र्श्वेथ दक्षकट्यांत्रिविक्रमः ॥ रुक्मिणीयुग्वामकट्यां कान्तियुक्तस्तुवाम नः ॥ १२४ ॥ दक्षोरौधीधरोद्धारौ वामेदोषाकरस्थितौ ॥ एकनासाहृषीकेशौ दक्षजानुनिविन्यसेत् ॥ १२५ ॥ एकारिणीपद्मनाभौ वामेचोघवतीभवेत् ॥ दामोदरोथदक्षायां जङ्घायांवासुदेवयुक् ॥ १२६ ॥ अर्कमानाथवामायां जङ्घायामञ्जनप्रभा ॥ सङ्कर्षणयुतादक्षपादेप्रद्युम्नसंयुता ॥ १२७ ॥ अस्थिमा लावामपादे ह्यनिरुद्धोधरायुतः ॥ एतेषोडशविन्यस्याः सानुस्वारादिपूर्व

काः ॥ १२८ ॥ विष्णुभक्तियुतानान्तु न्यासोयंपरिकीर्तितः ॥ शैवन्यासेदक्ष
पादे करभद्राभवौमतौ ॥ १२६ ॥ वामेखगबलाशर्वौ गतिदाचफलप्रदः ॥
ऋद्धियुग्दक्षईशानो जगत्स्थानसमन्वितः ॥ १३० ॥ क्रमान्न्यसेत्तथाचैव
तत्पुरुषोद्गुवल्लभौ ॥ अघोराज्ञाननादीच ततष्टङ्कधरायुतः ॥ १३१ ॥ वामदे
वोथसद्याख्या जष्टङ्कधरदामिनी ॥ ब्राह्मोत्राथभवेन्न्यासः पादेब्रह्माचपक्षि
णी ॥ १३२ ॥ प्रजापतीरअर्नीच जङ्घयोरथजानुनोः ॥ वेधालक्ष्म्यौचोरुगेच
स्रष्टारंहरितानानाम् ॥ १३३ ॥ ललाटेललितांन्यस्येत्तथैवचतुराननम् ॥ क्षमां
हिरण्यगर्भंच ब्रह्मरन्ध्रेप्रविन्यसेत् ॥ १३४ ॥ त्रितारमूलमन्त्रान्ते श्रीत्रिमूर्ति
पदंवदेत् ॥ आर्य्यापराम्बादेव्यैच नमसाव्यापकंचरेत् ॥ १३५ ॥ एवंन्यास
विधिंकृत्वा कुर्य्याद्यश्चजपादिकम् ॥ भूतप्रेतजनाद्यैश्च सजपीनैवबाध्य
ते ॥ १३६ ॥ वामाचारिमतेवच्मि पात्रादेरथलक्षणम् ॥ आधारेणविनाअंशा
नचतृप्यन्तिमातरः ॥ १३७ ॥ चतुःपदंचत्रिपदंषट्पदंवर्त्तुलंतथा ॥ विप्रादी
नांचवर्णानां पात्रलक्षणमुच्यते ॥ १३८ ॥ नारिकेलस्वर्णतारकाचशुक्तिशि
लोद्भवम् ॥ शङ्खसद्दारुकूर्म्मादिकपालालाबुमृन्मयम् ॥ १३६ ॥ उत्तममध्य
महीनं विप्रादीनांप्रकीर्तितम् ॥ नातिस्थूलंनातिसूक्ष्मं छिन्नंभिन्नंविवर्ज्ज
येत् ॥ १४० ॥ ताम्रकांस्यादिभिर्लोहैः पात्रंनैवतुकारयेत् ॥ ब्रह्मसिद्धिःसुव
र्णेस्याद्दुःखान्तस्तारपात्रतः ॥ १४१ ॥ शान्तिःशिलायास्तम्भस्तु मृन्मयेना
लिकेरजे ॥ वश्याद्यंकूर्म्मजेज्ञानं शुक्तिर्मुक्तिप्रदायिनी ॥ १४२ ॥ पुण्यवृक्षज
पात्रंतुपापघ्नंमृत्युवृत्तिकृत् ॥ कपालेवीरसंसिद्धिरलाबौयोगसिद्धयः ॥ १४३ ॥
अम्भसांद्वादशप्रस्थं चतुःप्रस्थंतुतण्डुलाः ॥ प्रस्थार्धतण्डुलंपक्का तावन्मात्रां
स्तुसुन्दरान् ॥ १४४ ॥ शीतादिरहितेस्थाने दिवसद्वयमास्यते ॥ पश्चादग्नौ
समारोप्य जम्बालसदृशंपचेत् ॥ १४५ ॥ पादप्रस्थंतण्डुलांश्च तन्मात्रान्सुन्द
रान्क्षिपेत् ॥ पुनर्दिनद्वयंस्थाप्य पुनरेवंप्रकल्पयेत् ॥ १४६ ॥ अर्कतस्यसमा
दाय तण्डुलेषुविनिःक्षिपेत् ॥ पुनरेवंत्रिधाकुर्य्यात्ताण्डुलीयासुरास्मृता ॥
१४७ ॥ अयमेवभवेत्सोमः सोमयागफलप्रदः ॥ दूतीयागेभवेद्योगे सोमपा
नंतुतत्स्मृतम् ॥ १४८ ॥ यागतिःसोमयज्ञेन कौलिकानामनेनसा ॥ भोगः

स्वर्गश्चभवति विनाकष्टेनवामिनाम् ॥ १४९ ॥ एवंतुयवपिष्टोत्थो यवसोम इतिस्मृतः ॥ यवतण्डुलयोगेन शक्तिसोमोनिगद्यते ॥ १५० ॥ स्विन्नकुट्टितगोधूमाः समंविश्वेनसंयुताः ॥ स्थापिताद्वादशाहंतु वारुण्यापरिवारिताः ॥ १५१ ॥ तन्मद्यंसूर्य्यसञ्ज्ञंस्याद्योगिनीमदवर्धनम् ॥ पीतंतच्चक्रपूजान्ते वाजपेयफलप्रदम् ॥ १५२ ॥ इदमेवत्रिधायुक्तं दलंमद्यंचसाधितम् ॥ अग्निर्भवेत्तस्यपानादग्निदानफलंलभेत् ॥ १५३ ॥ अग्निर्यदासप्तदिनं वारुणीयन्त्रगःकृतः ॥ पचेदनलनामासौ महापातकनाशनः ॥ १५४ ॥ दशप्रस्थंगुडःप्रोक्तस्तावद्बब्बूलजास्त्वचः ॥ जम्बूत्वग्धातकीपुष्पं तदर्धनालिकेरजम् ॥ १५५ ॥ कुसुमंचतदर्धंस्यात्तदर्धाचहरीतकी ॥ तावद्बिभीतकंप्रोक्तं चतुर्थांशंकटुत्रयम् ॥ १५६ ॥ तावच्चचित्रकंतस्मादगुडोद्वादशभागिकः ॥ करेणभ्रामयेत्सम्यगनुलोमविलोमतः ॥ १५७ ॥ अष्टोत्तरशतावृत्त्यात्रिसन्ध्यंप्रतिवासरम् ॥ द्वादशाहेनपाकःस्याद्वारुणीयन्त्रगंपचेत् ॥ १५८ ॥ एषा गौडीतिविख्याता महामदकरीमता ॥ शिवेननिर्मितापूर्वं स्वयंपीतातुभैरवैः ॥ १५९ ॥ द्विगुणंमकरन्दस्य वारिसंयोजयेद्गुडे ॥ षोडशाहेनपाकस्स्याच्छेषमन्यत्पुरोक्तवत् ॥ १६० ॥ सर्वदेवप्रियाचेयंवशीकरणमुत्तमम् ॥ देवानां शक्रयोवश्यामानुषीणान्तुकाकथा ॥ १६१ ॥ हरीतकीचित्रकंचमरीचंधातकीतथा ॥ मधूकपुष्पंक्षौद्रंचभागैकेनविवर्धितम् ॥ १६२ ॥ अशीतिगुडसम्मिश्रंशेषमन्यत्तुपूर्ववत् ॥ इदंमनोहरंमद्यंयोगिनीपानमुत्तमम् ॥ १६३ ॥ माध्वीभावंप्रवक्ष्यामिविन्दुसंसाधकंसुरा ॥ माहिषंदधिसंग्राह्यंचतुःशतगुणंगुडम् ॥ १६४ ॥ मोचाफलस्यपक्वस्यमर्दितस्यरसस्तथा ॥ ग्राह्योदधिचतुर्थांशस्तत्सम्मर्द्यघटेक्षिपेत् ॥ १६५ ॥ इदंसुरातोप्यधिकंब्राह्मणानांप्रशस्यते ॥ गौडीमाध्वीतथापैष्टीत्रिविधातुसुरास्मृता ॥ १६६ ॥ शूद्राणामुचिताचेयंनस्याक्षत्रियवैश्ययोः ॥ ब्रह्मानन्दसुरायैस्तुविप्रैःपीतातुकौलिकैः ॥ १६७ ॥ नचोन्मादकरीतेषांसुराबुद्धिविवर्धिनी ॥ कथितब्रह्मचिन्तैवनित्यमेवंमतंसताम् ॥ १६८ ॥ ब्राह्मणस्यसुरामद्यवासनाप्रभवेद्यदि ॥ चाण्डालवद्बहिःकार्य्योनासौ वामीनकौलिकः ॥ १६९ ॥ वामिनःकौलिकानान्तुमुखेतिष्ठन्तिदेवताः ॥ न

यन्तितेतुतङ्गन्धंसतुवन्द्योभवेद्द्विजः ॥ १७० ॥ देवतायस्यनमुखेसाक्षाचारण्डा लएवसः ॥ सर्वसिद्धिकरीपैष्टीगौडीभोगप्रदायिनी ॥ १७१ ॥ माध्वीमुक्तिक रीज्ञेयाद्राक्षीराज्यकरीमता ॥ विद्याप्रदैक्षवीप्रोक्ताखार्ज्जूरीरिपुनाशिनी ॥ १७२ ॥ तालजास्तम्भनेशस्तापनसाख्याशुभप्रदा ॥ नालिकेरोद्भवाश्रीदा निम्बजारोगनाशिनी ॥ १७३ ॥ मधूकजाज्ञानकरीमैरेयापापनाशिनी ॥ य त्सानन्दंरुचिकरंसामोदंचमनोहरम् ॥ १७४ ॥ मद्यंतदुत्तमंदेवादेवताप्रीतिका रकम् ॥ मद्यंमांसंचविजयामष्टगन्धैर्विमिश्रयेत् ॥ सम्मर्द्यवटिकाःप्राग्वज्जलेदे यास्ततोर्चयेत् ॥ १७५ ॥ धत्तूरबीजंविजयाजातीपत्रंफलंतथा ॥ अकारकरभो वत्सवृक्षस्यचतुवल्कलम् ॥ १७६ ॥ मद्यंचभागवृद्धांशंमर्दयित्वावटीकृतम् ॥ अयंविन्दुरचाष्टगन्धाभिधानोदेवताप्रियः ॥ १७७ ॥ गुडमिश्रेणतक्रेणतथा चमधुभाजिना ॥ पूजांविप्रगणःकुर्य्यादेतत्कर्म्मनलोपयेत् ॥ १७८ ॥ प्रमा दाद्यदिलोप्येतदेवताशापमाप्नुयात् ॥ विजयायाद्रवैर्वाथाभावेतर्पणमाचरे त् ॥ १७९ ॥ यथाहिफेनभुक्चापितंविनाव्याकुलोभवेत् ॥ तथाकौलिकव मानांमन्त्रदेवाःश्रमातुराः ॥ १८० ॥ विनामद्येनमांसेनसाधकंपीडयन्तिहि ॥ ताभ्यांभोगंचभक्तेभ्योमन्त्रायच्छन्तितंविना ॥ १८१ ॥ निष्फलाएवजाय न्तेभ्रमयन्तिचसाधकम् ॥ तस्मात्पतन्तिनोवामेक्षुद्राअपिविचारतः ॥ १८२ ॥ मांसन्तुत्रिविधंप्रोक्तंखभूजलचरोद्भवम् ॥ यथासम्भवमेकैकंतर्प्पणायप्रयोजये त् ॥ १८३ ॥ हन्यान्मन्त्रेणचानेनअभिमन्त्र्यपशुन्तथा ॥ गन्धपुष्पाक्षतैःपू जाचान्यथानरकंव्रजेत् ॥ १८४ ॥ शिवाकृतमिदंपिण्डमतस्त्वंशिवताङ्गतः ॥ उद्बुध्यस्वपशोत्वंहिनाशिवस्त्वंशिवोह्यसि ॥ १८५ ॥ ब्रह्मास्यात्सलिलेवि ष्णुर्गन्धेरुद्रश्चतद्रवे ॥ परमात्मातदानन्देतस्मात्सेव्यमिदंप्रिये ॥ १८६ ॥ मांसाभावेतुलशुनमार्द्रकंनागरन्तुवा ॥ पलाण्डुंवाथवटकामसूराणान्तथै च ॥ १८७ ॥ मत्स्यमांसविहीनेनमद्येनापिचतर्पयेत् ॥ नकुर्य्यान्मांसमत्स्या भ्यांविनाद्रव्येणपूजनम् ॥ १८८ ॥ पिशितन्तिलमात्रन्तुतिलार्धमपिबिन्दु ना ॥ नराणांदेवताभावोन्यथाप्रेतविभावनम् ॥ १८९ ॥ ब्राह्मणैःकौलिकैःपे यंसर्वक्षत्रैरणागमे ॥ वैश्यैर्गोलम्भनेपेयंशूद्रैःस्त्रीरतिकर्म्मणि ॥ १९० ॥ दे

वोन्पितॄन्समभ्यर्च्यशक्तिशास्त्रोक्तवर्त्मना ॥ गुरुंस्मरन्पिबेन्मद्यंखादेन्मांसंन दोषभाक् ॥ १९१ ॥ ब्रह्मध्यानस्यस्थैर्य्यार्थेदेवतातृप्तिहेतवे ॥ सेवेतमधुमांसा नितृप्तयेचेत्सपातकी ॥ १९२ ॥ मत्स्यमांसवसादीनां पदार्थानांनिषेवणा त् ॥ यागकालंविनान्यत्र समहापातकीभवेत् ॥ १९३ ॥ यथाक्रतुषुविप्राणां सोमपानंनदूषितम् ॥ मद्यपानंचकौलानां पूजान्तेनविगर्हितम् ॥ १९४ ॥ श्रीगुरोःकुलशास्त्रेभ्यः सम्यग्विज्ञायवामिना ॥ पञ्चमुद्रानिषेव्यन्ते चान्यथा पतितोभवेत् ॥ १९५ ॥ आवृत्तिंगुरुभक्तिंच तथादेवादिपूजनम् ॥ वीरोत्सवं विनापानाद्देवताशापमाप्नुयात् ॥ १९६ ॥ दक्षयज्ञेयदादेवि त्वयात्यक्तंकले वरम् ॥ अहंगृहीत्वातत्स्कन्धे चितांप्रवेष्टुमुद्यतः ॥ १९७॥ वडवाग्नेःप्रवेशा र्थं यत्रयत्राभवत्सतु ॥ तत्रतत्रापिशक्रेण तूर्णंनिर्वापितोजलैः ॥ १९८ ॥ एवंपर्य्यटतोवर्षं प्रस्वेदोमेमहानभूत् ॥ तद्बिन्दुपातनिर्दग्धाधरणीयंभविष्य ति ॥ १९९ ॥ तदासम्प्रार्थितोविष्णुर्धरणीरक्षणायच ॥ सएवलघुभिर्बाणै स्त्वदङ्गानिसमाच्छिनत् ॥ २०० ॥ चतुराशीतिखण्डानि कृत्वासौपातयेद्भु वि ॥ वातेनपीडितश्चाहं यातोधर्म्मोखिलस्तदा ॥ २०१ ॥ विष्णुश्चप्रकटी भूयपादयोःपतितोमम ॥ उत्थाप्यचपरिष्वक्तस्तवशोकश्चविस्मृतः ॥२०२॥ तावद्ब्रह्मादयोदेवा नारदाद्यामहर्षयः ॥ सन्तुष्टुवुस्तदावाक्यं विष्णुःप्रोवा चपार्वति ॥ २०३ ॥ ज्ञानदोसिमहेशत्वं कथंमोहमुपागतः ॥ सत्याःशरीरेण सहप्रवेष्टुंहव्यवाहने ॥ २०४ ॥ अनुगच्छेत्पतिंनारी नपुमांस्तांचगच्छति ॥ इतिशास्त्रमनादृत्य कथंदेवविमोहितः ॥ २०५ ॥ एवंवदतिदेवेशे ब्राह्मणा मांहरिंतथा ॥ प्रोचुःश्लेषगिरोऽङ्गैस्तु सत्याश्चेदंधरातलम् ॥ २०६ ॥ स्थले

---

१ मांस व मद्यके खानेपीनेका दोष नरकनिवासादि कई जगह में कहचुके हैं और यहां कहते हैं कि दोष नहीं इसका अभिप्राय यह है, मांस मद्यादिकोंका त्यागही कराने के लिये उसके अङ्गीकार करनेका उपदेश है सो जानिलेना सज्जनोंका आचार प्रथमही कहागया है यहां पतित क्षुद्र चाण्डालादि विषयासक्तोंके हितके लिये वाममार्गादिकोंका उपदेशहै जिसमें किसी सूरतसे देवताओंकी भक्ति वेभी करें कहते हैं कि गुरुका स्मरण वा देवता और पितरों की पूजाकरके मांसादि खानेसे दोष नहीं, सो केवल देवताओंकी पूजा करानेके लिये कहाहै दोष तो होताही है परन्तु जे बिना पूजाकिये खाते हैं उनसे तो अधिकही देवपूजक लोगहोंगे ॥

स्थलेशवस्पर्शाद्ब्रह्मकर्म्मविवर्जितम् ॥ तस्याधरा पाःसंशुद्धिं विप्राणांनापि शुद्धताम् ॥ २०७ ॥ ब्राह्मवाक्यस्यसत्यत्वं यथाभवतितत्कुरु ॥ ततोध्यात्वा मयाप्रोक्तंसम्मतीकृत्यविष्णुना ॥ २०८ ॥ यत्रवेदक्रियाह्यस्ता तत्रतन्त्रंप्रव र्त्यताम् ॥ येविप्राःशापनिर्दग्धाः शब्दब्रह्मविवर्जिताः ॥ २०९ ॥ तेषांतुकु लधर्म्मोयं भुक्तिमुक्त्योस्तुसाधनम् ॥ येविप्राःपीठसञ्जाताः शापनिर्दग्धवि प्रताः ॥ २१० ॥ तेषांकुलेधिकारोयं मार्गस्यास्यप्रजायते ॥ तत्कुलेएवपूज्य त्वात्कौलीयपथउच्यते ॥ २११ ॥ वाममार्गस्ततोन्यूनस्तेषांयौक्षत्रवैश्यकौ ॥ यजमानौतयोस्तत्राधिकारःसमुदाहृतः ॥ २१२ ॥ सिद्धान्तीयस्ततोन्यून स्तत्रशूद्राधिकारता ॥ येदारम्पर्य्यमज्ञात्वा कौलधर्म्मेविशन्तिते ॥ २१३ ॥ निःस्वाःसन्ततिहीनाश्च रोगिणोनात्रसंशयः ॥ कौलज्ञानेह्यसिद्धोयः पत वैभोक्तुमिच्छति ॥ २१४ ॥ समहापातकीदेवि सर्वकर्म्मबहिष्कृतः ॥ समय चारहीनस्य स्वैरवृत्तेर्दुरात्मनः ॥ २१५ ॥ नसिद्धयःकुलंनश्येत्तत्संसर्गंनका येत् ॥ यःशास्त्रविधिमुत्सृज्य वर्ततेकामचारतः ॥ २१६ ॥ ससिद्धिमिहनाप्नो ति परत्रचपराङ्गतिम् ॥ लोकेभवतिनिन्द्यश्च वेदचैवतथैवसः ॥ २१७ ॥ कु लद्रव्याणिसेवेत योन्यदर्शनमाश्रितः ॥ तदङ्गरोमसङ्ख्यातभूतयोनिपुजा ते ॥ २१८ ॥ मद्येनस्खलितात्मायो नकिञ्चिदपिवेत्तिचेत् ॥ नध्यानंनत श्चर्य्यां नधर्म्मंनचसत्क्रियाम् ॥ २१९ ॥ नदेवंनगुरुर्नात्मविचारोयदिक लिके ॥ केवलंविषयासक्तः पतत्येवनसंशयः ॥ २२० ॥ लिङ्गत्रयविशेषज्ञः डाधारविभेदकः ॥ पीठस्थानानिचागत्य महायज्ञवनंश्रयेत् ॥ २२१ ॥ आ लाधारमात्रब्रह्मरन्ध्रंगत्वापुनःपुनः ॥ चिच्चन्द्रकुण्डलीशक्तिमुद्रयास्यात्सु शयः ॥ २२२ ॥ व्योमपङ्कजनिस्यन्दसुधापानरतोभवेत् ॥ मधुपानमिदं क्तमितरेमद्यपायिनः ॥ २२३ ॥ पुण्यापुण्येउभेछित्त्वा ज्ञानखड्गेनयोगवित् परेलयेत्सदाचित्तं पलाशीसनिगद्यते ॥ २२४ ॥ मनसास्वेन्द्रियगणान् म्यात्मनियोजयेत् ॥ मत्स्याशीसजनःप्रोक्तः शेषाधीवरवृत्तयः ॥ २२५ ॥ प्रबुद्धातुयाशक्तिः प्रबुद्धाकौलिकस्यच ॥ शक्तिंतांसेवयेद्यस्तु सभवेच्छ सेवकः ॥ २२६ ॥ इत्येवंपञ्चमुद्राणां गुप्तंतत्त्वंमयोदितम् ॥ ज्ञात्वागुरुमुखा

म्यक् सेवतेसत्रमुच्यते ॥ २२७॥ अथपूजाप्रकारस्तु कथ्यतेवामिदुर्लभः ॥ आत्मस्थानमनुद्रव्यदेवशुद्धिम्प्रकल्पयेत् ॥ २२८ ॥ स्नानंसन्ध्याभूतशुद्धिःप्राणायामःप्रतिष्ठितिः ॥ प्राणानांमातृकान्यासादिकैःस्यादात्मशोधनम् ॥ २२९ ॥ सम्मार्ज्जनानुलेपाद्यैर्दर्प्पणोदरवत्कृतम् ॥ वितानधूपदीपाद्यैः स्थानशुद्धिरियंमता ॥ २३० ॥ ग्रथित्वामातृकावर्णैर्मूलमन्त्राक्षराणिच ॥ क्रमोत्क्रमत्रिरावृत्तिर्मन्त्रशुद्धिरियम्मता ॥ २३१ ॥ पूजाद्रव्याणिसम्प्रोक्ष्य मूलास्त्रेणविधानवित् ॥ दर्शयेद्धेनुमुद्रांच द्रव्यशुद्धिरियम्मता ॥ २३२ ॥ पीठेदेवंप्रतिष्ठाप्य सकलीकृत्यप्रोक्षयेत् ॥ अर्घ्योदकेनमूलेन दीपदानंप्रदर्शयेत् ॥ २३३ ॥ देवेशुद्धिंविधायेत्थं पश्चाद्यजनमाचरेत् ॥ सापूजाफलदाज्ञेया त्वन्यथानिष्फलाभवेत् ॥ २३४ ॥ मण्डलेनविनापूजा विफलापरिकीर्त्तिता ॥ तस्मान्मन्त्रेणविधिवल्लिखित्वातत्रपूजयेत् ॥ २३५ ॥ अखण्डमण्डलाकारं विश्वंव्याप्यव्यवस्थितम् ॥ त्रैलोक्यंमण्डितंयेन मण्डलंतत्सदाशिवम् ॥ २३६ ॥ उद्यानंचतुरस्रंस्यात्कामरूपंतुवर्त्तुलम् ॥ जलन्धरंचार्धचन्द्रं पूर्णं पूर्णगिरिर्मितः ॥ २३७ ॥ अभ्यर्च्यमण्डलंपश्चादाधारंस्थापयेत्क्रमात् । शङ्खमर्घ्यभोगपूजाबलिपात्राणिपञ्चच ॥ २३८ ॥ स्वदक्षिणादिवामान्तं स्थाप्याभ्यर्च्यासवेनच ॥ सम्पूर्य्यमन्त्रपूतेन कुलेश्वरि[1]विधानवित् ॥ २३९ ॥ तत्रमापप्रमाणंतु मद्यंमांसंचनिक्षिपेत् ॥ नष्टैःपर्य्युषितोच्छिष्टैर्दुर्गन्धैर्गन्धवर्ज्जितैः ॥ २४० ॥ हेतुभिःपरपात्रस्थैस्तर्प्पणंनिष्फलंभवेत् ॥ स्वादिष्टैश्चमशोतिक्तैर्द्रव्यैरमृतसन्निभैः ॥ २४१ ॥ मनोहरैश्चदेवीनां तर्प्पणंसफलंभवेत् ॥ असंस्कृतासुरापापा कलहव्याधिदुःखदा ॥ २४२ ॥ आयुःश्रीकीर्तिसौभाग्यधर्म्मविद्याविनाशिनी ॥ तस्मात्संस्कृत्य विधिवत्कुलद्रव्यंततोर्चयेत् ॥ २४३ ॥ सुसंस्कृतासुरारोगदुःखापदपहारिणी ॥ आयुःश्रीकीर्त्तिसौभाग्यधर्म्मविद्याविवर्धिनी ॥ २४४ ॥ अन्यथानरकंयाति दाताभोक्तानसंशयः ॥ विनाद्रव्या[2]धिवासेन नस्मरेन्नजपेत्तथा ॥ २४५ ॥ येस्मरन्तिमहामूढास्तेषां दुःखंपदेपदे ॥ नाशयेनविनामन्त्रो नमन्त्रेणविनाशयः ॥ २४६ ॥ वीक्षणस्पर्शनव्या

१ हे कुलेश्वरि, यह सम्बोधन पद है २ द्रव्यों के संस्कार किये विना ॥

नमन्त्रमुद्राविशोधनैः ॥ द्रव्यंतर्प्पणयोग्यंस्याद्देवताप्रीतिकारकम् ॥ २४७ ॥ आवाहयेदग्निसूर्य्यचन्द्रार्णप्रणवोद्भवाः ॥ चतुर्नवतिसङ्ख्याश्च कलाआवाह्यपूजयेत् ॥ २४८ ॥ तत्रेष्टदेवतांध्यायञ्श्लोकार्थंप्रविचारयेत् ॥ श्लोकानेतान्पठेत्पश्चात्तान्ब्रवीमिश्रृणुप्रिये ॥ २४९ ॥ अखण्डैकरसानन्दकरेपरसुधात्मनि ॥ स्वच्छन्दस्फुरणाकारे निधेह्यमृतरूपिणि ॥ २५० ॥ अकुलस्थामृताकाले शुद्धिज्ञानकरेपरे ॥ अमृतत्वंनिधेह्यस्मिन्वस्तुनिक्लिन्नरूपिणि ॥ २५१ ॥ तद्रूपिणिकरस्पर्शंकृत्वा भूतस्वरूपिणी ॥ भूत्वामृतापराकारे मयिविस्फुरणंकुरु ॥ २५२ ॥ ॐक्लींह्रौंजूंसइत्युक्त्वा अमृतेअमृतोद्भवे ॥ अमृतेश्वरिअमृतवर्षिणीतिपदंवदेत् ॥ २५३ ॥ अमृतंस्रावययुगं स्वाहान्तोद्रव्यशुद्धये ॥ अमृतेशीमनुःप्रोक्तः पञ्चत्रिंशद्भिरक्षरैः ॥ २५४ ॥ त्रिधानिमन्त्र्यप्राग्रुक्तदीपनीमन्त्रतस्त्रिधा ॥ संस्पृष्ट्वार्चनपात्रन्तु पूजयेद्धेनुमुद्रया ॥ २५५ ॥ ब्रह्माण्डखण्डसम्भूतागमशेषरसंभृतम् ॥ आयुरिदंमहामद्यपीयूषरसमावह ॥ २५६ ॥ शुद्धद्रव्येणतेनापि गन्धपुष्पाक्षतैरपि ॥ न्यासोक्तसर्वमन्त्रैश्च स्वात्मानंप्लावयेत्तथा ॥ २५७ ॥ मूर्द्ध्निश्रीगुरुपङ्क्तिंच मूलाधारेचपादुकाम् ॥ दिव्यौघंतर्प्पयेदादौ आदिनाथःसदाशिवः ॥ २५८ ॥ ईश्वरोरुद्रविष्णूच ब्रह्मापत्नीयुतास्त्विमे ॥ भवन्तिद्वादशततःसिद्धौघास्तान्प्रतर्प्पयेत् ॥ २५९ ॥ सनकाद्याश्चचत्वारः सुजातश्चारुभूषितः ॥ सनत्कुमारोव्यासश्च वामदेवःशुकस्तथा ॥ २६० ॥ दत्तात्रेयो रैवतको द्वादशैवतुमानवान् ॥ तर्प्पयेत्परनृसिंहंचमहेशंभास्करंतथा ॥ २६१ ॥ महेन्द्रंमाधवंविष्णुंनामान्तेतुप्रयोजयेत् ॥ महाशिवंचसिद्धौघे मानवौघेसदाशिवम् ॥ २६२ ॥ शिवंतुपरमंदिव्यं पीठपूजांततश्चरेत् ॥ ततआवाहयेद्देवीं मन्त्राभ्यांपूजयेत्तथा ॥ २६३ ॥ महापद्मवनान्तस्थे कारणानन्दविग्रहे ॥ सर्वभूतहितेमातराद्येहिपरमेश्वरि ॥ २६४ ॥ देवेशिभक्तिसुलभे सर्वाभरणसंयुते ॥ यावत्त्वांपूजयामीह तावत्त्वंसुस्थिराभव ॥ २६५ ॥

---

१ ह्रींअग्निसूर्य्यचन्द्ररूपवर्णप्रणवोद्भवाभ्यश्चतुर्नवतिकलाभ्योनमः ॥ इति पूजामन्त्रः

२ ॐक्लींह्रौंजूंसः अमृतेअमृतोद्भवेअमृतेश्वरि अमृतवर्षिणि अमृतंस्रावयस्रावयस्वाहा ॥

ध्यात्वामुद्राप्रदर्श्याथ गन्धपुष्पाक्षतादिभिः॥ चिन्मयस्याप्रमेयस्य निर्गुण
स्याशरीरिणः॥ २६६॥ साधकानांहितार्थाय ब्रह्मणोरूपकल्पना॥ लिङ्ग
स्थण्डिलवह्न्यप्सुफलकेमूर्द्ध्निमण्डले॥ २६७॥ मूर्त्तौकुड्मेचहृदये पूजादश
सुकीर्तिता॥ अरूपंरूपिणंकृत्वा कर्म्मकाण्डेरताजनाः॥ २६८॥ गवांसर्वा
ङ्गजंक्षीरं स्रवेत्स्तनमुखाद्यथा॥ तथासर्वगतोदेवः प्रतिमादौविराजते॥
२६९॥ आदिरूप्याच्चसर्वस्य पूजायाश्चविशेषतः॥ साधकस्यचविश्वासा
त्सान्निध्यं देवतालभेत्॥ २७०॥ गवांसर्वशरीरस्थं नकरोत्यात्मपोषणम्॥
सुकर्म्मरचितंचाज्यं पुनस्तामपिपोषयेत्॥ २७१॥ एवंसर्वशरीरस्थं सर्प्पिर्व
त्परमेश्वरः॥ उपासनांविनादेवो नददातिफलंनृणाम्॥ २७२॥ संकलीकृ
त्यतत्प्राणांस्तदीयानीन्द्रियाणिच॥ प्रतिष्ठाप्यार्चयेद्देवि अन्यथानिष्फलंमत
म्॥ २७३॥ मन्त्रहीनंक्रियाहीनं यन्त्रहीनंचयद्भवेत्॥ लंक्षंसाधयतेसर्व
हीनमङ्गंयथातथा॥ २७४॥ देवस्यमन्त्ररूपस्य यन्त्रव्याप्तिमजानताम्॥
कृतार्चनादिकंसर्वं व्यर्थंभवतिशाम्भवि॥ २७५॥ वामेकौलेयन्त्रपीठे मूर्त्ति
स्थानेचदक्षिणे॥ वैदिकेतुस्वयंजातं पूजितंसुखदायकम्॥ २७६॥ अना
दिवैदिकंयस्मात्स्वयम्भूस्तत्रदेवता॥ गम्यत्वान्नश्वरत्वाच्च तादृक्तान्त्रिकपू
जनम्॥ २७७॥ कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात्॥ यन्त्रमि
त्याहुरेतस्मिन्देवस्तुपरिपूजितः॥ २७८॥ दक्षिणावर्त्ततोलेख्यं यन्त्रंदक्षि
णपूजने॥ वामक्रमेणकौलादौ गुप्तमेतत्प्रकाशितम्॥ २७९॥ षोडशैरुप
चारैस्तु साङ्गंसावरणंयजेत्॥ महान्षोढादिनान्सर्वान् गन्धपुष्पाक्षतादिभिः॥
२८०॥ प्रणवादिनमोन्तेन तत्तन्नाम्नासमर्चयेत्॥ अथागमोक्तमार्गेण तर्प
येद्दधिबिन्दुभिः॥ २८१॥ अंगुष्ठानामिकाभ्यांतु नखैर्निश्शब्दमुत्क्षिपन्॥
अपात्रस्येदमशौच तर्प्पयेद्देवतामुखम्॥ २८२॥ सकृत्तर्प्पणमुत्सृज्य जप्त्वा
मूलंचपादुकाम्॥ अन्तःशक्तिमनुस्मृत्य तर्प्पयेद्देहदेवताम्॥ २८३॥ अंगु
ष्ठभैरवस्थानं चण्डिकायास्त्वनामिका॥ तस्मात्ताभ्यांतर्प्पणीयं यन्त्रंतत्तुत
योःप्रियम्॥ २८४॥ अंगुष्ठमध्यमाभ्यांच वश्यकर्म्मणितर्पयेत्॥ तर्जन्यंगुष्ठ
योगेन तर्प्पयेदाभिचारिके॥ २८५॥ कनिष्ठांगुष्ठयोगेन स्तम्भकर्म्मणि

र्पयेत् ॥ एवंसन्तर्प्यदेवादीन्गुरुपङ्क्तिंप्रपूजयेत् ॥ २८६ ॥ कराभ्यांचिन्मुद्रांसमधुनृकपालं च दधतीं सृतस्वर्णप्रख्यामरुणकुसुमालेपवसनाम् ॥ कृपापूर्णापाङ्गीमरुणनयनामम्बरकचामुपेतां सिद्धौघैर्यजति गुरुपङ्क्तिं कृतमतिः ॥ २८७ ॥ एवंसम्पूज्यधूपंच दीपंनैवेद्यमेवच ॥ कदल्यादिफलान्येवं ताम्बूलंचसमर्पयेत् ॥ २८८ ॥ अवश्यमादौवामादौ कुर्य्याद्वटुकपूजनम् ॥ मार्गेस्मिन्वटुकोमुख्यः सुराद्यन्तेननिर्मितम् ॥ २८९ ॥ विनातंतुगृह्णीतदेवास्तस्मात्तदर्चनम् ॥ अपूज्यवटुकंयस्तु महादेवंप्रपूजयेत् ॥ २९० ॥ तस्यपूजाफलंनास्ति वटुकश्चप्रकुप्यति ॥ सगणंपूजयेत्तस्माद्गन्धपुष्पासवामिषैः ॥ २९१ ॥ तत्तन्मन्त्रैर्विधानेन देवताप्रीतिमाप्नुयात् ॥ ततोबलिंक्षेत्रपत्ये दद्यादस्यमनुंशृणु ॥ २९२ ॥ तारद्वयंततोदेवीपुत्रोक्त्वावटुकेतिच नाथेतिकपिलजटाभारभासुरपिङ्गल ॥ २९३ ॥ त्रिनेत्राग्निज्वालामुख इमांपूजांबलिंवदेत् ॥ गृह्णगृह्णहुंफट्स्वाहा पट्चत्वारिंशदर्णकः ॥ २९४ ॥ मन्त्रमेवंसमुच्चार्य्य ततःश्लोकंपठेदिमम् ॥ बलिदानेनसन्तुष्टो वटुकःसर्वसिद्धिदः ॥ २९५ ॥ शान्तिंकरोतुमेनित्यं भूतवेतालसेवितः ॥ तारत्रयंसर्वपूर्वंभ्यसन्ताश्चवदेत्क्रमात् ॥ २९६ ॥ योगिनीडाकिनीशाकिनीत्रैलोक्यनिवासिनी । नमश्चैवइमांपूजां बलिंगृह्णतइत्यपि ॥ २९७ ॥ हुंफट् चैवतथाप्रोक्त्वाचान्तेस्वाहापदंवदेत् ॥ चतुश्चत्वारिंशदर्णो मन्त्रोयंपरिकीर्तितः ॥ २९८ ॥ याकाचिद्योगिनीरौद्रा सौम्याघोरतरापरा ॥ खेचरीभूचरीव्योमचरीप्रीतासदास्तुमे ॥ २९९ ॥ तारत्रयंवदेत्सर्वभूतेभ्यःसर्वएवच ॥ पश्चाद्भूतपतिभ्यो हृदन्तःसप्तदशाक्षरः ॥ ३०० ॥ भूतायेविविधाकारा दिव्यभौमान्तरिक्षगाः ॥ पातालतलसंस्थाश्च शिवयोगेनभाविताः ॥ ३०१ ॥ ध्रुवाद्यास्त्विन्द्राद्याश्च व्यवस्थिताः ॥ तृप्यन्तुप्रीतमनसो भूताग्रहास्त्विमे... सत्यसन्धाश्च इन्द्राद्याश्चव्यवस्थिताः ॥ तृप्यन्तुप्रीतमनसो भूतागृह्णन्त्विमं

१ ॐ ॐ देवीपुत्रवटुकनाथकपिलजटाभारभासुरपिङ्गलत्रिनेत्राग्निज्वालामुख इमांपूजांबलिंगृह्णगृह्णहुंफट्स्वाहा २ ॐ ॐ ॐ सर्वयोगिनीभ्यःसर्वडाकिनीभ्यःसर्वशाकिनीभ्यस्त्रैलोक्यनिवासिनीभ्योनमः इमांपूजांबलिंगृह्णतहुंफट् स्वाहा ३ ॐ ॐ ॐ सर्वभूतेभ्यः सर्वभूतपतिभ्योनमः ॥

बलिम् ॥ ३०२ ॥ तारत्रयंतथैह्येहि देवीपुत्रवटुकना ॥ थोच्छिष्टहारिणेहंहूं हंहूंवारद्वयंवदेत् ॥ ३०३ ॥ क्षेत्रपालेतिसर्वेति विघ्ननाशययुग्मकम् ॥ सर्वोपचारसहितामिमांपूजांबलिंवदेत् ॥ ३०४ ॥ गृह्णगृह्णहुंफट्स्वाहा चतुष्पष्ट्यक्षरोमनुः ॥ क्षेत्रपालस्यसम्प्रोक्तः सर्वसिद्धिविधायकः ॥ ३०५ ॥ वसामि तस्यक्षेत्रेस्मिन् क्षेत्रपालस्यकिङ्करः ॥ प्रीतोयंबलिदानेन सर्वरक्षांकरोतुमे ॥ ३०६ ॥ ॐकारत्रितयंहुंश्रीं ह्सौंचह्रींह्रींवदेत्ततः ॥ हुंयुगान्तेभैरवाधिष्ठिता याक्षोवदेदिति ॥ ३०७ ॥ भ्यानन्दहृदयान्मन्त्रसिद्धयेवतरद्वयम् ॥ क्षेत्रपालमहाक्षेत्रपालायवौषड्हुमिति ॥ ३०८ ॥ अयमेकोनपञ्चाशदक्षरश्चमनुस्स्मृतः ॥ श्रेष्ठस्यक्षेत्रपालस्य महाप्रीतिकरःपरः ॥ ३०९ ॥ तारत्रयंवदेत्पश्चादमुकक्षेत्रपालाय ॥ राजराजेश्वरइमांपूजांबलिमतःपरम् ॥ ३१० ॥ गृह्णयुग्मंदिठान्तोयं मन्त्रःप्रोक्तोखिलेष्टदः ॥ राजराजेश्वराख्यस्य दैवतस्यसमर्पने ॥ ३११ ॥ अनेनबलिदानेन चतुर्वर्गसमन्वितः ॥ राजराजेश्वरोदेवो मे प्रसीदतुसर्वदा ॥ ३१२ ॥ वटुकायबलिंपश्चादुत्तरेयोगिनीबलिम् ॥ पूर्वेभूतबलिंदद्यात् क्षेत्रपालायदक्षिणे ॥ ३१३ ॥ राजराजेश्वरंमध्ये पूजयित्वाहरेद्बलिम् ॥ अंगुष्ठानामिकाभ्यान्तु वटुकस्यभवेद्बलिः ॥ ३१४ ॥ तर्जनीमध्यमानामांगुष्ठैःस्याद्योगिनीबलिः ॥ अंगुलीभिश्चसर्वाभिर्दद्याद्भूतबलिंद्विजः ॥ ३१५ ॥ अंगुष्ठतर्जनीभ्यांतु क्षेत्रपालबलिर्भवेत् ॥ अंगुष्ठमध्यमाभ्यांतु राजराजेश्वरस्यच ॥ ३१६ ॥ वटुकादीन्समर्च्यैवं कुलदीपान्प्रदर्शयेत् ॥ देवभक्तःसुपिष्टेन कुर्य्याद्द्वदांगुलोन्नतान् ॥ ३१७ ॥ दीपान्डमरुकाकारांस्त्रिकोणानतिशोभनान् ॥ कर्षाज्यग्राहिणःकुर्य्यान्नवसप्ताथपञ्चच ॥ ३१८ ॥ अन्तस्तेजोबहिस्तेज एकीकृत्वामितप्रभान् ॥ त्रिधादेव्युपरिभ्राम्य कुलदीपंनिवेदयेत् ॥ ३१९ ॥ समस्तचक्रैश्चक्रेशियुतेदेविनवात्मिके ॥ आरात्रि

---

१ ॐ ॐ ॐ एह्येहि देवीपुत्रवटुकनाथोच्छिष्टहारिणे हं हूं हं हूं हं हूं हं हूं क्षेत्रपालसर्वविघ्ननाशयनाशयसर्वोपचारसहितामिमां पूजां बलिंगृह्णगृह्णहुंफट्स्वाहा २ ॐ ॐ ॐ हुं श्रीं ह्सौं ह्रीं ह्रीं हुं हुं भैरवाधिष्ठितायाक्षोभ्यानन्दहृदयान्मन्त्रसिद्धयेऽवतरावतरक्षेत्रपालमहाक्षेत्रपालायवौषड्हुम् ३ छःरत्ती के माशासे सोलहमाशेका और आठरत्ती के माशे मे बारह माशे का कर्ष होता है उसीको तोला कहते हैं ॥

कमिदंदेवि गृहाणममसिद्धये ॥ ३२० ॥ कुलदीपान्प्रदर्श्याथ शक्तिपूजास माचरेत् ॥ गुरुपादरजोजोषी श्रद्धाभक्तिसमन्वितः ॥ ३२१ ॥ स्वशक्तिंवीर शक्तिंच दीक्षितांगुरुरूपिणीम् ॥ पाययित्वापिबेन्मद्यं चेतिशास्त्रस्यनिश्च यः ॥ ३२२ ॥ अनिवेद्यतुयःशक्त्यै कुलद्रव्यंनिषेवते ॥ पूजनंनिष्फलंतस्य देवतानप्रसीदति ॥ ३२३ ॥ चाण्डालीचर्मकारीच मातङ्गीपुष्कसीतथा ॥ श्वपचीखटकीचैवकैवर्त्तीविश्वयोनिका ॥ ३२४ ॥ कुलाष्टकमिदंप्रोक्तमकु लाष्टकमुच्यते ॥ कुडुकीसौत्रिकीचापि शस्त्राजीवातुरञ्जकी ॥ ३२५ ॥ गायकी रजकी शिल्पी कौशिकी च तथाष्टमी ॥ स्त्रियोमन्त्रसमायुक्ताः समयाचारपालिकाः ॥ ३२६ ॥ कुर्य्यात्सद्यस्तुसंस्कारं मन्त्रैश्चैवपृथक् पृथक् ॥ पूजयेत्कुलमार्गस्थस्तत्रशक्तिमनुस्मरन् ॥ ३२७ ॥ कुमारी वात्रतस्थावा योगमुद्राधरापिवा ॥ पूजाकालेस्वतःप्राप्ता सापूज्यासहसाबु धैः ॥ ३२८ ॥ उक्तजात्यङ्गनाभावे चतुर्वर्णाङ्गनांयजेत् ॥ सुरूपातरुणीशा न्तानुकुलामुदिताशुचिः ॥ ३२९ ॥ रोगहीनाभक्तियुक्ता मूढशास्त्रोपजीवि नी ॥ अलोलुपसुशीलाच स्मितास्याप्रियवादिनी ॥ ३३० ॥ गुरुदैवतभक्ता तु सुचित्ताकौलिकप्रिया ॥ विमत्सराविशेषज्ञा देवताराधनोत्सुका ॥३३१॥ दुर्गन्धादुःखितामूर्खा वृद्धोन्मत्तारहस्यभित् ॥ कुतर्काकुत्सितास्तब्धा निर्ल ज्जाकलहप्रिया ॥ ३३२ ॥ विरूपोन्मार्गगादुष्टा पंग्वन्धाविकृतानना ॥ ईदृ शींमन्त्रयुक्तांहिस्त्रियं योगीविवर्ज्जयेत् ॥ ३३३ ॥ ततोर्चनादिकंसर्वं मन्त्रो दकपुरःसरम् ॥ इतःपूर्वादिमनुना मन्त्री देव्यैसमर्प्पयेत् ॥ ३३४ ॥ शेषंद क्षिणवत्कुर्य्यात्तदुच्छिष्टादिकंपुनः ॥ शेषंकामंततोदेयं शेषिकायैसकथ्य ते ॥ ३३५ ॥ ऐंहृदुच्छिष्टचाण्डालिनिमातङ्गिपदंवदेत् ॥ सर्ववशङ्करिस्वा हाचैकविंशतिवर्णकः ॥ ३३६ ॥ मन्त्रेणानेननिर्माल्यं शेषिकायैसमर्प्पयेत् ॥ देवीमुच्छिष्टमातङ्गीं ध्यायेल्लोकैकमोहिनीम् ॥ ३३७ ॥ वीणावाद्यवि नोदगीतनिरतांनीलांशुकोल्लासिनीं बिम्बोष्ठींनवयावकाढ्यचरणामाकर्णके शांशुकाम् ॥ हृद्यागांसितशङ्खकुण्डलधरांमाणिक्यभूषोज्ज्वलां मातङ्गीप

---

१ ऐंनमः उच्छिष्टचाण्डालिनिमातङ्गि सर्ववशङ्करिस्वाहा ॥ इति मन्त्रः ॥

णतोस्मिसुस्मितमुखींदेवींशुकश्यामलाम् ॥ ३३८ ॥ ततःश्रीगुरुरूपाय साक्षात्परशिवायच ॥ कराभ्यांपात्रमुद्धृत्यसद्वितीयंसमर्पयेत् ॥ ३३९ ॥ सुसम्प्रदायसंयुक्तैर्वीरैश्चसहपूजयेत् ॥ अन्योन्यंचिह्नितंकृत्वा पिबेत्तत्तदनुज्ञया ॥ ३४० ॥ सव्यतोद्धृत्यपात्रंतु मुद्रांकृत्वापसव्यतः ॥ यथाविधिद्वितीयेन गृह्णीयान्मन्त्रमुच्चरेत् ॥ ३४१ ॥ इदंपवित्रममृतंपिबामिभवभेषजम् ॥ मद्यपानसमुच्छेदेकारणंभैरवोदितम् ॥ ३४२ ॥ चित्तस्वातन्त्र्यसारत्वात्तस्यानन्दमयत्वतः ॥ तन्मयत्वाच्चभावानां भावाश्चान्तरितारसे ॥ ३४३ ॥ स्वस्वातन्त्र्यविकाशाय सुरसस्तेनपीयते ॥ तस्मादिमांसुरांदेवीं पूर्णकामः पिबाम्यहम् ॥ ३४४ ॥ मन्त्रेणानेनभोदेवा मूलमन्त्रेणमन्त्रवित् ॥ अनाकुलमनाकुर्य्यान्मधुपानंशनैःशनैः ॥ ३४५ ॥ पिशितंमाषमात्रंतु मद्यंचुलुकसम्मितम् ॥ स्वीकार्य्यमादौगुरुणा शिष्येभ्यःशेषदोभवेत् ॥ ३४६ ॥ आदायगुरुणादत्तां सद्वितीयांसुरांपिबेत् ॥ श्रीगुरुज्येष्ठपूज्यानां पुरतश्चोपविश्यच ॥ ३४७ ॥ नकदाचित्पिबेन्मद्यं निर्मन्त्रंनपिबेत्तथा ॥ विनामन्त्रंपिबेन्मद्यं समुरापोनिगद्यते ॥ ३४८ ॥ स्वात्ममूलत्रिकोणस्थे कोटिसूर्य्यसमप्रभे ॥ कुण्डल्याकृतिचिद्रूपे हुनेद्द्रव्यंसमन्त्रकम् ॥ ३४९ ॥ अनन्तपात्रभरितमिदंतत्परमामृतम् ॥ पराहन्तामयेवह्नौ होमस्वीकारलक्षणम् ॥ ३५० ॥ गुरुंदैवतमन्त्राणामैक्यंसञ्चिन्तयेद्धिया ॥ यावदुल्लासपर्य्यन्तमुपदेशैःपिबेन्मधु ॥ ३५१ ॥ भोजनान्तेविषंमद्यं मद्यान्तेभोजनंविषम् ॥ अमृतंतद्विजानीयाद्यदनेनसमंपिबेत् ॥ ३५२ ॥ चर्वणेनयुतंमद्यममृतंकथितंसदा ॥ चर्वणेनविनापानं केवलंविषभक्षणम् ॥ ३५३ ॥ पानंतुत्रिविधंप्रोक्तं दिव्यवीरपशुक्रमैः ॥ दिव्यंदेव्यग्रतःपानं वीरंमुद्रासनेकृतम् ॥ ३५४ ॥ स्वेच्छयापशुवत्पीतं पशुपानमितीरितम् ॥ वक्ष्येथकौलिकाचारं लोकद्वयफलप्रदम् ॥ ३५५ ॥ पात्रमेलापकंकर्म्म प्रोच्यतेसख्यकारकम् ॥ तत्रातानपितामित्रं पात्रमेलापकावृतम् ॥ ३५६ ॥ अदीक्षितैरनाचारैरमन्त्रज्ञैरदैवतैः ॥ दूषकैःसमयेनष्टैः प्रपञ्चपथधारिभिः ॥ ३५७ ॥ ब्रह्मतेजोमुखेपात्रमेलनंनैवकारयेत् ॥ तत्पूजानिरतैःशान्तैः परद्रव्यपराङ्मुखैः ॥ ३५८ ॥ कुलोपदेशकुशलैः कुलमार्गप्रव

र्त्तकैः ॥ स्त्रीप्रियैःस्त्रीस्तुतैर्धन्यैःसुन्दरैर्मृदुवादिभिः ॥ ३५६ ॥ कुलमार्गैतिगुप्तै श्च विद्यावद्भिःसुरूपकैः॥ प्रयोगसिद्धैर्द्रव्याढ्यैर्भाग्यवद्भिश्चकामुकैः॥३६०॥ ब्रह्ममुक्तैश्राजमान्यैर्मिलितैर्देवयोगतः ॥ कुर्य्यात्पात्रस्यमेलापं सौख्यवृद्धिर्द्व योर्भवेत् ॥ ३६१ ॥ एकपात्रंनकुर्वीत यदिसाक्षात्कुलेश्वरः ॥ मन्त्राःपराङ्मु खायान्ति विघ्नाश्चैवपदेपदे ॥ ३६२ ॥ नदद्याद्भैरवायापि स्वपात्रंस्थितहेतु कम् ॥ यदिदद्याच्चमोहेन देवताशापमाप्नुयात् ॥ ३६३ ॥ आसनंभोजनंपात्र मन्यच्चशयनादिकम् ॥ अनभिज्ञैरनर्हैश्च सङ्करंनैवकारयेत् ॥ ३६४ ॥ म्नाय भेदेन नाकुर्य्यात्कौलिकैःपात्रमेलनम् ॥ पूर्वदक्षिणयोरैक्यमुदक्पश्चिमयो स्तथा ॥ ३६५ ॥ योगिभिर्योगिनीभिश्च प्रदत्तंपूर्णपात्रकम् ॥ समन्त्रपादु कामूलमन्त्रजप्तंपिबेत्ततः ॥ ३६६ ॥ कश्चिद्यदृच्छयाप्राप्तं मद्यपात्रंतुभक्ति तः ॥ आदायपूर्ववज्जप्त्वा पिबेत्तच्चगुरुंस्मरेत् ॥ ६६७ ॥ गुरुशक्तियुतानांच गुरुज्येष्ठकनिष्ठयोः ॥ स्वज्येष्ठस्यापिचोच्छिष्टं खादेन्नान्यस्यकर्हिचित्॥३६८॥ ज्येष्ठःकनीयसेयोज्यं नपुनर्ग्राहयेत्ततः ॥ शक्त्युच्छिष्टंपिबेन्मद्यं वीरोच्छिष्टंतु चर्वणम् ॥ ३६९ ॥ आत्मोच्छिष्टंनदातव्यं परकीयंनभक्षयेत् ॥ उच्छिष्टंभक्ष येत्स्त्रीणां नाभ्योनोच्छिष्टमर्पयेत् ॥ ३७० ॥ स्वस्यमेलापकस्यापि स्थापये त्तत्रमण्डलम् ॥ पात्रंततोर्चयेद्देवीं तर्पणादिसमाचरेत् ॥ ३७१ ॥ उत्थाप्या न्योन्यपात्रेच दद्यादन्योन्यहस्तयोः ॥ द्वयोरैक्यंस्मरेद्धयन्योन्यमितिपात्रमे लनम् ॥ ३७२ ॥ चक्रपूजांप्रवक्ष्यामि सर्वतन्त्रेषुगोपिताम् ॥ अभीष्टसिद्धि दांनातः परंकिञ्चिन्नविद्यते ॥ ३७३ ॥ सर्वेषामेवदेवानां प्रियाप्रोक्तेप्सितप्र दा ॥ वैदिकैरपिकर्त्तव्याभीष्टसिद्ध्यैपुरोहितम् ॥ ३७४ ॥ कृत्वातुकौलिकं देविपूर्णाःस्युस्तन्मनोरथाः ॥लक्ष्मीःकोलासुरंहत्वाशेषात्तद्रुधिरंपपौ॥३७५॥ पानमत्तातदाविर्भूयथेच्छंहसितातुमा ॥ ब्रह्मणाविष्णुनावापि मयापिप्रष्टु मिच्छता ॥ ३७६ ॥ तदाक्रुद्धामहालक्ष्मीर्भूप्रावन्तर्हिताभवत् ॥ निःश्रीकंस कलंजातं मुमूर्षुरिवदृश्यते ॥ ३७७ ॥ धर्म्मोनचलतेक्वापि नचतुष्यन्तिदेव ताः ॥ एवंवर्षशतेजाते ब्रह्माणंशरणंगताः ॥ ३७८ ॥ ब्रह्मापितत्रनिःश्रीको

१ स्त्रियोंका जूँठ न भोजन करे और न अपना जूँठ स्त्रियों को देवे ॥

दरिद्रइवदृश्यते ॥ प्रोक्तवन्तस्तुमुनयोविधेनिःश्रीकताकुतः ॥ ३७९ ॥ तदा विप्रकृतंहास्यं ब्रह्मणाबोधितंप्रिये ॥ ब्राह्म्यंतेजोमहदिदं विष्णुस्तूष्णीमुपस्थितः ॥ ३८० ॥ युष्मत्पक्षावरोधेन हसिताश्रीःशिवेनच ॥ तेनेयंकुपिताजाता गतातस्माद्रसातलम् ॥ ३८१ ॥ सर्वेश्रियोज्झिताविप्रा लोकेनिःश्रीकतातः ॥ तस्माद्विष्णुःशिवोहंच यूयंशक्रपुरोगमाः ॥ ३८२ ॥ नागाश्चपितरः सिद्धादिक्पालायक्षराक्षसाः॥आराधयन्तुतांदेवींस्तुवन्तुचमहास्तवैः॥३८३॥ ततःसम्मिलिताःसर्वे गताःश्रीशैलपर्वतम् ॥ किञ्चिच्छोभांश्रियो दृष्ट्वाचक्रुराराधनंततः ॥ ३८४ ॥ वैदिकैस्तान्त्रिकैर्मार्गैर्नानास्तोत्रैःप्रतुष्टुवुः ॥ एवंवर्षत्रयादूर्ध्वं प्रत्यक्षाश्रीर्व्यजायत ॥ ३८५ ॥ अपश्यच्चकृपादृष्ट्या सहासंवाक्यमब्रवीत् ॥ किमर्थंहासितंविप्रै र्देवैश्चाकुलितंकुतः ॥ ३८६ ॥ उपासनापुनःकस्माद्दुर्दर्शायाःकृतापुनः ॥ ततःसातुमयाप्रोक्ता सर्वंविश्वंत्वयाततम् ॥३८७॥ त्वत्सामर्थ्यंनजानन्ति हसन्तित्वांचकर्म्मणा ॥ एतद्बुद्ध्वामयाहास्यं कृतंहृयसाक्षिणि ॥ ३८८ ॥ प्रभावस्तुतवाज्ञातः सर्वैर्विप्रैःसुरासुरैः ॥ अतःपरंप्रसीदेशेलोकयात्रांचनिर्वह ॥ ३८९ ॥ इतिश्रुत्वाममवचस्तदाप्रोक्तंश्रियाकिल ॥ इयंसुरामेभगिनी तत्प्रधानन्तुपूजनम् ॥ ३९० ॥ येकरिष्यन्तिदेवस्य सदेवोमोदमेष्यति ॥ यथामायाप्रपञ्चोयं वृथाभवतिमांविना ॥ ३९१ ॥ समस्ताश्चतथापूजाश्चक्रपूजांविनावृथा ॥ इहलोकेभोगवाञ्छा देवतात्वंपरत्रचेत् ॥ ३९२ ॥ अपेक्षितंतदाकार्य्यं मन्त्रैवैचक्रपूजनम् ॥ सर्वदेवप्रियंगोप्यंतद्विधिंकथयाम्यथ ॥ ३९३ ॥ समस्तचक्रपूजासा अष्टधापरिकीर्तिता ॥ सहस्रोत्पतितेकार्ये कार्येवापूर्णताङ्गते ॥ ३९४ ॥ देवतोत्साहदिवसेकौलिकस्यागमेपिवा ॥ उमामहेश्वरेयोगे योगेवाशक्तिसङ्गमे ॥ ३९५ ॥ बलिराज्येकामदिनेचक्रपूजातिहर्षदा ॥ प्रदोषेवाभिजितिवानिशीथेवाष्टमीयुते ॥ ३९६ ॥ नवम्यांचेद्भवेद्योग उमामाहेश्वराभिधः ॥ भौमाष्टम्यांचतुर्दश्यां योगोयंशक्तिसङ्गमः ॥ ३९७ ॥ आश्विनस्यासितपक्षे त्रयोदश्यादिपञ्चच ॥ बलिराज्यमिदं प्रोक्तंयथेच्छाक्रीडनायतु ॥ ३९८ ॥ तत्कामदिनमित्याहुस्सोमवारेत्रयोदशी ॥ पूर्वस्मिन्दिवसेस्नात्वा देवीमभ्यर्च्यकामनाम् ॥ ३९९ ॥ कृ

त्वासङ्कल्पयेच्चक्रपूजांदद्याद्बलिंपशोः॥ तद्विधिंसम्प्रवक्ष्यामि चानुकल्पंप्रक ल्पयेत्॥ ४०० ॥ बलिस्तुत्रिविधःप्रोक्तस्तान्त्रिकःस्मार्तएवच ॥ वैदिकश्चे तितत्रादौ तान्त्रिकोष्टविधःस्मृतः ॥ ४०१ ॥ नरश्चमहिषःकोलश्छागोऽविः सारससस्तथा ॥ कपोतःकुक्कुटश्चेति सामान्यंपूर्वपूर्वतः ॥ ४०२ ॥ श्रेष्ठस्तत्रक लौदेविमहापीठेनरोबलिः ॥ कर्तव्यःसाधकेन्द्रेणसद्योयोतिचसुन्दरः॥४०३॥ धातुबद्धःकृष्णकूर्चोऽक्षेत्रादिरनुलोमजः ॥ मूल्याद्गृहीतोवापीष्टेदैवतैःस्व यमागतः ॥ ४०४ ॥ वर्षषण्मासमथवायथेच्छाचारपालितः ॥ सभवेद्बलि योग्यश्च नान्यश्चौरादिकाहृतः ॥ ४०५ ॥ महिषःपञ्चमादूर्ध्वं दशाधस्ता द्वनोद्भवः ॥ ग्रामजोपिमहाक्रूरो निरुक्तकृष्णैकवर्णकः ॥ ४०६ ॥ आरक्ता क्षश्चोर्ध्वशृङ्गो दीर्घपुच्छस्तुमांसलः ॥ एकवर्णोदेवतायावर्णरूपोगदोन्वि तः ॥ ४०७ ॥ साण्डःसशृङ्गोयूथेशोगन्धिमानौषधादिभिः ॥ विगन्धीकृत्य बलयेयोग्यः सर्वोत्तमस्त्वयम् ॥ ४०८ ॥ सर्वेषामेववर्णानां देवतानांतथैवच। अधिकारःप्रीतिदश्च यज्ञेप्येषविशिष्यते ॥ ४०९ ॥ मेषःसशृङ्गस्त्वजवच्छृ ङ्गहीनोपिकुत्रचित् ॥ अङ्गहीनोविहीनाण्डो बालोवृद्धोनशस्यते ॥ ४१० ॥ वर्षद्वयोर्ध्वचगृहे पालितोबलवत्तरः ॥ मांसभारात्तथानेन समोवैसारसोव रः ॥ ४११ ॥ नीलकण्ठच्छविःकण्ठे कपोतःपुष्टकन्धरः ॥ वर्षादूर्ध्वंगृहेपुष्टो बल्यर्थंयोग्यउच्यते ॥ ४१२ ॥ सर्वेषामग्रतोरौतियः प्रातर्बहुवर्णकः॥ मांसल स्त्वेकवर्णोवा ताम्रचूडोविशिष्यते ॥ ४१३ ॥ नरोद्विजैर्नहन्तव्यो विप्रेणम हिषस्तथा ॥ शूकरैःसमताहन्यात्कुक्कुटाबलयोखिलैः ॥ ४१४ ॥ कूष्माण्डंना रिकेलञ्चश्रीफलंचेक्षुरेवच ॥ वस्त्रसंवेष्टितंकृत्वाछेदयेच्छुरिकादिभिः ॥४१५ एषस्मार्तोबलिःप्रोक्तः धर्म्मशास्त्रानुगामिभिः ॥ पूर्वपूर्वत्रापिचोक्तो विशिष्टो देवतोषकः ॥ ४१६ ॥ यस्ययत्राधिकाभक्तिस्तेनतुष्यतिदेवता ॥ नियमैर्य यमैर्युक्तः सकलैर्मूर्त्तिरात्मनः ॥ ४१७ ॥ वैदिकंतुबलिंदद्यादोदनंस्विन्नमा वत् ॥ सरोचनमतिक्रूरंदैवतेवटकान्वितम् ॥ ४१८ ॥ बलिंसम्पूज्यविधिव न्धपुष्पाक्षतादिभिः ॥ तारंकालियुगंयज्ञेश्वरिलोहपदंवदेत् ॥ ४१९ ॥ ण्डायैनमइत्येष मन्त्रःषोडशवर्णकः ॥ अष्टोत्तरशतंजप्त्वा ततउत्थायसा

कः ॥ ४२० ॥ देवीरूपंपशुंध्यात्वा पुष्पंतस्मिन्विनिक्षिपेत् ॥ मन्त्रितंमूल
मन्त्रेण सपुष्पाक्षतचन्दनम् ॥ ४२१ ॥ यदासचालयेद्गात्रं गृहीतस्तुतदेच्छ
या ॥ यावन्नचालयेद्गात्रं पशुस्तावन्नहन्यते ॥ ४२२ ॥ उत्तराभिमुखोभूत्वा
वलिंपूर्वमुखंतथा ॥ निरीक्ष्यसाधकःपश्चादिमंमन्त्रमुदीरयेत् ॥ ४२३ ॥ पशु
स्त्वंबलिरूपेण ममभाग्यादुपस्थितः ॥ प्रणमामिततःसर्वरूपिणंबलिरूपिण
म् ॥ ४२४ ॥ चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम् ॥ चामुण्डाबलिरूपा
र्थ बलेतुभ्यंनमोस्तुते ॥ ४२५ ॥ यज्ञार्थेबलयःसृष्टाः स्वयमेवस्वयम्भुवा ॥ अत
स्त्वांघातयाम्यद्य तस्माद्यज्ञंविवर्द्धय ॥ ४२६ ॥ ॐश्रींह्रींश्रीमितिमन्त्रेण ब
लिंमत्स्वरूपिणम् ॥ चिन्तयित्वान्यसेत्पुष्पं कुम्भकेनास्यमस्तके ॥ ४२७ ॥
असेचत्वंचण्डिकायाः सुरलोकप्रसाधकः ॥ ह्रींह्रींखड्गेतिमन्त्रेण तंखड्गंपरि
पूजयेत् ॥ ४२८ ॥ मांहूंफडितिमन्त्रंतु जपन्सञ्छेदयेद्बलिम् ॥ एकेनैवप्र
हारेणच्छिन्नोदैवततुष्टये ॥ ४२९ ॥ प्रहारेपतितेशब्दः क्रियतेयदिनायदि ॥
वर्षस्याभ्यन्तरेवश्यं राज्यनाशःप्रजायते ॥ ४३० ॥ एवंदत्त्वाबलिंसम्यङ्नित्य
कर्म्मविधायच ॥ तृतीयेप्रहरेरामा नराश्चोर्ध्वंनिमन्त्रयेत् ॥ ४३१ ॥ अमुष्याः
प्रीतयेदेव्या मन्मनोरथसिद्धये ॥ चक्रपूजोत्सवार्थं त्वंश्वोमयामन्त्रिताह्य
सि ॥ ४३२ ॥ अष्टाधिकानिमन्त्र्यास्तु स्त्रियोन्यूनास्तुमत्कृते ॥ स्त्रीभ्यश्च
पुरुषान्यूना अधिकास्तेतुहानिदाः ॥ ४३३ ॥ सर्वकौलव्रतस्थाःप्राग्दक्षिणा
म्नायवर्जिताः ॥ भवन्तिदीक्षानिरता निमन्त्र्याश्चक्रपूजने ॥ ४३४ ॥ तस्यां
रात्रौतुसम्पूज्यदेवं स्वयमतन्द्रितः ॥ कुलशब्दंद्विधाप्रोक्त्वा कुलजेतिपिशा
चिनी ॥ ४३५ ॥ त्रयोदशार्णस्वाहान्तमष्टोत्तरसहस्रकम् ॥ जपेन्निशिततः
पश्येच्चक्रविघ्नंतथाशुभम् ॥ ४३६ ॥ विघ्नेदृष्टेनकर्त्तव्यं कार्यवाशान्तिपूर्वक
म् ॥ शान्तिर्गणेश्वरोहोमो ब्रह्मणांभैरवस्यच ॥ ४३७ ॥ ततोबहिर्बलिन्दद्या
दिमंमन्त्रमुदीरयेत् ॥ ॐनमश्चत्रिरुच्चार्य अमुकक्षेत्रपालक ॥ ४३८ ॥ एह्येहि
भगवन्पूजां गृह्णयुग्मंबलिंतथा ॥ भक्षयुग्मंचक्रविघ्नकरान् सुम्भययुग्मक

१ कुलकुलकुलजे पिशाचिनिस्वाहा २ ॐॐॐनमः अमुकक्षेत्रपालक एह्येहिभगवन्पूजां गृह्णगृह्णबलिंभक्षभक्षचक्रविघ्नकरान् सुम्भयसुम्भयहुंफट्स्वाहा ॥

म्॥४३९॥हुंफट्स्वाहासप्तचतुर्वर्णोमन्त्रःप्रकीर्त्तितः॥ दिनस्यकृत्यंनिर्वर्त्य सायंचक्रंप्रपूजयेत् ॥ ४४० ॥ अर्वाक्चक्रंस्वविद्यायास्तन्मध्ये स्थापयेद्घटम् ॥ मद्यपूर्णंतत्रदेवीमावाह्यार्चनमाचरेत् ॥ ४४१ ॥ नानाविधानिमांसानिह्यने कामत्स्यजातयः ॥ चतुर्विधानिभक्ष्याणि जयदैशापदंशकैः ॥ ४४२ ॥ भृतैः सम्यक्पूजयित्वा साङ्गांसावरणांसुरीम् ॥ शक्त्यश्चतथावीराः पूज्याःपुष्पाक्षतादिभिः ॥ ४४३ ॥ पूजागृहान्तरतास्त्रिकोणेभूगृहान्तरे ॥ उच्छिष्टभैरवंचोग्रगन्धपुष्पादिभिर्यजेत् ॥ ४४४ ॥ उच्छिष्टदोषोभविता चक्रपूजामहोत्सवे ॥ तद्दोषपरिहारार्थं भैरवंपूजयाम्यहम् ॥ ४४५ ॥ तारत्रयंतथोच्छिष्टभैरवैर्हृद्वयंतथा ॥ बलिंगृह्णयुगंहुंफट्स्वाहाद्वाविंशदक्षरः ॥ ४४६ ॥ अनेनबलिदानंतु पूजान्तेस्यप्रकल्पयेत् ॥ पूजागारंसमागत्य प्रणमेचक्रसंस्थितान् ॥ ४४७ ॥ गुरुःपात्रंसमादाय मद्यामृतयुतंकरे ॥ परिपिञ्चेत्सामयिकानितिशान्तिस्तवं पठेत् ॥ ४४८ ॥ जपन्तिदेव्याहरपादपङ्कजं प्रसन्नवामामृतमोक्षदायकम् ॥ अनन्तसिद्धान्तमतिप्रबोधकं नमामिसाकष्टकयोगिनीगुणम् ॥ ४४९ ॥ योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम् ॥ नमामिशिरसानाथं भैरवंभैरवीप्रियम् ॥ ४५० ॥ अनादिघोरसंसारध्वान्तविध्वंसकारिणे ॥ नमःश्रीनाथवेद्याय कुलौपधिविधायिने ॥ ४५१ ॥ आपदोदुरितंरोगाः समयाचारलङ्घनात् ॥ येसर्वेतेविनश्यन्तु दिव्यचक्रस्यमेलनात् ॥ ४५२ ॥ आयुरारोग्यमैश्वर्यंकीर्तिर्लाभःशुभंजयः ॥ कान्तिर्मनोरथश्चास्तु पान्तुसर्वाश्चदेवताः ॥ ४५३ ॥ सम्पूजकानांप्रतिपालकानां यमीन्द्रयोगीन्द्रतपोधनानाम् । विश्वस्यराष्ट्रस्यपरस्यराज्ञःकरोतुशान्तिम्भगवान्कुलेशः ॥ ४५४ ॥ नन्दन्तुसाधककुलान्यपिदर्शकाये सृष्ट्याजनाअथगुरुक्रमहान्वयाये ॥ नन्दन्तुसर्वकुलकौलरताःपराये त्वन्येविशेषपदभेदकशाम्भवाये ॥ ४५५ ॥ नन्दन्तुसिद्धगुरवस्तदनुक्रमौघा ज्येष्ठानुजाससमयिनोवटुकाःकुमार्यः ॥ षड्योगिनीप्रवरवीरकुलेप्रसूता नन्दन्तुभूमिपतिगोद्विजसाधुलोकाः ॥ ४५६ ॥ नन्दन्तुनीतिनिपुणानिरवद्यनिष्ठा निर्मत्सरानिरुपमानिरुपद्रवाश्च ॥ नित्यंनिरञ्जनरतागुरवोनितान्तशान्तागुणान्तमनसोहतशोकशङ्काः ॥ ४५७ ॥ नन्दन्तुयोग

निरताःकुलयोगयुक्ता आचार्यसामयिकसाधकपुत्रकाश्च ॥ गावोद्विजायुव तयोयतयःकुमार्यो नन्दन्तुभावनिरतागुरुभक्तियुक्ताः ॥ ४५८ ॥ नन्दन्तुसा धककुलान्यणिमाद्यनिष्ठाः शापाःपतन्तुसमयेद्विषियोगिनीनाम् ॥ साशा म्भवीस्फुरतुकापिसमाप्यवस्था यस्यांगुरोश्चरणपङ्कजमेवलभ्यम् ॥ ४५९ ॥ याश्चक्रक्रमभूमिकावसतयो नाडीषुयास्संस्थिता याःकामद्रुमरोमकूपनिल या यास्संस्थिताधातुषु ॥ उच्छ्वासोर्मितहृत्तरङ्गनिलया निःश्वासवाताश्चया स्तादेव्योरिपुपक्षभक्षणपरास्तृप्यन्तुकौलार्चिताः ॥ ४६० ॥ यादेव्यःकुल सम्भवाःक्षितिगता यादेवतास्तोयगा यानित्यंप्रथितप्रभाःशिखिगता यामा तरःस्वाश्रयाः॥ याव्योमामृतमण्डलामृतमया याःसर्वगाःसर्वदा तास्सर्वाःकु लमार्गपालनपराः शान्तिंप्रयच्छन्तुमे ॥ ४६१ ॥ ऊर्ध्वब्रह्माण्डकेवापुरिग गनतले भूतलेनिष्कलेवा पातालेवानलेवा सलिलपवनयोर्यत्रतत्रस्थिता वा ॥ क्षेत्रेपीठोपपीठादिषुचक्रतपदाधूपदीपादिमांसैः प्रीतादेव्यःसदानःक्ष तबलिविचयःपान्तुवीरेन्द्रवन्द्याः ॥ ४६२ ॥ ब्रह्मश्रीशेषदुर्गागुहवटुकगणा भैरवाःक्षेत्रपाला वेतालादित्यरुद्राग्रहवसुमुनयः सिद्धयोगुह्यकाद्याः ॥ भूता गन्धर्वविद्याधरऋषिपितरःकिन्नरा यक्षनागा योगीशाश्चारणाद्याःपुरुषमुनि सुराश्चक्रगाःपान्तुसर्वे ॥ ४६३ ॥ देहस्थाखिलदेवतागजमुखाः क्षेत्राधिपा भैरवा योगिन्योवटुकाश्चयक्षपितरोभूताःपिशाचाग्रहाः ॥ अन्येभूचरदिक्च राश्चखचरावेतालकाश्चेटकास्तृप्ताः स्युःकुलपुत्रकस्यपिबतः पानम्मदीयंवर म् ॥ ४६४ ॥ सत्यंवैगुरुदेवदेवपितरोवेदागमायोगिनीः प्रीताश्चेत्परदेवताय दिमवेद्देदाःप्रमाणंहिचेत् ॥ शाक्तेयम्परिदर्शनं भवतिचेदाज्ञाप्यमोघास्तिचे त् सत्यंवापिचकौलिको यदितदास्यान्मेजयःसर्वदा ॥ ४६५ ॥ तृप्यन्तु साधकास्सर्वेसमुद्राःसगणाधिपाः ॥ योगिन्यःक्षेत्रपालाश्चममदेहेव्यवस्थि ताः ॥ ४६६ ॥ शिवाद्यनिलपर्य्यन्तम्ब्रह्मादिस्तम्बसंयुतम् ॥ कालाज्ञादि शिवान्तञ्चपानयज्ञेनतृप्यताम् ॥ ४६७ ॥ तत्पात्रन्तुसमुत्थाप्यसमुद्धास्य गुरुस्ततः ॥ दद्याच्छिष्यायकुम्भस्थंयोगिनीभ्यः पृथक्पृथक् ॥ ४६८ ॥ पात्रेतथैववीरेभ्यश्चेतरेभ्यःस्वयंपिबेत् ॥ स्त्रीणामन्यतमंस्थानंपुंसामन्यतमंपृ

थक् ॥ ४६९ ॥ अथवामिथुनंकृत्वाक्रमात्समुपवेशयेत् ॥ पङ्क्याकारेणवास म्यक्चक्राकारेणवापुनः ॥ ४७० ॥ शिवशक्तिधियासर्वाश्चक्रमध्येसमर्चये त् ॥ तत्रमन्त्रेषुवीरेषुकार्य्याकार्य्यंनविद्यते ॥ ४७१ ॥ तत्रयद्यत्कृतंकर्म्मशु भंवायदिवाशुभम् ॥ तत्सर्वंदेवताप्रीत्यैजायतेनात्रसंशयः ॥ ४७२ ॥ जल्पो जपफलंतन्द्रासमाधिरभिधीयते ॥ विक्रियापूजनंप्रोक्तंछर्दितंभैरवोबलिः ॥ ४७३ ॥ मुक्तिस्स्याच्छक्तिसंयोगःस्तोत्रंतत्कालभाषणम् ॥ न्यासोऽवयवसंस्प र्शोभोजनंहवनक्रिया ॥ ४७४ ॥ ध्यानंतुवीक्षणंप्रोक्तंशयनंचन्दनंभवेत् ॥ त द्दुलासकृतानांचयाचेष्टासाचसत्क्रिया ॥ ४७५ ॥ कार्य्याकार्य्यविचारन्तुयः करोति सपातकी ॥ एतच्चक्रगतादेविविज्ञेयाःपरयोगिनः ॥ ४७६ ॥ येनाप्नुव न्तिमनुजा साक्षाद्भैरवरूपताम् ॥ संमोदंकोपशमनंपतनंगायनंतथा॥४७७॥ वेणुवीणादिवाद्यंचकवितारचनादिकम् ॥ रोदनंभाषणंचैवसमुत्थानंविजृम्भ णम् ॥ ४७८ ॥ गमनंविक्रियादेवियोगइत्यभिधीयते ॥ विकृतिंमनसोहित्वा यदोल्लासःप्रवर्तते ॥ ४७९ ॥ तदातुदेवताभावंभजन्तेयोगिपुङ्गवाः ॥ कौलि कान्भैरवावेशान्योविनिन्दतिमूढधीः ॥ ४८० ॥ तंनाशयन्त्यसन्देहाद्योगि न्योनात्रसंशयः ॥ यद्यद्भक्तिसमावेशादद्भुतंकौलिकेजने ॥ ४८१ ॥ तत्तद्भव त्यसन्दिग्धंशुभंवायदिवाशुभम् ॥ देवतासक्तमनसःशुद्धादेविसदाहिते ॥ ४८२ ॥ तारोनमोभगवतिमद्यमांसविहारिणि ॥ रतिप्रियेचक्रदेविवदकौलि कवल्लभे ॥ ४८३ ॥ सत्यंमनोगतंमेद्यैत्युक्त्वामद्यंपलादिकम् ॥ प्रदद्याच्चकौलि केभ्यस्तन्मन्त्रान्प्रब्रुवन्तिते ॥ ४८४ ॥ तत्रकश्चिदकौलश्चेन्नसास्फुरतिभार ती ॥ ननिन्देन्नहसेत्कुप्येच्चक्रेमधुमदाकुलान् ॥ ४८५ ॥ एतच्चक्रगतांवार्तांब हिर्नैवप्रकाशयेत् ॥ तेभ्योद्रोहंनकुर्वीतनाहितंचसमाचरेत् ॥ ४८६ ॥ रक्ष्यांसं रक्षयेत्तांवैगोपयेच्चप्रयत्नतः॥ चक्रेमदाकुलान्दृष्ट्वाचिन्तयेद्देवताधिया॥४८७॥ ननिन्देन्नहसेद्भक्त्यासगच्छेद्योगिनीपदम् ॥ प्रवृत्तेभैरवीचक्रेसर्वेवर्णाद्विजा तयः ॥ ४८८ ॥ निवृत्तेभैरवीचक्रेसर्वेवर्णाःपृथक्पृथक् ॥ एवंचक्रस्यमाहात्म्यं देवीपूजोपयोगतः ॥ ४८९ ॥ स्त्रियोथपुरुषःपण्ढश्चाण्डालोवाद्विजोत्तमः ॥ चक्रमध्येनभेदोस्तिसर्वेदेवसमाःस्मृताः ॥ ४९० ॥ चक्रमध्येगताःसर्वेपुरुषाः

शिवरूपिणः ॥ स्त्रियःसर्वाश्चपार्वत्यस्तस्माद्भेदंनकारयेत् ॥ ४९१ ॥ मद्यकु
म्भसहस्रैस्तुमांसभारशतैरपि ॥ नतुष्यतिमहामायाभगलिङ्गामृतंविना४९२॥
कामुकोनस्त्रियंगच्छेदनिच्छन्तीमदीक्षिताम् ॥ सद्यःसंस्कारसंशुद्धांविहित
त्वाद्व्रजेत्स्त्रियम् ॥ ४९३ ॥ सहस्रचक्रपूजातोराज्यभ्रष्टोनृपोभवेत् ॥ पञ्चाश
द्भिश्चपुत्राप्तिर्निरोगोदशभिर्भवेत् ॥ ४९४ ॥ यस्यचक्रस्यपूजायांरतिःस्खल
तियोगतः ॥ अवश्यंसार्वभौमोसौवर्षमध्येभविष्यति ॥ ४९५ ॥ ययेप्सितप्रि
याप्राप्त्यैपञ्चधापूजनंचरेत् ॥ सप्तभिःस्याद्धनप्राप्तिश्चक्रपूजाविधिस्त्वयम् ॥
४९६ ॥ भगिनींवासुतांभार्य्यांयोदद्यात्कुलयोगिने ॥ मधुमत्तायचक्रेवाचक्रे
वापुण्यभाक्सतु ॥ ४९७ ॥ उत्तमानित्यपूजास्यान्मध्यमंपर्वपूजनम् ॥ मास
पूजाधमाप्रोक्तामासादूर्ध्वन्तुनिष्फला ॥ ४९८ ॥ मासेथवाधिमासेवाषण्मासे
वत्सरेपिवा ॥ श्रीगुरुंपूजयेद्भक्त्याप्रासौतत्स्त्रीसुतादिकान् ॥ तदभावेतत्कु
लीनंतच्छिष्यंचान्ययोगिनम् ॥ सन्तोषयेत्कुलद्रव्यैश्चक्रपूजापुरःसरम् ॥
४९९ ॥ रोगेष्वापत्सुदोषेषुदुःसङ्गेदुर्निमित्तके ॥ पूजयेद्योगिनीवृन्दंदेवितद्दो
पशान्तये ॥ ५०० ॥ वक्ष्येथनवरात्रस्यविधिंसर्वेष्टदायकम् ॥ आश्विनस्यसि
तेपक्षेप्रतिपद्येकवार्षिकीम् ॥ ५०१ ॥ द्विवर्षांचद्वितीयायामेवमग्रेप्रवर्धयेत् ॥
नवम्यांनववर्षांचसुरूपाव्यङ्गवर्जिता ॥ ५०२ ॥ शुद्धाबालाचलीलतामालि
नीचवसुन्धरा ॥ सरस्वतीरमागौरीदुर्गाचनवकीर्तिताः ॥ ५०३ ॥ प्रातर्निम
न्त्रितांभक्त्यादेवतार्चांसमाप्यच ॥ अभ्यङ्गस्नानशुद्धांतांपूजायतनमानये
त् ॥ ५०४ ॥ देवतासन्निधौबालामुपवेश्यसमर्चयेत् ॥ गन्धपुष्पाक्षतैर्धूपदीपै
श्चकुलदीपकैः ॥ ५०५ ॥ भक्ष्यभोज्यान्नपानाद्यैःक्षीराज्यमधुमांसकैः ॥ कद
लीनालिकेरादिफलैस्तांपरितोषयेत् ॥ ५०६ ॥ सशक्तिकःस्वयंदेवियौवनोल्ला
ससंयुतम् ॥ यथाशक्तिजपेदेकोत्तरवृद्ध्यास्त्रकंमनुम् ॥ ५०७ ॥ बालामलंकृतां
पश्चाच्चिन्तयेत्स्वेष्टदेवताम् ॥ ततस्तांदेवताबुद्ध्यानमस्कृत्यविसर्जयेत् ॥५०८॥
त्रितारा॒द्यैर्नमोन्तैश्चदेवतापदपश्चिमैः ॥ नामभिःसचतुर्थ्यन्तैःपूजयेत्ताःपृ
थक्पृथक् ॥ ५०९ ॥ वटुकंपञ्चवर्षंचनववर्षंगणेश्वरम् ॥ क्रमादन्तेतथादौच
गन्धाद्यैःपरिपूजयेत् ॥ ५१० ॥ नवगत्रकृतांपूजांततोदेव्यैसमर्पयेत् ॥ ताम्बू

लंदक्षिणांदत्त्वाकुमारींतांविसर्जयेत् ॥ ५११ ॥ एवंनवकुमारीणांपूजनंप्रति वत्सरम् ॥ यःकरोतिसुखीचात्रमृतोदेवोभवेत्सतु ॥ ५१२ ॥ अथवायौवनारूढाःप्रमदानवसुन्दरीः ॥ मनोज्ञाःपूजयेद्भक्त्यानवमातृषुमन्त्रवित् ॥ ५१३ ॥ हृल्लेखानङ्गनांरक्तांमहोच्छुष्मांकरालिकाम् ॥ इच्छांज्ञानांक्रियांदुर्गांवटुकंचगणेश्वरौ ॥ ५१४ ॥ पूर्ववत्पूज्यमद्याद्यैःपदार्थैःपरितोषयेत् ॥ सर्वैश्वर्यसमृद्धात्मासभवद्दावयोःप्रियः ॥ ५१५ ॥ भृगुवारेतुवारेन्द्रेकान्तामारूढयौवनाम् ॥ सर्वलक्षणसम्पन्नामनुकूलांमनोहराम् ॥ ५१६ ॥ कुलाकुलाङ्गनांवापिनिमन्त्र्याहूयपुष्पिणीम् ॥ अभ्यङ्गस्नानशुद्धाङ्गीमासनेचोपवेशयेत् ॥ ५१७ ॥ गन्धपुष्पैरलङ्कारैरलंकृत्यविधानतः ॥ आत्मानंगन्धपुष्पाद्यैरलंकुर्याच्चसाधकः ॥ ५१८ ॥ आवाह्यदेवतांतस्यांयजेन्मासक्रमेणच ॥ कृत्वाकर्म्मार्चनंधूपंदीपाश्चकुलदीपकान् ॥ ५१९ ॥ प्रदर्श्यदेवताबुद्ध्यापदार्थैःषड्रसान्वितैः ॥ मांसादिभक्ष्यभोज्याद्यैस्तोषयेदतिभक्तितः ॥ ५२० ॥ प्रौढान्तोल्लाससहितांपश्येच्चप्रजपेन्मनुम् ॥ यौवनोल्लाससहितःस्वयंतद्ध्यानतत्परः ॥ ५२१ ॥ निर्विकारेणचित्तेनअष्टोत्तरसहस्रकम् ॥ जपादिकंसमर्प्याथतयासहनिशांनयेत् ॥ ५२२ ॥ कृत्वेदंभृगुवारेषुब्रह्मस्वात्परिमुच्यते ॥ दारिद्र्यस्यतुनाशःस्यात्पञ्चभिर्भृगुवासरैः ॥ ५२३ ॥ सन्ततिश्चास्यजातस्यसम्पत्तिर्भृगुसप्तभिः ॥ नवभिर्भृगुवारैस्तुदेवसायुज्यमाप्नुयात् ॥ ५२४ ॥ वक्ष्येथसर्वकामानांसाधनंमिथुनार्चनम् ॥ संक्रान्तौविषुवत्यांवांयनेवातत्समाचरेत् ॥ ५२५ ॥ गौरीशिवौरमाविष्णूवाणीसरसिजासनौ ॥ शचीन्द्रौरोहिणीचन्द्रौस्वाहाग्नीचतथैवच ॥ ५२६ ॥ भद्रकालीवीरभद्रौभैरवीभैरवावपि ॥ मिथुनानिनवाभ्यर्च्यपूर्वोक्तेनैववर्त्मना ॥ ५२७ ॥ त्रितारादिनमोन्तेनतत्तन्नाम्नाविधानवित् ॥ गन्धपुष्पादिभिःपूज्यमद्याद्यैःपरितोषयेत् ॥ ५२८ ॥ प्रौढान्तोल्लासयुक्तानिकुर्वीतमिथुनानिच ॥ एवंकृतेनसन्देहस्तुष्टाःस्युर्नवदेवताः ॥ ५२९ ॥ वर्षेवर्षेतुयःकुर्यान्नसदुःखमवाप्नुयात् ॥ पुत्रार्थंनववारान्तुधनार्थंप्रतिमासकम् ॥ ५३० ॥ अयनेविषुवेचैव

१ तुलाकी संक्रान्ति और मेषकी संक्रान्ति २ कर्क वा मकरकी संक्रान्ति ३ ॐ ॐ ॐ गौर्यैनमः ॐ ॐ ॐ शिवायनमः ॐ ॐ ॐ रमायैनमः ॐ ॐ ॐ विष्णवेनमः ॐ ॐ ॐ वाराये नमः ॐ ॐ ॐ ब्रह्मणेनमः ऐसे सब नामों में जोड़कर पूजाकरे ॥

कारागृहविमुक्तये ॥ नपुंसकस्यपुंस्त्वार्थमष्टवारंसमाचरेत् ॥ ५३१ ॥ अथकौलिकमार्गाणांदेवतासापिवक्ष्यते ॥ पापनाशेसुखोत्पत्तिस्तद्वर्षेपक्षपूजनम् ॥ ५३२ ॥ माघशुक्लप्रतिपदिदिवाचाहारवर्जितः ॥ स्नात्वाशुक्लाम्बरधरःसायंसन्ध्यामुपास्यच ॥ ५३३ ॥ सूर्य्यार्चनंतुमार्गेणसर्वद्रव्यसमन्वितः ॥ चन्द्रास्तमानपर्यन्तंजपेन्मन्त्रमनन्यधीः ॥ ५३४ ॥ एवंप्रतिदिनंशुक्लचतुर्दश्यांसमर्चयेत् ॥ पूर्णमास्यांयथाशक्तिपूजयेच्छक्तिकौलिकान् ॥ ५३५ ॥ यौवनोल्लाससहितश्चन्द्रस्थांदेवतांस्मरेत् ॥ एवंशुक्लार्चनंकृत्वारात्रिपापैःप्रमुच्यते ॥५३६॥ शुक्लपक्षार्चनंयद्वत्तद्वत्पक्षेसितेतरे। यःकरोतिविधानेनसर्वान्कामान्समश्नुते॥ ५३७ ॥ अथवैशाखमासस्यशुक्लप्रतिपदीश्वरी ॥ ब्राह्ममुहूर्तेचोत्थायस्नानंसन्ध्यामुपास्यच ॥ ५३८ ॥ मनोज्ञेरहसिस्थानेपूर्वाशाभिमुखःस्थितः ॥ आत्मानंगन्धपुष्पाद्यैरलंकृत्यचवर्त्तयेत् ॥ ५३९ ॥ सन्ध्याद्यमुद्गतेसूर्यमण्डलेविष्टदेवताम् ॥ ध्यात्वासावरणांसर्वैरुपचारैःप्रपूजयेत् ॥ ५४० ॥ चक्रपूजांततःकृत्वाकुलदीपान्प्रदर्शयेत् ॥ शिवायगुरुरूपायमत्स्यमांसादिभक्ष्यकम् ॥ ५४१ ॥ देव्यैनिवेद्यतच्छेषंपिबेच्छक्त्यायुतःस्वयम् ॥ यौवनोल्लाससहितोनिर्विकल्पेनचेतसा ॥ ५४२॥ ध्यायेत्तांमण्डलेदेवीमष्टोत्तरसहस्रकम् ॥ जप्त्वासमर्प्यतांपूजांदेवताश्चसमुद्वसेत् ॥५४३॥ एवंशुक्लाप्रतिपदंसमारभ्यदिनेदिने ॥ कुर्याज्जपार्चनंकृष्णचतुर्दश्यांचसुस्थिरः ॥ ५४४ ॥ अमवास्यादिनेपूज्याःस्त्र्याद्याविषमकौलिकाः ॥ युग्मीभूतास्तदाघस्रकृतंपापंव्यपोहति ॥ ५४५ ॥ एवंमध्याह्नवेलायामर्चयित्वाप्रतापवान् ॥ सायाह्नेतुसमभ्यर्च्यकीर्तिर्यातिदिगन्तरम् ॥ ५४६ ॥ मध्ययोरर्चयेद्यस्तुतस्यश्रीःसर्वतोमुखी ॥ पूजयेद्यस्त्रिसन्ध्यासुयोगिन्यस्तस्यवश्यगाः ॥५४७॥ श्रीकण्ठादीनिपञ्चाशन्मिथुनानिसमर्चयेत् ॥ पूर्वोक्तेनविधानेनधनलोभविवर्जितः ॥५४८॥ प्रौढान्तोल्लासयुक्तानिमिथुनान्यत्रकारयेत् ॥ सन्तुष्टायप्रयच्छन्तिसाधकायेप्सितंफलम् ॥५४९॥ केशवादिगणेशादिकामपीठादिकानिच ॥ श्रीकण्ठादिवदभ्यर्च्यतत्तल्लोकेमहीयते॥५५०॥

१ श्रीकण्ठादिक नाम प्रथम कहचुके हैं न्यास विधिमें ॥ ऐसेही केशव कीर्ति और गणेशजी के नामोंसे पूजाकरे वेभी नाम प्रथमही कहाहै ॥

खभूमिदिग्जलगिरिव्योमसर्वचरास्तुयाः ॥ सहस्रकोटियोगिन्यस्तावन्तोभैरवाअपि ॥ ५५१ ॥ नियुक्ताःसर्वएवैतेकुलसंरक्षणायच ॥ दिवसेपुविशेषेषुसर्वेमुदितमानसाः ॥ ५५२ ॥ साधकान्नैवपीडयन्तिस्वसम्पूजानुलिप्सया ॥ अपूजितास्तुविघ्नन्तिप्रसीदन्तिहिपूजिताः ॥ ५५३ ॥ गुरुभक्तान्सदाचारान्गुप्तधर्म्मानवन्तिच ॥ भक्तिहीनान्दुराचारान्नाशयन्तिप्रकाशकान् ॥ ५५४ ॥ अथवक्ष्येकुलाचारमार्गेशास्त्रार्थनिर्णयम् ॥ कौलिकानांकुले जातोज्येष्ठोयदिनदीक्षितः ॥ ५५५ ॥ कनिष्ठोदीक्षितश्चेत्स्यात्सकुर्य्यात्कुलपूजनम् ॥ पूजान्तेशेषमादायज्येष्ठेतत्त्वानिवेदयेत् ॥ ५५६ ॥ तस्योच्छिष्टन्तुगृह्णीयात्कनिष्ठइतिनिर्णयः ॥ पूजामध्येगुरौज्येष्ठेपूज्येवापिसमागते ॥ ५५७ ॥ नत्वाब्रूयात्स्थितिंशेषमाचरेत्तदनुज्ञया ॥ नित्यार्चनंदिवाकुर्य्याद्रात्रौनैमित्तिकार्चनम् ॥ ५५८ ॥ काम्यार्चनंप्रोक्तकालेबहवोयत्रसङ्गताः ॥ नत्वास्वस्वगुरून्मन्त्रेस्वस्वमार्गेणतर्प्पयेत् ॥ ५५९ ॥ विनासनंविनास्नानंगन्धपुष्पाक्षतान्विना ॥ विनामद्यंविनामांसंकुलपूजांनकारयेत् ॥ ५६० ॥ नकुर्य्यान्प्रलपन्वापिविनामन्त्रेणपूजनम् ॥ शक्त्याविनातथापानमेकहस्तेननार्चयेत् ॥ ५६१ ॥ नपिबेदेकहस्तेनचक्रेनिष्ठीवनेनच ॥ प्रणम्यप्रविशेच्चक्रंविनिर्गच्छेत्प्रणम्यच ॥ ५६२ ॥ श्रीचक्रेनासनेतिष्ठेन्नचवीरासनेक्वचित् ॥ श्रीचक्रमेकतोकुर्य्यादेकपात्रेचनार्चयेत् ॥ ५६३ ॥ श्रीचक्रदर्शनन्नृणांनेत्रयोःपापहारकम् ॥ तन्नास्तिचेद्व्रणद्वन्द्वंकौलिकस्याक्षियुग्मकम् ॥ ५६४ ॥ अनाचारान्सदाचारांश्चक्रस्थाञ्छक्तिकौलिकान् ॥ शिवगौरीधियासर्वान्भावयेन्नावमानयेत् ॥ ५६५ ॥ कुलाचार्य्यगृहंगत्वाभक्त्यापापविशुद्धये ॥ याचयेदमृतंचान्नंतदभावेजलंपिबेत् ॥ ५६६ ॥ कुलाचार्य्येणचेच्छक्त्यादत्तंपात्रंतुभक्तितः ॥ नमस्कृत्यप्रगृह्णीयादन्यथानरकंव्रजेत् ॥ ५६७ ॥ उष्णीषीकञ्चुकीनग्नोमुक्तकेशश्चमुक्तवान् ॥ अस्नातोनातिभक्तश्चविवादेचपराङ्मुखः ॥ ५६८ ॥ नेदंयस्यकु

१ इस कौलधर्म्म को उनके लिये उपदेश है कि जे पतित चाण्डाल शूद्रादि वेदधर्म्म के अधिकारी नहीं हैं किसीप्रकार से देवताओंको माननेलगें और जे शुद्धवर्णों के जन वेदधर्म्माधिकारी हैं उनको इस क्षुद्रधर्म्म पर दृष्टि देना अनुचित है, इससे जे लोग मद्यमांसादि सेवन करते हैं वे उभयलोकसे पतित होते हैं ॥

लेजातंयश्चसंस्कारवान्द्विजः ॥ वेदाध्यायीकुलद्रव्यसेवनान्निर्धनोभवेत् ॥ ५६९ ॥ योगामृतस्यनिष्ठीवान्मद्यभाण्डपरिक्रमात् ॥ ऊर्ध्वङ्गलेनपानाचदेव ताशापमाप्नुयात् ॥ ५७० ॥ एकासनेनिविष्टयेभुञ्जानाश्चैकभाजने ॥ एक पात्रेपिबन्तोयेतेयान्तिनिरयंध्रुवम् ॥ ५७१ ॥ येसेवन्तेकुलद्रव्यमेकग्रामेस्थि तेगुरौ ॥ तत्कुलजेचतत्पुत्रेस्वज्येष्ठेकुलदेशिके ॥ ५७२ ॥ विनानुज्ञांसपापा त्मारौरवंनिरयंव्रजेत् ॥ उच्छिष्टेनस्पृशेच्चक्रंकुलद्रव्यंतथागुरुम् ॥ ५७३ ॥ ब हिःप्रक्षाल्यचजलैःकुलद्रव्याणिदापयेत् ॥ मद्यभाण्डंसमुद्धृत्यनपात्रंपरिपूज येत् ॥ ५७४ ॥ भोगपात्रंसुराकुम्भंनिक्षिपेन्नकदाचन ॥ चक्रमध्येशुचिधिया करास्यक्षालनादिकम् ॥ ५७५ ॥ यःकरोतिचमूढात्मासभवेदापदांपदम् ॥ नि ष्ठीवनंमलंमूत्रमधोवायुविसर्जनम् ॥ ५७६ ॥ श्रीचक्रमध्येयःकुर्य्यात्सभवेद्यो गिनीपशुः ॥ चक्रमध्येघटेभिन्नेपात्रेवास्खलितेतथा ॥ ५७७ ॥ दीपनाशेरा ष्ट्रपीडागच्छेद्वैचक्रपूजनम् ॥ परिहासंप्रलापंचविडम्बम्बहुभाषणम् ॥ ५७८ ॥ औदासीन्यंभयंक्रोधंचक्रमध्येविवर्जयेत् ॥ पात्रहस्तश्चक्रमध्येननमेत्पूर्णपा त्रकम् ॥ ५७९ ॥ चिरंनस्थापयेद्धस्तेनालभेत्पात्रपाणिकः ॥ पादाभ्यांन स्पृशेत्पात्रंनचभिन्द्यात्कदाचन ॥ ५८० ॥ नैकहस्तेनदातव्यंनबिन्दुम्पात येदधः ॥ पात्रंनचालयेत्स्थानान्नमुद्रावर्जितंपिबेत् ॥ ५८१ ॥ जल्पन्नापिपि बेन्मद्यंनकुर्य्यात्पात्रसङ्करम् ॥ पात्रस्यांशद्वयंमद्यपूर्णंत्र्यंशन्तुरिक्तकम् ॥ ५८२ ॥ नान्योन्यंताडयेत्पात्रंनपात्रंताडयेदधः ॥ साधारंनोद्धरेत्पात्रमनाधारंननि क्षिपेत् ॥ ५८३ ॥ रिक्तंपात्रंनकुर्वीतनपात्रंलङ्घयेत्तथा ॥ प्रक्षाल्यगोमयेपात्रंन मोन्तेविप्रमीक्षयेत् ॥ ५८४ ॥ कथनंधर्म्मशास्त्रस्यह्यकुलस्त्रीनिषेवणम् ॥ श्रो त्रियाणांचसङ्गस्तुकरणंश्रौतकर्म्मणाम् ॥ ५८५ ॥ कामार्थायुर्यशोलाभज्ञान सौख्यादिनाशकम् ॥ तस्मात्कौलपथेगच्छन्नकुर्वीतकदाचन ॥ ५८६ ॥ श्री चक्रस्थकुलद्रव्यंदद्याद्योवाऽकुलेजने ॥ समहापातकीज्ञेयोरौरवंनरकंव्रजेत् ॥ ५८७ ॥ रिपुणापिनकर्तव्योवाग्वादश्चक्रमध्यतः ॥ पितृमातृसमंपश्येत्तेनो क्तंपरुषंसहेत् ॥ ५८८ ॥ श्रीगुरुंकुलशास्त्राणिपूज्यस्थानानियानिच ॥ भ क्त्याश्रीपूर्वकंविद्वान्प्रणम्यपरिकीर्तयेत् ॥ ५८९ ॥ पारंपर्य्यंसमास्थायमन्त्रा

चारादिकंपुनः ॥ सर्वंगुरुमुखाल्लब्ध्वंसफलंस्यान्नचान्यथा ॥ ५९० ॥ श्रीशास्त्रं पूजयेन्नित्यंपशुगेहेननिक्षिपेत् ॥ स्वदारवन्निषेवेतकुलशास्त्राणितान्त्रिकः ॥ ५९१॥पशुशास्त्राणिसर्वाणिवर्जयेत्परदारवत् ॥ संस्कारार्थंछिन्नभिन्नान्व्यस्त वर्णांश्चवैदिकान् ॥ ५९२ ॥ मन्त्रान्पठेत्सम्प्रदायात्तैःस्यादत्रव्यवस्थितिः ॥ धर्म्मशास्त्रविरुद्धोयआचारःसतुकौलिकः ॥ ५९३॥ चक्रेनाकारयेदेतादेवीव त्ताःप्रपूजयेत् ॥ गमनंनैवकुर्वीतकृत्वानिरयमाप्नुयात् ॥ ५९४ ॥ मातरंगुरुप त्नींचभगिनींभगिनीसुताम् ॥ भ्रातृजायांवीरभार्य्याकुमारींव्रतधारिणीम् ॥ ५९५ ॥ व्यङ्गाङ्गींविकृताङ्गींचक्षुब्धांप्रीतांसमाहृताम् ॥ स्नुषांसकृत्कामगतां वृद्धांनैवमनोहराम् ॥ ५९६ ॥ मनोहरांयौवनस्थांसुवेशांचारुहासिनीम् ॥ र क्तान्तनयनांश्यामांपूजयेत्कौलिकाङ्गनाम् ॥ ५९७ ॥ अकस्माच्चनसेवेतबले नचकुयोगिनीम् ॥ चक्रमध्येस्वयंक्षुब्धावास्वतःप्रार्थिनींयमेत् ॥ ५९८ ॥ आ ममांसंसुराकुम्भंमत्तेभंसिद्धदर्शनम् ॥ सहकारमशोकंचक्रीडालुब्धाःकुमा रिकाः ॥ ५९९ ॥ एकवृक्षंश्मशानंचसमूहंयोषितामपि ॥ नारींचरक्तवसनां दृष्ट्वावन्देतभक्तितः ॥ ६०० ॥ गुरुशक्तिसुतज्येष्ठंकनिष्ठंकुलदेशिकान् ॥ कुल दर्शनशास्त्राणिकुलद्रव्याणिकौलिकान् ॥ ६०१ ॥ प्रेरकान्सूचकांश्चापिवा चकान्दर्शकांस्तथा ॥शिक्षकान्बोधकान्योगियोगिनीसिद्धपूरुषान् ॥ ६०२॥ कन्याकुमारिकानग्नाउन्मत्तानपियोषितः॥ननिन्देन्नजुगुप्सेतनहसेन्नावमान येत् ॥ ६०३ ॥ नाप्रियंनानृतंब्रूयात्कस्यापिकुलयोगिनः ॥ कुरूपेत्यतिकृष्णे तिनवदेत्कुलयोषितम् ॥ ६०४ ॥ परीक्षयेन्नभक्तानांवीराणांचकृतेकृते ॥ नप श्येत्पतितांनग्नामुन्मत्तांप्रकटस्तनीम् ॥ ६०५ ॥ नदिवासेवयेन्नारींतद्योनिं ननिरीक्षयेत् ॥ स्त्रियंशतापराधांवापुष्पेणापिनताडयेत् ॥ ६०६ ॥ दोषान्नग णयेत्स्त्रीणांगुणानेवप्रकाशयेत् ॥ तिष्ठन्तिकुलयोगिन्यःकुलवृक्षेषुसर्वदा ॥ ६०७ ॥ तत्पत्रेपुनभोक्तव्यमर्कपत्रेविशेषतः ॥ नस्वपेत्कुलवृक्षाधोनचोपद्रव माचरेत् ॥ ६०८ ॥ दृष्ट्वाभक्त्यानमस्कुर्याच्छेदयेन्नकदाचन ॥ श्लेष्मान्तक करञ्जाश्चनिम्बाश्वत्थकदम्बकाः ॥ ६०९ ॥ बिल्वोवटोदुम्बरौचचिञ्चाचेतिद शस्मृताः ॥ प्रायश्चित्तंभृगोःप्रोक्तंसन्न्यासंव्रतधारणम् ॥ ६१० ॥ तीर्थयात्रा

दिगमनंकौलेयस्तुविवर्जयेत् ॥ एकाक्षरप्रदातारंयोगुरुंचावमन्यते ॥ ६११ ॥ सश्वयोनिशतंगत्वा चाण्डालत्वमवाप्नुयात् ॥ एकस्यहननात्प्रेम बहूनांचे च्छुभागतिः ॥ ६१२ ॥ अन्तःकौलंबहिःशैवं जनमध्येतुवैष्णवम् ॥ कौलंतु गोपयेद्देविनारिकेलफलाम्बुवत् ॥ ६१३ ॥ गुरुंप्रकाशयेद्धीमान्मन्त्रंयत्नेनगोप येत् ॥ अप्रकाशप्रकाशाभ्यां क्षीयन्तेसम्पदायुषः ॥ ६१४ ॥ सर्वाचारपरिभ्र ष्टः कुलाचारंसमाश्रयेत् ॥ कुलाचारपरिभ्रष्टो रौरवंनरकंव्रजेत् ॥ ६१५ ॥ वा माचारंनकथयेदकुलीनायसद्गुरुः ॥ आचारात्पतितेशिष्ये पातकीसगुरुर्भ वेत् ॥ ६१६ ॥ इष्टःकश्चित्कौलिकस्य महोपद्रवमास्थितः ॥ तस्यदुःखापहा राय कुर्य्यादष्टाष्टपूजनम् ॥ ६१७ ॥ एकस्मिन्दिवसेवाष्टदिनंवाषोडशाह कम् ॥ दन्ताहंवाचतुष्षष्टिदिनंकार्यंगुरुत्वतः ॥ ६१८ ॥ कारयेद्वास्वयंकुर्याद्वि त्तशाठ्यविवर्जितः ॥ तत्रोपोष्यविशुद्धात्माकृत्वान्यासान्पुरोदितान् ॥ ६१९ ॥ प्रसुप्तेजीवलोकेतु मुदितात्मामहामनाः ॥ ब्राह्मीमाहेश्वरीचैव कौमारीवै ष्णवीतथा ॥ ६२० ॥ वाराहीचतथेन्द्राणी चामुण्डामहतीरमा ॥ एताएवस माख्याता मयातेचाष्टमातरः ॥ ६२१ ॥ असिताङ्गोगुरुश्चण्डः क्रोधोन्मत्तक पालिनः ॥ भीषणश्चाथसंहार एतेष्टौभैरवामताः ॥ ६२२ ॥ आचम्यमिथुनेष्टौ तान् परमैःपूर्वमर्चयेत् ॥ प्रौढान्तोल्लासपर्यन्तंकार्यंसिद्ध्यत्यसंशयम् ॥ ६२३ ॥ कृताचेद्देवतोषाय पुरश्चर्याविशिष्यते ॥ गुरुभक्तिविहीनस्य तपोविद्याव्रतंकु लम् ॥ ६२४ ॥ व्यर्थंसर्वंशवस्येव नानालङ्कारभूषणम् ॥ तस्माद्गुरुःसदासे व्यो मनोवाक्कायकर्म्मभिः ॥ ६२५ ॥ गुरौमनुष्यबुद्धिश्च मन्त्रेवाक्षरशे मुषीम् ॥ प्रतिमासुशिलाबुद्धिं कुर्वाणोनरकंव्रजेत् ॥ ६२६ ॥ कुलागमत्व मार्गोयं गुरुणासम्प्रदर्शितः ॥ सम्यगाचरितश्चेत्स्याद्भुक्तिमुक्त्योस्तुसाध

---

१ सब आचारों से रहित पतितलोग कौलधर्म में रहते हैं और इससे भी जो वे पतित होजावें तो नरक छोड़ अन्यत्र ठेकाना न होगा और सज्जन तो हमेशहही वेदधर्ममें प्रवृत्त रहते हैं उनको वाममार्ग के धर्ममें प्रवृत्ति कराना भले आदमियों को उचित नहीं है और पापभागी भी होते हैं क्योंकि जिनके उपदेशसे आचार छोड़कर जन वाममार्गी होजायगा वह मांसादि खानेका पाप गुरुओं को छोड़ और किसको लागैगा २ वचिसदिन ॥

नम् ॥ ६२७ ॥ विप्रोपिगुणयुक्तोपि नभक्तश्चेन्नशस्यते ॥ म्लेच्छोपिगुणहीनोपि भक्तिमाञ्छिष्यउच्यते ॥ ६२८॥ गुरोर्हितंहिकर्तव्यं वाङ्मनःकायकर्म्मभिः ॥ अहिताचरणाच्छिष्योविष्ठायांजायतेकृमिः ॥ ६२९ ॥ गुरुत्यागाद्भवेन्मृत्युर्मन्त्रत्यागाद्दरिद्रता ॥ गुरुमन्त्रपरित्यागाद्रौरवंनरकंव्रजेत् ॥ ६३० ॥ गुरूक्तं ररुषंवाक्यमाशिषंचिन्तयेद्धृदि ॥ नमेत्सन्ताडितोवापि प्रसादमिति संस्मरेत् ॥ ६३१ ॥ भोगभोज्यानिवस्तूनि गुरवेसर्वमर्पयेत् ॥ तच्छेषमिति सञ्चिन्त्य ग्राह्यंतस्याज्ञयामुदा ॥ ६३२ ॥ ऋणादानंतथादानं वस्तूनांक्रयविक्रयम् ॥ नकुर्याद्गुरुभिःसार्द्धं नोद्वहेत्तत्कुलोद्भवाम् ॥ ६३३ ॥ समासोक्तं रहस्यार्थं नवदेद्यस्यकस्यचित् ॥ यदिब्रूयात्सउभयच्युतएवनसंशयः ॥६३४॥ सर्वस्वमपियोदद्याद् गुरौभक्तिविवर्जितः ॥ शिष्योनफलमाप्नोति भक्तिरेवहि कारणम् ॥ ६३५ ॥ यस्मिन्द्रव्येगुरोरस्ति स्पृहानानुभवेच्चतत् ॥ अवश्यं यदिवापिस्यादनुभूयात्तदाज्ञया ॥ ६३६ ॥ अत्यल्पंहिगुरोर्द्रव्यमदत्तंस्वीकरोतियः ॥ तिरश्चांयोनिमापन्नःक्रव्यादैःसतुभक्ष्यते ॥ ६३७ ॥ आज्ञाभङ्गेर्थहरणं तदुक्तंश्रद्धयाचरेत् ॥ निग्रहेनुग्रहेवापि गुरुःसर्वस्यकारणम् ॥ ६३८ ॥ निर्गतंयद्गुरोर्वक्त्रात्सर्वशास्त्रंतदुच्यते ॥ गुरुकार्येस्वयंशक्तो नापरंप्रेषयेत्क्वचित् ॥ ६३९ ॥ बहुकृत्यंपरैःकुर्यात्सहितोप्यतिभक्तिमान् ॥ तिष्ठञ्जाग्रन्स्वपन्खादन् प्रपिबंश्चिन्तयेद्गुरुम् ॥ ६४० ॥ गुर्वाज्ञामेवकुर्वीत तद्गतेनान्तरात्मना ॥ अभिमानोनकर्त्तव्यो जातिविद्याधनादिभिः ॥ ६४१ ॥ तत्पापंसमवाप्नोति गुर्वग्रेऽनृतभाषणात् ॥ गोब्राह्मणवधंकृत्वा नयत्पापमवाप्नुयात् ॥ ६४२ ॥ गुरोःसिंहासनंदेयं ज्येष्ठानामुत्तमासनम् ॥ विध्यासनंकनिष्ठानामितरेपांसमासनम् ॥ ६४३ ॥ जातिविद्याधनाढ्योवादूराद्दृष्ट्वागुरुंमुदा ॥ दण्डप्रणामंकृत्वैकं त्रिःप्रदक्षिणमाचरेत् ॥ ६४४ ॥ गुरुतोगुरुयोगेतु वन्देत्तत्रस्वकंगुरुम् ॥ ततोवन्देद्गुरुंसोपि ततःशिष्यःप्रवादयेत् ॥ ६४५ ॥ गुरोःप्रणामत्रितयं ज्येष्ठानामेकएवच ॥ पूज्यानामञ्जलिस्तद्वदन्येषांबाह्यवन्दनम् ॥ ६४६ ॥ देवान्गुरून्कुलाचार्याञ्ज्येष्ठान्वृद्धांस्तपोधनान् ॥ विद्यावि

---

१ ऋणको लेना और देना २ गुरुकुलकन्याके संग ब्याह न करे ॥

कान्स्वकर्म्मस्थाञ्छ्रोत्रियान्प्रणमेत्सदा ॥ ६४७ ॥ स्त्रीदिष्टंगुरुशस्तंच पाखण्डं पतितंशठम् ॥ विकर्म्मिणंकृतघ्नंचानाश्रमस्थंनमेन्नच ॥ ६४८ ॥ अनिवेद्य गुरुंभुङ्क्तेयस्त्वेकग्रामसंस्थितः ॥ तेनभुक्तममेध्यंस्यान्मृतोजायेतसूकरः॥६४९॥ एकग्रामेस्थितःशिष्यस्त्रिसन्ध्यंप्रणमेद्गुरुम् ॥ क्रोशमात्रस्थितोभक्त्या गुरुं प्रतिदिनंनमेत् ॥ ६५० ॥ अर्धयोजनतःशिष्यः प्रणमेत्पञ्चपर्वसु ॥ एकयोजनमारभ्य योजनद्वादशावधि ॥ ६५१ ॥ दूरदेशेस्थितःशिष्यो भक्त्यात त्सन्निधिंगतः ॥ तत्तद्योजनसंख्याकमासेषुप्रणमेद्गुरुम् ॥ ६५२ ॥ अति दूरस्थितंशिष्यो यदेच्छास्यात्तदाव्रजेत् ॥ रिक्तहस्तोनपश्येच्च राजानन्देवता गुरुम् ॥ ६५३ ॥ फलपुष्पाम्बरार्थादीन् यथाशक्तिसमर्प्पयेत् ॥ एवंयोनार्चये द्विप्रो ब्रह्मराक्षसतांव्रजेत् ॥ ६५४ ॥ गुरुशक्तिश्चतत्पुत्रा ज्येष्ठभ्रातागुरोः समाः ॥ आत्मविद्यकनीयांसं पुत्रवत्परिपालकः ॥ ६५५ ॥ स्वविद्यानुष्ठान तपोधर्म्माणामप्रकाशकः ॥ वर्णाश्रमज्ञानतपोधर्म्माणांचप्रकाशकः ॥६५६॥ षट्कर्म्मसुसुसिद्धोयोदाताभोक्तानयाचकः ॥ सएवकौलिकाचार्य्यस्त्व न्यःकुलविडम्बकः ॥ ६५७ ॥ पिण्डंपदंतथारूपं रूपातीतंनिरञ्जनम् ॥ यस्तु सम्यग्विजानाति सद्गुरुश्चोद्धरेत्परम् ॥ ६५८ ॥ पाशस्तम्भंवेधदीक्षां पशुग्र हणमेवच ॥ त्रिविधंयोविजानातिसद्गुरुःकथितःप्रिये ॥ ६५९ ॥ पशुपा शपशूनाञ्च रहस्यार्थविधानवित् ॥ योजानातिवरारोहे सद्गुरुःपरिकीर्ति तः॥ ६६० ॥ घृणाशङ्काभयंलज्जा जुगुप्साचेतिपञ्चमी ॥ कुलंशीलंतथा शक्तिरष्टौपाशाःप्रकीर्तिताः ॥ ६६१ ॥ पाशबद्धःपशुःप्रोक्तः पाशमुक्तोमहे श्वरः ॥ तस्मात्पाशहरोयोत्र सद्गुरुर्नान्यउच्यते ॥ ६६२ ॥ मूलादिब्रह्मरन्ध्रा

१ पशुप परमेश्वर, पाश जीवों में व्याप्त होनेवाली माया, पशु, जीव–इनके रहस्य अर्थको जानताहै कि जैसे, पशुको बन्धन स्वयं नहीं छोड़सकता और पशु भी विना पशु पालके छोड़े अपना से नहीं छूटसकता, ऐसेही जीवको माया नहीं छोड़सकती और जीव भी विना परमेश्वरकी कृपा आपही आप मायासे नहीं छूटसकता इससे उन परमेश्वर की प्रसन्नता के लिये उपासनादि धर्म्म अवश्य कर्तव्यहैं और वरारोहे यह सम्बोधन पदहै अथवा पशु जीव, पाश माया और पशु जीव, ऊन क्रमहै जिससे वह पशून परमेश्वर उनके आश्र पूजाके अर्थ प्रयोजन मुक्त्यादि फलोंके लिये विधानों को जानताहो ॥

न्तं सप्ताम्भोजदलेषुयः ॥ जीवचालफलंवेत्ति सगुरुर्नापरःप्रिये ॥ ६६३ ॥ संसारभयभीतस्य शिष्यस्यगुरुरादरात् ॥ व्रतोपवासनियमैर्भियोहन्तासदुर्लभः ॥ ६६४ ॥ गुरोर्यस्यैवसम्पर्कात्परानन्दोभिजायते ॥ गुरुंतमेवव्रणुयान्नापरंमतिमान्नरः ॥ ६६५ ॥ शङ्कयाभक्षितंसर्वं त्रैलोक्यंसचराचरम् ॥ साशङ्काभक्षितायेन सगुरुर्दुर्लभःक्षितौ ॥ ६६६ ॥ मधुभुक्चयथाभृङ्गः पुष्पात्पुष्पान्तरंव्रजेत् ॥ ज्ञानलुब्धस्तथाशिष्यो गुरोर्गुर्वन्तरंव्रजेत् ॥ ६६७ ॥ गुरुशिष्याधिकारार्थं विरक्तोपिशिवाज्ञया ॥ किञ्चित्कालंप्रतीक्ष्यैव पश्चाच्छिष्येसमर्प्ययेत् ॥ ६६८ ॥ सम्प्रदायमविच्छिन्नं कौलंकुर्य्यान्नकुत्रचित् ॥ यावचसम्प्रदायोस्ति तावत्स्याद्योगिनीपदम् ॥ ६६९ ॥ गुरुशिष्यावुभौमोहादपरीक्ष्यपरस्परम् ॥ उपदेशंददन्गृह्णन् प्राप्नुयातांपिशाचताम् ॥ ६७० ॥ असंस्कृत्योपदेशंतु यःकरोतिसमूढधीः ॥ विनश्यत्येवतन्मन्त्रः सैकतेशालिबीजवत् ॥ ६७१ ॥ धनेच्छाभयलोभाद्यैरयोग्यंयदिदीक्षयेत् ॥ देवताशापमाप्नोति कृतंचविफलंभवेत् ॥ ६७२ ॥ कुलद्रव्यैःसमभ्यर्च्य कुलचक्रंविधानतः ॥ शिष्यायदर्शयेत्सम्यग्दीक्षेपाकौलिकीमता ॥ ६७३ ॥ सिद्धद्रव्यंमुखेपूरयेच्चव्योमामृतान्वितम् ॥ अभिषिञ्चेत्प्रियंशिष्यं गण्डूषाख्येयमीरिता ॥ ६७४ ॥ सजीवमीनयुक्तेन सुरयापूरितेनच ॥ पञ्चामृतैःसुसम्पूर्णशङ्खेनकलशेनवा ॥ ६७५ ॥ अभिषेकंततःकुर्यात्कुलवृक्षोत्थपल्लवैः ॥ अयंपूर्णाभिषेकोत्र कुलमार्गेप्रकीर्तितः ॥ ६७६ ॥ पूर्णाभिषेकहीनाश्चेन्म्रियन्तेयदिकौलिकाः ॥ प्राप्नुवन्तिपिशाचत्वं यावदाभूतसम्प्लवम् ॥ ६७७ ॥ उपपातकलक्षाणि महापातककोटयः ॥ क्षणाद्दहतिदीक्षेयं विधिनागुरुणाकृता ॥ ६७८ ॥ रसेन्द्रेण यथाविद्धमयःसौवर्णतांव्रजेत् ॥ दीक्षाविद्धस्तथाह्यात्मा शिवत्वंलभतेद्रुतम् ॥ ६७९ ॥ दीक्षाग्निदग्धकर्म्मासौ मायाविच्छिन्नबन्धनः ॥ यातःपरांज्ञानकाष्ठां निर्विषःसशिवोभवेत् ॥ ६८० ॥ गतंशूद्रस्यशूद्रत्वंगताविप्रस्यविप्रता ॥ दीक्षासंस्कारसम्पन्ने जातिभेदोनविद्यते ॥ ६८१ ॥ दार्वेशेम

१ जो पुरुष वेदादि मोक्ष सन्मार्ग में चलाजाताहो उसको कभी कहीं कौलधर्म्मगामी मत करे २ पारासे मारा ३ लोहा ४ पत्थर ॥

लोहमृद्रत्नजातिलिङ्गंप्रतिष्ठितम् ॥ यथोच्यतेमहादेवस्तथावर्णास्तुदीक्षिताः ॥ ६८२ ॥ अन्त्यजोदीक्षितः पूर्वं द्विजःपश्चाचदीक्षितः ॥ तदाज्येष्ठोऽन्त्यजःप्रोक्तः कुलशास्त्रविनिश्चये ॥ ६८३ ॥ गुरुशक्तिसुतानांच योभवेत्पूर्वदीक्षितः ॥ गुरुवत्तेनतेपूज्या नावमान्याःकदाचन ॥ ६८४ ॥ कौलिकेत्रामार्गेच वेधदीक्षाफलप्रदा ॥ अन्यास्तादक्षिणेमार्गेन्यथातुपतितोभवेत् ॥ ६८५ ॥ दीक्षापूर्वंगुरोःसिद्धं पारम्पर्यक्रमागतम् ॥ योग्यंयोग्येनयल्लब्धं तच्चसिद्ध्यत्यसंशयम् ॥ ६८६ ॥ मासमात्रंजपेन्मन्त्रं भूतलिप्यातुसम्पुटम् ॥ क्रमोत्क्रमात्सहस्रन्तु तस्यसिद्धोभवेन्मनुः ॥ ६८७ ॥ मण्डलंपूजयेन्मन्त्रं मातृकाक्षरसंयुतम् ॥ अनुलोमविलोमेनषण्मासात्सिद्ध्यतेमनुः ॥ ६८८ ॥ त्रितत्वाक्षरपूर्वंतु मातृकाच्चरपूर्वकम् ॥ क्रमोत्क्रमाच्छतंजप्त्वा मासात्सिद्धोभवेन्मनुः ॥ ६८९ ॥ मातृकाजपमात्रेण मन्त्राणांकोटिकोटयः ॥ जपिताःस्युर्नसन्देहस्तत्त्वंसर्वतदुद्भवम् ॥ ६९० ॥ जातसूतकमादौस्यादन्तेचमृतसूतकम् ॥ ६९१ ॥ नपुरश्चरणंयस्यसमन्त्रोनैवसिद्ध्यति ॥ यस्यान्नपानपुष्टाङ्गः कुरुतेधर्म्मसञ्चयम् ॥ ६९२ ॥ अन्नदातुःफलंचार्धं कर्तुश्चार्धं न संशयः ॥ सुगन्धपुष्पाभरणगन्धादिभिरलंकृतः ॥ ६९३ ॥ तस्यहस्तगतासिद्धिर्नान्यथाजन्मकोटिभिः ॥ तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्तत्परायणः ॥ ६९४ ॥ तत्पदार्थानुसन्धानं कुर्वन्मन्त्रंशनैर्जपेत् ॥ जपाच्छ्रान्तःपुनर्ध्यायेद्ध्यानाच्छ्रान्तः पुनर्जपेत् ॥ ६९५ ॥ जपध्यानादियुक्तस्य क्षिप्रंमन्त्रःप्रसिद्ध्यति ॥ अथमन्त्रीप्रयोगार्थं शुद्धहृन्नियमान्वितः ॥ ६९६ ॥ शापप्रसाददंमन्त्रं तत्त्वलक्षमितंजपेत् ॥ मधुरत्रयसंयुक्तैःसतिलैःशालितण्डुलैः ॥ ६९७ ॥ दशांशंजुहुयात्पश्चात्संस्कृतेहव्यवाहने॥गन्धपुष्पाक्षताकल्पनववस्त्रादिभिःपुनः ॥६९८॥ भक्ष्यभोज्यान्नपानाद्यैः कुलद्रव्यैर्मनोहरैः ॥ तोषयेद्योगिनीचक्रं यथाविधिसविस्तरम् ॥ ६९९ ॥ एवंन्यासजपध्यानं सहोमार्चनतर्पणम् ॥ कृत्वाप्रयोगान्कुर्वीत तस्यसिद्धिर्नसंशयः ॥ ७०० ॥ प्रयोगान्तेचक्रपूजां विधिनैव समाचरेत् ॥ एकलक्षंजपेन्मन्त्रं ध्यानन्याससमन्वितम् ॥ ७०१ ॥ प्रयोगदोषशान्त्यर्थमात्मनोर्थार्थभेवच ॥ स्वरवर्णपदद्वित्वबिन्दुचैतन्यसूचकम्॥७०२॥

ह्रस्वदीर्घप्लुताद्यांश्च ज्ञात्वाकर्म्माणिसाधयेत् ॥ मूलंप्रासादबीजंतु तरुणादित्यसम्भवम् ॥ ७०३ ॥ उत्तमाङ्गेपराबीजं चन्द्रायुतसमप्रभम् ॥ परस्परकरस्पर्शमिलितानन्दनिर्भरैः ॥ ७०४ ॥ मूलादिब्रह्मरन्ध्रान्तमनवच्छिन्नदीप्तिभिः ॥ परामृतरसासक्तैः सिक्तमापादमस्तकम् ॥ ७०५ ॥ आत्मानंभावयेन्नित्यं सप्रयोगैर्नबाध्यते ॥ अथलोकोपकाराय वक्ष्येध्यानजपादिकम् ॥ ७०६ ॥ कस्यरोगादिकेजाते शान्तिर्येनाभिजायते ॥ स्थित्वामृद्वासनेध्यायेद्गुरुवन्दनपूर्वकम् ॥ ७०७ ॥ मस्तकान्तंचसम्पूर्णचन्द्रमण्डलमध्यकम् ॥ श्रीप्रासादपराबीजं षोडशस्वरसंयुतम् ॥ ७०८ ॥ मुक्तास्फटिककर्पूरकुन्देन्दुधवलंशुभम् ॥ सचन्द्रबीजसञ्जातसुधाप्लावितविग्रहम् ॥ ७०९ ॥ आत्मानंभावयेदेवं परस्यात्मानमेववा ॥ श्रीप्रासादपरामन्त्रमष्टोत्तरसहस्रकम् ॥ ७१० ॥ तरुणोल्लाससहितो मण्डलंपूजयेद्यदा ॥ अपमृत्युमहारोगंजरामरणजंभयम् ॥ ७११ ॥ ग्रहापस्मारवेतालभूतोन्मादादिसम्भवम् ॥ जराधिव्याधिरहितः पुत्रपौत्रादिसंयुतः ॥ ७१२ ॥ जीवेद्वर्षशतंसाग्रं पूजितःसर्वमानवैः ॥ ज्वरोन्मादादिरोगेषु जपेच्छिरसिचिन्तयेत् ॥ ७१३ ॥ पूर्ववत्तांमहारोगे सर्वाङ्गव्यापिनींस्मरेत् ॥ तत्क्षणाच्छान्तिमायान्ति सर्वरोगानसंशयः ॥ ७१४ ॥ दशेन्द्रियेषुयोध्यायेल्लभेदिन्द्रियसौष्ठवम् ॥ सदासञ्चिन्तयेन्मूर्ध्निसभवेदजरामरः ॥ ७१५ ॥ हृत्पद्मकर्णिकामध्ये सूर्य्यमण्डलसंस्थितम् ॥ पराप्रासादबीजंतत्तरुणादित्यसन्निभम् ॥ ७१६ ॥ जीवबन्धूकसिन्दूरपद्मरागाम्बुजप्रभम् ॥ एवंविंशतिभिःस्पर्शाक्षरैःसंवीतमन्त्रतः ॥ ७१७ ॥ तत्प्रभापटलच्छायारक्तीकृतजगत्त्रयम् ॥ आत्मानंसंस्मरेदित्थं यौवनोल्लाससंयुतः ॥ ७१८ ॥ अष्टोत्तरसहस्रंतु मण्डलंप्रजपेत्सदा ॥ देवदानवगन्धर्वसिद्धचारणगुह्यकान् ॥ ७१९ ॥ विद्याधरान्मुनीन्यक्षान्नागानप्सरसःस्त्रियः ॥ सिंहव्याघ्रोरगैणादीनन्यान्दुष्टमृगान्

१ मध्याह्न के सूर्य से प्रकाशमान प्रासाद बीज अर्थात् 'हौं' और अनेकों चन्द्र से प्रकाशमान पराबीज 'ह्रीं' उनको शिरमें ध्यानकरे, दोनों के संयोग से हुये अमृत से भींगा अपना को जानो २ श्रीं हौं ह्रीं चन्द्रबीज 'सं' उससे हुये अमृत से स्नात अपना को जाने ॥

पि ॥ ७२० ॥ वशीकरोत्यसन्देहः किम्पुनर्मानवादिकान् ॥ सइहैश्वर्य्यमा
प्नोति स्वर्गभोगादिकंतथा ॥ ७२१ ॥ यस्यमूर्ध्निस्मरञ्जप्यात्सवश्योजायतेऽ
चिरम् ॥ मूलाधारसरोजान्तवह्निमण्डलमध्यगम् ॥ ७२२ ॥ पराप्रासादबीजं
तत्कल्पाग्निसदृशंस्मरेत् ॥ प्रतिलोमैस्तुसंवीतं दशभिर्व्यापकाक्षरैः ॥ ७२३ ॥
स्वयंकालानलसमः सर्वभूतभयङ्करः ॥ दक्षिणाशान्याभिमुखो यौवनोल्लास
संयुतः ॥ ७२४ ॥ मन्त्रन्तुमण्डलंजप्यादष्टोत्तरसहस्रकम् ॥ अनिष्टकारिणः
क्रूरान्वृथाविद्वेषकारिणः ॥ ७२५ ॥ भूतोग्रग्रहवेतालपिशाचान्ब्रह्मराक्षसान् ॥
तद्वह्निमध्यपतितानग्निदग्धांश्चचिन्तयेत् ॥ ७२६ ॥ क्षणेननाशमायान्ति
शलभाइवसर्वतः ॥ यस्यमूर्ध्निस्मरेद्बीजं समृत्युमधिगच्छति ॥ ७२७ ॥
खदिरश्वेतमन्दारामृताभानुसमिद्वरैः ॥ पनसोदुम्बराश्वत्थप्लक्षापामार्गजै
श्चवा ॥ ७२८ ॥ नन्द्यावर्तसिताम्भोजहयारिकुसुमैश्चवा ॥ एकेनवार्धश्लो
कोक्तैस्तिलतण्डुलसंयुतैः ॥ ७२९ ॥ मधुत्रययुक्तैर्वा भक्ष्यैर्वापायसैरपि ॥
सहस्रादयुतान्तंच यथाकार्य्यंतथाचरेत् ॥ ७३० ॥ पूर्वोक्तस्यजपस्यात्र सिद्ध
येसात्त्विकस्यतु ॥ शान्तिकंपौष्टिकंसन्धिरुपकारश्चसात्त्विके ॥ ७३१ ॥ कद
म्बाशोकवकुलपुन्नागाम्रमधूकजैः ॥ चम्पकद्वयपालाशपाटलश्रीकपित्थ
जैः ॥ ७३२ ॥ मालतीमल्लिकाजातिबन्धूकारुणपङ्कजैः ॥ कुमार्य्यरुणमन्दा
रजातीकुन्दजपादिभिः ॥ ७३३ ॥ सनालकेलकदलीद्राक्षेक्षुपृथुकैरपि ॥
चन्दनागुरुकर्पूररोचनाकुंकुमादिभिः ॥ ७३४ ॥ युक्तैरन्यैः शुभद्रव्यैःशमी
पत्रफलाम्बुना ॥ पृथक्श्लोकार्धसम्प्रोक्तैः प्राग्वद्धोमन्तुराजसे ॥ ७३५ ॥ कु
र्य्यात्कार्य्यस्यवशतः सहस्राद्ययुतान्तकम् ॥ स्तम्भोवश्यंमोहनंच कौतुकंराज
संमतम् ॥ ७३६ ॥ निम्बाक्षभास्करोन्मत्तकरवीरविसदण्डिभिः ॥ कुटजैःकृ
ष्णवर्णैश्च अग्निकुण्डर्क्षवृक्षकैः ॥ ७३७ ॥ गृहधूमचिताङ्गारविषोपविषसं
युतैः ॥ उन्मत्तरससम्पिष्टैश्चिताभस्मान्वितैस्तथा ॥ ७३८ ॥ मध्यपादरजो
भिश्च शत्रोःप्रतिकृतिंचरेत् ॥ यद्वातन्मनसाक्षेत्रवृक्षकाष्ठभवामपि ॥ ७३९ ॥
सम्यक्प्रतिष्ठितप्राणां कुण्डस्योपरिलम्बयेत् ॥ खनेन्मृत्प्रतिमाम्मन्त्री कुण्ड
स्याधोयथाविधि ॥ ७४० ॥ मलीमसेनमनसात्युग्रदृष्टिरमर्षणः ॥ चित्रमाले

विषतरूद्भवकाष्ठसमेधिते ॥ ७४१ ॥ जुहुयात्तामसंकर्म्म सिद्धयत्यत्रनसं शयः ॥ मारणोच्चाटनद्वेषं तामसंस्यात्पिशाचता ॥ ७४२ ॥ राजीलवण होमेनस्त्रीणामाकर्षणंभवेत् ॥ आत्मरक्षांपुरस्कृत्वा पश्चात्कर्माणिसाधये त् ॥ ७४३ ॥ लिखेत्त्रिकोणंषट्कोणमष्टारंचमहीपुरम् ॥ मूलमन्त्रंलिखेन्म ध्ये साध्यनामसमन्वितम् ॥ ७४४ ॥ षडङ्गानिचषट्कोणे स्वरान्वैकेशरेषुच ॥ वर्गान्पत्रेषुभूगेहे चतुष्कोणेषुमन्त्रकम् ॥ ७४५ ॥ पञ्चवर्णरजोभिश्च लिखे दहृष्टिमनोहरम् ॥ एकत्रिषड्वसुचतुष्कलशान्स्थापयेत्क्रमात् ॥ ७४६ ॥ मध्या दिचतुरस्रान्तं द्वाविंशतिघटान्क्रमात् ॥ अथवाष्टादशदश सप्तवाचतुरेकक म् ॥ ७४७ ॥ अस्थिरत्नंशिरातन्त्रं मृन्मांसंरुधिरंजलम् ॥ चर्म्मवस्त्रंशि वाकू र्चं नारिकेलफलंशिरः ॥ ७४८ ॥ मन्त्रप्राणसमायुक्तां यजेत्कलशदेवताम् ॥ साचत्रिमूर्त्तिरंशादिमातरोभैरवान्विताः ॥ ७४९ ॥ विदिक्षुगुरुविघ्नेशदुर्गाक्षे त्रपतीनपि ॥ कलशेषुसमभ्यर्च्य विधिवन्मन्त्रवित्तनः ॥ ७५० ॥ अभिषिञ्चे त्प्रियंशिष्यं सर्वपापप्रशान्तये ॥ आयुःश्रीकान्तिसौभाग्यं विद्यारोग्यादि कंभवेत् ॥ ७५१ ॥ राजाभिषिक्तोलभते चतुःसागरगांमहीम् ॥ अकिञ्चनोऽभि षिक्तस्तु महदैश्वर्यमाप्नुयात् ॥ ७५२ ॥ बन्ध्याभिषिक्तालभते पुत्रंसर्वगुणान्वि तम् ॥ भूतापमृत्युरोगाद्या विनश्यन्ति नसंशयः ॥ ७५३ ॥ त्रिलोहेवापि भूर्जेवा लिखित्वायन्त्रमुत्तमम् ॥ विष्ट तंपूजितंदेवि सर्वरक्षाकरंभवेत् ॥ ७५४ ॥ अकुलंशिवइत्युक्तः कुलंशक्तिःप्रकीर्त्ति ता ॥ कुलाकुलानुसन्धाननिपुणाः



इस यंत्र में मध्यके त्रिकोण में ह्रीं आदि मूलमंत्र व साध्यदेवता का नाम और षट् कोणों में देवताके अंग, एक एक देवताको एक एक कोठे में लिखे तथा आठदलोंमें अ क च ट त प य स, इन आठवर्गोंको और केशरों ( जे पत्रों के बीचहैं ) में अ आ इ ई आदि सोलहस्वरोंमेंसे दो दो स्वर एक एक केशरमें लिखे और भूपुरके चारोंकोणोंमें मूलमंत्र लिखे ॥

कौलिक प्रिये ॥ ७५५ ॥ आदित्वात्सर्वमार्गाणां मनोज्ञासप्रवर्त्तनात् ॥ य ज्ञादिसर्वहेतुत्वादाम्नाय इतिकीर्त्तितः ॥ ७५६ ॥ इतिकौलिकमार्गस्य प्रपञ्चोयंप्रदर्शितः ॥ वेदधर्म्मविहीनाये तेत्रधर्म्मेधिकारिणः ॥ ७५७ ॥ इन्द्रियाणामधृष्यत्वात्कामलोभादिसम्भवात् ॥ प्रायःकलौकौलिकोयं पन्था नरकहेतवे ॥ ७५८ ॥ धर्म्मनाशःकौलिकेनरसेनार्थविनाशनम् ॥ कामनाशःफिरङ्गेनमोक्षनाशोजनेर्षया ॥ ७५९ ॥ भविष्यतिकलौदेवा दम्भःपापं गृहेगृहे ॥ पुरुषेणविनाकिञ्चित्प्रकृत्याक्रियते नहि ॥ ७६० ॥ विनाशक्तिंफलं देवो दातुंनैवक्षमोह्यतः ॥ तस्मात्पुंशक्तिसंयोगं कृत्वामन्त्रंप्रसाधयेत्॥७६१॥ कौलिकेवाममार्गेच पुमान्देवोनसिद्ध्यति ॥ आत्मानंतुशिवं ध्यायेद्देवतां शक्तिरूपिणीम् ॥ ७६२ ॥ क्रीडेरत्नमकारैश्च सुप्रीतस्तस्यदेवता ॥ दक्षमार्गेमातृबुद्धिः स्त्रीबुद्धिःकौलिकेपथि ॥ ७६३ ॥ यस्य जाताद्दृढतरातस्यतु ष्टातुदेवता ॥ एतद्रहस्यमाख्यातं गोप्यंमातरिजारवत् ॥ ७६४ ॥ अन्यद्गुह्यतमंवक्ष्ये सर्वतन्त्रेपुगोपितम् ॥ यथादद्यादेवतैव मन्त्रंतत्प्रब्रवीम्यहम् ॥ ७६५ ॥ वर्णानाम्नायपठितान्विद्धिचन्द्रादिवाचकान् ॥ युक्तान्स्वरचतुष्केणाथोत्तरोत्तरसङ्ख्यकान् ॥ ७६६ ॥ पूर्वदेवतसङ्केतो मयायंसमुदीरितः ॥ अनामाद्याश्चात्रवर्णा ग्राह्याश्चाङ्कयुतौतथा ॥ ७६७ ॥ अङ्कास्तुदक्षिणाम्नाय स्वनामाद्यर्णवर्जिताः ॥ द्वौद्वावेकःपुनर्द्वौ च वर्गौसङ्केतवाचकौ ७६८ ॥ आम्नायक्रमतोवर्णा मन्त्रोदितमतस्तथा ॥ अचःस्वरास्तत्क्रमेण पश्चिमोत्तरदेवयोः ॥७६९॥ चतुराम्नायसङ्केताद्वर्णैवर्गैक्ययोजनम् ॥ ऊर्ध्वाम्नायेप्रकर्तव्यं वैदिकेनतुकिञ्चन ॥ ७७० ॥ येनक्रमेणयद्देशे येवर्णाःपरिकीर्तिताः ॥ तेनक्रमेणतेग्राह्या वर्णाएकादिसङ्ख्यकाः ॥ ७७१ ॥ मन्त्रवर्णाङ्कसंयोगः स्वनामाङ्केनसंयुतः ॥ तस्यमूलंयदायाति तदास्वप्नःप्रजायते ॥ ७७२ ॥ मूलाभावेदेवताया नामाङ्कान्योजयेत्पुनः ॥ ग्राह्यंमूलंनैव यदा पीठेनामाङ्कयोजनम् ॥ ७७३ ॥ पुनर्मूलंनैतियदा तदास्वप्नोनजायते ॥ गुरोरपिगृहीतश्चेत्समन्त्रोनाशकोभवेत् ॥ ७७४ ॥ याम्योत्तरंप्रागपरं मूलाङ्कसमकोष्ठकान् ॥ लिखित्वैकादिकाँल्लिखे वर्णान्स्याद्गणनायथा ॥ ७७५ ॥ सर्वतःसमसङ्ख्याकां

स्तद्युक्तिरधुनोच्यते ॥ पश्चिमेप्रथमोलेख्य उदङ्मध्येतथान्तिकम् ॥ ७७६ ॥ अश्वगत्याद्वितीयःस्यान्मन्त्रिगत्याततःपरम् ॥ आदिगन्तंलिखेत्पश्चादश्वगत्यैवपूर्ववत् ॥ ७७७ ॥ मन्त्रिगत्याथतद्बोधे नृपस्यगमनंभवेत् ॥ पुनर्मन्त्रिगतिंकुर्य्यात्प्राग्वदश्वगतिंपुनः ॥ ७७८ ॥ एवंपुनःपुनःकार्य्यं गुरुदर्शितवर्त्मना ॥ अज्ञानांजायतेपूर्त्तिः सर्वतःसमताक्रमात् ॥ ७७९ ॥ चतुर्णांवर्गकोष्ठेषु लिखेन्मन्त्रान्समानिति ॥ एतन्मध्यंप्रकल्प्याथ परिपूर्तिःप्रकीर्तिता ॥ ७८० ॥ उपान्तिमंतथाग्नेय्यां नैर्ऋत्यां प्रथमंन्यसेत् ॥ वायव्यांतुद्वितीयंस्याततःतत्तद्यथाभवेत् ॥ ७८१ ॥ पूर्णास्तथैवसन्धार्य्याः काष्ठायामम्बिकैककाः ॥ तत्प्रतिस्पर्द्धिनःस्थाप्यास्तत्स्पर्धिन्यांतथादिशि ॥ ७८२ ॥ एवंतुसमपत्राणां परिपूर्तिःप्रकीर्तिता ॥ भाज्यभाजकपत्राणामथवालेखयेत्क्रमम् ॥ ७८३ ॥ प्रज्ञायतेविनाचार्य्यं यथादिव्यंविनाविलम्ब ॥ आदित्यवासरेस्नात्वा प्राक्सूर्य्योदयतस्ततः ॥ ७८४ ॥ सूर्य्योदयेतदर्घ्याणि दत्वानत्वागृहंविशेत् ॥ स्वतोनीचंतुनेक्षेत शब्दंनैवप्रयोजयेत् ॥ ७८५ ॥ सुमुहूर्तेलिखेद्यन्त्रं भूर्जेवाताम्रपत्रके ॥ तत्तद्देवोष्टगन्धेन दलेवामण्डलेलिखेत् ॥ ७८६ ॥ आदौगणेशंसम्पूज्य ततःखेटांश्चदिक्पतीन् ॥ एकान्तेचलिखेद्यन्त्रं तद्दिनेमौनमाचरेत् ॥ ७८७ ॥ नपश्येन्निन्दितंद्रव्यं ब्रह्मचारीहविष्यभुक् ॥ यन्त्रोर्ध्वंविलिखेन्मन्त्रं तदुदग्वाथठद्वयम् ॥ ७८८ ॥ ङेन्तसाध्यतलेदक्षे ठद्वयंविलिखेदिति ॥ कौसुम्भपीतवसने चक्रंकृष्णेसितेतथा ॥ ७८९ ॥ नीलेप्रादेशमात्रेतु प्रासादाम्नायदैवतम् ॥ यन्त्रंसंवेष्टयेत्तत्र स्नेहःकुडवसम्भवः ॥ ७९० ॥ तिलतैलंमहिष्याज्यमेतस्याःखाखसंतथा ॥ गोघृतं च वसाचेति पूर्वादिषूपकल्पयेत ॥ ७९१ ॥ अक्षतैर्विलिखेद्भूमौ पद्ममष्टदलंतथा ॥ कर्णिकायामुत्तरतोथ विघ्नगणपंयजेत् ॥ ७९२ ॥ इष्टदेवंतथामध्ये क्षेत्रपालं च दक्षिणे ॥ अष्टौदिगीशान्पत्रेषुपूजयित्वाविसर्जयेत् ॥ ७९३ ॥ ततःपश्चात्कर्णिकायांस्थापयेद्दीपिकांशुभाम् ॥ तत्रदीपंप्रतिष्ठाप्य ज्वालयेत्पूजयेत्ततः ॥ ७९४ ॥ सावधानःस्वपेत्तत्र ह्याम्नायामरदिक्क्षितिराः ॥ तस्मिन्नहनिनिष्पापः प्राप्नुयाद्देवतागणः ॥ ७९५ । तन्मन्त्रंयेनरूपेण देवतासम्प्रयच्छति ॥ तद्रूपं च गुरोर्ध्या

येत्तज्जातीयांश्चमानयेत ॥ ७९६ ॥ मध्यपापोद्धितीयेऽर्के तृतीयेबहुपात की ॥ तृतीयेर्केमर्त्यगणो निष्पापःप्राप्नुयान्मनुम् ॥ ७९७ ॥ मध्यपापश्च तुर्येतु पञ्चमेबहुपातकी ॥ पञ्चमेरात्तसोऽपापो मध्यःषष्ठेसपापकः ॥ ७९८ ॥ अवश्यमेवप्राप्नोति मन्त्रंसप्तमभास्करे ॥ एतद्गुह्यतमंप्रोक्तं सर्वतन्त्रेषुगोपि तम् ॥ ७९९ ॥ म्लेच्छायापिप्रदातव्यं स्वधर्मैतत्पराय च ॥ विप्रायापिनदा तव्यं स्वधर्मत्यागिनेसुराः ॥ ८०० ॥ लोभात्कामात्प्रदद्याद्यस्सलोकद्वयत श्च्युतः ॥ अथगुह्यतमंवक्ष्ये रहस्यंपीठसम्भवम् ॥ ८०१ ॥ यज्ज्ञात्वासाधकाः सर्वे सिद्धियान्तिनचान्यथा ॥ पीठानिचैकपञ्चाशत्पञ्चाम्नायस्थदेवताः ॥ ८०२ ॥ तत्रतिष्ठन्तिभोदेवास्त्रयस्त्रिंशन्मितानि च ॥ उपपीठानियत्प्रोक्ताः प ष्ठाम्नायेतुदेवताः ॥ ८०३ ॥ तत्तेषां तु समुद्दिष्टं तत्राथहृदयोर्ध्वतः ॥ तेङ्गपाते यत्रजातस्तत्रतिष्ठन्तिवैदिकाः ॥ ८०४ ॥ तथादक्षिणमार्गश्च सिद्धयेन्यत्र वामकः ॥ अकारः कामरूपाख्यमादिपीठंनदुच्यते ॥ ८०५ ॥ यस्मिन्पीठेम यादेवि कुलमार्गःप्रवर्तितः ॥ तत्रतेपतितायोनिस्तांदृष्ट्वातत्स्वियंकृतम् ॥ ८०६ ॥ कुलशास्त्रंतुकौलानां ज्ञानिनांमुक्तिदायकम् ॥ पञ्चमानांद्रुतंसिद्धि रमानांनैवजायते ॥ ८०७ ॥ तद्द्रष्टुंह्यणिमादीनां सिद्धिकामैश्चगम्यता म् ॥ श्रीविद्यायास्तुतन्मूलं मासिमासिचरेद्द्विजः ॥ ८०८ ॥ कुलसिद्धस्यत्लो पेतु रजस्तम्भःप्रजायते ॥ अस्योपपीठद्वितयं समन्तात्तवसूचनात् ॥ ८०९ ॥ वंशाख्यंलोमतोजातं सिद्धिःशाबरचेरकी ॥ आकारःकाशिकापीठं त्वद्दत्तो भेदतांगतम् ॥ प्रलयेपि ननाशोस्य यत्प्रोक्तंतन्महोखरम् ॥ ८१० ॥ नपापंय त्रपुण्यं न देहत्यागात्परंपदम् ॥ द्वयमेवफलंतत्रमुक्तिस्तस्योपपीठके ॥ ८११ ॥ यातनाभैरवीयाया तत्रपीठेपदेपदे ॥ भयानशक्यतेपातुं तत्रतेस्तनकुम्भतः ॥ ८१२ ॥ निःसृतंधारयोर्युग्मं सासिश्चवरुणाभवेत् ॥ काश्यांबहिर्योजनैकं देवभूमिरिति स्मृता ॥ ८१३ ॥ तत्रचाराधितामन्त्रास्तत्कालंफलदायकाः ॥ यथास्थानंचतुर्दिक्षु तत्रह्याम्नायदेवताः ॥ ८१४ ॥ तिष्ठन्तिदेवास्तत्सिद्धिः पुरश्चरणमात्रतः ॥ गङ्गायाःपरपारेयः काशिभागोपवित्रतः ॥ ८१५ ॥ व्या सशापेनतज्जातं गर्दभक्षेत्रमद्भुतम् ॥ तत्कालंतत्रसंसिद्धिस्तत्राम्नायस्यजा

यते ॥ ८१६ ॥ उपपीठमसेस्तीरेसारनाथस्तु दक्षिणः ॥ तत्रदक्षिणमार्गस्य मन्त्राःसिद्धिप्रदायकाः ॥ ८१७ ॥ वरुणायाःसौम्यभागेसारनाथस्तथोत्तरः ॥ तच्चोपपीठंवामस्यमार्गस्यातीवसिद्धिकृत् ॥ ८१८ ॥ नेपालंतुइकारस्स्याद्गुह्यंतत्रतुपार्वति ॥ तस्माद्वामस्यमार्गस्यमूलस्थानंतदुच्यते ॥ ८१९ ॥ षट्पञ्चाशल्लक्षमिताभैरव्योभैरवास्तथा ॥ शक्तीनां च सहस्रेद्वेपीठानां च शतत्रयम्॥ ८२० ॥ चतुर्दशश्मशानानितत्रसन्निहितानि च ॥ दक्षमार्गेसिद्धिदानि पीठान्यष्टौचतत्रतु ॥ ८२१ ॥ सिद्धिर्वैदिकमन्त्राणांतत्रपीठचतुष्टये ॥ तन्मलं यत्रपतितंजातंतदुपपीठकम् ॥ ८२२ ॥ नेपालात्पूर्वदेशेतत्किरातैरुपवेष्टितम् ॥ त्रिंशत्तत्रसहस्राणिदेवयोनीनिसन्तिहि ॥ ८२३ ॥ ईकारस्यसमुत्पत्तिस्थानंस्याद्रौद्रपर्वतम् ॥ पतितोवामनेत्रस्तेमहत्पीठंतदुच्यते ॥ ८२४ ॥ यस्यकस्यापिमन्त्रस्यमहत्सिद्धिःप्रजायते ॥ वामाचारात्तत्रदेवादेवतादर्शनंभवेत् ॥ ८२५ ॥ उकारस्यसमुत्पत्तिस्थानंकाश्मीरमीरितम् ॥ कर्णोनिपतितस्तत्रतस्मात्पीठोत्तमं तु तत् ॥ ८२६ ॥ यस्यकस्यापिदेवस्यतंतंमन्त्रंजपेन्नरः ॥ विद्यानांपारदर्शीस्यात्तत्त्वज्ञानीभवेत्तथा ॥ ८२७ ॥ वैदिकाद्वाकौलिकाद्वास्मार्ताद्वादक्षमार्गतः ॥ च्युतानांतत्रदेवेशिभायश्चित्तकराणि च ॥ ८२८ ॥ मयाकृतानितीर्थानिसद्यःप्रत्ययदान्यपि ॥ करिष्याम्यतिगुप्तानि कलौम्लेच्छावृतानि च ॥ ८२९ ॥ ऊकारस्यसमुत्पत्तिस्थानंस्यात्कान्यकुब्जकम् ॥ तत्रतेदक्षकर्णस्तुपतितोतीवशोभनम् ॥ ८३० ॥ गङ्गायमुनयोर्मध्येतदन्तर्वेदिसञ्ज्ञितम् ॥ तत्क्षेत्रंसोमपानांहिनिवासायोपकल्पितम्॥८३१॥ तत्रब्रह्मादयोदेवाःस्वस्वतीर्थानिचक्रिरे ॥ तत्रवैदिकमन्त्राणांसिद्धिर्देवाःपदेपदे ॥ ८३२ ॥ तस्यदेविमलाज्जातंयमुनातटमास्थितम् ॥ इन्द्रप्रस्थंनाम लोकेप्रसिद्धमुपपीठकम् ॥ ८३३ ॥ ब्रह्मणाविस्मृतावेदायत्पीठस्यप्रभावतः॥ पुनर्लब्धास्ततोजातंतीर्थंनिगमबोधकम् ॥ ८३४ ॥ तत्रकालीतपस्तेपेपरितोष्यन्तिये च माम् ॥ पञ्चभैरवतदयुक्तावातद्भवेयद्भैरेच्छया ॥ ८३५ ॥ ऋकारोभूत्पूर्णगिरौपतितातत्रनासिका ॥ अतोयोगस्यसंसिद्धिस्तत्रपूर्णाप्रजायते ॥ ८३६ ॥ तत्रप्रत्यक्षतांयातिमन्त्राधिष्ठानदेवता ॥ ॠकारस्यसमुत्पत्तिः

स्थानंस्यादर्बुदाचलः ॥ ८३७ ॥ वामस्ततोनिपतितस्तत्रतएतच्चवल्लभम् ॥ शक्तिस्तत्राम्बिकानामस्वस्त्राचारप्रियासदा ॥ ८३८ ॥ पुरश्चर्य्यात्रैदिकापि भोगकालेप्रजायते ॥ तस्मिन्पीठेभवेन्मुक्तिस्सहस्रभगसङ्गमात् ॥ ८३९ ॥ दिव्यस्त्रीणांतुतत्स्थानंतेवतारस्यपार्वति ॥ प्रतिज्ञामहती जातातयादेव्याम यासह ॥ ८४० ॥ निर्वाहयेन्ममक्षेत्रेब्रह्मचर्य्यन्तुयःपुमान् ॥ द्वादशाब्दन्तुमद्भर्तासएवैकोभविष्यति ॥ ८४१ ॥ बौद्धोपिस्खलितस्तत्रत्रिदिनेनैकवत्सरे ॥ निर्वाहस्तत्रवामस्यदक्षेविघ्नाभवन्तिहि ॥ ८४२ ॥ उकारस्यसमुत्पत्तिर्यत्र चाम्रातकेश्वरः ॥ दक्षोगण्डोनिपतितस्तत्पीठेमहदद्भुतम् ॥ ८४३ ॥ धनदाद्यास्तत्रयक्षायक्षिण्योधनदादिकाः ॥ वसन्तितत्रजपतस्तेषांसिद्धिःप्रजायते ॥ ८४४ ॥ ऌकारस्यसमुत्पत्तिरेकाम्रेतुपुराभवत् ॥ नखास्तेगलितास्तत्र तत्रविद्याधरैर्बहु ॥ ८४५ ॥ विद्यार्थिनान्तुतत्पीठमिष्टविद्याविधायकम् ॥ अश्रुतम्बुध्यतेग्रन्थंतत्रसारस्वताज्जपात् ॥ ८४६ ॥ एकारजन्मत्रिस्रोतेपतितात्रिवलीतव ॥ त्रियातेत्रसनंजातंप्राक्पश्चाद्दक्षिणेपतत् ॥ ८४७ ॥ त्रीणितान्युपपीठानिगृहस्थस्तत्रसिद्ध्यति ॥ द्विजश्चनेतरोवर्णोमनवःपौष्टिकेस्थिताः ॥ ८४८ ॥ ऐकारोभूत्कामकोटेनाभिस्तत्रतुतेपतत् ॥ तत्रसर्वेपिसिद्ध्यन्ति काममन्त्रानसंशयः ॥ ८४९ ॥ कामिनींत्वांसमाराध्यछाछिकातीरसङ्गताम् ॥ षोडशस्त्रीसहस्राणांभोगेसामर्थ्यवान्भवेत् ॥ ८५० ॥ चतुर्दिक्षूपपीठानितत्रजातानिपार्वति ॥ स्थानमप्सरसांतत्रयेमन्त्राःस्त्रीप्रसङ्गिकाः ॥ ८५१ ॥ सर्वेतेतत्रसिद्ध्यन्तिक्षिप्रमेवनसंशयः ॥ दर्शनेनापिलभतेसिद्धिमिष्टांमनोरमाम् ॥ ८५२ ॥ ओकारोभूच्चकैलासेहिमाचलनगोदरे ॥ अंगुल्यःपतितास्तत्रपर्वभिर्लिङ्गताङ्गताः ॥ ८५३ ॥ करमालिकयातत्रयद्यन्मन्त्रंजपेद्द्विजः ॥ पुरश्चरणमात्रेणतुष्टाभवतिदेवता ॥ ८५४ ॥ औकारस्यसमुत्पत्तिर्भृगुपीठेभवत्पुरा ॥ तत्रतेपतितादन्तास्तत्पीठंमहदद्भुतम् ॥ ८५५ ॥ समस्तावैदिकामन्त्राः कल्पोक्ताश्चस्वरूपतः ॥ तत्रतिष्ठन्तिसेवातस्सद्यः सिद्धाभवन्ति हि ॥ ८५६ ॥ अन्तु केदारसम्भूतंदक्षंकरतलंतव ॥ पतितंतत्रपीठेतुसिद्धयः करसंस्थिताः ॥ ८५७ ॥ तस्यदक्षेचोपपीठमगस्त्याश्रमसञ्ज्ञितम् ॥ कङ्कणं

पतितंतत्रसर्वसिद्धिविधायकम् ॥ ८५८ ॥ तत्पश्चान्मुद्रिकायास्तेजातंत
त्पीठमद्भुतम् ॥ इन्द्राक्षीनामयत्तत्रवासितेन्द्रेणयापुरा ॥ ८५९ ॥ तत्पश्चाद
वलीतीरेखलयःपतितोम्बिके ॥ पतितोपिविमुच्येतराजराजेश्वरीति च८६०॥
वामाचारेणतत्रापिसिद्धिस्तूर्णंप्रजायते ॥ जपादेवतुपक्षिणयस्तत्रस्युर्दृष्टि
गोचराः ॥ ८६१ ॥ अःकारोभूच्चन्द्रपुरेपतितोवामगण्डकः ॥ तत्रसर्वेपिमन
वस्सिद्ध्यन्त्यत्रनसंशयः ॥ ८६२ ॥ श्रीपीठेतुक्ककारोभून्मस्तकंपतितंतव ॥
प्रायस्तत्रसयापानांगमनंदुर्लभंकलौ ॥ ८६३ ॥ समस्ताः शक्तयोयत्ररमन्ति
निशिचेच्छया ॥ अप्रमत्तंनबाधन्तेविधर्म्मंभक्षयन्तिच ॥ ८६४॥ कर्णारणतो
जातमुपपीठंतुपूर्वतः॥ब्राह्मीतत्रस्थिताशक्तिर्ब्रह्मविद्याप्रकाशिका ॥ ८६५ ॥
कर्णार्धाभरणाद्दक्षिकोणेभूदुपपीठकम् ॥ माहेश्वरीतत्रशक्तिर्मुखशुद्धकरीम
ता ॥ ८६६ ॥ पत्रवल्यस्तुतद्दक्षेपतितास्तेतदाभवत् ॥ उपपीठंतत्रशक्तिःकौ
मारीजयकारिणी ॥ ८६७ ॥ कण्ठमालातुनैर्ऋत्यांपतिताचोपपीठकम् ॥ वै
ष्णव्यावस्थितंजातमिन्द्रजालेसुसिद्धिदम् ॥ ८६८ ॥ नासामुक्तातुतत्पश्चा
त्पतिताचोपपीठकम् ॥ वाराह्याधिष्ठितंजातंशत्रुमर्दनकारकम् ॥ ८६९ ॥
मस्तकाभरणंवायौपतितंचोपपीठकम् ॥ चामुण्डाधिष्ठितंजातंक्षुद्रदैवतसि
द्धिदम् ॥ ८७० ॥ केशाभरणतस्तेभूदीशान्यामुपपीठकम् ॥ अधिष्ठितंमहा
लक्ष्म्यासूक्तानांतत्रसिद्धये ॥ ८७१ ॥ खकारोभूत्तथोङ्कारेक्षेत्रेचामरकण्टके ॥
त्वद्बाहुपतनात्पीठंनर्मदाधिष्ठितंभवत् ॥ ८७२ ॥ तत्रसर्वैर्मुनिवरैः प्रणतैः
समुपासकैः ॥ कृतंमहत्तपोजाताजीवन्मुक्तामहर्षयः ॥ ८७३ ॥ तदुत्तरेचो
पपीठंकञ्चुकीपतनादभूत् ॥ ज्योतिष्मत्यानिवासोसौ ज्योतिर्मन्त्रप्रकाश
तः ॥ ८७४ ॥ वक्षोनिपतितंयत्रजातंपीठं तु गस्थलम् ॥ विख्यातंज्वाल
यातत्रवह्निनाचतपःकृतम् ॥ ८७५ ॥ सदेवमुखतांप्राप्तःस्थितस्तस्योपपीठ
के ॥ ज्वालामुखीतिविख्यातंसवह्निर्देवतामुखम् ॥ ८७६ ॥ पुरश्चर्योक्तद
व्यस्यपुरश्चरणसङ्ख्यया ॥ तत्रहोमःप्रकर्तव्योमन्त्रसिद्धिःप्रजायते ॥ ८७७॥
गोरक्षेणतुतत्रैवप्राप्तंसिद्ध्यष्टकंपुरा ॥ दर्शनादेवतन्नृणांसर्वसिद्धिविधायक
म् ॥ ८७८ ॥ मालवं तु घकारस्यवामस्कन्धोत्रसंस्थितः ॥ उपासितंतुगन्धर्वै

रागज्ञानकसञ्ज्ञितम् ॥ ८७९ ॥ कुलान्तकेङकारोभूत्कक्षानिपतितातव ॥ देवोच्चाटनमृत्यूनांप्रयोगास्तत्रसिद्धिदाः ॥ ८८० ॥ कोट्टके च चकारोभूद्वाम कक्षाप्रतिष्ठिता ॥ लब्धातुराक्षसैस्तत्रसिद्धिर्देवजयाभिधा ॥ ८८१ ॥ छका रस्यसमुत्पत्तिर्गोकर्णेपरिकीर्तिता ॥जठरंपतितंयत्रतच्चपीठंमहाद्भुतम् ॥८८२॥ मातुरेश्वरसञ्ज्ञोयोजकारस्तत्रतेबलिः ॥ प्रथमापतितापीठंशिवमन्त्रप्रकाश कम् ॥ ८८३ ॥ अट्टहासंझकारस्यस्थानंतत्रपराबलिः ॥ पतितातद्गणेशस्य मन्त्रसिद्धिकरंमतम् ॥ ८८४ ॥ विरजंतुञकारस्यस्थानंतत्रपराबलिः ॥ सम स्तविष्णुमन्त्राणांतत्रसिद्धिरदूरतः ॥ ८८५ ॥ टस्योत्पत्तीराजगृहेवस्तिपात स्तुतत्रते ॥ तदधस्तात्क्षुद्रघण्टापतिताचोपपीठकम् ॥ ८८६ ॥ तद्घण्टिका भिधंप्रोक्तमिन्द्रजालंप्रसिद्ध्यति॥उपवेदार्थनिष्पत्तिर्भवेद्राजगृहेतथा॥८८७॥ महापथेठकारोभून्नितम्बःपतितस्तव ॥ जातिडुंडैर्द्विजैस्तत्रस्वशरीरंसमर्पित म् ॥ ८८८ ॥ प्राप्यजन्मान्तरंतैस्तुवेदमार्गप्रलुम्पकाः ॥ अघोराद्याःकलौमा र्गाश्चालितादेहसौख्यदाः ॥ ८८९ ॥ डकारोभूत्कोलगिरौजघनंपतितंतव ॥ समस्तवनदेवानांतत्रसिद्धिरदूरतः ॥ ८९० ॥ एलापुरेढकारोभूद्दक्षोरुःपति तस्तव ॥ बालायास्तत्पीठमुक्तंस्वल्पार्णमनुसिद्धिदम् ॥ ८९१ ॥ कालेश्वरे णकारोभूद्वामोरुः पतितस्तव ॥ मृत्युञ्जयायुःकरणमन्त्राः सिद्ध्यन्तित त्रतु॥ ८९२ ॥ जयन्तीतुतकारस्यस्थानंजानुर्निपातितः॥ तत्रदक्षोजपात्सि द्धयेद्धनुर्वेदोनसंशयः ॥८९३ ॥उज्जयिन्यांथकारोभूद्वामोजानुस्तुतत्रते ॥ सिद्ध्यैकवचमन्त्राणामवन्तीतिनिगद्यते ॥ ८९४ ॥ दस्योत्पत्तिस्तुयोगिन्यां तत्रजङ्घानिपातिता ॥ कौलिकावामकामन्त्रास्तत्रसिद्ध्यन्तिनेतरे ॥ ८९५॥ धकारोभूत्क्षीरिकायांवामजङ्घातुतत्रते ॥ तत्रवैतालिकामन्त्राः सिद्धिंयान्ति चशाबराः॥ ८९६ ॥ हस्तिनापुरउत्पत्तिर्नकारस्यप्रकीर्त्यते ॥ दक्षस्तेपतितोगु ल्फोनूपुरश्चैवतत्र हि ॥ ८९७ ॥ उपपीठन्तुतज्जातंयत्ख्यातंनूपुरार्णवम् ॥ पी ठोपपीठयोस्तत्रमन्त्राःसिद्ध्यन्तिभास्कराः॥८९८ ॥ उड्डीशाख्यंपकारस्यपीठं तत्रतुवामकः ॥ गुल्फोनिपतितस्तत्रकृतंसाधकसिद्धिदम् ॥ ८९९ ॥ उड्डीशा ख्यंमहातन्त्रंसिद्धम्भवतितत्र तु॥नूपुरंपतितंयत्रडामरञ्चोपपीठकम् ॥९००॥

प्रयागस्तुफकारस्यस्थानंदेहरसोत्र तु ॥ यत्रैवपतितस्तत्रदृश्यतेश्वेतमृत्तिका ॥ ६०१ ॥ गङ्गायमुनयोर्मध्येपारावारेतथैवच ॥ एवंस्थानेपुतेस्थीनिपतिता निद्विजोत्तमैः ॥ ६०२ ॥ कृतानितानिभूम्यन्तस्तत्रपीठानिजज्ञिरे ॥ गङ्गायाःप्राक्चत्रगलाद्युपपीठंमहाद्भुतम् ॥ ६०३॥ उत्तरेस्यास्तुचामुण्डाद्युपपीठंमहाद्भुतम् ॥ गङ्गायमुनयोर्मध्येराजराजेश्वरीश्वरम् ॥६०४ ॥ यमुनादक्षिणे कूलेभुवनेशीसमाश्रिता ॥ प्रयागान्तस्तीर्थराजःपीठराजश्चकथ्यते॥६०५॥ षष्ठीशस्तुवकारस्यस्थानंपृष्णिस्तुतत्रते ॥ दक्षिणःपतितोदेविपादुकासिद्धिरत्रतु ॥ ६०६ ॥ मायापुरेवामपार्ष्णिःपतितोभस्थलन्तुतत् ॥ देवदानवगन्धर्वमायाःसिद्ध्यन्तितत्रतु ॥ ६०७ ॥ मलयाख्येभकारोभूत्पीठेसृग्यत्रतेपतत्॥ रक्ताम्बरादिबौद्धानांमन्त्रसिद्धिस्थलन्तुतत् ॥ ६०८ ॥ श्रीशैलेतुयकारोभूत्त त्रापितंतवाम्बिके ॥ सर्वमन्त्रास्तत्रसिद्धावैष्णवास्तुविशेषतः ॥६०९ ॥ रस्थानन्तु हिमागस्यमेरुनामकशृङ्गकम् ॥ त्वन्मेदःपतितंसिध्येत्स्वर्णाकर्षणभैरवः ॥ ६१० ॥ लकारस्यसमुत्पत्तिर्गिरिपीठेतुयत्रते ॥ जिह्वाग्रंपतितन्तत्रजपाद्वाक्सिद्ध्यतिध्रुवम् ॥ ६११ ॥ माहेन्द्रस्तुवकारस्यस्थानंमज्जापतत्तव ॥ सर्वेषां शक्तिमन्त्राणांसिद्धिस्तत्रनसंशयः॥ ६१२॥ वामनन्तुशकारस्यस्थानमङ्गुष्ठतोभवत्॥जपात्तत्रतुमुख्यत्वंमन्त्रिपुप्राप्नुयादपि॥ ६१३ ॥ हिरण्यपुरसम्भूतः षकारोवामतोभवत्॥अंगुष्ठादेवतत्पीठंवाममार्गेधिकोभवत्॥६१४॥ पीठेचापिमहालक्ष्म्याः सकारोभूद्रुचिस्तव॥शरीरात्पतितातत्रसर्वसिद्धिःप्रजायते ॥ ६१५ ॥ हकारश्चात्रिस्थानेभूद्धमनीतत्रतेपतत् ॥ दृग्गोचरास्तुयावन्त्यः सिद्धयस्तत्रसंस्थिताः ॥ ६१६ ॥ छायापीठेलकारोभूद्दृष्टाछायामयातत्र ॥ सतीवेषंतुलब्ध्वाभूच्छायापीठमतस्तुतत् ॥ ६१७ ॥ छत्रपीठेसमुत्पन्नः क्षकारःकेशपाशकः ॥ यत्रतेपतितोदेवि तत्रसिद्धिरदूरतः ॥ ६१८ ॥ एत द्देविमयाप्रोक्तं रहस्यंपीठसम्भवम् ॥ अथान्यत्सम्प्रवक्ष्यामिरहस्यंपरमाद्भुतम्॥ ६१९ ॥ कलौलुब्धास्तुगुरवः शिष्याःसिद्ध्यभिलाषिणः ॥ तस्मान्नसिद्धिःकुत्रापि नाशएवदिनेदिने ॥ ६२० ॥ वक्ष्यामिसिद्धयेतस्मात्सर्वतन्त्रेपुगोपितम् ॥ सुभक्तायसुशिष्यायदेयं नान्यत्रकुत्रचित् ॥ ६२१ ॥

तारमायारमाकामबीजपूर्वंतुरामकम् ॥ विप्राद्यैश्चचतुर्थ्यन्तं नमोन्तंप्रजपे दिति ॥ ६२२ ॥ वृद्धाद्विप्रादग्राह्यमेतदेकदातन्तुतोषयेत् ॥ सिद्धोयंमन्त्रउ द्दिष्टो गोप्यंमातरिजारवत् ॥ ६२३ ॥ षडङ्गन्यासमाद्येन बीजेनरचयेत्पुनः ॥ पूर्वोक्तमातृकाणांतुन्यासमादौसमाचरेत् ॥ ६२४ ॥ गजाननेदेवयोनौगणे शस्यचमातृकाः ॥ शाक्तकेलघुमात्राणांश्रीकण्ठाद्याःशिवादिषु ॥ ६२५ ॥ केशवाद्याविष्णुसूर्य्यग्रहादौपरिकीर्तिताः ॥ पीठन्यासस्तुसर्वत्र कर्त्तव्योदेह शुद्धये ॥ ६२६ ॥ पूजादिकन्तुप्राग्वत्स्यात्पुरश्चर्य्यातथैवहि ॥ षट्कर्म्मा णितुतत्स्तोत्रंभक्तस्थानेस्वयंभवेत् ॥ ६२७ ॥ नास्यस्थानेतथाशत्रुंस्वस्थाने देवतांस्मरेत् ॥ सर्वेप्रयोगाःसिद्ध्यन्ति मोक्षमन्तेलभेन्नरः ॥ ६२८ ॥ नैव त्याज्यस्स्वस्यधर्म्मः पोष्यवर्गान्नपूजयेत् ॥ अप्रियंनैवकुर्वीत मातरम्पितरं तथा ॥ ६२९ ॥ देववत्सेवयेदेतद्रहस्यंसम्प्रकाशितम् ॥ मन्त्रप्रदःसदादुःखी मन्त्रग्राहीचनिर्धनः ॥ ६३० ॥ भविष्यतिकलौप्रायोऽविवेकाद्गुरुशिष्य योः ॥ ज्ञात्वाशास्त्रंगुरुंकुर्य्यात्तदासुखमवाप्नुयात् ॥ ६३१ ॥ इतिदीक्षाविधिः प्रोक्तः कुलाचारसमन्वितः ॥ अर्थवादंविनादेवि किमन्यच्छ्रोतुमिच्छसि ॥ ६३२ ॥ मेरौशिवप्रणीतेस्मिन्मेरुणाप्रकटीकृते ॥ मेरुभूतेचतन्त्राणांपुरश्च र्य्यादिनिर्णयः ॥ ६३३ ॥

इतिश्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेपुरश्चर्य्याकौलिकाचारप्रकाशोदशमः १० ॥

---

श्रीदेव्युवाच ॥ महादेवमहाघोरे कलौकेकेचवैदिकाः ॥ स्थास्यन्तिमन वःकुत्र कल्पाःकेचफलप्रदाः ॥ १ ॥ कियच्चवैदिकंकर्म्म ब्राह्मेपाद्मेचकथ्यते ॥

---

१ ॐ ह्रीं श्रीं क्लीं रामाय नमः, इस मंत्र को चारों वर्ण जपें तौ सिद्धि शीघ्र होवेगी अथवा ॐ रामाय नमः, ब्राह्मण और ह्रीं रामाय नमः, क्षत्रिय तथा श्रींरामाय नमः, वैश्य और क्लीं रामायनमः, शूद्रों को जपकरना उचितहै जपकरनेसे भुक्ति मुक्ति फल सुलभ होते हैं २ जिन पीठोंके नाम पूर्व कहे गये इन्हीं नामों को मातृकान्यास के क्रमसे न्यासकरनेको पीठन्यास कहते हैं, जैसे, अं कामपीठाय नमः शिरसि, आं काशिकापीठाय नमः मुखे, इं नेपालपीठायनमः दक्षनेत्रे, ईंरौद्रपर्वतपीठायनमः वामनेत्रे, उं काश्मीरपीठाय नमः दक्षकर्णे, ऊं कान्यकुब्जकपीठायनमः वामकर्णे, इसी रीतिसे सब पीठों के नामोंको न्यास करलेना ॥

शाखाःस्थास्यन्तिकाश्चैव उपशाखास्तथाचकाः ॥ २ ॥ श्रीमहेश्वरउवाच ॥ वैदिकेकर्म्मणिकलौ नगणांधीःसुदुर्लभा ॥ यथानावंविनासिन्धुपारमिच्छन्तिमानवाः ॥ ३ ॥ तेनाज्ञानात्कलौदेवि वामेकौलेकृतादराः ॥ अतस्त्वज्ञाविनश्यन्ति तेतुमानुष्यवर्जिताः ॥ ४ ॥ केचित्त्वद्धक्रियोगेन उपदिष्ट प्रतारकैः ॥ वैदिकंकर्म्मतेत्यक्त्वा जायन्तेयवनाधिपाः ॥ ५ ॥ कलेर्दशसहस्रेषु विष्णुःस्थास्यतिमध्यमम् ॥ देशंसदेवभवति विन्ध्येहिमवतिक्वचित् ॥ ६ ॥ यावत्पूर्णःकलेःसन्धिस्तावत्स्थास्यन्त्यतःपरम् ॥ स्त्रीमांसमद्यनिरतेलोकेधर्मपराङ्मुखे ॥ ७ ॥ सर्वएवहितेमन्त्राश्चतुर्वेदेषुमेस्थिताः ॥ स्थास्यन्तिपृथिवीमध्येयावत्पूर्णःकलिर्भवेत् ॥ ८ ॥ सन्ध्यांशेतुकलेःसर्वेत्रिंशन्मन्त्राभुविस्थिताः ॥ तदाकल्किस्वरूपस्यविष्णोर्जन्मभविष्यति ॥ ९ ॥ येतिष्ठन्तिकलौदेवितत्साधनमहंब्रुवे ॥ स्वाध्यायाभ्यसनस्यादौव्रतान्येवचतुर्दश ॥ १० ॥ केशश्मश्रुवापयित्वाशुचिर्गुर्वाज्ञयाचरेत् ॥ अथवापूर्वविधिनानिष्पापःसन्समभ्यसेत् ॥ ११ ॥ तानध्यायाप्रदोषेषुदेविशिष्यःपुरस्सरम् ॥ शुचिस्थलेतथैकान्तेनम्रोगुर्वाज्ञयापठेत् ॥ १२ ॥ त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् ॥ त्र्यहंपरंचनाश्नीयात्प्राजापत्यव्रतंत्विदम् ॥ १३ ॥ एकैकंग्रासमश्नीयात्त्र्यहाणित्रीणिपूर्ववत् ॥ त्र्यहंचोपवसेदन्त्यमतिकृच्छ्रंव्रतंत्विदम् ॥ १४ ॥ स्नानंसन्ध्यामुपासीतप्रत्यहंविधिपूर्वकम् ॥ उपवासश्चसप्ताहंशिशुसान्तपनंव्रतम् ॥ १५ ॥ प्रतित्र्यहंपिबेदुष्णजलक्षीरघृतानिच ॥ समाहितःसकृत्स्नायीतप्तकृच्छ्रंव्रतंत्विदम् ॥ १६ ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् ॥ एकरात्रोपवासश्चकृच्छ्रसान्तपनंव्रतम् ॥ १७ ॥ त्र्यहंत्र्यहंतुगोमूत्रादिकंसेव्यंत्र्यहंपुनः ॥ उपवासस्तदाप्रोक्तंमहासान्तपनंव्रतम् ॥ १८ ॥ एकैकंह्रासयेत्पिण्डंकृष्णेऽमायांनभोजनम् ॥ शुक्लेपिवर्धयेच्चापिप्रोक्तंचान्द्रायणंव्रतम् ॥ १९ ॥ पलप्रमाणमन्नंतुग्रासंशुक्लेपिवर्धयेत् ॥ ह्रसेत्कृष्णेव्रतंचान्द्रायणंस्यादेवमध्यमम् ॥ २० ॥ चतुरःप्रातरश्नीयाद्विप्रःपिण्डान्कृताह्निकः ॥ चतुरोस्तमितेसूर्य्येशिशुचान्द्रायणंव्रतम् ॥ २१ ॥ अष्टावष्टौसमश्नीयात्पिण्डान्मध्यगतेरवौ ॥ नियतात्माहविष्यस्य यतिचान्द्रायणंव्रतम् ॥ २२ ॥ स्नानसन्ध्यादिकंकृत्वाद्वादशाहं

नभोजनम् ॥ स्थिरचित्तोप्रमत्तश्चपराकाख्यमिदंव्रतम् ॥ २३ ॥ पिण्याक मधुतक्राम्बुसक्तुपोषणकंक्रमात् ॥ षड्भिर्दिनैःसौम्यकृच्छ्रनामकंव्रतमुत्तम म् ॥२४॥ एवंत्रिरात्रमभ्यासादेकैकस्ययथाविधि ॥ तुलापुरुषवत्त्रीणिस्तो मायनमिदंव्रतम् ॥ २५ ॥ पर्णदूर्वायवस्वर्णबिल्वपत्रकुशोदकैः ॥ प्रत्येकंप्र त्यहंपीतैःपर्णकृच्छ्रव्रतंविदम् ॥ २६ ॥ एतैर्व्रतैस्तुशुद्धात्मागुरुशुश्रूषणेरतः ॥ भिक्षाशीवाहविष्याशीभुञ्जन्मौनंसमास्थितः ॥ २७ ॥ प्रतिलोमान्पुष्पवतीं यवनान्बौद्धकौलिकान् ॥ आचारहीनाञ्छूद्रांश्चदृष्ट्वानैवपठेच्छ्रुतिम् ॥ २८ ॥ रात्रेश्चतुर्थप्रहरेपादप्रक्षालनादिकम् ॥ कृत्वासनेसमाविश्यज्ञातंवेदंस मुद्धरेत् ॥ २९ ॥ निन्दांस्तुतिंनकस्यापिकुर्यादनृतभाषणम् ॥ नारींरूपवतीं दृष्ट्वाध्यायेद्विष्णुंसनातनम् ॥ ३० ॥ हरेद्दोषंहठेनादौतस्यान्तेचसमुच्चरेत् ॥ सा ष्टाङ्गंतुनमस्कारमादावन्तेगुरोश्चरेत् ॥ ३१ ॥ आद्येयामेचतुर्थीचगणेशानं सरस्वती ॥ प्रयातिरात्रौयत्तस्मात्पूजनीयोगणाधिपः ॥ ३२ ॥ अह्नश्चतुर्थे प्रहरेपूजयित्वाविसर्जयेत् ॥ सरस्वतींतोषयित्वागणेशंपुनरागताम् ॥ ३३ ॥ समरक्केस्थिताचेतिध्यात्वायामेचतुर्थके ॥ पुनःपठेदनध्यायस्तदापाठंनकार येत् ॥ ३४ ॥ सार्धयामेप्रतिष्ठाचेत्सप्तमीयातिभारती ॥ निकटेकार्त्तिकेयस्य गातुंतस्मात्प्रपूजयेत् ॥ ३५ ॥ सरस्वत्यायुतंस्कन्दंतत्प्रभावाच्चधारणा ॥ शेष रात्रौपुनर्ध्यात्वास्वागतान्तांपुनःपठेत् ॥ ३६ ॥ त्रयोदशीचेत्पूर्वार्धंरात्रेःस्प ष्टतदातुगीः ॥ कैलासंयातिनृत्यन्तीप्रदोषव्रतकारिणी ॥ ३७ ॥ शिवस्या राधनार्थंतुतस्मात्तत्रपठेन्नहि ॥ हठात्पठतितद्विद्याव्यर्थात्वमुपगच्छति ॥ ३८ ॥ अस्मिन्प्रदोषसमयेतत्पूजाध्यानतत्परः ॥ प्राणायाम्यथवामौनीत्र्यब्दाच्छ्रा द्धस्तुसिद्ध्यति ॥ ३९ ॥ सन्ध्यालोपंनकुर्वीतकदाचिदपिकुत्रचित् ॥ प्रातः सन्ध्यासनक्षत्रासमूर्य्यासायमुच्यते ॥ ४० ॥ मुहूर्तपञ्चकादूर्ध्वंविंशत्यर्वाग्य थायथा ॥ आसन्नोभिजितःकालःश्रेष्ठःश्रेष्ठस्तथातथा ॥ ४१ ॥ सन्ध्याकाल स्यलोपेनमुख्यस्याग्निक्रियान्तरम् ॥ प्रायश्चित्तंत्वेकमर्घ्यमधिकेसम्प्रदी यते ॥ ४२ ॥ परसन्ध्याकालतोर्वाग्गतेकालेततोधिके ॥ अष्टोत्तरशतंतत्र गायत्र्याजपइष्यते ॥ ४३ ॥ राज्ञारुद्धोगतोवापिचात्यावश्यककर्मणि ॥

प्राणायामत्रयंकृत्वागायत्र्यष्टोत्तरंशतम् ॥ ४४ ॥ परान्तेभोजनंचैवमनिन्द्यं निष्कृतिःस्मृता ॥ अथवक्ष्यामिमन्त्राणांगायत्रींवेदमातरम् ॥ ४५ ॥ ययाच सगुणंब्रह्मगीयतेप्रतिपाद्यते॥निर्गुणंयांविनामुक्तिर्नकस्यापिप्रजायते॥ ४६॥ महामायास्वरूपंयन्महाकालःस्वयंजपेत् ॥ यत्प्रभावादहंत्वञ्चजातःकालइवा परः ॥ ४७ ॥ गायत्र्यामुनिराख्यातोविश्वामित्रोतितापसः ॥ गायत्रीछ न्दइत्युक्तंदेवतासवितास्मृतः ॥४८॥ [2]व्याहृतीःसप्तभूराद्याहृन्मुखांसोरुयुग्मके॥ जठरेचक्रमान्न्यस्यन्यासोयंप्रथमःस्मृतः ॥ ४९ ॥ [3]पादांगुल्यंघ्रिसन्धौचसन्धौ स्याद्गुल्फपादयोः ॥ गुल्फजान्वोस्तथासन्धौतथाजानूरुसन्धिषु ॥ ५० ॥ लिङ्गेनाभौचहृदयेकण्ठेवर्णान्न्यसेत्क्रमात् ॥ करांगुलीमूलसन्धौमणिबन्धेच कूर्परे ॥ ५१ ॥ भुजमूलेमुखेनासिकायाञ्चापिकपोलयोः ॥ नेत्रयुग्मेभ्रुवोःशी र्ष्णिचूडाधोवामकर्णके ॥ ५२ ॥ दक्षकर्णेमुखेमस्तकेचवर्णान्क्रमान्न्यसेत् ॥ गायत्र्याअक्षरन्यासोद्वितीयःसम्प्रकीर्तितः ॥ ५३ ॥ [4]पदानिदशगायत्र्याः शिरोभ्रूमध्यदृङ्मुखे ॥ कण्ठहृन्नाभिगुल्फेषुजान्वोरंघ्र्योरथन्यसेत् ॥ ५४ ॥ शिरोदेशेतुगायत्र्याःशिरोन्यासस्तृतीयकः ॥ [5]हृदयंब्रह्मणेप्रोक्तंविष्णवेशिरई रितम् ॥ ५५ ॥ शिखारुद्रायकवचमीश्वरायसमीरितम् ॥ नेत्रंसदाशिवायोक्त मस्त्रंसर्वात्मनेस्मृतम् ॥ ५६ ॥ अयंषडङ्गन्यासस्तुचतुर्थःपरिकीर्तितः ॥ [6]पंज्जानु

---

१ ऋष्यादिन्यास सर्वत्र पूर्वोक्तरीति से करलेना अब बार बार न लिखाजावेगा

२ भूः हृदये, ॐ भुवः मुखे, ॐ स्वः दक्षस्कन्धे, ॐ महः वामस्कन्धे, ॐ जनः दक्षोरौ, ॐ तपः वामोरौ, ॐ सत्यं जठरे, ३ ॐ तत् पादांगुल्यंघ्रिसन्धौ, स गुल्फपादयोःसन्धौ, वि गुल्फजान्वोःसन्धौ, तुर्जानूरुसन्धौ, व लिङ्गे, रे नाभौ, ण्यं हृदये, भ कण्ठे, र्गो करांगुली मूलसन्धौ, दे मणिबन्धे, व कूर्परे, स्य भुजमूले, धी मुखे, म नासिकायाम्, हि कपोलयोः, धि नेत्रयुग्मे, यो भ्रुवोः, यो शिरसि, नः चूडाधः, प्र वामकर्णे, चो दक्षकर्णे, द मुखे, यात् मस्तके, ४ ॐ तत् शिरसि, सवितुः भ्रुवोर्मध्ये, वरेण्यं नेत्रयोः, भर्गः मुखे, देवस्य कण्ठे, धीमहि हृदये, धियः नाभौ, यः गुल्फयोः, नःजान्वोः, प्रचोदयात् पादयोः ५ ॐतत्सवितुः ब्रह्मात्मनेहृदयायनमः, वरेण्यं विष्णवात्मने शिरसेस्वाहा, भर्गो देवस्यरुद्रात्मने शिखायैवषट्, धीमहि ईश्वरात्मने कवचायहुम्, धियोयोनः सदाशिवात्मने नेत्रत्रयायवौषट्, प्रचोदयात् सर्वात्मने अस्त्रायफट्, ६ ॐ भूःपादयोः, भुवःजान्वोः, स्वः कट्याम्, महः नाभौ, जनः हृदये, तपः कण्ठे, सत्यंभाले, ॐ परब्रह्मणेनमः शीर्षके ॥

कठिनाभौचहृदयेकण्ठभालयोः ॥ ५७ ॥ क्रमाद्व्याहृतयोन्यस्याःपरब्रह्मचशीर्षके ॥ पुनर्व्याहृतिन्यासोयंपञ्चमःपरिकीर्तितः ॥ ५८ ॥ तत्सवितुर्हृदयायवरेण्यंशिरसेतथा ॥ भर्गोदेवस्यचशिखाकवचंधीमहिस्मृतम् ॥ ५९ ॥ धियोयोनोनेत्रमुक्तमस्त्रंशेषेणकीर्तितम् ॥ अयंन्यासस्तुषष्ठःस्यात्षडेतेपापहारकाः ॥ ६० ॥ प्राणायामत्रयंकृत्वाततोध्यानंसमाचरेत् ॥ तद्ब्रवीमीहगायत्र्याध्यानंभक्तमनोरमम् ॥ ६१ ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुकलानिबद्धमुकुटांतत्त्वार्थवर्णात्मिकाम् ॥ गायत्रींवरदाभयांकुशकशाःशुभ्रंकपालंगुणंशङ्खंचक्रमथारविन्दयुगलंहस्तैर्वहन्तींभजे ॥ ततस्तुपूजयेद्देवीमष्टावरणसंयुताम् ॥ आदौसम्पूज्यदेवेशीं[1] कोणाग्रेपूजयेत्ततः ॥ ६२ ॥ त्रिकोणस्याग्निकोणस्तु प्रादक्षिण्येनदेवताः ॥ ब्राह्मीमाहेश्वरीचैववैष्णवीप्रथमावृतिः ॥ ६३ ॥ तस्याग्रतस्त्वष्टदिक्षुक्रमादष्टौप्रपूजयेत् ॥ आदित्यमूषांचरविं प्रज्ञांभानुंप्रभांतथा ॥ ६४ ॥ भास्करंचापिसन्ध्यांच द्वितीयावरणंत्विदम् ॥ ततोर्चयेदष्टदलकेशरेष्वङ्गषट्कम् ॥ ६५ ॥ गायत्र्याश्चतृतीयोक्तं दलमध्येयजेदिमाः ॥ प्रह्लादिनींप्रभांनित्यां बिल्वरुद्रांविलासिनीम् ॥ ६६ ॥ प्रभावतींजयांशान्तां चतुर्थावरणंत्विदम् ॥ ततोयजेद्दलाग्रेषु कान्तिंदुर्गांसरस्वतीम् ॥ ६७ ॥ बिल्वरूपांविशालांच ईशानींव्यापनींक्रमात् ॥ विमलांचक्रमात्प्रोक्तं पञ्चमावरणंत्विदम् ॥ ६८ ॥ रविःसितःकुजोराहुः शनिश्चन्द्रोबुधोगुरुः ॥ षष्ठमावरणंचैतच्चतुरस्रदिगष्टके ॥ ६९ ॥ दिक्पालाःसप्तमेप्रोक्तास्तदस्त्राणितथाष्टमे ॥ एवंसम्पूजयेद्देवीं तस्यामुद्राःप्रदर्शयेत् ॥ ७० ॥ व्याहृतित्रयसंयुक्तांगायत्रींसर्वदाजपेत् ॥ चतुर्विंशतिलक्षाणिपुरश्चरणमुच्यते ॥ ७१ ॥ क्षीरौदनंतिलान्दूर्वांसिद्धौदनसमिद्वरान् ॥ पृथग्द्रव्यंसहस्रंतुजु

---

१ मध्यत्रिकोणमें देवेशी अर्थात् गायत्री देवीकी पूजा होती है तथा तीनकोणोंमें आग्नेय कोणसे लेकर ब्राह्मी, माहेश्वरी और वैष्णवी और त्रिकोणकी आठोंदिशाओंमें आदित्य ऊषा आदिकोंकी और अष्टदलके केशरोंमें गायत्री के षडङ्गों की पूजा होती है तथा अष्टदलोंमें प्रह्लादिनी आदिकोंकी फिर आठोंदलोंके अग्रभागमें कान्ति आदि मूलोक्त देवताओंकी तथा चतुरस्रमें आठों दिशाओंमें रविसितादिकों की उनके आगे दश दिक्पाल और दिक्पालों के अस्त्रोंकी पूजा करना इसपूजामें आठ आवरण होते हैं ॥

हुयान्मन्त्रसिद्धये ॥ ७२ ॥ तर्पणादिततःकृत्वागुरुंसन्तोष्ययत्नतः ॥ प्रयोगानाचरेद्विद्वांस्तदनुज्ञापुरस्सरम् ॥ ७३ ॥ तत्त्वसङ्ख्यासहस्राणिमन्त्रीप्रजुहुयात्तिलैः ॥ सर्वपापविनिर्मुक्तोदीर्घमायुस्सविन्दति ॥ ७४ ॥ आयुषेचाज्यहविषाकेवलेनाथसर्पिषा ॥ दूर्वात्रिकैस्तिलैर्मन्त्री जुहुयात्त्रिसहस्रकम् ॥७५॥ प्रतिद्रव्यमथोमासषट्कंवैजुहुयाद्द्विजः ॥ अरुणार्कैश्चश्वेतार्कैर्युतंनियतेन्द्रियः ॥ ७६ ॥ ब्रह्मश्रियेचजुहुयात्प्रसूनैर्ब्रह्मवृक्षजैः ॥ जपेन्मुमुक्षुर्गायत्रींतुर्य्यपादेनसंयुताम् ॥ ७७ ॥ परोरजसेसावदोमितितुर्यःप्रकीर्तितः ॥ विमलोस्यऋषिश्छन्दोगायत्रंदेवतास्मृता ॥ ७८ ॥ परमात्माप्रथमतःप्रणवन्यासमाचरेत् ॥ ब्रह्मात्मनेतुहृदयंशिरोविष्णवात्मनेतथा ॥ ७९ ॥ शिखारुद्रात्मनेचेतिकवचंचेश्वरात्मने ॥ सदाशिवात्मनेनेत्रमस्त्रंसर्वात्मने इति ॥ ८० ॥ नातःपरतरोमन्त्रोनातःपरतरंतपः ॥ तृणायन्तेमहाविद्यादयःसर्व्वायदग्रतः ॥ ८१ ॥ अथ गोप्यंप्रवक्ष्यामिगोप्यंमातरिजारवत् ॥ सर्वेषांवेदमन्त्राणां यच्चसंसिद्धिकारकम् ॥८२॥ लोलुपायकृतघ्नाय नास्तिकायशठायच ॥ सगर्वायगुरुद्वेष्ट्रेप्रोक्त्वाशापमवाप्नुयात् ॥ ८३ ॥ येषांवैदिकमन्त्राणां चलनंकर्म्मसूचितम् ॥ तानादिपादसहितान्गायत्र्यास्तुसदाजपेत् ॥ ८४ ॥ अष्टोत्तरसहस्रन्तुतद्वच्चालनमन्त्रकान् ॥ मध्यपादेनसंयुक्तानन्तिमेनतुनाशकान् ॥ ८५ ॥ अवश्यंजायतेसिद्धिर्गायत्रीतेजसा इति ॥ अयंसंक्षेपतःप्रोक्तोगायत्र्यागोपितोविधिः ॥ ८६ ॥ पद्ममष्टदलंलेख्यं ह्रींकारंकर्णिकास्थितम् ॥ द्वौद्वौस्वरौदिग्विदिशंप्रतिपत्रंसम.लिखेत् ॥ ८७ ॥ किञ्जल्केषुतदग्रेषुगायत्र्यर्णास्त्रिशस्त्रिशः ॥ तद्बहिर्वृत्तयुगलान्तरालेतुसमालिखेत् ॥८८॥



मूलमें सत्तासी के श्लोकसे लेकर नवासी के श्लोकतक गायत्री का यह यन्त्र है इसी यन्त्र को आगे पन्द्रहवें प्रकाश में फिर कहेंगे परन्तु वहांपर चक्र न लिखाजावेगा ॥

ककाराद्यांस्तथोमापोज्योतीरसोमृतंब्रह्म ॥ भूर्भुवस्स्वरोमिति च यन्त्रं सर्वार्थसिद्धिदम् ॥ ८९ ॥ मृत्योर्भयंतुसर्वेषांसर्वदासर्वकर्म्मसु ॥ तस्मिञ्जितेतु देवादीन्मोक्षान्तंसाधयेज्जनः ॥ ९० ॥ तदर्थसम्प्रवक्ष्यामिमन्त्रंमृत्युञ्जयाभिधम् ॥ उपासनातस्यतस्माद्ध्वंशेल्पायुश्चनोभवेत् ॥ ९१ ॥ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥९२॥ वशिष्ठोस्यमुनिश्छन्दोनुष्टुब्देवस्तुत्र्यम्बकः ॥ [1]त्रिचतुर्वसुगोपञ्चत्रिभिर्वर्णैः षडङ्गकम् ॥ ९३ ॥ [2]पूर्वपश्चिमयाम्येन्दुकोणेपुतदनन्तरम् ॥ कुर्यान्न्यासंतथाङ्गेपु नाभिहृत्कण्ठकुक्षिषु ॥ ९४ ॥ लिङ्गेपायौतथाचोर्वोर्मूलयोश्चोरुमध्ययोः ॥ जान्वोस्तोजानुवृत्तयुग्मयोःस्तनयोस्तथा ॥ ९५ ॥ पार्श्वयोःपादयोःपाण्योर्नसिशीर्षेचविन्यसेत् ॥प्रत्येकमनुवर्णांश्चन्यासोयन्तुद्वितीयकः ॥ ९६ ॥ [3]पदान्येकादशान्येवशिरोभ्रूयुगलाक्षिषु ॥ वक्त्रेगण्डयुगे भूयोहृदये जठरेपुनः ॥ ९७ ॥ गुल्फोरुजानुपादेषुन्यासमेवंसमाचरेत् ॥ एवंन्यासत्रयंकुर्य्यान्मातृकान्यासपूर्वकम् ॥ ९८ ॥ हस्ताभ्यांकलशद्वयामृतरसैराप्लावयन्तंशिरो द्वाभ्यांतौदधतंमृगाक्षवलयौद्वाभ्यांवहन्तंपरम् ॥ अङ्कन्यस्तकरद्वयामृतभरंकैलासकान्तंशिवंस्वच्छाम्भोजगतं सदेन्दुमुकुटंदेवंत्रिनेत्रंभजे ॥ ९९ ॥ पञ्चाक्षरोदिते पीठे पूजयेद्वृषभध्वजम् ॥ मूर्तिमूलेनसङ्कल्प्यवक्ष्यमाणेनवर्त्मना ॥ १०० ॥ पूर्वमङ्गानिसम्पूज्यमूर्तीश्चपश्चात्तुपूजयेत् ॥ पूर्वादिप्रादक्षिण्येनेशानायसूर्य्यमूर्तये ॥ १०१ ॥ महादेवायसोमेतिमूर्तयेन्तेसमुच्चरेत् ।

---

१ त्र्यम्बकंहृदयायनमः, यजामहेशिरसेस्वाहा, सुगन्धिपुष्टिवर्धनंशिखायैवषट्, उर्वारुकमिवबन्धनात् कवचायहुम्, मृत्योर्मुक्षीयनेत्रत्रयायवौषट्, मामृतात् अस्त्रायफट् २ त्र्यं नमः पूर्वे, बंपश्चिमे, कं याम्ये, यं उत्तरे, जां आग्नेय्याम्, मं नैर्ऋत्याम्, हें वायव्ये, सुं ईशानकोणे, गंनमोनाभौ, धिं हृदये, पुं कण्ठे, ष्टिं कुक्षौ, वं लिङ्गे, र्द्धं पायौ, नं दक्षोरुमूले, उं वामोरुमूले, र्वा दक्षोरुमध्ये, रुं वामोरुमध्ये, कं दक्षिणजानुनि, मिं वामजानुनि, वं दक्षजानुवृत्ते, बं वामजानुवृत्ते, न्धं दक्षस्तने, नात् वामस्तने, मृं दक्षपार्श्वे, त्योः वामपार्श्वे, मुं दक्षपादे, क्षीं वामपादे, यं दक्षपाणौ, मां वामपाणौ, मृं नासिकायाम्, तात् शीर्षे, ३ त्र्यम्बकं नमः शिरसि, यजामहे भ्रुवोः, सुगन्धिं अक्ष्णोः, पुष्टिवर्धनं मुखे, उर्वारुकं कपोलयोः, इव हृदये, बन्धनात् जठरे, मृत्योः ऊर्वोः, मुक्षीय जान्वोः, मा गुल्फयोः, मृतात् पादयोः, ये न्यासकरनेके बाद ध्यानकरे वह मूल में लिखा है ॥

भवायक्षितिमूर्तयेशर्वायजलमूर्तये ॥ १०२ ॥ रुद्रायचाग्निमूर्तयेउग्रायवायु मूर्तये ॥ भीमायाकाशमूर्तयेऽनन्तंपशुपतिंतथा ॥ १०३ ॥ यजमानमूर्तये चेतिदलाग्रेपुततोयजेत् ॥ रमाराकाप्रभाज्योत्स्नापूर्णोषापूरणीसुधा ॥१०४॥ तृतीयावरणेचैताश्चतुर्थावरणेत्विमाः ॥ विद्याविश्वासितायुक्तासारासाध्या शिवानिशा ॥ १०५ ॥ आर्य्याप्रज्ञाप्रभामोहा शान्तिःकान्तिर्धृतिर्मतिः ॥ पञ्चमावरणेचैताःषष्ठावरणगाअथ ॥ १०६ ॥ धरामायासतीपद्माशान्तामो घाद्ध्यामला ॥ सप्तमेलोकपालांश्चतदस्त्राणितथाष्टमे ॥ १०७ ॥ जपेल्लक्ष मिमंमन्त्रमेवंध्यायेज्जितेन्द्रियः ॥ जुहुयाद्दशभिर्द्रव्यैरयुतंघृतसंयुतैः॥१०८॥ बिल्वंपलाशंखदिरंवटंचातिलसर्षपौ ॥ पायसंदधिदूर्वाचतथैकेनसहस्रकम् ॥ १०९ ॥ तर्प्पयित्वाभिषिञ्च्याथब्राह्मणांस्तर्पयेद्गुरुम् ॥ एवंकृतेप्रयोगार्होजा यतेयंमहामनुः ॥ ११० ॥ अयुतंजुहुयाद्बिल्वसमिद्भिःसम्पदेसुधीः ॥ जुहु याद्ब्रह्मवृक्षस्यसमिद्भिर्ब्रह्मतेजसे ॥ १११ ॥ खदिरैरयुतंहुत्वाशान्तिपुष्टिमवा प्नुयात् ॥ समिद्भिर्वटवृक्षस्यजुहुयाच्चयथाविधि ॥ ११२ ॥ धनधान्यसमृद्ध स्स्यादयुतेनतुसाधकः ॥ तिलैस्तत्सङ्ख्ययाहुत्वासर्वपापैःप्रमुच्यते ॥ ११३ ॥ सिद्धार्थैरयुतंहुत्वाशत्रून्विजयतेनृपः ॥ अनेनैवविधानेननस्यान्मृत्युरकाल तः ॥११४॥ पायसेनकृतोहोमोरक्षाश्रीकीर्तिकान्तिदः ॥ गोदुग्धेनचसिद्धा न्नंहुत्वाकृत्यांविनाशयेत् ॥११५॥ अयमेवमतोहोमःशान्तिश्रीसम्पदावहः॥ दधिहोमेनसंवादंकुर्य्याद्विद्वेषिणोमिथः ॥ ११६ ॥ प्रत्यहंजुहुयान्मन्त्रीदूर्वा मष्टोत्तरंशतम् ॥ आतपान्निखिलाञ्जित्वादीर्घमायुरवाप्नुयात् ॥ ११७ ॥ जुहु याज्जन्मदिवसेपायसान्नैर्घृतान्वितैः ॥ इच्छन्ननिन्दितांलक्ष्मीमारोग्यंविपुलं यशः ॥ ११८ ॥ गव्यदुग्धघृताक्ताभिर्दूर्वाभिर्जुहुयाद्वशी ॥ सविंशतिश तंसम्यग्यज्जन्मदिवसेसुधीः ॥ ११९ ॥ आमयैःसकलैर्मुक्त्वाजीवेद्वर्षशतं सुखी ॥ काश्मरीसमिधःसर्प्पिःपयोन्नंत्रिशतंपृथक् ॥ १२० ॥ जुहुयाद्ब्राह्म णानन्तेभोजयेन्मधुरान्वितम् ॥ प्रीणयेद्बहुधान्याद्यैरात्मनोगुरुमादरात् ॥ १२१ ॥ अनामयमवाप्नोतिदीर्घमायुःश्रियासह ॥ सघृतेनपयोन्नेनहुत्वापर्व णिपर्वणि ॥१२२॥ राज्यश्रियमवाप्नोतिषण्मासान्नात्रसंशयः ॥ लाजैर्वि

शुद्धैर्जुहुयात्कन्याचैववराप्तये ॥ १२३ ॥ क्षीरद्रुमसमिद्धोमाद्ब्राह्मणादीन्व
शंनयेत् ॥ स्नात्वासहस्रंप्रजपेदादित्याभिमुखोमनुम् ॥ १२४ ॥ आधिव्या
धिविनिर्मुक्तोदीर्घमायुरवाप्नुयात् ॥ अनेनमनुनासर्वंसाधयेदिष्टमात्मनः ॥
१२५ ॥ अथदारिद्र्यनाशायवक्ष्येमन्त्रंधनेशितुः ॥ मेधातिथिर्ऋषिःप्रोक्तो
गायत्रंछन्दईरितम् ॥ १२६ ॥ अङ्गन्यासकरन्यासौदेवतासदसस्पतिः ॥
जपंकुर्य्याच्चमासेतुचत्वारिंशत्सहस्रकम् ॥ १२७ ॥ देवताप्रीतयेकार्य्यःषण्मा
संतुमनोर्जपः ॥ पुरश्चरणमेतत्स्यात्स्वशक्त्याविप्रभोजनम् ॥ १२८ ॥ अश्वारूढं
कुन्तपाणिंकुबेरंचित्रिणीप्रियम् ॥ निधीश्वरंस्वर्णवर्णंवन्देगन्धर्वनायकम् ॥
१२९ ॥ अथमन्त्रः ॥ सदस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यंसनिंमेधामयाशिषम् ॥
१३० ॥ चत्वारिंशत्सहस्रंयः प्रतिमासंजपेन्नरः ॥ महाभाण्डारिकःकुर्य्यात्तस्य
दारिद्र्यनाशनम् ॥ १३१ ॥ सर्वार्थसाधकंवक्ष्येसंग्रामविजयप्रदम् ॥ जल
न्धरवधायाहंयत्स्मराभिशृणुष्वतत् ॥ १३२ ॥ जातवेदसेसुनवामसोममरातीय
तोनिदहातिवेदः ॥ सनःपरिषदतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निः ॥
१३३ ॥ त्रिष्टुप्छन्दोमुनिश्चास्य मरीचिःकश्यपोमतः ॥ देवताजातवेदोग्निः
षडङ्गानिसमाचरेत् ॥ १३४ ॥ नवागषट्सप्तनागसप्तभिर्मनुवर्णकैः ॥ अंगुष्ठयोर्गु
ल्फयोश्चजङ्घयोर्जानुनोस्तथा ॥ १३५ ॥ ऊर्व्वोःकट्योर्लिङ्गनाभ्योर्हृदये
स्तनयोस्तथा ॥ १३६ ॥ पार्श्वयोश्चतथापृष्ठेस्कन्धयोरन्तरेतयोः ॥ बाह्वो

---

१ ॐजातवेदसे सुनवाम अंगुष्ठाभ्यांनमः, सोममरातीयतः तर्जनीभ्यांनमः, निदहातिवेदः मध्यमाभ्यांनमः, सनः परिषदति अनामिकाभ्यांनमः, दुर्गाणि विश्वानावेव कनिष्ठिकाभ्यां नमः, सिन्धुंदुरितात्यग्निः करतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादिरपिन्यासः ॥ अथाक्षरन्यासः ॥ जादक्षपादांगुष्ठे, तवामपादांगुष्ठे, वे दक्षगुल्फे, द वामगुल्फे, सेदक्षजङ्घायाम्, सुवामजघने, नदक्षजानुनि, वावामजानुनि, म दक्षोरौ, सो वामोरौ, म कट्याम्, म लिङ्गे, रानाभौ, ती हृदये, य दक्षस्तने, तो वामस्तने, नि दक्षपार्श्वे, द वामपार्श्वे, हा पृष्ठे, ति दक्षस्कन्धे, वे वामस्कन्धे, दःदक्षस्कन्धान्तरे, स वामस्कन्धान्तरे, न दक्षबाहौ, प वामबाहौ, रि दक्षोपबाहौ, ष वामोपबाहौ, द दक्षकूर्परे, ति वामकूर्परे, दुर्दक्षप्रकोष्ठे, गा वामप्रकोष्ठे, णि दक्षमणिबन्धे, वि वाममणिबन्धे, श्वा दक्षकरतले, न वामकरतले, वे मुखे, व नासिकायाम्, सिं दक्षिणनेत्रे, धुं वामनेत्रे, दुदक्षकर्णे, रिवामकर्णे, ताभ्रुवोर्मध्ये, त्यमस्तके, ग्निः मूर्द्धनि ॥

श्चैवोरबाह्वोश्चह्रयोःकूर्परयोरपि ॥ १३७ ॥ प्रकोष्ठद्वितयेचापिमणिबन्धद्वयेतथा ॥ करयोस्तलयोरास्येनस्यक्ष्णोश्चैवकर्णयोः ॥ १३८॥ भ्रुवोश्चैवतुमास्तिष्क्येमूर्द्धनीतिद्वितीयकः ।शिखायांचललाटेचनेत्रयोःकर्णयोस्तथा ॥ १३९ ॥ ओष्ठेधरेचजिह्वायांकण्ठेबाह्वोस्तथाहृदि ॥ कुक्षौकटौचगुह्येचऊर्वोर्जान्वोश्चजङ्घयोः ॥ १४० ॥ पादयोश्चपदन्यासःप्रोक्तोयंध्यानमुच्यते ॥ १४१ ॥ विद्युद्दामसमप्रभांमृगपतिस्कन्धस्थितांभीषणांकन्याभिःकरवालखेटविलसद्धस्ताभिरासेविताम् ॥ हस्तैश्चक्रधरासिखेटविशिखान्पाशांकुशौतर्जनींबिभ्राणामनलात्मिकांशशिधरांदुर्गांत्रिनेत्राम्भजे ॥१४२॥ कृत्वातुसर्वतोभद्रंपूर्वोक्तंमण्डलंशुभम् ॥ तत्कर्णिकायांपद्मेणमण्डूकाद्यान्समर्चयेत् ॥१४३॥ पूर्वोक्तान्परतत्त्वान्तंकेशरेषुतदग्रतः॥जयाञ्चविजयाम्भद्रांरुद्रांकालींचपूर्वतः॥ १४४ ॥ सुमुखींदुर्मुखींचन्द्रमुखींसिंहमुखींतथा ॥ मध्येदुर्गांयजेत्पश्चादासनंसिंहमन्त्रतः ॥ १४५ ॥ तारमुक्त्वावज्रनखदंष्ट्रायचमहाततः[2] ॥ सिंहायहुंफट्हृचेतिमन्त्रः सप्तदशाक्षरः ॥ १४६ ॥ मूर्तिंमूलेनसङ्कल्प्यतस्यामावाह्यपूजयेत् ॥ केशरेषुषडङ्गानिपूर्वतोष्टदलेपुनः ॥ १४७ ॥ जातवेदाःसप्तजिह्वोद्वितीयोहव्यवाहनः ॥ ततोश्वोदरजंवैश्वानरकौमारतेजसम् ॥ १४८ ॥ विश्वमुखंदेवमुखं पीठेकोष्ठचतुष्टये ॥ धरात्मानंजलात्मानंवह्न्यात्मानंनिरात्मकम् ॥ १४९ ॥ निवृत्तिश्चप्रतिष्ठाचविद्याशान्तिश्चगौणकाः ॥ पूषावायवौततोवीथीशचीतोयात्मिकातथा ॥ १५० ॥ नित्यादयावती चैवअष्टमीकारिणीमता ॥ तथैवनवमीनाम्नाप्रोक्ताचैवातिरस्क्रिया ॥ १५१ ॥ देवमाताचदमनाप्रियापश्चान्निरूप्यते ॥ समाराध्यानन्दिनीचपरीहारिपुमर्दिनी ॥ १५२ ॥ पद्माख्यादण्डिनीतिग्माद्दुर्गागायत्र्यतःपरम् ॥ निरवद्याविशालाक्षीसौम्यासायंनिरूप्यते ॥ १५३ ॥ स्वरोद्वाहानादिनीचवेदनाप्रह्विगर्भिणी ॥

---

१ अथपदन्यासः ॐजातवेदसे शिखायाम्, सुनवाम ललाटे, सोमं नेत्रयोः, अरातीयतः कर्णयोः, निदहाति ओष्ठे,वेदःअधरे, सः जिह्वायाम्, नः कण्ठे, परिषदति बाह्वोः, दुर्गाणिहृदि, विश्वा कुक्षौ, नावाकटौ, इवगुह्ये, सिन्धुं ऊर्वोः, दुरिता जान्वोः, अति जङ्घयोः, अग्निः पादयोः २ ॐवज्रनखदंष्ट्राय महासिंहाय हुं फट्नमः इति सिंहपूजनमन्त्रः ॥

सिंहवासाचधूम्राचद्दुर्विषंहारिरंसुका ॥ १५४ ॥ तापहरात्यक्तशोषानिःसपत्ने तितद्बहिः ॥ लोकपालांस्तदस्त्राणिपूजांप्राग्वत्समापयेत् ॥ १५५ ॥ मन्त्रं वर्णसहस्त्राणिजपेद्धोमंपृथक्पृथक् ॥ वेदवेदाब्धिसङ्ख्याकंतिलसिद्धार्थचित्र जैः ॥ १५६ ॥ मूलैश्चसमिधाभिश्चवटोदुम्बरपैप्पलैः ॥ अर्कप्लक्षोद्भवैश्चा पिघृतेनहविषान्नकैः ॥ १५७ ॥ सर्वैर्घृताक्तैर्जुहुयात्तिलैश्चान्तेघृताहुतीः ॥ ततस्सन्तर्प्यसतिलैः कृत्वाचात्माभिषेचनम् ॥ १५८ ॥ समाराध्यधरादेवीं तोषयेद्गुरुमात्मनः ॥ इच्छञ्जपादिभिःसिद्धेमन्त्रेस्मिन्साधकोत्तमः॥१५९॥ आग्नेयास्त्राधिकारीस्यात्तद्विधानमितीर्य्यते ॥ आग्नेयास्त्रमितिप्रोक्तंविलो मप्रथितोमनुः ॥ १६० ॥ पूर्वोक्ताएवमुन्याद्याः षडङ्गानिविलोमतः ॥ ग्नि त्यतारिद्वधुंसिंप्रोच्चार्य्यात्रहृदयंमतम् ॥ १६१ ॥ ववेनाश्वाविणिर्गाद्वशिरो न्यासःप्रकीर्तितः ॥ एवमग्रेपिजानीहि पूर्वोक्तार्णविलोमतः ॥ १६२ ॥ पूर्वो क्तसङ्ख्यकैर्वर्णैर्वर्णन्यासस्तथैवच ॥ तथैवचपदन्यासोजपःपूजाचपूर्ववत् ॥ १६३ ॥ पञ्चगव्यसुपक्वेनचरुणातस्यसिद्धये ॥ चतुस्सहस्रंचशतंचत्वारिंश चतुष्टयम् ॥ १६४ ॥ होमयेदर्चनंप्राग्वज्जपश्चप्रतिलोमतः ॥ सर्वत्रदेशि कः कुर्य्याद्गायत्र्यादिद्विगुणंजपम् ॥ १६५ ॥ क्रूरकर्म्मणिकुर्वीतप्रतिलोमवि धानतः ॥ शान्तिकंपौष्टिकंकर्म्मकर्त्तव्यमनुलोमतः ॥ १६६ ॥ ग्न्याद्यःप ञ्चाक्षरःपादोज्ञेयोज्ञानेन्द्रियात्मकः ॥ धुमाद्यःपञ्चवर्णोद्वितीयः कर्म्मेन्द्रिया त्मकः ॥ १६७ ॥ श्वाद्यस्तृतीयःपञ्चार्णःसर्वभूतमयःस्मृतः ॥ त्याद्यःसप्ता क्षरः पादश्चतुर्थोधातुरूपकः ॥ १६८ ॥ दंःपूर्वःपञ्चमःपादऊर्म्मिरूपःषडक्ष

---

१ तिद्षरिपनःस शिखायैवषट्, दःवेतिहादनि कवचायहुम्. तोयतीराममसो नेत्रत्रयाय वौषट्, मवानसुसेदवेतजाअस्त्रायफट् २ मन्त्रके उलटे अन्तरों से पादकल्पना की जाती है जैसे ग्नि आदि प्रथम पाद है अर्थात् ग्निः त्यतारिद्वु इसी रीति से जातवेदसे इस मन्त्र के उलटे अन्तरों से आठपद जानिये ३ श्रोत्र,त्वक्, चक्षु, जिह्वा, घ्राण ये पांच ज्ञानेन्द्रियहैं ४ वाक्, पाणि, पायु, उपस्थ, पाद ये पांच कर्मेन्द्रियहैं ५ आकाश, वायु,तेज, जल, पृथिवी, ये पांच भूत कहेजाते हैं ६ त्वग्रक्तमांसमेदोस्थिमज्जाशुक्राणिधातवः ॥ त्वक्, रक्त, मांस, मेदा, अस्थि, मज्जा, शुक्र ये सात धातुहैं ७ बुभुक्षाचपिपासाचप्राणस्यमनसस्तथा ॥ शोकमो हौशरीरस्यजन्ममृत्यूषडूर्मयः ॥

रः ॥ तोवर्णादिः षडर्णान्यः षट्कौशिकमयोमतः ॥ १६९ ॥ सोपूर्वःपञ्चव
र्णोन्यः शब्दादिमयईरितः ॥ सेवर्णाद्योष्टमोज्ञेयः पञ्चार्णावचनादिकः ॥
१७० ॥ एवंतत्त्वसमायोगात्परिक्लृप्तिरुदीरिता ॥ तत्तत्पादाक्षरोत्पन्नास्तारा
द्यावह्निदेवताः ॥ १७१ ॥ प्रधानमूर्तिप्रतिमाः स्वस्वकर्म्मेरितप्रभाः ॥ प्रज्वल
त्केशवसनाभीमदंष्ट्राभयापहाः ॥ १७२ ॥ देवताइन्द्रियोत्पन्नाऊर्ध्वदृष्टयई
रिताः ॥ देवताभूतपादोत्थास्तिर्य्यग्नेत्राःप्रकीर्तिताः ॥ १७३ ॥ धातुरूपाक्ष
रोत्पन्नाउभयात्मदृशोमताः ॥ ऊर्म्मिजाऊर्ध्ववदनाःकोशोत्थास्तिर्य्यगान
नाः ॥ ॥ १७४ ॥ अर्थसङ्ख्यासमुत्पन्नादेवताद्विदिगाननाः ॥ एताःसर्वा
स्स्मृताः क्लीबाइन्द्रियार्थोद्भवास्त्रियः ॥ १७५ ॥ याभ्योमन्त्रीदहेच्छत्रोरा
ष्ट्रंसगिरिकाननम् ॥ अस्त्रंमनुष्यनक्षत्रेप्रारभेतविचक्षणः ॥ १७६ ॥ आ
सुरेषुप्रयुञ्जीयाद्देवतासुशुभंहरेत् ॥ उपक्रमेतनन्दासुरिक्तास्वस्त्रंविसर्जयेत् ॥
१७७ ॥ भद्रास्त्राहरणंकुर्य्याज्जयाहेकार्य्यमुत्तमम् ॥ उपक्रमोभौमवारेशनि
वारेविसर्जयेत् ॥ १७८ ॥ प्रतिसंहरणंवारेगुरोःशुक्रस्यवाभवेत् ॥ स्थिरेषुराशि
ष्वारम्भश्चरेषुस्याद्विसर्जनम् ॥ १७९ ॥ अस्त्रसंहरणंकुर्य्यादुभयेषुविचक्षणः॥
कृष्णपक्षेचरेदस्त्रंविसृजेच्छशिनापुनः ॥ १८० ॥ शुक्लपक्षक्रमादस्त्रंपुनरात्मनि
संहरेत् ॥ भानुनामोक्षसंहारौकुर्य्यात्पक्षद्वयेसुधीः ॥ १८१ ॥ पश्चिमाभिमुखो
भूत्वासर्वकर्म्माणिसाधयेत् ॥ नक्षत्रवृक्षसकलान्साध्याख्यान्कर्म्मसंयुतान् ॥
१८२ ॥ राजीतैलेनसतिलान्पृथक्सप्तसहस्रकम् ॥ जुहुयात्संयतोभूत्वारिपु
र्यमपुरंव्रजेत् ॥ १८३ ॥ सप्तरात्रंप्रजुहुयात्सिद्धार्थस्नेहसंयुतैः ॥ आर्द्रवस्त्रोवृष्टि
कालेमरीचैर्मनुनामुना ॥ १८४ ॥ निगृह्यतेज्वरेणारिःप्रलयाग्निसमेनसः॥
तालपत्रेसमालिख्यशत्रुनामयथाविधि ॥ १८५ ॥ आग्नेयास्त्रेणसंवेष्ट्य
कुण्डमध्येनिखन्यते ॥ मरिचैश्चहुनेत्क्रुद्धोज्वराक्रान्तःसजायते ॥ १८६ ॥ त
दादायक्षिपेत्तोयेशीतलेसवशोभवेत् ॥ सामुद्रसलिलंहिंगुंविषंजीरकलोहि

---

१ अन्नमय, प्राणमय, मनोमय, विज्ञानमय, आनन्दमय, पांच कोश छठाँ शुद्ध चैतन्य
२ शब्द, स्पर्श, रूप, रस गन्ध ३ वचन, आदान, विसर्ग, आनन्द, गमन ॥

ते॥१८७॥ कथितेपुत्तलिंसाध्यनक्षत्रतरुनिर्मिताम् ॥ अधोवक्त्रांविनिक्षिप्यय ष्टयाविषतरुत्थया ॥ १८८ ॥ तच्छिरस्ताडनंकुर्य्याज्जपन्मन्त्रंविलोमतः ॥ सप्ताहान्मरणंयातिशत्रुर्ज्वरविमोहितः ॥ १८९ आदित्यरथनागेन्द्रग्रस्तांत्रिं तद्विपाततम् ॥ नग्नंतैलेनलिप्ताङ्गंदग्धंभानुमरीचिभिः ॥ १९० ॥ अधोमुखं निजरिपुंध्यात्वाकथितदेशिकः ॥ वित्राणांगर्जनींशूलंध्यात्वादुर्गाम्भयङ्क रीम् ॥ १९१ ॥ महिषीघृतसंसिक्तैःपल्लवैर्विषवृक्षजैः ॥ हुत्वारिपोर्महासेना मुच्चाटयतिमन्त्रवित् ॥ १९२ ॥ ध्यात्वादेवींपुराप्रोक्तांचरुभिर्मरिचान्वितैः ॥ अजारुधिरसंसिक्तैर्जुहुयाद्दिवसत्रयम् ॥ १९३ ॥ रिपोरुच्चाटनंकुर्य्यात्सेनया नात्रसंशयः ॥ अग्निशूलाकुलांदुर्गांज्वलन्तींप्रलयाग्निवत् ॥ १९४ ॥ ध्यात्वासर्षपतैलाढ्यैर्बीजैर्धत्तूरसम्भवैः॥हुत्वाविमोहयेच्छत्रुंमरीचैर्वासर्षपैः॥ १९५ ॥ कालाञ्जननिभांदुर्गांशूलखड्गकरांस्मरेत् ॥ नक्षत्रवृक्षसम्भूतैर्व्रणवृक्ष जसञ्ज्ञकैः॥ १९६ ॥ समिद्भिःप्रजुहुयाद्वयान्मासेनवैरिणम् ॥ सिंहारूढांप्र धावन्तींधावमानंरिपुंप्रति ॥ १९७ ॥ शरान्कार्मुकनिर्मुक्तान्वह्निज्वाला मुखाकुलात् ॥ मुञ्चन्तींसंस्मरन्दुर्गांतर्पयेदुष्णवारिणा ॥१९८॥ भानुबिम्बं समालोक्यशत्रोरुच्चाटनंभवेत् ॥ अतिदुर्गाममोघर्ष्टिगदाहस्तांविचिन्तयेत् ॥ १९९ । विद्युद्दामसमानाभांमहिषीघृतसम्प्लुतैः ॥ पुरोक्तैर्जुहुयान्निम्बविभी तकसमिद्भिः ॥ २०० ॥कोद्रवैरथशत्रोश्चसेनायास्स्तम्भनंभवेत् ॥ इषुजालां कुशाढ्यांचगानिदुर्गामनुस्मरेत् ॥ २०१ ॥ लवणैर्मधुरैस्साध्यकाष्ठैर्वाणधि तेनले ॥ जुहुयान्निशिसप्ताहान्मन्त्रविद्वशयेन्नृपान् ॥ २०२ ॥ पाशांकुश धरांरक्तांविश्वदुर्गांविचिन्तयेत्॥फलिनीकुसुमैःफलैश्चन्दनाम्भस्समुक्षितैः॥ २०३ ॥ जुहुयान्निशियोमन्त्रीतस्यविश्वंवलंभवेत् ॥ शरच्चन्द्रनिभांदेवींवि राजत्परमामृताम् ॥ २०४ ॥ पाशांकुशकरान्ध्यात्वासिन्धुदुर्गासमिद्भिः ॥ वेतसैर्मधुरासिक्तैर्जुहुयाद्वृत्तिसिद्धये ॥ २०५ ॥ जपाकुसुमसङ्काशामग्निदुर्गां विचिन्तयेत् ॥ हुनेल्लवणपुत्तल्यामधुरत्रययुक्तया ॥ २०६ ॥ आकर्षेद्वाञ्छि तान्साध्यान्मन्त्रविन्नात्रसंशयः॥ अतिदुर्गेयमत्याद्याषडन्तादिस्समीरिता ॥ २०७ ॥ दुवर्णान्तातथान्याद्यागानिदुर्गाप्रकीर्त्तिता ॥ विश्वाद्याचैवमन्त्रे

स्मिन्विश्वदुर्गासमीरिता ॥ २०८ ॥ सिन्ध्वाद्यासावकारान्तासिन्धुदुर्गा निगद्यते ॥ त्यान्तामग्न्यादिकामेवमग्निदुर्गांविदुर्बुधाः ॥ २०९ ॥ अङ्गणे स्थण्डिलंकृत्वासुगन्धिकुसुमादिभिः ॥ देवींतत्रार्चयेन्नित्यंप्रागुक्तेनैववर्त्मना॥ २१० ॥ आहरेद्रात्रिपुहुतिंचरुणासर्वसिद्धिदाम् ॥ कृत्वारोगभयद्रोहभूता निनाशयेदयम् ॥ २११ ॥ यथावदग्निमाराध्यगन्धैःपुष्पैर्मनोहरैः॥स्थित्वा तस्याग्रतोमन्त्रीजपेन्मन्त्रमनन्यधीः॥२१२॥जपोयंसर्वसिद्धयैस्यान्नात्रकार्या विचारणा ॥ लवणैर्मधुरासिक्तैर्जुहुयात्पश्चिमामुखः ॥ २१३ ॥ मन्त्रार्णसं ख्ययामन्त्रीरिपुमात्मवशंनयेत् ॥ शालीन्प्रक्षाल्यसंशोध्यशुद्धान्कुर्वीततण्डु लान् ॥ २१४ ॥ नयित्वापञ्चगव्येपुसंस्कृतेहव्यवाहने ॥ पाचयेच्चजपन्म न्त्रमवतार्यपुनःसुधीः ॥ २१५ ॥ अर्चयित्वाविशेषेणसमिद्धेग्नौयथापुरा ॥ जुहुयाच्चरुणाज्येनतथाचाष्टसहस्रकम् ॥ २१६ ॥ पात्रेसन्तापनंकुर्यात्साध्यं तत्प्राशयेद्गुरुः॥शिष्यंतंपूजयेद्द्वारिसंपातंप्राङ्गणान्तरे॥ २१७ ॥ कृत्यावेगा विनश्यन्तिसहभूतग्रहामयैः॥परैरुत्सादिताकृत्यापुनस्तानेवभक्षयेत्॥२१८॥ व्रीहिभिर्हविपाक्षीरैःपयोवृक्षसमिद्वरैः ॥ आज्यैर्मधुत्रयोपेतैर्मन्त्रैर्दशशतंपृथ क्॥ २१९ ॥ जुहुयात्सम्पदांभूमिःसाधकोभवतिध्रुवम् ॥ भास्करेमेषराशिस्थे मन्त्रज्ञानगुणेदिने ॥ २२० ॥ गत्वानद्यांजपन्मन्त्रंसततंपुष्कलाम्भसि ॥ उद्धृत्यादायसिकताःसंशोध्यपरिशोधयेत् ॥ २२१ ॥ न्यस्यताःपञ्चगव्येपुसं सूतेहव्यवाहने ॥ भर्जयेन्मनुनासिद्धयैदर्व्यात्रह्मतरूत्थया ॥ २२२ ॥ सिंहमेष धनुःस्थेर्केकृष्णपक्षेष्टमीतिथौ ॥ विशाखाकृत्तिकामूलहस्तोत्तरमघास्वथ ॥ २२३ ॥ रोहिण्यांश्रवणेवारेमन्दवाक्पतिदैवते ॥ विहायान्येपुकुर्वीतसिकता स्थापनंसुधीः ॥ २२४ ॥ गृहग्रामादिराष्ट्राणांरक्षार्थंसिकताःशुभाः ॥ प्रस्था दकघटोन्मानामध्यादिष्ववरेष्विमाः ॥ २२५ ॥ नवसुप्रक्षिपेज्जप्त्वातेपुसम्पू जयेत्क्रमात् ॥ मध्यादिदेवीमस्त्राणिकपालान्तादिदेशिकः ॥ २२६ ॥ चक्रं शङ्खमसिंखेटंबाणांश्चापंत्रिशूलकम्॥कपालंस्वस्वमन्त्रेणसम्पूज्यान्तेबलिंहरे त्॥२२७॥नक्षत्रग्रहराशीनांलोकेशानांबलिंहरेत् ॥ विहितायत्ररक्षायावर्धन्ते तत्रसम्पदः ॥२२८॥ क्षुद्रग्रहमहारोगभयभूतसरीसृपाः ॥ अमुनाविलयंयान्ति

विधिनानात्रसंशयः ॥ २२९ ॥ सिकतानांविशुद्धानांकुडवाश्चापिषोडश ॥ पञ्चगव्ययुतेपात्रेब्रह्मवृक्षेणनिर्मिते ॥ २३० ॥ निक्षिपेद्विधिनायत्रस्थापयेत्तत्रसम्पदः ॥ दिनेदिनेप्रवर्धन्तेऽकालवृष्ट्यादिभिःसह ॥ २३१ ॥ महोत्पाताविनश्यन्तिकृत्याद्रोहामयग्रहाः॥चरुगव्याश्मनांकुर्यात्स्थापनंविधिनामुना ॥ २३२ ॥ गोमूत्रंप्रस्थमात्रंस्याद्गोमयाम्भस्तदर्धकम् ॥ आज्यात्सप्तगुणक्षीरंगोमूत्रात्त्रिगुणंदधि ॥ २३३ ॥ गोमूत्रेणसमंसर्पिःसर्वंवासममुच्यते ॥ गावःस्युः कपिलाः श्वेतासितधूम्रारुणप्रभाः ॥ २३४ ॥ अभावेचसिताः सर्वाःसर्वावाकपिलोद्भवम् ॥ एकोनपञ्चाशत्कोष्ठे फलकेब्रह्मशाखिनः ॥ २३५ ॥ विहायकोणकोष्ठानिमध्यकोष्ठेलिखेच्चह्रीम् ॥ तदूर्ध्वकोष्ठमारभ्यप्रादक्षिण्येनसंलिखेत् ॥ २३६ ॥ देवींतत्रसमावाह्यपूजयेदुपचारकैः ॥ कृत्वाहोमन्तुसम्पातंनिखनेत्तद्यथापुरा ॥ २३७ ॥ दद्याद्बलिंयथापूर्वंतस्यपूर्वोदितंफलम् ॥ नवकोष्ठान्वितंलेख्यंचतुरस्रंसुशोभनम् ॥ २३८ ॥ साध्यनामान्वितांमायांमध्यकोष्ठेतुसंलिखेत् ॥ तदधःकोष्ठमारभ्यप्रादक्षिण्येनसंलिखेत् ॥ २३९ ॥ मूलमन्त्रस्यपूर्वोक्तानष्टौपादांश्चतद्बहिः ॥ वृत्तद्वयान्तरालेतुमातृकार्णैःप्रवेष्टयेत् ॥ २४० ॥ तद्बहिश्चतुरस्रंस्याद्धारणामन्त्रमद्भुतम् ॥ सर्वभूतभयहरंश्रीकीर्त्यायुःप्रदंशुभम् ॥ २४१ ॥ आग्नेयास्त्रस्यजानातिविसर्गादानकर्म्मणी ॥ यः पुमान्गुणविशिष्टस्तस्याधीनंजगत्त्रयम् ॥ २४२ ॥ अतिदुर्गामनुंवक्ष्येयद्विनास्त्रमितीर्यते ॥ प्रतिलोममिमंमन्त्रंकृत्वास्त्रंपरिचक्षते ॥ २४३॥ अतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निः ॥ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदःसनःपरिषत् ॥ २४४॥ अङ्गन्यासस्तुपूर्वोक्तोवर्णन्यासइतीरितः॥क्रमेणानेनवर्णानाम्पदानांन्यासइष्यते॥ २४५॥ध्यानंचैवपुराप्रोक्तंकृत्यास्त्रस्यविलोमतः॥न्यासादिकंतथाध्यानंमुनिश्छन्दश्चपूर्ववत् ॥ २४६॥ पुरश्चर्यादिकंसर्वंप्रयोगान्कीर्त्तयाम्यहम् ॥ भानुबिम्बगतंशत्रुंमध्येवक्रंविषाहतम् ॥ २४७ ॥ मूलादुत्थितयाग्रस्तंकुण्डल्याभावयेत्सुधीः ॥ मूलाधारेपचेत्तद्यस्तस्यकालंसभावयेत् ॥ २४८ ॥ दिनद्वयाज्ज्वराक्रान्तोरिपुः प्राणान्वि

१ चारटके को कुडव कहते हैं २ सोलहटके का प्रस्थ होताहै ॥

मुञ्चति ॥ दिनास्त्रेणप्रविद्धाङ्गंस्वाधिष्ठानगतंरिपुम् ॥ २४९ ॥ पञ्चवायुस मिद्धेनचाग्निनादग्धविग्रहम् ॥ ध्यायेन्मनुंजपेत्सद्यः सभवेद्यमवल्लभः ॥ २५० ॥ मणिपूरगतंशत्रुमग्निनादीप्तविग्रहम् ॥ ध्यायन्दिनास्त्रंप्रजपेत्समृत्यु वशतांव्रजेत् ॥ २५१ ॥ अनाहताहितः शत्रुर्निर्दग्धोमन्त्रवह्निना ॥ पाशे नवद्धाशीघ्रेणनीयतेयमकिङ्करैः ॥ २५२ ॥ विशुद्धस्थानगोवैरीदिनवाणेन पूरितः ॥ अधोमुखः स्मृतस्तूर्णम्परासुःस्याद्दिनत्रयात् ॥ २५३ ॥ आज्ञायां निहितंशत्रुंदहद्वाणाग्निनाधिया ॥ पुत्रमित्रकलत्रादीन्परंमृत्युमवाप्नुयात् ॥ २५४ ॥ नाभिमात्रेजलेस्थित्वाध्यायेद्विम्बंदिनेशितुः ॥ वैरिणंदग्धसर्वा ङ्गंमन्त्रमष्टोत्तरंशतम् ॥ २५५ ॥ जपेत्मदादिनादर्वाग्यमलोकंसगच्छति ॥ आरवारंसमारभ्यसप्ताहंप्रजपेन्मनुम् ॥ २५६ ॥ सूर्य्योदयंसमारभ्ययावदस्त मयोभवेत् ॥ सन्निपातपराविष्टोयमग्रस्तोभवेदरिः ॥ २५७ ॥ स्थित्वादुर्गालये मन्त्रीत्रिरात्रंवर्जिताशनः ॥ दिनेधामन्त्रविद्धाङ्गंवैरिणंप्रविचिन्तयेत् ॥ २५८ ॥ जपेन्मनुमिमंशत्रुर्ज्वलितोमरणंव्रजेत् ॥ इष्ट्वादुर्गांजपेन्मन्त्रमजस्रंस्वरि पुंस्म रन् ॥ २५९ ॥ शूलप्रोतशरीरन्तुदिनास्त्रेणप्रपीडितम् ॥ ज्वरेणमहताविष्टो जायतेसोयमातिथिः ॥ २६० ॥ रविमण्डलगंशत्रुंदष्टंतक्षपन्नगैः ॥ विषा ग्निदग्धसर्वाङ्गंध्यायेद्वरुणेनवारिणा ॥ २६१ ॥ तर्पयेद्दिनबाणेनस्यादसौ यमवल्लभः ॥ रविबिम्बादागतयाज्वालयाग्रस्तविग्रहम् ॥ २६२ ॥ रिपुंध्यात्वाज पेन्मन्त्रंसप्रयातियमान्तिकम् ॥ ग्रहग्रस्ताग्रबिम्बस्थंविद्धंमन्त्रमयैःशरैः ॥ प्रति पद्घातिनंशत्रुंजपेदयुतमन्त्रवित् ॥ रिपुर्व्रजतिशीघ्रेणयमदूतोयमालयम् ॥ २६३ ॥ प्रलयानलसङ्काशांकालरात्रिमिवापराम् ॥ शूलपाशधरांघोरांसिंहस्क न्धनिषेदुषीम् ॥ २६४ ॥ सवितुर्मण्डलान्तःस्थांरक्तनेत्रत्रयोद्भवैः ॥ विस्फुलिङ्गै र्निर्दहन्तींरिपुमाकुलविग्रहम् ॥ २६५ ॥ स्वेष्टदंष्ट्राधरांनृत्यद्भ्रुकुटीभीषणानना म् ॥ तर्जयन्तींनिजंशत्रुंतर्जन्याभीमरूपया ॥ २६६ ॥ दंष्ट्रामयूखजा लेनद्योतयन्तींदिगन्तरम् ॥ शूलेनवैरिणोवक्षोदारयन्तींभयङ्करम् ॥ २६७ ॥ जपेद्दिनत्रयंधीमान्मारयेद्रिपुमात्मनः ॥ अस्त्रमन्त्रकृतन्यासःप्रलयाग्निसम

१ मंगलवार ॥

प्रभः ॥ २६८ ॥ रक्तवस्त्रधरांक्रुद्धांरक्तनेत्रत्रयावृताम् ॥ सिंहाधिरूढांधाव न्तींधावमानंरिपुंप्रति ॥ २६९ ॥ खड्गेनतच्छिरःकृत्वाक्षणाद्व्योमस्थलंगता म् ॥ ध्यात्वादुर्गांजपेन्मन्त्रंत्रिदिनंवर्जिताशनः ॥ २७० ॥ अनेनैवविधाने नरिपुर्मृत्युप्रियोभवेत् ॥ कर्म्माण्येतानिकुर्वीतदिवसेनतुरात्रिषु ॥ २७१ ॥ तस्मादिनास्त्रमित्युक्तमथरात्र्यस्त्रमुच्यते ॥ पश्चिमाभिमुखंन्यस्यसजीवंमहि षंपुरः ॥ २७२ ॥ निखायतस्यशिरसिकुण्डंकृत्वात्रिकोणकम् ॥ तस्मिन्समे धितेवह्नौयथावद्देशिकोत्तमः ॥ २७३ ॥ सत्रिकोणान्समन्त्रार्णान्कारस्कर समिद्वरान् ॥ सहस्रंजुहुयाद्ध्यात्वादेवींसवितृमण्डले ॥ २७४ ॥ प्रलयाग्नि समांघोरांद्वात्रिंशद्भुजशोभिताम् ॥ उद्यदायुधसन्दीप्तांनृत्यन्तींसिंहमस्तके ॥ २७५ ॥ महादंष्ट्रांमहाभीमांज्वलत्केशांनदन्मुखीम् ॥ रक्तार्द्रमांसवसनांघू र्णितोग्रत्रिलोचनाम् ॥ २७६ ॥ अनेनविधिनाशत्रुर्महाज्वरनिपीडितः ॥ विमुञ्चतिनिजंदेहंपुत्रमित्रादिभिःसह ॥ २७७ ॥ ऊर्ध्वमुखांततोमन्त्रीलम्ब यित्वाभुजङ्गमान् ॥ भानुबिम्बगतांदुर्गांसहस्रादित्यसन्निभाम् ॥ २७८ ॥ सहस्रपाणिचरणांसहस्राक्षिशिरोमुखीम् ॥ सहस्रनागबद्धाङ्गींत्रासयन्तींज गत्त्रयम् ॥ २७९ ॥ ध्यायन्मन्त्रेणतेनैवतर्प्पयेदुष्णवारिणा ॥ संयतःकाल पाशेनवैरीमुञ्चेत्स्वजीवितम् ॥ २८० ॥ मध्याह्नार्कायुतप्रख्यांनदन्तींनरसिं हवत् ॥ घोरसिंहासनासीनांमहाभीषणदारुणाम् ॥ २८१ ॥ शूलप्रोताहि तांध्यायञ्जपेन्मन्त्रमनन्यधीः॥तर्पयेदुष्णतोयेनसर्प्पवक्त्रेदिनत्रयम् ।२८२॥ यमस्यभवनंगच्छेदरातिर्नात्रसंशयः ॥ ऋक्षवृक्षैःप्रतिकृतिंप्रतिष्ठितसमीरणा म् ॥ २८३ ॥ उष्णोदकेविनिःक्षिप्यनिष्पीड्यविधिनाततः ॥ अर्केन्दुनलस त्काशांखड्गखेटकधारिणीम् ॥ २८४ ॥ नयनत्रयसङ्गच्छद्विस्फुलिङ्गशता कुलाम् ॥ सिंहस्थांसर्प्पभूषाढ्यांत्रैलोक्यभयदायिनीम् ॥ २८५ ॥ खड्गकृ त्ताहितांध्यायन्प्रजपेदयुतंमनुम् ॥ विधानेनामुनाशत्रुर्युक्तोभवतिमृत्युना ॥ २८६ ॥ प्रकल्प्यदुर्गायतनेत्रिकोणंकुण्डमुत्तमम् ॥ तत्रसञ्चलितेवह्नौमहि षीशकृताकृताम् ॥ २८७ ॥ पुत्तलींसजलारक्तांप्रतिष्ठितसमीरणाम् ॥ छित्त्वाछित्त्वाप्रजुहुयादजरक्तान्वितांनिशि ॥ २८८ ॥ ध्यात्वादुर्गांप्रनृत्यन्तीं

महिषोरःस्थलान्तरे ॥ शूलेनमहिषस्याङ्गंभिन्दन्तींघोरदर्शनाम् ॥ २८६ ॥ अट्टहासैरजस्त्रोत्थैर्भीषणांसुरसेविताम् ॥ प्रदीप्तानलसङ्काशांभ्रमन्नेत्रत्रया न्विताम् ॥ २९० ॥ सदंष्ट्राधरसम्भिन्नांदंष्ट्राभीममुखाम्बुजाम् ॥ खड्गखेट कयुक्ताभिःकन्यकाभिःसमावृताम् ॥ २९१ ॥ अनेनविधिनाशत्रुःप्रयातिय ममन्दिरम् ॥ दिनास्त्रमेवंकथितंरात्रौकृत्यास्त्रमुच्यते ॥ २९२ ॥ आधाराद्द गतांदेवींकुण्डलींसर्परूपिणीम् ॥ तांब्रह्मरन्ध्रमार्गेणगतांव्योमस्थलंततः ॥ २९३ ॥ मुखेनशत्रुमादायनिवृत्तांस्वगृहंप्रति ॥ ज्वलत्कालानलोद्दीप्तांविचि न्त्यप्रजपेन्मनुम् ॥ २९४ ॥ सप्तभिर्वासरैःशत्रुर्मृत्युमाप्नोतिमोहितः ॥ अङ्गा रवारेचित्यग्नौसर्षपस्नेहलालितम् ॥ २९५ ॥ सिद्धार्थकुडवंजसंजुहुयात्पशु मात्रतः ॥ कृत्यास्त्रज्वालयासद्योरिपुर्यमपुरंव्रजेत् ॥ २९६ ॥ चतुर्दश्यामर्ध रात्रेचितास्थौन्यत्रसाधकः ॥ व्रणतैलविलिप्तानिचिताग्नौजुहुयात्ततः ॥ २९७ ॥ अनेनविधिनाशत्रुर्मृत्युमेष्यतिकातरः ॥ धान्यस्यतुतुषान्पिष्ट्वाश त्रोश्चैवविनिर्मिताम् ॥ २९८ ॥ प्रतिमांव्रणतैलाक्तांकृतप्राणांहुनेन्निशि ॥ छित्त्वाछित्त्वाजरक्तेनसप्ताहान्म्रियतेरिपुः ॥ २९९ ॥ श्मशानबालुकांस्पृष्ट्वासा क्षतांनियुतंजपेत् ॥ विविक्तस्तुतडागादौजपेनकथितंजलम् ॥ ३०० ॥ तदी यंपीतमचिरान्निहन्तिसकलाञ्जनान् ॥ कृष्णाङ्गारचतुर्दश्यांप्रजप्तैःप्रेतभस्म भिः ॥ ३०१ ॥ माहिषाज्येनसंयुक्तैस्तन्मन्त्राक्षरसङ्ख्यया ॥ निर्माय प्रतिमा मेतांसम्यग्जप्तसमीरणाम् ॥ ३०२ ॥ चितिकाष्ठैर्धितेवह्नौजुहुयाद्दृढमानसः ॥ चतुर्दशीत्रयादर्वाक्शत्रुर्मृत्युवशोभवेत् ॥ ३०३ ॥ श्मशानभस्मसिद्धार्थान्पञ्च गव्येविनिक्षिपेत् ॥ महिषंसंस्मरेद्देवींज्वालाग्निसदृशप्रभाम् ॥ ३०४ ॥ भर्जयेत्प्रजपन्मन्त्रंविषकाष्ठैर्धितानले ॥ दुर्गागारेप्रजुहुयादनेनायुतमस्त्रवि त् ॥ ३०५ ॥ पुनरादायतद्भस्मसेनायांवैरिणःक्षिपेत् ॥ सासेनाबहुधाभिन्ना ज्वरेणापिविमोहिता ॥ ३०६ ॥ आयुधानिपरित्यज्यशुद्धकालेपलायते ॥ गेहग्रामादिपुक्षिप्तंकुर्य्यादुच्चाटनंद्रुतम् ॥ ३०७ ॥ सप्तवारेषुकुलिकेदुर्गावे श्मसुशर्कराः ॥ सप्तमाहेन्द्रदिग्वर्जगृहीत्वाप्रजपेन्मनुम् ॥ ३०८ ॥ महिषीपञ्च गव्येनमहिषंतर्पयेत्पुरा ॥ भूयोजपित्वाविकिरेद्गेहग्रामपुरेष्विमाः ॥ ३०९ ॥

सदेशोनश्यतिक्षिप्रंदग्धोमन्त्रदवाग्निना ॥ ब्रह्मदण्डीमर्कटिकावज्रकण्टकिकात्रयम् ॥ ३१० ॥ भौमवारस्यकुलिकेगृहीत्वाप्रजपेन्मनुम् ॥ सार्धपुत्रकलत्राद्यैरुत्सादोजायतेरिपोः ॥ ३११ ॥ एकत्रैवाखनेन्मन्त्रीमण्डलान्तस्स्थलंभवेत् ॥ षड्विन्दुषट्कंपुत्तल्यांनिखनेदोदनान्वितम् ॥ ३१२ ॥ स्पृष्ट्वातांप्रजपेन्मन्त्रंकृष्णाष्टम्यादिनार्धतः ॥ शत्रुनामसमायुक्तांश्मशानेनिखनेदिमाम् ॥ ३१३ ॥ प्रणश्यतिरिपुःशीघ्रंसकुटुम्बःसबान्धवः ॥ कपालशकलान्मन्त्रीकृत्यास्त्राक्षरसंख्यया ॥ ३१४ ॥ स्पृष्ट्वातांप्रजपेदस्त्रंप्राणस्थापनपूर्वकम् ॥ कृष्णाङ्गारचतुर्दश्यांश्मशानेविषवृक्षजे ॥ ३१५ ॥ जुहुयादजरक्ताक्तांकृत्यास्त्रज्वालयाततः ॥ रिपुर्यमपुरंगच्छेन्महाज्वरविमोहितः ॥ ३१६ ॥ अजरक्तेनसम्पूर्णेकलशेनिक्षिपेदहिम् ॥ कपालेनपिधायैनंछादयेद्रक्तवाससा ॥ ३१७ ॥ पूजयेद्रक्तपुष्पाद्यैःस्पृष्ट्वातंत्वयुतंजपेत् ॥ भोभोःसर्प्पयथासर्वयथापूर्वंसमाहितः ॥ ३१८ ॥ कारस्करैधितेवह्नौकृत्यास्त्रेणसमेधिते ॥ अयुतंव्रणतैलेनहुत्वान्तेतंपटंपुनः ॥ ३१६ ॥ आमस्तकंसमुद्धृत्यत्वभिचाररतःसुधीः ॥ जुहुयाद्विधिनातेनत्रिदिनैर्म्रियतेरिपुः ॥ ३२० ॥ सुन्दरंमहिषीसर्पिःप्रस्थंमन्त्रेणमन्त्रितम् ॥ कुशैराबद्धसर्वाङ्गंस्थापितप्राणतेजसा ॥ ३२१ ॥ कारस्करैधितेवह्नौव्रणतैलेनमन्त्रवित् ॥ होमंकृत्वापुनर्वस्त्रंजुहुयाद्यतमानसः ॥ ३२२ ॥ एकेनदिवसेनारिर्गच्छेद्यमपुरंप्रति ॥ त्रिकोणकुण्डनिहितेवह्नौमन्त्रेणदीपिते ॥ ३२३ ॥ अर्चितेगन्धपुष्पाद्यैरयुतंजुहुयात्सुधीः ॥ राजिभक्ततिलैस्तैलैर्नित्यंसप्तदिनंततः ॥ ३२४ ॥ प्रसूतिसमयप्राप्तांमहिषींस्थापितानिलाम् ॥ अर्चितागन्धपुष्पाद्यैःस्पृशन्मन्त्रंतुतंजपेत् ॥ ३२५ ॥ मस्तकाद्योनिपर्यन्तंजुहुयादेधितेनले ॥ एवंकृतेसमुत्पन्नाकृत्यादीप्ताहुताशनात् ॥ ३२६ ॥ भक्षयेदचिराच्छत्रुमीश्वरेणाभिरक्षितम् ॥ पुनरग्नौविशत्येषाकर्त्तारमपिकांक्षिणी ॥ ३२७ ॥ एवंविधानिकर्म्माणियःकुर्यान्मन्त्रवित्तमः ॥ सजपेदात्मरक्षार्थंमन्त्रान्मृत्युञ्जयादिकान् ॥ ३२८ ॥ अथत्रिशक्तिमन्त्रस्यसाधनार्थंपुरश्चरेत् ॥ जपंमहाव्याहृतीनांहोमंतर्पणमेवच ॥ ३२६ ॥ ॐकारपूर्वकंजप्त्वामन्त्रंत्वयुतसंख्यया ॥ सहस्रंजुहुयादाज्यैस्तर्पणादिततश्चरेत् ॥ ३३० ॥ एवंकृतेसर्वदे

वाराधनंस्यात्समर्थता॥ विनानेनत्रिशक्तेस्तुमन्त्रसिद्धिर्नजायते॥३३१॥ ॐभूरग्नयेचपृथिव्यैमहतेचस्वाहा॥ ॐभुवोवायवेचान्तरिक्षायचमहतेच॥ ३३२॥ ॐसुवरादित्यायचदिवेचमहतेच॥ ॐ भूर्भुवसुवश्चन्द्रमसेनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेस्वाहा॥ ३३३॥ वक्ष्यमाणफलावाप्तिःसामान्यातुसहस्रतः॥ देशकालानुरूपेणश्रेष्ठात्वयुतहोमतः॥ ३३४॥ यथामनोरथस्ताद्दृग्लक्षहोमात्प्रजायते॥अथक्रमेणतद्वक्ष्येतेजस्वीघृतहोमतः॥३३५॥ उदुम्बरसमिद्भिस्तुसर्वकर्म्मसमर्थता॥ पश्वादिकामोजुहुयाद्दुग्धंवाप्यथवादधि॥३३६॥समस्तोत्पातशान्त्यर्थमपामार्गस्यतण्डुलान्॥ अर्कस्यसमिधोहुत्वायथेष्टंकनकंलभेत्॥३३७॥ जात्यास्तुवल्लिकायुग्मंग्रन्थयित्वाघृतान्वितम्॥ हुनेदयुतसङ्ख्याकंसम्यगन्तंसदालभेत्॥३३८॥ कन्याकामस्तुजुहुयात्तिलतण्डुलमुष्टिभिः॥ अपामार्गस्यसमिधोजुहुयाद्ग्रामकामुकः॥ ३३९॥वशीकर्त्तुंतुसमिधःपलाशाशोकयोर्हुनेत्॥ आयुःकामस्तुदूर्वाभिःपुष्पैस्तुधनकामुकः॥३४०॥ समिधोव्याधिघातस्यरुधिरेणाजिकेनच॥संयोज्यजुहुयान्मन्त्रीत्वभिचारःप्रसिध्यति॥ ३४१॥ जातानांजायमानानांप्रभोःसर्वत्रकोपनम्॥ मरणंवातत्रहुनेत्सर्वव्रीहिभिरादरात्॥३४२॥ प्रभूतव्रीहिदूर्वाभिर्होमात्सत्प्ररुचिर्भवेत्॥ उलूककाकपक्षाभ्यांहोमोविद्वेषकारकः॥ ३४३॥ स्वप्नग्रहेतुकपिलाघृतहोमंसहस्रकम्॥ सम्पातस्यघृतंस्थाप्यंवचान्तेनैवलोलयेत्॥३४४॥ मन्त्रयित्वापुत्रवतींमेधावीचैवजायते॥ प्रत्यहंमासमात्रंतुस्थित्वासूर्यस्यसम्मुखम्॥३४५॥ अयुतंप्रजपेन्नित्यंगुणितंलभतेसुतम्॥ यद्यदिष्टतमंवस्तुतत्तद्धोमंसमाचरेत्॥ ३४६॥ अयुतंघृतसंयुक्तंतस्यप्राप्तिःप्रजायते॥ होमयोग्यंतुयत्तस्यपुत्रवत्सिद्धिसाधनम्॥३४७॥ अथत्रिशक्तिमन्त्रस्यसाधनंकथयाम्यहम्॥ ब्रह्मविष्णुशिवाःसिद्धायत्प्रसादाद्धरिस्तथा॥ ३४८॥ गायत्रीचतथाग्नेयमन्त्रंत्र्यम्बकोमनुः॥एतत्त्रयंत्रिशक्त्याख्योमन्त्रः

---

१ गायत्री-तत्सवितुः, मंत्र-जातवेदसे सुनवाम सोमं और त्र्यम्बकं यजामहे तीन मंत्र मिलकर सौ अक्षरका मंत्र होताहै इसका त्रिशक्ति मंत्र नामहै, गायत्री मंत्रमें जपते समय वरेण्यं इसपदमें ण और यं अलग कहने से चौबीस अक्षर होते हैं तब सौ अक्षर पूरे होंगे॥

प्रोक्तः शताक्षरः ॥ ३४६ ॥ उक्तास्त्रयोस्यमुनयश्छन्दांस्यपिचतानितु ॥ अगो चरंवदेगम्यंपरन्तेजोस्यदेवता ॥ ३५० ॥ विश्वैरुद्रैस्तथाकृत्याचाकृत्यातिथि भिर्घनैः ॥ मन्त्रवर्णैःषडङ्गानिप्राङ्न्यासांश्चसमाचरेत् ॥ ३५१ ॥ सत्यंमान विवर्जितंश्रुतिगिरामाद्यंजगत्कारणंव्यासंस्थावरजङ्गमेमुनिवरैर्ध्यातं निरुद्धे न्द्रियैः ॥ अर्काग्न्युग्रमयंशताक्षरवपुस्तारात्मकंसन्ततंनित्यानन्दगुणालयं परतरंवन्दामहेतन्महः ॥ ३५२ ॥ सौरेपीठेयजेत्तत्रषडङ्गैःप्रथमावृतिः ॥ गायत्री शक्तिभिःपश्चात्पूजयेदावृतित्रयम् ॥ ३५३ ॥ पञ्चमावरणंकार्यंवीथीरूपंतुतत्र च ॥ चतुश्चत्वारिंशत्सङ्ख्याजातवाद्यास्तुशक्तयः ॥ ३५४ ॥ आग्नेयास्त्रोदिता एवप्रोक्ताःशक्तिचतुष्टयम् ॥ आवृतीनांतुसंपूजामृत्युञ्जयोक्तशक्तिभिः ॥ ३५५ ॥ दिक्पालांश्चतदस्त्राणिदशकैकादशावृतौ ॥ लक्षंजपेद्धुनेत्क्षीरंभक्ताद्यैस्तर्पये त्ततः ॥ ३५६ ॥ एवंसिद्धेमनौमन्त्रीभवेद्भास्करसन्निभः ॥ सुधालतोद्भवैःखण्डै र्जुहुयात्क्षीरसंयुतैः ॥ ३५७ ॥ दीर्घमायुरवाप्नोतिह्याधिव्याधिविवर्जितः ॥ दूर्वा भिर्घृतसिक्ताभिस्तदेवफलमाप्नुयात् ॥ ३५८ ॥ मधुरत्रयसंयुक्तैर्जुहुयादरुणाम्बु जैः ॥ महालक्ष्मीमवाप्नोतिमासैःषड्भिर्विधानवित् ॥ ३५६ ॥ रक्तोत्पलैस्त्रिमध्व क्तैर्जुहुयात्सर्वसम्पदे ॥ श्रीप्रसूनैःप्रजुहुयाद्रमयावसतिर्भवेत् ॥ ३६० ॥ सहस्रं जुहुयान्नित्यंपायसेनतिलैःशुभैः ॥ भानुसङ्ख्यान्द्विजान्नित्यंभोजयेन्मधुरान्वि तैः ॥ ३६१ ॥ सर्वपापविनिर्मुक्तःसर्वरोगविवर्जितः ॥ कृत्याद्रोहग्रहान्सर्वाञ्जि त्वादीर्घंसजीवति ॥ ३६२ ॥ प्रातःस्नानरतोनित्यंजपन्नित्यंशतंशतम् ॥ भा नुमालोकयेत्सम्यक्सजीवेच्छरदांशतम् ॥ ३६३ ॥ नित्यमष्टोत्तरशतंनिःश्रेय सफलाप्तये ॥ गायत्र्याद्यंजपेन्मन्त्रंसर्वपापविमुक्तये ॥ ३६४ ॥ सर्वशत्रुविना शायत्रिष्टुबाद्यंजपेदिमम् ॥ त्र्यम्बकाद्यंप्रजपेदायुरारोग्यवृद्धये ॥ ३६५ ॥ अथ त्वरितरुद्रस्यविधानमभिधीयते ॥ नवेदेनागमेचेद्दृङ्मन्त्रस्त्वरितसिद्धि दः ॥ ३६६ ॥ योरुद्रोअग्नौयोअप्सुयओषधीषु ॥ योरुद्रोविश्वाभुवनाविवेश तस्मैरुद्रायनमोअस्तु ॥ ३६७ ॥ अथर्वणोमुनिःप्रोक्तश्छन्दोनुष्टुबुदाहृतम् ॥

१ तेरह २ गेरह ३ बाइस ४ पन्द्रह ५ सत्रह ६ बेलके फूल ७ ॐ जातवेदसे सुनवाम सोमं इस मंत्रको प्रथम कहना उचितहै ॥

अस्त्यस्यदेवतारुद्रःषडङ्गानिन्यसेत्क्रमात् ॥ ३६८ ॥ अत्रन्यासस्तुपञ्चाङ्गःपञ्च त्रीषुग्रगोमितैः ॥ वर्णान्देहादिषुन्यस्यांगुष्ठादौध्यानमाचरेत् ॥ ३६९ ॥ चतुर्भुजंत्रिनेत्रंचशुद्धस्फटिकसन्निभम् ॥ अमृतेनचसम्पूर्णौकलशौहस्तयोर्द्वयोः ॥ ३७० ॥ हस्तद्वयेनयोगस्यकृतमुद्रंस्थिरासनम् ॥ सर्वकामफलेशानंशङ्करंकरुणानिधिम् ॥ ३७१ ॥ उग्रकर्म्मण्युग्रमूर्त्तिंज्वलत्पावकलोचनम् ॥ द्विभुजंनागहस्तंचशूलपाणिंजटाधरम् ॥ ३७२ ॥ अधःशय्यांत्वेकवारंहविष्यान्नस्यभोजनम् ॥ ब्रह्मचर्य्यसत्यवाणींपुरश्चर्य्याविधौचरेत् ॥ ३७३ ॥ लक्षमेकंजपेन्मन्त्रंहोमेर्कसमिधोघृतम् ॥ तर्पणंमार्जनंविप्रभोजनंमन्त्रसिद्धये ॥ ३७४ ॥ पूजांपार्थिवलिङ्गस्यप्राग्वन्नित्यंसमाचरेत् ॥ एवंसिद्धेमनौमन्त्रीप्रयोगान्कर्तुमर्हति ॥ ३७५ ॥ अयुतद्वयहोमेनयासिद्धिःसानिगद्यते ॥ औदुम्बरैरन्नकामस्तेजस्कामस्तुखादिरैः ॥ ३७६ ॥ अपामार्गसमिद्धोमाद्भूतबाधाविनश्यति ॥ ग्रहबाधानिशासायंजपेदश्वत्थसन्निधौ ॥ ३७७ ॥ लवणान्वितदध्यक्तास्त्र्यग्राबोधिसम्भवाः ॥ हूयन्तेसमिधःशुष्काःस्वाहान्तंमन्त्रमुच्चरेत् ॥ ३७८ ॥ देशपञ्चाहुतीर्हुत्वागच्छगच्छेत्युदीरयेत् ॥ याचेद्धोमंवलिंदद्याच्छ्वेतपुष्पाणिवापुनः ॥ ३७९ ॥ हूयन्तेहरितेदेशेतस्यविश्वंवशीभवेत् ॥ वामेतदुन्नतंकार्य्यंस्त्रीवश्यंनतुदक्षिणे ॥ ३८० ॥ अरिसैन्यप्रशान्त्यर्थंतिलानाज्येनसम्मितान् ॥ होमस्थानेचसंस्थाप्यकुम्भमेकंजलान्वितम् ॥ ३८१ ॥ मन्त्रयित्वाष्टसाहस्रंशरावास्तत्रनिक्षिपेत् ॥ अभिषेकैश्चतैस्तेषांशालांप्रोक्ष्यप्रदक्षिणम् ॥ ३८२ ॥ ग्रहग्रामादिशान्त्यर्थंराज्यस्याप्येवमाचरेत् ॥ वास्तुपूजाप्रकर्त

---

१ ॐ योरुद्रोअग्नौ अंगुष्ठाभ्यां नमः, योअप्सुतर्जनीभ्यां नमः, यओषधीषुमध्यमाभ्यां नमः, योरुद्रोविश्वाभुवनाविवेश अनामिकाभ्यां नमः, तस्मैरुद्रायनमोअस्तु कनिष्ठिकाभ्यां नमः, एवंहृदयादिन्यासोपि ॥ अथाक्षरन्यासः ॥ ॐ यो नमः शिरसि, रु भाले, द्रो भ्रूमध्ये, अ दक्षनेत्रे, ग्नु वामनेत्रे, यः दक्षकर्णे, ॐ वामकर्णे, प नासिकायाम्, धी दक्षकपोले, षु वामकपोले, यो मुखे, रु कण्ठे, द्रो दक्षबाहौ, वि वामबाहौ, श्वा दक्षकरतले, भु वामकरतले, व पृष्ठे, ना वक्षस्थले, वि उदरे, वे नाभौ, श कट्याम्, त दक्षोरौ, स्मै वामोरौ, रु दक्षजानुनि, द्रा वामजानुनि, य दक्षजङ्घायाम्, न वामजङ्घायाम्, मो दक्षपादे, अ वामपादे, स्तु सर्वाङ्गे २ पार्थिवपूजाध्याय में जिस कामनाके लिये जैसी पूजा कही गई है उस कामनामें उसी रीति से करना ॥

न्याचतुष्षष्टिपदैःशुभैः ॥ ३८३ ॥ ईशानायबलिःकार्य्यौभूतानांपतये तथा ॥ एवंकृतेपशूनान्तुप्रजानांशान्तिमाप्नुयात् ॥ ३८४ ॥ उत्पातेषुचसर्वेषु निशायांग्रामवाग्यतः ॥ उपविश्यजपेद्रुद्रंत्वरितंबहुभिःसह ॥ ३८५ ॥ होमःपलाशकाष्ठैस्तुकर्तव्योघृतसंयुतैः ॥ ईशानायबलिंकुर्य्यात्तस्यांदिशितदद्भुतम् ॥ ३८६ ॥ ततोदिशाम्पतेस्तत्रपशूनाम्पतयेतथा ॥ वृद्धिकामोजपेल्लक्षंतिलहोमोघृतान्वितः ॥ ३८७ ॥ बलिपूजाचकर्त्तव्याशिवस्यवरुणस्य च ॥ यस्यकस्यापिकार्य्यस्यलभ्यतेयोग्यतायदि ॥ ३८८ ॥ तदालक्षार्धतो लक्षपर्य्यन्तंत्वरितंजपेत् ॥ सर्वान्कामानवाप्नोतित्वरितस्यप्रसादतः ॥३८९॥ श्रीकामःशान्तिकामोवाजपेल्लक्षमितंततः ॥ श्रीकामोबिल्वसमिधैःशान्तिकामःशमीमयैः ॥ ३९० ॥ जुहुयादाज्यसम्मिश्रैस्तर्पणंमार्जनंतथा ॥ एवं सर्वेषुकार्य्येषुहोमःकार्य्यस्तथायवैः ॥ ३९१ ॥ जुहुयाल्लक्षमेवन्तुपुत्रार्थीपायसेनच ॥ विद्यार्थीश्रीफलैस्तद्वदायुःकामस्तुदूर्वया ॥ ३९२ ॥ तिलैरथाज्यसम्मिश्रैस्तेजस्कामोघृतेनवा ॥ व्रीहिभिःपुष्टिकामस्तुतुष्टिकामस्तथाहितैः ॥ ३९३ ॥ पायसंसर्वकामेषुहोतव्यंशर्करान्वितम् ॥ मध्वब्जाज्याम्रपर्णानितीव्रज्वरविनाशने ॥ ३९४ ॥ सर्वरोगविनाशायसूर्य्यस्याभिमुखोजपेत् ॥ सहस्रमयुतंलक्षंरोगिणान्तारतम्यतः ॥ ३९५ ॥ जपान्तेतुषडङ्गानांन्यासञ्चापिपराह्वयम् ॥ पंञ्चत्रिपञ्चरुद्रेषुचतुर्वर्णैःषडङ्गकम् ॥ ३९६ ॥ पादयोर्जङ्घयोर्जान्वोरुर्वोर्गुह्येचमेढ्रके ॥ क्रमान्नाभौचजठरेहृदिकण्ठेमुखेनसि ॥ ३९७ ॥ नेत्रयोश्चभ्रुवोर्मध्येललाटेमूर्द्ध्निविन्यसेत् ॥ पदानिषोडशमनोरितित्वरितरुद्रियम् ॥ ३९८ ॥ ऋचोविधानंवारुण्यायथावदभिधीयते ॥ अस्याउपासकोयत्रतत्रावृष्टिर्नजायते ॥ ३९९ ॥ ध्रुवासुत्वासुक्षितिषुक्षियन्तोऽव्यस्यत्यासवरुणोमुमो

१ ॐ योरुद्रोअग्नौहृदयाय नमः, योअप्सुशिरसेस्वाहा, यओषधीषु शिखायैवषट्, योरुद्रोविश्वाभुवनाविवेशकवचायहुम् , तस्मैरुद्रायनेत्रत्रयायवौषट् , नमोअस्तुअस्त्रायफट् २ और इसी मन्त्र के सोलह पदों को क्रमसे मूलोक्त स्थानों में न्यासकरे जैसे ॥ यःपादयोः, रुद्रः जङ्घयोः, अग्नौ जान्वोः, यःऊर्वोः, अप्सु गुह्ये, यःलिङ्गे, ओषधीषु नाभौ, यःजठरे, रुद्रः हृदये, विश्वा कण्ठे, भुवनामुखे, विवेश नासिकायाम्, तस्मैनेत्रयोः, रुद्रायभ्रुवोर्मध्ये, नमः ललाटे, अस्तुमूर्द्ध्नि, इति पदन्यासः ॥

नरत् ॥ अवोचन्त्रानाप्रदितेरुपस्थायूयंयातस्वस्तिभिःसदानः ॥ ४०० ॥
ऋषिर्वशिष्ठोनुष्टुप्छन्दोवरुणदैवतम् ॥ अष्टाङ्गवसुवस्वद्रिषडर्णैरङ्गकल्प
नम् ॥ ४०१ ॥ पादाग्रयोस्तथापादांगुलिमूलद्वयोरपि ॥ गुल्फयोश्चतथा
जान्वोरूर्वोश्चगुदलिङ्गयोः ॥ ४०२ ॥ मूलाधारेतथानाभौकुक्षौपृष्ठेतथा
हृदि ॥ वक्षस्थलेगलेहस्ताग्रयोरंगुलिमूलयोः ॥ ४०३ ॥ मणिबन्धयुगेचैव
कूर्परद्वितयेतथा ॥ बाहुमूलद्वयेचास्येकपोलयुगलेनसोः ॥ ४०४ ॥ नेत्रयोः
कर्णयोर्मध्येभ्रुवोर्भालेचमूर्द्धनि ॥ सर्वाङ्गेचक्रमान्न्यस्यमन्त्रार्णान्ध्यानमाच
रेत् ॥ ४०५ ॥ चन्द्रप्रभंपङ्कजसन्निषण्णंपाशांकुशाभीतिवरान्दधानम् ॥ मुक्ता
विभूषाञ्चितसर्वगात्रंध्यायेप्रसन्नंवरदंविभूत्यै ॥ ४०६ ॥ धर्म्मादिकल्पितेपीठे
वरुणंसम्यगर्चयेत् ॥ कृत्वाङ्गपूजनंशेषंवासुकिंतक्षकंपुनः ॥ ४०७ ॥ कर्कोट
कंपद्मञ्चमहापद्मंततःपरम् ॥ शङ्खपालञ्चकुलिकमिन्द्रादीनायुधानिच ॥
४०८ ॥ लक्षमेकञ्जपेन्मन्त्रंपायसेनदशांशतः ॥ सर्पिस्सिक्तेनजुहुयात्तर्प
णादिततश्चरेत् ॥ ४०९ ॥ ऋणमुक्त्यैजपेन्मन्त्रंप्रत्यहंसाष्टकंशतम् ॥ जपे
नानेनलभतेसम्मतामक्षयांश्रियम् ॥ ४१० ॥ सितेक्षुशकलैर्मन्त्रीजुहुयाद्घृत
सम्प्लुतैः ॥ चतुर्दिनंदशशतंऋणमुक्त्यैमहाश्रिये ॥ ४११ ॥ समिद्भिर्वेतस
स्थाभिःक्षीराक्ताभिर्दिनत्रयम् ॥ जुहुयाद्वृष्टिसंसिद्ध्यैमन्त्रविद्विजितेन्द्रियः ॥
४१२ ॥ अनेनविधिनामन्त्रीसूर्य्येशतभिषाङ्गते ॥ चतुश्शतंघृतयुतंपायसं

---

१ आठ, छः, आठ, आठ, सात, छः अक्षरों से अङ्गन्यास करे, जैसे- भुवासुत्वाक्षितिषु अंगुष्ठाभ्यां नमः, क्षियन्तोऽयस्यतया तर्जनीभ्यां नमः, सवरुणोमुमोनरत् मध्यमाभ्यां नमः ऐसे पूर्वोक्तरीति से सब न्यास करलेना ॥ और इसी रीति से छः स्थानों में हृदयादि न्यास भी होताहै २ अब अक्षरन्यास कहाजाताहै जैसे कि भु दक्षपादाग्रे, वा वामपादाग्रे, सु दक्ष पादांगुलिमूले, त्वा वामपादांगुलिमूले, सु दक्षगुल्फे, क्षि वामगुल्फे, ति दक्ष जानुनि, षु वा मजानुनि, क्षि दक्षोरौ, यं वामोरौ, तो गुदे, ऽय लिङ्गे, स्य मूलधारे, त्या नाभौ, स दक्षकु क्षौ, व वामकुक्षौ, रुपृष्ठे, णोहृदि, मु वक्षस्थले, मो गले, न दक्षहस्ताग्रे, रत् वामहस्ताग्रे, अ दक्षहस्तांगुलिमूले, वोवामहस्तांगुलिमूले, च दक्षमणिबन्धे, न्वा वाममणिबन्धे, ना दक्षकूर्परे, प्र वामकूर्परे, दि दक्षबाहौ, ते वामबाहौ, रु मुखे, प दक्षकपोले, स्था वामकपोले, यू दक्षनासापुटे, यंवामनासापुटे, या दक्षनेत्रे, त वामनेत्रे, स्व दक्षकर्णे, स्ति वामकर्णे, भिःभ्रुवोर्मध्ये, स भाले, द मूर्द्धनि, नःसर्वाङ्गे ॥ इति न्यासः ॥

जुहुयाद्दणी ॥ ४१२ ॥ ऋणनाशायसम्पत्त्यैवश्यारोग्याभिवृद्धये ॥ भृगु वारेकृतोहोमःपायसेनससर्पिषा ॥ ४१४ ॥ महतींसम्पदंकृत्वातारयेत्सकला पदः ॥ शालिभिर्घृतसंयुक्तैःशरीरान्तर्हितःसुधीः ॥ ४१५ ॥ ऽयहंचतुश्शतं हुत्वास्तम्भयेत्परसैनिकान् ॥ सायंप्रत्यङ्मुखोवह्निमाराध्यप्रजपेन्मनुम् ॥ ४१६ ॥ चतुश्शतंविमुच्येतमन्त्रीसर्वैरुपद्रवैः ॥ मन्त्रीप्रत्यङ्मुखोभूत्वातर्प्प येद्विमलैर्जलैः ॥ ४१७ ॥ सर्वोपद्रवनाशायसर्वदाभ्युदयाप्तये ॥ बहुनाकि मिहोक्तेनमन्त्रेणानेनसाधकः ॥ ४१८ ॥ साधयेत्सकलान्कामाञ्जपहोमादि तत्परः ॥ अयुतंप्रजपन्बद्धोमुच्यतेनात्रसंशयः ॥ ४१६ ॥ दिवारात्रौजपेन्नै वसिद्धिःसम्प्रतिवर्त्तते ॥ अहोरात्रंस्थितश्चैवमनश्नञ्छुद्धचेष्टितः ॥४२०॥ अयःपाशाःस्फुटन्त्यस्यदारुपाशाविशेषतः ॥ अवैदिकायनोदेयंतान्त्रिकाय कदाचन ॥ ४२१ ॥ वक्ष्येचान्नपतेर्मन्त्रंन्यासमुन्यादिवर्जितम् ॥ पूजाहीन जपेनैवनान्नहीनःप्रजायते ॥ ४२२ ॥ अन्नपतेन्नस्यदोनोदेह्यनमीवस्यशु ष्मिणः ॥ प्रदातारंतारिषऊर्ज्जंनोधेहिद्विपदेचतुष्पदे ॥ ४२३ ॥ अनेनजुहु यादन्नंनित्यमष्टोत्तरंशतम् ॥ अमोघंजायतेचान्नंयद्भूतंनचवर्धतः ॥ ४२४ ॥ सर्वोपस्करसंयुक्तंकुण्डेग्निंस्थापयेत्ततः ॥ लक्षमेकंहुनेदन्नंयावज्जन्माक्षयंभ वेत् ॥ ४२५ ॥ यदानेनवनङ्गत्वास्थालीपाकविधानतः ॥ अग्निञ्चोपसमा धायोदुम्बर्य्याःसमिधोयुतम् ॥ ४२६ ॥ जुहुयात्तस्यक्षेत्रेतुधान्याख्याव्रीहयो क्षयाः ॥ भवन्त्यवृष्टाविति चकिमाश्चर्य्यंसुवर्षणे ॥ ४२७ ॥ अथोलवणमन्त्र स्यविधानमभिधीयते ॥ परिशिष्ट.दन्तेतुजुहुयाल्लवणैस्तथा ॥ ४२८ ॥ ल वणाम्भसिनिष्ठोसिउग्रोसिहृदयंतव ॥ लवणस्यपृथिवीमातालवणस्यवरुणः पिता ॥ ४२६ ॥ लवणेहूयमानेतुकुतोनिद्राकुतोरतिः ॥ लवणंदहतिपचति लवणंछिन्दतिभिन्दति ॥४३०॥ अमुकस्यदहगात्राणिदहमांसंदहत्वचम् ॥ दहत्वगस्थिमज्जानिअस्थिभ्योमाद्विषांदह ॥४३१ ॥ यदिवसतियोजनशते नदीनांवाशतान्तरे ॥ सन्दग्ध्वानयमेशीघ्रमग्निलवणतेजसा॥ ४३२॥ नग रेलोहप्राकारकृष्णसर्प्पशतार्गले ॥ अत्रैववशमायान्तुलवणमन्त्रपुरस्कृताः॥ ४३३ ॥ यातेरात्रिर्महारात्रिःसातेरात्रिर्महानिशा ॥ अङ्गिगमुनिराख्यान

श्छन्दोनुष्टुबुदाहृतम् ॥ ४३४ ॥ अग्नीरात्रिःपुनर्दुर्गाभद्रकालीचदेवता॥ पंच त्रिपञ्चवेदेपुद्व्यक्षरैरिचभिमन्त्रजैः ॥ ४३५ ॥ षडङ्गानिप्रकुर्वीतसमन्त्रःकथ्यते धुना ॥ तारंचिटिद्वयंपश्चाच्चाण्डालितदनन्तरम् ॥ ४३६ ॥ महल्यहाद्यंलिंङ्गू यादमुकंमेपदन्ततः॥ वशमानयठद्वन्द्वञ्चतुर्विंशाक्षरोमनुः ॥ ४३७ ॥ अग्न्यादि कचतुष्कस्यध्यानंकुर्य्यात्ततःपरम् ॥ तानिध्यानानिकथ्यन्तेसावधानतया शृणु ॥ ४३८ ॥ नवकुंकुमसन्निभंत्रिनेत्रंरुचिराकल्पशतंभजामिवह्निम् ॥ स्रुवशक्तिवराभयानिदोर्भिर्दधतंरक्तसरोरुहेनिषण्णम् ॥ ४३९ ॥ कालाम्बुवाह द्युतिमिन्दुरक्तांहारावलीशोभिपयोधराढ्याम् ॥ कपालपाशांकुशशूलहस्तां नीलाम्बरांयामवतींनमामि ॥ ४४० ॥ कालाम्बुदाभामसिशङ्खशूलखेटाढ्य हस्तांतरुणेन्दुचूडाम् ॥ भीमांत्रिनेत्रांजितशत्रुवर्गांस्मरामिदुर्गामरिभङ्गद क्षाम् ॥ ४४१ ॥ टङ्ककपालंडमरुंत्रिशूलंसम्बिभ्रतीचन्द्रकलावतंसा ॥ पि ङ्गोर्ध्वकेशीसितभीमदंष्ट्राभूयाद्विभूत्यैममभद्रकाली ॥ ४४२ ॥ ऋक्पञ्चकं जपेत्सम्यगयुतंतद्दशांशतः ॥ हविषाघृतसिक्तेनजुहुयादर्चितेनले ॥ ४४३ ॥ एवंकृतपुरश्चर्य्यःप्रयोगकुशलोभवेत् ॥ अग्निंयामवतींध्यायेद्वश्याकर्षण कार्ययोः ॥ ४४४ ॥ स्मरेद्दुर्गांभद्रकालींमन्त्रीमारणकर्म्मणि ॥ जानु प्रमाणसलिलेस्थित्वानिशिजपेन्मनुम् ॥ ४४५ ॥ अनेनवाञ्छितःसाध्यः किङ्करोजायतेक्षणात् ॥ नाभिमात्रेजलेस्थित्वाजपेन्मन्त्रमनन्यधीः॥ ४४६ ॥ अष्टोत्तरसहस्रंयस्तस्यसाध्योवशोभवेत् ॥ ऋक्पञ्चकंजपेन्मन्त्रीकण्ठमात्रा म्भसिस्थितः ॥ ४४७ ॥ सप्तभिर्दिवसैर्भूपान्वशयेद्विधिनामुना ॥ विलिख्य तालपत्रेतंसाध्यनाम्नाविदर्भितम् ॥ ४४८ ॥ निक्षिप्यक्षीरसम्मिश्रेजलेतत्क्वा थयेन्निशि ॥ वश्योभवतिसाध्योस्यनात्रकार्य्याविचारणा ॥ ४४९ ॥ ताल पत्रेलिखित्वैनंभद्रकालीगृहेखनेत् ॥ वश्यायसर्वजन्तूनांप्रयोगोयमुदाहृतः ॥ ४५० ॥ तालपत्रेसमालिख्यमन्त्रंसाध्यविदर्भितम् ॥ तापयेत्खादिरेवह्नौ

१ आगे कहेजाते हुये मन्त्रके, पांच, तीन, पांच, चार, पांच और दो अक्षरों से षडङ्गन्यास करे २ उस मंत्र को कहते हैं – ॐ चिटि चिटि चाण्डालि महल्य हालि अमुकं मेवशमानय स्वाहा ॥ इतिमन्त्रः ॥

सासेवश्योभवेन्नरः ॥ ४५१ ॥ त्रिकोणंकुण्डमासाद्यसम्यक्शास्त्रोक्तलक्षण म् ॥ तस्मिन्होमंप्रकुर्वीतसत्कृतेहव्यवाहने ॥ ४५२ ॥ प्रक्षाल्यदध्नादुग्धेनसंशोध्यलवणंसुधीः ॥ सुचूर्णितंप्रजुहुयात्सप्ताहाद्वशयेज्जगत् ॥ ४५३ ॥ दधिमध्वाज्यसंसिक्तैर्जुहुयात्सैन्धवैस्तथा ॥ वशयेदखिलान्देवानचिरात्किमु पार्थिवान् ॥ ४५४ ॥ विशुद्धलवणप्रस्थंविभक्तंपञ्चधापृथक् ॥ एकैकमंशंजुहुयाद्दचापञ्चाहमादरात् ॥ ४५५ ॥ यस्यनाम्नासवश्यःस्यादनेनविधिनाचिरात् ॥ शुद्धंलवणमादायजुहुयान्मधुरान्वितम् ॥ ४५६ ॥ हुतं त्र्यशदाहुत्यावश्यंयच्छतिवाञ्छितम् ॥ नित्यंशुद्धलवणेनहुत्वाशत्रून्वशंनयेत् ॥ ४५७ ॥ मधुरत्रयसम्मिश्रैर्लवणैःसाधुचूर्णितैः ॥ जुहुयाद्वशयेन्नारींनरान्नृपतीनपि ॥ ४५८ ॥ मन्त्रंकृष्णद्वितीयादिप्रजपेद्यावदष्टमी ॥ पुत्तलीः पञ्चकुर्वीतसाङ्गोपाङ्गाःसमाःशुभाः ॥ ४५९ ॥ एकासाध्यद्रुमेणस्यादन्यापिष्टमयीमता ॥ चक्रिहस्तमृदान्यास्यादन्यातुसिकतामयी ॥ ४६० ॥ लवणंपोतसम्भूतंचूर्णितंपरिशोधितम् ॥ कुडवंप्रोक्षयेत्क्षीरदध्याज्यमधुभिःक्रमात् ॥ ४६१ ॥ गुडाज्यमधुभिःसम्यङ्मिश्रितेनामुनापुनः ॥ कुर्वीतपुत्तलीं सौम्यांपञ्चमींसमनन्तरम् ॥ ४६२ ॥ चिटिमन्त्रसमुद्भूतांश्चतुर्विंशतिसंख्यकान् ॥ ताराद्यान्विन्यसेद्वर्णान्स्थानेष्वेषुसमाहितः ॥ ४६३ ॥ मूर्ध्निभाले दृशोःश्रुत्योर्नासास्यचिबुकेषुच ॥ कण्ठयुक्स्तनयुग्मेषुकुक्ष्योर्नाभौकटिद्वये ॥ ४६४ ॥ मेढ्रेपायौप्रविन्यस्यशिष्टंवर्णचतुष्टयम् ॥ ऊरुद्वयेजानुयुग्मे जङ्घायुग्मेपदद्वये ॥ ४६५ ॥ एवंविन्यस्यसर्वाङ्गेरक्तमाल्यानुलेपनः ॥ रक्तवस्त्रधरःशुद्धःपुत्तलींदारुणाकृतिम् ॥ ४६६ ॥ अधोमुखींखनेत्कुण्डेपिष्टजामासनादधः ॥ मृन्मयींप्रतिमांपादेनाक्रमेततथात्मनः ॥ ४६७ ॥ सैकतींप्रतिमांचाग्निकुण्डस्योर्ध्वंप्रलम्बयेत् ॥ लवणेनकृतांपश्चात्पुत्तलींसंस्पृश

---

१ सोलह टके का एक प्रस्थ होताहै २ कुम्हारके हाथेकी माटीसे ३ तौलमें चार टके को कुडव कहते हैं ४ ॐ मूर्ध्नि, चि भाले, टि दक्षनेत्रे, चि वामनेत्रे, टि दक्षकर्णे, चां वामकर्णे, डा दक्षनासायाम्, लि वामनासायाम्, म मुखे, ह चिबुके, ल्य कण्ठे, ह दक्षस्तने, लि वामस्तने, अ दक्षकुक्षौ, मु वामकुक्षौ, कं नाभौ, पे दक्षकट्याम्, व वामकट्याम्, श लिङ्गे, म गुदे, न ऊरुद्वये, य जानुयुग्मे, स्वा जङ्घायुग्मे, हा पदद्वये—इतिमन्त्राक्षरन्यासः ॥

ञ्जपेत् ॥ ४६८ ॥ ऋक्पञ्चकंयथान्यासमष्टोत्तरसहस्रकम् ॥ संहत्यचिटि मन्त्रार्णान्पुनस्तस्याःस्तनौन्यसेत् ॥ ४६६ ॥ अंगुष्ठसन्धिप्रपदजङ्घाजानूरुपायुषु ॥ लिङ्गदेशेपुनर्नाभौजठरेहृदयाम्बुजे ॥ ४७० ॥ स्तनद्वयेकन्धरायांचिबुकेवदनेतथा ॥ घ्राणयोःकर्णयोरक्ष्णोर्ललाटेमूर्ध्निविन्यसेत् ॥४७१॥ अग्निमादायसन्दीप्यसाध्यनक्षत्रदारुभिः॥तस्मिन्नभ्यर्च्यमन्त्रोक्तदेवतांरूप्यपात्रके॥४७२॥कुशाब्जराजिपुष्पाद्भिर्दत्त्वार्घ्यंप्रणमेत्सुधीः॥मन्त्रैरेतैःप्रयोगादावन्तेसंयतमानसः॥४७३॥लवणेनाभिमन्त्र्याथनिशायांहव्यवाहनम्॥ निशायांमन्त्रजप्तेनतृप्तोभवतयासह ॥ ४७४ ॥ जातवेदोमहादेवतप्तजाम्बूनदप्रभ ॥ स्वाहापतेविश्वभक्ष्यलवणंदहशत्रुहन् ॥ ४७५ ॥ ईशेशर्वेशिर्वाणिप्रस्तंमुक्तंत्वयाजगत् ॥ महादेविनमस्तुभ्यंवरदेकामदाभव ॥ ४७६ ॥ तमोमयिमहादेविमहादेवमनुव्रते ॥ त्रियामेपुरुषंहत्वावशमानयदेविमे ॥ ४७७ ॥ दुर्गेदुर्गादिरहितेदुर्गसंरोधनार्गले ॥ चक्रशङ्खधरेदेविदुष्टशत्रुभयङ्करि ॥ ४७८ ॥ नमस्तेदहशत्रून्मेवशमानयचण्डिके ॥ शाकम्भरिमहादेविशरणंमेभवानघे ॥ ४७६ ॥ भद्रकालिभवाभीष्टरुद्रसिद्धिप्रदायिनि ॥ सपत्नान्मेहनहनशोषयतापयतापय ॥ ४८० ॥ शूलासिशक्तिवज्राद्यैरुत्कृत्योत्कृत्यमालये ॥ महादेविमहाकालिरक्षासनानक्षरात्मिके ॥ ४८१ ॥ साध्यंसंस्मृत्यनिर्भिद्यपुत्तलींसप्तधापुनः ॥ ऋक्पञ्चकंसमुच्चार्य्यजुहुयादेधितेनले ॥ ४८२ ॥ प्रथमोदक्षिणःपादःतत्करस्तदनन्तरम् ॥ शिरस्तृतीयमाख्यातंवामहस्तमतःपरम् ॥ ४८३ ॥ मध्यादूर्ध्वंपञ्चमंस्यादधोंशःषष्ठईरितः ॥ सप्तमोवामपादःस्यादितिभागक्रमःस्मृतः ॥ ४८४ ॥ सप्तसप्तविभागान्वाप्रोक्तेष्वेवयथाविधि ॥ कृत्वैवमर्चयित्वाग्निंप्रणमेद्दण्डवत्ततः ॥ ४८५ ॥ यजमानो

---

१ फिर उसी लोनकी पुतरी के अङ्गों में अक्षरों को न्यासकरे जैसे, ॐ अंगुष्ठद्वये, चि अंगुष्ठसन्धिद्वये, टि प्रपदद्वये, चि जङ्घाद्वये, टि जानुद्वये, चां ऊरुद्वये, डा गुदे, लि लिङ्गे, म नाभौ, ह जठरे, ल हृदये, ह दक्षस्तने, त्रि वामस्तने, अ कन्धरायाम्, मु चिबुके, कं मुखे, पे दक्षनासायाम्, न वामनासायाम्, श दक्षकर्णे, मा वामकर्णे, न दक्षनेत्रे, य वामनेत्रे, स्वा ललाटे, हा मूर्ध्नि २ दक्षिणकर ॥

धनैर्धान्यैःप्रीणयेद्गुरुमात्मनः ॥ अनेनविधिनामन्त्रीवशयेदसुरान्सुरान् ॥ ४८६ ॥ किंपुनर्मनुजान्भूपानमात्यान्नृपयोषितः ॥ मारणेपूर्वसम्प्रोक्तापुत्तलीनांचतुष्टयम् ॥ ४८७ ॥ निवेशयेद्यथापूर्वसाधकेन्द्रोविधानवित् ॥ अपरं वक्ष्यमाणेनविधानेनप्रकल्पयेत् ॥ ४८८ ॥ वल्लाह्वयामूलनखीतिलत्र्यूषणरामठैः ॥ विकृतिंवश्यसिद्ध्यर्थसाध्यनामांघ्रिरेणुभिः ॥ ४८९ ॥ महिषीमूत्रसम्पिष्टैःपूर्वोक्तलवणान्वितैः ॥ विधायपुत्तलींसम्यक्प्राणस्थापनमाचरेत् ॥ ४९० ॥ जपपूजादिकंसर्वंकुर्यात्तिशगुरुकर्मना ॥ ततःसवेदिकेकुण्डेरात्रौप्रज्वलितेनले ॥ ४९१ ॥ दुर्गांचभद्रकालींवासमाराध्ययथाविधि ॥ धारयेन्निशितंशस्त्रंसव्यहस्तेनसाधकः ॥ ४९२ ॥ वामपादंसमारभ्यदक्षिणांग्र्यावसानकम् ॥ छित्त्वाछित्त्वाप्रजुहुयान्निराहारोजितेन्द्रियः ॥ ४९३ ॥ कृष्णाष्टमींसमारभ्ययावत्कृष्णचतुर्दशी ॥ अनेनैवविधानेनहोमंकुर्याद्विचक्षणः ॥ ४९४ ॥ त्रिसप्ताहप्रयोगेनमारयेद्रिपुमात्मनः ॥ नक्षत्रवृक्षाःकारस्करामलक्याबुदुम्बरः। ४९५ ॥ जम्बूश्चखदिरःकृष्णोवंशपिप्पलनागराः ॥ रोहितश्चपलाशश्च प्लक्षोवटशिलोभवैः ॥ ४९६ ॥ पार्थोबिल्वकङ्कतश्चापिबकुलःसरलःक्रमात् ॥ सर्जवञ्जुलपनसा अर्कःशमिकदम्बकौ ॥ ४९७ ॥ निम्बश्चाम्रोमधूकश्चलोनमन्त्रविधिस्त्विति ॥ यश्चत्रिषवणंसन्ध्यां सहस्रजपपूर्विकाम् ॥ ४९८ ॥ करोतितस्यवक्ष्यामिसिद्धयेसुगमाऋचः ॥ तच्छन्दोदैवतमृषिन्यासध्यानादिकंविना ॥ ४९९ ॥ जपेदष्टसहस्रंतुयासांसिद्धिरदूरतः ॥ सर्वलोकोपकारार्थं कथयाम्यत्रताऋचः ॥ ५०० ॥ अवपतन्तीरवदंदिवओषधयस्परि ॥ यंजीवमश्नवामहैनसरिष्यतिपूरुषः ॥ ५०१ ॥ सर्वौषध्यंहुतंहुत्वामिष्टान्नंलभतेसदा ॥ भाण्डागारस्यवस्तूनिचतुर्थांशेनहोमयेत् ॥ ५०२ ॥ भवन्तितानिपूर्णानिवर्षमध्येनसंशयः ॥ त्रिवारमेवंयःकुर्यादक्षयास्त्ययुतेनच ॥ ५०३ ॥ सगाहिथ्ठंसीमधुनवदिष्टो मधु वक्ष्यामि मधुमतीं देवेभ्योवाचमुद्यासथ्ठंशुश्रूषेण्यांमनुष्येभ्यस्तं मादेवाअवन्तुशोभायैपितरोनुमदन्तु ॥ ५०४ ॥ महा

---

१ भतिपा २ कूट ३ नागकेशर ४ रोहिड़ा ५ चन्दन ६ अर्जुनवृक्ष ७ कदेरवृक्ष ८ मौनरी ९ शाल १० वेतस ११ हींगुरि १२ महुवा ॥

मिचारजेऽथाथवशान्तेचापचारके ॥ अनेनजुहुयाच्चाज्यंसहस्रंतस्यशान्तये ॥ ५०५ ॥ नमोअस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्योनमः ॥ ५०६ ॥ सर्प्पस्थानेतुजुहुयादनेनघृतपायसम् ॥ मासमेकंसहस्रन्तुस्वर्णमुत्पद्यतेततः ॥ ५०७ ॥ याइषवोयातुधानानांयेवावनस्पतींअनु ॥ येवावटेषुशेरतेतेभ्यःसर्प्पेभ्योनमः ॥ ५०८ ॥ बिलप्रतिष्ठंसर्प्पन्तु दृष्ट्वातत्रैवहोमयेत् ॥ आज्याहुतिसहस्रंतुतेनस्वर्णशतंलभेत् ॥ ५०९ ॥ कृणुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवांइभेन ॥ तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ ५१० ॥ प्रत्यङ्गिरस्त्वृचमिमांनित्यंयःप्रजपेत्सुधीः ॥ त्रिसन्ध्यंतस्याग्निकृतंदुःखंपततिवैरिणि ॥ ५११ ॥ उदग्नेतिष्ठप्रत्वातनुष्वन्यामित्राँओषतात्तिग्महेते ॥ योनोअरातिंसमिधानचक्रेनीचातंधक्ष्यतसंनशुष्कम् ॥ ५१२ ॥ विषाक्तराजिकारक्तकण्टकाञ्जुहुयाद्रिपोः ॥ गृहीत्वाशत्रुनामास्यग्रामनाशःप्रजायते ॥ ५१३ ॥ कृतस्यक्रोधनाशार्थमयुतंप्रजपेन्मनुम् ॥ हुनेन्मासंसहस्रंतुसर्पयान्पुंवशीकृते ॥ ५१४ ॥ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ ५१५ ॥ याशतेनप्रतनोषिसहस्रेणविरोहसि ॥ तस्यास्तेदेवीष्टकेविधेमहविषावयम् ॥ ५१६ ॥ आभ्यांदूर्वाप्रवालानामयुतंजुहुयाद्वशी ॥ ग्रामस्थंमारकंहन्याद्विगुणेनपुरःस्थितम् ॥ ५१७ ॥ त्रिगुणैराष्ट्रकंहन्यान्महारोगांश्चषड्गुणात् ॥ नानादेशोद्भवंहन्यान्मारकंलक्षहोमतः ॥ ५१८ ॥ मधुमान्नोवनस्पतिर्मधुमाँअस्तुसूर्य्यः ॥ माध्वीर्गावोभवन्तुनः ॥ ५१९ ॥ उदुम्बरस्यसमिधोयेनकामेनयोहुनेत् ॥ आज्येनाक्ताश्रयुततः प्रयुतावधियुक्ततः ॥ ५२० ॥ आशुःशिशानोवृषभोनयुध्योघनाघनः क्षोभणश्चर्षणीनाम् ॥ संक्रन्दनोनिमिषएकवीरःशतंसेनाअजयत्साकमिन्द्रः ॥ ५२१ ॥ संक्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥ ५२२ ॥ सइषुहस्तैःसनिषङ्गिभिर्वशीसंस्रष्टासयुधइन्द्रोगणेन ॥ संसृष्टजित्सोमपाबाहुशर्ध्युग्रधन्वाप्रतिहिताभिरस्ता ॥ ५२३ ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँअपबाधमानः ॥ प्रभञ्जन्सेनाःप्रमृणोयुधा

जयन्नस्माकमेध्यविता रथानाम् ॥ ५२४ ॥ बलविज्ञायस्थविरः प्रवीरः सह स्वान्वाजी सहमान उग्रः ॥ अभिवीरो अभिस्वत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥५२५॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्मप्रमृणन्तमोजसा ॥ इमथ्ंसजाता अनुवीरयध्वमिन्द्रथ्ंसखायो नु सरथ्ंरभध्वम् ॥५२६॥ अभिगोत्राणि सहसागाहमानोदयो वीरः सतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाड्युध्योस्माकथ्ंसेना अवतु प्रयुत्सु ॥ ५२७ ॥ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ॥ देवसेनानामभिभञ्जतीनां जयन्तीनाम्मरुतो यन्त्वग्रम् ॥ ५२८ ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताथ्ंशर्ध उग्रम् ॥ महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥५२९॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनाथ्ंसि ॥ उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ ५३० ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ॥ अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु ॥ ५३१ ॥ अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ॥ अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ ५३२ ॥ अवसृष्टा परापत शरव्ये ब्रह्मसथ्ंशिते ॥ गच्छामित्रान्प्रपद्यस्व मामीषां कं चनोच्छिषः ॥ ५३३ ॥ प्रेता जयता नर इन्द्रो वः शर्म्म यच्छतु ॥ उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ ५३४ ॥ यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव ॥ तन्न इन्द्रो बृहस्पतिरदितिः शर्म्म यच्छतु विश्वाहा शर्म्म यच्छतु ॥ ५३५ ॥ मर्म्माणि ते वर्म्मभिश्छादयामि सोमस्त्वा राजामृतेनाभिवस्ताम् ॥ उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥ ५३६ ॥ अनेन चानुवाकेन आत्मानं चायुधान्यपि ॥ अभिमन्त्र्य रणे यायाद्विजयो जायते ध्रुवम् ॥ ५३७ ॥ चौरव्याघ्रं च वह्निं च सिंहं सर्पं च राक्षसम् ॥ श्रुत्वा तस्मिन्स्थले चिन्त्यो नुवाको मनसा द्विजैः ॥ ५३८ ॥ तत्स्थानं कुशलं गच्छेदथवा मन्त्रमन्त्रितान् ॥ अक्षतान्वा कुशान्वापि क्षिपेद्रक्षा भवत्वितः ॥ ५३९ ॥ सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि ॥ सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥ ५४०॥ सहस्रं चलशान्तमनेन च घृताहुतीः ॥ हुत्वा भवति तेजस्वी हुनेदयुतसङ्ख्य

या ॥ ५४१ ॥ औदुम्बर्य्यश्च समिधो घृताक्ताः कनकं लभेत् ॥ सप्ततोलक प्यर्य्य न्तं पत्रमाताभ्यन्तरे ध्रुवम् ॥ ५४२ ॥ सनो भुवनस्य ने प्रजापतेयस्यतउपरि गृहायस्यवेह ॥ अस्मै ब्रह्मणेस्मैक्षत्रायमहिशर्म्मयच्छ स्वाहा ॥ ५४३ ॥ इदमिन्द्रायस्वाहेतित्यागो त्रजुहुयादघृतम् ॥ सहस्राष्टकमेतेनवास्तुदोषात्प्रमुच्यते ॥ ५४४ ॥ नापमृत्युर्गृहेतस्मिंश्चित्तोद्वेगोनजायते ॥ नाप्नोतिसूतिकापीडांभयंनैकाकिनोभवेत् ॥ ५४५ ॥ अग्नआयूंषिपवसआसुवोर्जेभिषंचनः ॥ आरेबाधस्वदुच्छुनाम् ॥ ५४६ ॥ अनेनाज्यंसहस्रन्तुहुत्वाशत्रुगृहंव्रजेत् ॥ तेनापवर्जं सम्यक्प्रीतिपूर्वंचमित्रवत् ॥ ५४७ ॥ हिरण्यपाणिमूतयेसवितारमुपह्वये ॥ सचेतादेवतापदम् ॥ ५४८ ॥ अनेनायुतसङ्ख्याका औदुम्बर्य्यस्तथार्कजाः ॥ सुवर्णवृद्धिसिद्ध्यर्थंघृताक्ताःसमिधोहुनेत् ॥ ५४९ ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयेनशक्रंपुरुहूतमिन्द्रःस्वस्तिनोमघवाधात्विन्द्रः ॥ ५५० ॥ महीमूषुमातरꣳसुव्रतानामृतस्यपत्नीमवसेहुवेम ॥ तुविक्षत्रामजरन्तीमुरूचीꣳसुशर्म्माणमदितिꣳसुप्रणीतिम् ॥ ५५१ ॥ एतौमन्त्रौ जपेन्नैवडुस्त र्षिंदुतंतरेत् ॥ पोतस्थोवापिनौकास्थोजलेयद्वन्नमज्जति ॥ ५५२ ॥ गणानान्त्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमम् ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनम् ॥ ५५३ ॥ अनेनजुहुयान्मन्त्रीयवान्धान्यंतिलांस्तथा ॥ अपामार्गस्यसमिधश्चौदुम्बर्य्यस्तथैवच ॥ ५५४ ॥ पृथक्पृथक्प्रस्थमात्रंलक्षावधितथातथा ॥ धनंविवर्धतेचाथहोमंकुर्य्याच्चतुष्पथे ॥ ५५५ ॥ पिचुमन्दोद्भवैःपत्रैःसहस्रैकंवशीकृतौ ॥ वल्मीकस्यमृदालिङ्गंकृत्वाचस्नापयेत्तया ॥ ५५६ ॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ ५५७ ॥ इमांतुऋजपेल्लक्षंद्वयंवाविकलेन्द्रियः ॥ पूर्णेन्द्रियःसभवतिषण्डत्वाचविमुच्यते ॥ ५५८ ॥ अभित्वागीर्वाणोगिरइमाभवन्तुविश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टाभवन्तुजुष्टयः ॥ ५५९ ॥ कण्ठमात्रोदकेस्थित्वाचाहोरात्रमतन्द्रितः ॥ जपेदेनामृचंवृष्टिर्भवेत्कालंविनातदा ॥ ५६० ॥ यज्जाग्रतोदूरमुदैतिदैवंतदुसुप्तस्यतथैवैति ॥ दूरङ्गमंज्योतिषांज्योतिरेकंतन्मेमनःशिवसङ्कल्पमस्तु ५६१ ॥

यत्कर्म्माण्यपेशसोमनीषिणोयज्ञेकृण्वन्तिविदथेषुधीराः ॥ यदपूर्वंयक्षमन्तःप्रजानांतन्मेमनःशिवसङ्कल्पमस्तु ॥ ५६२ ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतंप्रजासु ॥ यस्मान्नऋतेकञ्चनकर्म्मक्रियतेतन्मेमनःशिवसङ्कल्पमस्तु ॥ ५६३ ॥ येनेदंभूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वम् ॥ येनयज्ञस्तायतेसप्तहोतातन्मेमनःशिवसङ्कल्पमस्तु ॥ ५६४ ॥ यस्मिन्नृचःसामयजूंषियस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥ यस्मिंश्चित्तंसर्वमोतंप्रजानांतन्मेमनःशिवसङ्कल्पमस्तु ॥ ५६५ ॥ सुषारथिरश्वानिवयंमनुष्यान्नेनीयतेऽभीशुभिर्वाजिनइव ॥ हृत्प्रतिष्ठंयदजिरंयविष्ठंतन्मेमनःशिवसङ्कल्पमस्तु ॥ ५६६ ॥ अयुतंप्रजपेदेतांश्चित्तस्थैर्य्यंप्रजायते ॥ आवाह्यसोमदिवसेपार्थिवंलिङ्गमुत्तमम् ॥ ५६७ ॥ नित्यकर्म्मान्तरंकुर्य्यादष्टोत्तरशतंकणान् ॥ क्रीडीकृत्याक्षतांश्चैवंस्थाप्यस्थानचतुष्टये ॥ ५६८ ॥ सङ्कल्पंमनसाकृत्वापार्थिवंलिङ्गमर्चयेत् ॥ पूजनान्तेऋचांपाठमेकंकृत्वाक्षतान्न्यसेत् ॥ ५६९ ॥ प्रथमेप्रहरेपूर्वभागेलिङ्गस्यमूर्द्धनि ॥ द्वितीयादिप्रहरकेदक्षिणाद्यासुविन्यसेत् ॥ ५७० ॥ एतन्मध्येजपेद्रात्रौस्वेष्टंकार्य्यंसपश्यति ॥ यदानस्यादासायंतुकृत्यंकृत्वातुभक्षयेत् ॥ ५७१ ॥ त्रयंत्रयंचतुर्दिक्षु तण्डुलानांस्थितिंचरेत् ॥ अष्टावरसहस्रन्तुजप्याएताऋचःशुभाः ॥ ५७२ ॥ अवश्यमेवभवतिस्वप्नःसत्योनचान्यथा ॥ भूतंवावर्त्तमानंवाभविष्यमपिदृश्यते ॥ ५७३ ॥ त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत् ॥ ५७४ ॥ सहस्रादिचलक्षान्तमनयाजुहुयाद्घृतम् ॥ पुत्रार्थिनःसुपुत्राःस्युःपशवश्चतदर्थिनः ॥ ५७५ ॥ अथसर्वोत्तमंवक्ष्येश्रीसूक्तंसविधानकम् ॥ कलौदारिद्र्यनाशायनान्यत्किञ्चिन्नृणांतथा ॥ ५७६ ॥ हिरण्यवर्णांहरिणींसुवर्णरजतस्रजाम् ॥ चन्द्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ ५७७ ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंविन्देयं गामश्वंपुरुषानहम् ॥ ५७८ ॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीम् ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषताम् ॥ ५७९ ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलन्तींतृप्तांतर्पयन्तीम् ॥ पद्मेस्थितांपद्मवर्णां

तामिहोपह्वयेश्रियम् ॥ ५८० ॥ चन्द्रांप्रभासांतपसाज्वलन्तीं श्रियंलोकेदेव
जुष्टामुदाराम् ॥ तांपद्मिनीमींशरणंप्रपद्ये अलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ ५८१ ॥
आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसा
नुदन्तुममान्तरायाश्चबाह्याअलक्ष्मीः ॥ ५८२ ॥ उपैतुमांदेवसखःकीर्तिश्च
मणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ ५८३ ॥ क्षुत्पि
पासामलाज्येष्ठामलक्ष्मींनाशयाम्यहम् ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमे
गृहात् ॥ ५८४ ॥ गन्धद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभू
तानांतामिहोपह्वयेश्रियम् ॥ ५८५ ॥ मनसःकाममाकूतंवाचःसत्यमशीम
हि ॥ पशूनांरूपमन्त्रस्यमयिश्रीःश्रयतांयशः ॥ ५८६ ॥ कर्दमेनप्रजाभूता
मयिसम्भवकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीम् ॥ ५८७ ॥ आ
पःसृजन्तुस्निग्धानिचिक्लीतवसमेगृहे ॥ नित्यंदेवींमातरंश्रियंवासयमेकुले ॥
५८८ ॥ आर्द्रांयःकरिणींपुष्टिं सुवर्णांहेममालिनीम् ॥ सूर्य्यांहिरण्मयींल
क्ष्मींजातवेदोमआवह ॥ ५८९ ॥ आर्द्रांपुष्करिणींपुष्टिंपिङ्गलांपद्ममालि
नीम् ॥ चन्द्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ ५९० ॥ तांमआवह
जातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंप्रभूतं गावोदास्योऽश्वा
न्विन्देयंपुरुषानहम् ॥ ५९१ ॥ हिरण्यवर्णामित्यस्याऋचोलक्ष्मीमुनिर्मतः ॥
चतुर्दशानामीशानोमानन्दःकर्दमस्तथा ॥ ५९२ ॥ चिक्लीतलक्ष्मीतनया
श्चत्वारोमुनयोमताः ॥ हिरण्यादितिसूणांचच्छन्दोनुष्टुबुदाहृतम् ॥ ५९३॥
कांसोस्मितर्चोबृहतीचन्द्रामादित्यवर्णयोः ॥ त्रिष्टुप्छन्दउपैतुमांदेवाद्यष्टऋ
चामपि ॥ ५९४ ॥ छन्दोनुष्टुप्समाख्यातंतांमआवहइत्यृचः ॥ प्रस्तारपङ्क्ति
रुद्दिष्टदेवतेश्रीविभावसू ॥ ५९५ ॥ व्यञ्जनानितुबीजानिस्वराःशक्तयई
रिताः ॥ बिन्दवःकीलकंप्रोक्तंत्वंगुष्ठादिषडङ्गकम् ॥ ५९६ ॥ हिरण्याचतथा
चन्द्रातृतीयारजतप्रभा ॥ हिरण्यस्रग्हिरण्याक्षीतथाहिरण्यवर्णिका ॥ ५९७ ॥

---

१ हिरण्यायैअंगुष्ठाभ्यांनमः, चन्द्रायैतर्जनीभ्यांनमः, रजतप्रभायै मध्यमाभ्यांनमः, हिर ण्यस्रजेअनामिकाभ्यांनमः, हिरण्याक्ष्यै कनिष्ठिकाभ्यांनमः, हिरण्यवर्णिकायै करतलकर पृष्ठाभ्यांनमः, इति अंगुष्ठादिन्यासः ॥

एताभिर्ङेनमोन्ताभिःप्रकुर्य्यादंगकल्पनम् ॥ मूर्द्धाक्षिकर्णनासास्यगलदोर्हस्तनाभिषु ॥ ५९८ ॥ गुदपायूरुयुग्जानुजङ्घापत्सुन्यसेदृचः ॥ न्यासद्वयमिदंदेविकुर्य्याद्ध्यानंततश्चरेत् ॥ ५९९ ॥ अरुणनलिनसंस्थातद्रजःपुञ्जवर्णाकरकमलधृतेष्टाभीतियुग्माम्बुजाच ॥ मणिमुकुटविचित्रालंकृताकल्पजालैर्भवतुभुवनमातासन्ततंश्रीःश्रियेनः ॥ ६०० ॥ षट्कोणंपद्ममालिख्यपूज्यास्तत्राङ्गदेवताः ॥ आग्नेयकोणतस्तद्वत्तद्वाह्येष्टदलेष्विमाः ॥६०१॥ पद्मासनापद्मवर्णापद्मस्थापद्मलोचना ॥ तर्पयन्तीचतृप्तिश्चज्वलन्तीतदनन्तरम् ॥ ६०२ ॥ स्वर्णप्राकारसञ्ज्ञाचइन्द्रादीनायुधानिच ॥ आवाहनंचासनंस्यादर्घ्यपाद्याचमानिच ॥ ६०३ ॥ मधुपर्काभिषेकौचवस्त्रालङ्कारचन्दनम् ॥ पुष्पंधूपंदीपभोज्येप्रोद्वासनमितिक्रमात् ॥ ६०४ ॥ एतानिमन्त्रवित्कुर्यादृक्पञ्चदशकेनहि ॥ ततश्चफलताम्बूलेदत्त्वानीराजयेच्छ्रियम् ॥ ६०५ ॥ ततश्चहोमयेदाज्यमेभिःपञ्चदशर्चभिः ॥ दत्त्वादेव्यैचाचमनंतांमावहमन्त्रतः ॥ ६०६ ॥ उद्वासयेत्स्वेहृदयेकृताञ्जलिपुटःपठेत् ॥ श्रीसूक्तंनित्यपूजेयंपुरश्चरणमुच्यते ॥ ६०७ ॥ परिषिञ्चेच्छ्रियोनित्यंसूक्तैस्तैःस्नानकर्म्मणि ॥ आदित्याभिमुखोजप्त्वायावत्तावचतर्पयेत् ॥ ६०८ ॥ शुक्लाद्यांतिथिमारभ्ययावदेकादशीभवेत् ॥ तावद्द्वादशसाहस्रंजपेन्निश्चलमानसः ॥ ६०९ ॥ ब्रह्मचर्यरतःशुद्धवस्त्रदन्तादिकःसुधीः ॥ पद्मैस्त्रिमधुरोपेतैर्घृताक्तेनपयोन्धसा ॥ ६१० ॥ श्रीसमिद्भिःसर्प्पिषाचप्रत्यहंत्रिशतंहुनेत् ॥ द्वादश्यांद्वादशैर्वाथसद्विप्रांश्चापिभोजयेत् ॥ ६११ ॥ तेनसिद्धोभवेन्मन्त्रोनात्रकार्याविचारणा ॥ कुन्दमन्दारकुमुदमालतीपद्मकेतकैः ॥ ६१२ ॥ नन्द्यावर्त्ताह्वयंजातीकह्लारंचम्पकंतथा ॥ रक्तोत्पलादिपुष्पाणिलक्ष्म्याश्चातिप्रियाणिच ॥ ६१३ ॥ त्रिवारमन्वहंमन्त्रीजुहुयाच्चयथाविधि ॥ षण्मासंयः

१ मूर्द्धादिपदपर्यन्त पन्द्रह अंगों में पंद्रह ऋचाओं का न्यास करलेना जैसे, हिरण्यवर्णामिति मूर्द्धानि, तांमआवहइति नेत्रयोः, अश्वपूर्णामिति कर्णयोः इसीरीति से और भी जानिये २ षट्कोण लिखकर आग्नेय कोणके क्रम से उक्त षडङ्ग देवताओं की तथा वृत्त कर अष्टदलों में पद्मासना आदि आठ नामोंकी और भूपुरमें इन्द्रादि दिक्पालोंकी व उनके हथियारों की पूजा करे ३ आवाहनादिक पंद्रह प्रकार की पूजा पन्द्रह ऋचाओं से करे ॥

करोत्येवंसस्याल्लक्षपतिःस्वयम् ॥ ६१४ ॥ विकसन्मात्रएवाब्जेनवनीतम्प्र विन्यसेत् ॥ मध्येसकेशरेपत्रेसम्यक्पत्रान्तरेतथा ॥ ६१५ ॥ सुसमिद्धेन लेतत्रसमुद्धृत्यहुनेत्सुधीः ॥ अभ्यर्च्याष्टोत्तरशतंजपश्चभृगुवासरे ॥ ६१६ ॥ चत्वारिंशद्भिरस्यस्यान्महालक्ष्मीरचञ्चला ॥ तुरीयर्चाचजुहुयादघृतेनैकाद शाहुतीः ॥ ६१७ ॥ एवंकुर्वतएवास्यषण्मासात्स्यान्महेन्दिरा ॥ यइच्छेद्व रदांदेवींश्रियंनित्यंकुलेस्थिराम् ॥ ६१८ ॥ सशुचिःप्रयतोभूत्वाजुहुयादा ज्यमन्वहम् ॥ श्रियःपञ्चदशर्चस्तुश्रीकामःसततंजपेत् ॥ ६१९ ॥ आवा हयेच्छियंपद्मेपञ्चभिःकनकेथवा ॥ उपहारानुपहरेत्सूक्ताद्भक्ष्यंपयोदधि ॥ ६२० ॥ स्थालीपाकंचशालीनांपयसासम्प्रकल्पयेत् ॥ चन्द्रायणकृतात्मा तुप्रप्स्येतयतःश्रियम् ॥ ६२१ ॥ सर्वौषधीभिःक्वाण्टाभिःस्नात्वाभिपाचनैर पि ॥ उपैतुमांदेवसखइतिराज्ञोभिषेचने ॥ ६२२ ॥ मनसःकामइत्येषापशु कामाभिषेचने ॥ कांसोस्मीतिचसुस्नात्वाप्रजाकामःशुचिव्रतः ॥ ६२३ ॥ अश्व पूर्णामितिस्नात्वाराज्यकामःसमाहितः ॥ विहितेचर्म्मणिस्नायाद्ब्राह्मणस्तु यथाविधि ॥ ६२४ ॥ राजाचर्म्मणिवैयाघ्रेक्षत्रियस्त्वथरौरवे ॥ बस्तचर्म्मणि वैश्यस्तुहोमःकार्य्यस्त्वनन्तरम् ॥ ६२५ ॥ चन्द्रामितितुपद्मानिजुहुयात्स र्पिषाद्विजैः ॥ आदित्यवर्णेत्यनयाबिल्वहोमोविधीयते ॥ ६२६ ॥ बिल्वे न्धनभवाग्निःस्याच्छालींश्चजुहुयाद्विजः ॥ दशसाहस्रिकोहोमःश्रीका मःप्रथमोविधिः ॥ ६२७ ॥ हुत्वातुप्रथमंसम्यगनन्ताविन्दतेश्रियम् ॥ अयु तंदशकृत्वस्तुहुत्वासूक्तानिसर्पिषा ॥ ६२८ ॥ अनुक्रामव्यवच्छिन्नांशाश्व तींविन्दतेश्रियम् ॥ अशक्तौ[1]जपएवोक्तोदशसाहस्रिकोवरः ॥ ६२९ ॥ जपे तुप्रयुतंसम्यगनन्तांविन्दतेश्रियम् ॥ अयुतंदशकृत्वस्तुजप्त्वाश्रियमुपश्नुते ॥ ६३० ॥ अवश्यंजुहुयान्नित्यंपद्मान्ययुतशोपिच ॥ इष्ट्वाश्रियस्तुपरमाबिल्वा न्सुज्ञोबिभर्त्तिवै ॥ ६३१ ॥ बिल्वाशीबिल्वनिलयेजुह्वन्बिल्वानिसर्पिषा ॥ एकविंशतिरात्रेणपरांसिद्धिंसगच्छति ॥ ६३२ ॥ येनयेनचकामेनजुहोति नियतेन्द्रियः ॥ पद्मान्यथापिबिल्वानिससकामःसमृद्ध्यति ॥ ६३३ ॥ नजा

---

१ धनादिके अभावसे होमकरनेमें न समर्थहो तो केवल दशहजार जपही करडाले ॥

तुष्टपर्णोर्थायश्रियमावाहयेत्क्वचित् ॥ जपेत्किञ्चनकामेनहोमः कार्य्यः कथञ्च न ॥ ६३४ ॥ महद्वाप्रार्थ्यमानेनचाज्यकामेनवापुनः ॥ वान्यः परंप्रार्थयिता स्ताद्युक्तः श्रियंयजेत् ॥ ६३५ ॥ प्रधानतर्पणान्तेचसन्तर्प्याः शक्तयस्त्विमाः ॥ प्रणवाद्याहृदन्ताश्चश्रीर्लक्ष्मीर्वरदातथा ॥ ६३६ ॥ विष्णुपत्नीचवसुदावसु रूपाहिरण्मयी ॥ पद्ममालिन्यथरमाप्रोक्तातुरजतप्रभा ॥ ६३७ ॥ सुवर्णाप्र ग्रहास्वर्णप्राकारापद्ममालिनी ॥ इन्द्राविश्वप्रियैश्वर्य्यौभुक्तिश्चापिप्रमुक्तियु क् ॥ ६३८ ॥ विशुद्धर्द्धिः समृद्धिश्चतुष्टिः पुष्टिर्धनाह्वया ॥ भुवनेशीचशुद्धा चभोगिनीभोगदातथा ॥ ६३९ ॥ धात्रीविधात्रीद्वात्रिंशच्छक्तयः समुदीरि ताः ॥ प्रणवादिचतुर्थ्यन्तनामभिश्चैवतर्पयेत् ॥ ६४० ॥ द्रोणपङ्कजबिल्वा निपद्मंजातुनलङ्घयेत् ॥ यतोलक्ष्मीप्रियाश्चैतेकदाचिद्बुद्धिमांस्ततः ॥ ६४१ ॥ सहदेवीमिन्द्रवल्लींश्रीदेवींविष्णुवल्लभाम् ॥ कन्यांजम्बूप्रवालञ्चधारयेन्मूर्द्धि सर्वदा ॥ ६४२ ॥ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्र थाः ॥ ६४३ ॥ इमामृचंप्रतिदिनंयस्त्वविप्रः शुचिर्जपेत् ॥ विन्दतेमहतींभू मिमसपत्नामकण्टकाम् ॥ ६४४ ॥ तद्विष्णोः परमंपदंसदापश्यन्तिसूरयः ॥ दिवीवचक्षुराततम् ॥ ६४५ ॥ मन्त्रसिद्धौपराज्ञाद्यादोषास्तुप्रतिबन्धकाः ॥ इमामृचंजलेजप्त्वातेषांनाशः प्रजायते ॥ ६४६ ॥ आकृष्णेनरजसावर्त्तमानो निवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ६४७ ॥ अनयायोर्चयेत्सूर्य्यन्त्रिसन्ध्यंविजितेन्द्रियः ॥ जपेदष्टोत्तरशतंसम्पू र्णायुर्गदोज्झितः ॥ ६४८ ॥ अष्टोत्तरशतंजप्त्वाध्यायन्निशिदिवाकरम् ॥ अग्नौहुत्वानयाचाज्यंदीर्घमायुरवाप्नुयात् ॥ ६४९ ॥ सद्योजातंप्रपद्यामि सद्योजातायवैनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ ६५० ॥ वामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमो रुद्रायनमः कालायनमः कालविकर णाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनायनमः सर्वभूतदमना

---

१ ॐकारादि चतुर्थ्यन्तनाम के अन्त में नमःपद जोड़कर तृप्यतु पदका उच्चारण करे जैसे ॐ श्रियेनमः श्रीस्तृप्यतु इसी रीतिसे और नाम जानलेना २ विश्वप्रिया और ईश्वरी दो नाम हैं ३ विशुद्धा और ऋद्धि दो नाम हैं ॥

य नमोमनोन्मनायनमः ॥ ६५१ ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ ६५२ ॥ तत्पुरुषायविद्महेमहा देवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ ६५३ ॥ ईशानःसर्वविद्यानामीश्व रःसर्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मशिवोमेअस्तुसदाशिवो म् ॥ ६५४ ॥ मृत्युञ्जयान्ताएताःषड्योजपेच्चदिनेदिने ॥ सनारीनरगोशा न्तिशङ्करात्प्राप्नुयात्सदा ॥ ६५५ ॥ एतेनैवषडर्चेनजुहुयादाज्यमन्वहम् ॥ वह्निंचकल्पयेद्रौद्रंभूत्यर्थंपञ्चपर्वसु ॥ ६५६ ॥ उदुत्यंजातवेदसंदेवंवहन्तिकेत वः ॥ दृशेविश्वायसूर्य्यम् ॥ ६५७ ॥ त्रिसन्ध्यमनयासूर्य्यमुपतिष्ठेद्दिनेदि ने ॥ हृद्रोगनाशनंयत्तत्परमारोग्यवर्धनम् ॥ ६५८ ॥ त्वंसोमपितृभिःसंविदा नोनुद्यावापृथिवीआततंथ ॥ यत्तमहेप्रतितंनोजुषस्वशन्नएधिद्विपदेचतुष्प दे ॥ ६५९ ॥ उपतिष्ठेत्समित्पाणिरुद्यन्तंमानवोनिशि ॥ अनयायत्र्यृचासो मंत्रिधादुःखलयंव्रजेत् ॥ ६६० ॥ उद्यन्तमुपतिष्ठेतपौर्णमास्यांसमाहितः ॥ वासांस्यपिसविन्देतचन्द्रस्यैतिसलोकताम् ॥ ६६१ ॥ विष्णोर्नुकंवीर्य्याणि प्रवोचंयःपार्थिवानिविममेरजाᳫंसि ॥ योअस्कभायदुत्तरᳫंसधस्थंविचक्रमा णस्त्रेधोरुगायः ॥ ६६२ ॥ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसि विष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ६६३ ॥ विष्णोःकर्म्माणिपश्य तयतोव्रतानिपस्पशे ॥ इन्द्रस्ययुज्यःसखा ॥ ६६४ ॥ इन्द्राविष्णूनमस्कृत्यए ताभिस्तुत्रिभिर्नरः ॥ समित्पाणिःशुचिर्भूत्वाउपतिष्ठेद्दिनेदिने ॥ ६६५ ॥ ध र्म्मबुद्धिंधनंपुत्रानारोग्यंब्रह्मवर्च्चसम् ॥ प्राप्नोतिपरमंस्थानंज्योतीरूपंसनात नम् ॥ ६६६ ॥ कृणुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाँइभेन ॥ तृष्वीम नुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ ६६७ ॥ तवभ्रमासआशुया पतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्नेजुह्वापतङ्गानसंदितोविसृजवि ष्वगुल्काः ॥ ६६८ ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोअस्याअ दब्धः ॥ योनोदूरेअघसᳫंयोअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ ६६९ ॥ उद ग्नेतिष्ठप्रत्यातनुष्वन्यामित्राᳫंओषतातिग्महेते ॥ योनोआरातिᳫंसमिधा

१ त्र्यम्बकंयजामहेसुगन्धिंपुष्टिवर्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥

नचक्रेतीचातंधक्ष्यतसंनष्कम् ॥ ६७० ॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृ
णुष्वदैव्यान्यग्ने॥अवस्थिरातनुहिपातुयूनांयामिहिप्रमृणीहिशत्रून्॥ ६७१॥
सतेजानातिसुमतिंयविष्ठयइवतेब्रह्मणेगातुमैरत् ॥ विश्वान्यस्मैसुदिनानि
रायोद्युम्नान्यर्य्योविदुरोअभिद्यौत् ॥ ६७२॥ सेदानेअस्तुसुमगःसुदातुर्यस्त्वा
निन्येमहविषायउक्थैः ॥ पिप्रीषतिस्वआयुषिदुरोणेविश्वेदस्मैसुदिनासासदि
ष्टिः ॥ ६७३ ॥ अर्चामितेसुमतिंघोष्यर्वाक्संतेवावातातरतामियंगौः ॥ स्व
श्वास्त्वासुरथामर्जयेमास्मेक्षत्राणिधारयेरनुद्यून् ॥ ६७४ ॥ इहत्वाभूर्य्याचरे
दुपत्नंदोषावस्तदीदिवाᳩंसमनुद्यून् ॥ क्रीडन्तस्त्वासुमनसःसपेमाभिद्युम्ना
तस्थिवाᳩंसोजनानाम् ॥ ६७५ ॥ यस्त्वास्वश्वःसुहिरण्योयआनउपयाति
वसुमतारथेन ॥ तस्यत्राताभवसितस्यसखायस्तआदिथ्यामानुषाजुजोषत् ॥
६७६ ॥ महोरुजामिबन्धुतावचोभिस्तन्मापितुर्गोतमादन्वियाय ॥ त्वन्नोअ
स्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूनाः ॥ ६७७ ॥ अस्वप्नजस्तरणयः
सुशेवाअतन्द्रासोवृकाअश्नमिष्ठाः ॥ तेपायकसंचियंचोनिषधोग्नेतवनःपा
न्त्वमूः ॥ ६७८ ॥ येपापवोमामतेयन्तेआग्नेपश्यन्तोअर्घंदुरितादरक्षन् ॥
ररक्षतान्सुकृतोविश्ववेदादिप्सन्तइन्द्रियवोनाहदेभुः ॥ ६७६॥ त्वयावयᳩंसध
न्यास्त्वोतास्तवप्रणीत्यश्यामवाजान् ॥ उभाशᳩंसासुदयसत्पताते॥ ६८०॥
उष्ट्रयाकृणुह्यणुह्यहयाणाअथोतेअग्नेसमिधारिधेमप्रतिस्तोमᳩंशस्यमानंगृ
भाय ॥ इहाशसोरक्षसःपाह्यस्माद्रुहोनिदोमित्रमहोअवद्यात् ॥ ६८१ ॥ रक्षो
हणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म्म ॥ शिशानोअग्निःक्रतुभिः
समिद्धःसनोदिवासरिषःपातुनक्तम् ॥ ६८२ ॥ विज्योतिषबृहताभात्यग्निरा
विर्विश्वानिकृणुतेमहित्वा ॥ प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृङ्गेरक्षसेवि
निक्षे ॥ ६८३ ॥ उतस्वानासोदिविषंत्वग्नेस्तिग्मायुधारक्षसेहन्तवाउ ॥ मदे
चिदस्यद्वयरुजन्तिभामानवरन्तेपरिवाधोअदेवीः ॥ ६८४ ॥ एतत्सूक्तंजपे
द्विप्रोयदास्याद्दस्युभिर्वृतः ॥ अरातीनांहरेत्प्राणान्भयन्नैवोपजायते ॥ ६८५ ॥
क्षेत्रस्यपतिनावयᳩंहितेनेवजयामसि ॥ गामश्वंपोषयित्वानोडातीदृशे ॥
६८६ ॥ इमामृचंक्षेत्रपत्युःप्रत्यहंयोजपेच्छुचिः ॥ पश्यन्सूर्य्यंद्विजोनित्यंवि

न्दतेक्षेत्रमुत्तमम् १ ॥ ६८७ ॥ वक्ष्येपुरुषसूक्तस्यविधिंतन्त्रेषुगोपितम् ॥ अनुष्टु
बस्य सूक्तस्यत्रिष्टुबन्त्यस्य देवता ॥ ६८८ ॥ पुरुषोयोजगद्बीजमृषिर्नारायणः
स्मृतः ॥ स्नात्वाथयथोक्तविधिनाप्राङ्मुखःशुद्धमानसः ॥ ६८९ ॥ प्रथमांविन्यसे
द्वामेद्वितीयांदक्षिणेकरे ॥ तृतीयांवामपादेतुचतुर्थींदक्षिणेन्यसेत् ॥ ६९० ॥
वामजानौपञ्चमींचषष्ठींदक्षिणजानुनि ॥ सप्तमींवामकट्यांचचाष्टमींदक्षिणे
कटौ ॥६९१॥नवमींनाभिदेशेतुदशमींहृदयेन्यसेत् ॥ एकादशींकण्ठदेशेद्वा
दशींवामबाहुके ॥ ६९२ ॥ त्रयोदशींदक्षभुजेमुखदेशेचतुर्दशीम् ॥ अक्ष्णोः
पञ्चदशींचैवषोडशींमूर्द्ध्निविन्यसेत् ॥६९३॥ एवंन्यासविधिंकृत्वापश्चात्पूजा
समाचरेत् ॥ अप्स्वग्नौहृदयेसूर्येस्थण्डिलेप्रतिमासुच ॥६९४॥ षट्स्वेतेषुहरेः
सम्यगर्चनेयोग्यतोच्यते ॥ अकृत्रिमाःकृत्रिमाश्चअचलाश्चचलाचलाः ॥
६९५ ॥ निर्जीवाश्चसजीवाश्चप्रतिमास्सन्तिवैहरेः ॥ शृणुदेविक्रमात्तासा
महंवक्ष्यामिलक्षणम् ॥ ६९६ ॥ अकृत्रिमाचद्विविधाशालग्रामोतिपाव
नः ॥ तदभावेद्वारकायाश्चक्रंतद्वच्चपावनम् ॥ ६९७ ॥ कृत्रिमादशधाप्रो
क्ताःश्रेष्ठास्ताःपूर्वपूर्वतः ॥स्याद्रत्नरचिताचाद्यास्वर्णजारूप्यजापिच ॥६९८॥
ताम्रजापित्तलीजातास्फाटिकीरङ्गसीसजा ॥ काष्ठजामृत्तिकाजाताचित्ररू
पेतिवक्रमात् ॥ ६९९ ॥ अचलाक्षेत्ररूपाहिहरिद्वारंयथागया ॥ देवता
भिःकृतायास्तुमूर्त्तयस्ताश्चलाचलाः ॥ ७०० ॥ जगन्नाथोवेङ्कटेशःपाण्डुरा
ङ्गादयश्चते ॥ सजीवाब्राह्मणागावोनिर्जीवःपिप्पलःस्मृतः ॥ ७०१ ॥
मन्त्रन्यासंपुराकृत्वास्वदेहेदेवतासुच ॥ गायत्र्यक्षरन्यस्ताङ्गःपूजयेद्विष्णुम
व्ययम् ॥ ७०२ ॥ आद्ययावाहयेद्देवमृचातुपुरुषोत्तमम् ॥ द्वितीययासनं
दद्यात्पाद्यं दद्यात्तृतीयया ॥ ७०३ ॥ अर्घ्यंचतुर्थ्यादातव्यंपञ्चम्याचमनी
यकम् ॥ षष्ठ्यास्नानंप्रकुर्वीतसप्तम्यावस्त्रमेवच ॥ ७०४ ॥ यज्ञोपवीतमष्टम्या
नवम्याचानुलेपनम् ॥ पुष्पंदशम्यादातव्यमेकादश्यातुधूपकम् ॥ ७०५ ॥

१ ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् इत्यादि सोलह ऋचाओं को पुरुषसूक्त क-
हते हैं उनमें प्रथम ऋचासे आवाहन, दूसरी से आसन इत्यादि मूलोक्त क्रमसे विष्णु भग-
वान् की पूजाका विधानकरे ॥

द्वादश्यांदीपकंदद्यात्त्रयोदश्यांनिवेदनम् ॥ चतुर्दश्यांनमस्कारंपञ्चदश्यांप्र
दक्षिणम् ॥ ७०६ ॥ स्नानेवस्त्रेचनैवेद्येदद्यादाचमनीयकम् ॥ दक्षिणान्तुय
थाशक्त्यापोडश्यांतुसमर्पणम् ॥ ७०७ ॥ ततःप्रदक्षिणंकुर्य्याज्जपंकुर्य्यात्स
माहितः ॥ यथाशक्तिजपित्वातुसूक्तंतस्मैनिवेदयेत् ॥ ७०८ ॥ देवस्यदक्षिणे
पार्श्वेकुण्डंस्थण्डिलमेववा ॥ कारयेत्प्रथमेनैवद्वितीयेनतुप्रोक्षणम् ॥ ७०९ ॥
तृतीयेनाग्निमादध्याच्चतुर्थेनसमिन्धनम् ॥ पञ्चमेनाज्यश्रयणंचरोश्चश्रयणं
तथा ॥ ७१० ॥ षष्ठेनैवाग्निमन्थस्तुकल्पयेत्पद्ममासनम् ॥ चिन्तयेद्देवदेवेशं
कालानलसमप्रभम् ॥ ७११ ॥ ततोगन्धंचपुष्पंचधूपदीपनिवेदनम् ॥ अनु
ज्ञाप्यततःकुर्य्यात्समस्याद्दियथाक्रमम् ॥ ७१२ ॥ समिधस्तावतीःपूर्वंजुहुया
दवधारिताः ॥ ततोघृतेनजुहुयाच्चरुणाचततःपुनः ॥ ७१३ ॥ एवंहुत्वातत
श्चैनमनुज्ञाप्ययथाक्रमम् ॥ अग्नेर्भगवतस्तस्यसमीपेस्तोत्रमुच्चरेत् ॥७१४॥
जितन्तेपुण्डरीकाक्षनमस्तेविश्वभावन ॥ नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज ॥
७१५ ॥ देवानांदानवानांचसामान्यमधिदैवतम् ॥ सर्वदाचरणद्वन्द्वंव्रजामि
शरणंतव ॥ ७१६ ॥ एकस्त्वमसिलोकस्यस्रष्टासंहारकस्तथा ॥ अध्यक्षश्चा
नुमन्ताचागुणोमायासमावृतः ॥ ७१७ ॥ संसारसागरंघोरमनन्तक्लेशभाज
नम् ॥ त्वामेवशरणंप्राप्यनिस्तरन्तिमनीषिणः ॥ ७१८ ॥ नतेरूपंनचाकारो
नायुधानिनचास्पदम् ॥ तथापिपुरुषाकारोभक्तानांचप्रकाशसे ॥ ७१९ ॥ नै
वकिञ्चित्परोक्षेतेनप्रत्यक्षोपिकस्यचित् ॥ कस्यचिन्नचसाध्योस्तिविनाभक्तिंभ
वान्प्रभो ॥ ७२० ॥ कार्य्याणांकारणंपूर्वंवचसांवाच्यमुत्तमम् ॥ योगिनांपर
मासिद्धिःपरमंतेपदंविदुः ॥७२१॥ अहंभीतोस्मिदेवेशसंसारेस्मिन्महाभये ॥
पाहिमांपुण्डरीकाक्षनजानेपरमंपदम् ॥ ७२२ ॥ कालेष्वपिचसर्वेषुदिक्षुसर्वा
सुचाच्युत ॥ शरीरेचागतंचापिवर्त्ततेमेमहद्भयम् ॥ ७२३ ॥ त्वत्पादकमला
दन्यंनमेजन्मान्तरेष्वपि ॥ विज्ञानंयदिदंप्राप्ययदिदंज्ञानवर्जितम् ॥ ७२४॥
जन्मान्तरेपिमेदेवमाभूदस्यपरिक्षयः ॥ दुर्गतावपिजातस्यत्वद्गतोमेमनोरथः ॥
७२५ ॥ यदिनाशंनविन्देतततोस्तिसुकृतीसदा ॥ कामयेद्विष्णुपादौतुसर्व
जन्मसुकेवलम् ॥ ७२६ ॥ पुरुषस्यहरेःसूक्तंस्वच्छंधन्यंयशस्करम् ॥ आत्म

ज्ञानमिदंपुण्यंयोगज्ञानमिदंपरम् ॥ ७२७ ॥ एवंस्तुत्वाहव्यवाहंततःपश्चा द्विसर्जयेत् ॥ अनेनैवचनिष्पापोजायतेमनुजोयदा ॥ ७२८ ॥ प्राग्वज्ज्ञात्वा पारदेतत्प्रयोगानारभेत्ततः ॥ शुक्लपक्षेशुभेवारेयदाचैकादशीभवेत् ॥७२९॥ उपवासस्तुकर्त्तव्योदम्पतिभ्यांसुरालये ॥ द्वादश्यांपुत्रकामायचरुंकुर्यात्तिवैष्ण वम् ॥ ७३० ॥ ऋग्भिःषोडशभिःसम्यगर्चयित्वाजनार्दनम् ॥ चरुंपुरुषसूक्ते नप्राशयेत्पुत्रकाम्यया ॥ ७३१ ॥ प्राप्नुयाद्वैष्णवंपुत्रमचिरात्सन्ततिक्षमम् ॥ द्वादशद्वादशीःसम्यक्पयसानिवपेच्चरुम् ॥ ७३२ ॥ योजुहोतिसवैयातित द्विष्णोःपरमंपदम् ॥ मार्गशीर्षादिमासेषुक्रमात्पूज्यश्चकेशवः ॥ ७३३ ॥ नारायणोमाधवश्चगोविन्दोविष्णुरेवच ॥ मधुसूदनमुक्तस्त्रिविक्रमोवामनस्त था ॥ ७३४ ॥ श्रीधरश्चहृषीकेशःपद्मनाभोगदाधरः ॥ पूजयित्वाजपेत्सूक्तं शतमष्टाधिकंततः ॥ ७३५ ॥ होमञ्चपूर्ववत्कुर्य्यात्सर्वान्कामानवाप्नुयात् ॥ अपुत्रामृतपुत्रावायाचकन्याप्रसूर्भवेत् ॥७३६॥ तस्यायथासुपुत्रःस्यात्तमुपा यंब्रवीम्यहम् ॥ समिधोश्वत्थवृक्षस्यप्रत्यृचंजुहुयाच्छतम् ॥७३७ ॥ अष्टाधिकं चसघृतमुपतिष्ठेद्धुताशनम् ॥ पुनर्विष्णुंपूजयित्वाघृतहोमंसमाचरेत् ॥७३८॥ अष्टोत्तरशतंकुर्य्यात्प्रत्यहंवाग्यतःशुचिः ॥ सम्पाताज्यंस्थापयित्वातन्नार्य्याः प्राशनायच ॥७३९ ॥ दद्यात्साचपतिंविष्णुंनमस्कृत्यप्रभक्षयेत् ॥ तर्प्पयेच्चद्वि जान्सम्यग्लब्धाशीःप्रविशेद्गृहम् ॥ ७४० ॥ परंसप्तप्रवर्त्तेनावश्यंगर्भवती भवेत् ॥ अरण्येनिवसेन्नित्यंत्रिकालंस्नानमाचरेत् ॥ ७४१ ॥ जपेदष्टो त्तरशतंसूक्तमेतत्त्रिकालकम् ॥ मासमेकंफलाहारोमासमद्भिश्चतर्प्पयेत् ॥ ७४२ ॥ आदित्यमुपतिष्ठेतमन्त्रेणानेननित्यशः ॥ आज्यंहुत्वादशशतं त्रिभिर्वर्षैर्जपेद्दिनम् ॥ ७४३ ॥ तद्भक्तस्तन्मनायुक्तोदशवर्षाण्यनन्यभाक् ॥ साक्षात्पश्यतितंदेवंनारायणमनामयम् ॥ ७४४ ॥ अथवक्ष्येगृहस्थानां जीवन्मुक्तेस्तुसाधनम् ॥ यश्चस्वधर्मनिरतोन्यायवृत्तःशुचिव्रतः ॥ ७४५ ॥ अर्धरात्रेत्यक्तनिद्रःशुद्धोभूत्वाचवाग्यतः ॥ सम्प्रसुप्तेषुलोकेषुयोगंयुञ्जीतयो

---

१ प्रथम इस चाउरको पुरुषसूक्त से हवनकरे शेष स्त्री को खवावे तौ पुत्रहोवे ॥

गवित् ॥ ७४६ ॥ कृत्वासनंसमेदेशेनिर्वातेशब्दवर्जिते ॥ सँव्यंपादंदक्षिण स्यजानौविश्लेपयेत्ततः ॥ ७४७ ॥ संहृत्यदक्षिणंपादंसव्यजानुनियच्छति ॥ बद्धाञ्जलिकरःस्वस्थोयोगसम्मीलनेक्षणः ॥ ७४८ ॥ ॐमित्येवस्वहृदयेचि न्तयेदविशङ्कितः ॥ तत्रात्मानंसमादध्यादिन्द्रियाणिमनस्तथा ॥ ७४९ ॥ नाविबुध्यतकिञ्चान्यंनपश्येच्छ्रणुयान्नच ॥ प्राणानायम्यचासीनोनुद्विग्न श्चिन्तयेत्ततः ॥ ७५० ॥ श्वासेनैवसमंनाभौगमयित्वामनस्तदा ॥ उच्छ्वसे चैवमसकृत्तन्मनोयोगमुन्नयेत् ॥ ७५१ ॥ हृदयादूर्ध्वमेवंतुजत्रुंचास्यंचनासि काम् ॥ भ्रुवोर्मध्येपरंस्थानंतत्रतद्वारपद्धतिः ॥ ७५२ ॥ ललाटदेशेधार्य्याथ मूर्द्धानंगमयेत्ततः ॥ उच्छ्वसेच्चयथाकालंनाभितश्चोच्छ्वसेत्पुनः ॥७५३॥ एवं युक्तोमहात्मानमात्मानंप्रतिपद्यते ॥ यद्येवंसुकृतीशुद्धोयदिवापापकृत्ततः ॥ ७५४ ॥ उपलभ्यपरंब्रह्मगतिंज्ञात्वाभवेच्छुचिः ॥ सर्वपापानुबद्धश्चहृद्यन्तः प्रयतोजपेत् ॥ ७५५ ॥ अपिजित्वासमंदेवंसगच्छेत्परमाङ्गतिम् ॥ धारणातु पृथक्कार्य्याधर्म्मेणतेननित्यशः ॥ ७५६ ॥ आदित्येग्नौचन्द्रमसिवृक्षाग्रेषुच धारयेत् ॥ पर्वताग्रेसमुद्रेवायत्रवापिमनोरमेत् ॥ ७५७ ॥ नभावविषयान्प्रा प्यधारयीतकथञ्चन ॥ बहुत्रदुःखंजानीयात्प्रध्वंसेधारणात्मके ॥ ७५८ ॥ धा र्म्मिकानांकुलेशुद्धेयोगभ्रष्टोभिजायते ॥ मूर्द्ध्निब्रह्मप्रविन्देतेद्दग्जपस्यप्रभाव तः ॥ ७५९ ॥ तदामूर्द्धापरंज्योतिर्नक्षत्रपथमुन्नयेत् ॥ योगीयोगीश्वरंप्राप्य निर्द्वन्द्वंपरमात्परम् ॥ ७६० ॥ सर्वत्रैवात्मनात्मानंपश्येद्धरिपरायणः ॥ जपे च्चैवस्वरात्स्नातःपवित्रमिदमुत्तमम् ॥ ७६१ ॥ अपिपातकसंयुक्तःकालेनसु कृतीभवेत् ॥ येनयेनचकामेनजपन्तितामृचंसदा ॥ ७६२ ॥ ससकामस्समृ

---

१ वाम पादको दक्षिण जानुपर और दक्षिण पादको वाम जानुपर धरकर सीधे बैठे और अपनी नासिकाके अग्रभाग में दृष्टिराखे ॐकार जपताहुवा मन समेत पवन खींचकर उदर पूर्णकरे तदनन्तर नाभीचक्र से पवनको हृदयमें तहांसे उरमें उससे कंठमें लेजाकर भौंहों के बीच होकर ब्रह्मरन्ध्रमें लेजावे धीरेधीरे मनसे ॐकारोच्चारण न छांड़े जबलों प्राण रोकिसके तबलों करे पुनः धीरेसे प्राण उतारिकर बारबार उक्त रीतिके अभ्यास करनेसे अनाहत शब्दभी दशतरहका प्रकटता है और सब पापोंसे बँधाहुवाभी पुरुष हृदय में मनसे ॐकार का जप करनेसे परब्रह्मको प्राप्त होताहै तौ सुकृतियों को क्या कहनाहै ॥

द्धश्चश्रद्दधानस्यकुर्वतः ॥ होमंवाप्यथवाजाप्यमुपहारमनुत्तमम् ॥ ७६३ ॥
कुरुतेयेनकामेनतत्सिद्धिरुपजायते ॥ ज्ञानगम्यंपरंलक्ष्यंप्राप्यंसर्वमवस्थितम् ॥
७६४ ॥ वाक्यमत्यन्तयत्नेनब्रह्माभ्येतिसनातनम् ॥ सहस्रशीर्षसूक्तंतुसर्वका
मफलप्रदम् ॥ ७६५ ॥ वेदगर्भशरीरेणसवैनारायणःस्मृतः ॥ ब्रह्मेन्द्ररुद्रपर्ज
न्याःसूक्तेस्मिन्सुव्यवस्थिताः ॥ ७६६ ॥ अत्रस्थंप्रेत्यद्रष्टव्यंजगत्स्थावरजङ्ग
मम् ॥ अनासादयमानोपिशक्तिंनपरिहारयेत् ॥ ७६७ ॥ भक्तानुकम्पीभग
वाञ्छ्रूयतेपुरुषोत्तमः ॥ पूजार्थेतस्यदेवस्यवन्यान्स्वयमुपार्जितान् ॥ ७६८ ॥
आरण्यकविधानेननिर्वपेत्प्रत्यहंचरुम् ॥ नारायणायस्वाहेतिमन्त्रेणजुहुया
द्धविः ॥ ७६९ ॥ आसहस्रात्तत्रचक्षुर्दिव्यंहोतुर्ददातिसः ॥ यद्वाचरुंसहस्रे
तिमन्त्रेणैकेननिर्वपेत् ॥ ७७० ॥ सहुत्वास्वेप्सितानांचकामानांलभतेफल
म् ॥ पुरुषायुःसंयुक्तःसिद्धोवाविचरेन्महीम् ॥ ७७१ ॥ सूक्तानिकोटिशःस
न्तिपरमेतन्महाप्रियम् ॥ सर्वेश्वरोहरियेनगीयतेभक्तवत्सलः ॥ ७७२ ॥ ध्ये
यःसदासवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ॥ केयू
रवान्मकरकुण्डलवान्किरीटीहारीहिरण्मयवपुर्धृतशङ्खचक्रः ॥ ७७३ ॥ एत
तुयःपठतिकेवलमेवसूक्तंनारायणस्यचरणावभिवन्द्यवन्द्यौ ॥ पाठेनचाथपर
मस्यसनातनस्यस्थानंजरामरणवर्जितमेतिविष्णोः ॥ ७७४ ॥ हविषा
ग्नौजलेपुष्पैर्ध्यानेनहृदयेहरिम् ॥ यजन्तिसूरयोनित्यंजाप्येनरविमण्डले ॥
७७५ ॥ बिल्वपत्रंशमीपत्रंपत्रंभृङ्गारकस्यच ॥ मालतीकुशपत्रंच सद्यस्तुष्टि
करंहरेः ॥ ७७६ ॥ यन्नोपपद्यतेकिञ्चित्तंध्यायन्मनसैवतु ॥ सम्पद्यतेप्रसादा
त्तुदेवदेवस्यचक्रिणः ॥ ७७७ ॥ पत्रैश्चपुष्पैश्चफलैश्चतोयैर्विक्रीतलब्धै
श्चसदैवसत्सु ॥ भक्त्यैकगम्येपुरुषेपुराणे मुक्तौकिमर्थंक्रियतेनयत्नः ॥
७७८ ॥ इत्येवमुक्तःपुरुषस्यविष्णोरर्चाविधिर्देवसुदामुनीन्द्राः ॥ मुक्त्यैकमार्ग
प्रतिबोधनायनवैमयालौकिककामनार्थम् ॥ ७७९ ॥ याओषधीःसोमराज्ञीः
विष्ठिताःपृथिवीमनु ॥ बृहस्पतिप्रसूतास्ताअस्यैसन्दत्तवीर्य्यम् ॥ ७८० ॥
अवपतन्तीरवदन्दिवओषधयस्परि ॥ यंजीवमश्नवामहैनसरिष्यातिपूरुषः ॥
७८१ ॥ याश्चेदमुपशृण्वन्तियाश्चदूरंपरागताः ॥ सर्वाःसङ्गत्यवीरुधोस्यैस

न्दत्तवीर्य्यम् ॥ ७८२ ॥ मावोरिषत्खनितायस्मैचाहंखनामिवः ॥ द्विपाचतुष्पादस्माक ꣳ सर्वमस्त्वनातुरम् ॥ ७८३ ॥ ओषधयःसंवदन्तेसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्त ꣳ राजन्पारयामसि ॥ ७८४ ॥ पर्वस्वेवजपेन्नित्यंषण्मासानेवयोनरः ॥ वैद्यस्त्वमृतहस्तःस्यादन्यःस्वस्त्ययनंभवेत् ॥७८५॥ इष्ट्वाशरदिवैरुद्रमोषधीश्चजपेत्सदा ॥ तस्यामयानजायन्तेतथाजीर्णानिपञ्चवा ॥ ७८६ ॥ क्रियातुसप्तरात्रेणसप्तकृत्वःसमाहितः ॥ प्रपद्यओषधीर्विप्रःसूक्तमेतज्जपेत्सदा ॥ ७८७ ॥ द्विषत्क्षेत्रादिहायध्वमितिविज्ञापयेत्ततः ॥ स्वक्षेत्रेवरुणंचेष्ट्वाविन्दतेद्विपदोषधीः ॥ ७८८ ॥ बृहस्पतेअतियदर्य्योअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ७८९ ॥ वृष्टिकामोयताहारःप्रपद्येतबृहस्पतिम् ॥ पायसेनोपहारेणहोमेनचसमन्वितः ॥ ७९० ॥ पश्चादिमामृचंविप्रोवृष्टिकामःप्रयोजयेत् ॥ पर्जन्यंचनमस्कृत्यवृष्टिंविन्दातिशोभनाम् ॥ ७९१ ॥ कलौधर्म्मस्यरक्षार्थमृचएताःक्वचित्क्वचित् ॥ विप्रेविप्रेदेशदेशेस्थास्यन्त्यन्याश्चवैक्षितौ ॥ ७९२ ॥ एतत्तत्त्वमिहप्रोक्तंसर्वतन्त्रेषुगोपितम् ॥ इतःपरंदेविदेवाः किंवक्तव्यंतदुच्यताम् ॥ ७९३ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेकलिसंस्थितसप्तविधिमन्त्रकथनंनामएकादशःप्रकाशः ॥ ११ ॥

---

श्रीविष्णुरुवाच ॥ देवदेवमहादेवभक्तानुग्रहकारक ॥ कालस्त्वमसिलोकानांमहामायात्वियंपरा ॥ १ ॥ युवयोःकेतुष्टिकरामन्त्राःसूक्तानितद्वद ॥ येनभुक्तिश्चमुक्तिश्चक्लेशोनैवचनैवच ॥ २ ॥ श्रीशिवउवाच ॥ विष्णोगोप्यंत्वयापृष्टंनवाच्यंतान्त्रिकेद्विजे ॥ तन्त्रेचतामसंरूपंत्वयापृष्टंतुसात्त्विकम् ॥ ३ ॥ भोगमोक्षैकनिलयंचतुर्वेदोत्तमोत्तमम् ॥ मन्त्रस्तोत्रेश्वरंतन्मेजानीहिशतरुद्रियम् ॥ ४ ॥ छन्दांस्यनुष्टुबादीनिअघोरोस्यमुनिर्मतः ॥ देवतास्यभवेद्रुद्रआदित्यःपरपूरुषः ॥ ५ ॥ यातेरुद्रशिवाप्रोक्तात्वस्मिन्महेतिमस्तके ॥ सहस्राणिललाटेचभ्रुवोर्मध्येचहंसऋक् ॥ ६ ॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तनुवाशन्तमयागिरिशन्ताभिचाकशीहि ॥ ७ ॥ अस्मिन्मह

त्यर्णवेअन्तरिक्षेभवा अधि ॥ तेषाᳩसहस्रयोजनेवधन्वानितन्मसि ॥८॥ सह स्राणिसहस्रशोयेरुद्राअधिभूम्याम् ॥ तेषाᳩसहस्रयोजनेवधन्वानितन्मसि ॥ ९ ॥ हᳩसःशुचिषद्वसुरन्तरिक्षसद्धोता ॥ वेदिषदतिथिर्दुरोणसत् ॥ १० ॥ त्र्यम्बकन्नेत्रयोश्चैव नमःस्रुत्याय कर्णयोः ॥ मानस्तोकेनासिकायामवत त्यमुखेन्यसेत् ॥ ११ ॥ नमःस्रुत्यायचपथ्यायचनमःकाट्यायचनीप्यायच ॥ नमःकुल्यायचसरस्यायचनमोनादेयायचवैशन्तायच ॥१२॥ मानस्तोकेतन येमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधी र्हविष्मन्तःसदमित्त्वाहवामहे ॥ १३ ॥ अवतत्यधनुस्त्वᳩसहस्राक्षशतेषुधे ॥ निशीर्य्यशल्यानांमुखाशिवोनःसुमनाभव ॥ १४ ॥ नीलग्रीवाद्वयंन्यसेत्क मात्कण्ठोपकण्ठयोः॥ नमस्तेआयातेहेतिद्वयंबाह्वोःप्रकोष्ठयोः ॥ १५ ॥ नील ग्रीवाःशितिकण्ठाःशर्वाअधःक्षमाचराः ॥ तेषाᳩसहस्रयोजनेवधन्वानितन्म सि ॥ १६ ॥ नीलग्रीवाःशितिकण्ठादिवᳩरुद्राउपश्रिताः ॥ तेषाᳩसहस्रयो जनेवधन्वानितन्मसि ॥ १७ ॥ नमस्तेअस्त्वायुधायानाततायधृष्णवे ॥ उभा भ्यामुततेनमोबाहुभ्यांतवधन्वने ॥ १८॥ यातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ १९॥ येतीर्थानिप्रचरन्तिसृकाहस्ता निषङ्गिणः॥तेषाᳩसहस्रयोजनेवधन्वानितन्मसि ॥ २० ॥ इमामृचन्तुकरयो रंगुष्ठादिषुविन्यसेत् ॥ सद्योजातादिकाःपञ्चहृदयेतुन्यसेदिमाम् ॥२१॥ नमो वः किरिकेभ्योदेवानाᳩहृदयेभ्योनमोविक्षीणकेभ्योनमोविचिन्वत्केभ्योनम आनिर्हतेभ्यः ॥ २२ ॥ नमोगणेभ्यःपृष्ठेतुनमोहिरण्यबाहवे॥ पार्श्वयोर्न्यस्य कुक्ष्योस्तुनमस्तक्षद्वयइत्यपि॥२३॥नमोगणेभ्योगणपतिभ्यश्चवोनमोनमो व्रातेभ्योव्रातपतिभ्यश्चवोनमोनमः ॥ नमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमो नमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमोनमः ॥ २४ ॥ नमोहिरण्यबाहवेसेना न्येदिशाञ्चपतयेनमोनमोवृक्षेभ्योहरिकेशेभ्यःपशूनाम्पतयेनमोनमः ॥ शष्पिञ्जरायत्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिने पुष्टानाम्पत येनमोनमः ॥ २५ ॥ नमस्तक्षद्भ्योरथकारेभ्यश्चवोनमोनमः कुलालेभ्यः

१ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥

कर्म्मारेभ्यश्चवोनमोनमः ॥ निषादेभ्यःपुञ्जिष्ठेभ्यश्चवोनमोनमःश्वनिभ्यो मृगयुभ्यश्चवोनमोनमः ॥ २६ ॥ विज्यन्धनुस्तुजठरेनाभौहिरण्यगर्भकम्॥ मीढुष्टमेतिकट्याश्चयेभूतानान्तुगुह्यके ॥ २७ ॥ विज्यन्धनुःकपर्द्दिनोविशल्योबाणवाँउत ॥ अनेशन्नस्ययाइषवआभुरस्यनिषङ्गधिः ॥ २८ ॥ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ २९ ॥ मीढुष्टमशिवतमशिवोनःसुमनाभव ॥ परमेवृक्षआयुधन्निधायकृत्तिंवसानआचरपिनाकम्बिभ्रदागहि ॥ ३० ॥ येभूतानाम्पतयोविशिखासः कपर्द्दिनः तेषाᳬंसहस्रयोजनेवधन्वानितन्मसि॥३१॥ जातवेदादिकाःपञ्चशिरोयुक्ताअपानके ॥ मानोमहान्तमूर्वोश्चएपतेजानुनोर्न्यसेत् ॥ ३२ ॥ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥सनःपर्षदतिदुर्गाणिविश्वानावेवसिन्धुन्दुरितात्यग्निः ॥ ३३ ॥ सयोवृषावृष्ण्येभिःसमोकामहोदिवःपृथिव्याश्चसम्राट् ॥ सतीनसत्वाहव्योभरेषु मरुत्वान्नोभवत्विन्द्रऊती ॥ ३४ ॥ यस्यानाप्तःसूर्य्यस्येवयामोभरेभरेवृत्रहाशुष्मोअस्ति ॥ वृषन्तमःसखिभिःस्वेभिरेवैर्मरुत्वान्नोभवत्विन्द्रऊती ॥ ३५ ॥ दिवोनयस्यरेतसोदुघानाःपन्थासोयन्तिशवसापरीताः ॥ तरद्द्वेषाःससहिःपौंस्येभिर्मरुत्वान्नोभवत्विन्द्रऊती ॥ ३६ ॥ सोअङ्गिरोभिरङ्गिरस्तमोभूद्वृषावृषभिःसखासन् ॥ ऋग्मिभिर्ऋग्मीगातुभिर्ज्येष्ठोमरुत्वान्नोभवत्विन्द्रऊती ॥ ३७ ॥ मानोमहान्तमुतमानोअर्भकंमानउक्षन्तमुतमानउक्षितम् ॥ मानोवधीःपितरम्मोतमातरंमानःप्रियास्तन्नोरुद्ररीरिषः ॥ ३८ ॥ एतत्तेरुद्रावसन्तेनपरोमूजवतोतीहि ॥ अवततधन्वापिनाकावसः कृत्तिवासाअहिᳬंसन्नःशिवोतीहि ॥ ३९ ॥ सᳬंसृष्टजिज्जङ्घयोश्चविश्वम्भूतञ्चगुल्फयोः ॥ येपथांपथिरक्ष्योःस्यादध्यवोचश्चवर्म्मकम् ॥ ४० ॥ सᳬंसृष्टजित्सोनयाबाहुशर्ध्यूर्ध्वन्वाप्रतिरताभिरस्ता ॥ बृहस्पतेपरिदीयारथीनरक्षोहामित्राँअपबाधमानः ॥ ४१ ॥ विश्वम्भूतम्भुवनंमित्रम्बहुधाजातञ्जायमानञ्चयत् ॥ सर्वोह्येपरुद्रस्तस्मैरुद्रायनमोअस्तु ॥ ४२ ॥ येपथाम्पथिरक्षयऐलबृहाआयुर्युधः ॥ तेषाᳬंसहस्रयोजनेवधन्वानितन्मसि ॥ ४३ ॥ अध्यवोचदधिवक्ताप्रथमोदैव्यो

भिषक् ॥ अहींश्चसर्वाञ्जम्भन्सर्वाश्चयातुधान्योधराचीःपरासुव ॥ ४४ ॥ उपवर्म्मनमो।वल्मिनमोअरतुचनत्रयोः ॥ प्रमुञ्चधन्वनश्चेतिन्यसेन्नेत्रेतृतीयके ॥ ४५ ॥ नमोविल्मिनेचकवचिनेचनमोवर्म्मिणेचवरूथिनेच ॥ नमःश्रुतायचश्रुतसेनायचनमोदुन्दुभ्यायचाहनन्यायच ॥ ४६ ॥ नमोस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेअस्यसत्त्वानोहन्तेभ्योकरन्नमः ॥ ४७ ॥ प्रमुञ्चधन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् ॥ याश्चतेहस्तइषवः परताभगवोवप ॥ ४८ ॥ एवंषड्विंशदङ्गानांन्यासःप्रथमईरितः ॥ यएतावन्तइतिचकुर्यादिग्बन्धनन्ततः ॥ ४९ ॥ परातावन्तश्चभूया ꣳ सश्चदिशोरुद्रावितस्थिरे ॥ तेषा ꣳ सहस्रयोजनेवधन्वानितन्मसि ॥ ५० ॥ अयन्तुसर्वमन्त्राणाम्प्रठनेत्वधिकारकृत् ॥ इमन्न्यासम्प्रकुर्वाणःपातकेपिनश्यति ॥ ५१ ॥ तारोनमोभगवतेरुद्रायेतिदशाक्षरः । मन्त्रःप्रोक्तोनेनकुर्यान्न्यासान्तेतुनमस्कृतिम् ॥ ५२ ॥ पश्चादस्यैवमन्त्रस्यवर्णन्यासंसमाचरेत् ॥ मस्तकेनसिभालेचमुखेकण्ठेतथाहृदि ॥ ५३ ॥ दक्षहस्तेवामहस्तेनाभौपादद्वयेतथा ॥ ५४ ॥ सर्वमन्त्राधिकारीस्यान्न्यासेस्मिंस्तुद्वितीयके । अथन्यासस्तृतीयोपिप्रोच्यतेत्रशृणुष्वतम् ॥ ५५ ॥ पदोर्हृदिमुखेमूर्ध्नि सद्योजातादिकाऋचः ॥ न्यास्यान्यासेतृतीयेस्मिञ्शैवंतेजःसमाविशेत् ॥ ५६ ॥ हंसःसोहमितिब्रूयाद्भावयेच्चतथाधिया ॥ ततोष्टदिक्षुदिक्पालांस्तत्तन्मन्त्रेणविन्यसेत् ॥ ५७ ॥ त्रातारमिन्द्रमवितारमिन्द्र ꣳ हवेहवेसुहव ꣳ शूरमिन्द्रम् ॥ हवेनुशक्रंपुरुहूतमिन्द्र ꣳ स्वस्तिनोमघवाधात्विन्द्रः ॥ ५८ ॥ त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषा ꣳ सिप्रमुग्ध्यस्मत् ॥ ५९ ॥ सुगंनःपन्थामभयंकृणोतुयस्मिन्नक्षत्रेयमएतिराजा ॥ तस्मिन्नेनमभ्यषिञ्चन्तदेवास्तेतदस्याचित्र ꣳ हविषायजामः ॥ ६० ॥ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ६१ ॥ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुश ꣳ

१ ॐम् २ ॐमस्तके, न नासिकायाम्, मो भाले, भ मुखे, ग कण्ठे, व हृदये, ते दक्षहस्ते, रु वामहस्ते, द्रा नाभौ, य पादद्वये ॥ इति मन्त्रान्तरन्यासः ॥

समानआयुःप्रमोषीः ॥ ६२ ॥ आनोनियुद्भिःशतिनीभिरध्वरथ्ंसहस्रिणी भिरुपयाहियज्ञम् ॥ वायोअस्मिन्सवनेमादयस्वयूयंयातस्वस्तिभिःसदानः ॥ ६३ ॥ वयथ्ंसोमव्रतेतवमनस्तनूषुबिभ्रतः प्रजावन्तःसचेमहि ॥ ६४ ॥ तमीशानंजगतस्तस्थुषस्पतिधियंजिन्वमसेडमहेवयम् ॥ पूषानोयथावेदसा मसद्वृधेरक्षितापायुरदब्धः ॥ ६५ ॥ अस्मेरुद्रामेहनापर्व्वतासोवृत्रहत्येभरहू तौसजोषाः ॥ यःशंसतेस्तुवतेधायिवज्रइन्द्रज्येष्ठाअस्माँअवन्तुदेवाः ॥ ६६ ॥ अनेनचनमस्कुर्य्यादूर्ध्वेचाथोधरातले ॥ धरामन्त्रेणकुर्य्याच्चसएवंपापवर्जि तः ॥ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथः ॥ ६७ ॥ न्या सवन्तंसमीक्ष्येहप्रेतचौराद्युपद्रवाः ॥ दीप्यमानमशक्तास्तेपरायन्तेविदूरतः ॥ ६८ ॥ मनोज्योतिर्न्यसेद्गुह्येअबोध्यग्निस्तथोदरे ॥ मूर्धानंहृदयेन्यस्यमुखे मर्म्माणितेतथा ॥ ६९ ॥ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञथ्ंसमिमन्द धातु ॥ याइष्टाउषसोनिम्रुचस्ताः सन्दधामिहविषाघृतेन ॥ ७० ॥ अबोध्य ग्निःसमिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ॥ यह्वाइवप्रवयामुज्जिहाना प्रभानवःसिस्रतेनाकमच्छ ॥ ७१ ॥ मूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृत आजातमग्निम् ॥ कविथ्ंसम्राजमतिथिंजनानामासन्नापात्रंजनयन्तिदेवाः ॥ ७२ ॥ मर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरो र्वरीयोवरुणस्तेकृणोतुजयन्तन्त्वांदेवामदन्तु ॥ ७३ ॥ जातवेदास्तच्छिर सिन्यासःप्रोक्तश्चतुर्थकः ॥ ७४ ॥ जातवेदायदिवापावकोसिवैश्वानरोय दिवावैद्युतोसि ॥ शंप्रजाभ्योयजमानायलोकंऊर्जम्पुष्टिंददभ्यावकृत्स्व ॥ ७५ ॥ हृदयेशिवसङ्कल्पंशिरःपुरुषसूक्तकम् ॥ शिखाद्भ्यःसम्भूतइतिवर्म्मप्रति रथंमतम् ॥ ७६ ॥ अद्भ्यःसम्भूतःपृथिव्यैरसाच्चविश्वकर्म्मणःसमवर्त्तताग्रे ॥ तस्यत्वष्टाविदधद्रूपमेतितत्पुरुषस्यविश्वमाजानमग्रे ॥ ७७ ॥ वेदाहमेतंपुरु षंमहान्तमादित्यवर्णंतमसःपरस्तात ॥ तमेवंविद्वानमृतइहभवतिनान्यःपन्था विद्यतेयनाय ॥ ७८ ॥ प्रजापतिश्चरतिगर्भेअन्तरजायमानोबहुधाविजाय ते ॥ तस्यधीराःपरिजानन्तियोनिंमरीचीनांपदमिच्छन्तिवेधसः ॥ ७९ ॥ योदेवेभ्यआतपतियोदेवानांपुरोहितः ॥ पूर्वोयोदेवेभ्योजातोनमोरुचायब्रा

ह्मये ॥ ८० ॥ रुचंब्राह्मञ्जनयन्तोदेवाअग्रेतदब्रुवन् ॥ यस्त्वेवंब्राह्मणोवि
द्यात्तस्यदेवाअसन्वशे ॥ ८१ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यो अहोरात्रेपार्श्वेनक्षत्रा
णिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणअमुंमइषाणसर्वंमइषाण ॥ ८२ ॥
शतरुद्रियमन्त्रंस्यादथपञ्चाङ्गमुच्यते ॥ न्यासस्तुपञ्चमः प्रोक्तोयंसर्वाभीष्टसाध
कः ॥ ८३ ॥ त्वमग्नेरुद्रोअसुरोमहोदिवस्त्वꣳ शर्धोमारुतंपृक्षईशिषेत्वंवातैर
रुणैर्यासिशंगयः ॥ त्वंपूषाविधतःपासितुत्मना ॥ ८४ ॥ देवादेवेषुश्रयध्वं
प्रथमाद्वितीयेषु ॥ श्रयध्वंद्वितीयास्तृतीयेषुश्रयध्वंतृतीयाश्चतुर्थेषु ॥ ८५ ॥
श्रयध्वंचतुर्थाःपञ्चमेषुश्रयध्वंपञ्चमाःषष्ठेषु ॥ श्रयध्वंषष्ठाःसप्तमेषुश्रयध्वंसप्तमा
अष्टमेषु ॥ ८६ ॥ श्रयध्वं अष्टमानवमेषुश्रयध्वंनवमादशमेषु ॥ श्रयध्वंदश
माएकादशेषुश्रयध्वंएकादशाद्वादशेषु ॥ ८७ ॥ श्रयध्वंद्वादशास्त्रयोदशेषु
श्रयध्वंचतुर्दशाःपञ्चदशेषु ॥ श्रयध्वंपञ्चदशाःषोडशेषुश्रयध्वंषोडशाःसप्तदशे
षु॥८८॥श्रयध्वंसप्तदशाअष्टादशेषुश्रयध्वंअष्टदशाएकोनविꣳशेषु॥श्रयध्वं
एकोनविꣳशाविꣳशेषुश्रयध्वंविꣳशाएकविꣳशेषु ॥ ८९ ॥ श्रयध्वंएक
विꣳशाद्वाविꣳशेषुश्रयध्वंद्वाविꣳशास्त्रयोविꣳशेषु ॥ श्रयध्वंत्रयोविꣳ
शाश्चतुर्विꣳशेषुश्रयध्वंचतुर्विꣳशाःपञ्चविꣳशेषु ॥ ९० ॥ श्रयध्वंपञ्चवि
ꣳशाःषड्विꣳशेषुश्रयध्वंषड्विꣳशाःसप्तविꣳशेषु ॥ श्रयध्वंसप्तविꣳशाअ
ष्टाविꣳशेषुश्रयध्वं अष्टाविꣳशाएकोनत्रिꣳशेषु ॥ ९१ ॥ श्रयध्वंएकोनत्रि
ꣳशास्त्रिꣳशेषुश्रयध्वंत्रिꣳशाएकत्रिꣳशेषु ॥ श्रयध्वंएकत्रिꣳशाद्वात्रिꣳ
शेषुश्रयध्वंद्वात्रिꣳशास्त्रयस्त्रिꣳशेषु ॥ ९२ ॥ श्रयध्वंदेवास्त्रिरेकादशास्त्रि
यस्त्रिꣳशाउत्तरेभवन्तु ॥ उत्तरवर्त्मानउत्तरसत्वानः ॥ यत्कामइदंजुहोमित
न्मेसमृध्यतांवयꣳस्यामपतयोरयीणांभूर्भुवःस्वःस्वाहा ॥ ९३ ॥ पञ्चाङ्गंन्या
समेवन्तुकृत्वाष्टाङ्गंनमेच्छिवम् ॥ जपंनिवेद्यरुद्रायाथोपतिष्ठेत्ततःपुनः ॥ ९४ ॥
हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्या
मुतेमांकस्मैदेवायहविषाविधेम ॥ ९५ ॥ प्राणतोनिमिषतोमहित्वैकइन्द्रोरा
जाजगतोबभूव ॥ यद्दशेअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम ॥
९६ ॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमा

अस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ६७ ॥ महीद्यौःपृथिवीचतइमंयज्ञंमिमिक्षतांपिपृतांनोभरीमभिः ॥ उपश्वासयपृथिवीमुतद्यांपुरुत्रातेमनुतांविष्ठितंजगत् ॥ सइन्दुभेसजूरिन्द्रेणदेवैर्दूरादवीयोअयसेधिशत्रून् ॥ ६८ ॥ अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ ६६ ॥ यातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मानम्॥अच्छावसूनिकृण्वन्नस्मेनर्यापुरूणियज्ञोभूत्वायज्ञमासीदस्वयोने ॥ १०० ॥ जातवेदाभुवआजायमानोयथाचस्वाहाग्नयेघृतवद्भिस्तुहव्यैः ॥ तेभिर्नोअग्नेअमितैरहोभिःशतंपूर्भिरायसीभिर्निपाहि ॥ १ ॥ इमंयमप्रस्तरमाहिसीदाङ्गिरोभिःपितृभिःसंविदानः ॥ आत्वामन्त्राःकविशस्तावहन्त्वेनाराजन्हविषामादयस्व ॥ २ ॥ इत्युपस्थायदेवन्तुदेवयोगंसमाचरेत् ॥ तिष्ठत्वीशोनासिकायांचन्द्रादित्यौचनेत्रयोः ॥ ३ ॥ कर्णयोरश्विनौचापिरुद्रास्तिष्ठन्तुमेहृद्के ॥ तिष्ठन्तुमूर्द्धिचादित्यामहादेवःशिरोगतः ॥ ४ ॥ शिखायांवासुदेवश्चपिनाकीचापिपृष्ठके ॥ पुरस्तिष्ठतुशैलीचपार्श्वयोःशिवशङ्करौ ॥ ५ ॥ सर्वतश्चापिवायुश्चसर्वतश्चततोबहिः ॥ अग्निज्वालामालिकाश्चतिष्ठन्तुबहुशोमम ॥ ६ ॥ सर्वेष्वङ्गेषुसर्वेचतिष्ठन्तुममदेवताः ॥ तिष्ठन्तुमामितिप्रोक्त्वाप्रपञ्चंमनसाहुनेत् ॥ ७ ॥ अग्निर्मेवाचिश्रितःवाग्हृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥ ८ ॥ वायुर्मेप्राणेश्रितःप्राणोहृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥ ६ ॥ सूर्य्योमेचक्षुषिश्रितःचक्षुर्हृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥ १० ॥ चन्द्रमामेमनसिश्रितःमनोहृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥ ११ ॥ दिशोमेश्रोत्रेश्रिताःश्रोत्रꣳहृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥ १२ ॥ आपोमेरेतसिश्रिताः रेतोहृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥ १३ ॥ पृथिवीमेशरीरेश्रिताशरीरꣳहृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥ १४ ॥ ओषधिवनस्पतयोमेलोमसुश्रिताःलोमानिहृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥ १५ ॥ इन्द्रोमेबलेश्रितःबलꣳहृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥ १६ ॥ पर्जन्योमेमूर्द्धिश्रितःमूर्द्धाहृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि॥ १७॥ईशानोमेमन्यौश्रितःमन्युर्हृदयेहृदयंमयिअहममृते

अमृतंब्रह्मणि ॥ १८॥ आत्माम आत्मनिश्रितःआत्माहृदयेहृदयंमयिअहममृतेअमृतंब्रह्मणि ॥१९॥ पुनर्मआत्मापुनरायुरागात् ॥ पुनःप्राणःपुनराकूतमागात् ॥ वैश्वानरोरश्मिभिर्वावृधानःअन्तस्तिष्ठत्वमृतस्यगोपाः ॥ २०॥ न्यासानेवंविधायाथध्यायेदात्मानमीश्वरम् ॥ पार्थिवोक्तप्रकारेणलिङ्गपूजांततश्चरेत् ॥ २१॥ आराधितोमनुष्यैस्त्वंसिद्धैर्देवासुरादिभिः ॥ आराधयामिभक्त्यात्वांमांगृहाणमहेश्वर ॥ २२ ॥ आत्वावहन्तुहरयःसचेतसःश्वेतैरश्वैरहरहःकेतुमद्भिः ॥ वाताजवैर्बलवद्भिर्मनोजवैर्माम्पाहिशीघ्रम्ममहव्यायशर्व ॥ २३ ॥ एतत्तेरुद्रावसन्तेनपरोमूजवतोतीहि ॥ अवततधन्वापिनाकावसःकृत्तिवासा अहिंसन्नःशिवोतीहि ॥ २४ ॥ चत्वारिशृङ्गास्त्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश ॥ २५॥ प्रसन्नोभवदेवेशसुमुखोभवशङ्कर ॥ शान्तोभवस्वचात्रत्वंममचाभिमुखोभव ॥ २६॥ स्वामिन्सर्वजगन्नाथयावत्पूजावसानकम् ॥ तावत्त्वंप्रीतिभावेनलिङ्गेस्मिन्सन्निधोभव ॥ २७ ॥ अभिषेकंततःकुर्य्यादमृतैःपञ्चभिःक्रमात् ॥ पश्चाच्छुद्धोदकेनाथततःपूजनमारभेत् ॥ २८ ॥ रौद्रीन्धारान्ततःकुर्य्यात्प्रोच्यतेतद्विधानकम् ॥ नमस्तेरुद्राग्नाविष्णूइत्यध्यायद्वयेनच ॥ २९ ॥ आवर्त्तनमितिप्रोक्तंगङ्गास्नानफलप्रदम् ॥ आवर्त्तनाभिषेकंतुयःकुर्य्यात्प्रत्यहंनरः ॥ ३० ॥ तस्यैवदिनजंपापंदैवजंनाशमाप्नुयात् ॥ सन्ध्यावन्दनतःत्त्रीणंतच्चेत्प्राग्जन्मजम्भवेत् ॥ ३१ ॥ एकःपाठोनमस्तेचअनुवाकःपरस्यच ॥ एवम्भवायनस्तस्युःआनाविष्णुस्तथैककम् ॥ ३२ ॥ इयंरुद्रीसमाख्यातारौद्रपापनिकृन्तिनी ॥ अनयाप्रत्यहंयस्तुकुर्य्याल्लिङ्गाभिषेचनम् ॥ ३३ ॥ जन्मजन्मकृतंपापंवर्षैर्वर्षैप्रणश्यति ॥ सप्तजन्मकृतेपापेनष्टेलक्ष्मीर्विवर्धते ॥ ३४ ॥ वंशश्चस्थिरतामेतियशोयातिदिगन्तरम् ॥ सूतेचास्ययथारूपंतथातोयेप्रदृश्यते ॥ ३५ ॥ रुद्रीभिरेकादशभिराद्यरुद्रःप्रकीर्त्तितः ॥ अनेनसिक्तंयैर्लिङ्गन्तेनपश्यन्तिभास्करिम् ॥ ३६ ॥ एकादशभिरेतैस्तुमहारुद्रः प्रकीर्त्तितः ॥ धनप्रदोऽधनानाञ्चमहा

---

१ गेरहदफे रुद्री पाठकरके रुद्राभिषेक करने को ही आद्यरुद्र कहते हैं गेरह आद्यरुद्र की महारुद्रसञ्ज्ञा होती है गेरह महारुद्र को अतिरुद्र कहते हैं ॥

पातकनाशनः ॥ ३७ ॥ अनेनविहितोहोमः सोमयागफलप्रदः ॥ अनाधि कारीदीक्षायान्तस्यपापक्षयङ्करः ॥ ३८ ॥ एकादशमहारुद्रैरतिरुद्रःप्रकीर्त्तितः ॥ अतिपापहरोयंस्याद्दृष्टन्यायेननिष्कृतिः ॥ ३९ ॥ विश्वासघातनंस्वामिद्रोहो ऽन्यायेनदण्डनम् ॥ कृतघ्नताचसामर्थ्येशरणागतनाशनम् ॥ ४० ॥ अतिपा पानिपञ्चेतिशसेदेशेतपस्तथा ॥ अकर्म्मणिकृतेयत्तदतिरुद्रोविनाशयेत् ॥ ४१ ॥ शाखायांयस्यतुयथास्वाध्यायोपठितावुभौ ॥ पठनीयौतथातेनशाखा रण्डंनकारयेत् ॥ ४२ ॥ नरुद्रोयस्यशाखायान्तैत्तिरीयंपठेत्सतु ॥ शाखातुय जमानस्यब्राह्मणद्वारतःकृते ॥ ४३ ॥ अथवातैत्तिरीयाणांनान्यशाखाप्रपूज्य ते ॥ शाखामिश्रंकृतंकर्म्मयजमानंविनाशयेत् ॥ ४४ ॥ धनलोभात्परार्थयोमा भिषिञ्चतिमूढधीः ॥ सतुचाण्डालवज्ज्ञेयोनिर्धनस्सप्तजन्मसु ४५ ॥ कुटुम्बि नातुयत्नेनधनार्थम्ममपूजनम् ॥ कृतंचेज्जपदानाभ्यांत द्दशांशोस्यनिष्कृतिः ॥ ४६ ॥ काकोब्रह्मस्वभोक्तास्याच्छिवस्वाशीतुकुकुटः ॥ देव्यन्नभोक्ताप्लवगोमूष कोविष्णुवित्तकः ॥ ४७ ॥ चण्डीचण्डीशनिर्माल्यंतथवैनायकंद्विजाः ॥ प्र सादंनचगृह्णन्तिस्वयन्दत्ताद्दतेक्कचित् ॥ ४८ ॥ नसत्कृतंत्वविधिनायैर्वित्तेना न्यजन्मनि ॥ भूत्वामेपूजकास्तेतुसुखंकुर्व्वन्त्यनुत्तमम् ॥ ४९ ॥ रुद्रोनयस्य शाखायाम्परि शिष्टान्वितंसतु ॥ पठेद्रुद्रन्तैत्तिरीयंलुप्तशाखस्तमेवहि ॥ ५० ॥ मन्त्रप्रयोगसहितोरुद्राध्यायोथवक्ष्यते ॥ असंस्कृतायनोवाच्यंतान्त्रिकायक

---

१ विश्वास राखनेवाले के संग दगा करना २ मालिकसे अर्थात् गुरु पितृ मातृ राजा व परमेश्वर से द्रोह करना अर्थात् उनसे विमुख होना ३ विनाअपराध दण्ड व थोरे कसूर में बहुत दण्ड देना ४ किसी के कियेहुये उपकार को न मानना ५ शरणागतको मारना व सामर्थ्यहो तौ भी शरणागतको किसी से न बचाना ये पांच महापाप हैं ६ जे लोग देवताओं की पूजाके लिये धरीहुई वस्तुको खाते हैं वे काकादि होते हैं जे देवप्रसाद मानकर देवनिर्माल्य वस्तुओं को भोगते हैं उनके लिये दोष नहीं होसक्ता और भोजन वस्त्रभूषणादि देवताओं को अर्पण करके फिर अपने ग्रहण करनेसे भी दत्तापहारी दोष नहीं होता बरन देवताओं की प्रसन्नता होतीहै क्योंकि देवद्रव्य किसकी है ? देवभक्तों की; देवभक्त होनेसे अपनाको भी देवप्रसाद लेना उचितहै तथाह श्रीशाण्डिल्यः "स्वयमर्पितं ग्राह्यमविशेषात्" जैसे अन्यभक्तहैं तैसे दाता भी भक्तहै इससे प्रसाद लेना चाहिये ॥

दाचन ॥ ५१ ॥ ॐनमस्तेरुद्रमन्यवउतोतइषवेनमः ॥ नमस्तेअस्तुधन्वनेबाहु
भ्यामुततेनमः ॥ ५२ ॥ यातइषुःशिवतमाशिवम्बभूवतेधनुः ॥ शिवाशरव्या
यातवतयानोरुद्रमृडय ॥ ५३ ॥ यातेरुद्रशिवातनूरघोरापापकाशिनीतयान
स्तनुवाशन्तमयागिरिशन्ताभिचाकशीहि ॥ ५४ ॥ यामिषुंगिरिशन्तहस्ते
बिभर्ष्यस्तवे ॥ शिवांगिरित्रतांकुरुमाहिंसीः पुरुषंजगत् ॥ ५५ ॥ शिवेन
वचसात्वागिरिसाच्छावदामसि ॥ लक्षमेकंप्रजुहुयाद्गोघृतंयोत्रस्वप्रभम् ॥५६॥
माध्वीकंमधुकंक्षौदन्तिलांश्चदधिसंयुतान् ॥ यत्किञ्चित्कार्य्यमुद्दिश्यतस्य
सिद्धिःप्रजायते ॥ ५७ ॥ एवमेवसहस्रंचेदेकादशादिनंहुनेत् ॥ बालानांमार
काग्रामेनश्यन्त्येवनसंशयः ॥ ५८ ॥ कुमारमारकश्चैवद्वादशाहेननश्यति ॥
होमःपञ्चदशाहन्तुराज्योपद्रवनाशनम् ॥ ५९ ॥ होमाद्विंशतिरात्रेणदेशो
पद्रवनाशनम् ॥ पृथिव्युपद्रवोनश्येन्मासमात्रेणहोमतः ॥ ६० ॥ गवामुपद्रवे
जातेगोष्ठमध्येतदाहुनेत् ॥ वैकंङ्कतसमिद्भिश्चायुतंशान्तिःप्रजायते ॥ ६१ ॥
अयुतंरुद्रहोमेनमहाशान्तिर्भवेद्ध्रुवम् ॥ यथानःसर्वमिज्जगदयक्ष्मंसुमनाअ
सत् ॥ ६२ ॥ जपेदयुतसङ्ख्याकंशापमोक्षःप्रजायते ॥ शिशिरेतुजलेप्रातर्लक्ष
ञ्जप्त्वासुखीभवेत् ॥ ६३ ॥ अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ॥ अही
ंश्चसर्वाञ्जम्भयन्त्सर्वाश्चयातुधान्योधराचीःपरासुव ॥ ६४ ॥ लक्षमेकंपुर
श्चर्य्याहोमः स्याद्घृतसर्षपैः ॥ व्याधीनांनाशनंचेत्थंप्रयोगान्तरमुच्यते ॥
६५ ॥ सप्ताभिमन्त्रितान्कृत्वासर्षपानातुरस्यच ॥ चतुर्दिक्षुक्षिपेद्रक्षादश
दिग्भ्यःप्रजायते ॥ ६६ ॥ सप्ताभिमन्त्रितान्कृत्वापथिगच्छंस्तुसर्षपान् ॥
दशदिक्षुक्षिपेन्नित्यंपथिक्षेमप्रजायते ॥ ६७ ॥ ब्रह्मराक्षसयक्षाद्यैःपिशाचप्रेत
भूतकैः ॥ आविष्टःसर्षपैस्ताड्यःसप्तवाराभिमन्त्रितैः ॥ ६८ ॥ पुनःपुनःमन्त्र
पाठपूर्वंकृत्वाधनार्थिनः ॥ धनंगृहीत्वागच्छन्तिकरेचन्दनमेवहि ॥ ६९ ॥
शिखामाक्रम्यचजपेत्ताडयेद्घोरसर्षपैः ॥ रात्रिंसमस्तांस्कन्दादिग्रहपीडाविन
श्यति ॥ ७० ॥ अनेनमन्त्रयित्वातुदद्याच्छास्त्रोक्तमौषधम् ॥ तत्कालंतद्गु

---

१ कठेर वृक्ष ॥

णायस्यादन्यथातुयथातिथिः ॥ ७१ ॥ अभिमन्त्र्यजलंदद्यात्सर्वसत्त्वभवंरुज म् ॥ हरेत्सविग्रहाणांचसर्षपैस्ताडनैस्तथा ॥ ७२ ॥ सर्वभूतोद्भवांपीडांभस्म धारणतोजयेत् ॥ दिवसेचतथारात्रौत्रिशूलमभिमन्त्रयेत् ॥ ७३ ॥ सहस्रैकं समादायक्षिपेन्नागह्रदेतुतत् ॥ त्रिशूलेनास्तवेगास्तेनाशंगच्छन्तिपन्नगाः ॥ ७४ ॥ भस्माभिमन्त्रितंकृत्वापन्नगाक्रान्तमन्दिरे ॥ क्षिपेत्तत्तालशब्देनपन्न गोत्सादनंभवेत् ॥ ७५ ॥ असौयस्ताम्रोअरुणउतबभ्रुःसुमङ्गलः ॥ येचैनं रुद्राअभितोदिक्षुश्रिताःसहस्रशोवैषांहेडईमहे ॥ ७६ ॥ असौयोवसर्पतिनी लग्रीवोविलोहितः ॥ उतैनंगोपाअदृशन्नदृशन्नुदहार्य्यः ॥उतैनंविश्वाभूतानि सदृष्टोमृडयातिनः ॥ ७७॥ उदयास्तमयोःसूर्य्यमेताभ्यामुपतिष्ठते ॥ अवश्यो वश्यतांयातिसवितावरदोभवेत् ॥ ७८ ॥ अर्कसूलोद्भवैर्दुग्धैराप्लुतानांतुहोम येत् ॥ अयुतंचार्कसमिधांशक्रश्चेत्सजलेजपेत् ॥ ७९ ॥ होमान्तेभगवान्सू र्य्योंदृष्टिंसुखतिनान्यथा ॥ मन्त्रद्वयंतुभजतामिष्टांसिद्धिंप्रयच्छति ॥ ८० ॥ न मोअस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेअस्यसत्वानोहन्तेभ्योकरन्न मः ॥ ८१ ॥ स्थण्डिलस्योपकण्ठेतुकृत्वासघृतपायसम् ॥ कृष्णाष्टमींसमारभ्य यावत्कृष्णचतुर्दशी ॥ ८२ ॥ प्रत्यहंस्थापयेत्तावत्सहस्रेणाभिमन्त्रितम् ॥ नि वेदयेत्तुदेवायकार्षापणसहस्रकम् ॥ ८३ ॥ उद्यमाज्जायतेलाभःसिद्धेमन्त्रेन संशयः ॥ असिद्धेतुतदर्धंस्यात्सूर्य्यकान्तवृषाद्यपि ॥ ८४ ॥ निवेदनात्पुन र्लाभोलक्षमेकंपुरस्कृतिः ॥ होमस्तुपायसघृतैरनारूपेयःप्रयोगवान् ॥ ८५ ॥ प्रमुञ्चधन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥ याश्चतेहस्तइषवः पराताभगवोवप ॥ ८६ ॥अवतत्यधनुष्ट्वं सहस्राक्षशतेषुधे ॥ निशीर्य्यशल्यानाम्मुखाशिवोनः सुमनाभव ॥ ८७ ॥ विज्यंधनुःकपर्दिनोविशल्योबाणवाँउत ॥ अनेशन्न स्ययाइषवआभुरस्यनिषङ्गधिः ॥ ८८ ॥ यातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ ८९ ॥ नमस्तेअस्त्वायुधायानात तायधृष्णवे ॥ उभाभ्यामुततेनमोबाहुभ्यांतवधन्वने ॥ ९० ॥ परितेधन्वनोहे तिरस्मान्वृणक्तुविश्वतः ॥ अथोयइषुधिस्तवारेअस्मान्निधेहितम् ॥ ९१ ॥आ युधान्यभिमन्त्र्येमाञ्जप्त्वापञ्चसहस्रकम् ॥ बन्धयित्वानिरसयेद्गच्छेद्गच्छन्ति

शत्रवः॥९२॥ जुहुयादयुतन्दर्भकण्टकान्द्वेषकामुकः॥शुद्धम्मुखेनचोच्चार्य्यशत्रो र्नामस्मरन्हुनेत् ॥ ९३ ॥जपाख्यसवनेनैवशक्रमुत्सादयेद्धठात् ॥ सम्पूर्णाहं जपन्नुत्सादयेत्सग्राममेवच ॥ ९४ ॥ उत्सादयेन्नृराजानमहोरात्रंदिनार्ध के ॥ चतुर्भागेनवैश्यन्तुषड्भागेनैकजातिकम् ॥ ९५ ॥ पलाशाश्वत्थवि ल्वानामपामार्गस्यचक्रमात् ॥ विप्रादिवश्यकामस्तु दधिक्षौद्रघृतान्विताः॥ ९६ ॥ हुनेदयुतसङ्ख्याकाः समिधःकार्य्यसिद्धये ॥ हीनवर्णान्वशीकर्तुं वरुणार्ककवेतसान् ॥ ९७ ॥ शाखोटकाश्चजुहुयादष्टाविंशशतानिच ॥ सौगन्धिकानुत्पलाग्निकुमुदानिप्रयच्छति ॥ ९८ ॥ स्वयन्तुलिङ्गेलक्ष न्तुचन्दनाक्तानिभक्तितः ॥ राज्यभ्रष्टोभवेद्राजापद्भिर्मन्त्रैःपृथक्पृथक् ॥ ९९ ॥ धनार्थीप्राप्नुयाद्वित्तंशम्भुमेवंप्रपूजयन् ॥ लक्षमेकन्तिलानांयः पृथग्धत्तेशिवोपरि ॥ २०० ॥ आरोपयेत्सशत्रूणांमूर्ध्निनिताप्रतिनित्यशः ॥ अयुतंराजवृक्षस्यसमिधोहोमयेत्तुयः ॥ १ ॥ रणेराजकुलेद्यूतेसशत्रुंत्वरित ञ्जयेत् ॥ गुग्गुलुंपट्सहस्रंयोदक्षिणामूर्त्तिसन्निधौ ॥ २ ॥ यत्कार्य्यार्थंहु नेत्तस्यसिद्धिःशीघ्रंप्रजायते ॥ असाध्यस्यापिसिद्धिःस्याद्धुत्वाचाष्टसहस्र कम् ॥ ३ ॥ यथामहानसंसिद्धमन्नञ्जुहुयात्तथा ॥ सहस्राष्टकमेतस्यद्रव्यम्भ वतिचाक्षयम् ॥ ४ ॥ एकाम्रक्पपरिशिष्टस्यएतस्याग्रेऽवक्ष्यते ॥ तुभ्यंलोको पकारायसावधानतयाशृणु ॥ ५ ॥ नमस्तेअस्तुभगवन्विश्वेश्वरायमहादेवा यत्र्यम्बकायत्रिपुरायात्रिपुरान्तकाय त्रिकालायकालाग्निरुद्रायनीलकण्ठा य सर्वेश्वरायसदाशिवायश्रीमहादेवायनमः ॥६॥ अयुतंयोजपेदेतांघृताक्तै र्बिल्वपत्रकैः ॥ प्रतिनामसहस्रंतुजुहुयात्स्याल्लोकवन्दितः ॥ ७ ॥ नमोहिर ण्यबाहवेसेनान्येदिशाञ्चपतयेनमोनमोवृक्षेभ्योहरिकेशेभ्यः पशूनाम्पतयेन मोनमः ॥ शष्पिञ्जरायत्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवी तिनेपुष्टानाम्पतयेनमोनमः ॥ ८ ॥ नमोबभ्रुशायव्याधिनेन्नानाम्पतयेन मोनमोभवस्यहेत्यैजगताम्पतयेनमोनमः ॥ रुद्रायाततायिनेक्षेत्राणाम्पतये नमोनमः सूतायाहन्त्यैवनानाम्पतयेनमोनमः ॥ ९ ॥ पुरश्चरणमेतस्यसहस्रं चैकमीरितम् ॥ यःसंग्राममगतस्तस्यकौशल्यार्थमिदञ्जपेत् ॥ १० ॥ जपप्रभा

वाञ्छन्ताभिः सोऽरिभिर्नैव बाध्यते ॥ सूतायाहन्त्यै पूर्वन्तु परिशिष्टं निगद्यते ॥ ११ ॥
लजालललतायिनाम्पतयेनमोनमो ननाननततायिनाम्पतयेनमोनमः ॥ रो
हिताय स्थपतये वृक्षाणाम्पतयेनमो नमो भुवन्तये वारिवस्कृतायौषधीनाम्पत
येनमोनमः ॥ १२ ॥ मन्त्रिणेवाणिजाय कक्षाणाम्पतयेनमोनमउच्चैर्घोषायक्र
न्दयते पत्तीनाम्पतयेनमोनमः ॥ १३ ॥ कृत्स्नवीताय धावते सत्त्वानाम्पतयेनमो
नमस्सहमानाय निव्याधिन आव्याधिनीनाम्पतयेनमोनमः ॥ निषङ्गिणे ककु
भाय स्तेनानाम्पतयेनमोनमो निषङ्गिण इषुधिमते तस्कराणाम्पतयेनमोनमः ॥
१४ ॥ सहस्रपञ्चकञ्चास्य पुरश्चरणमुच्यते ॥ एतज्जप्तुर्भयं नास्ति व्याघ्रचौरा
दि कैर्वने ॥ १५ ॥ वञ्चते परिवञ्चते स्तायूनाम्पतयेनमोनमो निचेरवे परिचरा
यारण्यानाम्पतयेनमोनमः ॥ सृकायिभ्यो जिघांसद्भ्यो मुष्णताम्पतयेनमो
नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतयेनमोनमः ॥ १६ ॥ उष्णीषिणे गि
रिचराय कुलुञ्चानाम्पतयेनमो नमइषुमद्भ्यो धन्वायिभ्यश्चवोनमोनमः ॥ आ
तन्वानेभ्यः प्रतिदधानेभ्यश्चवोनमोनमः आयच्छद्भ्योऽस्यद्भ्यश्चवोनमोन
मः ॥ १७ ॥ सहस्राष्टकमेतस्य पुरश्चरणमुच्यते ॥ व्रणादेस्तीव्रपीडाया नाशको
ऽस्य जपः स्मृतः ॥ १८ ॥ विसृजद्भ्यो विद्ध्यद्भ्यश्चवोनमोनमः स्वपद्भ्यो जाग्र
द्भ्यश्चवोनमोनमः ॥ शयानेभ्य आसीनेभ्यश्चवोनमोनमस्तिष्ठद्भ्यो धाव
द्भ्यश्चवोनमोनमः ॥ १९ ॥ सभाभ्यः सभापतिभ्यश्चवोनमोनमः ॥ अश्व
भ्योऽश्वपतिभ्यश्चवोनमोनमः ॥ २० ॥ सहस्रनवकन्तावत्पुरश्चरणम
स्य तु ॥ सेनायाश्चतुरङ्गानां शान्तये प्रजपेदिदम् ॥ २१ ॥ नमआव्याधि
नीभ्यो विविध्यन्तीभ्यश्चवोनमोनमउगणाभ्यस्तृंहतीभ्यश्चवोनमोन
मः ॥ २२ ॥ नमोगणेभ्यो गणपतिभ्यश्चवोनमोनमो व्रातेभ्यो व्रातपतिभ्यश्च
वोनमः ॥ नमो गृत्सेभ्यो गृत्सपतिभ्यश्चवोनमोनमः ॥ विरूपेभ्यो विश्व
रूपेभ्यश्चवोनमः ॥ २३ ॥ नमो महद्भ्यः क्षुल्लकेभ्यश्चवोनमोनमो रथि
भ्यो रथेभ्यश्चवोनमः ॥ नमः सेनाभ्यः सेनानीभ्यश्चवोनमोनमः क्षत्तृभ्यः संगृ
हीतृभ्यश्चवोनमः ॥ २४ ॥ नमस्तक्षभ्यो रथकारेभ्यश्चवोनमोनमः कुला
लेभ्यः कर्म्मारेभ्यश्चवोनमः ॥ नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्चवोनमोनमइषुकृ

द्रुम्योधन्वकृद्धयश्चवोनमः ॥ नमोमृगयुभ्यःशनिभ्यश्चवोनमोनमःश्वभ्यः श्वपतिभ्यश्चवोनमः ॥ २५ ॥ पुरश्चरणमेतस्यसहस्राणांतुषोडश ॥ दुष्ट ग्रहबलिंदत्त्वाजप्त्वाचैतान्निरामयः ॥ २६ ॥ नमोभवायचरुद्रायनमःशर्वाय चपशुपतयेच ॥ नमोनीलग्रीवायचशितिकण्ठायचनमःकपर्दिनेचव्युप्तकेशा यच ॥ २७ ॥ नमःसहस्राक्षायचशतधन्वनेचनमोगिरिशायचशिपिविष्टाय च ॥ नमोमीढुष्टमायेषुमतेचनमोह्रस्वायचवामनायचनमोबृहतेचवर्षीयसेच नमोवृद्धायचसवृधेच ॥ २८ ॥ पुरश्चर्य्यायुतंचास्यविभवार्थप्रयोजयेत् ॥ त्रिसन्ध्यासुपठेदेतदेवंवर्षेणभाग्यवान् ॥ २९ ॥ नमोअग्रेयायचप्रथमायच नमआशवेचाजिरायच ॥ नमःशीघ्रयायचशीभ्यायचनमऊर्म्यायचावस्वन्या यचनमःस्रोतस्यायचद्वीप्यायच ॥ ३० ॥ सहस्रपञ्चकंतावत्पुरश्चरणमुच्यते ॥ गणाग्रंद्रक्षिप्राप्नोतिसन्मतंचपरैरपि ॥ ३१ ॥ नमोज्येष्ठायचकनिष्ठायचनमः पूर्वजायचापरजायच ॥ नमोमध्यमायचाप्रगल्भ्यायचनमोजघन्यायचबु ध्न्यायच ॥ ३२ ॥ नमःसोभ्यायचप्रतिसर्य्यायचनमोयाम्यायचक्षेम्यायच ॥ नमउर्वर्य्यायचखल्यायचनमःश्लोक्यायचवसान्यायच ॥ ३३ ॥ नमोव न्यायचकक्ष्यायचनमःश्रवायचप्रतिश्रवायच ॥ ३४ ॥ सहस्रदशकंतावत्पुर श्चरणमुच्यते ॥ ज्ञातिश्रेष्ठत्वमाप्नोतिजपेनैवनसंशयः ॥ ३५ ॥ नमआशु षेणायचाशुरथायचनमःशूरायचाभिन्दतेच ॥ नमोवर्म्मिणेचवरूथिनेचनमो बिल्मिनेचकवचिनेचनमःश्रुतायचश्रुतसेनायच ॥ ३६ ॥ पुरश्चर्य्यास्यनि र्दिष्टासहस्राणांतुपञ्चकम् ॥ जात्यानश्यतिखञ्जत्वंपादुकासिद्धिमाप्नुयात् ॥ ३७ ॥ नमोदुन्दुभ्यायचाहनन्यायचनमोधृष्णवेचप्रमृशायच ॥ नमोदूताय चप्रहितायचनमोनिषङ्गिणेचेषुधिमतेच ॥ ३८ ॥ नमस्तीक्ष्णेषवेचायुधिने चनमःश्रुत्यायचपथ्यायच ॥ नमःकाट्यायचनीप्यायचनमःकुल्यायचसरस्या यच ॥ नमोनादेयायचवैशन्तायच ॥ ३९ ॥ अयुतद्वितयंचास्यपुरश्चरण मुच्यते ॥ संग्रामेजयकृच्चायमनुवाकःप्रकीर्तितः ॥ ४० ॥ नमःकूप्यायचा वट्यायचनमोवर्ष्यायचावर्ष्यायच ॥ नमोमेघ्यायचविद्युत्यायचनमइन्द्रियाय चातप्यायच ॥ ४१ ॥ नमोवात्यायचरेष्म्यायचनमोवास्तव्यायचवास्तुपा

यच ॥ ४२ ॥ षट्सहस्रंपुरश्चर्य्याग्रहेणाधिष्ठितोरविः ॥ अभिमन्त्रणमेतेन तेनतोयंविमुञ्चति ॥ ४३ ॥ नमःसोमायचरुद्रायचनमस्ताम्रायचारुणायच ॥ नमःशङ्गवेचपशुपतयेचनमउग्रायचभीमायच ॥ ४४ ॥ नमोअग्रेवधायच दूरेवधायचनमोहन्त्रेचहनीयसेच ॥ नमोवृक्षेभ्योहरिकेशेभ्योनमस्ताराय ॥ ४५ ॥ नमःशम्भवायचमयोभवायचनमःशङ्करायचमयस्करायच ॥ नमःशि वायचशिवतरायच ॥ ४६ ॥ पुरश्चर्य्यायुतमिताजपेदष्टोत्तरंशतम् ॥ त्रिका लंभस्मतोयञ्चभक्षयेल्लापयेत्तथा ॥ ४७ ॥ मासत्रयाद्राजयक्ष्माकिलातश्चि त्रमब्दतः ॥ नश्यत्येवभवेद्दिव्योरोगःक्षुद्रोदिनत्रयात् ॥ ४८ ॥ नमस्तीर्थ्याय चकूल्यायचनमःपार्य्यायचावार्य्यायच ॥ नमःप्रतरणायचोत्तरणायचनमआ तार्य्यायचाध्मानायच ॥ ४९ ॥ नमःशष्पायचफेन्यायचनमःसिकत्यायच प्रवाह्यायच ॥ ५० ॥ षट्सहस्रंपुरश्चर्य्याषण्मासंतीर्थगोजपेत् ॥ यथोक्तं तत्तीर्थफलंलभतेचेहजन्मनि ॥ ५१ ॥ नमइरिण्यायचप्रपथ्यायचनमःकिंशि शिलायचक्षयणायच ॥ नमःकपर्दिनेचपुलस्तयेच ॥ ५२ ॥ नमोगोष्ठ्या यचगृह्यायचनमस्तल्पायचगेह्यायच ॥ नमःकाट्यायचगह्वरेष्ठायचनमोह्रद य्यायचनिवेष्प्यायच ॥ ५३ ॥ नमःपांसव्यायचरजस्यायचनमःशुष्काय चहरित्यायच ॥ नमोलोप्यायचोल्प्यायच ॥ ५४ ॥ सहस्रनवकंतावत्पुरश्चर णमुच्यते ॥ धातुवादोराजसश्चसिध्यत्येतत्प्रसादतः ॥ ५५ ॥ अत्रास्तिपरिशे षस्यानुवाकोप्येकएवहि ॥ रजस्यायचएतस्यनमोन्तस्याग्रतःपठेत् ॥ ५६ ॥ नमोनेदिष्ठायचकुशाङ्गायचनमःपरायचपरतरायच ॥ नमःपरमायचधूमायच नमोहरायचतारायच ॥ ५७ ॥ नमोवामनायचहरिण्यायचनमःशिवायच हरिकेशायच ॥ ५८ ॥ सहस्राष्टकमेतस्यपुरश्चरणमुच्यते ॥ बालग्रहाविन श्यन्तिबर्हिषोदकमार्जनात् ॥ ५९ ॥ नमऊर्व्यायचसूर्य्यायचनमःपर्णायचपर्ण शदायच ॥ नमउद्गुरमाणायचाभिघ्नतेचनमआखिदतेचप्रखिदतेच ॥ ६० ॥ अस्यनवसहस्राणांपुरश्चरणमुच्यते ॥ अभिमन्त्र्यजलंदेयंशोकशान्त्यै तुशोकिने ॥ ६१ ॥ नमोवःकिरिकेभ्यस्सर्वत्रदेवानांहृदयेभ्यइति ॥ परि शिष्टैतदत्रप्रयोगेष्वपियोजयेत् ॥ ६२ ॥ तिलहोमेनायुतेनकार्य्यपलसह

सकम् ॥ प्रतिष्ठाञ्चैवभूपालात्प्राप्नुयाद्वर्षमध्यतः ॥ ६३ ॥ हुनेद्गोशकृत्स एडानिचैकादशसहस्रकम् ॥ घृताक्तानिप्रदातव्यागावएकादशैवहि ॥ ६४ ॥ पुरश्चरणपूर्वन्तुलक्षैकंतिलतण्डुलान् ॥ योहुनेत्तस्यगेहेतुराजलक्ष्मीःस्वयंव सेत् ॥ ६५ ॥ एवंचतिलधान्याभ्यांहोमाल्लक्ष्मीःस्थिराभवेत् ॥ शतपुष्पम यींकृत्वाप्रतिमांराजरूपकाम् ॥ ६६ ॥ सहस्रंजुहुयाद्राजावशोवश्यंप्रजाय ते ॥ पद्मोत्पलानांलक्षन्तुहुत्वाभूपश्रियंलभेत् ॥ ६७ ॥ चणकप्रतिमालक्षं होमयेद्गुग्गुलोर्वटीः ॥ स्मृतसामन्तराज्यंसप्राप्नोत्येवनचान्यथा ॥ ६८ ॥ हुनेद्बिल्वसमिद्भिस्तुदक्षिणामूर्त्तिसन्निधौ ॥ लक्षमेकंतदाराष्ट्रंसामन्तस्यलभे दध्रुवम् ॥ ६९ ॥ महाचतुष्पथेस्थाप्यंलिङ्गंवल्मीकमृद्भवम् ॥ स्नापयेत्पञ्चग व्येनरुद्राध्यायेनमन्त्रयेत् ॥ ७० ॥ मानस्तोकेनमन्त्रेणचाभिषिञ्चेन्निवेद्यक म् ॥ सघृतंपायसंदद्याद्भक्तेभ्यश्चतथाबलिम् ॥ ७१ ॥ एवंमासत्रयंकृत्वामह दैश्वर्य्यमाप्नुयात् ॥ पलंचार्धपलंवापिदक्षिणामूर्त्तिसन्निधौ ॥ ७२ ॥ श्वेता म्बरांचूर्णयित्वास्थापयेत्ताम्रपात्रके ॥ आलोड्यकपिलाज्येनप्रदीपिन्याभिम न्त्रितम् ॥ ७३ ॥ सहस्राष्टकमेतेनमन्त्रेणप्रपिवेदथ ॥ भवेत्तस्याप्रतिहतंवा क्यंसर्वत्रनिश्चितम् ॥ ७४ ॥ उदुम्बर्य्याश्चसमिधोघृताक्ताश्चायुतंहुनेत् ॥ स्वामीवहुगवांसस्यात्क्षीयन्तेनास्यधेनवः ॥७५॥ बिल्वानांसमिधश्चैवहुनेद ष्टसहस्रकम् ॥ सुवर्णाष्टकमाप्नोतिअसिद्धोरजताष्टकम् ॥ ७६ ॥ बिल्वाभावे त्वामलकंतदभावेउदुम्बरम् ॥ तस्याभावेहैमवतीतदभावेविभीतकम् ॥ ७७ ॥ श्रीखण्डगोघृताक्तानांपद्मानांलक्षमेककम् ॥ हुनेद्यस्तस्यलक्ष्मीस्तुस्वयमेवोप तिष्ठते ॥ ७८ ॥ द्रापेअन्धसस्पतेदरिद्रनीललोहित ॥ एषांपुरुषाणामेषांपशू नांमाभेर्मारोङ्मोचनःकिञ्चनाममत् ॥ ७९ ॥ अनेनजुहुयादाज्यमयुतावधि सङ्ख्यया ॥ अक्षय्यान्यस्यवासांसिभवन्तिचतथातथा ॥ ८० ॥ यातेरुद्रशि वातनूःशिवाविश्वाहाभेषजी ॥ शिवारुद्रस्यभेषजीतयानोमृडजीवसे ॥ उर्णा ग्रश्चाजीवदवेस्तन्तूंविहायच ॥ ८१ ॥ एकादशसरंकुर्य्यात्सूत्रमेकैकसूत्रकम् ॥ सहस्रंसम्प्रमन्त्र्याथैकादशग्रन्थयस्स्मृताः ॥ ८२ ॥ एवंसम्पूज्यतंरज्जुंधूपंद त्वाचबन्धयेत् ॥ वामहस्तेतुगर्भिण्यापुत्रंसासुखतःसुवेत् ॥ ८३ ॥ दक्षेबाल

कहस्तेतुसुखंतिष्ठतिबालकः ॥ बन्धयेद्यादिसूत्रन्तुमन्त्रेणैवाभिमन्त्रितम् ॥ ८४ ॥ धनिकोबाहुमूलेवाकण्ठेवाधारयेदिदम् ॥ कदाचिदुत्तमर्णस्यभयन्त स्यनजायते ॥ ८५ ॥ क्षमार्थंरुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतिम् ॥ यथानःशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टंग्रामेअस्मिन्ननातुरम् ॥ ८६ ॥ अष्टोत्तर सहस्रन्तुप्रत्यहंजुहुयात्तिलान् ॥ अयाचितंधनन्तेनलोकेभ्यउपलभ्यते ॥८७॥ यस्तुदूर्वाप्रवालानांघृताक्तमयुतंहुनेत् ॥ महाज्वरोपघातेपिमृतकल्पःसजीव ति ॥ ८८ ॥ माक्षिकंपायसाज्याभ्यामयुतंजुहुयाच्छुचिः ॥ महाग्रहज्वरादि भ्योभिचाराच्चप्रमुच्यते ॥८९॥ वैकङ्कतानामयुतंसमिधाञ्चघृतैर्हुनेत् ॥ ज्वरादि कभवापीडासद्यएवविनश्यति ॥ ९० ॥ द्रव्याद्यर्थंयदाकश्चिन्मृदुभिरभिरूप्य ते ॥ तदातुपान्प्रजुहुयादयुतंसुखमेधते ॥ ९१ ॥ वैकङ्कताश्चसमिधउदुम्बर्य्या स्तथातिलान् ॥ अनेनजुहुयाल्लक्षंसर्वशक्तिकरंस्मृतम् ॥ ९२ ॥ गवाश्वान्यप शूनांवाप्युपघातेतुतत्स्थले ॥ अग्निंसंस्थाप्यजुहुयाद्वैकङ्कत्योघृतप्लुताः ॥९३॥ अयुतंतस्यशान्तिःस्यात्पलाशानांतथायुतम् ॥ घृताक्तानांप्रजुहुयान्महाज्वर मुखाग्रहाः ॥ ९४ ॥ राक्षसाभूतवेतालाःप्रेताश्चापिपिशाचकाः ॥ जनंवापिग जंवाश्वंमुक्त्वागच्छन्तिदूरतः ॥ ९५ ॥ जनानांजननंयस्मिन्गेहेभवतिसूति का ॥ मरणंवाथहानिर्वातत्रशान्तिरुदीर्य्यते ॥ ९६ ॥ घृताक्तानांतिलाना न्तुअयुतंजुहुयाद्द्विजः ॥ तस्मिन्देशेमहामारीव्याघ्रादीनांभयन्नवा ॥ ९७ ॥ देवानांक्षोभनंयत्रतत्रशान्तिंवदाम्यहम् ॥ पुरस्यमध्यभागेतुवह्निस्थापनमा चरेत् ॥ ९८ ॥ चतुर्दिक्षुचसन्नद्धागुप्ताश्चत्वारएवहि ॥ नराःस्थाप्यास्ततःक र्म्मसावधानःसमाचरेत् ॥ ९९ ॥ अष्टोत्तरसहस्रन्तुघृताक्ताञ्जुहुयात्तिलान् ॥ ततोर्धरात्रसमयेत्वोदनंसघृतन्तिलान् ॥ ३०० ॥ पिष्टंमाषौदनञ्चापिकृशरंपर मान्नकम् ॥ सुभोजनपदेदद्यात्स्थानेस्थानेततोबलिम् ॥ १ ॥ पलाशपत्रेरु द्रेभ्योरक्षोभ्यस्तदनन्तरम् ॥ कुर्य्यादेवंपक्षमेकंसर्वोपद्रवनाशनम् ॥ २ ॥ मृडानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ॥ यच्छंचयोश्चमनुराय जेपितातदस्यामततोवरुद्रप्रणीतौ ॥ ३ ॥ सहस्रन्तुजपेत्तोयेतीरेसम्पूजये च्छिवम् ॥ यावद्दूरेभवेदिष्टंत्रिदिनार्वाग्भिलिष्यति ॥ ४ ॥ मानोमहान्तमु

तमानोअर्भकंमानउक्षन्तमुतमानउक्षितम् ॥ मानोवधीःपितरंमोतमातरंमा
नःप्रियास्तनुवोरुद्ररीरिषः ॥ ५ ॥ परिजनस्यबालानामारोग्यार्थन्तिलान्हु
नेत् ॥ अयुतंशीतलादिभ्यआरोग्यंजायतेक्षणात् ॥ ६ ॥ [1]मानस्तोकंमहान्त
ञ्चसर्वतन्त्रेषुगोपितम् ॥ कथयिष्यामिमुनयेदेवानांकार्य्यसिद्धये ॥ ७ ॥ अ
तिकृच्छ्रेणकृच्छ्रेणतथाचान्द्रायणेनवा ॥ आदौसंशोध्यचात्मानंपूतकायोज
पञ्चरेत् ॥ ८ ॥ जपन्नेतत्तुभुञ्जीतशाकंवायावकंपयः ॥ भिक्षाञ्चाज्यञ्जपस्तस्यभ
वेदयुतसंख्यकः ॥ ९ ॥ सहस्रमात्रेमन्त्रस्यप्रयोगार्होभवेन्मनुः ॥ प्रयोगान्तेत्व
होरात्रञ्जपःकार्य्योनिरन्तरम् ॥ १० ॥ तद्दशांशेनहोतव्याओदुम्बर्य्योघृताप्लु
ताः ॥ महाव्याहृतिभिःपश्चात्तावदेवघृतंहुनेत् ॥ ११ ॥ संस्रावभागंसंप्राश्यप्र
योगेनाक्षयंव्रजेत् ॥ पुनःकर्म्मप्रकुर्वीतप्रायश्चित्तंपुनःपुनः ॥ १२ ॥ स्नायाच्च
तिलतैलेनसप्तधामन्त्रितेनच ॥ मारणादिप्रयोगाणाम्भवेत्पातकमोचनम् ॥
१३ ॥ ब्रह्मवर्चसकामस्तुहुनेदष्टसहस्रकम् ॥ घृताक्तानान्तुसमिधाञ्चौषध्यःसर्व
कर्म्मसु ॥ १४ ॥ पद्मानान्तुघृताक्तानान्दशरात्रमुपोषितः ॥ अयुतंजुहुयाल्ल
क्ष्मीकामोवाशिवदर्शनात् ॥ १५ ॥ अपामार्गोद्भवानाञ्चतण्डुलानान्तथायु
तम् ॥ हुनेद्वापिघृताक्तानांसर्वार्थस्यसमृद्धये ॥ १६ ॥ गोसहस्रप्रलाभायजु
हुयाद्वोपयोथवा ॥ आज्याहुतीनाञ्चतथासहस्राष्टकमादरात् ॥ १७ ॥ उपो
षितोदशाहानिहुनेद्बिल्वफलानिच ॥ अयुतञ्चघृताक्तानिलभेदष्टसहस्रकम् ॥
१८ ॥ सिद्धेमन्त्रेसुवर्णानित्वसिद्धेरजतानिच ॥ भार्य्यामुक्तीमेभवतुएतदर्थे
हुनेच्छुचिः ॥ १९ ॥ जातीपुष्पाणिचाज्येनमधुनासंयुतानिच ॥ कपिलातु
यदासूतावृषभंवासितापिगौः ॥ २० ॥ आज्यदुग्धंगृहीत्वास्याःश्रपयेत्तेनवैच
रुम् ॥ अष्टोत्तरशतंहुत्वातथाचाष्टसहस्रकम् ॥ २१ ॥ मन्त्रयित्वाचरुन्तञ्चस
पत्नीकःप्रभक्षयेत् ॥ आयुष्मतोष्टपुत्रांश्चजनयेन्नात्रसंशयः ॥ २२ ॥ दूर्वा
प्रवालाञ्जुहुयाद्दधिक्षीरघृतान्वितान् ॥ आयुःकामोष्टसाहस्रंचिरायुर्ध्रुवसविन्द

---

१ मानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तःसदमित्वाहवामहे—यह मन्त्र और—मानोमहान्तमुतमानोअर्भकंमानउक्षन्तमुतमान उक्षितम् ॥ मानोवधीःपितरंमोतमातरंमानः प्रियास्तनुवोरुद्ररीरिषः ॥

ति॥ २३॥ दधिक्षौद्रघृताक्तानांपुष्पाणांकुशकाशयोः ॥ सहस्राण्यष्टजुहु यादिच्छेत्क्षुद्रान्यदापशून् ॥ २४ ॥ त्रिरात्रोपोषितोभूत्वागच्छेन्महाचतुष्प थे॥ कृत्वामूर्त्तिंगोमयेनतद्दैवतसम्मुखे ॥ २५ ॥ पूजयित्वाहुनेद्भूमौचा ष्टोत्तरसहस्रकम् ॥ कर्म्मणातेननृपतिर्भवेद्वश्योनसंशयः ॥ २६ ॥ सप्ताभि मन्त्रितन्तीक्ष्णंतैलंतेनकरद्वयम् ॥ सम्यक्कृस्पृष्टस्तेनस्पृष्टोयोयोसौवशगो भवेत् ॥ २७ ॥ ब्रह्मवर्चस्यकामस्तुदधिक्षौद्रघृतान्विताः ॥ विल्वस्यसमि धोहुत्वालक्षंतेजोनिधिर्भवेत् ॥ २८ ॥ उडुम्बर्य्याश्चजुहुयाद्दधिक्षौद्रघृता न्विताः ॥ समिधोष्टसहस्राणिशत्रोरुच्चाटनंभवेत् ॥ २९ ॥ सर्वोपद्रवनाशार्थं गृहीत्वासप्तशर्क्कराः ॥ मन्त्रयित्वासहस्रंतुचतुर्दिक्षुक्षिपेत्ततः ॥ ३० ॥ ऊर्ध्वा धस्तस्यनिकटेसर्वोपद्रवनाशनम् ॥ एवंकृत्वाव्रजन्मार्गेचौरव्याघ्रभयंहरेत् ॥ ३१ ॥ आरेतेगोघ्नउतपूरुषघ्नेक्षयद्वीरायसुम्नमस्तेतेअस्तु॥ रक्षावनोअधिचेदं देवब्रूह्यथोचनःशर्म्मयच्छद्विवर्हाः॥ ३२ ॥ स्तुहिश्रुतंगर्तसदंयुवानंभवन्तंभी मसुपहेल्नुमुग्र ॥ मृडाजरित्रेरुद्रस्तवानोअन्यन्तेअस्मन्निवयन्तुसेना ॥ ३३ ॥ परिणोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनु ष्वमीढ्वस्तोकायतनयायमृड॥ ३४ ॥ मीढुष्टमशिवतमशिवोनःसुमनाभव॥ परमेवृक्षआयुधंनिधायकृत्तिंवसानःआचरपिनाकंबिभ्रदागहि ॥ ३५ ॥ महा भयेसमुत्पन्नेव्याघ्रचौरभयादिषु ॥ चतस्रर्चस्स्मरेच्चित्तेतद्भयस्यविनाशिकाः॥ ३६ ॥ विकिरिन्द्रविलोहितनमस्तेअस्तुभगवः ॥ यास्तेसहस्रंहेतयोन्यम सन्निवयन्तुताः ॥ ३७ ॥ जपेदयुतसंख्याकंविरोधेतुमहाजनैः ॥ राजाचवश मायातिप्रीतिश्चापिप्रजायते ॥ ३८ ॥ सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥ तासामीशानोभगवःपराचीनामुखाकृधि ॥ ३९ ॥ यदातुमहतोमृत्युर्नृपतेर्वा उपद्रवः ॥ तदाहोमंप्रकुर्वीतवैकङ्कतसमिद्वरैः ॥ ४० ॥ औदुम्बरीभिःशाल्म ल्यातिलैर्वापियवैरपि ॥ प्रत्येकमेकादशधाचाभिमन्त्र्यततोवनिम्॥ ४१ ॥ कृशरंपायसंवापिततोभूतानिचार्चयेत् ॥ दद्याद्विडालमांसस्यबलिंनश्यन्त्यु पद्रवाः ॥ ४२ ॥ सहस्राणिसहस्रशोयेरुद्राअधिभूम्याम् ॥ तेषांसहस्रयोजने वधन्वानितन्मसि ॥ ४३ ॥ पठेयुरन्यशाखीयावाक्यान्तेपरिशिष्टकम् ॥ अ

स्मिन्महत्यर्णवेतंरक्षोभवाअधितथा ॥ ४४ ॥ नीलग्रीवाःशितिकण्ठाःशर्वा अधःक्ष्माचराः ॥ तेषाᳫंसहस्रयोजनेवधन्वानितन्मसि ॥ ४५ ॥ नीलग्रीवाः शितिकण्ठादिवᳫंरुद्राउपश्रिताः ॥ तेषाᳫं० ॥ ४६ ॥ येवृक्षेषुशष्पिञ्जरानी लग्रीवाविलोहिताः ॥ तेषाᳫं० ॥ ४७ ॥ येभूतानामधिपतयोविशिखासःक पर्दिनः ॥ तेषाᳫं० ॥ येअन्नेषुविविध्यन्तिपात्रेषुपिबतोजनान् ॥ तेषाᳫं०॥ ४८ ॥ येपथांपथिरक्षयऐलबृदाआयुर्युधः ॥ तेषाᳫं० ॥ ४९ ॥ येतीर्थानिप्र चरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषाᳫं० ॥ ५० ॥ यएतावन्तश्चभूयाᳫंस श्चदिशोरुद्रावितस्थिरे ॥ तेषाᳫं० ॥ ५१ ॥ जपेदेतानवर्ऋचःपरिशिष्टसम न्विताः ॥ भवन्तिभोगदास्तेनहीनाज्ञानप्रदामताः ॥ ५२ ॥ नमोस्तुरुद्रेभ्योये पृथिव्यांयेषामन्नमिषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीची र्दशोर्ध्वाः ॥ तेभ्योनमोस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमे षांजम्भेदध्मः ॥ ५३ ॥ नमोस्तुरुद्रेभ्योयेन्तरिक्षेयेषांवर्षमिषवः ॥ तेभ्योदश प्राची० ॥ ५४ ॥ नमोस्तुरुद्रेभ्योयेदिवियेषांवर्षमिषवः ॥ तेभ्योदशप्राची०॥ ५५ ॥ मध्याह्नेचाज्यंजुहुयादेभिर्मन्त्रैःसकण्टकम् ॥ प्रत्यङ्गिरायामन्त्रस्यकर्म्म कुर्य्यादयंमनुः ॥ ५६ ॥ मृत्युञ्जयेनमन्त्रेणनमस्तेऽस्यसमापनम् ॥ तैत्तिरी येन्यशाखासुपरिशिष्टानिसप्तच ॥ ५७ ॥ सद्योजातादिकाः[1]पञ्चत्र्यम्बकंचय जामहे ॥ षडर्चएतास्त्वरितरुद्रनामकमुच्यते ॥ ५८ ॥ अग्नाविद्यरसजोप सेमावर्द्धतुचाङ्गिरःशुभैर्वाजैर्निरगात्तम् ॥ ५९ ॥ नित्यंसन्ध्यावन्दनान्तेनि त्यन्कालत्रयेजपेत् ॥ अष्टोत्तरसहस्रन्तुपरमासंसत्यवाग्भवेत् ॥ ६० ॥ वाज श्चमेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमे स्वरश्चमेश्लो कश्चमेश्रवश्चमेश्रुतिश्चमेज्योतिश्चमेस्वश्चमेयज्ञेनकल्पन्ताम् ॥ ६१ ॥ प्राणश्चमेपानश्चमेव्यानश्चमेऽसुश्चमेचित्तंचमे अधीतंचमे वाक्चमेमन श्चमेचक्षुश्चमेश्रोत्रंचमेदक्षश्चमेबलंचमेयज्ञेनकल्पन्ताम् ॥ ६२ ॥ ओज श्चमेआत्माचमेसहश्चमेतनुश्चमे शर्म्मचमेवर्म्मचमेऽङ्गानिचमेऽस्थीनिचमेप रूᳫंषिचमेशरीराणिचमेआयुश्चमेजराचमेयज्ञेनकल्पन्ताम् ॥ ६३ ॥

[1] सद्योजातम्प्रपद्यामि सद्योजातायवैनमः इत्यादिपाँचऋचापीछे कईजगहमें लिखीगईहैं ॥

ज्यैष्ठ्यंचमे आधिपत्यंचमेमन्युश्चमेमान्यश्चमे ऐश्वर्य्यंचमेमेधाचमेमहिमाच मेवरिमाचमेप्रथिमाचमेवर्षिमाचमेद्रघिमाचमे वृद्धंचमे वृद्धिश्चमे यज्ञेनकल्पन्ताम् ॥ ६४ ॥ सत्यंचमेश्रद्धाचमेभगश्चमेधनंचमेविश्वञ्चमेमहश्चमेक्रीडाचमेमोदश्चमेजातञ्चमेजनिष्यमाणञ्चमेसूक्तञ्चमेसुकृतंचमेयज्ञेनकल्पन्ताम् ॥ ऋतञ्चमेमृतञ्चमे पक्ष्मंचमेनामयंचमेजीवातुश्चमेदीर्घायुत्वंचमेनमित्रंचमेभयंचमेसुखञ्चमेशयनञ्चमेसूष्वाश्चमेयज्ञेनकल्पन्ताम् ॥ ६५ ॥ यन्ताचमेधर्त्ताचमे क्षेमश्चमेधृतिश्चमे विश्वञ्चमेमहश्चमे संविच्चमेज्ञानञ्चमे सूश्चमेप्रसूश्चमेसीरञ्चमेलयश्चमेयज्ञेनकल्पन्ताम् ॥ ६६ ॥ शञ्चमे मयश्चमेप्रियंचमेनुकामश्चमे कामश्चमे सौमनसश्चमे भगश्चमे द्रविणञ्चमे भद्रञ्चमेश्रेयश्चमे वसीयश्चमे यशश्चमे यज्ञेनकल्पन्ताम् ॥ ६७ ॥ ऊर्क्चमे सूनृताचमे रसश्चमे घृतंचमे मधुचमे सग्धिश्चमे सपीतिश्चमेकृषिश्चमे वृष्टिश्चमे जैत्रञ्चमे औद्भिद्यञ्चमे यज्ञेनकल्पन्ताम् ॥ ६८ ॥ रयिश्चमेरायश्चमेपुष्टञ्चमे पुष्टिश्चमे विभुचमेप्रभुचमे पूर्णंचमेपूर्णतरंचमे कुयवञ्चमे क्षितञ्चमेन्नञ्चमेक्षुच्चमे यज्ञेनकल्पन्ताम् ॥ ६९ ॥ वित्तञ्चमेवेद्यञ्चमे भूतञ्चमे भविष्यच्चमेसुगञ्चमेसुपथ्यञ्चमे ऋद्धिश्चमेक्लृप्तञ्चमे क्लृप्तिश्चमे मतिश्चमे सुमतिश्चमेयज्ञेनकल्पन्ताम् ॥ ७० ॥ व्रीहयश्चमेयवाश्चमे माषाश्चमेतिलाश्चमे मुद्गाश्चमे खल्वाश्चमे प्रियङ्गवश्चमेणवश्चमेश्यामाकाश्चमे नीवाराश्चमेगोधूमाश्चमेमसूराश्चमेयज्ञेनकल्पन्ताम् ॥ ७१ ॥ अश्माचमेमृत्तिकाचमे गिरयश्चमे पर्वताश्चमे सिकताश्चमे वनस्पतयश्चमे हिरण्यञ्चमेऽयश्चमे ताम्रञ्चमेलोहञ्चमेसीसञ्चमे त्रपुचमेयज्ञेनकल्पन्ताम् ॥ ७२ ॥ अग्निश्चमेआपश्चमे वीरुधश्चमओषधयश्चमे कृष्टपच्याश्चमेऽकृष्टपच्याश्चमे ग्राम्याश्चमे पशवआरण्याश्चमेवित्तञ्चमे वित्तिश्चमे भूतञ्चमे भूतिश्चमे यज्ञेनकल्पन्ताम् ॥ ७३ ॥ वसुचमे वसतिश्चमे कर्म्मचमे शक्तिश्चमेऽर्थश्चम एमश्चम इत्याचमे गतिश्चमे यज्ञेनकल्पन्ताम् ॥ ७४ ॥ अग्निश्चमइन्द्रश्चमेसोमश्चमइन्द्रश्चमेसविताचमइन्द्रश्चमे सरस्वतीचमइन्द्रश्चमेपूषाचमइन्द्रश्चमेबृहस्पतिश्चमइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥७५॥ मित्रश्चमइन्द्रश्चमेवरुणश्चमइन्द्रश्च

मेधाताचमइन्द्रश्चमेत्वष्टाचमइन्द्रश्चमेमरुतश्चमइन्द्रश्चमे विश्वेचमेदेवाइन्द्र
श्चमेयज्ञेनकल्पन्ताम् ॥ ७६ ॥ पृथिवीचमइन्द्रश्चमेऽन्तरिक्षञ्चमइन्द्रश्चमे
द्यौश्चमइन्द्रश्चमे समाश्चमइन्द्रश्चमे नक्षत्राणिचमइन्द्रश्चमे दिशश्चमइन्द्र
श्चमेयज्ञेनकल्पन्ताम् ॥ ७७ ॥ अꣳशुश्चमेरश्मिश्चमेदाभ्यश्चमेधिपति
श्चमउपाꣳशुश्चमेन्तर्यामश्चमऐन्द्रवायवश्चमे मैत्रावरुणश्चम आश्विन
श्चमेप्रतिप्रस्थानश्चमेशुक्रश्चमेमन्थीचमेयज्ञेनकल्पन्ताम् ॥ ७८ ॥ आग्रयण
श्चमे वैश्वदेवश्चमे ध्रुवश्चमेवैश्वानरश्चमे ऐन्द्राग्निश्चमे महावैश्वदेवश्च
मेमरुत्वतीयाश्चमेनिष्केवल्यश्चमेसावित्रश्चमेसारस्वतश्चमेपात्नीवतश्चमे
हारियोजनश्चमेयज्ञेनकल्पन्ताम् ॥ ७९ ॥ स्रुचश्चमेचमसाश्चमेवायव्या
निचमेद्रोणकलशश्चमेग्रावाणश्चमे धिषवणेचमेपूतभृच्चमआधवनीयश्चमे
वेदिश्चमेबर्हिश्चमेऽवभृथश्चमे स्वगाकारश्चमेयज्ञेनकल्पन्ताम् ॥ ८० ॥
अग्निश्चमे घर्म्मश्चमेऽर्कश्चमे सूर्य्यश्चमे प्राणश्चमेऽश्वमेधश्चमेपृथिवीच
मेऽदितिश्चमे दितिश्चमे द्यौश्चमे शक्वरीरंगुलयोदिशश्चमे यज्ञेनकल्पन्ता
म् ॥ ८१ ॥ ऋक्चमे सामचमेस्तोमश्चमे यजुश्चमेदीक्षाचमे तपश्चमेऋ
तवश्चमेसंवत्सरश्चमेहोरात्रेऊर्वष्ठीवेबृहद्रथन्तरेचमेयज्ञेनकल्पन्ताम् ॥ ८२ ॥
गर्भाश्चमे वत्साश्चमे त्र्याविश्चमे त्र्यवीचमे दित्यवाट्चमे दित्यौहीचमे प
ञ्चाविश्चमे पञ्चावीचमे त्रिवत्सश्चमे त्रिवत्साचमे तुर्य्यवाट्चमे तुर्य्यौहीचमे
यज्ञेनकल्पन्ताम् ॥ ८३ ॥ पुष्ठवाट्चमे पुष्ठौहीचमे उक्षाचमे वशाचमऋष
भश्चमे वेहच्चमेऽनड्वांश्चमेधेनुश्चमे आयुर्यज्ञेनकल्पन्ताम् ॥ ८४ ॥ एकाच
मेतिस्रश्चमे पञ्चचमेसप्तचमेनवचमे एकादशचमे त्रयोदशचमे पञ्चदशचमे
सप्तदशचमे नवदशचमे एकविꣳशतिश्चमे त्रयोविꣳशतिश्चमे पञ्चविꣳ
शतिश्चमे सप्तविꣳशतिश्चमे नवविꣳशतिश्चमे एकत्रिꣳशच्चमेत्रयस्त्रिꣳ
शच्चमे यज्ञेनकल्पन्ताम् ॥ ८५ ॥ चतस्रश्चमेऽष्टौचमे द्वादशचमे षोडशच
मे विꣳशतिश्चमे चतुर्विꣳशतिश्चमेऽष्टाविꣳशतिश्चमे द्वात्रिꣳशच्चमेषट्
त्रिꣳशच्चमे चत्वारिꣳशच्चमे चतुश्चत्वारिꣳशच्चमेऽष्टचत्वारिꣳशच्चमेयज्ञे
नकल्पन्ताम् ॥ ८६ ॥ वाजश्चप्रसवश्चापिजश्चक्रतुश्चमूर्द्धाचव्यश्नियश्चा

न्स्यायनश्चान्त्यश्चभौवनश्चभुवनश्चाधिपतिश्चयज्ञेनकल्पन्ताम् ॥ ८७ ॥
एतावान्रुद्रआख्यातःसर्वकामफलप्रदः ॥ विस्वरोवाक्षरःपाठोरुद्रस्तोत्रंतुशा
न्तये ॥ ८८ ॥ इडादेवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानिशꣳसिषद्विश्वेदे
वाःसूक्तवाचःपृथिविमातर्मामाहिꣳसीर्मधुमनिष्येमधुजनिष्येमधुवक्ष्यामि म
धुवदिष्यामि मधुमतीन्देवेभ्योवाचमुद्यासꣳशुश्रूषेण्यां मनुष्येभ्यस्तंमादे
वाअवन्तुशोभायैपितरोनुमदन्तु ॥ ॐ शान्तिःशान्तिःशान्तिः ॥ ८९ ॥
परंशिष्टंजपेच्चैवएषरुद्रविधिःस्मृतः ॥ अभिषिञ्चेत्पौष्टिकार्थंशान्तिकामस्तुहो
मयेत् ॥ ९० ॥ सिद्धिकामोजपेदेवमक्षराणांतुसङ्ख्यया ॥ इहैवबहुरुद्राढ्यः
शिवएवनचापरः ॥ ९१ ॥ पदतुल्यावृत्तिजपाद्विज्ञसिद्धिर्जायते ॥ वाक्य
तुल्यावृत्तिजपात्सर्वपापंविनश्यति ॥ ९२ ॥ ऋचांसङ्ख्याजपात्सर्वंक्षुद्रपापं
विनश्यति ॥ अनुवाकमिमंजप्त्वानिष्टग्रहरुजोजयेत् ॥ ९३ ॥ देवीसूक्तं
प्रवक्ष्यामिसर्वाभीष्टप्रदायकम् ॥ अशक्तःप्रोच्यतेरुद्रेविनायंतत्पुरःपठेत् ॥
९४ ॥ अथदेवीसूक्तम् ॥ अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदे
वैः ॥ अहंमित्रावरुणोभाविभर्म्यहमिन्द्राग्नीअहमश्विनोभा ॥ ९५ ॥ अहं
सोममाहनसंविभर्म्यहंत्वष्टारमुतपूषणंभगम् ॥ अहंदधामिद्रविणंहविष्मते
सुप्राव्ये यजमानायसुन्वते ॥ ९६ ॥ अहंराष्ट्रीसङ्गमनीवसूनांचिकितुषी
प्रथमायज्ञियानाम् ॥ तांमादेवाव्यदधुःपुरुत्राभूरिस्थात्रांभूर्य्यावेशयन्तीम् ॥
९७ ॥ मयासोअन्नमत्तियोविपश्यतियःप्राणितियईंशृणोत्युक्तम् ॥ अयन्त
वोमान्तउपक्षियन्तिश्रुधिश्रुतश्रद्धिवंतेवदामि ॥ ९८ ॥ अहमेवस्वयमि
दंवदामिजुष्टं देवेभिरुतमानुषेभिःयंकामयेतन्तमुग्रंकृणोमितंब्रह्माणंतमृषिंतं
सुमेधाम् ॥ ९९ ॥ अहंरुद्रायधउरातनोमिब्रह्मद्विषेशरवेहन्तवाउ ॥ अहंजना
यसमदंकृणोम्यहंद्यावापृथिवीआविवेश ॥ १०० ॥ अहंसुवेपितरमस्यमू
र्धन्ममयोनिरप्स्वन्तःसमुद्रे ॥ ततोवितिष्ठेभुवनानुविश्वोतामूंद्यांवर्ष्मणो
स्पृशामि ॥ १ ॥ अहमेववातइवप्रवाम्यारभमाणाभुवनानिविश्वा ॥
परोदिवापरएनापृथिव्यैतावतीमहिनासंबभूव ॥ २ ॥ देवीसूक्तमिदंप्रोक्तंस
र्वसूक्तोत्तमोत्तमम् ॥ आधारोयंमन्त्रसिद्धेर्द्विजानांपरिकीर्तितः ॥ ३ ॥

अथविष्णोप्रवक्ष्यामिसूक्तंगणपतेश्चयत् ॥ यत्साधनंविनासर्वेमन्त्राविघ्नै
स्तुविघ्निताः ॥ ४ ॥ तस्मादादौगणेशानंप्रसाद्यपुनराचरेत् ॥ देव
तासाधनंतत्तुनिर्विघ्नेनप्रजायते ॥ ५ ॥ निद्रालस्यंक्षुधाक्रोधोलोभोमो
होमनोभवः ॥ प्रमादोरोगइत्याद्यामन्त्रविघ्नकराःस्मृताः ॥ ६ ॥ विधा
नपूर्व्वकंतस्मादत्रसूक्तंतदुच्यते ॥ यज्ज्ञापकानांकार्य्याणिस्युरप्रतिहतानि
च ॥ ७ ॥ अस्यचद्वादशर्चस्यगणेशस्यमहात्मनः ॥ ऋषिर्गृत्समद
दोदेवोगणपःपरिकीर्तितः ॥ ८ ॥ आद्यानांत्रिऋचानांचच्छन्दास्त्रिष्टु
प्प्रकीर्तितम् ॥ उत्तराणांनवानाञ्चगायत्रंछन्दउच्यते ॥ ९ ॥ महागणप
तिश्चास्यदैवतंपरिकीर्तितम् ॥ विनियोगःकीर्त्तनीयोयथाकार्य्यानुसारतः ॥
१० ॥ गणानान्त्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमम् ॥ ज्येष्ठ
राजंब्रह्मणांब्रह्मणस्पतेआनःशृण्वन्नूतिभिःसीदसादनम् ॥ ११ ॥ निषुसी
दगणपतेगणेषुत्वामाहुर्विप्रतमङ्कवीनाम् ॥ नऋतेत्वत्क्रियतेकिञ्चनारेमहा
मर्कंमघवञ्चित्रमर्च ॥ १२ ॥ त्वेपङ्गणंतवशङ्कादिहस्तंध्वतिव्रतंमाविदानन्ति
वारम् ॥ मयासुवोये ॥ १३ ॥ आतूनइन्द्रसुमन्तंचित्रंयामंसंगृभाय ॥ महाह
स्तीदक्षिणेन ॥ १४ ॥ विद्माहित्वातुविकूर्मिंतुविदेशन्तुवीमघम् ॥ तुवि
मात्रमवोभिः ॥ १५ ॥ नहित्वाशूरदेवानमर्तासोदित्सतम् ॥ भीमंगोवाद
यन्ते ॥ १६ ॥ एतोन्विन्द्रंस्तवामेशानंवस्वस्वराज्यम् ॥ नराधसार्थिषंनः ॥
१७ ॥ प्रस्तोपउपगासिषच्छ्रवत्सामगीयमानम् ॥ अभिराधस्यजुगुरत् ॥ १८ ॥
आनोभरव्यञ्जनंदक्षिणेनभिमध्यनप्रामृजद्वाइन्द्र ॥ मानोवसोर्निर्भाक् ॥ १९ ॥
उपक्रमस्याभरधृताधृष्णोजनानांयद्यशुष्ठरस्यवेदः ॥ २० ॥ इन्द्रयउनुतेअ
स्तिवोजोविप्रेभिस्तनित्वः ॥ अस्माभिस्तुतंसन्निहि ॥ २१ ॥ सयाजुसोव
जाअस्मभ्यंविश्वश्चन्द्राः ॥ बलेश्चमक्षुजरन्तम् ॥ २२ ॥[1]गणानांत्वानिषुसीद

---

[1] गणानांत्वेति अंगुष्ठाभ्यांनमः, निषुसीदेति तर्जनीभ्यांनमः, त्वेषंगणंतवशङ्कादिहस्तं इतिमध्यमाभ्यांनमः, आतूनइन्द्र सुमंतंइति अनामिकाभ्यांनमः, विद्माहित्वातुविकूर्मिमिति कनिष्ठिकाभ्यांनमः, नहित्वाशूरदेवाइति करतलकरपृष्ठाभ्यांनमः इसीरीति से हृदयादिन्यास भी करलेना और मन्त्र पूरे पूरे पढ़लेना जानने के लिये प्रतीक लिखदियाहै ॥

त्वेषंगणन्तंथैवच ॥ आतूनइन्द्रविज्ञहिनहित्वाशूरमेवच ॥ २३ ॥ अंगुष्ठाग्रंस मारभ्यकरपृष्ठादिषुन्यसेत् ॥ गणानांत्वेतिबहिश्चहृदयादिषडङ्गकम् ॥ २४ ॥ एवंन्यासद्वयंकृत्वाषड्भिश्चव्यापकंभवेत् ॥ ततोद्वादशऋग्भिस्तुन्यासमत्र समाचरेत् ॥ २५ ॥ मस्तकेचमुखेचैवनेत्रयोःकर्णयोस्तथा ॥ नसिकण्ठेहृ दिभुजेजठरेनाभिमध्यतः ॥ २६ ॥ गुल्फयोःपादयोश्चैवद्वादशर्चःपृथक्पृ थक् ॥ मन्त्रराजाक्षरैश्चैवतृतीयोन्यासएवच ॥ २७ ॥ ततःषडक्षरेणैवचतु र्थन्यासमाचरेत् ॥ दशर्चाभिश्चदिग्बन्धंपादेशिरसिचैककम् ॥ २८ ॥ एवंन्या सविधिंकृत्वासाङ्गावरणपूजनम् ॥ तन्त्रमन्त्रेणसम्पूज्यऋग्भिर्द्वादशभिस्त था ॥ २९ ॥ षोडशैरुपचारैस्तुसाङ्गपीठादिदैवतैः ॥ नैवेद्यैर्विविधाकारैर्मो दकैःसिद्धलड्डुकैः ॥ ३० ॥ पायसैःक्षीरखण्डैश्चतोषयेद्गणनायकम् ॥ इक्षु खण्डैरिक्षुरसैःकदलीपनसादिभिः ॥ ३१ ॥ नारिकेरैर्दाडिमैश्चअन्यैर्नाना विधैःफलैः ॥ सचन्द्रकैश्चताम्बूलैर्दक्षिणाभिःसमन्ततः ॥ ३२ ॥ पूजयि त्वातुमध्याह्नेततःसम्प्रारभेज्जपम् ॥ आदौजपेन्मन्त्रराजंवारद्वादशकंबुधः ॥ ३३ ॥ ततश्चऋग्द्वादशकंजपेत्सर्वमतन्द्रितः ॥ अन्तर्द्वादशपाठेतुमन्त्ररा जंपुनर्जपेत् ॥ ३४ ॥ एवंक्रमेणकर्त्तव्योवेदमन्त्रजपोहरे ॥ दिनेदिनेसदा कार्य्योजपःसंसिद्धिकारकः ॥ ३५ ॥ सूक्तमन्त्रजपेनाशुसर्वसिद्धिमवाप्नुया त् ॥ अथवावक्रतुण्डस्यजपआदौप्रजायते ॥ ३६ ॥ षड्विंशद्वारमावृत्त्याम ध्येसूक्तंगणेश्वरम् ॥ पुनःषड्विंशचावृत्त्यावक्रतुण्डःषडक्षरः ॥ ३७ ॥ एवंचसंयु तंकृत्वाद्वादशर्चमनुञ्जपेत् ॥ एवमष्टोत्तरशतंकृत्वासूक्तंजपंहरे ॥ ३८ ॥ एक विंशत्सहस्रंतुसूक्तस्योक्तापुरस्क्रिया ॥ जपाद्दशांशहोमस्तुपायसेनघृतेनच ॥ ३९ ॥ शर्करापञ्चखाद्यैश्चकुसुमैःकरवीरकैः ॥ बिल्वपत्रैरिक्षुदण्डैर्दाडिमैः कदलीफलैः ॥ ४० ॥ सोदकैर्लड्डुकैश्चैवघृतपक्वैर्मनोहरैः ॥ अलाभेसर्व द्रव्याणांजुहुयात्तिलसर्पिषा ॥ ४१ ॥ होमस्यदशमांशेनगोपयोभिश्चत र्प्पयेत् ॥ अथवेक्षुरसेनैवतदभावेगुडोदकम् ॥ ४२ ॥ तर्प्पणस्यदशांशेनमा

---

१ गणानांत्वाइत्यादि पूर्वोक्त बारह ऋचाओं से मस्तकादि मूलोक्तस्थानों में न्यास करे २ ॐवक्रतुण्डायहुम् इतिमन्त्रः ॥

र्ज्जयेत्क्षुभवारिभिः ॥ मार्जनस्यदशांशेनब्राह्मणान्भोजयेद्बहून् ॥४३॥ पाय सैःखण्डखाद्यैश्चमोदकैःसिद्धलड्डुकैः ॥ अपूपैर्मण्डकाद्यैश्चसघृतैःशर्करा न्वितैः ॥ ४४ ॥ सहकाररसैः[1]साज्यैस्तथाचकदलीफलैः ॥ एवंसिद्धेतुसूक्तेतुस फलंतन्निगद्यते ॥ ४५ ॥ महदैश्वर्य्यमतुलंप्रज्ञाविद्यायशोबलम् ॥ वाक्सिद्धिं समवाप्नोतिचान्तेब्रह्मपुरंव्रजेत् ॥ ४६ ॥ यद्यत्कार्य्यंसमुद्दिश्यक्रियतेसपुरोज पः ॥ तत्तद्गणपतेर्नूनंप्रसादात्सिध्यतिध्रुवम् ॥ ४७ ॥ बन्धनोच्चाटनेद्वेषेमारणे बन्धमोक्षणे ॥ वश्येवादेमहोत्पातेपरचक्रभयेतथा ॥ ४८ ॥ महारण्येरणेवैरि संकुलेसङ्कटेजपेत् ॥ बन्धनोच्चाटनेद्वेषेसर्षपैर्लोहसंयुतैः ॥ ४९ ॥ उलूककाक पक्षैश्चहोमोऽरण्येतुनिर्जने ॥ मारणेतुश्मशानस्थोरात्रौकुर्य्याज्जपंबुधः ॥ ५० ॥ तिलैर्भल्लाटपुष्पैश्च[2]राजिकालवणान्वितैः ॥ मेषीलोमान्वितैश्चैवहो मःस्यान्मारणेध्रुवम् ॥ ५१ ॥ श्मशानेचतथारात्रौजपंकुर्य्याद्विशेषतः ॥ आकर्षणार्थंसाध्यानामुन्मत्त[3]फलबीजकैः ॥ ५२ ॥ गृध्रपक्षैस्ततश्चार्कसुक्र दुग्धैर्हुनेत्ततः ॥ सप्तवासरपर्य्यन्तन्ततश्चाकर्षणंभवेत् ॥ ५३ ॥ वश्यार्थंचज पंकुर्य्याद्विशेषेणशिवालये ॥ सूर्य्यास्तमनमारभ्ययावत्सूर्य्योदयोभवेत् ॥ ५४ ॥ तावन्मूलंसम्पुटेनजपेद्भूतेत्रिरात्रके ॥ दिवाहोमःप्रकर्त्तव्योमधुपुष्पैः फलैस्तथा ॥ ५५ ॥ तथाचमालतीपत्रैर्घृतेनचसमन्वितैः ॥ रक्तचन्दनसंयुक्तै र्मोदकैःसघृतैस्तिलैः ॥ ५६ ॥ तर्पयेदिक्षुरसकैःसद्योवश्यकरंमतम् ॥ राजा नोराजपुत्राश्चराजकीयाश्चमन्त्रिणः ॥ ५७ ॥ ईश्वरोवशतांयातिमनुष्या णांतुकाकथा ॥ बन्धमोक्षायकर्त्तव्योजपोरात्रौशिवालये ॥ ५८ ॥ उपवा सव्रतोनित्यंब्रह्मचारीजितेन्द्रियः ॥ एकविंशतिसाहस्रंदिवाहोमःशिवालये ॥ ५९ ॥ पायसेनघृताक्तेनबन्धमोक्षोभवेद्ध्रुवम् ॥ सर्वसाधारणोहोमःप्रत्यर्चंहि विधानतः ॥६०॥ आदौद्वादशवारेणमन्त्रेणद्वादशाहुतीः ॥ पश्चान्मन्त्रवि भागेनप्रत्यर्चंजुहुयाद्बुधः ॥ ६१ ॥ अन्तेद्वादशवारन्तुहोमश्चमन्त्रराजतः ॥ एवमेवप्रकारेणसर्वसाधारणेजपे ॥ ६२ ॥ होमोगणेशसूक्तस्यसम्पुटस्यप्रजा यते ॥ एवंरुद्रविधानन्तुदेवीसूक्तंतथैवच ॥ ६३ ॥ विष्णोतुभ्यंनिगदितंय

१ आमकारस २ भिलावाँ की लकड़ी ३ धतूरके फल व बीज ॥

तोभेदोनआवयोः ॥ अतःपरन्तुतेचेच्छायत्तत्सम्प्रतिपृच्छ्यताम् ॥ ४६४ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे कलिमत्ययवेदमन्त्रप्रकाशोद्वादशः ॥ १२ ॥

---

श्रीदेव्युवाच ॥ अहोदुःखप्रदाः खेटाः प्रायः कलियुगेसदा ॥ तेषांतुवेदमार्गेणकीदृक्पूजामनुश्चकः ॥ १ ॥ कथन्तेदोषमायादिपीडायच्छन्तिनोनृणाम् ॥ वेदमार्गेणचब्रूहि तेषांपूजाविनिर्णयम् ॥ २ ॥ श्रीशिवउवाच ॥ साधुपृष्टंत्वया देविग्रहपूजाविनिर्णयः ॥ विनाकालंतुदुःखेनसर्वान्सम्पीडयन्तिहि ॥ ३ ॥ नीचंकुर्वन्तिचोच्चस्था खेचराश्चक्रवर्त्तिनम् ॥ चक्रवर्त्तिसुतंदासंयदातेनीचसंस्थिताः ॥ ४ ॥ आत्मासूर्य्योस्तिकालस्यनमःशुभ्रांशुरुच्यते ॥ सत्त्वंभौमोवचश्चान्द्रिर्जीवोज्ञानसुखेतथा ॥ ५ ॥ सितःकामःशनिर्दुःखंछायाराहुःशिखीशिखा ॥ खेटोपासनतोमर्त्यस्त्रिकालज्ञःप्रजायते ॥ ६ ॥ वैदिकेनतुमार्गेणयोग्रहान्समुपासते ॥ ग्रहलोकेतुतेसौख्यंग्रहैश्चसहभुञ्जते ॥ ७ ॥ तत्रभास्करमन्त्रस्यहिरण्यस्तूपकोमुनिः ॥ त्रिष्टुप्छन्दोदेवतातुसवितापरिकीर्त्तितः ॥ ८ ॥ ओंकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ९ ॥ अंगुष्ठादिषडङ्गादिषड्वर्णान्विभजंश्चरेत् ॥ भुवनस्याथमन्त्रस्यपदन्यासंसमाचरेत् ॥ १० ॥ श्रीसूक्तोक्तऋचांस्थानेततोध्यायेद्दिवाकरम् ॥ ११ ॥ पद्मासनंपद्मकरंपद्मगर्भसमद्युतिम् ॥ सप्ताश्वंसप्तखड्गंचजातंदेशेकलिङ्गके ॥ १२ ॥ विश्वामित्रार्ष्यकंत्रिष्टुप्छदःकाश्यपगोत्रजम् ॥ रक्ताम्बरधरंरक्ताभरणैरुपशोभितम् ॥ १३ ॥ रक्तगन्धानुलेपाङ्गंरक्तध्वजपताकिनम् ॥ किरीटिनंसकेयूरंमण्डितंरक्तछत्रिणम् ॥ १४ ॥ रथारूढंतस्यसव्यंत्वधिदैवाग्न्यधिष्ठितम् ॥ प्रत्यधिदैवेश्वरेणासव्य

---

१ ओंकृष्णेनरजसा इति अंगुष्ठाभ्यांनमः, वर्त्तमानोनिवेशयन् इति तर्जनीभ्यांनमः, अमृतंमर्त्यंच इति मध्यमाभ्यांनमः, हिरण्ययेनसविता इति अनामिकाभ्यांनमः, रथेनादेवोयाति इति कनिष्ठिकाभ्यांनमः, भुवनानिपश्यन् इति करतलकरपृष्ठाभ्यांनमः एवंहृदयादिन्यासमपिकुर्य्यात् ॥ अथ पदन्यासः ॥ आमूर्ध्नि, कृष्णेन नेत्रयोः, रजसा कर्णयोः, वर्त्तमानोनासिकायाम्, निवेशयन् मुखे, अमृतं गले, मर्त्यंबाह्वोः, च हस्तयोः, हिरण्ययेन नाभौ, सविता गुदे, रथेना पायौ, देवः ऊरुयुग्मे, यातिजानुयुग्मे, भुवनानि जङ्घायुग्मे, पश्यन् पादयुग्मे, इतिपदन्यासः ॥

युक्तंचप्राङ्मुखस् ॥ १५ ॥ ध्यात्वैवंपूजयेद्भानुंफुल्लाक्षतविनिर्मिते ॥ द्वादशांगु
लयुक्तेचश्रीपर्णादिकपीठके ॥ १६ ॥ अत्राधिदैवतंपूज्यंतथाप्रत्यधिदैवतम् ॥
वर्णलक्षंजपेन्मन्त्रंजुहुयात्तद्दशांशतः ॥ १७ ॥ होमस्त्वाल्प्येजपःकार्य्यस्त्वा
धिप्रत्यधिदैवते ॥ करवीरादिकुसुमैरक्तचन्दनमिश्रितैः ॥ १८ ॥ दूर्वाङ्कुरैश्चाक्ष
तैश्चतर्पणंस्याद्दिनेशितुः ॥ मधुच्छन्दामुनिश्छन्दोगायत्र्यग्निश्चदेवता ॥
१९ ॥ विनियोगस्तुसवितुःप्रीतयेचेतिकीर्तयेत् ॥ २० ॥ अग्निमीलंपुरोहि
तंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातारम् ॥ २१ ॥ वामदेवोमुनिश्छन्दोनुष्टु
ब्रुद्रस्तुदेवता ॥ विनियोगस्तुसवितुःप्रीतयेचेतिकीर्तयेत् ॥ २२ ॥ आवोराजा
नमध्वरस्यरुद्रंहोतारसत्ययजरोदस्योः ॥ अग्निपुरातनयित्नोसविताहिरण्यरू
पमवसेकृणुध्वम् ॥ २३ ॥ होमस्त्वर्कसमिद्भिःस्यादभावेकमलाक्षकैः ॥ तद
भावेयवतिलघृतैर्वामधुरत्रयैः ॥ २४ ॥ अदृष्टसूर्य्योनाश्नीयान्नरात्रौभानुवास
रे ॥ त्यजेच्चलवणंतक्रंदिवास्वापंचमैथुनम् ॥ २५ ॥ त्रिकालंप्रजपेत्सूक्तंपूज
येत्तुविशेषतः ॥ एवंसिद्धेमनौजातेनृपाःस्युस्तस्यकिङ्कराः ॥ २६ ॥ तस्यपा
दोदकादेवरोगसङ्घोविलीयते ॥ सिद्धमन्त्रोमुमुर्षुस्तुच्छायांपश्यत्यशीर्षका
म् ॥ २७ ॥ कुष्ठादिरोगग्रस्तस्तुसाधकोर्घ्याणिपादयेत् ॥ आरोग्यार्थंऋचा
पादैरथऋग्भिस्त्रिभिःस्वयम् ॥ २८ ॥ एवंचतुर्विंशतिभिरिष्ट्वासूर्यंतुतर्पयेत् ॥
त्रिकालाद्यैस्तदाहन्तिदुःसाध्यानपिभास्करः ॥ २९ ॥ पुष्पाणिकरवीरस्यर
क्तचन्दनचन्दने ॥ दूर्वाक्षतेकुशाग्राणितिलास्तत्रयमेवच ॥ ३० ॥ एतान्या
वश्यकान्याहुरर्चनेष्टौयथोत्तरम् ॥ निक्षिप्यताम्रपात्रेतुकस्तूरींकेशरंविधुम् ॥
३१ ॥ मन्त्रैर्वापिचगायत्र्याजानुभ्यांधरणींगतः ॥ दृष्ट्वासूर्य्यंनमस्कृत्यदद्या
दर्घ्यमनन्यधीः ॥ ३२ ॥ अभिषिञ्चेचशिरसिऋचाभिर्दत्ततोयकैः ॥ त्यजेत्पू
र्वोदितंसर्वंभानुवारेविशेषतः ॥ ३३ ॥ कुष्ठाद्यायेमहारोगाःषण्मासाद्यान्ति
संक्षयम् ॥ उपकुष्ठादयोयेचकृतेसन्ध्याद्वयेपिते ॥ ३४ ॥ एकसन्ध्यार्चनेना
पिसूर्य्यावर्त्तादयोगताः ॥ केचित्तुसप्ततिदिनैर्मण्डलेनत्रिसप्तकैः ॥ ३५ ॥ स
प्तमेनापिचैकाहात्तारतम्यंविचारयेत् ॥ उदयेस्तेस्वपेन्नैवपूजयित्वेष्टमाप्नुया

१ कपूर ॥

त् ॥ ३६ ॥ उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवम् ॥ हृद्रोगंममसूर्य्यहरिमाणं चनाशय ॥ ३७ ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ॥ अथोहारिद्रवे पुमेहरिमाणंनिदध्मसि ॥ ३८ ॥ उदगादयमादित्योविश्वेनमहसासह ॥ द्विषन्तंमह्यंरन्धयन्मोअहंद्विषतेरधम् ॥ ३६ ॥ एकादशर्चसूक्तस्यहिरण्य स्तूपकोमुनिः ॥ त्रिष्टुब्जगत्यश्छन्दांसिदेवतासवितामतः ॥ ४० ॥ ह्वयाम्यग्निंप्रथमंस्वस्तयेह्वयामिमित्रावरुणाविहावसे ॥ ह्वयामिरात्रींजगतो निवेशनींह्वयामिदेवंसवितारमूतये ॥ ४१ ॥ आकृष्णेनरजसावर्तमानो निवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्य न् ॥ ४२ ॥ यातिदेवःप्रवतायात्युद्वतायातिशुभ्राभ्यांयजतोहरिभ्याम् ॥ आदेवोयातुसवितापरावतोऽपविश्वादुरिताबाधमानः ॥ ४३ ॥ अभीवृतं कृशनैर्विश्वरूपंहिरण्यशम्यंयजतोबृहन्तम् ॥ आस्थाद्रथंसविताचित्रभानुः कृष्णारजांसितविषीन्दधानः ॥ ४४ ॥ विजनाञ्छ्यावाःशितिपादोअ ख्यंरथंहिरण्यप्रउगंवहन्तः ॥ शश्वद्विशःसवितुर्दैव्यस्योपस्थेविश्वाभुव नानितस्थुः ॥ ४५ ॥ तिस्रोद्यावःसवितुर्द्वाउपस्थाँएकायमस्यभुवनेविराषा ट् ॥ आणिंनरथ्यममृताधितस्थुरिहब्रवीतुयाउतच्चिकेतत् ॥ ४६ ॥ विसुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपाअसुरःसुनीथः ॥ क्वेदानींसूर्य्यःकश्चिकेतकतमां द्यांरश्मिरस्याततान ॥ ४७ ॥ अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनास प्तसिन्धून् ॥ हिरण्याक्षःसवितादेवआगाद्दधद्रत्नादाशुषेवार्य्याणि ॥ ७८ ॥ हिरण्यपाणिःसविताविचर्षणिरुभेद्यावापृथिवीअन्तरीयते ॥ अपामीवांबाध तेवेतिसूर्य्यमभिकृष्णेनरजसाद्यामृणोति ॥ ४६ ॥ हिरण्यहस्तोअसुरःसुनी थःसुमृलीकःस्ववाँयात्वर्वाङ् ॥ अपसेधन्रक्षसोयातुधानानस्थाद्देवःप्रतिदोषं गृणानः ॥ ५० ॥ येतेपन्थाःसवितःपूर्व्यासोरेणवःसुकृताअन्तरिक्षे ॥ तेभि र्नोअद्यपथिभिःसुगेभीरक्षाचनोअधिचब्रूहिदेव ॥ ५१ ॥ कंरवीरजेपामुस्तंदे वदारुर्मनःशिलाः ॥ केशरैलौपद्मकाष्ठमधुपुष्पोषबालकैः ॥ ५२ ॥ एतज्जा

१ कनैर २ दुपहरियाका भेद ३ नागरमोथा ४ मैनशिल ५ इलायची ६ पद्माख ७ महुवाके फूल ८ सुगन्धवाला ॥

पीप्रतिदिनमेतद्धुक्तजलैश्चरेत् ॥ स्नानंसूर्य्यस्यसन्तुष्टयैदुष्टोवायस्यभास्करः ॥ ५३ ॥ कौशुम्भवस्त्रंकनकंमाणिक्यंगांतथैववा ॥ सर्वेश्चैकतरंदद्यान्नित्यंभास्करसेवकः ॥ ५४ ॥ दद्यादशक्तोगोधूमांस्तथाभास्करपीडितः ॥ गुडान्नाशीतुनित्यंस्याद्धारयेदर्कमूलकम् ॥ ५५ ॥ अथवक्ष्येचन्द्रमन्त्रंगौतमोस्यमुनिर्मतः ॥ गायत्रीछन्दइत्येकंसोमोदेवःप्रकीर्त्तितः ॥ ५६ ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ ५७ ॥ पैद्दीर्घबिन्दुयुक्तेनसकारेणषडङ्गकम् ॥ पदन्यासश्चकर्त्तव्योरुद्रोक्ताङ्गेषुदिक्षुच ॥ ५८ ॥ किरीटिनंश्वेतवस्त्रंदशाश्वंश्वेतभूषणम् ॥ पाशपाणिंद्विबाहुंतमत्रिगोत्रसमुद्भवम् ॥ ५९ ॥जातंयवनदेशेचश्वेतगन्धानुलेपनम् ॥ श्वेतध्वजपताकाढ्यंकेयूरमणिभूषितम् ॥ ६० ॥ श्वेताकृतिंरथारूढमंधिदेवेनसंयुतम् ॥ तथाप्रत्यधिदेवेनवायव्याभिमुखंयुतम् ॥ ६१ ॥ एवंध्यात्वाचतुर्विंशत्यंगुलीचतुरस्रके ॥ श्वेताक्षतकृतेचन्द्रमर्चेद्देवद्वयान्वितम् ॥ ६२ ॥ वर्णलक्षञ्जपेन्मन्त्रंसर्वेष्वेतेष्वयंविधिः ॥ जपाद्यम्पूर्ववत्सर्वमधिप्रत्यधिदेवयोः ॥ ६३॥ श्वेताक्षतैश्चपुष्पैश्चश्रीखण्डेनचकम्भुना॥श्वेतदूर्वान्वितैस्तर्प्यःपलाशसमिधोहुनेत् ॥ ६४ ॥ घृताक्तास्तदभावेतुवटस्यचप्रकीर्त्तिताः ॥ अशक्तौतदभावेवाजपेन्मन्त्रंदशांशतः॥ ६५ ॥ मेधातिथिर्ऋषिः प्रोक्तोऽनुष्टुप्छन्दउदाहृतम् ॥ आपोत्रदेवताश्चन्द्रप्रीतयेविनियोजनम्॥६६॥अप्सुमेसोमोअब्रवीदन्तर्विश्वानिभेषजा ॥ अग्निञ्चविश्वशम्भुवम् ॥ ६७॥ ऋषिर्दीर्घतमाःप्रोक्तोजगतीछन्दईरितम् ॥ देवतोमासमाख्यातानियोगश्चन्द्रतुष्टये ॥ ६८ ॥ गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीचतुष्पदी ॥ अष्टापदीदशपदीबुभूवुषीसहस्राक्षरापरमेव्योमन् ॥ ६९ ॥ पूर्णिमायांनिशहारस्सायंचन्द्रम्प्रपूजयेत् ॥ क्षीरेणार्घ्यन्तु

---

१ जिसके सूर्य्य गोचरमें अच्छे न हों २ गुड़ मिलाकर अन्न भोजन करे ३ सां अंगुष्ठाभ्यांनमः, सीं तर्जनीभ्यांनमः, सूं मध्यमाभ्यांनमः, सैं अनामिकाभ्यांनमः, सौं कनिष्ठिकाभ्यांनमः, सः करतलकरपृष्ठाभ्यांनमः, इसी रीतिसे हृदयादिन्यास भी कर लेवे ४ और रुद्राध्याय की विधि में जो अंगन्यास कहागया है उन अंगों में इस मन्त्रके पदों को न्यासकरे ५ चन्द्रमा की अधिदेवता आप अर्थात् जलाभिमानी देवी और उमा प्रत्यधिदेवता हैं ॥

शङ्खेनदद्याद्देवस्यतुष्टये ॥ ७० ॥ सूक्तंचन्द्रमसोजप्यंप्राग्वच्चन्द्रस्यसेवनात् ॥ शान्तोदान्तःसुकीर्त्तिश्चश्रीमान्दातासुरूपवान् ॥ ७१ ॥ त्रयोविंशर्चसूक्तस्यगौतमोस्यमुनिर्मतः ॥ छन्दस्त्रिष्टुब्देवताचचन्द्रमाःपरिकीर्तितः॥ ७२॥ त्वंसोमप्रचिकितोमनीषात्वंरजिष्ठमनुनेषिपन्थाम् ॥ तवप्रणातिपितरोनइन्द्रो देवेषुरत्नमभजन्तधीराः ॥ ७३ ॥ त्वंसोमक्रतुभिःसुक्रतुर्भूस्त्वंदक्षैःसुदक्षोविश्ववेदाः ॥ त्वंवृषावृषत्वेभिर्महित्वाद्युम्नेभिर्द्युम्न्यभवोनृचक्षाः ॥ ७४ ॥ राज्ञोनतेवरुणस्यव्रतानिबृहद्गभीरन्तवसोमधाम ॥ शुचिष्ट्वमसिप्रियोनमित्रो दक्षाय्योअर्य्यमेवासिसोम ॥ ७५ ॥ यातेधामानिदिवियापृथिव्याम्पर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नोविश्वैःसुमनाअहेलन्राजन्सोमप्रतिहव्यागृभाय॥ ७६ ॥ त्वंसोमासिसत्पतिस्त्वंराजोतवृत्रहा ॥ त्वम्भद्रोअसिक्रतुः ॥ ७७ ॥ त्वञ्चसोमनोवशोजीवातुंनमरामहे ॥ प्रियस्तोत्रोवनस्पतिः ॥ ७८ ॥ त्वंसोममहेभगंत्वंयूनऋतायते ॥ दक्षंदधासिजीवसे ॥ ७९ ॥ त्वन्नःसोमविश्वतोरक्षाराजन्नघायतः ॥ नरिष्येत्त्वावतः सखा ॥ ८० ॥ सोमयास्तेमयोभुवऊतयःसन्तिदाशुषे ॥ ताभिर्नोविताभव ॥ ८१॥ इमंयज्ञमिदंवचोजुजुषाणउपागहि॥ सोमत्वंनोवृधेभव ॥ ८२ ॥ सोमगीर्भिष्ट्वावयंवर्धयामोवचोविदः ॥ सुमृळीकोनआविश ॥ ८३ ॥ गयस्फानोअमीवहावसुवित्पुष्टिवर्धनः ॥ सुमित्रः सोमनोभव ॥ ८४ ॥ सोमरारन्धिनोहृदिगावोनयवसेष्वा ॥ मर्य्यइवस्वओक्ये ॥ ८५ ॥ यःसोमसख्येतवरारणद्देवमर्त्यः ॥ तंदक्षःसचतेकविः॥ ८६ ॥ उरुष्याणोअभिशस्तेःसोमनिपाह्यंहसः ॥ सखासुशेवएधिनः ॥ ८७ ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ८८ ॥ आप्यायस्वमदिन्तमसोमविश्वेभिरंशुभिः ॥ भवानःसुश्रवस्तमःसखावृधे ॥ ८९ ॥ सन्तेपयांसिसमुयन्तुवाजाःसंवृष्ण्यान्यभिमातिषाहः ॥ आप्यायमानोअमृतायसोमदिविश्रवांस्युत्तमानिधिष्व ॥ ९० ॥ यातेधामानिहविषायजन्तिताते विश्वापरिभूरस्तुयज्ञम् ॥ गयस्फानःप्रतरणःसुवीरोवीरहाप्रचरासोमदुर्यान्॥ ९१ ॥ सोमोधेनुंसोमोअर्वन्तमाशुंसोमोवीरंकर्म्मण्यंददाति ॥ सादन्यंविदथ्यंसभेयम्पितृश्रवणंयोददाशदस्मै ॥ ९२ ॥ अषाढंयुत्सुपृतनासुपप्रिंस्व

र्षामप्सांवृजनस्यगोपाम् ॥ भरेषुजांसुक्षितिंसुश्रवसंजयन्तंत्वामनुमदेमसोम ॥ ९३ ॥ त्वमिमाओषधीःसोमविश्वास्त्वमपोअजनयस्त्वङ्गाः ॥ त्वमातत न्थोर्वन्तरिक्षत्वंज्योतिषावितमोववर्थ॥९४॥ देवेननोमनसादेवसोमरायोभागं सहसावन्नभियुध्य ॥ मात्वातनदीशिषेवीर्य्यस्योभयेभ्यःप्रचिकित्सागविष्टौ॥ ९५ ॥ पञ्चगव्यञ्चरजतम्मौक्तिकंशङ्खशुक्तिके ॥ कुमुदानिजलेक्षिप्त्वास्ना नञ्चन्द्रस्यतुष्टये ॥ ९६ ॥ श्वेतंवृषंघृतघटंशङ्खङ्कांसस्यभाजनम् ॥ मुक्ताहल ञ्चविधेत्तारंवाशक्तितोददेत् ॥ ९७॥ चन्द्रसेवाकरोनित्यम्भक्षयेत्पायसंसि तैः ॥ सुगन्धैश्चफलैर्युक्तंसोममूलञ्चधारयेत् ॥ ९८ ॥ एवञ्चन्द्रस्यसूर्य्यस्य कुरुतेयउपासनम् ॥ महापातकजान्रोगान्सतुनाशयितुंक्षमः ॥ ९९ ॥ शुक्ल पुष्पान्वितोदेनसङ्कल्पस्यचयोजनम् ॥ आदौरोगंसमुच्चार्य्यतन्नाशायततोव देत्॥१००॥ देशकालादिचोच्चार्य्यगोत्राचारादिपूर्वकम् ॥ साध्यनामतुषष्ठय न्तंश्चाकल्पेनचोच्चरेत् ॥१॥ अर्घ्यदानंकरिष्यामितर्पयामिचवावदेत् ॥ शि खाबन्धन्ततःकृत्वाभूतोत्सादनमाचरेत् ॥२॥ प्रार्थयित्वाचपृथिवींसंविशेच्चनि जासने ॥ सुदर्शनस्यमन्त्रेणदिशाम्बन्धसमाचरेत ॥ ३ ॥ सर्वरोगनिवारणा यशार्ङ्गायपदंवदेत् ॥ सशरायास्त्रराजायचतुर्थ्यन्तंसुदर्शनम् ॥ ४ ॥ सप्तवि शतिवर्णोयंहृदन्तोमनुरुच्यते ॥ भूतशुद्धिन्ततःकृत्वाप्राणस्थापनमाचरेत् ॥ ५ ॥ ऋचास्वाङ्गानिसंस्पृश्यगुरुञ्चापिपरंगुरुम् ॥ परात्परंगुरुंध्यात्वान्यासं कुर्यात्ततःपरम् ॥ ६ ॥ उद्यन्नद्यमित्रमहोदक्षिणेतुकरेन्यसेत् ॥ कृतमत्रमया यच्चमित्रोरक्षतुमान्ततः ॥ ७ ॥ वामहस्तेन्यसेच्चैवआरोहन्नुत्तरान्दिवम् ॥ वि हिताकरणात्पापाद्रवीरक्षतुमांसदा ॥ ८ ॥ हृद्रोगम्ममसूर्य्येतिहृदयेतुप्रविन्य सेत् ॥ अज्ञानकृतपापस्तुसूर्योरक्षतुमांसदा ॥ ९ ॥ हरिमाणञ्चनाशायविन्य सेन्मस्तकोपरि ॥ भानुस्तुसर्वभूतेभ्यःसर्वदामांचरक्षतु ॥ १० ॥ शुकेषुमेह रिमाणंदक्षिणेचरणेन्यसेत् ॥ निषिद्धगमनात्पापाद्भानूरक्षतुमांसदा ॥ ११ ॥ रोपणाकासुदध्मसिवामपादेतुविन्यसेत् ॥ ऋतुस्त्रीसङ्गसम्भूतात्पापात्पूषाभि

१ सर्वरोगनिवारणाय शार्ङ्गायसशरायास्त्रराजाय सुदर्शनायनमः इति सुदर्शनमन्त्रः २ उद्यन्नद्यमित्रमहइति दक्षिणकरेनमः इसी रीति से और भी मूलोक्तन्यासों के प्रयोगबनालेना॥

रक्षतु ॥ १२ ॥ अथोह्यारिद्ववेषुमेनाभिदेशेतुविन्यसेत् ॥ हिरण्यगर्भोवतुमां
तमोजातपापतःसदा ॥ १३ ॥ हरिमाणन्निदध्मसिजिह्वायांचमुखेन्यसेत् ॥
मुखजिह्वोद्भवात्पापान्मरीचिर्मांसदावतु ॥ १४ ॥ उदगादयमादित्योन्यसेद्द
क्षिणचक्षुषि ॥ मामादित्योवतुसदादृक्समुद्भवपातकात् ॥ १५ ॥ विश्वेनस
हसासहविन्यसेद्वामचक्षुषि ॥ यद्दृष्टव्यन्नतद्दृष्टन्ततःपापात्सवितावतु ॥ १६ ॥
द्विषन्तंमह्यंरन्धयन्विन्यसेत्कवचोपरि ॥ त्वग्लोमसम्भवात्पापाद्भानुर्मांपरिरक्ष
तु ॥ १७ ॥ मोअहंद्विषतेरधंविन्यसेच्चतथास्त्रके ॥ विद्वेषणकृतात्पापाद्भास्क
रोमांसदावतु ॥ १८ ॥ न्यासंपुरुषसूक्तस्यदेवमूर्तौसमाचरेत् ॥ ततःस्वदेहेवि
न्यस्यप्राग्वद्ध्यायेद्दिवाकरम् ॥ १९ ॥ ततःपुरुषसूक्तेनषोडशर्चेनपूजयेत् ॥
गन्धाक्षतादिपुष्पाणिरक्तान्येवम्प्रयोजयेत् ॥ २० ॥ नैवेद्यंपायसंप्रोक्तंऋक्त्र
यस्यमुनिर्मतः ॥ कण्वःप्रस्कण्वनामातुच्छन्दोनुष्टुप्चदेवता ॥ २१ ॥ श्री
सूर्य्यस्तत्रथमित्रायइदमर्घ्यंवदेत्सिते ॥ मित्रंसन्तर्प्पयामीतिचैवंप्रोक्तंसितेतरे ॥
२२ ॥ एवंरवौचसूर्य्येचकल्पनीयंततःपरम् ॥ वदेदर्धर्चकेमित्ररविभ्यामर्घ्य
मित्यपि ॥ २३ ॥ त्र्यःसर्वर्चकेचैवमुनेर्यंस्वधियाबुधैः ॥ कृष्णंसर्वत्रसूर्य्यन्तु
तर्प्पयामीतिसंवदेत् ॥ २४ ॥ सर्वर्चेनापिसन्तर्प्योविशेषोयमुदाहृतः ॥ प्रति
भानोश्चवारेतुकार्य्यंतान्यत्रवासरे ॥ २५ ॥ क्षुद्ररोगाविनश्यन्तिविप्रान्द्वाद
शभोजयेत् ॥ प्राप्नोतिविपुलांलक्ष्मींब्रह्मप्राप्नोत्यनामयम् ॥ २६ ॥ श्रावणे
शुक्लसप्तम्यांविशाखायांभृगोर्दिने ॥ श्रीसूर्य्यःक्रिययाजातःपूजातत्रविशि
ष्यते ॥ २७ ॥ माघशुक्लस्यचाष्टम्यांकृत्तिकायांगुरोर्दिने ॥ क्षेत्रेसमभवच्चन्द्रः
पूजातत्रविशिष्यते ॥ २८ ॥ भौममन्त्रंप्रवक्ष्यामिविरूपोस्यमुनिर्मतः ॥ अ
ङ्गारकोदेवताचगायत्रीछन्दईरितम् ॥ २९ ॥ अग्निर्मूर्द्धादिवःककुत्पतिःपृ
थिव्याअयम् ॥ अपांरेतांसिजिन्वति ॥३०॥ अम्बीजेनषडङ्गानिचांगुलि
न्यासएवच ॥ रुद्रस्थानेषुकर्त्तव्यःपदन्यासोद्वितीयकः ॥ ३१ ॥ रक्ताम्बरंरक्त
वर्णंरक्तगन्धानुलेपनम् ॥ रक्तपुष्पैःपूज्यमानंचतुर्बाहुंकिरीटिनम् ॥ ३२ ॥
वराभयगदाशूलहस्तंमेषोपरिस्थितम् ॥ वशिष्ठगोत्रसम्भूतंजमदग्न्यर्षिकंकुज
म् ॥ ३३ ॥ जगतीछन्दसंवक्रंरक्तध्वजपताकिनम् ॥ अवन्तीदेशसम्भूतंध्या

त्वादेवम्प्रपूजयेत् ॥ रक्तचन्दनसम्मिश्रतण्डुलैस्त्र्यस्रकेकृते ॥ अधिदेवतया भूम्यायुक्तंशरणमातुरेणच ॥ ३४ ॥ तथाप्रत्यधिदेवेनतत्रावाह्यप्रपूजयेत् ॥ वर्णलक्षंजपेन्मन्त्रंमधुत्रयसंयुताः ॥ ३५ ॥ खादिर्य्यःसमिधोहोमेतर्पणा द्यंचपूर्ववत् ॥ मेधातिथिर्मुनिश्छन्दोगायत्रीभूश्चदेवता ॥ ३६ ॥ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथः ॥ ३७ ॥ मुनिर्दीर्घतमाःप्रोक्तस्त्रिष्टुप्छन्दउदाहृतम्॥ देवःस्कन्दःकुजप्रीत्यैजपार्थंविनियोजनम्॥ ३८ ॥ यदक्रन्दःप्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातन्तेअर्वन् ॥ ३९ ॥ भौमस्यप्रीतिमन्विच्छन्हव्या ञ्चाशीभवेन्नरः ॥ गोजिह्वान्धारयेन्नित्यंभौमवारेतुरोगिकः ॥ ४० ॥ कुजमन्त्रेतुसंसिद्धेसंग्रामेविजयीभवेत् ॥ स्वयंनश्यन्तिरिपवोनेत्रच्छायाग्निसन्निभाः॥ ४१ ॥ त्रिशर्चकस्यसूक्तस्यविरूपाङ्गिरसाह्वृषी ॥ गायत्रीछन्दउद्दिष्टं देवोग्निःकुजतुष्टये ॥ ४२ ॥ समिधाग्निंदुवस्यतघृतैर्बोधयतातिथिम् ॥ अस्मिन्हव्याहोतता ॥ ४३ ॥ अग्नेस्तोमंजुषस्वमेवर्धस्वानेनजन्मना ॥ प्रतिसूक्तानिहर्य्यनः ॥ ४४ ॥ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँआसादयादिह॥ ४५ ॥ उत्तेबृहन्तोअर्चयःसमिधानस्यदिवः॥ अग्नेशुक्रासईरते ॥ ४६ ॥ उपत्वाजुह्वोममघृताचीर्यन्तुहर्य्यतः ॥ अग्नेहव्याजुषस्वनः ॥ ४७ ॥ मन्द्रंहोतारमृत्विजंचित्रभानुंविभावसुम् ॥ अग्निमीलेसउश्रवत् ॥ ४८ ॥ प्रत्नंहोतारमीड्यंजुष्टमग्निंकविंक्रतुम् ॥ अध्वराणामभिश्रियम् ॥ ४९ ॥ जुषाणोअङ्गिरस्तमेमाहव्यान्यानुषक् ॥ अग्नेयज्ञंनयक्रतुप ॥ ५० ॥ समिधानउशन्त्यशुक्रशोचइहावह ॥ चिकित्वान्दैव्यञ्जनम् ॥ ५१ ॥ विप्रंहोतारमद्रुहंधूमकेतुंविभावसुम् ॥ यज्ञानांकेतुमीमहे ॥ ५२ ॥ अग्नेनिपाहिनस्त्वंप्रतिष्यदेवरीषतः ॥ सन्धिद्वेषःसहस्कृतः ॥ ५३ ॥ अग्निःप्रत्नेनमन्मनाशुम्भानस्तन्वांस्वाम् ॥ कविर्विप्रेणवावृधे ॥ ५४ ॥ ऊर्जोनिपातमाहुवेग्निम्पावकशोचिषम् ॥ अस्मिन्यज्ञेस्वध्वरे ॥ ५५ ॥ सनोमित्रमहस्त्वमग्नेशुक्रेणशोचिषा ॥ देवैरासत्सिबर्हिषि ॥ ५६ ॥ योअग्निन्तन्वोदमेदेवम्मर्त्तःसमर्पयति॥

१ गोभी

तस्माइद्दीदयद्वसू ॥ ५७ ॥ अग्निर्मूर्धादिवःककुत्पतिःपृथिव्याअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ ५८ ॥ उदग्नेशुचयस्तवशुक्राभ्राजन्तईरते ॥ तव ज्योतीꣳष्यर्चयः ॥ ५९ ॥ ईशिषेवार्य्यस्यहिदात्रस्याग्नेस्वर्पतिः ॥ स्तोता स्यांतवशर्म्मणि ॥ ६० ॥ त्वामग्नेमनीषिणस्त्वांहिन्वन्तिचितिभिः ॥ त्वां वर्धन्तुनोगिरः ॥ ६१ ॥ अदब्धस्यस्वधावतोदूतस्यरेभतःसदा ॥ अग्नेःस ख्यंवृणीमहे ॥ ६२ ॥ अग्निःशुचिव्रततमःशुचिःशुचिर्विप्रः ॥ शुचिःशुची रोचतआहुतः ॥ ६३ ॥ उतत्वाधीतयोममगिरोवर्धन्तुविश्वहा ॥ अग्नेस ख्यस्यबोधिनः ॥ ६४ ॥ यदग्नेस्यामहंत्वंत्वंवायत्स्याअहम् ॥ स्युष्टेसत्याइहाशिषः ॥ ६५ ॥ वसुर्वसुपतिर्हित्वमस्यग्नेविभावसुः ॥ स्यामतेसुमतावपि ॥ ६६ ॥ अग्नेधृतव्रतायतेसमुद्रायेवसिन्धवः ॥ गिरोवाश्रासईरते ॥ ६७ ॥ यु वानंविश्पतिंकविंविश्वादम्पुरुवेपसम् ॥ अग्निंशुम्भामिमन्मभिः ॥ ६८ ॥ य ज्ञानांरथ्येवयन्तिग्मजम्भायवीलवे ॥ स्तोमैरिषेमाग्नये ॥ ६९ ॥ अयम ग्नेत्वेचअपिजरिताभूतुसन्त्या ॥ तस्मैपावकमृलय ॥ ७० ॥ धीरोह्यस्यप्रसि द्विप्रोनजागृभिःसदा ॥ अग्नेदीदयसिद्यवि ॥ ७१ ॥ पुराग्नेदुरितेभ्यःपुरा मृधेभ्यः कवे ॥ प्रणआयुर्वसोतिर ॥ ७२ ॥ विश्वम्बलांचन्दनञ्चरौमठास नपुष्पकम् ॥ फलिनीबकुलैर्युक्तंस्नानम्भौमस्यतुष्टये ॥ ७३ ॥ आरक्ताम्बुम वंताम्रंप्रवालञ्चमसूरिका ॥ सुरक्तवस्त्रमंसृजस्तुष्टयेचाश्वारिपुष्पकम् ॥ ७४ ॥ पूर्वाषाढाख्यनक्षत्रेमासेभाद्रपदेसिते ॥ दशम्यांबुधवारेतुजातस्तत्रमहोत्सवः ॥ ७५ ॥ बुधमन्त्रम्प्रवक्ष्यामिबौद्धस्तस्यमुनिर्मतः ॥ त्रिष्टुप्छन्दोदेवतास्य बुधोबुद्धिप्रदोमतः ॥ ७६ ॥ उद्बुध्यस्वाग्नेप्रतिजागृहीत्वामिष्टापूर्त्तेसꣳसृजेथामयञ्च ॥ अस्मिन्सधस्थेऽध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ ७७ ॥ बुंबीजेनषडङ्गेनध्यानमस्यनिरूप्यते ॥ पीताम्बरंपीतवर्णम्पीतग न्धानुलेपनम् ॥ ७८ ॥ पीतपुष्पैःपूज्यमानंखड्गचर्म्मगदावरान् ॥ सिन्धूत्थं

---

१ सोंठि २ बरियारी ३ हींग ४ मंगलग्रह ५ बुं अंगुष्ठाभ्यांनमः, बुं तर्जनीभ्यांनमः, बुं मध्यमाभ्यांनमः, इसीरीतिसे और अंगुलियों में न्यासकरना व हृदयादि न्यास की रीतिसे बुं बीजपढ़कर हृदयादि न्यासभी करना उचित जानाजाता है ॥

दधतंहस्तैरत्रिगोत्रसमुद्भवम् ॥ ७९ ॥ भारद्वाजार्पकंजातंमगधेचकिरीटिन
म् ॥ बृहतीछन्दसम्पीतच्छत्रध्वजपताकिनम् ॥ ८० ॥ केयूरमणिशोभाढ्य
मधिदैवेनविष्णुना ॥ तेनप्रत्यधिदेवेनयुक्तंञ्चिन्तयाम्यहम् ॥ ८१ ॥ एवं
ध्यात्वाशराकारेहरिद्राक्षतनिर्मिते ॥ मण्डलेचतुरस्रे[१] ञ्चसम्यगावाह्यपूजयेत् ॥
८२ ॥ वर्णलक्षंजपेन्मन्त्रंहुनेत्तस्यदशांशतः ॥ अपामार्गसमिद्भिश्चत
र्प्पणानिततश्चरेत् ॥ ८३ ॥ त्रिविक्रमाख्योयोविष्णुस्सबुधस्याधिदैवतम् ॥
मेधातिथिर्मुनिस्तस्यगायत्रंछन्दईरितम् ॥ ८४ ॥ इदंविष्णुर्विचक्रमेत्रेधानि
दधेपदम् ॥ समूढमस्यपांशुरे ॥ ८५ ॥ अथप्रत्यधिदैवन्तुविष्णुर्नारायणाभि
धः ॥ मुनिर्दीर्घतमाःप्रोक्तश्छन्दस्त्रिष्टुबुदाहृतम् ॥ ८६ ॥ विष्णोर्नुकंवीर्य्या
णिप्रवोचंयःपार्थिवानिविममेरजाꣳसि ॥ योअस्माकंयदुत्तरंसधस्थंविचक्र
माणस्त्रेधोरुगायः ॥ ८७ ॥ दुग्धौदनंसमश्नीयान्नैवतुर्म्बीकदाचन ॥ नाम्बरं
मलिनंदध्याद्वृद्धदारुजटान्दधेत् ॥ ८८ ॥ बुधस्यमन्त्रेसंसिद्धेवाग्मीभवति
पण्डितः ॥ अजयप्रतिपक्षाणांस्वयंजेतात्रजायते ॥ ८९ ॥ द्वादशर्चस्यसू
क्तस्यविश्वेदेवास्तथर्षयः ॥ देवोज्ञोबृहतीत्रिष्टुब्जगद्गायत्रगानिच ॥ ९० ॥
उद्बुध्यध्वंसमनसःसखायःसमग्निमिन्ध्वंबहवःसनीलाः ॥ दधिक्रामग्निमुष
संचदेवीमिन्द्रावतोवसेनिह्वयेवः ॥ ९१ ॥ मन्द्राकृणुध्वन्धियःप्रातनुध्वंनाव
मरित्रपरणींकृणुध्वम् । इष्कृणुध्वमायुधारंकृणुध्वम्प्राञ्चंयज्ञंप्रणयतासखायः॥
९२ ॥ युनक्तसीराविपुगातनुध्वंकृतेयोनौवपतेहबीजम् ॥ गिराचश्रुष्टिःस
भराअसन्नोनेदीयइत्सृण्यःपक्वमेयात् ॥ ९३ ॥ सीरायुञ्जन्तिकवयोयुगावि
तन्वतेपृथक् ॥ धीरादेवेषुसुम्नया ॥ ९४ ॥ निराहावान्कृणोतनसंवरत्राद
धातन ॥ सिञ्चामहाअवतमुद्रिणंवयंसुषेकमनुपक्षितम् ॥ ९५ ॥ इष्कृताहा
वमवतंसुवरत्रंसुषेचनम् ॥ उद्रिणंसिञ्चेअक्षितम् ॥ ९६ ॥ प्रीणीताश्वान्हित
ञ्जयाथस्वस्थिवाहंरथमित्कृणुध्वम् ॥ द्रोणाहावमवतमश्मचक्रमसत्रकोशंसि
ञ्चतानृपाणम् ॥ ९७ ॥ व्रजंकृणुध्वंसहिवोनृपाणोवर्मसीव्यध्वम्बहुलापृथूनि ॥
पुरःकृणुध्वमायसीरधृष्टामावःसुस्रोचमसोदृंहतातम् ॥ ९८ ॥ आवोधियं

---

१ बुध ॥

यज्ञियांवर्त्तऊतयेदेवादेवींयजतांयज्ञियामिह ॥ सानोदुहीयद्यवसेवगत्वीसहस्र धारापयसामहीगौः ॥ ६६ ॥ आतूषिञ्चहरिमीन्द्रोरुपस्थेवाशीभिस्तत्ततारम न्मयीभिः ॥ परिष्वजध्वंदशकक्ष्याभिरुभेधुरौप्रतिवह्नियुनक्त ॥ २०० ॥ उभौ धुरौवह्निरायिब्दमानोन्तर्योनेवचरतिद्विजानिः ॥ वनस्पतिंवनआस्थापयध्वं निषूदधिध्वमखनन्तउत्सम् ॥ १ ॥ कपृन्नरःकपृथमद्दधातनचोदयतखुदतवा जसातये ॥ निष्टिग्र्यःपुत्रमाच्यवयोतयइन्द्रंसबाधइहसोमपीतये ॥ २ ॥ हरीत कीकेलिफलैर्गोमयाक्षतरोचनैः ॥ स्वर्णामलकमुक्ताभिर्युक्तैःसक्षौद्रकैःस्नपे त् ॥ ३ ॥ नीलवस्त्रंचमुद्गान्नंकनकंचोर्णवस्त्रकम् ॥ बुधस्यप्रीतयेदद्यान्माल त्याःकुसुमानिवा ॥ ४ ॥ नभस्यशुक्लद्वादश्यांसोमवारेद्विजेवरे ॥ तारायां चन्द्रमाजातोबुधस्तस्योत्सवोत्रतु ॥ ५ ॥ मन्त्रंबृहस्पतेर्वक्ष्येमुनिर्गृत्समदोस्य तु ॥ त्रिष्टुप्छन्दोदेवपतिवन्दितोस्तिहिदेवता ॥ ६ ॥ बृहस्पतेअतियदर्यो अर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणं धेहिचित्रम् ॥ ७ ॥ बृंम्बीजेनषडङ्गादिन्यासमत्रसमाचरेत् ॥ शृणुध्यानंप्रव क्ष्यामियत्तदस्यबृहस्पतेः ॥ ८ ॥ कमण्डलुधरंदेवंवरदण्डाक्षसूत्रकम् ॥ पीत वर्णंचसौवर्णकिरीटेनविराजितम् ॥ ९ ॥ वशिष्ठार्घ्यंसिन्धुदेशभवंपीताम्बरा वृतम् ॥ अनुष्टुप्छन्दसंचाङ्गिरसगोत्रंसुरेडितम् ॥ १० ॥ पीतध्वजपताका ढ्यंपीतच्छत्रानुलेपनम् ॥ केयूराङ्गदशोभाढ्यमधिदेवेन्द्रसंयुतम् ॥ ११ ॥ ब्रह्मप्रत्यधिदेवेनयुतंसञ्चित्यचाह्वयेत् ॥ मन्त्रैर्विरचितेदीर्घचतुरस्रषडंगुले ॥ १२ ॥ हरिद्राक्षतसंसिद्धेमण्डलेतंप्रपूजयेत् ॥ वर्णलक्षंजपेन्मन्त्रंहोमस्त्रिमधु रान्वितैः ॥ १३ ॥ पिप्पलस्यतुकाष्ठैःस्यात्तर्पणंपीतपञ्चभिः ॥ मुनिर्गृत्समद

---

१ हड़ २ बहेड़ा ३ गोबर ४ अक्षत ५ गोरोचन ६ सोना ७ आंवला ८ मोती ९ सहित शहद के जल से स्नान करे 'क' नाम जल का है तथा चोक्तम्–मूर्ध्नि चित्ते जलेका येमुखेब्रह्मणिमारुते । कामेकालेसुवर्णेचकशब्दोद्रविणेध्वनौ ॥ इत्यनेकार्थध्वनिमञ्जरीकोशे १० बृं, इस बीजसे अंगुष्ठादिन्यास वा हृदयादिषडंगन्यास करलेना ॥ जैसे, बृंअंगुष्ठाभ्यां नमः, बृं तर्जनीभ्यांनमः, बृं मध्यमाभ्यांनमः, बृं अनामिकाभ्यांनमः, बृं कनिष्ठिकाभ्यांनमः, बृं करतलकरपृष्ठाभ्यांनमः, बृं हृदयायनमः, बृं शिरसेस्वाहा, बृंशिखायैवषट्, बृं कवचायहुम्, बृं नेत्रत्रयायवौषट्, बृं अस्त्रायफट् ॥

त्रिष्टुप्छन्दइन्द्रश्चदेवता॥ १४॥ अधिसञ्ज्ञागुरोस्तस्यतुष्टयेविनियोजनम्॥ १५ ॥ इन्द्रश्रेष्ठाणिद्रविणानिधेहिचित्तिंदक्षस्यसुभगत्वमस्मे ॥ पोषंरयीणाम रिष्टिंतनूनांस्वाद्मानंवाचःसुदिनत्वमह्नाम् ॥१६॥ मुनिर्गृत्समदःप्रोक्तोदेवता ब्रह्मणस्पतिः ॥ त्रिष्टुप्छन्दोगुरोश्चेयंप्रोक्ताप्रत्यधिदेवता॥ १७॥ ब्रह्मणस्पते त्वमस्ययन्तासूक्तस्यबोधितनयंचजिन्व ॥ विश्वंतद्भद्रंयदवन्तिदेवाबृहद्वदेमविदथे सुवीराः ॥ १८ ॥ दधिभक्तंसचदद्देत्स्वर्णपीताम्बरादिकम् ॥ नित्यंसन्धारयेद्बा हौब्रह्ममूलंतुधारयेत् ॥ १९ ॥ एवंसिद्धेगुरोर्मन्त्रेवाक्सिद्धिरुपजायते ॥ दे हेशक्तीराजमानंस्वशक्त्यावार्थशोधनम् ॥ २० ॥ एकादशर्चसूक्तस्यवामदे वोमुनिर्मतः ॥ जगतीछन्दइत्युक्तंदेवतात्रबृहस्पतिः ॥ २१ ॥ यस्तस्तम्भस हसाविज्मोअन्तान्बृहस्पतिस्त्रिषधस्थोरवेण ॥ तंप्रत्नासऋषयोदीध्यानापुरो मेविप्रादधिरेमन्द्रजिह्वम् ॥ २२ ॥ धुनेतयःसुप्रकेतंमदन्तोबृहस्पतेअभियेन स्ततस्रे ॥ पृषन्तंसृप्रमदब्धमूर्वंबृहस्पतेरक्षतातस्ययोनिम् ॥ २३ ॥ बृहस्पतेया परमापरावदतआतऋतस्यस्पृशोनिषेदुः ॥ तुभ्यंखाताअवताअद्रिदुग्धामध्व श्चोतंत्यभितोविरप्शम् ॥ २४ ॥ बृहस्पतिःप्रथमंजायमानोमहोज्योतिषःपरमे व्योमन् ॥ सप्तास्यस्तुविजातोरवेणविसप्तरश्मिरधमत्तमांसि ॥ २५ ॥ ससन्दु ष्टुभाऋक्वतागणेनवलंरुरोजफलिगंरवेण ॥ बृहस्पतिरुस्रियाहव्यसूदःक निक्रदद्वावशतीरुदाजत् ॥ २६ ॥ एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनम साहविर्भिः ॥ बृहस्पतेसुप्रजावीरवन्तोवयंस्यामपतयोरयीणाम् ॥ २७ ॥ सइन्द्राजामतिजन्यानिविश्वाशुष्मेणतस्थावभिवीर्य्येण ॥ बृहस्पतिंयःसुभृतं बिभर्तिवल्गूयतिवन्दतेपूर्वभाजम् ॥ २८ ॥ सइत्क्षेतिसुधितओकसिस्वेतस्मा इलापिन्वतेविश्वदानी ॥ तस्मैविशःस्वयमेवानमन्तेयस्मिन्ब्रह्माराजनिपूर्वए ति ॥ २९ ॥ अप्रतीतोजयतिसन्धनानिप्रतिजन्यान्युतयासजन्या ॥ अ वस्यवेयोवरिवःकृणोतिब्रह्मणेराजातमवन्तिदेवाः ॥ ३० ॥ इन्द्रश्चसोमंपिब तंबृहस्पतेस्मिन्यज्ञेमन्दसानावृषण्वसू ॥ आवांविशन्त्विन्दवःस्वाभुवोस्मेरयिं सर्ववीरंनियच्छतम् ॥ ३१ ॥ बृहस्पतइन्द्रावर्धतंनःसचासावांसुमतिर्भूत्वस्मे ॥ अविष्टंधियोजिगृतंपुरंधीर्जजस्तमर्योवनुषामरातिः ॥ ३२ ॥ मदयन्तीपल्लवा

श्चमधुकंश्वेतसर्षपाः ॥ मालतीपुष्पयुक्ताश्चस्नानेनगुरुतोषणम् ॥ ३३ ॥
हरिद्राशर्करापीतवस्त्रंस्वर्णंचपित्तलम् ॥ गुरुतुष्ट्यैप्रदेयंस्यादभावेचगणकास्त
था ॥ ३४ ॥ फाल्गुनस्यसितेपक्षेचैकादश्यांचपुष्यभे ॥ शुक्रवारेगुरुर्ज़ातस्तत्र
कार्य्यस्तदुत्सवः ॥ ३५ ॥ शुक्रमन्त्रंप्रवक्ष्यामिभरद्वाजोमुनिर्मतः ॥ त्रिष्टु
प्छन्दोनिगदितंदैत्याचार्य्यस्तुदैवतम् ॥ ३६ ॥ शुक्रंतेअन्यद्यजतन्तेअन्यद्वि
षुरूपेअहनिद्यौरिवासि ॥ विश्वाहिमायाअवसिस्वधावोभद्रातेपूषन्निहरातिर
स्तु ॥ ३७ ॥ शुम्बीजेनषडङ्गानिकृत्वाध्यानंसमाचरेत् ॥ शुक्लाम्बरंशुक्लव
र्णंशुक्लगन्धानुलेपनम् ॥ ३८ ॥ शुक्लपुष्पैःपूज्यमानंशौनकार्य्यंकिरीटिनम् ॥
चतुर्भुजंदण्डिनंचसाक्षसूत्रकमण्डलुम् ॥ ३९ ॥ पङ्क्तिच्छन्दश्चवरदंतथाकी
कटदेशजम् ॥ श्वेतच्छत्रध्वजपताकिनंभार्गवगोत्रजम् ॥ ४० ॥ सकेयूरन्त
थारूढंश्वेताभरणभूषितम् ॥ एवंध्यात्वाश्वेतवर्णेपञ्चकोणेनवांगुले ॥ ४१ ॥
अधिदैवतमिन्द्राणीशक्रःप्रत्यधिदैवतम् ॥ ताभ्यांयुतंदैत्यगुरुंमण्डलेपूजयेत्त
तः ॥ ४२ ॥ अर्णलक्षंजपेन्मन्त्रंहुनेत्त्रिमधुरान्वितैः ॥ उदुम्बरस्यकाष्ठैश्चत
र्पणादितुचन्द्रवत् ॥ ४३ ॥ वृषाकपिर्मुनिःप्रोक्तःपङ्क्तिच्छन्दउदाहृतम् ॥ इन्द्रा
णीदेवताप्रोक्तानियोगःशुक्रतुष्टये ॥ ४४ ॥ इन्द्राणीमासुनारिषुसुभगामहम
श्रवम् ॥ नह्यस्याअपरंचनजरसामरतेपतिर्विश्वस्मादिन्द्रउत्तरः ॥ ४५ ॥ म
धुच्छन्दाऋषिःप्रोक्तोगायत्रंछन्दईरितम् ॥ शक्रोदेवोनियोगोस्यविश्वतःशुक्र
तुष्टये ॥ ४६ ॥ इन्द्रंवोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलः ॥
४७ ॥ शुक्रसन्तुष्टयेनित्यंभक्षणीयंकृतोदनम् ॥ अश्वेतंनाम्बरन्दध्यान्मुनि
मूलंचधारयेत् ॥ ४८ ॥ शुक्रमन्त्रस्यसिद्धस्यचिह्नानिस्युःस्त्रियोवशाः ॥
यात्रासिद्धिःप्रकाशश्चचान्तर्भूपतयोवशाः ॥ ४९ ॥ चतुर्ऋचस्यसूक्तस्य
भरद्वाजोमुनिर्मतः ॥ त्रिष्टुब्जगत्यश्छन्दांसिपूषादैवतमुच्यते ॥ ५० ॥
शुक्रन्तेअन्यद्यजतन्तेअन्यद्विषुरूपेअहनिद्यौरिवासि ॥ विश्वाहिमायाअव
सिस्वधावोभद्रातेपूषन्निहरातिरस्ति ॥ ५१ ॥ अजाश्वःपशुपावाजपस्त्योधि
यंजिन्वोविश्वभुवनेविश्वेअर्पितः ॥ अष्ट्रांपूषासिपिरामुदरीवृजतसञ्चक्षाणोभु

१ अगस्त्यवृक्षकी जड़ ॥

वनादेवईयते ॥ ५२ ॥ यास्तेपूषन्नावोअन्तःसमुद्रेहिरण्यैमनुलिक्षचरन्ति ॥
ताभिर्यासिदूत्यासूर्य्यास्यकामेनकृतश्रवइच्छमानः ॥ ५३ ॥ पूषासुबन्धुर्दिव
आपृथिव्याइलस्पतिर्मघवःदस्यवर्चाः ॥ योदेवासोअदद्धुःसूर्य्यायैकामनकृत
न्तवसस्यचस् ॥ ५४ ॥ समूलत्रिफलाचैलाकेशरञ्चमनःशिला ॥ एभियुक्तै
र्जलैःस्नायाद्भार्गवस्यतुतुष्टये ॥ ५५ ॥ श्वेतोवाजीतथारौप्यंचन्दनंचसिता
म्बरम् ॥ घृतन्दद्याच्छुक्रतुष्ट्यैतदभावेतुतण्डुलाः ॥ ५६ ॥ मधौसितनवम्या
ञ्चरामोजातश्चभार्गवः ॥ रामःपुनर्वसौशुक्रोमघायामेतदन्तरम् ॥ ५७ ॥
शनिमन्त्रंप्रवक्ष्यामिसिन्धुद्वीपोमुनिर्मतः ॥ गायत्रीछन्दइत्युक्तंदेवतातुशनै
श्चरः ॥ ५८ ॥ शन्नोदेवीरभिष्टयआपोभवन्तुपीतये ॥ शंयोरभिश्रवन्तुनः ॥
५९ ॥ शंवीजेनषडङ्गानिकुर्य्याद्ध्यानंततश्चरेत् ॥ शशासनंशूलधरमिन्द्रनी
लसमद्युतिम् ॥ ६० ॥ सौराष्ट्रदेशजंप्रोक्तंवरदंगृध्रवाहनम् ॥ भृग्वार्य्यकाश्यप
गोत्रंकिरीटेनविभूषितम् ॥ ६१ ॥ कृष्णाम्बरंकृष्णवर्णंकृष्णगन्धानुलेपनम् ॥
गायत्रीछन्दसंदेवंकृष्णाभरणभूषितम् ॥ ६२ ॥ प्रजापत्यधिदेवेनसहितञ्च
समास्थितम् ॥ यमप्रत्यधिदेवेनयुक्तंध्यात्वासमर्चयेत् ॥ ६३ ॥ कस्तूरीयुक्तैः
कृष्णचूर्णैरचितमण्डले ॥ होमश्शमीसमिद्भिःस्यादायसार्घेणतर्पणम् ॥ ६४ ॥
कृष्णपुष्पैश्चन्दनन्तुकालीयैरगुरुंहुनेत् ॥ मुनिर्हिरण्यगर्भोस्यत्रिष्टुप्छन्द
उदाहृतम् ॥ ६५ ॥ नियोगःशनिप्रीत्यर्थेनानापीडाविनाशने ॥ ब्रह्मयज्ञान
मितिचमन्त्रमत्रतुकीर्त्तयेत् ॥ ६६ ॥ यमायसोमंसुनुतयमायजुहुताहविः ॥
यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः ॥ ६७ ॥ शनेरुपासकोनित्यंकृशरंभक्षये
न्नरः ॥ व्याघ्रीजटागलेधार्य्याभ्यङ्गःकार्यश्चनित्यशः ॥ ६८ ॥ शनिमन्त्रेतुसं
सिद्धेसंसिद्धामनवोखिलाः ॥ तस्यफूत्कारमात्रेणविनश्यन्त्यखिलागदाः ॥
६९ ॥ नवर्चस्यतुसूक्तस्यसिन्धुद्वीपोमुनिर्मतः ॥ वर्द्धमानाप्रतिष्ठावानुष्टुप्
चैवसमीरिताः ॥ ७० ॥ छन्दांसिदेवताआपोनियोगःशनितुष्टये ॥ एतासां
जपतःपापंकामजातंविनश्यति ॥ ७१ ॥ आपोहिष्ठामयोभुवस्तानऊर्ज्जेद
धातन ॥ महेरणायचक्षसे ॥ ७२ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥

---

१ भटकटैया ॥

उशतीरिवमातरः ॥ ७३ ॥ तस्माअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपो जनयथाचनः ॥ ७४ ॥ शन्नोदेवीरभिष्टयआपोभवन्तुपीतये ॥ शंयोरभिस्र वन्तुनः ॥ ७५ ॥ ईशानावार्य्याणांक्षयन्तीश्चर्षणीनाम् ॥ अपोयाचामिभेष जम् ॥ ७६ ॥ अप्सुमेसोमेअब्रवीदन्तर्विश्वानिभेषजा ॥ अग्निञ्चविश्वश म्भुवम् ॥ ७७ ॥ आपःपृणीतभेषजंवरूथन्तन्वेमम ॥ ज्योक्चसूर्य्यंदृशे ॥ ७८ ॥ इदमापःप्रवहतयत्किञ्चदुरितंमयि ॥ यद्वाहमभिदुद्रोहयद्वाशेपउतानृत म् ॥ ७९ ॥ आपोअद्यान्वचारिषंरसेनसमगस्महि ॥ पयस्वानग्नआगहितंमा संसृजवर्चसा ॥ ८० ॥ रसाञ्जनंकृष्णतिलाःशतपुष्पाघनोबला ॥ लज्जालु लोध्रयुक्ताभिरद्भिःस्नानेशनेर्मुदा ॥ ८१ ॥ कृष्णागौर्महिषीलोहन्तैलंसीसन्तु तुष्टये ॥ शनेर्दद्यादशक्तस्तुलोहंवामरटानपि ॥ ८२ ॥ ज्येष्ठमासेकृष्णपक्षेच तुर्दश्यामसृग्दिने ॥ रोहिण्यांसूर्य्यतोजातःशनिस्तत्रार्च्चनंमुदे ॥ ८३ ॥ राहोर्म न्त्रंप्रवक्ष्यामिवामदेवोमुनिर्मतः ॥ गायत्रीछन्दइत्युक्तंसैंहिकेयस्तुदेवता ॥ ८४ ॥ कयानश्चित्रआभुवदूतिसदावृधःसखा ॥ कयासचिष्टयावृता ॥ ८५ ॥ रांबीजेनषडङ्गानिध्यानमस्यानिरूप्यते ॥ करालवदनंखड्गचर्म्मशूलधरंबृहत् ॥ ८६ ॥ कृष्णाम्बरंकृष्णवर्णंकृष्णगन्धानुलेपनम् ॥ कृष्णपुष्पैःपुज्यमानङ्क्रू रमुकुटान्वितम् ॥ ८७ ॥ पूर्वदेशेसमुत्पन्नंक्रूरमान्तीरसार्पकम् ॥ पाटलीगोत्र संभूतमनुष्टुप्छन्दसंग्रहम् ॥ ८८ ॥ कृष्णच्छत्रंरथारूढंकृष्णध्वजपताकिनम् ॥ सर्पाधिदेवतायुक्तंकालप्रत्यधिदैवतम् ॥ ८९ ॥ इत्थंसञ्चिन्त्यनैर्ऋत्येनक्राकारे तुमण्डले ॥ द्वादशांगुलविस्तीर्णेपूजयेच्छ्यामलाक्षतैः ॥ ९० ॥ दूर्वाभिर्म धुरक्ताभिरस्यहोमोविधीयते ॥ तर्प्पणादिरिहद्रव्यैःकौलिकांस्तर्प्पयेद्द्विजान् ॥ ९१ ॥ सर्पराज्ञीमुनिःप्रोक्तोगायत्रंछन्दईरितम् ॥ सर्पाश्चदेवताःप्रोक्तानियो गोराहुतुष्टये ॥ ९२ ॥ आयंगौःपृष्णिरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्रय न्स्वः ॥ ९३ ॥ कण्वाचार्य्योमुनिःप्रोक्तोगायत्रंछन्दईरितम् ॥ देवतातुभवेत्का लोनियोगोराहुतुष्टये ॥ ९४ ॥ मापुणःपरापरानिर्ऋतिर्दुर्हणावधीत् ॥ यदी ष्टतृष्णयासह ॥ ९५ ॥ भक्षयेत्तुसदामापान्दूर्वामूलंचधारयेत् ॥ ननिन्दे

---

१ नागरपोथी ररुनाक ॥

न्निन्द्यकर्म्मस्थान्वन्दीमोक्षणमाचरेत् ॥ ९६ ॥ राहोर्मन्त्रस्यसिद्धौतुदैत्य राक्षसदर्शनम् ॥ कुर्वन्तुसाधकाज्ञांतुसदैवसमरेजयः ॥ ९७ ॥ पञ्चदशर्चं सूक्तस्यवामदेवोमुनिर्मतः ॥ छन्दोनिवृच्चगायत्रीदेवतादेवनायकः ॥ ९८ ॥ कयानश्चित्रआभुवदूतिसदावृधःसखा ॥ कयासचिष्ठयावृता ॥ ९९ ॥ क स्त्वासत्योमदानामंहिष्ठोमत्सदन्धसः ॥ दृढाचिदारुजेवसुम् ॥ १०० ॥ अ भीषुणःसखीनामविताजरितॄणाम् ॥ शतंभवास्यूतिभिः ॥ १ ॥ अभीनआ ववृत्स्वचक्रंनवृत्तमहतः ॥ नयुद्भिश्चर्षणीनाम् ॥ २ ॥ प्रवताहिक्रतुनामाहा पदेवगच्छसि ॥ अभक्षिसूर्य्येसच ॥ ३ ॥ संयत्तइन्द्रमन्यवःसञ्चक्राणिदध न्विरे ॥ अधत्वेअधसूर्य्ये ॥ ४ ॥ उतस्माहित्वामाहुरिन्मघवानंशचीपते ॥ दातारमविदीदयुम् ॥ ५ ॥ तस्मासद्यइत्यरिशशमानायसुन्वते ॥ पुरोचिन्म हसेवसुः ॥ ६ ॥ महिष्मतेशतंवनशधोवरन्तआसुरः ॥ नव्यौत्मानिक रिष्पतः ॥ ७ ॥ अस्मांअवन्तुतेशतमस्मात्सहस्रमूतयः ॥ अस्मान्वि श्वाअभीष्टयः ॥ ८ ॥ अस्मांइहावृणीषसख्यायस्वस्तये ॥ महोरायेदिविन्म ते ॥ ९ ॥ अस्मांअविदिविश्वहेन्द्ररायापरिणस ॥ अस्मान्विश्वाभिरूति भिः ॥ १० ॥ अस्मभ्यंताअपाविविव्रजांअस्तेवगोमतः ॥ नवाभिरिन्द्रोति भिः ॥ ११ ॥ अस्माकंधृष्णुयारथोद्युमांइन्द्रानपच्युतः ॥ गव्युरपुरीयतो ॥ १२ ॥ अस्माकमुत्तमंकृधिश्रवोदेवेषुसूर्य्य ॥ वर्षिष्ठंद्यामिवोपरि ॥ १३ ॥ नागवल्लीनागवलाकुमारीचक्रमास्करैः ॥ वचागुडूचीतगरैःस्नानंपात्रचतुष्ट ये ॥ १४ ॥ सीसकंकम्बलंस्वर्णमेषंदद्याच्चतुष्टये ॥ राहोरेतदभावेतुत्रिपुरान्स म्प्रदापयेत् ॥ १५ ॥ आश्विनेपौर्णमास्यांतुभरण्यांसिंहिकासुतम् ॥ जन यामातस्मिंस्तंविशेषेणार्चयेन्मुदे ॥ १६ ॥ केतुमन्त्रंप्रवक्ष्यामिमधुच्छन्दा मुनिर्मतः ॥ देवताकेतवःप्रोक्तागायत्रंछन्दईरितम् ॥ १७ ॥ केतुंकृण्वन्नकेत वेपेशोमर्य्याअपेशसे ॥ समुषद्भिरजायथाः ॥ १८ ॥ कंबीजेनषडङ्गानिध्या नमत्रनिरूप्यते ॥ धूम्राक्षबाहवःपाशधराश्चविकृताननाः ॥ १९ ॥ किरीटि नोगृध्रवाहामध्यदेशोद्भवाद्दढाः ॥ चित्राम्बराश्चित्रवर्णाश्चित्रगन्धानुलेप नाः ॥ २० ॥ नानाछन्दस्ककागौतमार्य्याजैमिनिगोत्रजाः ॥ कृष्णपिङ्गच

जपताकिनोमुकुटिनस्तथा ॥ २१ ॥ केयूरिणोरथारूढाःस्थूलाब्रह्माधिदेवता ॥ चित्रगुप्ताख्यप्रत्यधिदेवताश्चेतिचिन्तयेत् ॥ २२ ॥ सार्धांगुलेध्वजाकारेवा यंव्यांमण्डलेकृते ॥ चित्रवर्णाक्षतैःपुष्पैस्तत्रावाह्यसमर्चयेत् ॥ २३ ॥ वर्णलक्षं जपेन्मन्त्रंकुशहोमःप्रकीर्त्तितः ॥ मधुरत्रयसंयुक्तश्चित्रद्रव्यैःप्रपूजयेत् ॥ २४ ॥ वामदेवोमुनिःप्रोक्तस्त्रिष्टुप्छन्दउदाहृतम् ॥ ब्रह्मास्यदेवताकेतुप्रीतयेविनियो जनम् ॥ २५ ॥ ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्नि याउपमाअस्यविष्ठास्सतश्चयोनिमसतश्चविवः ॥ २६ ॥ प्रस्कण्वस्तुमुनिः प्रोक्तोबृहतीछन्दईरितम् ॥ देवताचित्रगुप्तोत्रनियोगःकेतुतुष्टये ॥ २७ ॥ उ पोवाजंहिवंस्वयश्चित्रोमानुषेजने ॥ तेनावहसुकृतोअध्वरांउपयेत्वागृणन्तिव ह्नयः ॥ २८ ॥ सदेवोब्रह्मवेषःस्यान्निम्नेनोपविशेत्क्वचित् ॥ नाश्नीयाद्दग्धम न्नादिकेतुसेवनतत्परः ॥ २९ ॥ केतुमन्त्रस्यसिद्धौतुलिङ्गंसर्वत्रमान्यता ॥ बहुधातुभवेद्गुप्तोदृश्योनसाधकोत्तमः ॥ ३० ॥ दशर्चस्यतुसूक्तस्यमधुच्छ न्दामुनिःस्मृतः ॥ देवतेचन्द्रमरुतौगायत्रंछन्दउच्यते ॥ ३१ ॥ युञ्जन्तिब्रध्न मरुषंचरन्तम्परितस्थुषः ॥ रोचन्तेरोचनादिवि ॥ ३२ ॥ वीलुचिदारुजन्तुभिर्गु हाविदिन्द्रवह्निभिः ॥ अविन्दउस्त्रियाअनु ॥ ३३ ॥ देवयन्तोयथामतिमच्छावि दद्वसुङ्गिरः ॥ महामनूषतश्रुतम् ॥ ३४ ॥ इन्द्रेणसहिदृक्षसेयजमानोअबिभ्यु षा ॥ मन्दूसमानवर्चसा ॥ ३५ ॥ अनवद्यैरभिरघूमिमारवस्वद्हस्वदर्चतिस् ॥ गणै रिन्द्रस्यकाम्यैः ॥ ३६ ॥ अतःपरिज्मन्नागहिदिवोवारोचनादधि ॥ समस्मिन्न ृञ्जतेगिरः ॥ ३७ ॥ इतोवासातिमीमहेदेवोवापार्थिवादधि ॥ इन्द्रंमाहोवारज सः ॥ ३८ ॥ सहदेवीचलज्जालुबलमुस्तप्रियङ्गवः ॥ एतद्युक्तजलस्नानात्प्रसी दतिसदाशिखी ॥ ३९ ॥ ऊर्णवस्त्रमजापुत्रंध्वजञ्चापिपताकिका ॥ पीताभाङ्के तुतुष्ट्यैतुदद्याद्दाराजमाषकान् ॥ ४० ॥ आषाढस्यसितेपक्षेरौद्रभेकेतवोभवन् ॥ अतश्चार्कदिनेकार्य्यःकेतूनान्तुमहोत्सवः ॥ ४१ ॥ इत्थंवैदिकमार्गेणकथितं ग्रहपूजनम् ॥ येकुर्वन्तिसदातेषांसिद्धिःकरतलेस्थिता ॥ ४२ ॥ ग्रहाराधनशी लानामिहलोकेपरत्रच ॥ सुखंस्यादथकिंवच्मितद्ब्रुवन्त्विहदेवताः ॥ ३४३ ॥

इति श्रीमहामाय.महाकालानुमतेमेरुतन्त्रेशिवप्रणीतेनवग्रहकथनप्रकाशस्त्रयोदशः ॥ १३ ॥

श्रीदेव्युवाच ॥ भगवन्देवदेवेशगुरुणाज्ञानिनायदा ॥ लोभेनदत्तोमन्त्र
श्चेदतोदुःखमवाप्यते ॥ १ ॥ तदाकिंदेवकर्त्तव्यंयदासौख्यंनजायते ॥ इह
लोकेपरत्रापियेनसंलभ्यतेसुखम् ॥ २ ॥ श्रीमहादेवउवाच ॥ प्रायःकलियुगे
देविगुरवोलोभसंयुताः ॥ शिष्यास्सुखेप्सवोऽभक्ताअतोनकापिसिद्धयः ॥
३ ॥ प्रायोमन्त्रग्रहस्तेनदुःखायैवोपजायते ॥ तदर्थंसम्प्रवक्ष्यामिसर्वतन्त्रेषु
गोपितम् ॥ ४ ॥ मन्त्रत्यागंप्रथमतःकृत्वाप्रत्यङ्गिराम्भजेत् ॥ मन्त्रत्यागवि
धिंवक्ष्येयेनसञ्जायतेसुखम् ॥ ५ ॥ विद्वांसंब्राह्मणंज्ञात्वातन्त्रेषुपरिनिष्ठितम् ॥
प्रातस्तस्यगृहंगत्वास्वीयंदुःखंनिवेदयेत् ॥ ६ ॥ ततस्तेनप्रकर्त्तव्योमन्त्रत्याग
विधिःपरः ॥ तत्रादौरम्यभवनेकुम्भंदीक्षाविधानतः ॥ ७ ॥ मण्डलेस्थापयि
त्वातुयुतंतीर्थजलैःशुभैः ॥ विलोमंतन्त्रमन्त्रेणतत्रावाह्येष्टदेवताम् ॥ ८ ॥
सकलीकृत्यसम्पूज्यावरणञ्चप्रपूजयेत् ॥ एवंसावरणांमन्त्रीसमभ्यर्च्येष्टदेवता
म् ॥ ९ ॥ हुनेद्विलोममन्त्रेणगोघृतेनसहस्रकम् ॥ अष्टान्वितंशतंवापिततः
सन्तर्प्पयेदमुम् ॥ १० ॥ब्रह्मार्पणेनमनुनादेवताभ्योबलिन्ततः ॥ यवान्नैश्चा
पिदुग्धान्नैर्दिग्विदिक्षुचऊर्ध्वतः ॥ ११ ॥ आयाहीन्द्रसुराधीशशातमन्योशची
पते ॥ नमस्तुभ्यंगृहाणेमंपुष्पधूपादिकंबलिम् ॥ १२ ॥ आयाहितेजसांनाथ
हव्यवाहवरप्रद ॥ गृहाणपुष्पधूपादिबलिमेनंप्रयोजितम् ॥ १३ ॥ प्रेतनाथ
त्वमायाहिभिन्नाञ्जनसमद्युते ॥ बलिन्दत्तंगृहाणेमांसुप्रीतोवरदोभव ॥ १४ ॥
नमस्तेरक्षसांनाथनिर्ऋतेत्वमिहागतः ॥ गृहाणबलिपूजादिमयाभक्त्यानिवे
दितम् ॥ १५ ॥ एहिपश्चिमदिक्पालजलनाथनमोस्तुते ॥ भक्त्यानिवेदितां
पूजांगृहीत्वासुखमाप्नुहि ॥ १६ ॥ प्रभञ्जनप्राणपतेत्वमेहिसपरिच्छदः ॥
मयाप्रयुक्तंविधिवद्गृहाणबलिमादरात् ॥ १७ ॥ कुवेरतारकाधीशावागच्छे
तांसुरोत्तमौ ॥ पुष्पधूपादिभिःप्रीतौभवतांवरदौमम ॥ १८ ॥ ईशत्वमेहिभ
गवन्सर्वविद्याश्रयप्रभो ॥ पूजितःपुष्पधूपाद्यैःप्रीतोभवविभूतये ॥ १९ ॥ आ
याहिसर्वलोकानांनाथब्रह्मन्समर्चनम् ॥ गृहाणसर्वविप्राग्रयजगत्कर्त्रेनमोस्तु

१ ॐतत्सत्प्राणबुद्धिदेहधर्माधिकारजाग्रत्स्वप्नसुषुप्त्यवस्थासुमनसावाचाकर्मणाभ्यन्त
रायच्चोदरेणशिष्णवायच्चस्मृतंयद्दुक्तंयच्चकृतन्तत्सर्वंब्रह्मार्पणंभवेद्भूःस्वाहा ॥

ते ॥ २० ॥ आगच्छवरदश्रेष्ठविष्णोविश्वस्यनायक ॥ पूजितःपरयाभक्त्या भवत्वंसुखदोमम ॥ २१ ॥ ततःसपरिवारांयःपूजयेन्मन्त्रदेवताम् ॥ मन्त्रेण विपरीतेनपुष्पधूपोपचारकैः ॥ २२ ॥ ततस्तुप्रार्थयेद्विद्वान्पूजितांमन्त्रदेवता म् ॥ अनुकल्पादिनालोच्यमयातरलबुद्धिना ॥ २३ ॥ उपात्तोदुःखदोमन्त्र स्तद्दोषंविनिवर्त्तय ॥ पापंप्रतिहतंमेस्तुभूयाच्छ्रेयःसनातनम् ॥ २४ ॥ तनो तुममकल्याणंपावनीभक्तिरेवतु ॥ इतिसम्प्रार्थ्यमन्त्रेशंमन्त्रंयन्त्रेविलोमतः ॥ २५ ॥ विलिख्यामलकर्पूरचन्दनेनसमर्पयेत् ॥ कलशोपरिसंस्थाप्यभक्त्यापर मयायुतः ॥ २६ ॥ तद्यन्त्रंस्वस्यशिरसिबद्ध्वास्नायाद्घटोदकैः ॥ मन्त्रपूतैः पुनश्चान्यंकुम्भंतोयैःप्रपूरयेत् ॥ २७ ॥ तन्मध्येमन्त्रयन्त्रंच निक्षिप्याथप्रपूर येत् ॥ तंकुम्भंनिम्नगायांचशुद्धेवान्यजलाशये ॥ २८ ॥ विसृजेदथविप्रांश्च यथाशक्त्याप्रपूजयेत् ॥ इत्थंकृतविधानस्यदुर्लभस्यमनोरुजः ॥ २९ ॥ विन श्यन्तिनसन्देहःक्रमाच्चित्तप्रसन्नता ॥ जायतेऽतीवसम्पन्नावर्धतेतत्कुलंसदा ॥ ३० ॥ अथप्रत्यङ्गिरांवक्ष्येसारभूतांसुखप्रदाम् ॥ यद्भक्तस्यदृशःपाताद्भूतप्रेता धिदेवताः ॥ ३१ ॥ कदाचिन्नाभिगच्छन्तिसाध्यसिद्धिःप्रजायते ॥ शान्तिं पुष्टिंसमृद्धिंचसाधकायप्रयच्छति ॥ ३२ ॥ कुलद्वयविदात्मादिमन्त्रार्थज्ञान कोविदः ॥ आचारसंयुतःशुद्धवाक्शुद्धोमनसातथा ॥ ३३ ॥ शान्तबुद्धिः प्रसन्नात्माजितक्रोधोजितेन्द्रियः ॥ दम्भाहङ्कारमोहादिविकलोज्ञानवित्त मः ॥ ३४ ॥ ध्यानयोगसमारूढःसर्वाभीष्टप्रसाधकः ॥ मन्त्रराजमिमंलब्ध्वा जायतेसचभूपतिः ॥ ३५ ॥ विनियोगमथ्येवक्ष्येचत्वारिंशद्वचस्तथा ॥ प्र त्यङ्गिरामुनिःप्रोक्तश्छन्दोनुष्टुप्प्रकीर्तितम् ॥ ३६ ॥ उग्राकृत्यादेवतास्तिम हादेवोथवाहरिः ॥ विनियोगोत्रसर्वेषुत्वभीष्टेषुतथाविधः ॥ ३७ ॥ आदौशरी रशुद्ध्यर्थंप्राजापत्यंव्रतंचरेत् ॥ कुशोदकेनसंशोध्यपञ्चगव्येनवैपुनः ॥ ३८ ॥ चरुंहविष्यंभुञ्जानःशतमष्टोत्तरंजपेत् ॥ दिनत्रयंततःसिद्धंमन्त्रंकार्य्येषुयोजये त् ॥ ३९ ॥ दिक्पालमुद्रासनपल्लवानांविधिंपरिज्ञायजपेत्सुमन्त्रम् ॥ नचा न्यथासिद्ध्यतितस्यमन्त्रःपूतःसदायद्भिलमन्त्रराजः ॥ ४० ॥ लङ्घयेत्प्रत्यरी न्सर्वानभीष्टंचैवजायते ॥ प्रयुक्तोत्राग्रणेमन्त्रोविपरीतफलोभवेत् ॥ ४१ ॥ ज

पादौवाप्रयोगादौपुरश्चर्य्यादिकेतथा ॥ आदौशान्तिंप्रकुर्वीततद्विधानंनि गद्यते ॥ ४२ ॥ बार्हस्पत्यःशान्तिमुनिर्विश्वेदेवाःसुरामताः ॥ छन्दश्चश करीप्रोक्ताशान्त्यर्थंविनियोजनम् ॥ ४३ ॥ तच्छंय्योरावृणीमहेगातुंयज्ञाय ॥ गातुंयज्ञपतयेदैवीस्वस्तिरस्तुनः ॥ ४४ ॥ स्वस्तिरस्तुमानुषेभ्यःऊर्ध्वंजिगातु भेषजम् ॥ शंनोअस्तुद्विपदेशंचतुष्पदे ॥ ४५ ॥ नमोब्रह्मणेनमोअस्त्वग्नये ॥ नमःपृथिव्यैनमओषधीभ्यः ॥ ४६ ॥ नमोवाचस्पतयेनमोविष्णवेमहतेक रोमि ॥ मद्रंनोअपिवातयमनः ॥ ४७ ॥ उच्चरंस्त्रिस्तारपूर्वंमन्त्रान्तेशान्तिरि त्यपि ॥ गायत्र्यष्टोत्तरशतंजप्त्वाकर्म्मसमारभेत् ॥ ४८ ॥ कर्म्मान्तेपिपुनश्चै वंकृत्वाकर्म्मसमापयेत् ॥ सर्वेषामेवमन्त्राणांबीजमोंशक्तिरत्रह्रीम् ॥ ४९ ॥ तारमायापुटाःसर्वेजप्तव्याःकेवलानहि ॥ तदाक्षिप्रंप्रसिद्ध्यन्तिमन्त्रास्तन्त्रेषु निर्णयः ॥ ५० ॥ अश्विनौतुमुनीप्रोक्तावनुष्टुप्छन्दईरितम् ॥ कृत्यात्रदेवता चास्यविनियोगोभीष्टसिद्धये ॥ ५१ ॥ यांकल्पयन्तिनोरयःक्रूरांकृत्यांवधूमिव ॥ तांब्रह्मणाअपनिर्णुद्मप्रत्यक्कर्त्तारमृच्छतु ॥ ५२ ॥ नोंगत्र्यध्याधिवेदेषुनाग वर्णैर्दुर्वादिकैः ॥ ह्रींबीजान्तैःषडङ्गानिमन्त्रस्यतुसमाचरेत् ॥ ५३ ॥ शिरो भ्रूमध्यवक्त्रेषुकण्ठेबाहुद्वयेहृदि ॥ नाभावूर्वोर्जानुनोश्चपदानिपदयोर्न्यसेत् ॥ ५४ ॥ चतुर्दशक्रमान्मन्त्रीतःस्मायापुटान्यपि ॥ ततोध्यायेत्सिंहमुखींमुक्तके शांदिगम्बराम् ॥ ५५ ॥ असिचर्म्मकरांश्यामांदंष्ट्राग्रांसर्वभूषणाम् ॥ ग्रसन्ती

---

१ ॐम् २ ह्रीम् ३ इस मन्त्रके ब्रह्माऋषि, अनुष्टुप्छन्द, प्रत्यङ्गिरादेवता, ॐ बीज, ह्रींशक्ति, और कृत्या नाशनेके लिये विनियोगहै– ॐ ह्रीं इस से सम्पुटित करने से इस मन्त्रमें सैंतिस अक्षर होते हैं ४ आठ, तीन, चार, चार, चार, पांच और आठ अक्षरों के आदि में ॐ, तथा, अन्तमें ह्रीं मिलाकर षडङ्ग न्यास करना, जैसे ॐ यां कल्पयन्तिनो रयः ह्रीं हृदयायनमः, ॐ क्रूरांकृत्यां ह्रीं शिरसे स्वाहा, ॐ वधूमिव ह्रीं शिखायैवषट्, ॐ तां ब्रह्मणा ह्रीं कवचायहुम्, ॐ अपनिर्णुद्मह्रीं नेत्रत्रयायवौषट्, ॐ प्रत्यक्कर्त्तारमृच्छतु ह्रीं अस्त्राय फट्– एक, चार, एक, दो, दो, दो, दो, एक, तीन, पांच, दो, तीन, और तीन अक्षरों के प्रथम ॐ तथा अन्तमें ह्रीं मिलाकर शिरआदि मूलोक्त चौदह स्थानों में पदन्यास होता है जैसे ॐ यां ह्रीं शिरसि, ॐ कल्पयन्तिह्रीं भ्रूमध्ये, ॐ नोह्रीं मुखे, इसी रीति से और भी करलेना ५ भुवनाम ॐकारकाहै ॥

माहितारुद्रतेजसाध्यानमीरितम् ॥ ५६ ॥ अयुतंप्रजपेन्मन्त्रंहोमस्तस्यदशांशतः ॥ अपामार्गसमिद्भिस्तुहोमोहव्यघृतादिभिः ॥ ५७ ॥ त्रिकोणेचार्चयेदेवींपद्मदलेष्वङ्गपूजनम् ॥ लोकपालास्तदस्त्राणिपूजयेदित्थमर्चनम् ॥ ५८ ॥ एवंसिद्धमनुर्मन्त्रीप्रयोगेषुशतंजपेत् ॥ जुहुयाच्चशतंदिक्षुदशमन्त्रैर्बलिंहरेत् ॥ ५९ ॥ यो[1] मेपूर्वगतःपाप्मापापकेनेहकर्म्मणा ॥ इन्द्रस्तन्देवमुच्चार्य्यराजान्तेभञ्जयत्विति ॥ ६० ॥ अञ्जयत्वितिचोच्चार्य्यमोहयत्वितिचोच्चरेत् ॥ नाशयतुपदंपश्चान्मारयत्वित्यतोबलिम् ॥ ६१ ॥ तस्मैप्रयच्छतुक्तंममान्तेचशिवंमम ॥ शान्तिःस्वस्त्ययनंचास्तुबलिमन्त्रउदाहृतः ॥ ६२ ॥ प्रणवाद्योष्टपञ्चवर्णस्तेनैववितरेद्बलिम् ॥ अस्मिन्मन्त्रेपूर्वपदस्थानेऽग्नादिपदंवदेत् ॥ ६३ ॥ इन्द्रइत्यादिकस्थानेअग्निरित्यादिकंपठेत् ॥ एवंतुदशमन्त्राःस्युस्तत्तद्दिक्षुबलिंहरेत् ॥ ६४ ॥ एवंकृतेशत्रुकृताकृत्याद्विप्रंविनश्यति ॥ ६५ ॥ प्रत्यङ्गिरामुनिःप्रोक्तोनुष्टुप्छन्दःप्रकीर्त्तितम् ॥ कृत्यातुदेवताचास्यनियोगोरिपुनिग्रहे ॥ ६६ ॥ शीर्षण्वतींकर्णवतींविष्णुरूपांभयङ्करीम् ॥ यःप्राहिणोदिहाद्यत्वंनित्यंयोजयस्वस्तिभिः ॥ ६७ ॥ वामदेवोऋषिःप्रोक्तोगायत्रीछन्दईरितम् ॥ कृत्यातुदेवताप्राग्वन्नियोगोरिनिवर्त्तने ॥ ६८ ॥ येनदिष्टयेहवदसिप्रतिपूरमघापिनि ॥ तमेवातोनिवर्त्तस्वमास्याम्यत्सोअनागसः ॥ ६९ ॥ मुनिर्वृद्धवशिष्ठोस्यच्छन्दोनुष्टुप्प्रकीर्त्तितम् ॥ देवःकालाग्निरुद्रोत्रनियोगोरिविनाशने ॥ ७० ॥ अभिवर्त्तस्यकर्त्तरि निरस्तांताभिरोजसा ॥ आयुरस्यनिकृन्तस्यप्रजाश्चपुरुषादिनि ॥ ७१ ॥ ऊर्ध्वास्योस्यमुनिःप्रोक्तोनुष्टुप्छन्दउदाहृतम् ॥ देवतायातुधान्योभिचारनाशेनियोजनम् ॥ ७२ ॥ यस्त्वाकृत्येचकारेहत्वंतंगच्छपुनर्नवे ॥ आसतीःकृत्यानाशायसर्वास्तुयातुधान्यः ॥ ७३ ॥ आसाम्प्रयोगंवक्ष्यामिपञ्चानामद्भुतंभुवि ॥ इदंपञ्चर्चकंसूक्तंशुक्लाष्टम्यांसमा

---

[1] योमेपूर्वगतःपाप्मापापकेनेहकर्म्मणा इन्द्रस्तंदेवराजाभञ्जयतुअञ्जयतुमोहयतुनाशयतुमारयतु ग्रतःबलितस्मैप्रयच्छतुक्तंममशिवंममशान्तिः स्वस्त्ययनंचास्तु इस मन्त्रसे पूर्व में इन्द्रकी पूजाकरे इसी रीति से पूर्वपदकी जगहमें आग्नेय, दक्षिण आदि पदों को जोड़कर इन्द्रकी जगह अग्नि, यम आदिकों को मिलाने से दश दिक्पालों के बलि मन्त्र जानलेना उन्हीं मन्त्रों से उनकी दिशों में उनकी पूजा समझना ॥

रमेत् ॥ ७४ ॥ सुमासिपौर्णमास्यायामुदुम्बरभवंसमम् ॥ आनयेद्दण्डमेकं
तुपुरुषस्यप्रमाणतः ॥ ७५ ॥ शतनामस्मरन्दण्डंगृहीत्वाष्टोत्तरंशतम् ॥ सूक्तं
जपेत्तदाशातिर्द्दह्यतेसमहाग्रहैः ॥ ७६ ॥ यदिप्रतिपदारम्भात्कर्म्मचैतत्समा
चरेत् ॥ अष्टमादेशमात्रन्तुदण्डंवैभीतकंसमम् ॥ ७७ ॥ गृहीत्वोच्चार्य्यारि
नामजपेत्सूक्तंतदारिपुः ॥ महाव्याधिगृहीतोसौम्रियतेनात्रसंशयः ॥ ७८ ॥
कारस्करस्यचार्कस्यसमिधोग्निमुखोद्भवैः ॥ तैलैराक्ताहुनेत्सप्तरात्रमष्टोत्तरंश
तम् ॥ ७९ ॥ शत्रुनाशोभवत्येवमथवाकेवलंजपम् ॥ मासमेकंप्रकुर्वीतरि
पुर्मृत्युमवाप्नुयात् ॥ ८० ॥ श्मशानकाष्ठमध्यात्तुतालपत्रेलिखेद्रिपोः ॥
ईश्वरस्यालयेनामवर्णान्मन्त्रेणगर्भितान् ॥ ८१ ॥ अष्टोत्तरशतंजप्त्वाभू
मौप्रादेशमात्रके ॥ निखनेत्तत्क्षणादेवज्वरःशत्रोःप्रजायते ॥ ८२ ॥ तत्क्षणं
नाशमायातिप्रयोगान्तेतुदक्षिणाः ॥ दद्याद्गोभूहिरण्यादियथाशक्त्येतितद्वि
धिः ॥ ८३ ॥ महादेवोमुनिः प्रोक्तोनुष्टुप्छन्दःप्रकीर्तितम् ॥ कृत्यातुदेवता
चास्यनियोगोरिपुनिग्रहे ॥ ८४ ॥ क्षिप्रंकृत्येनिवर्त्तस्वकर्त्तुरेवगृहंप्रति ॥ प
शूंश्चैवास्यनाशयवीर्य्यंचास्यानिबर्हय ॥ ८५ ॥ अगस्त्योस्यमुनिःप्रोक्तो
नुष्टुप्छन्दःप्रकीर्त्तितम् ॥ कृत्यातुदेवताप्रोक्तानियोगोरिपुतक्षणे ॥ ८६ ॥
यस्त्वांकृत्येचकारेहविद्वानपिउपग्रहान् ॥ तस्यैवातःपरावृत्यतनुंकृन्धियथात
रुम् ॥ ८७ ॥ वशिष्ठोस्यमुनिःप्रोक्तोनुष्टुप्छन्दःप्रकीर्त्तितम् ॥ रुद्रस्तुदेवताप्रो
क्तोनियोगोरिनिकृन्तने ॥ ८८ ॥ प्रतिचित्वावसेधातुब्रह्मणेविष्णुमित्रहम् ॥
अग्निश्चकृत्यंरक्षोहाचोजएकपात् ॥ ८९ ॥ ब्रह्मास्यमुनिराख्यातोऽनुष्टुप्
छन्दःप्रकीर्त्तितम् ॥ कृत्यातुदेवताप्रोक्तानियोगोरिनिकृन्तने ॥ ९० ॥ यथा
त्वांगिरसःपूर्वेभृगवश्चायसेधिरे ॥ अत्रयश्चवशिष्ठश्चतथैवनायसेधिमाम् ॥
९१ ॥ अग्निरस्यमुनिःख्यातस्त्रिष्टुप्छन्दःप्रकीर्त्तितम् ॥ कृत्यातुदेवताप्रो
क्तानियोगोरिनिकृन्तने ॥ ९२ ॥ यस्तेपरूंषिसदधौरथस्यैवंविभूर्धिया ॥ तन्त्र
च्छतगतेजननन्नास्तेजनोयतः ॥ ९३ ॥ अथवक्ष्येऽस्यचोक्तस्यपञ्चर्चस्य
विधिंशुभम् ॥ भुञ्जानःकपिलाक्षीरमनुवाकंत्र्यहंजपेत् ॥ ९४ ॥ क्षुत्तृड्
द्वन्द्वादिरहितोब्रह्मचर्य्यरतोभवेत् ॥ प्रयोगेस्मिंस्तुविज्ञेयाःकामक्रोधादयोर

यः॥९५॥पलाशस्यसमिद्भिस्तुमधुरैर्दधिभिःप्लुतैः॥हुनेदष्टसहस्रंतुब्रह्मवर्चस्य वान्भवेत्॥ ९६ ॥ गौरत्रदक्षिणाप्रोक्तापलाशसमिधोहुनेत्॥ दुग्धाश्चाष्ट शतकंसप्तभिर्दिवसैर्ग्रहाः ॥ ९७ ॥ उपग्रहाःपलायन्तेशान्तिःसर्वत्रजायते॥ एवंहुत्वापिप्पलस्यसमिद्भिर्यशआप्नुयात् ॥ ९८ ॥ नदीतीरेश्मशानेचभद्र काल्यालयेपिवा ॥ कृत्वातद्भस्मनोराशिंध्यात्वाजंनामचेतसा ॥ ९९ ॥ जपेदष्टसहस्रंसप्ताहाज्जायतेक्षरी ॥ तदेवभस्माहोरात्रंमन्त्रितंगोष्ठकेक्षि पेत् ॥ १०० ॥ सद्योगश्चसुखंतत्रजायतेनात्रसंशयः ॥ पौर्णमास्या मुपोष्याथरजन्यामंगुलीयकम् ॥ १ ॥ स्वरक्षार्थंचसन्धार्य्यजपेदष्टसहस्र कम् ॥ महाराजसमःसस्यादाज्ञयाविभवेनच ॥ २ ॥ नित्यमष्टोत्तरशतं विष्णोर्देवालयेजपेत् ॥ षण्मासाभ्यन्तरेणैवतस्यपूर्णामनोरथाः ॥ ३ ॥ संवत्सरजपादेवंब्रह्मणासदृशोभवेत् ॥ तिलान्भारशतंदद्याद्दक्षिणातेनपा ठिने॥ ४॥ भृगुर्मुनिरनुष्टुप्चच्छन्दःकृत्याचदेवता ॥ संग्रामविजयेचैव विनियोगःप्रकीर्त्तितः ॥ ५ ॥ योनःकृत्येरणस्थोवाजनोवान्योहिहिंसति॥ तस्यत्वंदेविविद्धाग्निंतनुमृच्छस्वहेलिना ॥ ६ ॥ अगस्त्यस्तुमुनिःप्रोक्त श्छन्दोनुष्टुबुदाहृतम् ॥ देवीकृत्यानियोगस्तुविवादादौजयायच ॥ ७॥ मनःशर्यादेनहविमस्यक्षियन्तंयाकृत्वने ॥ सरस्वतीत्यवकृत्यमच्छिपस्तस्य किञ्चन ॥ ८ ॥ महादेवोमुनिःकृत्यादेवताछन्दईरितम् ॥ अनुष्टुप्चनि योगस्तुविवादादौजयायच ॥ ९ ॥ मनःकश्चिद्दुहारातिर्मनसाप्रतिभूरि णा ॥ दूरस्थोवान्तिकस्थोवातस्यहृद्यमसृक्पिब ॥ १० ॥ मुनिरग्निरनुष्टु प्चच्छन्दःकृत्याचदेवता॥ दुस्साध्यकार्य्यसिद्ध्यर्थंविनियोगोस्यकीर्त्तितः॥ ११ ॥ येनासिकृत्येप्रहिताछद्मनास्मज्जिघांसया ॥ तस्यत्वनेत्राव्यनहीं नस्तहरसाशनिः ॥ १२ ॥ गौतमोमुनिराख्यातोनुष्टुप्छन्दश्चईरितम् ॥ कृत्यामार्गस्थचौरादिनाशायविनियोजनम् ॥ १३ ॥ योनोसिवासःप्रस्था नःपरायातिपराचतम् ॥ तैर्देविरात्र्याःकृत्येनोगमयेमान्निकृन्तय ॥ १४॥ अथैतस्यानुवाकस्यप्रयोगःकीर्त्यतेधुना ॥ शुक्लपक्षप्रदिपदमारभ्यप्रत्यहंजपे त्॥ १५ ॥ अष्टोत्तरसहस्रन्तुपौर्णमास्यन्तमेवच ॥ भक्षयेत्कपिलाक्षीरंह

विष्यौदनमेवच ॥ १६ ॥ श्रोत्रियालयभिक्षांवासर्वकृत्यानिवारणे ॥ सम र्थोदर्शनादेवभवेद्भूतस्यकाकथा ॥ १७ ॥ जयेत्तथापमृत्युंचयक्षगन्धर्वराक्ष सान् ॥ स्कन्दग्रहब्रह्मरक्षोपस्मारादिगदांस्तथा ॥ १८ ॥ सर्वेरोगाविनश्य न्तिवृद्धिश्चैवोत्तरोत्तरम् ॥ सर्वोपद्रवशान्तिःस्याद्भवनेसाधकस्यतु ॥ १९॥ नित्यमष्टोत्तरंहुत्वाघृताक्ताञ्छालितण्डुलान् ॥ सर्वव्याधिविनाशःस्याच्चि वमेवदिनेदिने ॥ २० ॥ अष्टोत्तरसहस्रंतुतिलमाषचरुंहुनेत् ॥ घृताक्तंसर्वरो गाणात्वरितंशान्तिकंस्मृतम् ॥ २१ ॥ पलाशपुष्पंचतिलान्सुरभीघृतसंयुता न् ॥ हुत्वाचाष्टोत्तरशतंमासंतत्सर्वदुःखहृत् ॥ २२ ॥ महोत्पातस्यशान्तिश्च र्जीवेद्वर्षशतंतथा ॥ देयास्वर्णांगुलीयादिदक्षिणामन्त्रपाठिने ॥ २३ ॥ अ ङ्गिरामुनिरुद्दिष्टोगायत्रीछन्दईरितम् ॥ देवोग्निर्विनियोगस्तुसर्वशत्रुनिकृन्त ने ॥ २४ ॥ यश्चवेशद्विपदेस्मानर्दिवेपुचतुष्पदी ॥ निरेस्थानोव्रजास्माभि कर्तुंत्वष्टपदीगृहान् ॥ २५ ॥ मुनिर्ज्वरस्तुभगवांस्त्रिष्टुप्छन्दउदाहृतम् ॥ मृ त्युर्देवोनियोगस्तुजराभवतुशत्रवे ॥ २६ ॥ यंद्विष्मोयश्चद्वेष्टिघायुर्यस्यन संशयः ॥ शुनेपिपृमिवक्ष्यामितंप्रत्यस्मत्वमृत्यवे ॥ २७ ॥ ब्रह्मास्यमुनिरा ख्यातोनुष्टुप्छन्दःप्रकीर्त्तितम् ॥ अग्निर्देवोनियोगस्तुशत्रुविद्वेषणेमतः ॥ २८ ॥ यश्चयायज्ञःशपथोयश्चमामीशयातिनः ॥ ब्रह्माचपकुद्धश्यायाशर्वत त्कन्वषस्पतिम् ॥ २९ ॥ देवताभौमउद्दिष्टोमुनिःकश्यपईरितः ॥ अनुष्टुप्छ न्दउद्दिष्टंनियोगोरिपरायणे ॥ ३० ॥ सबन्धुश्चाप्यबन्धुश्चयोअस्मअभिदा मति ॥ तस्यत्वंसिन्धयिष्टायदावित्सर्पताक्षिरः ॥ ३१ ॥ पञ्चर्चस्यप्रयोगोस्या धुनाचात्रप्रवक्ष्यते ॥ समुद्रगामिनींगत्वाजपेदष्टोत्तरंशतम् ॥ ३२ ॥ जपेन्नि त्यमहोरात्रंसमुद्दिश्यजलाञ्जलीन् ॥ अष्टाविंशतिसंख्याकादेयास्तद्वत्पुनर्जपे त् ॥ ३३ ॥ सप्ताहान्म्रियतेशत्रुरस्यरोगीनसंशयः ॥ विभीतदण्डमाधायचै कशादेशसम्मितम् ॥ ३४ ॥ शत्रुनामस्मरन्धार्य्यंनित्यमष्टोत्तरंशतम् ॥ जपे न्मनुंरिपुकुलंज्ञाताज्ञातंविनश्यति ॥ ३५ ॥ अपराधंविनाद्वेष्टासतुकुष्ठीप्रजा यते ॥ अष्टाविंशतिसङ्ख्यायोपश्यन्भानुंरिपुंस्मरन् ॥ ३६ ॥ अन्वहंप्रजपेच्छ त्रुर्ज्वरेणपरिपीड्यते॥तिलतैलाक्तसमिद्भिर्होमश्चाष्टशतंभवेत् ॥ ३७॥ शत्रो

पुत्रकलत्राश्वगजताद्यंविनश्यति ॥ हिरण्यंदक्षिणांदद्यात्प्रयोगान्तेचश।न्तिकम् ॥ ३८ ॥ प्रायश्चित्तंपुनःकुर्य्यान्मुक्तदोषःप्रजायते ॥ द्विजानादेवभक्तानांजातुकुर्य्यान्नविप्रियम् ॥३९॥ कालाग्निरुद्रोदेवस्तूपमन्युःकथितोमुनिः ॥ बृहतीछन्दउद्दिष्टंनियोगोस्यारिनाशने ॥ ४० ॥ अभिप्रेहिशुभप्राक्षंमुक्ताशुशपथंरथे ॥ शत्रुर्नतिष्ठतिकृत्येवृकोवाविमतोगृहात् ॥ ४१ ॥ मुनिःसप्ततपाःप्रोक्तोबृहतीछन्दईरितम् ॥ ज्वलनोदेवताचास्यनियोगोरिपलायने ॥ ४२ ॥ परिणोवृद्धिशपथादहन्नग्निरिवह्रदे ॥ शत्रूनेवाभिनोजेहिदिव्याद्यमिवाशनिः ॥ ४३ ॥ अङ्गिरास्तुमुनिश्छन्दोनुष्टुप्कृत्याचदेवता ॥ गजाजतुरगादीनांनियोगोरिपुमोहने ॥ ४४ ॥ असपत्नंपुरस्तानःशिवंदक्षिणतस्कृधि ॥ अभयंसततंपश्चाद्धरउत्तरतोगृहे ॥ ४५ ॥ मुनिःकश्यपइत्युक्तोबृहतीछन्दईरितम् ॥ देवीकृत्यानियोगस्तुरिपूणांत्रासनायच ॥ ४६ ॥ परेहिकृत्येमातिष्ठवृद्धसेवपदंनय ॥ मृगास्यहिमृगोरिःशान्तत्वानिकर्तुमर्हति ॥ ४७ ॥ एतस्यैवानुवाकस्यप्रयोगःकीर्त्यतेधुना ॥ कृष्णाष्टमींसमारभ्ययावच्छुक्लाष्टमीभवेत् ॥ ४८ ॥ इष्ट्वामाहेश्वरंलिङ्गंजपन्नाशयतिक्षणात् ॥ अभिचारिककृत्यादीन्हयानांहस्तिनामपि ॥४९॥ विनाशयेन्महाव्याधिंसंस्पृष्ट्वारुद्रकालिकाम् ॥ जपेन्नश्येदरिस्तस्यरक्षितोपीश्वरेणचेत् ॥ ५० ॥ दक्षिणाभिमुखोध्वाज्जपेदष्टोत्तरंशतम् ॥ नित्यंजपेदेकविंशद्दिनावधितथारिपोः ॥ ५१ ॥ कलत्रादिकनाशःस्याद्दक्षिणाकम्बलद्वयम् ॥ आत्मरक्षाचकर्तव्यारुद्रन्यासविधानतः ॥ ५२ ॥ मुनिःसर्वःसर्वसुरश्छन्दोनुष्टुप्प्रकीर्त्तितम् ॥ दाहनार्थपुरादीनांनियोगोस्यभवेत्तथा ॥ ५३ ॥ अग्न्यास्यघोररूपेपिपुरुषेपिविनाशिनी ॥ जृम्भिताप्रतिगृह्णस्त्वप्रमादायहिचाद्भुतम् ॥५४॥ अर्कोमुनिरनुष्टुप्चच्छन्दःकृत्यास्यदेवता ॥ अतिक्रुद्धस्यराजादेःकोपशान्त्यैनियोजनम् ॥ ५५ ॥ सोमिन्द्रोयमोवरुणस्त्वमापोपिचरथोनिलः ॥ त्वंब्रह्माचैवरुद्रश्चत्वष्टाचैवप्रजापतिः ॥ ५६ ॥ छन्दस्तुदेवीगायत्रीदेवतेचाश्विनौमतौ ॥ मुनिरिन्द्रोनियोगस्तुत्वरितंरोगनाशने ॥ ५७ ॥ आवर्तध्वंनिवर्तध्वमृतवःपरिवत्सराः ॥ अहोरात्राश्चअब्दाश्चदिशःप्रतिदिशश्चमे ॥ ५८ ॥ गालवोमुनिराख्यातो

मित्रोदेवःप्रकीर्त्तितः ॥ त्रिष्टुप्छन्दोनियोगस्तु कर्त्तव्योद्भुतकर्म्मणे ॥ ५९ ॥ त्वंयमंवरुणंसोमंत्वमापोग्निमथानिलम् ॥ अत्राहृत्यपशूंश्चैवचोत्पादयसि चाद्भुतम् ॥ ६० ॥ मुनिर्विष्णुःसुरोविष्णुरनुष्टुप्छन्दउच्यते ॥ नियोगो यस्यकस्याापरिक्षणार्थमुदाहृतम् ॥ ६१ ॥ योमेरुगर्भशयानंविश्वस्यहितं पुरुषंविजहुः ॥ कुम्भीवपाकंनरकंजनाग्नीयंपञ्चवर्षाश्चएवंपुरुषोसोमपस्य ॥ पञ्चर्चमनुवाकन्तु येजपन्तीहनित्यशः ॥ पूर्वकर्म्मसमुद्भूतमाधिव्याधिभयं हरेत् ॥ ६२ ॥ अथात्रपरिशिष्टस्था ऋगेकाप्रोच्यतेधुना ॥ तांजपन्सततं जन्तुर्नारिभिःपरिसूयते ॥ ६३ ॥ येन्द्रसुत्र्यजवेमह्यमग्नेकदाधियोदुर्मदोअ प्रनासः ॥ अवध्यैतानुशोचिषायिण्यतौसूत्यैवस्वतस्यसनेमयस्याः ॥ ६४ ॥ मुनिःशुक्रोब्रह्मदेवश्छन्दोनुष्टुबुदाहृतम् ॥ स्त्रियोवैमोहनाशाय नियोगोस्य प्रकीर्तितः ॥ ६५ ॥ अत्यक्रारक्रास्वलंकृतः सर्वतोदुरितंवह ॥ जातीयाश्चै वकृत्यानां शत्रुहन्यायचेतसः ॥ ६६ ॥ वसवोमुनयःप्रोक्ताःपरमात्माचदेव ता ॥ छन्दोनुष्टुब्नियोगोस्य दुर्वध्यारिविनाशने ॥ ६७ ॥ यथाहतिपुरासी नं तथैवस्वतसकृन्नरः ॥ तथात्वयायुजावयंतस्यनिकुमःस्थातुजङ्गमम् ॥ ६८ ॥ अग्निस्तुदेवताप्रोक्तो मुनिरिन्द्रःप्रकीर्तितः ॥ छन्दोनुष्टुब्नियोगस्तु चास्य शत्रुविनाशने ॥ ६९ ॥ उत्तिष्ठेववरेहीनो जातेह्निमिहेच्छसि ॥ यावास्तेकृ त्ययादौतु प्रतिकृत्स्यामिविद्ववः ॥ ७० ॥ मुनिःशान्तायनःप्रोक्तःपरमातत्र देवता ॥ छन्दोनुष्टुब्नियोगस्तु तपोविघ्नकराश्चये ॥ ७१ ॥ लोभालस्या दयोवाथ दृश्यन्तेयेतपोपहाः ॥ ७२ ॥ तपोविघ्नकराःपाठे स्वायुधाश्शमिदंप ठेत् ॥ ७३ ॥ स्वायुधाःसन्तिनोरयोविघ्नंचैवपरंपिते ॥ तैस्तैर्निकपलापापिनोजी वयस्यरीन् ॥ ७४ ॥ भगीरथोमुनिर्ब्रह्मा छन्दोनुष्टुबुदाहृतम् ॥ पापारी णांचपापस्य नाशायविनियोजनम् ॥ ७५ ॥ मास्याच्छिषोद्धिपदंतनोच किंचतुष्पदम् ॥ माज्ञातीतन्तुजानस्यान्मनवेक्षिप्रवेशिनो ॥ ७६ ॥ पञ्चर्च मनुवाकन्तु नित्यमष्टोत्तरंशतम् ॥ योजपेत्पूजयेद्रुद्रंतस्यशत्रुक्षयोभवेत् ॥ ७७ ॥ सर्वकृत्याप्रशान्तिश्चसर्वलोकवशीकृतिः ॥ रुद्रालयेसहस्रन्तुजपन्व्या धिन्तुनिर्वहेत् ॥ ७८ ॥ कर्पासबीजंलवणंघृतमष्टसहस्रकम् ॥ हुत्वासूर्य्यस्या

भिमुखमष्टाविंशतिसङ्ख्यया ॥ ७९ ॥ जपेद्रुष्टेस्तुसंस्तम्भः समुद्रमपिशोषये
त् ॥ अत्रैवमननाभ्यासाद्धिद्वत्तासूपपद्यते ॥ ८० ॥ अङ्गिरास्तुमुनिःप्रोक्तः
कालोमृत्युश्चदेवता ॥ छन्दोनुष्टुब्विनियोगस्तुसुदुर्लभप्रसाधने ॥ ८१ ॥
शत्रूयताप्रहितासिमायिताभिमर्षवतः ॥ ततस्तथात्वदनुयोमतनुर्य्यायश्रितः॥
८२ ॥ अङ्गिरास्तुमुनिःप्रोक्तो महादेवोस्यदेवता ॥ नियोगश्छन्दउद्दिष्टंनि
योगःपापकृन्तने॥८३ ॥ एवंत्वनिकृतास्माभिर्ब्रह्मणादेविसर्वशः ॥ वधेतमा
त्विनोगत्वा पापधीनेवनोनहि॥८४॥अङ्गिरास्तुमुनिःप्रोक्तोनुष्टुप्छन्दःप्रकी
र्त्तितम्॥देवीकृत्यानियोगस्तु शत्रूणांशोषणेमतः ॥८५ ॥ यथाविद्युद्धतोवृक्ष
आमूलादनुशुष्यति॥एवंप्रतिशुष्यतिसयोमेपापंचिकीर्षति॥८६॥कठोमुनि
र्महादेवोदेवोनुष्टुबुदाहृतम्॥स्त्रियाकृताभिचारादौयामंयामंपठेदिदम्॥८७॥
यथाप्रतिशुकोभूत्वातमेवप्रतिधावति॥पापन्तमेवधातुयोयोमेपापंचिकीर्षति॥
८८ ॥ भृगुरस्यमुनिःप्रोक्तो विश्वेदेवास्तुदेवताः ॥ छन्दोनुष्टुप् तथायोगोद्व
गस्थानेसुखायच॥८९ ॥ यानश्चेक्षरणेयश्च निष्पर्यौनिधनार्थमति ॥देवा
स्तेसर्वेधुन्वन्तु ब्रह्मवर्ममाचरम् ॥ ९० ॥ पञ्चचैस्यास्यवर्गस्य प्रयोगोव
क्ष्यतेधुना ॥ हुनेदष्टोत्तरशतं घृताक्ततिलतण्डुलान् ॥ ९१ ॥ मासाष्टकेन
चात्रादिवृद्धिर्भवतिभूयसी ॥ आयुःकामोहुनेद्दूर्व्यामृतमष्टोत्तरंशतम् ॥
९२ ॥ स्वजन्मदिवसेब्देस्मिन्नपमृत्युंजयत्यसौ ॥ सर्वपापक्षयश्चैव चित्त
शान्तिःप्रजायते ॥ ९३ ॥ पलाशकुसुमैरष्टशतंहुत्वाद्विजर्षभः ॥ ब्रह्मते
जोमयस्तस्य भातिदेहोतिभास्वरः ॥ ९४ ॥ ब्रह्मवृक्षसमिद्भिस्तु कुसुमैर्वा
कुलाक्षतैः ॥ घृताक्तैरष्टसाहस्रं हुत्वापातकनाशनम् ॥ ९५ ॥ अमुनैवानुवा
केन यःकुर्य्यादनलार्चनम् ॥ सर्वपापक्षयस्तस्य वर्षमध्येप्रजायते ॥ ९६ ॥
अष्टोत्तरसहस्रंतु मनुंजप्त्वासमापयेत् ॥ मनोरस्यार्णसङ्ख्याकान्देवताप्रीति
कारकैः ॥ ९७ ॥ दिव्यैस्तुभोजयेद्विप्रान्देवताराधनक्षमान् ॥ तदभावेवैदि
कांश्च मनुर्वेदमयोयतः ॥ ९८ ॥ तदाम्नायप्रवृत्तोन्यांस्तदभावेतुभोजयेत् ॥
एवंगुरुत्यागउक्तः सर्वतन्त्रेषुगोपितः ॥ ९९ ॥ असिद्धोयःस्वयंशिष्यं कथं
सन्तारयिष्यति ॥ देवत्यागंप्रवक्ष्यामि सर्वतन्त्रेषुगोपितम् ॥ २०० ॥ कृत

नित्यक्रियःपूजां देवतायाःसमाचरेत् ॥ सङ्कल्पन्तुततःकुर्य्याद्देवत्यागादिपूर्व कम् ॥ १ ॥ स्वनामगोत्रंचोच्चार्य्य मनसासंस्मरन्हरिम् ॥ परोक्षंवासमक्षंवा गुरोःसम्प्रार्थयेत्सुरम् ॥ २ ॥ त्रैलोक्यनाथजगदीश महेश्वरस्त्वंमत्कान्तकोटि जठराद्भुतशान्तिचिह्न ॥ यत्त्वंमयाल्पमतिनादिभुजादिदेही ध्यातोपराधश तकंममतत्क्षमस्व ॥ ३ ॥ त्वंसूर्य्यचन्द्रदहनेशगणेशविष्णुब्रह्मेन्द्रशक्तिनर नागगतस्वरूपः ॥ ध्यातोसिचाल्पविषयेपरिपूजितोसि तन्मेपराधशतकंभग वन्क्षमस्व ॥ ४ ॥ देवोपिनोनमनवोनचभारतीत्वां जानन्तिमन्दमति नात्रनार्किंबहूक्त्या ॥ ध्यातोल्पकस्त्वमपराधकृतामयेदं पापंक्षमस्वकरुणा करदीनबन्धो ॥ ५ ॥ ध्यानंकरोमिमनसानचतेजचान्यान्मन्त्राक्षरात्मकमि दंपरिभावयामि ॥ रूपंत्वदीयमितियत्श्रवदन्तिवेदाः सिद्धिर्जपान्नचबहिष्कृत पूजनाद्यैः ॥ ६ ॥ एवंसम्प्रार्थ्यदेवेशं प्रणमेद्दण्डवत्पुनः ॥ मन्त्रमूर्त्यादिकंस र्वं गुरवेतत्समर्पयेत् ॥ ७ ॥ तदभावेपूजकायतद्भक्तायप्रदापयेत्॥ कुर्य्याज्जप द्विगुणितं सर्वत्रापिचतद्दिनात् ॥ ८ ॥ प्राग्वच्चभोजयेद्विप्रान्गुर्वादींश्चापि तोषयेत् ॥ एवन्तुदेवतात्यागो मयातुभ्यंनिवेदितः ॥ ९ ॥ इतिवैदिकमन्त्रेण सुसभ्यानांकलौयुगे॥विधिर्मयानिगदितःकिमन्यच्छ्रोतुमिच्छसि ॥ २१० ॥

इति श्रीमदूर्ध्वाम्नायमहाकालानुमतेमेरुतन्त्रेश्रीशिवप्रणीतेमत्ययज्ञिरादिमन्त्रकथनप्रकाशश्चतुर्दशः १४

---

श्रीदेव्युवाच ॥ मन्त्राःश्रुतामयादेववेदोक्ताःकलिसिद्धिदाः ॥ यन्त्राणि श्रोतुमिच्छामिवाञ्छितार्थप्रदानितु ॥ १ ॥ श्रीशिवउवाच ॥ वेदान्विना ब्राह्मणानांगतिरन्यानविद्यते ॥ स्मृतिर्गतिर्नृपाणांचपुराणानिविशान्तथा ॥ २ ॥ शूद्राणांचापितन्त्राणिकलिदोषवशान्मतिः ॥ सर्वेषामुपरितृष्णातेन दुःखंप्रजायते ॥ ३ ॥ वेदकर्म्मरतोविप्रःकलौब्रह्मज्ञानसंशयः ॥ वेदकर्म्मविही नस्तुविज्ञेयोब्रह्मराक्षसः ॥ ४ ॥ अथादौसम्प्रवक्ष्यामिगायत्रीयन्त्रमुत्तमम् ॥ पद्ममष्टदलंकुर्य्याद्ह्रींकारंकर्णिकास्थितम् ॥ ५ ॥ द्वौद्वौस्वरौदिग्विदिशंप्रति पत्रंसमालिखेत् ॥ किञ्चल्केषुतदग्रेषुगायत्र्यर्णांस्त्रिशस्त्रिशः ॥ ६ ॥ तद्बहिर्वृ त्तयुगलान्तरालेपुसमालिखेत् ॥ ककाराद्यांस्तथोमापोज्योतीरसोमृतंब्रह्म॥७॥

भूर्भुवःसुवरोमिति गायत्रीयन्त्रमुच्यते ॥ सुवर्णेवापिलोहेवा कृत्वाहस्ते तुबन्धयेत् ॥ ८ ॥ अनायासाद्भवेदासिर्धर्म्मेचरमतेमनः ॥ अविच्छिन्नोभवे द्वंशःकीर्त्तिस्तस्यविवर्धते ॥ ९ ॥ अथातःसम्प्रवक्ष्यामिसरस्वत्यामहाद्भुतम् ॥ यन्त्रंमेधाकरंतत्रपञ्चमष्टदलंलिखेत् ॥ १० ॥ तत्कर्णिकायांषट्कोणेससाध्यं प्रणवंलिखेत् ॥ तस्यमध्येकोणषट्केवाग्भवंबीजमालिखेत् ॥ ११ ॥ यश्छन्द सामृषभोविश्वरूपश्छन्दोभ्योध्यमृतात्सम्बभूव ॥ समेन्द्रोमेधयास्पृणोतुअमृतस्य देवधारणोभूयासम् ॥ १२ ॥ एतस्याःपञ्चवर्णास्तुलिखेदष्टदलेषुच ॥ दलेषु मन्त्रवर्णान्त्वाबहिर्वृत्तचतुष्टयम् ॥ १३ ॥ कुर्य्यात्तदन्तर्वीथ्योस्तुद्वयोश्चापि ऋचाद्वयम् ॥ क्रमाल्लिख्यंबहिर्वृत्तंमातृकार्णैःप्रपूरयेत् ॥ १४ ॥ शरीरंमेविच क्षणंजिह्वामेमधुमत्तमा ॥ मनसःकाममाकूतिंवाचःसत्यमशीमहि ॥ १५ ॥ योदेवानांप्रथमंपुरस्ताद्विश्वाधिपोरुद्रोमहर्षिः ॥ हिरण्यगर्भंपश्यतिजायमा नंसनोदेवःशुभयास्मृत्यासंयुनक्ति ॥ १६ ॥ तद्बहिर्भूपुरंकृत्वातत्कोणेपुसमा लिखेत् ॥ ऐंक्लींसौंह्रींचबीजानिपटस्वर्णादिनिर्मिते ॥ १७ ॥ शुभेदिनेसमा लेख्यधारयेद्योयथाविधि ॥ मेधावीश्रुतिधारीचनीरोगश्चप्रियंवदः ॥ १८ ॥ बहुश्रुतोभवेत्सोपिक्रमाद्वेदागमानपि ॥ नविस्मरतिसर्वज्ञस्त्वभ्यासोभवति ध्रुवम् ॥ १९ ॥ अथत्रैयम्बकंयन्त्रंवक्ष्यतेसिद्धिकृत्परम् ॥ आलिख्याष्टदलंप द्मंतारंतत्कर्णिकान्तरे ॥ २० ॥ तस्योदरेसाध्यनामसाधकाभीष्टकर्म्मयुक् ॥ द्वौद्वौस्वरौकेशरेषुदलेषुत्र्यम्बकाक्षरान् ॥ २१ ॥ चतुरश्चतुरोबाह्येवेष्टितव्यं जनाक्षरैः ॥ वक्ष्यमाणामृचंसाध्यनामवर्णविभूषिताम् ॥ २२ ॥ तयासंवेष्टये द्यन्त्रंलिखेत्तद्वत्तदन्तरा ॥ मुनिर्गृत्समदस्त्रिष्टुप् छन्दोरुद्रस्तुदेवता ॥ २३ ॥ मातारुद्रेचकधीमानमोस्तुभीमनिष्कृतीवृषभरासद्वती ॥ उतोवीरांअर्प्पयभे षजेभिर्भिषक्तमंकत्वाभिषजांशृणोमि ॥ २४ ॥ भूपुराद्यपुठंबीजंदिक्षुवंबीजमे वच ॥ एतत्त्रैयम्बकंयन्त्रंगोपनीयंप्रयत्नतः ॥ २५ ॥ आयुरारोग्यसौभाग्य धर्मार्थसुखमोक्षदम् ॥ २६ ॥ किमत्रबहुनोक्तेनवाञ्छितार्थपरांश्रियम् ॥ लभ तेनात्रसन्देहोयन्त्रस्यास्यप्रभावतः ॥ २७ ॥ एकोनपञ्चपट्कोष्ठेफलकेब्रह्मशालि नः ॥ तत्रमध्यमकोष्ठेतुससाध्यंह्रींसमालिखेत् ॥ २८ ॥ पूजयेत्परयाभक्त्या

घृताक्तांस्तिलतण्डुलान् ॥ मासाष्टकेनहुत्वातुसिद्धिर्भवतिभूयसी ॥ २९ ॥ आयुष्कामोहुनेद्दिव्यामृतमष्टोत्तरंशतम् ॥ स्वजन्मदिवसेब्देस्मिन्नपमृत्युंजयत्यसौ ॥ ३० ॥ सर्वपापक्षयश्चैवचित्तशान्तिःप्रजायते ॥ पलाशकुसुमैरष्टशतंहुत्वाद्विजर्षभः ॥ ३१ ॥ ब्रह्मतेजोमयस्तस्यभातिदेहोतिभास्वरः ॥ ब्रह्मवृक्षसमिद्धिस्तुकुसुमैर्वाकुलाप्लुतैः ॥ ३२ ॥ घृताक्तैरष्टसाहस्रंहुत्वापातकनाशनम् ॥ अनेनैवानुवाकेनयःकुर्य्यादघमर्षणम् ॥ ३३ ॥ सर्वपापक्षयस्तस्य वर्षमध्येप्रजायते ॥ आदित्याभिमुखोयस्तुह्यष्टाविंशतिसङ्ख्यया ॥ ३४॥ स्थित्वाजपेत्तदातस्यगङ्गास्नानफलंभवेत् ॥ आत्मार्थंवापरार्थंवाजानुदघ्नेजलेजपेत् ॥ ३५ ॥ सर्वग्रहकृतादोषानशक्तास्तंप्रपीडितुम् ॥ कुंकुमेन्दुसमायुक्तंचन्दनंस्थापयेत्पुरः ॥ ३६ ॥ अष्टोत्तरशतंजप्त्वाभिषिञ्चेत्कुशकूर्चकैः ॥रुग्णंतदाविनश्येत्तुग्रहोपग्रहदूषणम् ॥ ३७ ॥ भूतप्रेतपिशाचादिभूतबाधादितत्क्षणात् ॥ अपस्मारादयोरोगाबन्ध्याचेल्लभतेसुतम् ॥ ३८ ॥ कुमारीपतिमाप्नोति कन्यार्थ्याप्नोतिकन्यकाम् ॥ नाभिमात्रजलेस्थित्वाह्युदयास्तमयेजपेत् ॥ ३९ ॥ अष्टौसहस्राणितदा महावृष्टिर्नगैर्दिनैः ॥ वञ्जुलस्यसमिद्धिस्तु हुनेदष्टसहस्रकम् ॥ ४० ॥ दुग्धाक्ताभिर्महावृष्टिः सप्ताहात्तुप्रजायते ॥ घृतेनहवनंकार्यमेवंसर्वसुखाप्तये ॥ ४१ ॥ पञ्चर्चस्यानुवाकस्य वक्ष्यमाणस्यदेवता ॥ कृत्याछन्दस्त्वनुष्टुप्स्यान्मुनिःप्रत्यङ्गिरामतः ॥ ४२ ॥ योमेकरालिप्रद्वारे योगारेयोनिवेशने ॥ येमेकेशानखेनैव रञ्जनेदन्तधावने ॥ ४३ ॥ प्रतिसहस्रतिधावकुमारइवपितृगृहान् ॥ मूर्द्धानमेषांस्फोटय पदमेषांकुलाञ्जलि ॥ ४४ ॥ एतेनसंजसनूनवेमधुनग्नेसनासः ॥ आविर्धतानुच्छोविधंभून्नेवस्यमस्यदनंपरमस्य ॥ ४५ ॥ येनोरविन्दश्चरितासोअग्नेजहुर्मर्त्यासोअमृतंवदन्तः ॥ तेषांचायूंष्यर्चिषाजातवेदः शुष्कंतुष्टंक्षमभिसंदस्व॥ ४६ ॥ रुद्रस्वरूपेरुद्रेशि कृष्णवर्णेभयङ्करि ॥ देविदेविमहादेवि महाशत्रुर्विनश्यतु ॥ ४७ ॥ स्पृष्ट्वाश्वत्थस्यवृक्षंतु चाष्टोत्तरशतंजपेत् ॥ शनैश्चरदिनेचायुरारोग्यैश्वर्य्यमाप्नुयात् ॥ ४८ ॥ संस्मृत्यचमुनिच्छन्दोदेवतादिततःपरम् ॥ न्यासश्चापिप्रकर्त्तव्यो मन्त्राणामितिनिर्णयः ॥ ४९ ॥ खंफट्जहिमहा

कृत्ये विधूमाग्निसमप्रभो ॥ देविदेविमहादेवि ममशत्रुर्विनश्यतु ॥ ५० ॥ आदौपादेनचार्धेन नामयुक्तेनचाचरेत् ॥ षडङ्गान्यंगुलिन्यासं वक्ष्येनामान्यनुक्रमात् ॥ ५१ ॥ कृष्णाम्बरेचहृदये सिंहवाहिनिशीर्षके ॥ महाबलेशिखायांच महाभैरविवर्म्मणि ॥ ५२ ॥ सर्वकृत्योच्छेदिनीति नेत्रयोरीरितंसुरा: ॥ तथासर्वपरोन्मुक्तमन्त्रच्छेदिन्यथास्त्रके ॥ ५३ ॥ आत्मरक्षांचदिग्बन्धं भूतशुद्ध्यस्त्रसंस्थितिम् ॥ सर्वांश्चमातृकान्यासान् पूर्वमेवसमाचरेत् ॥ ५४ ॥ पठेद्वादौचगायत्रीं पश्चादेनम्मनुंजपेत् ॥ ततःपठेज्जातवेदं पुनर्गायत्रिकोपठेत् ॥ ५५ ॥ पुनर्मूलंततस्तामग्निवर्णातपसेत्यृचम् ॥ गायत्रीपूर्वकंमूलमग्रेत्वेंपारयेतिच ॥ ५६ ॥ पुनस्तामेवचैकंमूलं विश्वानरोदुर्जुहोति ॥ गायत्रीपूर्वकंमूलं यजनाजिनमित्यृचम् ॥ ५७ ॥ अनेनतुप्रकारेण सहस्रान्नियुतावधि ॥ जपेन्मन्त्रंतारतम्ये कामनायाविचार्य्यच ॥ ५८ ॥ यंयंकामयते कामं तंतंप्राप्नोतिसर्वथा ॥ प्रयोगस्यविधौकामः सिद्ध्यत्येवनसंशयः ॥ ५९ ॥ पञ्चर्चस्यानुवाकस्य प्रयोगाःपूर्वमीरिताः ॥ पञ्चर्चभिश्चपञ्चाङ्गं पञ्चम्यापुनरस्त्रकम् ॥ ६० ॥ सर्वत्रापिजपस्यादौ चाष्टोत्तरशतंजपेत् ॥ इमामृचंनवैसोपि बाध्यतेमदनादिकैः ॥ ६१ ॥ उत्क्रामदन्तुस्तोमाः कृणुष्वरोषेआद्विषः ॥ अवब्रह्मद्विषोजहि ॥ ६२ ॥ स्वेच्छादयोत्रदुष्टाश्च धर्मविप्रंप्रकुर्वते ॥ स्वास्थ्येनजपतस्तस्य शत्रुनाशोस्तितत्रच ॥ ६३ ॥ ग्रन्थिकर्णेविरूपाक्षिस्तम्भस्तनिमहोदरि ॥ जहिशत्रूंस्त्रिशूलेन कुप्यस्वपिबशोणितम् ॥ ६४ ॥ अङ्गिरास्तुमुनिश्छन्दोनुष्टुप्कृत्याचदेवता ॥ समस्तरोगनाशार्थे नियोगोनन्दिवृद्धये ॥ ६५ ॥ कुबेरन्तेमुखंरौद्रंनन्दिमानन्दिमावह ॥ द्वारंमृत्युंभयंक्रोधं विषंनाशयनोक्षरे ॥ ६६ ॥ पादैरथद्वयेनापि कृष्णाम्बरादिनामभिः ॥ युक्तैश्चपूर्ववत्कुर्य्यादंगुल्यादिषडङ्गकम् ॥ ६७ ॥ धार्य्यंपूर्ववदेवस्यादात्मरक्षादिकंतथा ॥ गायत्र्यादिमतैस्तत्तु प्राग्वत्संदर्भितंमतम् ॥ ६८ ॥ जपेद्दशशतंचाष्टसहस्रंका

---

१ त्र्यम्बकंयजामहे इति २ जातवेदसेसुनवामसोमंइति ३ मूलंत्र्यम्बकंइति ४ तामग्निवर्णांतपसाज्वलन्तीं वैरोचनींकर्म्मफलेषुजुष्टाम् ॥ दुर्गांदेवींशरणमहंप्रपद्येसुतरसितरसेनमः ५ त्वंपारयानव्यइतिमन्त्रः ६ तामग्निवर्णाम् इति ७ विश्वानरोदुर्जुहोतिइति ॥

र्य्यगौरवात् ॥ अवश्यंजायतेकार्य्यसिद्धिःपुण्यागिरांत्वियम् ॥ ६६ ॥ विक्षि सतामनोर्दोषे गुरुदोषेकदर्थिता ॥ आधिव्याधिर्देवदोषे तस्मात्तंपरिवर्जयेत्॥ ७० ॥ पूर्वमुक्तोमनुत्यागो गुरुत्यागस्तथोच्यते ॥ मन्त्रोयदेवतायाःस्यात्तिथौ तस्यभवेद्भुवि ॥ ७१ ॥ गुरुत्यागस्यसङ्कल्पं कुर्य्यात्तद्दोषपूर्वकम् ॥ गुर्वन्तरंक रोमीति नरंवादेवमेवच ॥ ७२ ॥ राशिकूटेनसंशुद्धं देवताष्टकमध्यतः ॥ कु र्य्यादेकंगुरुंतत्र पूर्वाभावेपरंपरम् ॥ ७३ ॥ आपोहिदक्षिणामूर्तिः सूर्य्यश्च न्द्रोहुताशनः ॥ मन्त्रावरणदेवाश्च जातिदेवःकुलेश्वरः ॥ ७४ ॥ देशदेवइ मेत्वष्टौ नरोवालक्षणान्वितः ॥ गुरोर्युग्मंपूजयित्वाप्रणमेद्दण्डवत्क्षितौ॥७५॥ देवतानामसम्प्रोक्तद्रव्यंतन्नामतोयजेत् ॥ त्रिपर्णस्यपलाशस्य प्राग्रेमुष्टेतुद क्षिणे ॥ ७६ ॥ प्रादेशप्रमितेचात्र कुशानास्तीर्य्यमूर्द्धनि ॥ तोयपूर्णघटंप्रा च्यां दुग्धपूर्णन्तुपश्चिमम् ॥ ७७ ॥ उत्तरेतुसुरापूर्णं क्रमादेतत्प्रकीर्त्तितम् ॥ प्राग्गुरोश्चापिचैतन्यं प्रविष्टंनूतनेगुरौ ॥ ७८ ॥ इतिसञ्चिन्त्यशिष्यस्तुवेदि कांकारयेत्सुधीः ॥ तत्रमन्त्राक्षरोपेतं यच्चकोणचतुष्टयम् ॥ ७९ ॥ विहायदेवी मावाह्यसम्पूज्यहवनंचरेत्॥आज्येनमूलमन्त्रेणसम्पातंयन्त्रकेक्षिपेत् ॥ ८० ॥ अष्टोत्तरशतंपश्चात्तद्यन्त्रंनिखनेद्भुवि ॥ गृहग्रामादिराष्ट्राणांरक्षार्थंतत्रतत्र च ॥ ८१ ॥ नक्षत्रग्रहराशीनां लोकेशानांबलिंहरेत् ॥ विहितायत्ररक्षेयं व र्धन्तेतत्रसम्पदः ॥ ८२ ॥ क्षुद्रग्रहमहारोगचौरभूतसरीसृपाः ॥ अमुनाविल यंयान्ति विधिनानात्रसंशयः ॥ ८३ ॥ जातवेदसमन्त्रस्य यन्त्रमेतदुदीरित म् ॥ वैदिकैरेवकर्तव्यमन्यथादुःखदंभवेत् ॥ ८४॥ जातवेदसमन्त्रस्य विपरी तस्ययेपुरा ॥ अंशैःपादाःसमुद्दिष्टास्तेषांयन्त्रंवदाम्यहम् ॥ ८५ ॥ नवकोष्ठ युतंकुर्य्याच्चतुरस्रंतुमण्डलम् ॥ ससन्ध्यांविलिखेन्मायां मध्यकोष्ठेत्वधःस्थिता त् ॥ ८६ ॥ कोष्ठात्क्रमेणमन्त्रस्य लिखेत्पादाष्टकंततः ॥ प्रादक्षिण्येनतद्वाह्ये वृत्तयुग्मान्तरेलिखेत् ॥ ८७ ॥ मातृकार्णैःसुसंवेष्ट्य बहिर्भूपुरमालिखेत् ॥ भु विचास्त्रमिदंयन्त्रं भूतरोगनिवारणम् ॥ ८८ ॥ रक्षायुःकीर्तिधीश्रीदं लिखे त्स्वर्णादिपत्रके ॥ धारयेद्बाहुमूलेच कण्ठेवामस्तकेपिवा ॥ ८९ ॥ अथातः सम्प्रवक्ष्यामि गायत्र्यादित्रिशक्तिकम् ॥ यन्त्रंसर्वार्थदंतत्र पद्ममष्टदलंलिखे

त् ॥ ९० ॥ पूर्वार्धञ्चैवगायत्र्याः प्रथमेपत्रकेलिखेत् ॥ जातवेदसमन्त्रस्यपूर्वा
र्धन्तुद्वितीयके ॥ ९१ ॥ त्र्यम्बकस्यतुपूर्वार्धं तृतीयेतुदलेलिखेत ॥ ॐ ह्रींठंचं
कंसमिति ह्रौं यं मं ततःपचम् ॥ ९२ ॥ सोहंवंठंनमःप्रोक्त्वाशिवायेतिपदंव
देत् ॥ मायालंयेतिसंकण्ठंतारोमायाध्रुवस्तथा ॥ ९३ ॥ एकोनत्रिंशदर्णोयं
मन्त्रःकोष्ठेचतुर्थके ॥ त्र्यम्बकस्योत्तरार्धन्तु पञ्चमेथोत्तरार्धकम् ॥९४॥ जातवे
दसमन्त्रस्य षष्ठेथोह्युत्तरार्धकम् ॥गायत्र्याःसप्तमेलेख्यमोमापोज्योतिरित्यपि॥
९५ ॥ गायत्र्यास्तुशिरस्त्वेतद्भवेत्सप्तदशाक्षरः ॥ लिखेदष्टमपत्रेतुबहिर्वृत्तद्व
यंलिखेत् ॥ ९६ ॥तदन्तरेमातृकार्णैर्वेष्टयेद्भूपुरंबहिः ॥भूपुरस्यतुकोणेषु कूटं
चिन्तामणिंलिखेत् ॥ ९७ ॥ अग्निर्ब्रह्मावृषोनिद्रा पुनरक्षिगतंतथा ॥ शक्रं
ततःपरंचन्द्रैःकूटंचिन्तामणेर्महत् ॥ ९८ ॥ केशरेषुद्वन्द्वशश्चस्वरान्प्रागादि
तोलिखेत् ॥ शताक्षरमनोर्यन्त्रं भवेदीदृशमेवच ॥ ९९ ॥ धारयेद्योयमारोग्य
धराधान्यधनादिकम्॥लब्ध्वाचनिश्चलांलक्ष्मींसजीवेच्छरदांशतम्॥१००॥
ताम्रादिपत्रेथालिख्यजप्त्वाचाष्टोत्तरंशतम् ॥ हुत्वाघृतेनतावत्तुकृत्वासम्पा
तमेवच॥ १ ॥ भूयोपितावज्जप्त्वाचपुरग्रामाकरादिषु ॥ स्थापितंयन्त्र
मेतत्तुगोसस्यारोग्यपुष्टिदम् ॥ २ ॥ कण्ठेवादक्षिणेबाहौधारितंयन्नरैःसदा ॥
कुर्य्याद्रक्षणंतत्तुवैरिव्याघ्रादिभीतितः ॥ ३ ॥ अथातःसम्प्रवक्ष्यामिवारुणंय
न्त्रमुत्तमम् ॥ अष्टपत्रस्यपद्मस्यषट्कोणंकर्णिकान्तरम् ॥ ४ ॥ कृत्वाषट्कोणम
ध्येतुससाध्यंप्रणवंलिखेत् ॥ वरुणायनमःप्रोक्तोवरुणस्यषडक्षरः ॥ ५ ॥ एकै
कमक्षरंचास्यकोणषट्केलिखेन्मनोः ॥ केशरेषुद्वन्द्वशश्चस्वरान्प्रागादितोलि
खेत् ॥ ६ ॥ पूर्वपत्रेध्रुवंदत्त्वास्ववर्णान्पञ्चसंलिखेत ॥ द्वितीयेक्षितिपुक्षिप्तंतो
वर्णाश्चतृतीयके ॥ ७ ॥ विस्मृत्याशंचतुर्थेतुलिखेद्वरुणमुमोचतत ॥ अवोच
न्पञ्चमेषष्ठे आदिमेरूपइत्यपि ॥ ८ ॥ यूयंप्राप्ताःसप्तमेतु अन्तेस्वस्तिभिःस
दानः ॥ बहिर्वृत्तद्वयंकृत्वा तयोर्मध्येलिखेद्ध्रुवम् ॥ ९ ॥ ऋणमोचनमेतत्तुय
न्त्रंसर्वसमृद्धिदम् ॥ सर्वरक्षाकरंवश्यं शत्रुसङ्घविनाशनम् ॥ १० ॥ किमत्र
बहुनोक्तेन वाञ्छितार्थप्रदंनृणाम् ॥ यदद्यकच्चेतिऋचायन्त्रंवक्ष्यामिभाग्य
दम् ॥ ११ ॥ कर्णिकायांसाध्यगर्भं तारंपत्रेषुचाष्टसु ॥ यदद्यप्रथमेकच्च द्विती

येऽनत्रवृत्रह ॥ १२ ॥ चतुर्थेन्तुदगाग्रेतु अभिसूर्य्याथषष्ठके ॥ शर्वन्तुसप्तमे त्विन्द्रमष्टमेचवशेलिखेत् ॥ १३ ॥ बाह्येवृत्तद्वयंकृत्वा मातृकार्णास्तदन्तरे ॥ वेष्टयेद्भूपुरेणाथ वश्यसौभाग्यकारकम् ॥ १४ ॥ सुवर्णरत्नधान्यादिसर्वस म्पत्करंपरम् ॥ बाहुमूलेगलेवापि धारयेत्स्वर्णवेष्टितम् ॥ १५ ॥ गणेशस्य प्रियंचैतत्तथावाग्विभवप्रदम् ॥ मन्त्रमादौप्रवक्ष्यामि महासम्पत्तिकारकम् ॥ १६ ॥ वैदिकंविष्णुगृहणीभक्तानांतुविशिष्यते ॥ चतुर्दलंलिखेत्पद्मंकर्णिका यांलिखेत्ततः ॥ १७ ॥ तारगर्भसाध्यनामदलेष्वेवेत्यृचंतथा ॥ स्वाग्रा दिप्राग्दक्षिणेनलिखेद्दलचतुष्टये ॥ १८ ॥ वामदेवोमुनिश्छन्दस्त्रिष्टुब्देवो बृहस्पतिः ॥ अभीष्टसिद्धयेचास्य मन्त्रस्यविनियोजनम् ॥ १९ ॥ एवापि त्रेविश्वदेवाय॒ वृष्ण्येयज्ञैर्विधेमनमसाहविर्भिः ॥ बृहस्पतेस्तुप्रजावीरवन्तोवयं स्यामपतयोरयीणाम् ॥ २० ॥ तद्बाह्येष्टदलेदिक्षु यूयमस्मादृचोक्तयः ॥ एवेन्द्राग्नीत्यृचःपादालेख्यास्तत्रविदिक्षुच ॥ २१ ॥ गौतमोमुनिराद्याया त्रिष्टुप्छन्दोग्निदेवता ॥ इन्द्राग्नीदेवतेत्रिष्टुप्छन्दश्चन्द्रोमुनिर्मतः ॥ २२ ॥ यूयमस्मान्नवतवस्योअच्छानिरंहतिभ्योमरुतोमृगृवाना ॥ जुषध्वंनोहव्यदा तियजत्रावयंस्यामपतयोरयीणाम् ॥ २३ ॥ एवेन्द्राग्निपपिवीत्सासूतस्य विश्वास्मभ्यंसञ्जपतंजनामि ॥ तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृ थिवीउतद्यौः ॥ २४ ॥ तद्बाह्येष्टदलंकृत्वाक्रमात्तत्रतुसंलिखेत् ॥ त्वंसोमेति ऋचोवर्णान्पञ्चाङ्गाब्धिशरर्तवः ॥ २५ ॥ वेदाःषट् षट् तदग्रेषुप्रजायतऋ चस्तथा ॥ लिखेद्वर्णान्वेदपञ्चपञ्चगवेन्द्रषट् ॥ २६ ॥ अग्निर्मेगौतमःसोम स्त्रिष्टुबग्न्यादयोमताः ॥ हिरण्यगर्भकस्त्रिष्टुम्मुन्याद्यास्तदग्रिमे ॥ २७ ॥ त्वंसोमप्रचिकिन्नोमनीषात्वंरजिष्ठमनुनेषिपन्थाम् ॥ तवप्रणीतिपितरोनइन्द्रो देवोष्वुरत्नमभजन्तधीराः ॥ २८ ॥ प्रजायतेनत्वदेतान्यन्योविश्वाजातानि परिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणाम् ॥ २९ ॥ वृत्तद्वयंबहिष्कृत्वातयोर्मध्येचमातृकाः ॥ लेख्याःसबिन्दुकास्तस्यवेष्टनाकार तांगताः ॥ ३० ॥ तद्बहिश्चैवकोणेषुश्रींश्रींबीजमिदंलिखेत् ॥ बाहुमूले थवाकण्ठेमूर्ध्निवायदिधारयेत् ॥ ३१ ॥ गोगजाश्वादिमहिषशस्यसम्पद्

सुन्धराम् ॥ लभतेपुत्रपौत्रादिशालिनींसन्ततिंतदा ॥ ३२ ॥ अथान्यत्स म्प्रवक्ष्यामियन्त्रंलक्ष्मीप्रदंसुराः ॥ षट्कोणमध्येसाध्यस्यनामयुक्प्रणवंलिखे त् ॥ ३३ ॥ लिखेत्कोणेषुश्रीबीजंबहिरष्टदलंलिखेत् ॥ तत्केशरेषुविलि खेद्द्वन्द्वशश्चस्वरान्क्रमात् ॥ ३४ ॥ यालक्ष्मीःसिन्धुसम्भूताभूतधेनुः पुरावसुः ॥ यामाविश्यावसुर्देवीसदानोजुषतांगृहे ॥ ३५ ॥ चतुरश्च तुरोवर्णान्दलेष्वस्याऋचोलिखेत् ॥ बहिर्वृत्तद्वयंकृत्वातयोरन्तश्चवेष्टयेत् ॥ ३६ ॥ अश्वदायेतिऋचाचवृत्तमेकंचतद्बहिः ॥ अकारादिक्षकारान्तवर्णै र्मध्येप्रवेष्टयेत् ॥ ३७ ॥ तद्बहिश्चतुरस्रंचश्रीबीजंकोणगंलिखेत् ॥ श्रियश्चैतत्प्रियंयन्त्रंस्थापितंयत्रमन्दिरे ॥ ३८ ॥ धनैर्धान्यैश्चविवि धैरन्यैश्चाश्वगवादिभिः ॥ आपूर्य्यसततंचैवतत्रैवरमतेरमा ॥ ३९ ॥ अथयन्त्रंप्रवक्ष्यामिभारत्याःसर्वकामदम् ॥ षट्कोणमध्येप्रणवंसाध्यनामाभि गर्भितम् ॥ ४० ॥ पूर्वादिकोणषट्केचऐंक्लीं सौं विलिखेत्क्रमात् ॥ सौंक्लीं ऐं अथतद्बाह्येलिखेदष्टदलंपुनः ॥ ४१ ॥ वक्ष्यमाणऋचोःपादाँल्लिखेत्प्रति दलेततः ॥ सोमोमुनिर्देवतावाक्त्रिष्टुप्छन्दःप्रकीर्तितम् ॥ ४२ ॥ यद्वाग्व दन्त्यविचेतनानिराष्ट्रीदेवानांनिषसादमन्द्रा ॥ चतस्रऊर्ज्जंदुदुहेपयांसि क्वस्विदस्याः परमञ्जगाम ॥ ४३ ॥ देवींवाचमजनयन्तदेवास्तांवि श्वरूपाःपशवोवदन्ति ॥ सानोमन्द्रेषमूर्ज्जंदुहानाधेनुर्वागस्मानुपष्टुतैतु ॥ ४४ ॥ वृत्तानांपञ्चकंबाह्येकृत्वावीथीचतुष्टयम् ॥ ऋषिर्दीर्घतमास्त्रिष्टुप्छन्दो वाणीचदेवता ॥ ४५ ॥ चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणाये मनीषिणः ॥ गुहात्रीणिनिहितान्यङ्गयन्तितुरीयंवाचोमनुष्यावदन्ति ॥ ४६ ॥ इमामृचंचाद्यवीथ्यांद्वितीयायांलिखेत्ततः ॥ विश्वामित्रोमुनिस्त्रिष्टु प्छन्दोवाग्देवतामता ॥ ४७ ॥ ससर्परीरमतिंवाधमानाबृहन्मिमायजमद ग्निदत्ता ॥ आसूर्य्यस्यदुहितातताश्रवोदेवेष्वमृतमज्जया ॥ ४८ ॥ लिखे दिमामृचंपश्चात्तृतीयायांलिखेदथ ॥ प्राग्वन्मुन्यादिसर्वासांनियोगोवास्तु सिद्धये ॥ ४९ ॥ ससर्परीरभरत्तूयमेभ्योधिश्रवःपाञ्चजन्यासुकृष्टिषु ॥ साप क्ष्याइनव्यमायुर्दधानायांमेपलस्तियमदग्नयोददुः ॥ ५० ॥ मातृकार्णैश्चतु

र्थीन्तुवेष्टयित्वाथतद्वहिः ॥ भूपुरन्तस्यकोणेषुवाग्भवंबीजमालिखेत् ॥ ५१ ॥ एवंस्वर्णादिकेपत्रेलिखेद्वायन्त्रमुत्तमम् ॥ तत्रवाचंसमावाह्यपूजयित्वाविधानतः ॥ ५२ ॥ ऋष्यादिकंतुसंयोज्यधारयेच्चशुभेदिने ॥ कवीनांतार्किकाणांचचक्रवर्त्तीभवेदसौ ॥ ५३ ॥ वचांपिष्ट्वालिखेदेतन्नागवल्लीरसेनतु ॥ द्युसरिल्लोलकल्लोलनिभानिर्यातिभारती ॥ ५४ ॥ यदद्यकद्दचोयन्त्रंवक्ष्येवश्यकरंपरम् ॥ अष्टपत्रस्यपद्मस्यकर्णिकायान्तुसँल्लिखेत् ॥ ५५ ॥ षट्कोणंतस्यमध्येतुससाध्यंह्रींसमालिखेत् ॥ पूर्वादिषट्सुकोणेषुअंश्रींह्रींक्लींक्रमेणच ५६ ॥ ग्लौंगंबीजानिसँल्लिख्यपद्मस्यप्रथमेदले ॥ श्रीविद्याप्रथमंकूटंकएईलचह्रींमिति ॥ ५७ ॥ लिखेद्द्वितीयपत्रेतुयदद्यकच्चवृत्रहन् ॥ श्रीविद्याया द्वितीयन्तुलिखेत्कूटंतृतीयके ॥ ५८ ॥ असकृदलह्रींमितितदेतत्परिकीर्त्तितम् ॥ उदगाअधिसूर्य्येतिलिखेत्पत्रेचतुर्थके ॥ ५९ ॥ श्रीविद्यायास्तृतीयं तुकूटंपञ्चमपत्रके ॥ सकलह्रींमितिप्रोक्तंलिखेत्षष्ठदलेपुनः ॥ ६० ॥ सर्वन्तदिन्द्रतेवशेसप्तमेगणपतये ॥ वरवरदइदंलेख्यंततश्चाष्टमपत्रके ॥ ६१ ॥ सर्वजनंमेवशमानयस्वाहेतिसँल्लिखेत् ॥ तद्बहिर्वृत्तत्रयोरन्तर्वेष्टयेन्मातृकाक्षरैः ॥ ६२ ॥ ततोभूपुरकोणेषुश्रींह्रींक्लींग्लौंइतिक्रमात् ॥ लिखेद्धेमपटादौचहेममूच्यावशङ्करम् ॥ ६३ ॥ अथसंवादसूक्तस्ययन्त्रंवक्ष्येगणेशितुः ॥ चतुर्दले तुकमलेकर्णिकायाञ्चषड्दलम् ॥ ६४ ॥ससाध्यंप्रणवन्तत्रमध्यकोष्ठेचसँल्लिखेत् ॥ अंश्रींह्रींक्लींग्लौंगञ्चततःपूर्वदलेलिखेत् ॥ ६५ ॥ गणपतयेयाम्येतुवरवरदेतिसँल्लिखेत् ॥ तृतीयेसर्वजनंमेब्धोवशमानयस्वाहा ॥ ६६ ॥ तद्बाह्येष्टदलंकुर्य्यादर्धमर्धंऋचांलिखेत् ॥ तत्रसंवादसूक्तस्यतदिदानींनिगद्यते ॥ ६७ ॥ सतसिद्युवरोवरोवृषंनग्नेविश्वान्यर्य्यआ ॥ रन्तस्यदेवसमिध्यसमनोवसून्याभव ॥ ६८ ॥ संगछध्वंसंवदसध्वंसंवोमनांसिजानताम् ॥ देवाभागंयथापूर्वेशन्नानानाउपासते ॥ ६९ ॥ समानोमन्त्राःसमितिःसमानीसमानंमनःसहचितमेषांसमनिमात्रंमभिमन्त्रयेवः ॥ ७० ॥ समानेनवोहविषाजुहोमिसमानीवञ्याकूतिःसमाना ॥ हृदयानिवःसमानिवस्तुवोमनोयथावस्सुसहासति ॥ ७१ ॥ एतत्संवादसूक्तस्यमुनिःसंवर्त्तनःस्मृतः॥ अग्निर्दे

स्तथाजायसञ्ज्ञानमितरासु च ॥ ७२ ॥ छन्दस्त्रिष्टुप् तृतीयाया अन्यासां
स्यादनुष्टुभम् ॥ वृत्तत्रयन्तु तद्बाह्ये कृत्वा वीथिद्वयं लिखेत्॥ आद्यवीथ्यां जा
तवेदसे सुनवे ऋचा पुनः ॥ ७३ ॥ आवेष्टयेन्मातृकार्णैः परवीथीन्तु वेष्टयेत् ॥
तद्बहिर्भूपुरं कृत्वा तत्र पादचतुष्टयम् ॥ ७४ ॥ कोणेषु च विकोणेषु लिखेद्यच्च तदु
च्यते ॥ ७५ ॥ भद्रंनो अपि वातय मनः ॥ मरुतामोनसे स्वाहा ॥ इन्द्रो विश्व
स्य राजेति ॥ शन्नो भवद्द्विपदे शञ्चतुष्पदे ॥ ७६ ॥ सङ्घातभेदे मर्त्यानां मैत्री
करणमुत्तमम् ॥ जगत्सम्मोहनं वश्यं कान्तिसौभाग्यपुष्टिदम् ॥ ७७ ॥
गायत्रीभुवनेश्वर्य्यायोगयन्त्रमथोच्यते ॥ लिखेदष्टदलं मध्ये तत्र कोणेषु
सँल्लिखेत् ॥ ७८ ॥ रमणीयत्रिकोणानि षट्कैषद्गुरुमार्गतः ॥ षट्कोणेऽस्य
तु तन्मध्ये साध्यं साधककर्म्मयुक् ॥ ७९ ॥ ह्रींबीजमालिखेत्तच्च विलोमाभिः
प्रवेष्टयेत्॥ त्रिभिर्व्याहृतिभिश्चैवं मन्त्रं मध्ये तथा पुनः ॥ त्रिभिर्व्याहृतिभिश्चै
वं लिखेन्मनुमथो सुधीः ॥ ८० ॥ त्रिकोणद्वादशदले खंईबीजद्वयं तथा ॥
त्रिकोणानां बहिश्चापि लिखेत्पार्श्वद्वये पुनः ॥ ८१ ॥ प्रादक्षिण्येन गायत्र्या
देवमातुर्विलोमतः ॥ वर्णद्वयं बिन्दुयुतं लिखेदथ लिखेत्पुनः ॥ ८२ ॥ शनिबी
जं त्रिकोणानामग्रे तारयुतं लिखेत्॥ शृङ्खलाकाररेखाभिरेकैकेनान्तराणि च ॥
८३ ॥ भवत्येवं च षड्बीजं शृङ्खलाद्वितयं बहिः ॥ वृत्तद्वयं लिखेत्तत्र वीथ्या
लेख्यं विलोमतः ॥ ८४ ॥ प्रत्यक्षरं बिन्दुयुतं जातवेदसमन्त्रकम् ॥ वृत्तद्वये तु
तद्बाह्ये कुर्याद्वीथीचतुष्टयम् ॥ ८५ ॥ मातृकार्णानाद्यवीथ्यां सबिन्दून्विलि
खेत्क्रमात् ॥ द्वितीयायां विलोमेन कुर्य्याद्बाह्येष्टकोणकम् ॥ ८६ ॥ कोणा
ष्टकेषु विलिखेच्चिन्तामणिकूटकम् ॥ तस्य बाह्ये त्रिशूलानि कुर्यात्षोडशसंख्य
या ॥ ८७ ॥ एतद्वेदविदां यन्त्रं सर्वकार्य्यप्रसिद्धिकृत् ॥ सर्वसौभाग्यजननं
सर्वशत्रुविनाशकृत् ॥ ८८ ॥ भुवनेशीमन्त्रपूजा यन्त्रेस्मिंश्च परा भवेत् ॥
वैदिकैस्तेन कर्तव्या पूजा यन्त्रस्य सिद्धये ॥ ८९ ॥ तद्विधिं सम्प्रवक्ष्यामि स्व
र्णादिकृतपत्रके ॥ एतद्यन्त्रं वैदिकेन सुलेख्यं कुंकुमादिभिः ॥ ९० ॥ यन्त्र
मध्ये यजेद्देवीं कुर्य्याद्वीथित्रयं बहिः ॥ आद्यायां तु षडङ्गानि परायां दिक्चतुष्टये ॥
९१ ॥ हल्लेखां गगनां रक्तां पूजयेच्च करालिकाम् ॥ तृतीयवीथ्यां ब्रह्माद्याः पूज

नीयादिगष्टके ॥ ६२ ॥ तद्बाह्येषोडशदलंकृत्वातत्रयजेदिमाः ॥ करालींविकरालींचउमांसरस्वतींश्रियम् ॥ ६३ ॥ दुर्गामुखींतथालक्ष्मींश्रुतिस्मृतिंश्रियंअपि ॥ श्रद्धांमेधांमतिंकान्तिंचार्य्यांतस्यबहिःपुनः ॥ ६४ ॥ द्वात्रिंशद्दलपद्मंतुकृत्वातत्रयजेदिमाः ॥ विद्याह्रीपुष्टयःप्रज्ञासिनीवालीतथाकुहूः ॥ ६५ ॥ रुद्रवीर्य्याप्रभानन्दाप्यायिनीसिद्धिदाशुभा ॥ कालरात्रिर्भद्रकालीमहारात्रिःकपालिनी ॥ ६६ ॥ विकृतिदण्डमुण्डिन्यौदुःखण्डाचशिखण्डिनी ॥ निशुम्भशुम्भमथनीमहिषासुरमर्दिनी ॥ ६७ ॥ इन्द्राणीचैवरुद्राणीशङ्करार्धशरीरिणी ॥ नारीनारायणीचैवत्रिशूलिन्यपिपालिनी ॥ ६८ ॥ अम्बिकाह्लादिनीचैवद्वात्रिंशच्छक्तयस्त्विमाः ॥ तद्बाह्येतुचतुःषष्टिदलंकृत्वायजेदिमाः ॥ ६९ ॥ पिङ्गलाक्षींविशालाक्षींसमृद्धिंवृत्तिमेवच ॥ श्रद्धांस्वाहांस्वधांमायांनिद्रांचैववसुन्धराम् ॥ २०० ॥ त्रिलोकधात्रींगायत्रींसावित्रींत्रिदशेश्वरीम् ॥ सुरूपांबहुरूपांचस्कन्दमात्रच्युतप्रिये ॥ १ ॥ विमलांश्यामलांपश्चादरुणीमारुणींतथा ॥ प्रकृतिंविकृतिंसृष्टिंस्थितिंसंहृतिमेवच ॥ २ ॥ सन्ध्यांचमातृकांहंसींसतींसोमर्द्धिकांपराम् ॥ देवमातृभगवत्यौदेवकींकमलासनाम् ॥ ३ ॥ त्रिमुखींसप्तकमुखींसुरासुरविमर्दिनीम् ॥ लम्बोष्ठींचार्धमुखिकांबहुशिश्नांकृशोदरीम् ॥ ४ ॥ रथरेखांशशिरेखांपरांगगनवेगिनीम् ॥ क्षितिवेगांचपातालवेगांचमदनातुराम् ॥ ५ ॥ अनङ्गांचतथानङ्गमदनानङ्गमेखले ॥ अनङ्गकुसुमांविश्वरूपांदैत्यभयङ्करीम् ॥ ६ ॥ अक्षोभ्यांसत्यवादांतन्द्रारूपांशुचिव्रताम् ॥ वरदांचापिविश्वेशींतद्बाह्येचदिगीश्वरान् ॥ ७ ॥ तदायुधानांपूजाग्रेप्रोक्तोयंपूजनेविधिः ॥ वाञ्छितंकामगाप्नोतितान्त्रिकोप्यनयेज्यया ॥ ८ ॥ अथवक्ष्येजातवेददुर्गायन्त्रमभीष्टदम् ॥ कृत्वाचाष्टदलंपद्मंकर्णिकायांलिखेद्ध्रुवम् ॥ ९ ॥ तस्यमध्येतुह्रींकारंतन्मध्येसाध्यनामकम् ॥ क्रमाद्दलेषुविलिखेत्तारंह्रींईंतथैवच ॥ १० ॥ दुर्गायैनमएतस्यमन्त्रस्यैकैकमक्षरम् ॥ बहिर्वृत्तत्रयंकृत्वापूर्ववीथ्यांसमालिखेत् ॥ ११ ॥ जातवेदसमन्त्रन्तुमातृकार्णान्द्वितीयके ॥ तद्बहिश्चतुरस्रंचदौर्गंयन्त्रमिदंस्मृतम् ॥ १२ ॥ अपस्मारमहाभूतक्षुद्रग्रहनिवारणम् ॥ नृणांविजयदंस्त्रीणांपुत्रदं

नात्रसंशयः ॥ १३ ॥ अथातःसम्प्रवक्ष्यामियन्त्रंश्रीसूक्तजंपरम् ॥ कृत्वाष्ट
पत्रंकमलंश्रींबीजंकमलान्तरे ॥ १४ ॥ साध्यनामान्वितंलेख्यंदलेष्वष्टसु
सँल्लिखेत् ॥ कर्दमेत्यादिपञ्चर्चामर्द्धमर्द्धदशत्वथ ॥ १५ ॥ श्रियेजनःश्रिय
आनिर्यायश्रियश्चयोजरितृभ्योददाति ॥ श्रियंवसानाअमृतत्वमायंभवन्ति
सत्यासमधास्मेतद्दो ॥ १६ ॥ श्रियएवेतिऋचोस्तत्रचतुर्थार्द्धंसमालिखेत् ॥
श्रीश्चतेइतिमन्त्रस्यद्वयोःस्यादर्धमर्धकम् ॥ १७ ॥ वृत्तद्वयंतद्वहिश्चकु
र्य्यात्प्रथमवीथिकाम् ॥ वक्ष्यमाणऋचाचाद्यामातृकार्णैश्चतत्परा ॥ १८ ॥
यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहम् ॥ श्रियःपञ्चदशर्चंचश्रीकामःसत
तंजपेत् ॥ १९ ॥ तद्बहिश्चतुरस्रंचलिखेच्छ्रीबीजमालिखेत् ॥ तस्यकोण
चतुष्केषुश्रियोमन्त्रंतुवैदिकम् ॥ २० ॥ मयायन्त्रमिदंप्रोक्तंधारयेद्योयथा
विधि ॥ पुत्रारोग्यधराधान्यधनगोशस्यशालिनीम् ॥ २१ ॥ लब्ध्वातिब
हुलांलक्ष्मींजीवेच्चशरदांशतम् ॥ ताम्रपात्रेलिखित्वेदंजपेदष्टोत्तरंशतम् ॥
२२ ॥ अष्टाविंशतिसंख्याकंहुत्वासम्पातसिञ्चितम् ॥ संस्थाप्याङ्गणमध्येतु
लक्ष्मीमावाह्यपूजयेत् ॥ २३ ॥ परिवारयुतांलक्ष्मींबलिदानेनतोषयेत् ॥ एवं
कृतेतुतत्स्थानेवर्धन्तेसर्वसम्पदः ॥ २४ ॥ पुत्रस्त्रियश्चसुहृदोभृत्याधान्यंरथा
गजाः ॥ गावश्चवृषभाःसौख्यंत्वसंख्यन्तत्रजायते ॥ २५ ॥ अथातःसम्प्र
वक्ष्यामियन्त्रंपौरुषसूक्तजम् ॥ षट्कोणकर्णिकामध्येतारंसाध्यसमन्वितम् ॥
२६ ॥ सहस्रारहुंफट्इतिवर्णैकैकंदलेदले ॥ स्वाग्रादिप्रादक्षिण्येनलिखेत्त
त्रैवसन्धिषु ॥ २७ ॥ षण्नाममन्त्रान्स्वाहान्तानचक्रायेतिचादिमः ॥ विच
क्रायसुचक्रायधीचक्रायचतुर्थकः ॥ २८ ॥ सञ्चक्रायेतिचज्वालाचक्रायेति
चषष्टकः ॥ चतुर्दलंतुकमलंतद्बाह्येकेशरेषुच ॥ २९ ॥ चतुर्दिक्षुक्रमाल्लेख्यं
क्लींकृष्णक्लींतथाक्षरम् ॥ वासुदेवस्यमन्त्रस्यत्रीणित्रीण्यक्षराणिच ॥ ३० ॥
तत्पत्रेषुलिखेन्मन्त्रंवदेत्तारंतथानमः ॥ भगवतेवासुदेवायेत्यर्णद्वादशाक्षरः ॥
३१ ॥ तद्बाह्येष्टदलंपद्मंकेशरेष्वस्यसँल्लिखत् ॥ एकैकमक्षरंतारोनमोनाराय
णायच ॥ ३२ ॥ दलेषुचतुरोवर्णान्नारसिंहमनोर्लिखेत् ॥ श्रींह्रींश्रींजय
लक्ष्मीतिप्रियायनित्यप्रमुदित ॥ ३३ ॥ मनसेलक्ष्मीसितार्धदेहायेतिवैवदेत्॥

श्रींह्रींश्रींनमोमन्त्रस्स्यान्नृसिंहस्यरदाक्षरः ॥ ३४ ॥ तद्बहिःषोडशदलंके
शरेषुक्रमाल्लिखेत् ॥ तारंनमोभगवतेमहासुदर्शनायच ॥ ३५ ॥ हुंफट्षो
डशवर्णोयंदलेषुक्रमतोन्यसेत् ॥ ऋचःपुरुषसूक्तस्यबहिर्वृत्तद्वयंचरेत् ॥ ३६ ॥
तदन्तरालवीथ्यान्तुमातृकार्णैःप्रवेष्टयेत् ॥ सबिन्दुकैर्बहिस्तस्यभूपुरंतच्चतुर्ष्वे
पि ॥ ३७ ॥ कोणेषुविलिखेत्तारंयन्त्रंपौरुषमुच्यते ॥ सर्वपापहरंपुण्यंपुत्रा
युःकान्तिकीर्त्तिदम् ॥ ३८ ॥ यन्त्रेहैयङ्गवीनेनलिप्त्वापुरुषसूक्तकम् ॥ अष्टो
त्तरशतंजप्त्वाऋतुस्नातांतुभोजयेत् ॥ ३९ ॥ तद्यन्त्रनवनीतंचगर्भंधत्तेत
दाङ्गना ॥ सुपुत्रोजायतेवाग्मीसर्वागमविशारदः ॥ ४० ॥ एवंहैयङ्गवीनं
चविषार्त्तेसन्निपातिनि ॥ शूलेक्षयेचपाण्ड्वादौनिरुग्भक्षणतोभवेत् ॥ ४१ ॥
कुष्ठोपकुष्ठरोगेषुव्रणेभग्नेभगन्दरे ॥ फिरङ्गशीतलाद्येषुलेखनात्सुखमाप्नुयात् ॥
४२ ॥ अथातःसम्प्रवक्ष्यामिक्षेत्रस्यचपतेरिति ॥ पञ्चर्चस्यचसूक्तस्ययन्त्रंसर्वा
र्थसिद्धिदम् ॥ ४३ ॥ कृत्वाष्टदलपद्मस्यकर्णिकायांतुषड्दलम् ॥ तन्मध्येप्र
णवंलेख्यंतस्मिन्हुंबीजमालिखेत् ॥ ४४ ॥ साध्यनामचहुंबीजेलिखेत्कोणेषु
चैककम् ॥ सहस्रारहुंफडस्यचक्रमन्त्रस्यचाक्षरम् ॥ ४५ ॥ षण्नाममन्त्रान्पू
र्वोक्ताँल्लिखेत्षट्कोणसन्धिषु ॥ चतुरश्चतुरोवर्णाँल्लिखेदष्टदलेपुनः ॥ ४६ ॥
वराहमन्त्रस्यान्तेतुपत्रकेवर्णपञ्चकम् ॥ तारोनमोभगवतोवराहरूपमुच्यते ॥
ङेन्तंव्याहृतयःप्रोक्ताःपतयेपदमुच्चरेत् ॥ ४७ ॥ भूपतित्वंमेदेहीतिदापयान्तेऽग्नि
गेहिनी ॥ त्रयस्त्रिंशद्वर्णकोयंवराहस्यमनुःस्मृतः ॥ ४८ ॥ तद्बाह्येषोडशदले
चार्धमर्धांलिखेदृचम् ॥ ऋचस्ता अत्रवक्ष्यामिसावधानतयाशृणु ॥ ४९ ॥
क्षेत्रस्यपतेमधुमन्तमूर्मिंधेनुरिवपयोअस्मासुधुक्ष्व ॥ मधुश्च्युतंघृतमिवसुपूत
मृतस्यनःपतयोमृडयन्ति ॥ ५० ॥ क्षेत्रस्यपतिनावयंहितेनेवजायसि ॥
गामश्वंयोषयित्नवासनोमूलतीदृशे ॥ ५१ ॥ मधुमतीरोषधीर्द्यावआपोमधु
मन्नोभवत्वन्तरिक्षम् ॥ क्षेत्रस्यपतिर्मधुमान्नोअस्त्वरिष्यन्तोअन्वेनंचरेम ॥ ५२ ॥
शुनंवाहाःशुनंनराःशुनंकृषतुलाङ्गलम् ॥ शुनंवरत्रावध्यन्तांशुनमष्ट्रामुदि
ङ्गया ॥ ५३ ॥ शुनाशीराविमांवाचंजुषेथांयद्दिविचक्रथुः ॥ पयोयमस्तेनमामु
पसिञ्चतम् ॥ ५४ ॥ अर्वाचीसुभगेभवसीतेवन्दामहेत्वा ॥ यथानशुभगासय

थानसुफलासासि ॥ ५५ ॥ इन्द्रमीतांगृह्णातुतांपूषानियच्छतु ॥ सानःपय
स्वतीदुहामुत्तरांसमाम् ॥ ५६ ॥ शुनंनःफालाविकृषन्तुभूमिंशुनंकीनाशाअ
भियन्तुवाहैः ॥ शुनंपर्जन्योमधुनापयोभिःशुनसीराशुनमस्मासुधत्तम् ॥ ५७ ॥
क्षेत्रस्यतुपतिर्देवोवामदेवोमुनिःस्मृतः ॥ पुलस्त्यर्षिरनुष्टुप् चत्रिष्टुप्छन्दांसि
सूक्तके ॥ ५८ ॥ बहिर्वृत्तत्रयंकृत्वातत्रवीथीद्वयंभवेत् ॥ ग्लौंबीजेनाद्यवीथ्यां
तुवेष्टयेन्मातृकार्णकैः ॥ ५९ ॥ द्वितीयांभूपुरंतस्यबाह्येकोणेषुग्लौमिति ॥
लिखेद्दिक्षुचहुंबीजंयन्त्रमेतच्छुभेदिने ॥ ६० ॥ ताम्रपत्रेसमालेख्यस्वर्णसू
च्यायथाविधि ॥ स्थापितंभवनेद्वारेक्षेत्रेवानगरेपिवा ॥ ६१ ॥ देशेवातत्रवर्ध
न्तेदिनशःसर्वसम्पदः ॥ गजाश्वधेनुमहिषवृषोष्ट्राश्वतरादिभिः ॥ ६२ ॥
धनधान्यधराशस्यवासोरत्नविभूषणैः ॥ आह्लादयन्तिविभवैरन्यैश्चस्यात्समा
गमः ॥ ६३ ॥ अथातःसम्प्रवक्ष्यामियन्त्रमागावसूक्तकम् ॥ षट्कोणेविलिखे
त्कामबीजंसाध्यसमन्वितम् ॥ ६४ ॥ एकैकमक्षरंलेख्यंषट्कोणेषुध्रुवोनमः ॥
कृष्णायेतिलिखित्वाग्रेकुर्य्यात्पद्मंचतुर्दलम् ॥ ६५ ॥ वृत्तेषुविलिखेत्क्लींचकृष्ण
क्लीमितिवर्णकान् ॥ वासुदेवमनोवर्णादलेलेख्यास्त्रयस्त्रयः ॥ ६६ ॥ तद्बहि
र्दिग्दलंकृत्वापद्मंतत्केशरेषुच ॥ गोपीजनवल्लभायस्वाहामन्त्रंदशाक्षरम् ॥
६७ ॥ आलिख्यतस्यपत्रेषुनखार्णार्णद्वयंद्वयम् ॥ मायारमाथगोपालततोवे
षधरायच ॥ ६८ ॥ वासुदेवायहुंफट्चस्वाहाविंशार्णकोमनुः ॥ तद्बहिःषो
डशदलंकृत्वातत्रलिखेत्स्वरान् ॥ ६९ ॥ केशरेष्वथपत्रेषुवक्ष्यमाणाऋचोलि
खेत् ॥ अर्धमर्धंप्रतिदलंरमणीयंयथाभवेत् ॥ ७० ॥ आगावोअग्मन्नुतभद्रम
करत्सीदतुगोष्ठेरणयन्त्वस्मे ॥ प्रजावतीःपुरुरूपाइहस्युरिंद्रायपूर्वीरुषसोदुहा
नाः ॥ ७१ ॥ इन्द्रोयज्वनेपृणतेश्चशिक्षत्फलंमेददातिनस्वंमुषायति ॥ भू
योभूयोरयिमिदस्यवर्धयन्नभिन्नेखिल्येनिदधातिदेवयम् ॥ ७२ ॥ नतान
शन्तितस्करोनासामामित्रोव्यथिरादधर्षति ॥ देवांश्चयाभिःसचतेददातिच
ज्योगिताभिःसचतेगोपतिःसह ॥ ७३ ॥ नताअर्वारेणुकाकाटोअस्तुतेनसं
स्कृतत्रमुच्यन्तिताअभि ॥ उरुगायमभयंतस्यताअनुगावोमर्त्तस्यविचरन्ति
यज्वनः ॥ ७४ ॥ गावोभगोगावइन्द्रोमेअच्छानागवःसोमस्यप्रथमस्यमक्षः ॥

इमायागावःसजनासइन्द्रइच्छामीधृदामनसाचिदिन्द्रम् ॥ ७५ ॥ यूयंगावो
मेदयथाकृशंचिदश्रीरंचित्कृणुथासुप्रतीकम् ॥ भद्रंगृहेकृणुथभद्रवाचोबृहद्वोव
यउच्यतेसभासु ॥ ७६ ॥ प्रजावतीःसूयवसंरिसन्तीःसुप्रपाणेपिबन्तीः ॥ मा
वस्तेनईशतमाघशंसःपारवोहंतीसवृज्याः ॥ ७७ ॥ उपेदमुपपर्चनमाशु
गोयूयपृच्यताम् ॥ उपऋषभस्यरेतःस्युपेन्द्रतववीर्य्यें ॥ ७८ ॥ वृत्तद्वयंब
हिःकृत्वातद्वीथ्यांकादिकाँल्लिखेत् ॥ अकारान्तांस्तद्बहिश्चभूपुरंसम्यगा
लिखेत् ॥ ७९ ॥ कोणेपुग्लौंसमालिख्यलिखेद्भूरितिदिक्षुच ॥ गोपा
लयन्त्रमेतद्धिविधिनास्थापितंगृहे ॥ ८० ॥ तत्रगावःपयस्विन्यःसवृषा
श्चनिरामयाः ॥ पीनोधोबहुरूपाश्चविशालाश्चभवन्तिहि ॥ ८१ ॥
धनधान्यधरारत्नशालिनीतस्यमन्दिरे ॥ लक्ष्मीःकीर्तिःस्थिराभूत्वानिवसे
त्ससततंतदा ॥८२॥ अथान्यद्वक्ष्यतेयन्त्रं गवादेर्बहुभूतिकृत् ॥ मध्येष्टदलपद्म
स्य ससाध्यंप्रणवंलिखेत् ॥ ८३ ॥ आगावइतिसूक्तस्य एकैकांचदलेऋचम् ॥
वृत्तद्वयंबहिःकृत्वा तद्वीथ्यांमातृवेष्टनम् ॥ ८४ ॥ तद्बहिश्चतुरस्रंचकुर्य्याद्य
न्त्रमिदंगृहे ॥ स्थापितन्तत्तुगोश्वादि वृषैःपूर्णसदाभवेत् ॥ ८५ ॥ अथवक्ष्ये
दिनेशस्ययन्त्रंरोगनिवारणम् ॥ षट्कोणमध्येविलिखेत्साध्यंसप्रणवंततः ॥
८६ ॥ कोणेपुतारंह्रींसोहंहंसोवर्णान्क्रमाल्लिखेत् ॥ चतुर्दलन्तुकमलंतद्बाह्ये
केशरेपुच ॥ ८७ ॥ ह्रांह्रींहंसश्चपूर्वादौ लिखेत्पत्रेषुसर्वतः ॥ उद्यन्नद्यऋचः
पादालेख्यातद्बाह्यतोलिखेत् ॥ ८८ ॥ अष्टपत्रंतुकमलंकेशरेषुलिखेत्क्रमा
त् ॥ घृणिःसूरियआदित्य इदमेकैकमक्षरम् ॥ ८९ ॥ शुकेषुमेत्यादिऋचःप्रा
पयैके दलेदले ॥ वृत्तद्वयन्तुतद्बाह्ये वीथ्यांमातृप्रवेष्टनम् ॥ ९० ॥ तद्बहि
र्भूपुराम्रेषु अंह्रींह्रींसःइदंलिखेत् ॥ एतद्यन्त्रंतुसूर्य्यस्य नाशयेत्सकलान्ग्रहा
न् ॥ ९१ ॥ तेजोलक्ष्मींचभोगञ्च प्रतापंवर्द्धयेद्धृतिम् ॥ एतद्गोमयलिप्तायां
लिखेदारक्तचन्दनैः ॥ ९२ ॥ धरायांताम्रसूच्यातु सम्यगावाह्यपूजयेत् ॥
पूजान्तेचविशिष्टार्घ्यंप्रकल्प्यास्मैप्रदीयते ॥ ९३ ॥ कुष्ठयक्ष्मादिशान्त्यै च
क्षुद्ररोगविनाशनम् ॥ इदंयन्त्रंताम्रपात्रेलिखित्वास्थापितंगृहे ॥ ९४ ॥
विधिवत्पूजयन्नित्यंहन्यात्कुष्ठमुखान्गदान् ॥ अपस्मारंविस्मृतिंचरोगांश्चे

वाभिचारिकात् ॥ ९५ ॥ सुवर्णपत्रेचालिख्य तैलमध्येविनिःक्षिपेत् ॥ सहस्रसङ्ख्यंप्रजपेद्ध्यन्नद्यामितित्र्यृचम् ॥ ९६ ॥ तत्राशक्तशरीरस्यकुष्ठ रोगविनाशनम् ॥ इदमेवलिखेद्यन्त्रंनवीनेनवनीतके ॥ ९७ ॥ अष्टो त्तरशतंजप्त्वात्र्यृचंनिष्कास्यभक्षयेत् ॥ गदिनोरोगशान्तिःस्यात्सत्यमेतन्न संशयः ॥ ९८ ॥ अथान्यत्सम्प्रवक्ष्यामि गायत्रीसौरमन्त्रयोः ॥ यन्त्रंसमस्त रोगाणांनाशनंसूर्य्यवल्लभम् ॥ वृत्तंकृत्वातुतन्मध्येससाध्यंप्रणवंलिखेत् ॥ ९९ ॥ बहिस्तस्यत्रिकोणंतु मन्त्रागारेतिसंलिखेत् ॥ एकैकमक्षरंकोणेबहि र्वृत्तंपुनर्लिखेत् ॥ ३०० ॥ यक्षराजायेतितत्रलिखेत्पञ्चाक्षराणितु ॥ बहि स्तस्यतुषट्कोणेलिखेदेकैकमक्षरम् ॥ १ ॥ सहस्रारहुंफडितिअष्टकोणे ततोलिखेत् ॥ घृणिःसूरियआदित्यंलिखेदेकैककोष्ठके ॥ २ ॥ पत्राग्रेपुलिखे च्छ्रींह्रींइतिबीजद्वयंपुनः ॥ सौरंयन्त्रमिदंप्रोक्तमायुरारोग्यवृद्धिदम् ॥ ३ ॥ वन्ध्यानांपुत्रजननंस्त्रीणांसौभाग्यदायकम् ॥ शत्रुविजयदंसम्यग्रोगिणांरोग नाशनम् ॥ ४ ॥ किंबहूक्तेनविधिनाधृतेहस्तेफलप्रदम् ॥ तथैवसंप्रवक्ष्यामिसारा त्सारतरंपरम् ॥ ५ ॥ यद्बुद्ध्वाचमयाप्रोक्तंसारमाथर्वणस्यच ॥ शाबररूप मास्थायपृथ्वींपर्य्यटतामया ॥ ६ ॥ कलौलोकाभविष्यन्तिसर्वेकामार्थसाध काः ॥ असद्गुरूणांतन्मन्त्रैर्दृष्टैर्वापुस्तकादिषु ॥ ७ ॥ समयाचारविभ्रष्टा विक्षिप्तास्तेचनिर्धनाः ॥ अधर्मेणभविष्यन्तिभूताक्रान्तास्तथापरे ॥ ८ ॥ अभिचारिककृत्यादिरोगैर्ग्रस्तमहाग्रहैः ॥ तेषामर्थेमयादेवायन्त्रंतुप्रकटीकृत म् ॥ ९ ॥ मृदङ्गसदृशंकुर्य्याच्छीर्षपेतस्यवर्जितम् ॥ घ्राणादिकंचतुर्भिश्च इन्द्रियैस्तस्यमध्यगाम् ॥ १० ॥ तिर्य्यग्रेखांप्रकुर्वीतमुण्डमित्याबहिर्गताम् ॥ पार्श्वद्वयेपिकर्तव्यमग्रयोःशूलकद्वयम् ॥ ११ ॥ शूलविस्तारतुल्याचतदध स्तूर्ध्वरेखिका ॥ मुण्डोहस्ताभिधःप्रोक्तोमध्यंकुर्य्याच्चशूलवत् ॥ १२ ॥ गुह्ये न्द्रियस्थलेकुर्य्यात्पश्याकारांतुरेखिकाम् ॥ त्रिशूलौपीठिकायुक्तौपादयोस्त त्स्थलेन्यसेत् ॥ १३ ॥ एवंकृत्वाप्रेतरूपंबीजानेतांश्चसंलिखेत् ॥ शीर्षहस्ते रक्षशाहावूर्ध्वमष्टदलंलिखेत् ॥ १४ ॥ रेखार्धभागमुण्डन्तुङेन्तडंनंलिखेत्तथा ॥ वामबाहूपरिष्टाच्चहामोइत्यक्षरद्वयम् ॥ १५ ॥ अर्धभागेतुमुण्डस्यसस्मिवा

ष्टाश्चसंलिखेत् ॥ शिखाकार्य्याह्रद्स्थानंतिर्य्यगूर्ध्वंतुमंसदा ॥ १६ ॥ लिंगे
सतोमध्यभागपार्श्वयोश्चलिखेदिदम् ॥ क्रमान्नवविभागेषु अलीयंप्रथमाभ
वेत् ॥ १७ ॥ भूबीजंचाद्वितीयेस्यादहीनश्चतृतीयके ॥ सराहीयंचतुर्थन्तुवि
हकस्ततुपञ्चमम् ॥ १८ ॥ त्रैयाकइतिषष्ठंस्यात्तथानाम्बुदसप्तमम् ॥ त्रैयाक
इत्यष्टमञ्चनस्तरंनतथान्तिमम् ॥ १६ ॥ बहिःस्थानेतुकर्त्तव्यंद्विकाद्यंकोष्ठपट्
ककम् ॥ ऊर्ध्वपंक्तौक्रमाल्लेख्यंषट्केत्राद्वितयंतथा ॥ २० ॥ अधःपंक्तौसप्तगो
ष्ठौपेश्यांलेख्यंत्रसेसदा ॥ पेश्याबहिर्मम्हद्पेश्यधस्तात्तुदक्षिणे ॥ २१ ॥
पादपार्श्वेसाध्यनामवामेतन्मन्त्रमालिखेत् ॥ एतद्यन्त्रंदलेलेख्यंमस्यातन्नी
लकर्पटे ॥ २२ ॥ सम्यक्संवेष्टयेत्सातुवर्त्तिभूतांकुशाभिधा ॥ आदित्यवा
सरेसायंगोमयेनोपलेपयेत् ॥ २३ ॥ स्थानेश्वेताक्षतैस्तत्रपद्ममष्टदलंलिखेत् ॥
तत्कर्णिकायांप्रथमंपूजयेच्चगणाधिपम् ॥ २४ ॥ तस्यैवदक्षिणेपार्श्वेक्षेत्राधि
पतिमर्चयेत् ॥ पत्रेष्विन्द्रादिकानर्चेत्कर्णिकायांतुदीपिकाम् ॥ २५ ॥ सम्य
ग्न्यसेत्तदूर्ध्वन्तुस्थापयेत्तैलपात्रकम् ॥ तैलन्तुकुडवोन्मानंतिलानांतत्रतिष्ठ
ति ॥ २६ ॥ तादृशेमृन्मयेपात्रेधातुजेवाप्रकल्पयेत् ॥ पूजयित्वादीपिका
दिसायंतत्रोपवेशयेत् ॥ २७ ॥ तद्दर्शयन्निष्टयन्त्रंध्यायेद्दीपंविलोकयन् ॥
दीपाधिष्ठातृदेवस्यतुष्ट्यैसावरणस्यच ॥ २८ ॥ दद्यादामान्नमर्कन्तुवैदिका
यकुटुम्बिने ॥ यावत्प्रज्वलितोदीपःपश्येत्तावदतन्द्रितः ॥ २६ ॥ देवदोषेस
मुत्पन्नेदीपोवदतिसस्वयम् ॥ यत्किञ्चित्त्वरितंकार्य्यंशान्तिर्भवतिनिश्चि
तम् ॥ ३० ॥ दोषायदाराक्षसादेःशरीरेसत्यवादिनि ॥ तदातदैवकर्तव्यंरोगी
सुखमवाप्नुयात् ॥ ३१ ॥ अभिचारिककृत्यादौदीपकम्पःप्रजायते ॥ कम्पतेतु
क्षणेनैवमहांश्चापिक्षणेक्षणे ॥ ३२ ॥ एकेनभानुवारेणक्षुद्रदोषःप्रणश्यति ॥
भानुवारद्वयंकृत्याकृतदोषविनाशनम् ॥ ३३ ॥ साधकेनाप्यचरितंत्रिभि
र्दोषःक्षयंव्रजेत् ॥ मन्त्रभक्षणदोषोथचतुर्दीपैर्विनश्यतु ॥ ३४ ॥ कुगुरुप्राणम
न्त्रेणषड्भिर्दोषोविनश्यति ॥ रोगोपिसप्तदीपेननश्येदेतन्महाद्भुतम् ॥ ३५ ॥
त्रिनिमित्तंस्वयंगच्छेद्देवेवातायनेत्रयः ॥ अभ्यन्तरेकालिमावच्छिद्रंवापिप्र
दृश्यते ॥ ३६ ॥ त्रिशिखोवापिद्विवर्णोवानिस्तेजायदिजायते ॥ पूर्णमा

गुर्विनिर्देशयंसरोगीनैवजीवति ॥ ३७॥ सिद्धयन्त्रमिदं ोक्तंतान्त्रिकाणान्तु सिद्धिदम् ॥ स्वधर्म्मत्यागिनांनैवयन्त्रंकार्य्यन्तुपण्डितैः ॥ ३८ ॥ ब्राह्मंध र्म्ममुरातिष्ठेत्तस्यनास्तिपुरस्क्रिया ॥ स्वयंयन्त्राणिमन्त्राश्चसिद्ध्यन्त्यत्रन संशयः ॥ ३६ ॥ अष्टादशपुराणानिव्यासेनरचितानितु ॥ गौतमेनप्रणीतो योन्यायोसौधर्म्मसाधनम् ॥४०॥ भविष्यन्तिकलौनानाकुतर्कावेदनाशकाः॥ तानधीत्यद्विजोभूयःप्रेतोवाब्रह्मराक्षसः ॥ ४१ ॥ मीमांसासेश्वरायातुपुरुषा र्थप्रसाधिका ॥ निरीश्वराकर्म्मपराभोगंस्वर्गंप्रयच्छति ॥ ४२ ॥ स्मृतयो द्वादशप्रोक्ताःपंक्तौचाद्यःपराशरः ॥ शङ्खश्चलिखितोव्यासोवशिष्ठःकश्यपो मुनिः ॥ ४३ ॥ अगस्त्ययमहारीतादिवोदासःप्रजापतिः ॥ पैठीनसिश्च भगवाञ्जमदग्निश्चगौतमः ॥ ४४ ॥ भारद्वाजइमेप्रोक्ताधर्म्मशास्त्रप्रवर्त्त काः ॥ मतभेदस्तथातेषांविज्ञेयोदशभेदतः ॥ ४५ ॥ क्वचित्कालविभेदेनवि द्यतेतुमुनेर्वचः ॥ तस्माज्जातिंकुलंदेशंज्ञात्वाधर्म्मंसमादिशेत् ॥ ४६ ॥ शिक्षा कल्पोव्याकरणंनिरुक्तंछन्दएवच ॥ गणितंसंहिताहोरात्रिविधंज्योतिषन्त था ॥ ४७ ॥ वेदाङ्गानिषडेतानिवेदाश्चत्वारएवच ॥ चतुर्दशेष्वेषुयद्यत्त त्प्रोक्तन्धर्म्मसाधनम् ॥ ४८॥ सिद्धेयस्मिंस्तुसिद्धाश्चऋष्याद्याःस्वयमेवहि ॥ एतद्विरुद्धंवर्णानाम्भवेन्नोधर्म्मसाधनम् ॥ ४६ ॥ आयुर्वेदोधनुर्वेदोगान्धर्वो नीतयस्तथा ॥ शिल्पविद्याश्चगणितंशकुनंचेतिसप्तच ॥ ५० ॥ प्रोक्तानि चार्थशास्त्राणियथोक्ताचरणाद्ध्रुवम् ॥ यद्दर्शितम्भवेत्तत्रसमर्थःपुरुषार्थकृत् ॥ ५१ ॥ साहित्यमागमोवाजीकरणंकामचारणम् ॥ चतुर्थाकामशास्त्रंस्यात्त्वा दृश्यर्थंगुरुशास्त्रतः ॥ ५२ ॥ धर्म्मार्थाद्यविरोधेनभवेत्तत्कामसाधनम् ॥ विना गुरुंविनाबुद्धिंपुरुषार्थप्रशासने ॥ ५३ ॥ योगशास्त्रञ्चवेदान्तंद्वयम्मोक्षस्य साधनम् ॥ अन्येयेप्राकृताग्रन्थाधर्म्माभासाश्चतेसुराः ॥ ५४ ॥ अस्मिन्कलि युगेघोरेशिश्नोदरपरायणे ॥ कश्चिदेकःकोटिमध्येसर्वकर्म्मविवर्धनः॥ ५५ ॥ बुधोधर्म्मपरोभूयात्तदर्थमिदमुच्यते ॥ उत्पादयेत्सुपुत्रन्तुकुलदीपंतदुच्यते ॥ ५६ ॥ गर्भाधानाख्यसंस्कारंकुर्वीतप्रथमार्तवे ॥ सीमन्तोन्नयनंकार्य्यंतथा पुंसवनंस्मृतम् ॥ ५७ ॥ एतेत्रयस्तुसंस्काराब्राह्मगर्भत्वकारकाः ॥ एतैरेव

तुयोजातःसत्कृतोब्रह्मबीजतः ॥ ५८ ॥ जातकर्म्मादयस्तस्यचान्नप्राशनमेव च ॥ चत्वारस्तेबालकस्यसंस्काराब्राह्मसिद्धये ॥ ५६ ॥ व्रतबन्धःसमावर्तोवेदपाठोविधानतः ॥ एतेत्रयस्तुसंस्काराःकौमारब्रह्मकारकाः ॥ ६० ॥ एवंयोदशसंस्कारैःसंस्कृतोदशकर्म्मकृत् ॥ सएवब्राह्मणोज्ञेयोमन्त्राःसर्वेपितद्वशाः ॥ ६१ ॥ तद्दृष्ट्वाराक्षसावीराम्लेच्छाबाधितुमक्षमाः ॥ कर्म्माणिदशतेद्दृष्ट्वापलायन्तेतुदूरतः ॥ ६२ ॥ दशप्रकारान्यतरप्रकारेणधनार्जनम् ॥ निर्वाहायकुटुम्बस्यप्रथमंकर्म्मचोच्यते ॥ ६३ ॥ याज्यस्ययाजनंकृत्वासाधयेत्प्रथमंधनम् ॥ पाठयित्वायोग्यशिष्यंद्वितीयंपारितोषिकम् ॥ ६४ ॥ दुर्दातारंचदुष्कालंदुर्दानंदुष्टभूमिकाम् ॥ हित्वाप्रतिग्रहंकृत्वातृतीयन्धनसाधनम् ॥ ६५ ॥ दायादक्रमतःप्राप्तंसञ्चितंतच्चतुरीयकम् ॥ एतद्वंशेतुयद्वित्तंतल्लब्धंपञ्चमंस्मृतम् ॥ ६६ ॥ अर्थोपायास्तुयेप्रोक्तास्साधितंतैस्तुषष्ठकम् ॥ सन्मन्त्रस्योपदेशेनयल्लब्धन्तत्तुसप्तमम् ॥ ६७ ॥ कृषिंयथोक्तमार्गेणकृत्वातच्चाष्टमंमतम् ॥ कालानुगुणतःप्राप्तंनवमंपारितोषिकम् ॥ ६८ ॥ विशिष्टंपूर्वपूर्वंतुदानंस्याद्द्विगुणंभवेत् ॥ धनार्जनाख्यंकर्म्मैतत्प्रथमंपरिकीर्त्तितम् ॥ ६९ ॥ पोष्यकर्म्मद्वितीयंस्यादादौस्वीयेकलेवरे ॥ ततःपतिव्रतांभार्य्यामातरंपितरंततः ॥ ७० ॥ पुत्रान्गुरून्भ्रातरश्चकन्यामातामहस्तथा ॥ श्वश्रूश्चायंपोष्यवर्गोविप्रस्तौयच्चलभ्यते ॥ ७१ ॥ एकाद्यंशान्समीकृत्यभागन्तेभ्यःप्रदापयेत् ॥ अत्रपुत्रस्ययोभागस्तस्यपोष्यसमीकृतिम् ॥ ७२ ॥ कृत्वाविप्रस्तुरज्जीतब्राह्मण्यान्नतुहीयते ॥ नित्यस्नानंतृतीयंस्यादस्नायीशूद्रतांव्रजेत् ॥ ७३ ॥ दशस्नानानिचैतानिगुणेनोपचितानिच ॥ आदौवर्णतरुस्नानंसाम्यगंचद्वितीयकम् ॥ ७४ ॥ ओलोदकंचमात्रंचभौमाख्यंचविभूतिमत् ॥ गायत्रंचापिवायव्यंकामिकंमानसंतथा ॥ ७५ ॥ सन्ध्याकर्म्मचतुर्थंस्याद्दशधातत्प्रकीर्त्तितम् ॥ प्रागुक्तविधिनापूजागुरुदर्शनपूर्विका ॥ ७६ ॥ अष्टाधिकसहस्रंचजपोमुख्यमिदंस्मृतम् ॥ द्वयेकयोरेवमाचारात्सन्ध्याभेदत्रयंमतम् ॥ ७७ ॥ सार्चनामुद्रिकायुक्तातथाचान्यानिमुद्रिका ॥ अष्टोत्तरसहस्रन्तुतथाचाष्टोत्तरंशतम् ॥ ७८ ॥ अष्टाविंशतिरष्टौवाजपेभेदचतुष्टयम् ॥ जपाभावेनसन्ध्यार्घ्यंगा

यत्र्यासम्प्रदीयते ॥ ७६ ॥ दशमीयंभवेत्सन्ध्याशूद्रस्तल्लोपतोभवेत् ॥ देव पूजाद्वयंप्रोक्तंनित्यंकाम्यंचपञ्चमम् ॥ ८० ॥ पञ्चधापञ्चयज्ञाश्चदशकर्म्मेति कीर्त्यते ॥ देवभूतर्षिमनुजपितृणामितिभेदतः ॥ ८१ ॥ तेपिपञ्चविधाःप्रोक्ता उत्तमोत्तममुख्यकाः ॥ पञ्चभेदैश्चसम्भिन्नाएकैकस्यपरिच्युतः ॥ ८२ ॥ तत्रो च्यतेदेवयज्ञप्रकारोदेवतर्पणम् ॥ वैश्वदेवाहुतिर्नित्योपासनस्याहुतिस्तथा ॥ ८३ ॥ अग्निहोत्राहुतिश्चैवतत्सूक्तस्यतथाजपः ॥ त्रिविधातुबलिःप्रोक्तःशौ चान्तेतुत्यजेज्जलम् ॥ ८४ ॥ तथाचवैश्वदेवान्तेयन्वताइतिमन्त्रतः ॥ आ त्मोच्छिष्टस्ययच्छेषंतृतीयंतत्प्रकीर्त्तितम् ॥ ८५ ॥ अयन्तुभूतयज्ञःस्यात्क्षुद्र बाधानिवारणः ॥ अष्टकंप्रपठेन्नित्यंपूजान्तेयतमानसः ॥ ८६ ॥ तदभावेध्या नमात्रंवेदानांचपठेदृचः ॥ तदभावेस्ववेदस्यपाठोनित्यमुदीरितः ॥ ८७ ॥ ऋषियज्ञस्तेनभवेद्विप्रोजन्मनिजन्मनि ॥ आममन्नंयथाशक्त्याप्रातर्देयंतथा पुनः ॥ ८८ ॥ यज्ञादौवैश्वदेवान्तेयज्ञोयंमानुषःस्मृतः ॥ तर्पणंहन्तकारश्च पितृयज्ञोद्विधामतः ॥ ८९ ॥ यथाबाऽस्यपठनंपण्डितस्यपरावरम् ॥ तथैवस त्कुलीनानांमनोवैदिकवर्त्मनि ॥९०॥ खानपानाङ्गनारम्यकौलिकेरमतेमतः॥ प्रायःकलियुगेनॄणांनृयोनिस्तेनदुर्लभा ॥ ९१ ॥ अज्ञानीकौलिकोयंतुपतितः शूकरोभवेत् ॥ वामाचारान्निपतितोज्ञानीकुक्कुरतांव्रजेत् ॥ ९२ ॥ वामेवाकौ लमार्गेवाद्वयोःस्यात्सिद्धिरैहिकी ॥ योतिगुप्तःप्रत्यहंचबलिपूजादितत्परः ॥ ९३ ॥ अथवापरिभूतोवासर्वलोकबहिष्कृतः ॥ प्रायःकलियुगेदेवाधातुवादेध नक्षयः ॥९४॥ निन्दाचतान्त्रिकेमार्गेनानादुःखानिकौलिके ॥ शैवादिवैष्ण वादीनांद्वेषान्निरयगामिनः ॥ ९५ ॥ एकःशुद्धोमयादृष्टोलोकद्वयफलप्रदः ॥ वेदमार्गोस्त्यत्रसिद्धिःपरत्रापिपरागतिः ॥९६ ॥ इतितेतत्त्वमाख्यातंसर्वतन्त्रे पुगोपितम् ॥ कलौस्थितोपकारायकिमन्यच्छ्रोतुमिच्छसि ॥ ३९७ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेवैदिकयन्त्रकथनप्रकाशःपञ्चदशः ॥ १५ ॥

---

श्रीदेव्युवाच ॥ असिद्धगुरुणादत्तोमनुःशिष्यायवागुरुः ॥ सिद्धोमन्त्रा न्तरैर्देवनैवसिद्धोयथागुरुः ॥ १ ॥ भिन्नाम्नायोयदाशिष्यस्तद्भिन्नाम्नायदेवता

म् ॥ यजतेतत्रदेवेशकीदृक्सिद्धिस्तुतद्भवेत् ॥ २ ॥ ईश्वरउवाच ॥ गुरुश्चे दक्षिणाम्नायीसर्वाम्नायेषुदीक्षितः ॥ ऊर्ध्वाम्नायीतथान्येषुपूर्वाम्नायीपरेषुच ॥ ३ ॥ द्वयोस्तुपश्चिमाम्नायीउत्तरेऽधरेभवेत् ॥ अधरेनैवकुत्रापिगुरुत्वंचविलोकितम् ॥ ४ ॥ दक्षिणोपासकःकालऊर्ध्वःसायुज्यमाप्नुयात् ॥ देवतायास्तथा पूर्वःसारूप्यंलभतेपरः ॥ ५ ॥ सामीप्यंत्वपरोलोकमधोगत्यैहिकंफलम् । लोभत्यागश्चोपकारोह्यधोमार्गेप्युदर्ककृत् ॥ ६ ॥ मन्त्रान्तरेचसंसिद्धोगुरुर्मन्त्रंप्रयच्छति ॥ यथोक्ताचरणात्तस्यसिद्धिःशिष्यस्यजायते ॥ ७ ॥ कृपावशात्सिद्धमन्त्रंददातिचयदागुरुः ॥ विनाजपंविनापूजांसिद्धयस्तत्करे स्थिताः ॥ ८ ॥ असिद्धगुरुणादत्तोमन्त्रःस्याद्बहुविघ्नदः ॥ तत्रादौसाधयेद्विघ्नराजमन्त्रंततःपुनः ॥ ९ ॥ निष्पापस्यपुरश्चर्य्यास्वतःसिद्धयेन्मनूत्तमः ॥ तत्राम्नायविभेदेनसर्वतन्त्रेषुगोपितम् ॥ १० ॥ एकबीजात्मकंवक्ष्येविघ्नमन्त्रं सुसिद्धिदम् ॥ तत्रादौवैदिकानांतुगकारःकेवलोमतः ॥ ११ ॥ दक्षिणानां बिन्दुयुक्तोद्विबिन्दुःपूर्वमार्गिणाम् ॥ एतद्द्वययुतःपश्चादूर्ध्वाम्नायेपिगौमिति ॥ १२ ॥ ग्लौमुत्तरेगौमितिचपातालाम्नायईरितम् ॥ गणपोस्यमुनिश्छन्दो निवृद्विघ्नश्चदेवता ॥ १३ ॥ गणंजयायस्वाहाहृत्कमेकदंष्ट्रायहुंफट् ॥ अचलकर्णिनेनमःशिखाप्रोक्ताथवर्म्मच ॥ १४ ॥ गजवक्त्रायचनमस्तथानेत्रमुदीर्य्यते ॥ महादशनचण्डायहुंफट्द्वैरिकमस्त्रकम् ॥ १५ ॥ षड्दीर्घयुक्तबीजेनतान्त्रिकोन्यासमाचरेत् ॥ ततोगणपतिंध्यायेद्यतवाक्चप्रसन्नधीः ॥ १६ ॥ रक्ताम्बरंरक्तवर्णंरक्तगन्धानुलेपनम् ॥ रक्तपुष्पैःपूज्यमानंतुन्दिलंचन्द्रमौलिनम् ॥ १७ ॥ त्रिनेत्रंवामनंविघ्नाधीशंपूज्यंचशुण्डिनम् ॥ वामेदक्षेद्वयोःपाशांकुशौपाण्योस्तुबिभ्रतम् ॥ १८ ॥ पद्मासनंसर्वभूषंध्यायेद्विघ्नविनायकम् ॥ श्रीपर्णादिकृतेपीठेपूजयेत्कुंकुमादिना ॥ १९ ॥ अर्चयेत्कर्णिकायांतुदेवंपत्रेषुवैक्रमात् ॥ तीव्राचज्वालिनीनन्दाभोगदाकामरूपिणी ॥ २० ॥ उग्रातेजस्वतीसत्यानवमीविघ्ननाशिनी ॥ आद्यामध्यातथान्तमनाःपीठमनुंशृणु ॥ २१ ॥ ॐसर्वशक्तिकमलासनायनमइत्ययम् ॥ पूर्वादिषुचतुर्दिक्षुयजेत्पीतंगणाधिपम् ॥ २२ ॥ गणेशानंगौरवर्णंरक्तंचगणनायकम् ॥ गणक्रीडंनीलव

एकैकशरेषु ततो यजेत् ॥ २३ ॥ अग्नीशासुरवायव्यमध्येचान्तरदिक्षु च ॥ मन्त्रस्यास्यषडङ्गानिध्यातव्यास्ताश्चदेवताः ॥ २४ ॥ तुषारस्फटिकश्यामनीलकृष्णारुणत्विषः ॥ वरदाभयधारिण्यःप्रधानतनवःस्त्रियः ॥ २५ ॥ वक्रतुण्डैकदंष्ट्रौचमहोदरगजाननौ ॥ लम्बोदराख्यविकटौविघ्नराड्धूम्रवर्णकौ ॥ २६ ॥ पूर्वादिपुदलेष्वर्च्याब्राह्म्याद्याश्चदलाग्रतः ॥ ध्यानंतासांप्रवक्ष्यामिप्रोक्तंसव्यक्रमेणतु ॥ २७ ॥ ब्राह्मीरक्तसमाध्येयामृगचर्मविभूषिता ॥ अक्षमालामयोदण्डंकुण्डिकांदधतींकरैः ॥ २८ ॥ त्रिशिखंपरशुंहस्तैर्डमरुंनृकपालकम् ॥ बिभ्राणांचन्द्रगौराङ्गींमहेशींभावयेच्छुभाम् ॥ २९ ॥ गुणंखट्वाङ्गकंदण्डमंकुशंदधतींकरैः ॥ इन्द्रगोपारुणांध्यायेत्कौमारींकरुणालयाम् ॥ ३० ॥ अरिशङ्खकपालानिघण्टांचकरपङ्कजैः ॥ बिभ्राणांवैष्णवींध्यायेन्नीलमेघसमप्रभाम् ॥ ३१ ॥ तोमरांकुशवज्राङ्कविद्युद्युक्तकराम्बुजाम् ॥ इन्द्राणींभावयेन्मन्त्रीनीलवर्णांसुभूषणाम् ॥ ३२ ॥ हलंचमुशलंदोर्भिर्दधानांखड्गखेटकौ ॥ वाराहींभावयेच्छक्तिमञ्जनाचलसन्निभाम् ॥ ३३ ॥ धारयन्तींशूलखेटौ कपालंनृशिरःकरैः ॥ चामुण्डांशोणवर्णांचमुण्डमालायुतांस्मरेत् ॥ ३४ ॥ स्वर्णाभामक्षमालांचबीजपूरकपालके ॥ पद्मंचदधतींहस्तैर्महालक्ष्मींस्मरेत्सुधीः ॥ ३५ ॥ चतुरस्रत्रयान्तस्थवीथिद्वन्द्वेसमर्चयेत् ॥ दिक्पालांश्चतदस्त्राणिपूजाविघ्नहरस्यतु ॥ ३६ ॥ यश्चैवंपूजयेद्देवंगणेशंविघ्ननाशनम् ॥ असिद्धादपिसम्प्राप्तोमन्त्रोसौसिद्धिकृद्भवेत् ॥ ३७ ॥ लक्षमेकंमनुंजप्त्वाजुहुयात्तद्दशांशतः ॥ मोदकैःपृथुकैर्लाजैःसक्तुभिश्चेक्षुपर्वभिः ॥ ३८ ॥ नारिकेलैस्तिलैर्मोचैर्होमंकुर्य्यात्पृथक्पृथक् ॥ सहस्रमेकंद्विशतंपञ्चाशत्प्रमितंतथा ॥ ३९ ॥ तिलैस्त्रिमधुराक्तैश्चहोमःकार्य्योथकथ्यते ॥ दोग्धान्नेनघृताक्तेनहोमोभीष्टफलप्रदः ॥ ४० ॥ लक्ष्मीकामोनारिकेलैश्चतुर्थ्यांतुचतुश्शतम् ॥ सितपक्षादिमारभ्यप्रत्यहंचहुनेत्क्रमात् ॥ ४१ ॥ चतुर्थ्यन्तंततःसर्वप्राणिनोवशगानृणाम् ॥ तिलैश्चघृतसंयुक्तैर्होमःश्रीवश्यकीर्त्तिदः ॥ ४२ ॥ स्वादुत्रययुतैर्लाजैर्हुनेत्सप्तदिनावधि ॥ कन्यार्थीलभतेकन्यांपुत्रार्थीलभतेसुतम् ॥ ४३ ॥ दधिसंसिक्तलवणैर्जुहुयाच्चचतुर्दिनम् ॥ नितम्बिन्यांचवश्यादौभवेद्वश्यंतथेप्सितम् ॥ ४४ ॥ गौरवंलाघवंसाध्यंजाप्यं

चासाध्यमेवच ॥ कार्य्यंज्ञात्वाहोमसंख्यांकल्पयेच्चसहस्रतः ॥४५॥ कोट्यन्तमेवविज्ञेयंयत्रसंख्यातुनोदिता ॥ सितार्कद्रुममूलेनकुचन्दनसुदारुभिः ॥ ४६॥ गजाक्षत्रोटिनंचैवदन्तकेनापिदन्तिनाम् ॥ विधायविघ्नंसम्पूज्यतंपृष्ट्वाप्रजपेन्मनुम् ॥ ४७ ॥ उपोषितःशुचिश्चन्द्रग्रहणेतंसमुद्धरेत् ॥ शिखायांव्यवहारादौसमरेविजयीभवेत् ॥ ४८ ॥ रोचनारजसानेनकृतंचमनुनाततः ॥ तिलकंसर्वराजानोलोकाःस्युर्वशगास्सदा ॥ ४९ ॥ नवनीतेनवैसाध्यनामालिख्यानुलोमगम् ॥ विलोमंविघ्नबीजंचतद्घृतंस्थापितंजले ॥५०॥ अष्टोत्तरशतंजप्त्वातूष्णींतद्भक्षयेत्तदा ॥ सप्ताहाद्वशगःसाध्यःसाधकस्यभवेद्ध्रुवम् ॥५१॥ गणेशंतर्पयेत्तोयैःप्राग्वत्कार्यवशेनतु॥ मराडादिभिरवाप्नोतिमन्त्रोयंप्रणवादिकः ॥ ५२ ॥ संन्यासिनेचपूजायांहृदन्तःपरिकीर्त्तितः ॥ वक्ष्येथदक्षिणाम्नायेलक्ष्मींगणपतिंसुराः ॥ ५३ ॥ गजलक्ष्मीसमायुक्तमयंयोगोतिदुर्लभः ॥ श्रींगंसौम्यायचोच्चार्य्यमहागणपतिंतथा ॥ ५४ ॥ ङेन्तमुक्त्वावरवरदोक्त्वासर्वजनंवदेत् ॥ मेवशमानयस्वाहेत्येकोनत्रिंशदक्षरः ॥ ५५ ॥ अन्तर्यामीमुनिश्छन्दोगायत्रीत्रिवृदन्विता ॥ देवोलक्ष्मीगणेशोत्राथाद्यबीजद्वयेनतु ॥५६॥ षड्दीर्घयुक्तेनांगानिजातियुक्तानिकारयेत् ॥ हेमाभंपीतवसनंचक्रशङ्खगदाभयान् ॥ ५७ ॥ दक्षोर्ध्वकरमारभ्यदक्षिणेधःकरावधि ॥ दधतंशुण्डयास्वर्णघटंपद्मोपरिस्थितम् ॥ ५८ ॥ वामाङ्कविष्णुलक्ष्म्याचाश्लिष्टंदक्षभुजेनतु ॥ प्राक्प्रोक्तेपूजयेत्पाठेतीव्रादिनवशक्तिके ॥ ५९ ॥ अष्टपत्राम्बुजद्वन्द्वेकर्णिकाकेशरोज्ज्वले ॥ चतुर्द्वारसमायुक्तचतुरस्रत्रयावृते ॥ ६० ॥ मूलेनमूर्त्तिंसङ्कल्प्यतस्यामावाह्यपूजयेत् ॥ प्रथमावृत्तिरङ्गैःस्याद्वक्रमुण्डादिभिःपरा ॥ ६१ ॥ अणिमामहिमाचैवलघिमागरिमातथा ॥ ईशित्वंचवशित्वंचप्राकाम्यंप्राप्तिरग्रतः ॥ ६२ ॥ चतुर्थीमातृभिश्चाग्रेलोकेशाआयुधानिच ॥ लक्षंजपेद्धुनेद्बिल्वसमिधोमधुरप्लुताः ॥६३॥ तर्प्पणादिततःकृत्वाकाम्यकर्माणिसाधयेत् ॥ हुनेच्चैत्रसहस्राणिश्रीफलैर्मधुरान्वितैः ॥ ६४ ॥ महालक्ष्मीकरोहोमःपुत्रमित्रकलत्रदः ॥ शुद्धतोयेनसन्तर्प्यचत्वारिंशाच्चतुःशतम् ॥ ६५॥ चत्वारिंशाद्दिनान्मन्त्रीवाञ्छितांलभतेश्रियम् ॥ ताराद्योयंरमाहीनस्तथाष्टाविंशदक्षरः । ६६ ॥

न्यासध्यानादिकंप्राग्वत्पूजाभेदोनिगद्यते ॥ आदावङ्गानिचततोबलाका विमलातथा ॥ ६७ ॥ कमलवनमालाचविभीषिकाचमालिका ॥ वशङ्करीवसुमालापार्श्वयोःशङ्खपद्मकौ ॥ ६८ ॥ लोकेशाश्चतदस्त्राणिपूजयेत्काम्यमुचते ॥ उरोमात्रेजलेस्थित्वाध्यात्वासवितृमण्डले ॥ ६९ ॥ देवंत्रिलक्षजपतोधनवृद्धिःप्रजायते ॥ बिल्वमूलंसमास्थायतावज्जप्तेफलंहितत् ॥ ७० ॥ अशोककाष्ठैर्ज्वलितेवह्नावाज्याक्ततण्डुलैः ॥ होमतोवशयेद्विश्वमर्ककाष्ठंतथापिवा ॥ ७१ ॥ खादिराग्नौनरपतिंलक्ष्मींपायसहोमतः ॥ श्रीमित्येकाक्षरःप्रोक्तोमन्त्रश्छन्दोनिवृन्मतम् ॥ ७२ ॥ भृगुर्मुनिर्देवतातुलक्ष्मीःसर्वप्रदामता॥ षड्दीर्घबीजयुक्तेनषडंगानिसमाचरेत ॥ ७३ ॥ पद्मारूढांसुवर्णाभांनपद्मोर्ध्वकरद्वयाम् ॥ अधोदक्षेणाभयदांवामेनवरदायिनीम् ॥ ७४ ॥ हिमाचलनिभैर्नागैःशुण्डाग्रामृतकुम्भकैः ॥ चतुर्भिःसिच्यमानांचक्षौमवस्त्रांकिरीटिनीम् ॥ ७५ ॥ ध्यायेद्धरिप्रियांदेवींभक्तानुग्रहकातराम् ॥ धर्म्मादिकल्पितेपीठेभूपुराद्येदलाष्टके ॥ ७६ ॥ रमामावाह्यगन्धाद्यैःकर्णिकायांयजेत्ततः ॥ विभूतिरुन्नतिश्चैवहृष्टिःकीर्त्तिश्चसन्नतिः ॥ ७७ ॥ व्युष्टिरुत्कृष्टिर्ऋद्धिश्चक्रमात्पूज्यादिगष्टके ॥ मध्येसिंहासनंपूज्यंसर्वशक्तिमयंतथा ॥ ७८ ॥ बीजाद्यमासनंदद्यान्मूर्तिंमूलेनकल्पयेत् ॥ षडङ्गानिचसम्पूज्यपुनरष्टदलेर्चयेत् ॥ ७९ ॥ चतुर्दिक्षुचदेव्यग्राद्वासुदेवंसङ्कर्षणम् ॥ प्रद्युम्नंचानिरुद्धंचविदिशासुतथाक्रमात् ॥ ८० ॥ दमकंसलिलंचैवगुग्गुलंचकुरण्टकम् ॥ देवीदक्षिणहस्ताग्रेशङ्खाख्यंनिधिमर्चयेत् ॥ ८१ ॥ वामेपद्मनिधिंचैवद्वितीयेष्टदलेततः ॥ बलाकांविमलांचैवकमलांवनमालिकाम् ॥ ८२ ॥ विभीषिकांमालिकांवशङ्करींवसुमालिकाम् ॥ लोकपालानायुधानिप्रोक्तमेतच्छ्रियोर्चनम् ॥ ८३ ॥ जपेद्वादशकरलक्षंचतत्सहस्रंहुनेत्पुनः ॥ पद्मैस्त्रिस्वादुसंयुक्तैस्त्रिनवैःश्रीफलैरपि ॥ ८४ ॥ त्रिभिर्वामधुराक्तैश्चतर्प्पणादिततश्चरेत् ॥ एवंसिद्धमनुर्मन्त्रीसाधयेन्निजवाञ्छितम् ॥ ८५ ॥ वक्षोजदघ्नेपयसितिष्ठन्नर्कगतांश्रियम् ॥ संस्कृत्यमनुमेनंचजपेल्लक्षत्रयावधि ॥ ८६ ॥ सोचिरेणैवकालेनदारिद्र्यात्परिमुच्यते ॥ मधुसूदनगेहेचबिल्वाधउपविश्यच ॥ ८७ ॥ त्रिलक्षंजपेन्मन्त्रीवत्सराद्

ञ्चितार्थदः ॥ अधिकंवसुसञ्जातंलभतेनान्यथाचिरात् ॥ ८८ ॥ अशोकैर्घशिचते वह्नौ रघृतस्ततण्डुलैर्हुनेत् ॥ मन्त्रीत्रिभुवनंसर्वंवशंकुर्य्यान्नचान्यथा ॥ ८९ ॥ खादिरैःकमलैःसम्यगेधितेग्नौयथाविधि ॥ तण्डुलैस्त्रिस्वादुयुक्तैर्जुहुयान्मन्त्र वित्तमः ॥ ९० ॥ तेनराजकुलंवश्यंधनवानर्थवान्भवेत् ॥ अर्कवह्नौहुने न्मन्त्री।सुशुद्धैःशालितण्डुलैः ॥ ९१ ॥ नियुतंराज्यलक्ष्मींसचायुःपुत्राँल्लभे द्ध्रुवम् ॥ त्रिस्वादुयुक्तैर्नलिनैर्लक्षमेकंहुनेत्सुधीः ॥ ९२ ॥ अलक्ष्मीसहितो मर्त्यौलक्ष्मीमाप्नोतिनिश्चितम् ॥ धनधान्यादिसम्पत्त्यातुष्टोभवतिसाधकः ॥ ९३॥ब्राह्मणस्यगृहेबिल्वं समारोप्यविवर्धयेत् ॥ श्रीसूक्तंचपठन्नेव तत्रैवजुहुया त्पुनः ॥ ९४ ॥ त्रिस्वादुयुक्तैःकुसुमैः फलैश्चापिसमिद्वरैः ॥ स्कन्धभेदैस्तस्य नरसिंहन्मूलेपिसंहुनेत् ॥ ९५ ॥ बिल्वाभिमिश्रहविषा हविष्याण्यतिरंह सा ॥ प्रत्यक्षाचभवेत्तस्य कथमश्रीःकुतोभवेत् ॥ ९६ ॥ वक्ष्येथशक्तिगणपम न्त्रंह्रींग्रींततश्चह्रीम् ॥ त्र्यक्षरोयंविराट्छन्दो मुनिर्भार्गवईरितः ॥ ९७ ॥ दे वताशक्तिगणपः षडङ्गानिसमाचरेत् ॥ षड्दीर्घयुग्गकारेण ततोध्यायेद्गजा ननम् ॥ ९८ ॥ दक्षोर्ध्वेचांकुशंवामे पाशंवामेत्वधःकरे ॥ बीजपूरंस्वयंतत्तु दक्षिणेस्वर्णवर्णकम् ॥ ९९ ॥ पुष्करंमोदकान्बिभ्रत्कर्णयोर्दीर्घचामरे ॥ पू र्वोक्तेपूजयेत्पीठे पूर्वादिनवशक्तिके ॥ १०० ॥ अष्टपत्राम्बुजेदेवंचतुरस्रत्र यावृते ॥ प्रथमाङ्गावृतिःप्रोक्ता द्वितीयाचापिमातृभिः ॥ १ ॥ तृतीयालोक पालैःस्यात् शस्त्रौघैश्चचतुर्थ्यपि ॥ लक्षमेकंजपेन्मन्त्रं हविष्याशीजितेन्द्रि यः ॥ २ ॥ तद्दशांशंप्रजुहुयादपूपैर्घृतसम्प्लुतैः ॥ एवंसिद्धमनुर्मन्त्री काम्य कर्म्माणिसाधयेत् ॥ ३ ॥ शुक्लपक्षेचतुर्थ्यांच पूजयित्वाविनायकम् ॥ अपू पैर्गुडसम्मिश्रैः पक्वान्नैश्चघृतप्लुतैः ॥ ४ ॥ मरीचैःक्षुरकैश्चैव सैन्धवेनापिमि श्रितैः ॥ देवस्यसन्निधौमन्त्री जुहुयात्त्रिसहस्रकम् ॥ ५ ॥ गद्यपद्यमयीवा णी सप्ताहाद्भवतिध्रुवम् ॥ वश्यार्थीमधुहोमेन राजानंवशमानयेत् ॥ ६ ॥ कन्यार्थीजुहुयाल्लाजैस्तन्नामपुरमन्त्रतः ॥ सप्तसम्भोजयेत्कन्या यद्वैकांसल भेद्ध्रुवम् ॥ ७ ॥ कर्षमात्रंचवास्वर्णं पलमात्रंतथैवच ॥ सूर्य्यग्रहेतथाचन्द्रग्र हणेचाभिमन्त्रयेत् ॥ ८ ॥ अष्टोत्तरसहस्रन्तु सप्तधाविभजेत्ततः ॥ एकंभागं

गृहेस्वीये देवताध्यानपूर्वकम् ॥ ९ ॥ शेषान्भागान्द्वितीयाह्नि क्रमाच्चैकैक शःपिबेत् ॥ ध्यानपूर्वंदेवतायाः प्रातःप्रातस्तदाभवेत् ॥ १० ॥ बुद्ध्याबुधेनस दृशः पण्डितोगुरुणासमः ॥ कविनाचकवित्वेन शनिनाप्रतिवादिनम् ॥ ११ ॥ वन्ध्यर्तुस्नानदिवसे पूजयित्वाविनायकम् ॥ निष्कार्धपादमानेन ह रिद्राश्ववचान्तथा ॥ १२ ॥ गोमूत्रेकुष्ठकंपिष्टं सहस्रमभिमन्त्रितम् ॥ गुरवेद क्षिणांदत्त्वा पिबेन्नारीतदौषधम् ॥ १३ ॥ ततस्सालभतेपुत्रं सर्वलक्षणसंयुत म् ॥ आयुष्मन्तंसुरूपंच बुद्धिमन्तंश्रियायुतम् ॥ १४ ॥ ताराद्योयंचतुर्वर्णो गायत्रंछन्दउच्यते ॥ पूर्ववच्चषडङ्गानिहेमाभोहेमवस्त्रवान् ॥ १५ ॥ बृहज्जा नुस्तुन्दिलश्च लम्बबाहुविलोचनः ॥ दक्षोर्ध्वहस्तपाशंचाधोवामेचाक्षसूत्र कम् ॥ १६ ॥ दक्षिणाधोनिजंदन्तमूर्ध्वेबाहौतथासृणिम् ॥ पुष्करेणतु बिभ्राणं मोदकंहेमभूषणम् ॥ १७ ॥ शक्तियुक्तंविश्ववन्द्यं गणेशंचिन्त याम्यहम् ॥ प्राग्वत्पूजासमुद्दिष्टा जपोलक्षत्रयम्मतम् ॥ १८ ॥ घृताक्तैश्चति लैर्होमं तर्पणादिततश्चरेत् ॥ आज्यान्नैर्जुहुयान्नित्यमन्नवान्सनरोभवेत् ॥ १९ ॥ पायसान्नेनमहतीं श्रियमाप्नोतिमानवः ॥ गंक्षिप्रप्रसादनाय हृदन्तोयं दशाक्षरः ॥ २० ॥ ऋषिर्गणकआख्यातश्छन्दःप्रोक्तंविराडिति ॥ देवताक थिता ।क्षिप्रप्रसादनविनायकः ॥ २१ ॥ षड्दीर्घभाजाबीजेन कुर्यादङ्गक्रि यांबुधः ॥ ध्यानंसर्वत्रायुधानांवामोर्ध्वात्तुप्रदक्षिणम् ॥ २२ ॥ पाशांकुशौ विशलतां पत्राग्रंचदधत्करैः ॥ बीजपूरंपुष्करेच त्रिनेत्रोरक्तवस्त्रवान् ॥ २३ ॥ भक्तंसदापूर्णचन्द्रमौलिरव्याद्गणेश्वरः ॥ पूर्वोक्तेपूजयेत्पीठे नवशक्तिसमन्वि ते ॥ २४ ॥ मूर्त्तिम्मूलेनसङ्कल्प्य तस्यांविघ्नेश्वरंयजेत् ॥ प्रथमावृतिरङ्गैःस्याद द्वितीयाचाष्टभिर्गणैः ॥ २५ ॥ विघ्नोविनायकःशूरो वीरश्चवरदस्तथा ॥ इभवक्त्रश्चैकदन्तो लम्बोदरइतिक्रमात् ॥ २६ ॥ मातृपूजादलाग्रेस्याल्लोकेशा स्त्राणिचाग्रतः ॥ लक्षमेकंजपेन्मन्त्रं त्रिस्वाद्वक्तैस्तिलैर्हुनेत् ॥ २७ ॥ पूर्वोदिता द्रव्यैर्वा तर्पणादिततश्चरेत् ॥ शर्कराघृतयुक्तेन हविषाजुहुयात्सुधीः ॥ २८ ॥ लक्ष्मीवान्केवलाज्येन होमोलोकवशीकरः ॥ घृताक्तंतण्डुलंहुत्वालक्ष्मी वान्साधकोभवेत् ॥ २९ ॥ चत्वारिंशदिनंमन्त्री नारिकेलंहुनेत्ततः ॥ सर्वस

म्पतसमृद्धिःस्यात्प्रत्यहं वाञ्छितार्थकृत् ॥ ३० ॥ सलाजकैःकंगुभिश्च पृथुकै र्वाञ्छिताप्तये ॥ होमोभवेदष्टभिश्च द्रव्यैस्त्रिमधुरप्लुतैः ॥ ३१ ॥ हुनेच्चत श्चवशयेद्राज्ञस्तत्प्रमदाअपि ॥ चतुश्चत्वारिंशदाख्यं चतुःशतमतन्द्रितः ॥ ३२ ॥ प्रात प्रातस्तुसलिलैर्विघ्नेशस्यतुमन्त्रकैः ॥ तर्पयेत्तुसमिद्भिश्च भवे त्स्यनसंशयः ॥ ३३ ॥ पूर्वादिर्गंगणेशानमाय तंरविबिम्बतः ॥ पूर्वोक्तंच क्रमध्यस्थं चिन्तयित्वातुतर्प्पयेत् ॥ ३४॥ त्र्यक्षरोक्तप्रयोगांश्च कुर्य्यादत्रापि साधकः ॥ ओंठंनमश्चतुर्वर्णो हेरम्बस्यमनुर्मतः ॥ ३५ ॥ मुनिर्गणकआ ख्यातो गायत्रीछन्दईरितम् ॥ पञ्चवक्त्रोस्यहेरम्बो देवतासिंहवाहनः ॥३६॥ षड्दीर्घबीजयुक्तेन षडङ्गविधिरीतितः ॥ मुक्ताविद्युन्मेघदुग्धकाश्मीरीसन्निभै र्मुखैः ॥ ३७ ॥ गजवत्पञ्चभिर्युक्तः किरीटीचासिहस्तकः ॥ अंकुशंचत्रिशूलं च मुद्गरंचकपालकम् ॥ ३८ ॥ स्वयन्तमभयञ्चापि वरंमोदकमेवच ॥ परशुं चाक्षमालांच दधतंकरपङ्कजैः ॥ ३९ ॥ कोटिसूर्य्यप्रतीकाशं ध्यायेद्धेरम्बम व्ययम् ॥ पद्ममष्टदलंकृत्वा चतुरस्त्रत्रयावृतम् ॥ ४० ॥ चतुर्द्वारसमायुक्तं त त्रादावासनंयजेत् ॥ ओंहुंहुंचमहासिंहा यगंहेरम्बमुच्चरेत् ॥ ४१ ॥ आसना यनमश्चेति प्रोक्तःसप्तदशाक्षरः ॥ अनेनचासनंदद्यादनेनैवप्रपूजयेत्॥४२॥ भुवयुक्तेनबीजेन कुर्य्यान्मूर्त्तिप्रवर्त्तनम् ॥ आदावङ्गानिसम्पूज्य लोकपाला न्यजेत्पुनः ॥ ४३ ॥ तेषामस्त्राणितद्बाह्ये हेरम्बार्चनमीरितम् ॥ लक्षत्रयंजपं कृत्वा तिलैर्हुत्वादशांशतः ॥४४॥ मधुरत्रयसंयुक्तैस्तर्पणादिसमाचरेत् ॥ एवं सिद्धमनुर्मन्त्री प्रयोगानाचरेत्ततः ॥४५॥ चतुर्दश्यष्टमीषष्ठीष्वेकैकंजुहुयाद् बुधः ॥ अपूपैःकृशरैश्चापि मोदकैरिष्टसिद्धये ॥ ४६ ॥ पूर्वोक्तैर्जुहुयाद्द्रव्यैः पर्वस्वपिचमन्त्रवित् ॥ यद्यदिच्छतितत्सर्वं साधकस्तत्रसाधयेत् ॥ ४७॥ क्षिप्रप्रसादनप्रोक्तान् प्रयोगान्त्रासमाचरेत् ॥ तारोङेन्तोगणेशाहत्प्रोक्तःसप्ता क्षरोमनुः ॥ ४८ ॥ प्रणवान्तोष्टवर्णोयं शक्तिबीजादिकोपिवा ॥ ऋषिरग्निः समाख्यातो गायत्रीछन्दउच्यते ॥ ४९ ॥ सुब्रह्मण्योथमात्रस्य देवतातुवि नायकः ॥ दीर्घभाजाग्निबीजेनषडङ्गानिसमाचरेत् ॥ ५० ॥ रक्ताम्बरंरक्तवर्णं रक्तगन्धानुलेपनम् ॥ रक्तपुष्पैःपूज्यमानं भक्तपातकहारिणम् ॥ ५१ ॥ मुद्गरं

चतथाशक्तिंकमलंचांकुशंतथा ॥ हस्तैर्दधानंचन्द्रास्यं नानाभूषणभूषितम् ॥ ५२ ॥ रिपुक्षयकरंदेवं सुब्रह्मण्यगणाधिपम् ॥ ध्यात्वेवंपूजितेपीठे पश्चात्सम्पूजयेद्विभुम् ॥ ५३ ॥ केशरेषुषडङ्गानि पूर्वाद्यष्टदलेततः ॥ जयन्तश्चाग्निवेषश्च कृत्तिकापुत्रएवच ॥ ५४ ॥ तथाभूतपतिस्सेनानीर्गुहोहेमसूत्रकः ॥ विशालाक्षश्चसम्प्रोक्ताःशक्तिशूलकराइमे ॥ ५५ ॥ दलाग्रेषुचपूर्वादि यजेदेताननन्तरम् ॥ देवसेनापतिंशक्तिं विघ्नंकुक्कुटमेवच ॥ ५६ ॥ पेधांमयूरंवज्रंच धियंलोकेश्वरांस्ततः ॥ तदस्त्राणिचसम्पूज्य सुब्रह्मण्यार्चनंत्विदम् ॥ ५७ ॥ लक्षमेकंजपेन्मन्त्रं सर्पिषापयसान्धसा ॥ अयुतंजुहुयान्मन्त्री तर्पयेद्विप्रपुङ्गवान् ॥ ५८ ॥ एवंसिद्धेमनौमन्त्री कुर्य्यात्कामान्यथेप्सितान् ॥ दिनेदिनेसमधुरैर्भक्ष्यभोज्यैःप्रतोषयेत् ॥ ५९ ॥ देवंदेवधियासम्यगर्चयेद्ब्रह्मचारिणः ॥ सुब्रह्मण्यमनोःसम्यगुपास्तिंयेप्रकुर्वते ॥ ६० ॥ ऐहिकामुष्मिकान्भोगाँल्लभन्तेनात्रसंशयः ॥ ॐहुंगंग्लौंहरिद्रेतिइतिप्रोक्त्वागणपतयेवदेत् ॥ ६१ ॥ वरवरदइत्युक्त्वा सर्वजनपदंवदेत् ॥ हृदयंस्तम्भयद्वन्द्वं स्वाहाद्वात्रिंशदर्णकः ॥ ६२ ॥ ऋषिर्मदनआख्यातश्छन्दोऽनुष्टुप्समीरितम् ॥ हरिद्रागणपोदेवः षडङ्गानिसमाचरेत् ॥ ६३ ॥ षड्दीर्घयुक्तबीजेन विप्रादीनांप्रकीर्तितः ॥ विधिनायेनमन्त्रोयं गृह्यतेतदहम्ब्रुवे ॥ ६४ ॥ चतुर्थीदिवसेप्राप्ते शुक्लपक्षस्यमन्त्रवित् ॥ शुद्धांहरिद्रामानीय कन्ययापेषितांशुभाम् ॥ ६५ ॥ सर्वाङ्गेतांसमालिप्य स्नायाच्छुद्धजलैस्ततः ॥ भक्त्यापरमयोपेतः प्रसन्नेनान्तरात्मना ॥ ६६ ॥ प्रथमंगुरुपादाब्जमर्चयित्वाविधानतः ॥ स्वर्णांगुलीयहारौघैर्भूषणैश्चशुभाम्बरैः ॥ ६७ ॥ पूर्वोक्तविधिनातस्मादगृह्णीतमनुंत्विमम् ॥ सुगन्धैःसुमनोभिस्तं यजेद्देवधियापुनः ॥ ६८ ॥ पीताम्बरंपीतवर्णं पीतगन्धानुलेपनम् ॥ पीतपुष्पैःपूज्यमानं मणिसिंहासनस्थितम् ॥ ६९ ॥ पीतभूषंत्रिनेत्रञ्च षड्भुजंचवराभयम् ॥ क्रोधमुद्रांसृणिंपाशंपरशुंबिभ्रतंकरैः ॥ ७० ॥ ध्यायेच्छुद्धमनामन्त्री हरिद्रागणपंप्रभुम् ॥ पूर्वोक्तपीठेप्रयजेदङ्गमातृदिगीश्वरैः ॥ ७१ ॥ वेदलक्षंजपित्वान्तेहरिद्राचूर्णमिश्रितैः ॥ दशांशंतण्डुलैर्हुत्वा ब्राह्मणानपिभोजयेत् ॥ ७२ ॥ साङ्गंस

हस्रंसञ्जप्यदशांशं हव्यवाहने ॥ सर्पिगुडपुटैः सम्यगपूपैर्जुहुयाद्वहिः ॥ ७३ ॥ हरिद्रागणपंतावत्तर्पयेद्भक्तितत्परः ॥ कुमारींभोजयेत्तावद्ब्रह्मचारिणमेवच ॥ ७४ ॥ अभीष्टफलमाप्नोति नात्रकार्य्याविचारणा ॥ लाजैःकन्यामवाप्नोति कन्याविलभतेवरम् ॥ ७५ ॥ बन्ध्यानारीरजःस्नाता पूजयित्वागणाधिपम् ॥ पलप्रमाणगोमूत्रे पिष्टाःसिन्धुवचानिशाः ॥ ७६ ॥ सहस्रंमन्त्रयेत्कन्यावद्‌ न्नसम्भोज्यमोदकैः ॥ पीत्वातदौषधंपुत्रं लभतेगुणसागरम् ॥ ७७ ॥ वाणी स्तम्भंरिपुस्तम्भं कुर्य्यान्मनुरुपासितः ॥ जलाग्निसिंहचौरास्त्रप्रमुखानपि रोधयेत् ॥ ७८ ॥ एतेऽष्टौगणपाःप्रोक्ता दक्षिणाम्नायगोचराः ॥ ७९ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेदक्षिणाम्नायगणपतिमन्त्रप्रकाशः षोडशोऽध्यायः ॥ १६ ॥

---

ईश्वरउवाच ॥ ऊर्ध्वाम्नायेप्रवक्ष्यामि गणेशान्सिद्धिदायकान् ॥ भुक्ति मुक्तिप्रदंतत्रमहागणपतिंशृणु ॥ १ ॥ तारश्रीबीजहृल्लेखा कामोभूबीजमेव च ॥ गणेशबीजंगणपतयेवरवरेतिच ॥ २ ॥ दसर्वजनंमेवशमानयाग्नि वधूरिति ॥ अष्टाविंशतिवर्णोयं गणकोस्यमुनिर्मतः ॥ ३ ॥ निवृद्गायत्रि काछन्दो महागणपतिःसुरः ॥ गंबीजंह्रींचशक्तिःस्याद्दीर्घषट्कयुतस्तुगः ॥४॥ तारादिबीजषट्केन पृथग्युक्तेनकारयेत् ॥ षडङ्गानिमनोरस्य जातियुक्तानिचा चरेत् ॥ ५ ॥ अथवातारपूर्वेण दीर्घषट्कयुतेनच ॥ स्वबीजेनांगुलिन्यासं षड ङ्गानितथाचरेत् ॥ ६ ॥ वर्णान्द्वाविंशतिर्न्यस्या गणपत्यादयोमनोः ॥ ब्रह्म रन्ध्रेश्रोत्रयोश्चनेत्रयोश्चनसोर्मुखे ॥ ७ ॥ मूलेदक्षभुजस्यादौ मध्येचमणि बन्धके ॥ अंगुलीमूलकेग्रेच वामबाहावपीदृशम् ॥ ८ ॥ विन्यसेदग्रिमान्वर्णांस्त तश्चादौतदग्रिमान् ॥ मणिपूरेस्वाधिष्ठाने मूलाधारेतदग्रिमान् ॥ ९ ॥ तारं पार्श्वमुखेश्रींच हृदिह्रींश्रींगुदेन्यसेत् ॥ पादयोर्ग्लौंहृदिपुनःप्रत्यङ्गंबीजमेव च ॥ १० ॥ अवशिष्टैर्मन्त्रवर्णैःशरीरेव्यापकंन्यसेत् ॥ एवंन्यासविधिंकृत्वा हृ दिदेवंविचिन्तयेत् ॥ ११ ॥ एक्षवेजलधेर्द्वीपे नवरत्नमयेशुभे ॥ नानाकुसुम सङ्कीर्णे नानापक्षिविराजिते ॥ १२ ॥ अनेकफलसङ्कीर्णे सेवितेचाप्सरोग

ऐः ॥ ज्वालामालासहस्राढ्ये चोद्यज्ज्योत्स्नासमाकुले ॥ १३ ॥ विलसत्प
द्मरागौघकुट्टिमारुणभूतले ॥ कल्पपादपपुष्पस्थषट्पदस्वनमञ्जुले ॥
१४ ॥ पारिजातंकल्पतरुंतस्यमध्येविचिन्तयेत् ॥ युगपट्टे तुपट्टेन खचितंपुष्प
शोभितम् ॥ १५ ॥ नवरत्नमयंतस्याधस्तात्सिंहासनंस्मरेत्॥तन्मध्येलिपिपद्मं
च षडारंतस्यमध्यतः ॥ १६ ॥ कर्णिकायांगणेशञ्च तत्संस्थंचमहागणम् ॥
नानारत्नविभूषाढ्यमेकदन्तंगजाननम् ॥ १७ ॥ चक्रंचांकुशपद्मादीन्बीज
पूरंगदांतथा ॥ शराशनंचशूलंच बिभ्रतंहस्तपङ्कजैः ॥ १८ ॥ पद्मोद्यत्कर
याशक्त्याचाश्लिष्टंवरदंप्रभुम् ॥ अर्धेन्दुमौलिंत्र्यक्षंचदीप्यमानंकृपाकरम् ॥
१९ ॥ पुष्करोद्धतरत्नौघमयकुम्भमुखश्च्युतान् ॥ मणिमुक्ताप्रवालादीन्वर्ष
न्तंधारयामुहुः ॥ २० ॥ सर्वतःसाधकस्याग्रे स्वदानजललोलुपम् ॥ षट्प
दालींकर्णतालैर्वारयन्तंमुहुर्मुहुः ॥ २१ ॥ अमरासुरसंसेव्यं सद्रत्नमुकुटो
ज्ज्वलम् ॥ ऊरूकरंगजमुखंनानाभरणभूषितम् ॥ २२ ॥ इतिध्यात्वागण
पतिंयजेत्सर्वोपचारकैः ॥ धर्मादिक्लप्तेपूर्वोक्ते तीव्रादिनवशक्तिके ॥ २३ ॥
पूजायन्त्रंगणेशस्य मातृकापद्ममुच्यते ॥ चतुर्द्वारसमायुक्तं चतुरस्रत्रयावृ
तम् ॥ २४ ॥ तत्कर्णिकायांषट्कोणंतदन्तश्चत्रिकोणकम् ॥ दिवस्याग्रेत्रि
कोणाच्च बहिर्मन्त्रैर्यजेत्सुरान् ॥ २५ ॥ लक्ष्मीनारायणायेति ॥ ॐश्रींपू
र्वोहृदन्तकः ॥ मन्त्रस्तेनयजेत्तञ्चध्यायेद्बिल्वतलेस्थितम् ॥ २६ ॥ पद्मद्वये
कलालक्ष्मीं शङ्खचक्रधरोहरिः ॥ ॐह्रींगौरीहराभ्यांच हृदन्तोनववर्णकः ॥
२७ ॥ देवस्यदक्षिणेतौचध्यायन्नेवंप्रपूजयेत् ॥ संस्थितौचजटाधस्तात्सुवर्ण
रजतप्रभौ ॥ २८ ॥ पाशांकुशधरादेवी टङ्कशूलधरोहरः ॥ तारःक्लींरति
कामाभ्यांहृदन्तोयंनवाक्षरः ॥ २९ ॥ पृष्ठस्थपिप्पलाधस्ताद्रतिकामौसमर्च
येत् ॥ नालयुक्तोत्पलद्वन्द्वचापपुष्पेषुसंयुतौ ॥ ३० ॥ ॐग्लौंमहीवराहा
भ्यांहृदन्तोयंदशाक्षरः ॥ उत्तरेधःप्रियङ्गोस्तु महीकोलौयजेत्ततः ॥ ३१ ॥
शुकवीज्याग्रकगदाचक्रालंकृतसद्भुजौ ॥ ॐगंलक्ष्मीगणाकाभ्यांहृदन्तोयं
दशाक्षरः ॥ ३२ ॥ देवस्याग्रेत्रिकोणान्तर्लक्ष्मीयुग्गणकंयजेत् ॥ षट्कोणेषु
यजेन्मन्त्र ॐगंपूर्वोहृदन्तकः ॥ ३३ ॥ आमोदंसिद्धिसहितमग्रकोणेसम

र्चयेत् ॥ समृद्धयायुतमभ्यर्चेत्प्रमोदंवह्निकोणतः ॥ ३४ ॥ सुमुखंकान्तिसंयु क्तमीशकोणेसमर्चयेत् ॥ दुर्मुखंमदनावत्या यजेद्वारुणकोणगम् ॥ ३५ ॥ विघ्नंमदद्रवायुक्तं कोणेनैशाचरेयजेत् ॥ वायव्येविघ्नकर्त्तारं द्राविण्यासहितं यजेत् ॥ ३६ ॥ पाशांकुशधराविद्या शक्तयश्चाभयप्रदाः॥ रक्तारक्ताम्बरालेप भूषणामदविह्वलाः ॥ ३७ ॥ षट्कोणस्यबहिर्देवं दक्षिणेतुसमर्चयेत् ॥ वसु धारान्वितंशङ्खनिधिंवामेर्चयेत्तथा ॥ ३८ ॥ वसुमत्यायुतं पद्मनिधितद्ध्यान मुच्यते ॥ तत्राद्योमौक्तिकाभोन्योमाणिक्याभस्तुधारया ॥ ३९ ॥ वर्षन्तौधन सम्पत्तिंलोकानांमेघवत्सदा ॥ केशरेष्वङ्गपूजास्याद्ब्राह्म्याद्याःपत्रमध्यगाः ॥ ४० ॥ चतुरस्रेलोकपालांस्तदस्त्राणिचपूर्ववत् ॥ षडावरणसंयुक्तमित्थंदेवंस मर्चयेत् ॥ ४१ ॥ एकादशायुतंजप्त्वा सहस्रोत्तरमादरात् ॥ दशांशंजुहुया दष्टद्रव्यैरेकाक्षरोदितैः ॥ ४२ ॥ तर्प्पयित्वादशांशेन चाभिषिक्तोगुनाततः । ब्राह्मणान्भोजयेत्सम्यक् षड्रसैर्भूरिदक्षिणाम् ॥ ४३ ॥ दत्वाप्रणम्यविसृजेदे वंसिद्धोभवेन्मनुः ॥ ततःप्रणम्यविधिवद्गुरुंसन्तोष्ययत्नतः ॥ ४४ ॥ काम्य कर्म्माणिकुर्वीतसिद्धयस्युर्नचान्यथा ॥ रक्तप्रसूनैर्गणपंपूजयित्वामनुंजपे त् ॥ ४५ ॥ सहस्राष्टकमस्यान्ते जुहुयात्करवीरजैः ॥ यद्दशांशेनकुसुमै र्मधुरत्रयसंस्कृतैः ॥ ४६ ॥ राजातदाचरोभूत्वा सामात्यःसन्निषेवकः ॥ एवं पलाशपुष्पैश्चमधुरत्रयसम्प्लुतैः ॥ ४७ ॥ हुत्वासर्वेपिविप्राःस्युर्वशास्तस्यन संशयः ॥ जितेन्द्रियोमन्त्रिवरोघृतमेवंचहोमयेत् ॥ ४८ ॥ कीर्तिम्प्राप्नो तिविपुलां चिरकालानुबन्धिनीम् ॥ एवमाज्यप्लुतंधान्यं हुत्वामात्यःप्र- जायते ॥ ४९ ॥ अष्टोत्तरसहस्रंतु जप्त्वाहोमंसमाचरेत्॥ लवणाज्यसु राभिश्च शोधयित्वास्यभस्मतु ॥ ५० ॥ करेगृहीत्वासघृतं तेननारींचताड येत् ॥ भवत्यामरणान्तंसा दासीतोप्यधिकंवशा ॥ ५१ ॥ शिवालयेलक्ष्मि तंजप्त्वाहोमोदशांशतः ॥ पायसेनत्रिमधुरयुतेनलभतेसदा ॥ ५२ ॥ अर्था श्चविविधान्मन्त्री भोगंमोक्षमवाप्नुयात् ॥ अष्टोत्तरसहस्रन्तु हुनेज्जातीप्रसू नकैः॥५३॥मेधांवेदार्थकरणे बुद्धिंप्राप्नोतिसाधकः॥अयुतात्रितयंयस्तु हुनेद्दू र्वाघृतेनच ॥ ५४ ॥ तस्याल्पमृत्युरोगाद्यानश्यन्त्यायुश्चवर्धते ॥ समाहि

तोयुतंहुत्वापीतपुष्पैर्घृतान्वितैः ॥ ५५ ॥ संस्तम्भयेद्वैरिसेनां सभृत्युगजयोधकाम् ॥ धारास्तम्भंचवाक्स्तम्भं कुर्य्यादत्रनसंशयः ॥ ५६ ॥ बिभीतकसमिद्भिश्च होमयेदयुतत्रयम् ॥ उच्चाटयेद्वैरिसङ्घान् ग्रामंदेशंपुरादिकम् ॥५७॥ अष्टोत्तरसहस्रंतु समिधोरुधुवृक्षजाः ॥ हुत्वारण्डास्तस्यवश्या जीवेनचधनेन च ॥ ५८ ॥ निम्बपत्रेषुसँल्लिख्य साध्यनामानितुद्वयोः ॥ एकस्यचाश्वरक्तेन महिषस्यापरस्यच ॥ ५९ ॥ कटुतैलयुतैर्विंशत्सहस्रंहोममाचरेत् ॥ मन्त्रान्तेप्रवदेदेतदमुकंचामुकेनच ॥ ६० ॥ द्वेषयेतिततःस्वाहाचैकान्ते होममाचरेत् ॥ तयोस्तुजायतेवैरं मित्रयोर्जीवनाशकम् ॥ ६१ ॥ अष्टांगुलंमनुष्यास्थि कीलं शवशिरोरुहैः ॥ संवेष्ट्यमन्त्रयेदष्टोत्तरंतच्चसहस्रकम् ॥ ६२ ॥ मुहूर्त्तेकुलिके रात्रौ शत्रोर्द्वारिप्रपूजयेत् ॥ सप्ताहतोसौभवतिनिश्चयेनयमातिथिः ॥ ६३ ॥ नागस्यविवरद्वारिलक्षमेतंमनुंजपेत् ॥ तस्याग्रतःसमायान्ति नागकन्याःसहस्रशः ॥ ६४ ॥ निर्लज्जाभोगकांक्षिण्यः प्रयच्छन्तिरसायनम् ॥ नानामणीश्चरत्नानियद्यदिष्टतमंभवेत् ॥ ६५ ॥ लक्षमेकंगिरेर्मूर्ध्नि जपेन्मन्त्रीदृढव्रतः ॥ कृपाणसिद्धिंलभते प्रार्थनीयांसुरासुरैः ॥ ६६ ॥ घनसारञ्चलज्जारुं शुक्लांचगिरिकर्णिकाम् ॥ नन्द्यावर्त्तंमधुपुष्पीं मेलयित्वासुपेषयेत् ॥ ६७ ॥ कृत्वागुटिकांविंशत्सहस्रमभिमन्त्रयेत् ॥ नेत्रेतयाचाञ्जयित्वा निधानंपश्यति ध्रुवम् ॥ ६८ ॥ अष्टोत्तरशतंजप्त्वा पीडाक्रान्तंचरोगिणम् ॥ त्रिःफूत्कृत्यहरेत्पीडां सर्वांनास्त्यत्रसंशयः ॥ ६९ ॥ गुप्तप्रदेशेरम्येचगोमयेनोपलेपिते ॥ स्नात्वामन्त्रीनवंकुम्भं चन्दनाद्यैश्चचर्चितम् ॥ ७० ॥ सुगन्धतोयैःसम्पूर्य्य शरावेणापिधाययेत् ॥ कपिलाज्येनसम्पूर्णं दीपंन्यस्येत्तथोपरि ॥ ७१ ॥ पूजयेदुपचारैस्तं कुमारींचकुमारकम् ॥ तत्रोपविश्यतंस्पृष्ट्वाजपेदष्टोत्तरंशतम् ॥ ७२ ॥ तदासौकथयेत्सर्वंदीपंदृष्ट्वातुबालकः ॥ भूतंचवर्तमानंच भविष्यंनात्रसंशयः ॥ ७३ ॥ ध्यात्वामहागणपतिमथवादीपसन्निधौ ॥ जपेद्गणेशःकथयेत्स्वप्नेचापिशुभाशुभम् ॥ ७४ ॥ ग्रहणेजलमध्यस्थो जपेन्मन्त्रंतदाभवेत् ॥ आकर्षणस्यसंसिद्धिः सधान्यपशुयोषिताम् ॥ ७५ ॥ न्यग्रोधस्यतलेजप्त्वा लक्षमेकंवटाभिधा ॥ यक्षिणीतुसमागत्य धनाद्याकृष्ययच्छति ॥ ७६ ॥ उपा

ष्यरात्रौविधिवत्स्नात्वाचानीयसद्वचाम् ॥ पूजयित्वागणेशंतंस्पृष्ट्वामन्त्रायुतं जपेत् ॥ ७७ ॥ पश्चात्कृत्वातुतच्चूर्णं गृह्णीयात्कर्षमात्रकम् ॥ कपिलाज्यैः पिबेत्प्रातः सप्तभिर्दिवसैःकविः ॥ ७८ ॥ अवश्यमेवभवति पारदस्यक्रियांशृणु ॥कर्पटेशोधयेदादौरसमष्टोत्तरंशतम् ॥ ७९ ॥ कर्पासपत्रजरसैर्दिनमेकंचमर्दयेत् ॥ कुमारिकाकाशवल्ल्योस्तदारौप्यसमोभवेत् ॥ ८० ॥ एतस्ययुग्मांशं तुशुद्धंशुल्वंनियोजयेत् ॥ शुल्वादेतत्सार्धभागं शुल्वार्धंकनकन्त्वयः ॥ ८१ ॥ कज्जलाभंववर्तीयं कर्पासीकन्यकाद्रवैः ॥ दिनैकमारनालेतुमर्दयित्वारनालके ॥ ८२ ॥ स्थापयेद्गुटिकांकृत्वाततोगच्छेच्छिवालये ॥ लक्षमेकंजपेन्मन्त्रं सिद्धासाजायतेतदा ॥ ८३ ॥ तान्मुखेधारयन्मन्त्री रणेचविजयीभवेत् ॥ अवध्यःसर्वभूतानां शस्त्रास्त्रैश्चैवजायते ॥ ८४ ॥ तदज्यतेनम्रियते विषैःसर्प्पादिसम्भवैः ॥ तत्प्रभावाद्वज्रदेह आकाशेलभतेगतिम् ॥ ८५ ॥ नष्टच्छायस्तथादृश्यो जलगोपिप्रजायते ॥ यस्मिन्गेहेस्थितासातु तत्रलक्ष्मीःस्थिराभवेत् ॥ ८६ ॥ लोकानांदृष्टिबन्धंच साकुर्य्यात्साधकेच्छया ॥ ब्रह्मदण्डींचलज्जालुं गृह्णीयात्पुष्यभास्करे ॥ ८७ ॥ वज्रानुकंत्रिलोहंच ताभ्यांसम्यग्विमर्दयेत् ॥ तद्यदाकज्जलीतुल्यंस्यात्तदागुटिकाकृतम् ॥ ८८ ॥ गणेशंपूजयित्वास्य गृह्णीयाद्गुटिकांशुभाम् ॥ इत्थंविचिन्त्यस्वकरे गृह्णीयात्तन्मनुंजपेत् ॥ ८९ ॥ वक्रेशिखायांचकरेस्कन्धे वा धारयेच्चताम् ॥ तस्याःप्रभावान्नायान्तिचौरव्याघ्रोरगादयः ॥ ९० ॥ साधकस्यसमीपंतुनविघ्नैःपरिभूयते ॥ राजानोवश्यतांयान्तिसुन्दरीणामतिप्रियः ॥ ९१ ॥ धत्तूररोचनाशङ्खपुष्पीश्वेतापराजिता ॥ सहदेवीब्रह्मदण्डीहिमंकृष्णागरुःसमम् ॥ ९२ ॥ सम्पीड्यसम्यक्कुर्य्याच्चगुटिकांविधिनाततः ॥ कुर्य्याद्द्वादशसाहस्रजप्तातत्तिलकेकृते ॥ ९३ ॥ जनानांजायतेमोहोगणेशस्यप्रभावतः ॥ दीर्घतुण्डामृताग्राह्याःपुष्पार्केपेषयेच्चताः ॥ ९४ ॥ तच्चूर्णेनकरौलिप्त्वाष्टाधिकंचसहस्रकम् ॥ मनुंजप्त्वातुतौहस्तौगजेभ्यःपरिदर्शयेत् ॥ ९५ ॥ विद्रवन्तितदानागा ऐरावतसमाअपि ॥ गजान्गृहीतुकामश्चेद्राजागजवनेतदा ॥९६॥ सम्यक्चकारयेच्छालांदृढांगजनिबन्धिनीम् ॥ चतुरस्रांविशालांचदृढावरणसंयुता

म् ॥ ६७ ॥ कुर्य्यात्तत्रस्थलींसम्यक्चतुरस्रांसमुन्नताम् ॥ तस्यामुत्तरदिग्भागे कुण्डंकुर्य्याद्यथोदितम् ॥ ६८ ॥ मण्डलंसर्वतोभद्रंकृत्वातत्रप्रपूजयेत् ॥ नानोपचारैर्गणपंवह्निःस्थापनमाचरेत् ॥ ६६ ॥ त्रिस्त्रिर्हुनेत्क्रमात्तारश्रीमायाकामबीजकैः ॥ ग्लौंगंभ्यांगणपतयेपदेनापिचहोमयेत् ॥ १०० ॥ वरवरदेतिततःपदेनापिचहोमयेत् ॥ सर्वजनंमेवशमानयस्वाहात्वनेनच ॥ १ ॥ सप्तविंशत्याहुतयोहुनेदेधश्चगोघृतैः ॥ ततःसमृद्धिमन्त्रेणतिसूश्चानेनहोमयेत् ॥ २ ॥ भूर्भुवःस्वस्तथाचाग्निर्जातवेदास्ततःपरम् ॥ ततश्चमूलमन्त्रेणजुहुयाचनवाहुतीः ॥ ३ ॥ मूलाणुनासमस्तेनजपेन्मन्त्रार्णसंख्यया ॥ आज्येनैवततश्चाष्टद्रव्यैःस्वाद्वत्रयान्वितैः ॥ ४ ॥ देवस्थानस्थदेवानांसंख्ययाप्रत्यहंततः ॥ बहून्सम्भोजयेद्विप्रांस्तदाशीर्भिर्विवर्धितः ॥ ५ ॥ गुरवेदक्षिणांदद्यात्पञ्चाशद्दन्तिनोथवा ॥ तन्मूल्यंतद्दशांशोवादत्त्वासन्तोष्यसद्गुरुम् ॥ ६ ॥ चतुर्णांमिथुनानांचपञ्चणेशानिधियुग्मयोः ॥ अङ्गमातृदिगीशानांतन्मन्त्रैःसर्पिषाहुनेत् ॥ ७ ॥ लक्ष्मीनारायणौगौरीहरौकामस्तथारतिः ॥ पृथ्वीवराहावितितुचत्वारिमिथुनानिच ॥ ८ ॥ सिद्धिमोदौतथाऋद्धिप्रमोदौकान्तिसंयुतः ॥ सुमुखोथोदुर्मुखस्यप्रियोक्तामदनावती ॥ ६ ॥ मदनद्रवयायुक्तोविघ्नोथोद्राविणीयुतः ॥ विघ्नकर्तेतिषट्प्रोक्तागणेशाश्चनिधिद्वयम् ॥ १० ॥ शङ्खःपद्मश्चतन्मन्त्रास्तद्बीजंनामहृत्तथा ॥ एवंहोमंसमाप्याथनैवेद्यंतुसमाचरेत् ॥ ११ ॥ पुनरभ्यर्च्यविघ्नेशंसाङ्गसावरणंतथा ॥ निजेहृदिसमुद्वास्यविचरेच्चयथासुखम् ॥ १२ ॥ ततोदिनैर्वेदवेदैःकरिणोनिपतन्तिहि ॥ विनायकप्रभावेणकलभाःशतशस्तथा ॥ १३ करिणीनांसमूहश्चपतत्यम्बुघटेयथा ॥ प्रोक्तकुण्डेप्रोक्तरूपंगणेशंसम्यगर्चयेत् ॥ १४ ॥ तत्रवह्निंसमाधायलक्षमेकंतथाहुनेत् ॥ पयोघृताभ्यांसंयुक्तःपुष्पैःशर्करयापिच ॥ १५ ॥ क्षौद्रेणपृथगेकैकद्रव्येणागत्त्वेगाष्टपः ॥ वैतालसञ्ज्ञागुटिकाकुण्डमध्यात्प्रयातिच ॥ १६ ॥ अणिमादिकसिद्धीनांप्राप्यतांनायकोभवेत् ॥ ब्राह्मेकालेसमुत्थायक्षीणचन्द्रेचपर्वणि ॥ १७ ॥ कपिलायाःपञ्चखण्डंगोमयंप्रतिगृह्यच ॥ अयुतमन्त्रसञ्जप्तंनिखातदारिवारयेत् ॥ १८ ॥ व्याघ्रक्रोडारिचारादीन्नात्रकार्य्याविचारणा ॥ जाती

धत्तूरमञ्जिष्ठप्रचण्डाहस्तयोजिनी ॥ १९॥ शिखादिकर्णिकाख्यांचत्वग्जिह्वा चक्षुर्षामलम् ॥ नासिकाघ्राणकैश्चापिगुटींसम्यग्विधायच ॥ २० ॥ स्पृष्ट्वा सम्प्रजपेन्मन्त्रंत्वष्टाधिकसहस्रकम् ॥ गुंजकादिप्रमाणंचयवमानंचलेहयेत्॥ २१ ॥ सर्षपार्धत्वङ्गनाया भक्षितंवश्यकारकम् ॥ जितेन्द्रियोजपेन्मन्त्रमष्टो त्तरसहस्रकम्॥ २२ ॥ दशांशंचहुनेल्लाजाहयारिकुसुमान्विताः ॥ प्राप्नुयात्स त्कुलांकन्यामथध्यायेद्विनायकम् ॥ २३ ॥ गन्धादिनाभ्यर्च्यतंचमन्त्रलक्ष मितंजपेत् ॥ निगडान्मुच्यतेऽकस्मादथविल्वस्यपुष्पकम् ॥ २४ ॥ तगरं देवदारुंचप्रियंग्वगरुचन्दने ॥ नागकेशरमेतानिमधुनाभावयेत्समम् ॥ २५॥ गुटींकृत्वाथसंस्पृश्यसहस्राष्टकमाजपेत् ॥ भवेत्सासिद्धगुटिकातद्धूपाद्रोगना शनम् ॥ २६ ॥ एतद्धूपान्ननिस्स्वोपिधनीस्याज्जनवल्लभः ॥ दुर्भगासुभ गास्त्रीस्यात्कुमारीसद्वरंलभेत् ॥ २७ ॥ जलाशयेलक्षजपाद्वृष्टिःसप्ताहतो भवेत् ॥ अथास्यलक्षहोमस्यप्रयोगंकामिकंशृणु ॥ २८ ॥ हुनेद्द्रोपयसा गोर्थेस्वर्णार्थमधुनाहुनेत् ॥ घृतेनलक्ष्म्यैपयसेहुनेच्छर्करयाद्विजः ॥ २९ ॥ दध्नासर्वर्द्धयेहोमोघृतान्नैरन्नवृद्धये ॥ लाजाभिर्यशसेहोमोधनार्थन्तिलतण्डु लैः ॥ ३० ॥ कौसुम्भैःकरवीरैर्वावस्त्रार्थंहोममाचरेत् ॥ यवैस्तुवशयेद्भूपमुत्प लैश्चापितद्वधूम् ॥ ३१ ॥ कैरवैस्तन्मन्त्रिणश्चपुत्तल्याद्यंचपिष्टजम् ॥ कृ त्वाहुनेद्वधूर्वश्यावटात्प्लक्षादुदुम्बरात् ॥ ३२ ॥ कस्मादपिगृहीत्वाचसमि धोहोममाचरेत्॥ विप्राद्यान्वशयेद्वर्णाँल्लोणहोमादवर्षणम् ॥ ३३॥ वेतस्यैर्भू यसीवृष्टिर्महागणपतिस्त्विह ॥ वर्णानस्यप्रवक्ष्यामिकाम्यकर्म्माणिसंस्मरेत्॥ ३४ ॥ गणेशतर्प्पणंवक्ष्येसर्वकामफलप्रदम् ॥ त्रिवेदाङ्कसमंयच्चप्रकटंवक्ष्यते धुना ॥ ३५ ॥ एकान्तेविजनेरम्येसर्वोपद्रववर्जिते ॥ कृतस्नानादिकोमन्त्री पूर्ववन्न्याससंयुतः ॥ ३६ ॥ तडागमध्येसञ्चिन्त्यपुष्पितंनलिनीवनम् ॥ त स्यमध्येमहापद्मन्तरुणादित्यसन्निभम् ॥ ३७ ॥ समुन्नतंसुगन्धाढ्यंरमणीय म्मनोहरम् ॥ सद्योविकसितंध्यायेन्मन्त्रीपूर्वोक्तमन्त्रवत् ॥ ३८ ॥ शुद्धंरज तसोपानंपश्यन्तंरविमण्डलात्॥ विनिर्गत्यावरुह्याथकर्णिकामध्यसंस्थितम् ॥ ३९ ॥ इतिध्यात्वासावरणम्महागणपतिम्पुनः ॥ प्रवरैर्गन्धकुसुमैःप्राग्वत्सा

वरणंयजेत् ॥ ४० ॥ तर्प्पणस्यविधिश्चायंशृणुवैदिकतर्प्पणम् ॥ तर्प्पयाम्ये
तदन्तेतुस्वाहांवैदिकईरयेत् ॥ ४१ ॥ इतरस्तुनमोब्रूयाद्वामाचारीनमोवदेत् ॥
मूलमन्त्रंसमुच्चार्य्यमहागणपतिन्ततः ॥ ४२ ॥ देवस्यमूर्द्ध्निप्रथमन्दशवारंप्रत
र्प्पयेत् ॥ पुनश्चतुश्चतुर्वारंज्ञेयंसर्वत्रतर्प्पणम् ॥ ४३ ॥ एकंवर्णंसमुच्चार्य्यमूल
मन्त्रस्यतर्प्पयेत् ॥ पुनःसम्पूर्णमूलेनचतुर्वारन्तुतर्प्पणम् ॥ ४४ ॥ एवंषट्प
ञ्चसंख्याकञ्चतुष्कन्तर्प्पणम्भवेत् ॥ पुनर्मूलेनसन्तर्प्यततोयुग्मानितर्प्पयेत् ॥
४५ ॥ तत्रचायंप्रयोगःस्यादमुकंसहितामिति ॥ अमुकीन्तर्प्पयामीतिपुन
र्मूलेनतर्प्पयेत् ॥ ४६ ॥ अमुक्यायुक्तममुकन्तर्प्पयामिततोवदेत् ॥ पुनर्मूल
म्भवेदेवञ्चतुष्कमपितर्प्पणम् ॥ ४७ ॥ एवंषड्गणपानाञ्चसजायानान्तद
न्तरा ॥ तर्प्पणान्मूलमन्त्रेणचतुष्काजिनसंख्यकाः ॥ ४८ ॥ वसुन्धराशङ्ख
निधेर्भार्य्यापद्मनिधेस्तथा ॥ भवेद्वसुमतीताभ्याम्मध्येमूलेनचाष्टधा ॥ ४९ ॥
तर्प्पणंस्याच्चमूलेनपुनश्चापितुतर्प्पयेत् ॥ एवंभूभूचतुष्कैर्वेदवेदकृतैर्मि
तम् ॥ ५० ॥ तर्प्पणस्यविधिंवच्मितान्त्रिकाणान्तुयद्धितम् ॥ आदौमूलेन
सन्तर्प्यमन्त्रवर्णैश्चतर्प्पयेत् ॥ ५१ ॥ भूभूभूभूकुभूपञ्चपञ्चदिग्द्वितयेनच ॥
अन्तरान्तरमूलेनचैवंसिद्धिचतुष्ककाः ॥ ५२ ॥ ततोमूलेनसन्तर्प्यगणेशायु
धतर्प्पणम् ॥ कुर्य्यादन्तरशूलेनआयुधानांक्रमस्त्वयम् ॥ ५३ ॥ आदौतद्बी
जमुच्चार्य्यप्रणवञ्चवदेत्ततः ॥ अमुकात्मनेचप्रवदेदमुकायनमस्त्विति ॥ ५४ ॥
नमोमुकन्तर्प्पयामिस्वाहेतिकथितंमनुः ॥ विघ्नम्भूमौरमांमायांश्रींह्रींक्लींवसु
धाञ्चगम् ॥ ५५ ॥ एकादशेगणेशस्यपड्वीजान्यपिसंवदेत् ॥ मन्त्रंफलञ्चश
क्तिञ्चप्राणबन्धंवदेत्ततः ॥ ५६ ॥ चक्रव्याप्तिश्चतारञ्चभूविद्याचत्रैलोक्यकम् ॥
तदात्मनइमेप्रोक्तास्तेषान्नामानिवच्म्यहम् ॥ ५७ ॥ बीजपूरञ्चपरशुंकार्म्मुक
ञ्चत्रिशूलकम् ॥ चक्राब्जपाशोत्पलानिकलभाग्रविषाणयुक् ॥ ५८ ॥
शुण्डाग्रंरत्नकलशमित्थमायुधनिर्णयः ॥ सर्वद्वाविंशसंख्याकन्तर्प्पणञ्चप्रजा
यते ॥ ५९ ॥ षड्बीजान्तेचतुर्थ्यन्तंतत्तन्नामसमुच्चरेत् ॥ पठित्वासकलम्मूलम
मुकङ्गणपंवदेत् ॥ ६० ॥ तर्प्पयाम्यग्निजायान्तोमन्त्रोमूलान्तरान्तरः ॥
विघ्नोविनायकोवीरःशूरोवरदएवच ॥ ६१ ॥ इभवक्त्रश्चैकदन्तोलम्बोदरगण

स्तथा ॥ क्षिप्रप्रसादतश्चैवमहागणपतिस्तथा ॥ ६२ ॥ एवंविंशचतुष्काः स्युस्ततोयुग्मानितर्प्पयेत् ॥ युग्मबीजंवदेदादौगणेशस्यतदुत्तरम् ॥ ६३ ॥ प्राग्वत्तद्युग्ममाभाष्यमूलेनान्तरितानिच ॥ श्रींह्रींक्लींग्लौंमिदन्तेषांक्रमाद्बीजचतुष्ककम् ॥ ६४ ॥ एवंषोडशसंख्यानिचतुष्कानिभवन्त्यपि ॥ श्रींगणेशबीजपूर्वान्तांस्तर्प्पयेच्चविनायकान् ॥ ६५ ॥ मूलेनान्तरिताश्चैवचतुष्काजिनसंख्यकाः ॥ तर्प्पयेद्विधिवत्प्राग्वन्मूलमन्त्रान्तरान्तरे ॥ ६६ ॥ ह्रींगंवसुन्धराशंखौतर्प्पणीयौचपूर्ववत् ॥ अत्रादौस्त्रीपुमानन्तेबीजयोर्विपरीतता ॥ ६७ ॥ ग्लौंगंवसुमतीपद्मनिध्योर्बीजन्तुतर्प्पणे ॥ एवमष्टौतर्पणानिमूलेनान्तेप्रतर्पयेत् ॥ ६८ ॥ भवन्तिवेदवेदाब्धिसंख्यकास्तर्पणक्रमाः ॥ मूलमन्त्रश्चतुर्वारम्पूर्वसन्तर्पयेत्ततः ॥ ६९ ॥ स्वबीजाद्यस्वाहान्तानियुग्मान्येवम्प्रतर्प्पयेत् ॥ ७० ॥ मध्येमध्येमूलमन्त्रश्चतुर्वारमितिक्रमात् ॥ भवेदष्टोत्तरशतंलघुतर्प्पणमीरितम् ॥ ७१ ॥ महागणपतिंपुष्टिश्चत्वारिमिथुनानिच ॥ षड्गणेशानिधियुगमेवमेतत्त्रयोदश ॥७२॥ अथाव्यस्तानिचैतानिचान्तरामूलतर्प्पणम् ॥ कृतश्चद्विशतश्चाष्टधिकमाद्यन्तयोस्तथा ॥ ७३ ॥ मूलन्तदातुद्विशतश्चायतेषोडशाधिकम् ॥ तर्प्पणम्मध्यमञ्चैतन्महागणपतेर्मतम् ॥ ७४ ॥ अथवापूर्ववत्कुर्य्यादादौमूलेनतर्प्पणम् ॥ ततश्चमूलमन्त्रस्यचैकैकेनाक्षरेणच ॥ ७५ ॥ मूलमन्त्रस्यान्तरेणकुर्य्यादेवश्चतुश्चतुः ॥ गजाश्विनेयतुल्यन्तज्जायतेचततःपरम् ॥ ७६ ॥ पुनर्मध्यप्रकारेणतर्प्पयेदितिजायते ॥ महागणपतेःपूर्णतर्प्पणन्तन्त्रवैदिकम् ॥ ७७ ॥ कामनाङ्गप्रभेदैस्तुतर्प्पणंवक्ष्यतेधुना ॥ पुष्करेतर्प्पयेद्देवम्मोक्षार्थंशुद्धवारिभिः ॥७८॥ लक्ष्मीकामेनगोदुग्धैर्मूर्द्धितर्प्योगजाननः ॥ गुह्यप्रदेशेमधुनाकामार्थंतर्प्पयेद्विभुम् ॥ ७९ ॥ आकर्षणार्थंवश्यार्थंनेत्रयोर्मधुनातुतम् ॥ घृतेनराजवश्यायदेवंपृष्ठेप्रतर्प्पयेत् ॥ ८० ॥ तथाचैरण्डतैलेनरण्डावश्यायतर्प्पणम् ॥ प्रीतेर्विवृद्ध्यैस्कन्धेतुपयोभिस्तर्प्पयेद्विभुम् ॥ ८१ ॥ क्षीरेणदध्नामधुनातुण्डेतत्पुत्रवृद्धिकृत् ॥ एवंयःपूजयेत्सम्यग्गणेशम्ममवल्लभम् ॥ ८२ ॥ तस्यभुक्तिश्चमुक्तिश्चजायतेनात्रसंशयः ॥ अनेनैवसुतेन्द्रेणदिवोदासोविवासितः ॥ ८३ ॥ कल्पयित्वावेदबाह्यंमार्गंकलियुग

प्रियम् ॥ आनीताश्चमहत्योत्रदक्षाम्नायस्यदेवताः ॥ ८४ ॥ तद्रूपासनतो लोकैःस्वस्वधर्म्मोविगर्हितः ॥ अस्वादन्नस्तुवृक्षस्थंवारुण्याःकाङ्क्षतेफलम् ॥ ८५ ॥ क्षुधातुरस्तुभूमिस्थन्दूरीकृत्यकशेरुकम् ॥ दिवोदासीयेलोकैस्तुदृष्ट्वा त्वरितकौतुकम् ॥ ८६ ॥ अन्तःप्रधारितोधर्म्मोवामान्तेकौलिकादिकः ॥ राज्ञोधर्म्मप्रजाभुंक्तेप्रजापापन्तुभूपतिः ॥ ८७ ॥ तत्पातकेनभूपोसौकाशीतः प्रेषितोदिवम् ॥ मयाचकाश्यांवसतिःकृतापुत्रप्रसादतः ॥ ८८ ॥ येयेवामप थेदेवागणकेननियोजिताः ॥ काशीप्रवेशकामार्थंतेतेसन्तोषिताःपरैः ॥ ८९ ॥ तत्रचीनागणैर्देवैर्वाममार्गेणतर्प्पणम् ॥ याचितन्तन्मयादत्तन्तन्त्रेषु प्रतिपादितम् ॥ ९० ॥ तन्मार्गनिरतावीराजायन्तेक्षत्रियादयः ॥ स्त्रियोभ वन्तियोगिन्योविप्रस्तत्परिवर्ज्जयेत् ॥ ९१ ॥ दिवोदासस्यराज्यान्तेपश्चात्क लियुगेचतैः ॥ उपद्रुतावेदमार्गेविहिताचाद्विजातयः ॥ ९२ ॥ दुर्जनानान्तु तेभीत्याहिमाचलमुपाश्रिताः ॥ तत्रापितैरभिद्रुत्यधर्म्मलोपाद्यमुद्यतम् ॥ ९३ ॥ तदाविप्रैःस्तुतश्चाहम्बहुभिर्वैदिकैःस्तवैः ॥ तेषाम्मध्यात्समुद्भूतम्मम लिङ्गंमुखान्वितम् ॥ ९४ ॥ तद्विलोक्यतुतेवीराःसाष्टाङ्गप्रणताजगुः ॥ देवदे वत्वदुक्तस्यमार्गस्यायंव्यतिक्रियः ॥ ९५ ॥ क्रियतेवैदिकैर्मूर्खैस्तदुद्धारार्थमु द्यताः ॥ गङ्गाजलादप्यधिकम्पावनंकारणंत्विदम् ॥ ९६ ॥ कन्दमूलफला दिभ्यःपवित्रंस्वादुपोषकृत् ॥ एतन्मांसंवयंदद्मउद्धारार्थंद्विजन्मनाम् ॥ ९७ ॥ नानातीर्थसमुद्भूताअनेकविधिसंस्कृताः ॥ भोगमोक्षप्रदामत्स्याएतेभ्योदा तुमुद्यताः ॥ ९८ ॥ षण्मांसैश्चषडन्नैश्चषट्तीर्थैर्देवमीरिताः ॥ षट्सुगन्धा षड्रसाश्चमुद्रादातुंसमुद्यताः ॥ ९९ ॥ तदेतेनैवगृह्णन्तिइष्टव्यंपशवोयथा ॥ स्वर्णपात्रस्थपरमन्नंहित्वातृणाशिनः ॥२००॥ तदामयाधर्मपादरक्षार्थंगदितं वचः ॥ शृण्वन्तुमद्वचोवीराःसर्वप्राणिकृपालुवत् ॥ १ ॥ अस्मिन्नपापेकलौ लोकानेयानोकौलिकेपथि ॥ अतिक्षुद्रादियोनीनान्दशस्वेकःप्रजायते ॥ २ ॥ कृमियोनिषुतेषान्तुदशकेचोन्दुरादिकः ॥ दशकेचोन्दुरादीनांविडालादिःप्र जायते ॥ ३ ॥ तेषान्तुदशकेपक्षीकश्चिदेकःप्रजायते ॥ तन्मध्येदशकेकश्चिन्मृ गजातिषुजायते ॥ ४ ॥ तेषान्दशकमध्येचमहिषोवावृषोभवेत् ॥ तेषान्तुदशके

कश्चित्खरोवाकरभोभवेत् ॥५॥ भवेत्तद्दशकेकश्चिद्धयादीनाञ्चजातिषु॥ तेषा न्तुदशकेकश्चिन्नरोवाकुञ्जरोभवेत् ॥ ६ ॥ आयुर्दायस्यकालेनभावयन्तुहृदा त्विमम् ॥ तेषामपिमनुष्याणाम्मध्यादेकःप्रजायते ॥७॥ कश्चिद्धर्मम्पुरस्कृत्यमु क्तोहमितिजायते ॥ तेषान्दशकमध्येतुकश्चिद्बुधःप्रजायते ॥८॥ तेषान्तुदश केकश्चिदनुलोमोभवेज्जनः ॥ तेषान्तुदशकेकश्चित्प्राप्नुयाद्द्विजतान्नरः ॥९॥ द्विजानान्दशकेकश्चिद्विप्रोभवतिकष्टतः ॥ तेषान्तुदशकेकश्चित्कर्म्मनिष्ठः प्रजायते ॥ १० ॥ तेषान्तुदशकेकश्चित्प्रवृत्तःकौलिकेपथि ॥ ब्रह्मसृष्टिवि नाशश्चतूर्णमेवभविष्यति ॥ ११ ॥ एवम्प्रतारितावीराननृतुर्मदमोहिताः॥ वयम्मुक्तावयम्मुक्ताअन्योन्यञ्चप्रुरोजसा ॥ १२ ॥ पुनःप्रमुदिताःसर्वेवचन ञ्चेदमब्रुवन् ॥ अहोपशुजनायूयंनिरयम्परमंगताः ॥ १३ ॥ वरंयाचयतास्म भ्यःस्वोद्धारार्थम्भवान्तरे ॥ ततःप्रमुदितैर्विप्रैर्याचितोयंवरस्तदा ॥ १४ ॥ अयंयःसकपालीनोलिङ्गरूपीप्रदृश्यते ॥ अस्माकन्तत्ररमतम्मनःस्वव्यभिचा रितम् ॥ १५ ॥ इतिश्रुत्वातदावीरावचनञ्चेदमब्रुवन् ॥ सत्यम्भवतुतच्चात्र पशुभिर्याचितन्तुयत् ॥ १६ ॥ ब्रह्मविष्णुमहेशादिशक्तिसूर्य्यदिवौकसाम्॥ नाथानस्मान्विहायाद्यपशुभिःकिन्नुयाच्यते ॥ १७ ॥ अहोदैन्यंवयम्भोग मोक्षदाःकौलिकाजनाः ॥ भोगेनमुक्तिरस्माकंसात्यक्तापशुभिर्जनैः १८ ॥ भगेलिङ्गंसमाधाययत्सुखंसमवाप्यते ॥ तेनार्चितोन्तरात्मायम्मुक्तोभवतितत्क्ष णात् ॥ १९ ॥ जठराग्नौहूयतेयत्त्वनेकाविधिसंस्कृतम् ॥ फलंतेनतुतुष्टश्चे दन्तरात्माविमुच्यते ॥ २० ॥ यदैवहृदयङ्गच्छेत्सुधातोप्यधिकासुरा ॥ तदै वसकलाक्लेशानाशंयान्तिविमुच्यते ॥ २१ ॥ यदैवगन्धोमुद्रायानासिका ञ्चप्रधावति ॥ अमृतानामयंसारःशफरःपरिकीर्त्तितः ॥ २२ ॥ तद्भोगाद मृतत्वंचेन्नास्तिकिंवैदिकेपथि ॥ अहोशृण्वन्तुपशवस्तन्त्रसारमिदंवचः ॥ २३ ॥ पण्डितोवापिमूर्खोवादीक्षितोवाप्यदीक्षितः ॥ मुद्राःशतसहस्रन्तुकृ त्वामोक्षमवाप्नुयात् ॥ २४ ॥ मुद्रायाकरणञ्चैवंशिक्षणीयंकदाचन ॥ चामु ण्डाद्यामहादेव्योभैरवाद्यामहाबलाः ॥ २५ ॥ मुद्राभिरेवतृप्यन्तुनपुष्पादि कपूजनैः ॥ महापूजाकृतातेनयेनमुद्राष्टकंकृतम् ॥ २६ ॥ सयत्पदमवाप्नो

तितन्नब्रह्मानशङ्करः ॥ अवश्यमेवमुक्तिःस्यात्सहस्रभगदर्शनात् ॥ २७॥
पुराकौलिकमार्गस्यनिन्दावैविष्णुनाकृता ॥ तत्पातकवशाज्जातोमत्तोदश
रथात्मजः ॥ २८ ॥ यत्तेननन्दिताशक्तिस्तस्सीतारक्षसाहृता ॥ दुःखञ्चसमनु
प्राप्तंवियोगश्चानुकालिकः ॥ २९ ॥ शरीरंवैभवंलब्ध्वापुनस्तेनकृतन्तपः ॥
तदागोपकुलेजातःसदाशक्तिनिषेवकः ॥ ३० ॥ शरीरार्धेनबलिभिर्नित्यमास
वसेवकः ॥ षोडशस्त्रीसहस्राणाञ्जातोसौभगदर्शनात् ॥ ३१ ॥ मोक्षाधिकारि
पशवःशृणुतैतद्धितंवचः ॥ विनामद्यंविनामांसंविनामत्स्यंचमैथुनम् ॥ ३२॥
विनामुद्रामन्यतमंभवेन्नास्तीष्टसाधनम् ॥ पशुभिर्याचितंयत्तुकिमुचैतत्तमेव
हि ॥ ३३ ॥ एवमुक्तेपुवीरेषुमुनयःशंसितव्रताः ॥ अन्तःप्रफुल्लवदनाःशान्ति
पूर्वंवचोजगुः ॥ ३४ ॥ वयन्तुपशवोविप्राअन्नप्राणाविलोकिताः ॥ यूयं
सिंहाःसिंहवच्चसदामांसनिषेवकाः ॥ ३५ ॥ पशूनांचयथातृप्तिःशाद्वलेनैव
जायते ॥ अन्नेनचतथास्माकंनमांसंभक्षितुंक्षमाः ॥ ३६॥ सिंहानांतुयथाभक्ष्यं
मांसंनान्नंकदाचन ॥ तथैववीरसिंहानांभक्ष्यंमांसादिकङ्किल ॥ ३७ ॥ इति
श्रुत्वावचस्तेषांप्रोचुस्तेचमहेश्वरम् ॥ त्वांसेवयितुमिच्छन्तिपशवोविप्ररूपि
णः ॥ ३८ ॥ तस्मात्पशुपतिस्त्वंवनेपालेत्रस्थिरोभव ॥ इत्युक्त्वातेपुनःपी
त्वामद्यंमत्तास्तथाभवन् ॥ ३९॥ तदानानाविधैःस्तोत्रैर्विप्रैःसन्तोषितोह्यहम् ॥
तदातेभ्योमयाप्रोक्तंव्रियतांव्रियतामिति ॥ ४० ॥ उक्तंतैश्चपुनर्देवकथंमुक्तिः
कलौभवेत् ॥ येनास्माकंभवेच्छ्रेयस्तन्धर्म्मंवदनःप्रभो ॥ ४१ ॥ इतितेषांवचः
श्रुत्वामयातत्त्वंनिरूपितम् ॥ ज्ञानंविनानमोक्षोत्रज्ञानंधर्म्माद्दृतेनहि ॥ ४२॥
तस्माद्द्विजाःप्रकर्त्तव्यंवेदोक्तंकर्म्मनित्यशः ॥ यथापिष्टेनबडिशमत्रगुप्तंनिपा
त्यते ॥ ४३ ॥ मत्स्यानांग्रहणार्थन्तुतद्वत्तत्रनिषेवणम् ॥ कश्चिन्मत्स्योदैव
योगाच्चूर्णभोक्तानविध्यते ॥ ४४ ॥ तदास्यजायतेतृप्तिर्जीवनंचभवेद्यथा ॥
तथैववाममार्गेचज्ञानानिर्दग्धकल्मषाः ॥ ४५ ॥ भवन्तिमुक्तानान्येचतस्मात्तंप
रिवर्ज्जयेत् ॥ येवाममार्गनिरतावेदबाह्यानुसारतः ॥ ४६ ॥ स्वधर्म्ममेवशंस
न्तिवचस्तन्नैवमानयेत् ॥ अस्मिन्कलियुगेघोरेयथाशक्त्याकरोतियः ॥ ४७॥
सेवनंवेदमार्गस्यकलौतस्यजनिर्नहि ॥ यमलोकेननिरयेपातालेनेवनैव

च ॥ ४८ ॥ यद्ब्राह्मणेजन्मकलौसएवनिरयःस्मृतः ॥ अतःपरंप्रवक्ष्यामिग
णेशेनहताश्चये ॥ ४६ ॥ सत्कार्यार्थंदिवोदासनिस्सारार्थंचदेवताः ॥ आ
नीतास्तास्तुममवैपार्वत्याश्चापिवल्लभाः ॥ ५० ॥ गणेशशासनात्कामोद
ग्धोपिपुनरुत्थितः ॥ दिवोदासस्यभवनेसर्वेषांहृदयेस्थितः ॥ ५१ ॥ तस्यम
न्त्रान्प्रवक्ष्यामिलोकद्वयफलप्रदान् ॥ आदौक्लीम्बीजरूपोस्यमन्त्रएकाक्षरो
मतः ॥ ५२ ॥ सम्मोहनोमुनिश्छन्दोगायत्रंदेवतास्मरः ॥ षड्दीर्घभाजाबी
जेनपडङ्गानिप्रकल्पयेत् ॥ ५३ ॥ रक्ताम्बररंरक्तवर्णंरक्तगन्धानुलेपनम् ॥ ना
नारत्नौघमुकुटसूत्रणैर्भूपितंशुभम् ॥ ५४ ॥ पाशांकुशाविक्षुचापंपुष्पवाणा
न्दधंकरैः ॥ उपविष्टंरक्तपद्मेकामदेवंविभावये ॥ ५५ ॥ पद्ममष्टदलंकृत्वामध्ये
नङ्गंसमर्चयेत् ॥ कर्णिकायांचपट्पत्रेकोणेष्वङ्गानिपूजयेत् ॥ ५६ ॥ देवा
ग्रतस्तुमध्यान्तमर्चयेत्केशरेपुच ॥ मोहिनींक्षोभिणींचैवत्रासिनींस्तम्भिनींत
तः ॥ ५७ ॥ आकर्षिणींद्राविणींह्लादिनींक्लिन्नांचक्लेदिनीम् ॥ षट्पत्रेमद
नानङ्गमन्मथाकुसुमाह्वया ॥ ५८ ॥ अनङ्गकुसुमातुराह्यनङ्गशिशिरापिच ॥
अनङ्गमेखलानङ्गदीपिकाचततःपरम् ॥ ५६ ॥ सर्वाध्येयाःपद्महस्ताःसाल
ङ्काराश्चतद्बहिः ॥ पद्मेपोडशपत्राढयेस्वाग्रतःपरिपूजयेत् ॥ ६० ॥ युवती
विप्रलम्भाचज्योत्स्नासूरुमदद्रवा ॥ सुरतावारुणीलोलालीलासौदामिनीत
था ॥ ६१ ॥ कामच्छत्राचन्द्ररेखाशुकीचमदनाह्वया ॥ योनिर्मायावतीचेति
तरुण्यःसस्मिताननाः ॥ ६२ ॥ कह्लारहस्त.ःकामार्त्ताःपत्राग्रेपरिचारकान् ॥
कामस्यपूजयेच्छोकंमोहंविलासविभ्रमौ ॥ ६३ ॥ मदनातुरपत्रपौयुवानं
चन्दनंतथा ॥ चूतपुष्पंरतिप्रियंग्रीष्मंतापनमूर्जकम् ॥ ६४ ॥ हेमन्तंशिशिरं
चापिमदन्तेपुष्पशायकाः ॥ एतेचार्पिततूणीराःशोणस्त्रीसक्तमानसाः ॥ ६५ ॥
इक्षुचापाश्चतद्बाह्येचाष्टपत्रदलेर्चयेत् ॥ परभृःसारसाद्धश्चशुकोमेघस्ततः
परम् ॥ ६६ ॥ अपाङ्गोरुविलासश्चहीनचीरोरतिप्रियः ॥ भूगृहस्यचकोणेचच
तस्रःपूजयेदिमाः ॥ ६७ ॥ माधव्याख्यामालतीचहरिणाक्षीमदोत्कटा ॥ श्वेत
चामरसद्धस्ताःश्यामाभूषितविग्रहाः ॥ ६८ ॥ इन्द्रादींश्चततोबाह्येवज्रादीन्य
पिपूजयेत् ॥ एवमाराधयेद्यस्तुगन्धपुष्पादिभिःस्मरम् ॥ ६६ ॥ सौभाग्यमतु

लंकामान्महालक्ष्मींसविन्दति॥ पुरश्चरणमेतस्यलक्षंद्वादशचोच्यते॥७०॥ तद्दशांशंत्रिमध्वक्तैः किंशुकप्रसवैर्हुनेत् ॥ तर्पणंमार्जनंकृत्वाब्राह्मणानपि भोजयेत्॥ ७१ ॥ ततोभ्यर्च्यगुरुंविप्रैः प्रणम्यचसुतोषयेत् ॥ एवंसिद्धमनु मन्त्री प्रयोगानाचरेत्ततः ॥ ७२ ॥ अशोककुसुमैःस्वादुत्रयाक्तैस्त्रिदिनंहुने त् ॥ अष्टाधिकंसहस्रंयः सर्वेषांसप्रियोभवेत् ॥ ७३ ॥ गोघृतेनसुसंपातम ष्टोत्तरशतंहुनेत् ॥ सम्यक्प्रपूजितेवह्नौ मन्त्रेणानेनमन्त्रवित्॥ ७४ ॥ सम्पातसर्पिषंयोवैस्त्रांनारींभोजयेत्प्रिये ॥ आज्ञानुवर्त्तिनीसास्यभवेज्जन्म निजन्मनि ॥ ७५ ॥ दध्यक्तलाजहोमेन प्रत्यहंमण्डलावधि ॥ वाञ्छिता ल्लँभतेमन्त्री कन्यासापिप्रियंपतिम्॥ ७६ ॥ मालामन्त्रंप्रवक्ष्यामि काम देवस्यसिद्धिदम्॥ हृदयंकामदेवाय सर्वजनप्रियायच॥ ७७ ॥ सर्वजनस म्मोहनायज्वलद्धिमयंवदेत्॥ प्रज्वलसर्वजनस्य हृदयंममकीर्तयेत्॥७८॥ वशंकुरुकुरुस्वाहा मन्त्रोनागकृताक्षरः॥ षड्दीर्घयुतक्लींबीजैःषडङ्गविधिरीरि तः॥ ७९ ॥ आदौकरांगुलीष्वेतान्वर्णान्कामस्यविन्यसेत् ॥ द्रामाद्यांद्रा विणींदेवींद्रीमाद्यांक्षोभिणीमपि॥ ८० ॥ क्लींचवशीकरींन्यसेत्क्लूंक्लीमाद्यां महेश्वरीम्॥ आकर्षिणींचसःपूर्वां सम्मोहिनींहंआदिकाम् ॥ ८१ ॥ काम मन्मथकन्दर्पमकरध्वजसञ्ज्ञकाः ॥ मीनकेतुरिमेन्यस्याः पञ्चाङ्गेष्वंगुली षुच॥ ८२ ॥ चत्वारिंशन्मन्त्रवर्णानकारादिस्थलेन्यसेत् ॥ मातृकायाना सिकाङ्गेष्वङ्गेष्यथततःपरम्॥ ८३ ॥ जठरेहृदयेकण्ठे वक्त्रेनसिचपञ्चच ॥ न्यसेद्वर्णत्रयंशेषं व्यापकत्वेनसन्न्यसेत्॥ ८४ ॥ पुनःसम्पूर्णमनुना व्याप कंपुनराचरेत्॥ ततश्चमातृकामानां बृहन्न्यासंसमाचरेत्॥ ८५ ॥ कामबी जप्रपुटितांमात्रामुक्त्वाचयुग्मकम्॥ ध्यान्तंनमःसमुच्चार्य्यमातृकाङ्गेषुविन्य सेत्॥ ८६ ॥ रतियुक्तंन्यसेत्कामंकामदम्प्रीतिसंयुतम् ॥ कान्तांचकामयुक्तां चकान्तिमन्तञ्चमोहिनीम् ॥ ८७ ॥ कामाङ्गंकमलायुक्तंकामचारंविलासि नीम्॥ कामयुक्तांकल्पनाञ्चश्यामलांकामुकान्विताम् ॥ ८८ ॥ शुचिस्मि तांन्यसेत्कामवर्धनेनसमन्विताम् ॥ रमायुक्तंविशालाक्षंरमणंलोलजिह्विका म ॥ ८९ ॥ दिगम्बरांरतिनाथंरमाञ्चातिरतिप्रियम् ॥ रात्रिनाथंकुञ्जि

काञ्चरमाकान्तञ्चकान्तया ॥ ९० ॥ नित्ययारममाणञ्चकल्परूपांनि शाकरम् ॥ नन्दकंभोगिनीयुक्तंनन्दनंकामदायुतम् ॥ ९१ ॥ सुलोचनां नन्दिनञ्चनन्दयन्तंप्रलापिनीम् ॥ पञ्चबाणंचमदनींरतिभङ्गंकलिप्रियाम् ॥ ९२ ॥ पुष्पधन्वामृगाक्षीचसुमुखाचमहाधनुः ॥ क्रमणोनलिनीयुक्तोभ्रमणोयजिनीयुतः ॥ ९३ ॥ मन्मथोमदनायुक्तोमोर्भङ्गश्चापिमालया ॥ शान्तश्चमुग्धयायुक्तोभ्रामकोरसयायुतः ॥ ९४ ॥ भृङ्गश्चभ्रमयायुक्तोभ्रान्ताचारस्तुलोलया ॥ भ्रमावहश्चञ्चलयामोहनोदीर्घजिह्वया ॥ ९५ ॥ रतिप्रियां मोदकंचमोहाक्षींलोलमेवच ॥ मोहवर्धनभृङ्गिण्यौमदनंपाटलांतथा ॥ ९६ ॥ मन्मथंमदनांचापिमालांमातङ्गमेवच ॥ भृङ्गनायकहंसिन्यौगायकंविश्वतोमुखीम् ॥ ९७ ॥ गीतिज्ञंगजदानन्दंनर्तकंरमणीमपि ॥ क्ष्वेलकंकान्तिसंयुक्तंचोन्मत्तंकलकण्ठिकाम् ॥ ९८ ॥ मत्तंवृकोदरीयुग्मंमेज्यौश्यामांविलासिनम् ॥ सर्वोत्तमायुतंलोभवर्धनंन्यस्यचिन्तयेत् ॥ ९९ ॥ प्राग्वत्पूजादिकंतद्वत्कृष्णपीठेसमर्चयेत् ॥ प्रयोगाश्चापिकर्त्तव्याःकृष्णगोपालसम्भवाः ॥ २०० ॥ त्रयोदश्यांशुक्लपक्षेसोमवारेसहस्रकम् ॥ अष्टोत्तरंचताम्बूलंगजपुष्करभक्षितम् ॥ १ ॥ पुरुषत्वमवाप्नोतिसत्पुत्रंद्रावयेत्स्त्रियाम् ॥ अथकामस्यगायत्रीप्रोच्यतेपूजनादिकम् ॥ २ ॥ संन्यासमेकाक्षरवन्मुनिर्ब्राह्मस्यायनोमतः ॥ ३ ॥ कामदेवायविद्महेपुष्पबाणायधीमहि ॥ तन्नोऽनङ्गःप्रचोदयात् ॥ ४ ॥ पञ्चतिसहस्राणिजपोस्याःपरिकीर्त्तितः ॥ सर्वान्कामानवाप्नोतिपरत्रापिचसद्गतिम् ॥ ५ ॥ प्रथमन्तुगणेशेनादिवोदासमहीपतेः ॥ अन्तःपुरेप्रेषितोयंनारीणांहृदयंगतः ॥ ६ ॥ अपास्यचततोधर्म्मराज्ञोहृदयमाविशेत् ॥ मन्दधर्मःशापितोयस्तद्काश्यांविवासितः ॥ ७ ॥ तस्माद्गणेशादन्येनकामोमत्तोपिचापरः ॥ विष्णुःकाममयोयस्मात्तस्मात्कामःसतांगतिः ॥ ८ ॥ अन्तःपुरेगतेकामेदिवोदासस्यतेजसा ॥ दन्दह्यमानोगणपस्तत्सहायार्थमुद्यतः ॥ ९ ॥ तदाध्यात्वामहाकालंमहामायाचशाश्वतीम् ॥ तदातयोःप्रभावेणदृष्टवान्परमंपतिम् ॥ १० ॥ तस्मिन्नुदभवत्काचिद्वर्णालीब्रह्मवादिनः ॥ तामेवचजपंस्तस्थौवर्षमात्रंविमुक्तितः ॥ ११ ॥ मणिकर्णितटेतस्यसिद्धयः समुपस्थिताः ॥ त

दाख्यातःकाशिकायामसौसिद्धिविनायकः ॥ १२ ॥ सिद्धयेसमनुष्याणां नानारूपधरोभवेत् ॥ लोभद्वेषादिकान्सर्वान्त्रासयामासतत्रतु ॥ १३ ॥ समन्त्रः केवलंकोलवाचकोमोक्षदायकः ॥ यत्प्रसादाद्दिवोदासोगुप्तसेनःप्रपञ्चितः ॥ १४ ॥ तस्मात्प्रपञ्चमन्त्रोयंतन्त्रेपुप्रकटीकृतः ॥ उद्धारार्थमविप्राणां गायत्र्येषामयोदिता ॥ १५ ॥ सर्वेपिमन्त्राभोदेवादेवसायुज्यकारकाः॥तस्य चान्तर्गताःपञ्चमन्त्रोयेभ्योमयाकृतः ॥ १६ ॥ पञ्चाम्नायस्यविषयस्तन्मन्त्रंकथयाम्यथ ॥ महाकालस्ययोवाचीसआदौप्रणवोमनुः॥१७॥ महामायावाचिकातुहल्लेखापरिकीर्तिता॥जीववाचीहंसइतिद्वयक्षरोयंतृतीयकः॥ १८॥ जीवकर्म्मच्छेदकरंज्ञानंयत्प्रोच्यतेबुधैः॥ सएवसोहमितिचेद्द्वयर्णोमन्त्रश्चतुर्थकः॥ १९॥ यस्मात्प्रपञ्चउद्भूतोदेवतृप्तिकरश्चयः॥सस्वाहाद्वयक्षरोमन्त्रः पञ्चमःपरिकीर्त्तितः ॥ २० ॥ एवमष्टाक्षरश्चायंमन्त्रराजोनिरूपितः ॥ यतो ब्रह्माप्रपञ्चादिः सएवास्यमुनिःस्मृतः ॥ २१ ॥ गायन्तन्त्रायतेयस्माद्गायत्रंछन्दईरितम् ॥ यस्मादपिसएकोपितेजसोन्तोनविद्यते ॥ २२ ॥ परम्पदे नयत्प्रोक्तं परोज्योतिश्चदेवता ॥ आदौतुमातृकान्यासः केवलंप्रथमंस्मृतः ॥ २३ ॥ सबिन्दुमातृकान्यासोद्वितीयःपरिकीर्त्तितः ॥ कलादिमातृकान्यासस्तृतीयःपरिकीर्त्तितः॥ २४ ॥ केशवादिकमातृणां चतुर्थोन्यासउच्यते ॥ शिवशक्त्यात्मकोन्यासः पञ्चमोत्रसमीरितः ॥ २५ ॥ मायाबीजादिकःषष्ठो मातृकान्यासउच्यते ॥ श्रीबीजादिकमातृणांसप्तमोन्यासउच्यते ॥ २६ ॥ मातृकाकामबीजाद्यास्तन्न्यासश्चाष्टमोमतः ॥ नवमोह्रींरमाकामबीजपूर्वास्तुमातृकाः ॥ २७ ॥ प्रपञ्चपूर्वाणांमन्त्रोमातृणांदशमःस्मृतः॥ व्यापकत्वाचकालस्यनध्यानंनचपूजनम् ॥ २८ ॥ लक्षाष्टकंमनोरस्य पुरश्चरणमुच्यते ॥ उग्रताराद्यतिक्रूरस्तारादिश्चैवसाधकः॥ २९ ॥ अनेनपुटितोजप्तो वर्णलक्षमितोयदि ॥ आगत्यमन्त्रदेवस्तु जायतेसाध्यकिङ्करः॥ ३० ॥ महाकालप्रभावेण स्वर्गेभ्योनोन्यथाभवेत् ॥ समिधस्तुवटप्लक्षपिप्पलोदुम्बरोद्भवाः ॥ ३१ ॥ तिलसिद्धार्थाज्यहविर्होमद्रव्याष्टकंमतम् ॥ होमार्थपूजयेद्विप्रान्सिद्धमन्त्रस्ततोभवेत् ॥३२॥ सिद्धयन्तिसर्वकार्य्याणिप्रयोगःकथ्यतेधुना॥

दशायुतंविधानेन तदर्धमथवापुनः ॥ ३३ ॥ कार्य्यस्यैवानुसारेणहुनेद्द्र
व्याष्टकेनच ॥ चौरशत्रुभयव्याधिसर्पराक्षसदोषतः ॥ ३४ ॥ चतुःशतन्तदर्धं
वातदर्धंवाहुनेत्ततः ॥ क्षुद्ररोगेषुजातेषु तत्तद्दोषानुसारतः ॥ ३५ ॥ रससङ्ख्य
सहस्राणिहुनेदद्रव्याष्टकेनच ॥ एतद्द्विगुणतश्चाथ चतुर्गुणतएववा ॥ ३६ ॥
भूतावेशग्रहावेशकृत्यादीन्सुविनाशयेत् ॥ शास्त्रोक्तंतुक्रमंहित्वा जपपूजादि
कृत्तुयः ॥ ३७ ॥ वामेवाकौलिकेमार्गे ग्रस्यतेभैरवादिभिः ॥ स्मृतिभ्रंशोभवे
त्तस्य होमद्रव्याष्टकेनच ॥ ३८ ॥ सहस्रसङ्ख्याहोमेन स्वप्नोभवतितत्क्षणा
त् ॥ प्रत्येकंद्विसहस्रंयो हुनेद्द्रव्याष्टकेनच ॥ ३९ ॥ अपस्मारंस्मृतिभ्रंशं
शापदोषंसमापयेत् ॥ द्रव्याष्टकंत्रिमध्वक्तंहुनेत्तस्यतुभोग्यतः ॥ ४० ॥ देवेन्द्र
स्यमहालक्ष्मीस्तल्लक्ष्म्यालज्जतेतराम् ॥ लक्षंलक्षार्धकंवापित्रिमध्वक्तंतुयो
हुनेत् ॥ ४१ ॥ द्रव्याष्टकंत्रिवर्षांवाकृतस्यलोकत्रयंवशम् ॥ वश्यादिसाध
नंप्रोक्तं त्विहद्रव्याष्टकेनच ॥ ४२ ॥ वृद्ध्यादिकंविजानीयाद्धोमंतंकार्य्यगौर
वात् ॥ शुद्धैस्तिलैस्तुलक्षंयोहोमंकुर्य्याद्यथाविधि ॥ ४३ ॥ महापापानित
स्याशु प्रलयंयान्तिनान्यथा ॥ लक्षंकमलहोमेन महालक्ष्मीःप्रजायते ॥ ४४ ॥
हविष्यैःपुष्टिदोहोमोघृतहोमोयशस्करः ॥ मालतीपुष्पहोमोपि सर्ववश्यप्रदो
भवेत् ॥ ४५ ॥ सामुद्रंलवणंहुत्वा तथावश्यंप्रसाधयेत् ॥ अथशालिसमुद्भू
तांस्तण्डुलान्साधुचूर्णयेत् ॥ ४६ ॥ मधुरत्रयसंयुक्तचूर्णैनैवसाधकः ॥
साध्यप्रतिकृतिंकुर्य्यात्सम्यक्सम्पूज्यतांस्पृशेत् ॥ ४७ ॥ प्राणस्थापनमन्त्रन्तु
जपेत्साष्टशतंततः ॥ विभज्यजुहुयान्मन्त्रीतांन्यासक्रमतोनिशि ॥ ४८ ॥
सप्तरात्रंप्रकुर्वाणो नरंवास्त्रियमेववा ॥ वशीकरोतिसोप्येवंनात्रकार्य्याविचार
णा ॥ ४९ ॥ सामुद्रलवणस्यापि पुत्तल्याफलमीदृशम् ॥ प्रादुर्भूतेततस्तस्मि
न्वटाग्नौजुहुयाद्घृतम् ॥ ५० ॥ अष्टोत्तरशतंमन्त्री भासितंपतितंचयत् ॥ पू
र्णौषधिविपक्केन पञ्चगव्येनपूरिते ॥ ५१ ॥ चुल्ल्यांसंस्थापितेधस्ताद्वह्निःकुम्भे
प्रदीयते ॥ तावत्सङ्ख्यंचसञ्जप्यगृह्णीयात्सर्वसिद्धिदम् ॥ ५२ ॥ लक्षणा
द्गात्रलेपाच्च तिलकक्रिययातथा ॥ मस्तकेधारणात्सद्यः सर्वेनश्यन्त्युपद्रवाः ॥
५३ ॥ भूतप्रेतपिशाचादिविषरागादिनाशनम् ॥ सर्ववश्यकरंपुंसां श्रीसो

भाग्यजयप्रदम् ॥ ५४ ॥ सहस्रसङ्ख्यकेहोमे तदानींगुरवेबुधः ॥ पलंपलार्धं कंवापि दद्याद्धेम्नोवरस्यच ॥ ५५ ॥ कल्पवृक्षाद्यथादेवा लभन्तेवाञ्छितंफलम् ॥ एवंसिद्धिंप्रपञ्चाख्यमन्त्रेणगणपतेस्तदा ॥ ५६ ॥ तत्सन्निधौसमाजग्मूराजकीयामहाजनाः ॥ सएवसर्वशास्त्राणांवक्ताभूज्जगतोगुरुः ॥ ५७ ॥ विनाविप्रान्सर्वजनास्तन्त्रमार्गेप्रकीर्त्तिताः ॥ मकारपञ्चकेनैव जातंसर्वत्रपूजनम् ॥ ५८ ॥ शनैश्शनैःसमभवत्पृथिव्यांकचिदीदृशः ॥ प्रपञ्चमन्त्रमाहात्म्याद्राजापिभ्रान्तमानसः ॥ ५९ ॥ मन्नाम्नाकल्पितैर्ग्रन्थैः क्षुद्रदेवरताजनाः ॥ मपञ्चकस्यसेवातो धर्म्मंपश्यन्तितेनहि ॥ ६० ॥ प्राप्नुवन्तिद्रुतं सिद्धिंगणेशस्यप्रभावतः ॥ अहोसाक्षात्परब्रह्म अहोगुरुपतिस्त्वयम् ॥ ६१ ॥ अहोष्टसिद्धिनाथोयं सर्वविद्याविशारदः ॥ मथित्वाचतुरोवेदानस्मद्भाग्यात्कृपालुना ॥ ६२ ॥ दर्शितःकौलिकःपन्था भुक्तिमुक्तिप्रदायकः ॥ इति नृणांवचःश्रुत्वा जग्मुर्विप्राश्चतंप्रति ॥ ६३ ॥ सतेषांसम्यगातिथ्यं कृत्वा तुष्टवचागमम् ॥ अहोविप्राजीवहिंसाप्रधानंयज्ञकर्म्मतु ॥ ६४ ॥ नकर्तव्योगुरुप्रोक्तो यज्ञोयागः प्रपञ्चकः ॥ तपश्चापिनकर्तव्यमात्मादुःखी प्रजायते ॥ ६५ ॥ तान्त्रिकंकर्म्मकर्तव्यंवैदिकंनकदाचन ॥ वैदिकाःपशवः प्रोक्ताजीवन्मुक्तास्तुतान्त्रिकाः ॥ ६६ ॥ कुर्वन्त्याभ्यन्तरंकर्म्म तत्त्वमेतद्विचार्य्यताम् ॥ यद्दीयतेप्राप्यतेतद्वेदशास्त्रादिसम्मतम् ॥ ६७ ॥ दुःखंयदात्मनोदत्त्वाकथंसौख्यंप्रलभ्यते ॥ सुखबीजेनसंसाध्यंमहत्सौख्यंद्विजोत्तमाः ॥ ६८ ॥ तस्मात्कौलंसमासाद्य लोकद्वयसुखप्रदम् ॥ मुक्ताभवन्तुभोविप्रास्त्यज्य तांवेदकर्म्मततत् ॥ ६९ ॥ जातानिबहुवर्षाणि चाहोरात्राणिकुर्वताम् ॥ काचिद्दृष्टातत्रसिद्धिः प्रत्यक्षंपश्यतामिदम् ॥ ७० ॥ प्राणाग्निहोत्रंतन्त्रोक्तंकर्म्म पद्मप्रकाशितम् ॥ त्यक्त्वातदग्निहोत्रन्तु चर्य्यतांदृश्यतामिदम् ॥ ७१ ॥ इतितद्वचनंश्रुत्वासरस्वत्याविमोहिताः ॥ त्यक्त्वाखिलंवेदमार्गंप्रविष्टावामकौलयोः ॥ ७२ ॥ प्राणाग्निहोत्रंवक्ष्यामि गणेशेनप्रदर्शितम् ॥ ज्ञानिनांत्वरितासिद्धिरन्येषांपतनंद्रुतम् ॥ ७३ ॥ उपविष्टःप्रसन्नात्माप्राङ्मुखःस्थिरमानसः ॥ अतिमृद्वासनंबद्ध्वापद्मासनमृजुर्भवेत् ॥ ७४ ॥ शक्तिरूपात्मकंचिन्त्यंमूला

धारेत्रिकोणकम् ॥ मायाबीजन्तुतन्मध्येचिन्तनीयंगुणात्मकम् ॥ ७५ ॥ प्रा
ग्रकोणात्त्रिकोणेपुत्रिकोणांस्त्रीन्विचिन्तयेत् ॥ हकारंचापितन्मध्येध्यायेत्स
त्त्वगुणात्मकम् ॥ ७६ ॥ हकारान्तर्गतंज्योतिश्चेतोभास्करसन्निभम् ॥ सा
त्त्विकेनहकारेण वेष्टितंतच्चचिन्तयेत् ॥ ७७ ॥ सहकारोराजसेन ईकारेणसम
न्वितः ॥ तामसेनतुरेफेण समाक्रान्तन्तुतद्द्वयम् ॥ ७८ ॥ मूलाधारइतिध्या
त्वा पञ्चकुण्डानितत्रतु ॥ मध्येप्राच्यांप्रतीच्यांच कौवेर्य्यांदक्षिणेतथा ॥
सर्वदाज्वलदग्नीनि तानिकुण्डानिभावयेत् ॥ मध्यादिपूर्वतस्तत्रज्ञेयाःपञ्चा
ग्नयोह्यमी ॥ ७९ ॥ आवसथ्यश्चसत्यश्च गार्हपत्योहुताशनः ॥ तथाचाह
वनीयोग्निरन्वाहार्य्यश्चपञ्चमः ॥८०॥ प्रभाज्वालनिदानांश्चज्ञानरूपान्नि
रञ्जनान् ॥ द्वादशान्तःस्थितांस्तेषांकल्पादित्यान्विचिन्तयेत् ॥ ८१ ॥ मातृका
र्णानाज्यरूपान्व्यत्ययात्तत्रहोमयेत् ॥ क्षंलंहंसषमितितुज्ञेयावर्णाश्चपञ्च च ॥
८२ ॥ ध्येयामरकतप्रख्याःशास्त्रादिज्ञानकारकाः ॥ शंवंलंरंयंचध्येयाःपञ्चगो
मेदसन्निभाः ॥ ८३ ॥ सैंहिकेयस्यपञ्चैतेसंग्रामेविजयप्रदाः ॥ मंभंबंफंपमिति
चवर्णाःपञ्चशनैर्मताः ॥ ८४ ॥ नीलेन्द्रेणसमाध्येयामन्त्रासिद्धिप्रदायकाः ॥
नंधंदंथंतमितिचध्येयाविद्रुमसन्निभाः ॥ ८५ ॥ भौमस्यैतेद्यूतकलिराजद्वा
पुसिद्धिदाः ॥ णंढंडंठंटमित्येतेवर्णाःशुक्रस्यकीर्त्तिताः ॥ ८६ ॥ चिन्तनी
यावज्रनिभायात्राकार्य्यशुभंकराः ॥ ञंझंजंछंचमितिचपुष्परागसमत्विषः ॥
८७ ॥ गुरोरेतेविवाहादिकार्य्यादिषुसुशोभनाः ॥ ङंघंगंखंकमित्येतेध्येयावै
दूर्य्यसन्निभाः ॥ ८८ ॥ केतोरेतेशत्रुनाशकराध्येयामनीषिभिः ॥ अःअंऔं
ओंचऐंचएंचलॄंलृंमौक्तिकसन्निभाः ॥ ८९ ॥ ॠंऋंऊंउंचईंचआंअंचैतेर्कस
न्निभाः ॥ वर्णाहीरकसङ्काशाराजकार्य्यकराइमे ॥ ९० ॥ एवंध्यात्वासखे
टार्णांस्ततोहोमंसमाचरेत् ॥ क्षंशंमंनंणंचञंङंअःएंऊंआवथ्यके ॥ ९१ ॥
लंवंभंधंढंचझंघंअंलृंउंसत्यकुण्डके ॥ हंलंबंदंडंचजंगंऔंलॄंईंचहुनेत्ततः ॥ ९२ ॥
अग्नावाहवनीयाख्येसंरंफंथंततश्चठम् ॥ छंखंओंॠंचइंकारमन्वाहार्य्येहुने
त्सुधीः ॥ ९३ ॥ षंयंपंतंटंचचंकंऐंऋंआंगार्हपत्यके ॥ चकाराद्यानकारा
न्तान्व्यस्तान्वर्णान्क्रमाद्धुनेत् ॥ ९४ ॥ तारंमायांचतंवर्णंहंसःसोहंततः

परम् ॥ स्वाहेत्युक्त्वा प्रोक्तकुण्डे हुनेदेकैकमक्षरम् ॥ ९५ ॥ अकारस्तु परब्रह्मरूपी ध्येयस्ततो हुनेत् ॥ एवं हुत्वा शब्दजातं सर्वशास्त्रादिकं हुनेत् ॥ ९६ ॥ आवसथ्याभिधे कुण्डे हं बीजेन गुरूक्तितः ॥ स्पर्शादिकान्वायुगुणान्यं बीजेनेन्द्रकुण्डके ॥ ९७ ॥ सर्वरूपाणि जुहुयाद्रंबीजेन च पश्चिमे ॥ वंबीजेन रसान्सर्वान्हुनेत्कुण्डे तथोत्तरे ॥ ९८ ॥ लम्बीजेन हुनेत्सर्वान्गन्धान्दक्षिणकुण्डके ॥ प्रलयानलसङ्काशज्वलदग्निष्वहर्निशम् ॥ ९९ ॥ होमं कुर्वीत कुण्डेषु मातृकावर्णसंयुतम् ॥ नित्यशुद्धपरानन्दचिद्रूपोसौ विराजते ॥ ४०० ॥ ध्रुवयज्ञादिकं होमं जपान्तं तत्तु पूर्ववत् ॥ पञ्चाशत्सङ्ख्यया कृत्वान्यस्य तावद्यथाविधि ॥ १ ॥ जीवन्मुक्तो भवेन्मन्त्री चिरञ्जीवी च जायते ॥ तेजसा सूर्य्यकल्पोसौ कर्ता हर्ता च शम्भुवत् ॥ २ ॥ प्रत्यहं विधिनानेन भोजनं कुरुते यदि ॥ गार्हपत्यादिकुण्डेषु क्रमाद्ग्रासांस्तु होमयेत् ॥ ३ ॥ अथर्वपरिशिष्टोक्तैर्मन्त्रैरेतैस्तु पञ्चभिः ॥ ४ ॥ गार्हपत्ये नेहिरण्यवर्णाः शुचयः पावकाः ॥ अग्निं विहत्यात्मानमुपचर्य्योर्ध्वं गच्छन्तु स्वाहा ॥ ५ ॥ अन्वाहार्य्येऽपाने गगनरुचयः पावकाः ॥ अग्निं विहत्यात्मानमुपचर्य्योर्ध्वोधस्तिर्य्यग्गच्छन्तु स्वाहा ॥ ६ ॥ आहवनीये व्याने रक्तवर्णाः शुचयः पावकाः ॥ अग्निं विहत्यात्मानमुपचर्य्य तिर्य्यगूर्ध्वाधो गच्छन्तु स्वाहा ॥ ७ ॥ आवसथ्ये समाने सुप्रभावर्णाः शुचयः पावकाः ॥ अग्निं विहत्यात्मानमुपचर्य्य तिर्य्यगूर्ध्वाधस्समं गच्छन्तु स्वाहा ॥ ८ ॥ एवं होमं विधाया थमन्त्रमेतदुदीरयेत् ॥ एवं भावनया सर्वमश्नीयादुच्यते मनुः ॥ ९ ॥ अहं वैश्वानरो भूत्वा जुहोम्यन्नं चतुर्विधम् ॥ पञ्चमेन विधानेनोर्ध्वाधस्तिर्य्यक्सुगच्छन्तु ॥ १० ॥ स्वाहान्तोयं चतुस्त्रिंशद्वर्णमन्त्र उदाहृतः ॥ तूष्णीं होमं विधायाथ संस्कृतान्नेन मन्त्रवित् ॥ ११ ॥ अमृतेभ्यादिमन्त्रेण पीत्वा च चुलुकोदकम् ॥ आचम्य विधिना पश्चाच्छुद्धाचमनमाचरेत् ॥ १२ ॥ मूलाधारं समारभ्य द्वादशान्तावधि स्मरेत् ॥ जीवात्मानं जगद्व्याप्तं नित्यमेकमनन्यगम् ॥ १३ ॥ प्रकृतिस्थं शुभं चादिमध्यान्तरहितं परम् ॥ हवनीयेन शुद्धेन हुनेत्तेन। पितर्पितम् ॥ १४ ॥ एवं गलत्सुधारूपं पञ्चाशद्वर्णसिञ्चितम् ॥ भुक्त्वा हविर्हुतं मन्त्री सञ्ज्वलत्पञ्चवह्निकः ॥ १५ ॥ प्रातः सायं च कुर्वाणो मन्त्री प्राणाग्निहोत्रकम् ॥

गर्भस्थितिभवंक्लेशंनविन्दतिकदाचन ॥ १६ ॥ अत्रतत्त्वंप्रवक्ष्यामिकौलिको द्धारहेतुकम् ॥ याकाचिद्वाममार्गेणसाध्यतेदेवतातुसा ॥ १७ ॥ मपञ्चकेन सातृप्तासाधकस्येष्टदायिनी ॥ नाधिकारस्तुविप्राणांप्रपञ्चकनिषेवणे ॥ १८ ॥ अज्ञानान्मोहतोवापिदुर्गुरोर्वाप्रसङ्गतः ॥ मपञ्चकस्यसङ्गश्चेज्जातोनिरयम श्नुते ॥ १९ ॥ तदुद्धारायवक्ष्यामियुक्तिंप्राणाग्निहोत्रकम् ॥ मांसस्यभक्षणे चिन्त्यंहुनेत्पश्चिमकुण्डके ॥ २० ॥ अग्निमुख्यादेवतयाहुतंतद्भुज्यतेऽखि ति ॥ मैथुनेस्वस्यवीर्य्यन्तुघृतरूपंविचिन्तयेत् ॥ २१ ॥ दक्षिणाग्निस्तुतेने द्धोभावयेत्सम्भवेत्तुतत् ॥ एवमातृप्तिपर्य्यन्तंबालायामैथुनंचरेत् ॥ २२ ॥ पू र्णतत्त्वेमनोनीत्वाध्वजपातःप्रजायते ॥ नतत्ररात्रिजंपापंदेवताचेत्प्रसीदति ॥ २३ ॥ पूर्वकुण्डेहुनेन्मुद्रांमूलमन्त्रेणसाधकः ॥ देवतातेनतुष्टास्यान्नपापैरभि भूयते ॥ २४ ॥ मद्यमुत्तरकुण्डेतुजुहुयाद्देवतामुखे ॥ नचाप्नोत्यस्यगन्धेनपा पंवैधर्म्मएवसः ॥ २५ ॥ मध्यमेतुहुनेन्मत्स्यान्ध्यायंश्चवडवानलम् ॥ त्यक्त सौक्तःसाधकश्चेद्भुक्तिमुक्तिप्रदंसतु ॥ २६ ॥ इत्थंवोबोधितंविप्रावाममार्गेप्र कीर्तिताः ॥ नानामन्त्रैःकृताःशिष्याज्ञातॄणांभुक्तिमुक्तिदैः ॥ २७ ॥ शक्तित्र यात्मकोमन्त्रोवाग्वादिन्याःप्रकीर्त्यते ॥ प्रणवंवदयुग्मंचवाग्वादिनिपदंवदे त् ॥ २८ ॥ ह्रींक्लींक्लिन्नेक्लेदिनीतिमहाक्षोभंवदेत्कुरु ॥ सौःप्रोक्तामोक्षमुच्चा र्यकुरुष्वप्रणवंवदेत् ॥ २९ ॥ वाग्वादिन्यामनुःप्रोक्तएकोनत्रिंशदक्षरः ॥ न वभिश्चनगैर्वाणैर्जायतेस्यमनुत्रयम् ॥ ३० ॥ ब्रह्मादीनांत्रयाणान्तुवाग्देव्य स्तत्रदेवताः ॥ उत्पत्तिस्थितिनाशानांकारिकास्ताःप्रकीर्तिताः ॥ ३१ ॥ ना स्यपूजानचध्यानंनच्छन्दोनचकिञ्चन ॥ गणेशस्यप्रसादेनवर्णलक्षजपाद्ध्रु तम् ॥ ३२ ॥ वाक्सिद्धिंसमवाप्नोतिकार्य्योत्पत्त्यादिकंहृदि ॥ चिन्तयित्वा तथामन्त्रखण्डंजप्त्वावदेत्सकृत् ॥ ३३ ॥ तदासाभारतीसत्याशापानुग्रहवा दिनी ॥ मौनादस्यस्थिरासिद्धिरशक्तौमितभाषणात् ॥ ३४ ॥ ततःप्रोक्तागा णेशेनत्रिंशद्व्याख्यातुभैरवी ॥ वदवदवाग्वादिनिऐंमित्येकोनवाक्षरः ॥ ३५ ॥ क्लिन्नेक्लेदिनिइत्युक्तामहाभागेवदेत्कुरु ॥ भैरवीदेवताचात्रवर्णलक्षजपाद्भ वेत् ॥ ३६ ॥ नचपूजादिकंन्यासामपञ्चकनिषेवणम् ॥ केवलंसिद्धयेप्रोक्तंस

र्वतन्त्रेषुगोपितम् ॥ ३७ ॥ ज्ञातंयैर्गुरुमार्गेणसिद्धास्तेनात्रसंशयः ॥ एता भ्यामेवमन्त्राभ्यांबहवःकौलिकाःकृताः ॥ ३८ ॥ अथवक्ष्येविप्रगोप्यांदेवींत्रि पुरभैरवीम् ॥ कौलिकेवाममार्गेचसिद्धान्तेद्रुतसिद्धिदाम् ॥ ३९ ॥ हकारंच सकारंचरेफमैकारसंयुतम् ॥ नादबिन्दुसमायुक्तंवाग्भवंकूटमुच्यते ॥ ४० ॥ ह कारश्चसकारश्चककारश्चतथारवौ ॥ नादबिन्दुसमायुक्तेईकारेयोजयेत्तदा ॥ ४१ ॥ पञ्चवर्णात्मकंकूटंकामराजाभिधंमतम् ॥ हकारश्चसकारश्चरेफमैकारसंयुतम् ॥ ४२ ॥ विसर्गाढ्यंतृतीयन्तुकूटंवर्णत्रयात्मकम् ॥ तृतीयबीजेबिन्द्वाढ्यंवक्री णासुक्तंनसर्गयुक् ॥४३॥ आदौसकारःपश्चाद्वस्त्रीभिःकूटत्रयेपिच ॥ पठनी यस्तथातासांदेयोमन्त्रःसुसिद्धये ॥ ४४ ॥ पङ्क्तिश्छन्दोमुनिःप्रोक्तोदक्षिणामू र्त्तिसञ्ज्ञकः ॥ देववन्दितपादाब्जादेवीत्रिपुरभैरवी ॥ ४५ ॥ आपादंनाभि तस्त्वोघमानानिहृद्यात्परम् ॥ आहन्मूर्द्धागतंचान्त्यंचैवंबीजत्रयंन्यसेत् ॥ ४६ ॥ आद्यंसव्येपरंदक्षेतृतीयमुभयोर्न्यसेत् ॥ ऐंहृत्क्लींचशिरःप्रोक्तंसौरन्त्येन शिखामता ॥ ४७ ॥ ऐंवर्म्मक्लींचनेत्रंस्यात्सौरास्त्रंपरिकीर्तितम् ॥ मूर्द्ध्न्याधारे हृदिन्यस्यंमनोःकूटत्रयंपुनः ॥ ४८ ॥ कुर्वीतदेहसन्नाहंत्रिभिर्बीजैस्तदुच्य ते ॥ मणिबन्धेकरतलेकराग्रेचक्रमान्न्यसेत् ॥ ४९ ॥ आदौदक्षेततोवामेक क्षकूर्परपाणिषु ॥ पुनर्दक्षेचवामेचपादयोश्चतथान्यसेत् ॥५०॥ पादान्तेहृद येलिङ्गेसंहारक्रमतोन्यसेत् ॥ अथसृष्टिक्रमेणैवबीजान्यङ्गेषुविन्यसेत् ॥ ५१ ॥ आदौवामेततोदक्षेकर्णयोश्चिबुकेततः ॥ शङ्खयोश्चमुखेचैवनेत्रयोश्चतथा न्यसेत् ॥ ५२ ॥ बाहुद्वयेचहृदयेकूर्प्परद्वितयेकटौ ॥ जानुनोर्व्यञ्जनेचापिपा दयोर्मलनिर्गमे ॥ ५३ ॥ पार्श्वद्वयेचहृदयेस्तनयुग्मेगलेतथा ॥ नवयोन्या त्मकोन्यासःप्रोक्तोबीजत्रयेणतु ॥ ५४ ॥ लिङ्गेरत्यैनमइतिआद्यबीजेनविन्य सेत् ॥ प्रीत्यैनमश्चहृदयेमध्यबीजेनविन्यसेत् ॥ ५५ ॥ मनोभवायेहृदंभ्रु वोर्मध्येतृतीयकम् ॥ सौःक्लींऐंइतिबीजैश्चस्थानेष्वेवपुनर्न्यसेत् ॥ ५६ ॥ अ मृतेशींचयोगेशींविश्वयोनिंक्रमादिमाः ॥ विलोमबीजैर्विन्यस्यमूर्त्तिन्यास मथाचरेत् ॥ ५७ ॥ स्त्रौंमितीशानरूपायततोमनोभवायच ॥ नमइत्यन्तः प्रोक्ताधरेशानंन्यसेद्बुधः ॥ ५८ ॥ स्त्रेंतत्पुरुषरूपायमकरध्वजकात्मक ॥

नमःप्रोक्तान्यसेद्धक्के हृदयेतुततोन्यसेत् ॥ ५६ ॥ ह्स्त्रूंअघोररूपायकन्दर्पस्यात्मनेनमः ॥ ह्स्त्रींवामदेवरूपायमन्मथस्यात्मनेनमः ॥ ६० ॥ एतद्गुह्येप्रविन्यस्यपादयोश्चतथान्यसेत् ॥ ह्स्कंसद्योजातात्मनेकामदेवायनमइत्यपि ॥ ६१ ॥ ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषुमुखैःक्रमात् ॥ प्रविन्यसेत्ततःपञ्चबाणानङ्गेषुविन्यसेत् ॥ ६२ ॥ द्रांद्रींक्लींब्लूंसइतिपञ्चबाणाःप्रकीर्तिताः ॥ अंगुष्ठादिकनिष्ठान्तमंगुलीषुक्रमान्न्यसेत् ॥ ६३ ॥ क्षोभणद्रावणाकर्षवश्योन्मादाश्चनामतः ॥ ललाटेभ्रुवमध्यभागेसुखकर्णाक्षिकण्ठके ॥ ६४ ॥ हृन्नाभिलिङ्गेविन्यस्याएताअष्टौचशक्तयः ॥ सुभगाद्याभगास्त्वन्यातृतीयाभगसर्पिणी ॥ ६५ ॥ चतुर्थीतुपराजेयापञ्चमीभगमालिनी ॥ अनङ्गानङ्गकुसुमाप्रोक्ताचानङ्गमेखला ॥ ६६ ॥ अनङ्गमदनासर्वामदविभ्रममन्थराः ॥ ध्येयाःकुसुम्भवसनाहरित्काञ्चिकिकाःशुभाः ॥ ६७ ॥ वाक्कामब्लूंपुनःस्त्रींसस्ताराःपञ्चोदितास्त्वमी ॥ न्यासंकुर्य्याद्भूषणाख्यंततःसतुनिगद्यते ॥ ६८ ॥ न्यसेच्छिरसिभ्रूमध्येकर्णाक्षियुगलेनसि ॥ गण्डयोरोष्ठयोर्दन्तपङ्क्त्योरास्येन्यसेत्स्वरान् ॥ ६९ ॥ चिबुकेथगलेकण्ठेपार्श्वयोःस्तनयुग्मके ॥ दोर्मूलयोःकूर्प्परयोःपाण्योस्तत्पृष्ठदेशतः ॥ ७० ॥ हस्तद्वयेहमित्येकंतत्पृष्ठेचतुनित्यकम् ॥ नाभौगुह्येपुनश्चोर्वोर्जानुनोर्जङ्घयोस्तथा ॥ ७१ ॥ स्फिजोश्चगुल्फयोःपश्चाच्चरणांगुष्ठयोर्द्वयोः ॥ ग्रैवेयेचतथाकट्यांहृदयेदलकुण्डले ॥ ७२ ॥ वामकुण्डलकेमूर्द्धिवलयेपानकेतथा ॥ हृदयस्थारुणाम्भोजकर्णिकमध्यसंस्थिताम् ॥ ७३ ॥ जपाकुसुमसङ्काशामरुणाम्बरभूषणाम् ॥ स्मितसौधमहामोहांत्रिनेत्रांचन्द्रशेखराम् ॥ ७४ ॥ विश्वसौन्दर्य्यसर्वस्वजन्मसागररूपिणीम् ॥ ब्रह्माब्जनेत्ररुद्रेशशिवाक्षैर्मण्डसञ्ज्ञितैः ॥ ७५ ॥ मण्डिताङ्गींमहादेवींमुक्ताजपवटीधराम् ॥ पुस्तकालंकृतकरांवरदाभयधारिणीम् ॥ ७६ ॥ आनन्दमधुरांदेवींमदाघूर्णितलोचनाम् ॥ रक्ताङ्गरागसुभगांध्यायेत्त्रिपुरभैरवीम् ॥७७॥ पूजायन्त्रंप्रवक्ष्यामिभैरवीबालयोरथ ॥ नवयोन्यात्मकंकुर्य्यान्मण्डलंगुरुमार्गतः ॥ ७८ ॥ हकारञ्चसकारञ्चरेफमौकारसंयुतम् ॥ विन्दुद्वययुतंचाग्रेत्रिकोणेमध्यमेन्यसेत् ॥ ७९ ॥ योन्यष्टकेकामबीजंबहिरष्टदलंलिखेत् ॥ केशरेषुस्व

रालेख्याद्वन्द्वशोग्रेदलेपुच ॥ ८० ॥ कचटांस्तपयान्वर्णान्शक्षौचविलिखेत् क्रमात् ॥ ग्रन्थयः प्रणवाभ्यान्तुदलानाकारयेत्क्रमात् ॥ ८१ ॥ दलाग्रेपुत्रिशूलानिबहिर्भूपुरमालिखेत् ॥ शूलाग्रेपुलिखेद्वर्णान्क्रमात्त्रिभ्यश्चपूर्वतः ॥ ८२॥ खगघान्ङ्छजांश्चापिक्ष्णठाण्डढणांस्तथा ॥ थदधान्नफबांश्चापिभसशहँल्लवषांस्तथा ॥ ८३ ॥ वृत्तद्वयंचतद्बाह्येवीथिकायांचमातृकाः ॥ चतुरस्रत्रयंकुर्य्यात्तद्बाह्येदेवतार्चनम् ॥ ८४ ॥ यन्त्रमध्येदेवपृष्ठाःप्रादक्षिण्येनपूजयेत् ॥ द्वादशैताश्चाद्यवीथ्यामेकस्यांदिशितुत्रयम् ॥ ८५ ॥ वामाज्येष्ठातथारौद्रीअम्बिकेच्छाततःपरम् ॥ ज्ञानोत्क्रियाकुब्जिकाचविम्बादेवीविषघ्निका ॥ ८६ ॥ दुस्तराचतथानन्दाध्यानमासांनिरूप्यते ॥ विप्रावेदविदोयूयंतच्छृणुध्वंसमाहिताः ॥ ८७ ॥ मुक्ताफलामलमणिस्फुरच्छत्रंशशिप्रभम् ॥ गङ्गातरङ्गधवलंचामरद्वयमद्विजे ॥ ८८ ॥ नवरत्नस्फुरद्दीप्तताम्बूलस्यकरण्डकम् ॥ मल्लिकामालतीजातीशतपत्राढ्यदामभिः ॥ ८९ ॥ पूर्णरत्नमयंभाण्डंतथालङ्कारपूरितम् ॥ पटीञ्चव्यजनद्वन्द्वंनवरत्नविचित्रितम् ॥ ९० ॥ नीलकण्ठस्यपुच्छैश्चतथोशीरविराजितम् ॥ कर्पूरमृगनाभ्याढ्यंरक्षोदासिकलामयम् ॥ ९१ ॥ पञ्चप्रेतासनंसाक्षान्मोक्षदायिनसंशयः ॥ ह्स्कौःसदाशिवमहाप्रेतपद्मासनायच ॥ ९२ ॥ हृदन्तःषोडशार्णोयंमन्त्रःस्यात्पीठपूजनम् ॥ सिंहासनंचसम्पूज्यंचकैर्व्याकुलसुन्दरी ॥ ९३ ॥ आवाहनाद्यामुद्राश्चदर्शयित्वाप्रदर्शयेत् ॥ वरमुद्रांचाभयाख्यांध्यायेत्त्रिपुरभैरवीम् ॥ ९४ ॥ मुद्राविंशतिसंख्याकास्ततोदेव्यैप्रदर्शयेत् ॥ वराभयेपुस्तकाक्षमालेचांकुशपाशकौ ॥ ९५ ॥ चापबाणेकपालञ्चकमलञ्चायुधंतथा ॥ कपालाख्यावामहस्ततलंकुर्य्यात्कपालवत् ॥ ९६ ॥ आवाहनाद्याआदौस्युश्चतस्रोन्तेचपञ्चच ॥ दर्शनीयायोनिमुद्रास्तासांलक्षणमुच्यते ॥ ९७ ॥ योनिमुद्राहृदिक्षिप्तात्रैलोक्यक्षोभिणीभवेत् ॥ त्रैलोक्यद्राविणीचास्येत्रैलोक्याकर्षिणीभ्रुवोः ॥ ९८ ॥ त्रैलोक्यवशकृद्भालेह्लादकृद्ब्रह्मरन्ध्रके ॥ ततःषडङ्गावरणंपीठस्योपरितोर्चयेत् ॥ ९९ ॥ अग्नीशासुरवायव्यमध्येदिग्दिक्षुचक्रमात् ॥ अग्निकोणेरतिंपश्चात्प्रीतिमुत्तरकोणके ॥ ५०० ॥ मनोभवान्दक्षकोणेततोबाणान्समर्चयेत् ॥ द्वौद्वाववर्गागुदक्चै

कमशेकामांश्चवत्राणवत् ॥ १ ॥ तत्रसम्पूजयेदेताःपूर्वादिक्रमतोयजेत् ॥ अ
नङ्गकुसुमाचाद्याद्वितीयानङ्गमेखला॥ २॥तृतीयानङ्गमदनाश्रेनङ्गमदनातुरा॥
३ ॥ शुभगापञ्चमीदेवीभगाश्रेभगसर्पिणी ॥ भगमालात्रसर्वत्रदेवपृष्ठंचपूर्व
दिक् ॥ ४ ॥ अष्टयोनिषुत्राह्माद्यावाह्येचाष्टदलद्वयम् ॥ ब्राह्मायुक्तंचासिताङ्ग
रुरुंमाहेश्वरीयुतम् ॥ ५ ॥ चण्डंकौमारिकायुक्तंक्रोधंस्याद्वैष्णवीयुतम् ॥ वा
राह्याचतथेन्मत्तंमाहेन्द्र्याचकपालिनम् ॥ ६ ॥ चामुण्डाभीषणौमहालक्ष्मीः
संहारसंयुता ॥ दीर्घस्वराष्टकंबिन्दुयुक्तंनामहृदान्वितम् ॥ ७ ॥ क्रमात्स्युरष्ट
शक्तीनांपूजनेष्टौमनूत्तमाः ॥ नहृद्वैरवमन्त्रेषुस्वराह्रस्वाःसबिन्दुकाः ॥ ८ ॥
कामरूपञ्चमलयंततःकोल्लगिरिःस्मृतः ॥ कुलमान्तकवचौहारेजालन्धरमतः
परम् ॥ ९ ॥ उड्डीयानंदेवकोटंपीठाष्टकमुदाहृतम् ॥ ग्रन्थिस्थानेषुसम्पूज्यंप
श्चिमादिक्रमेणतु ॥ १० ॥ हेतुकंभैरवंत्वाद्यंद्वितीयंत्रिपुरान्तकम् ॥ वेताल
मग्निजिह्वंचकालान्तककपालिनौ ॥ ११ ॥ एकपादंभीमरूपंततोबाह्येतुभू
पुरे ॥ पूजयेल्लोकपालांश्चऊर्ध्वाधःक्रमतोयजेत् ॥ १२ ॥ ब्रह्माणंचैवविष्णुं
चाप्यर्चयेत्पश्चिमादितः ॥ वम्पूर्वोवटुकोङेन्तोहृदयान्तस्तथैवच ॥ १३ ॥
आदौत्रिकोणंतद्बाह्येवृत्तञ्चचतुरस्रकम् ॥ पूर्वमन्त्रैःसमभ्यर्च्यवटुकादींस्ततः
परम् ॥ १४ ॥ बलिमन्त्रैश्चबलयोदेयामन्त्रान्वदाम्यथ ॥ एह्येहिदेवीपुत्रा
न्तेवटुकान्तेचनाथच ॥ १५ ॥ कपिलान्तेजटाभारभास्वरान्तेत्रिनेत्रच ॥
ज्वालामुखेतिसर्वान्तेविघ्नान्नाशयनाशय ॥ १६ ॥ सर्वोपचारसहितंबलिगृ
ह्णद्वयंवदेत् ॥ पञ्चपञ्चादशार्णोयंस्वाहान्तोवटुकस्यतु ॥ १७ ॥ पात्रान्तरेण
गृह्णीयात्पूर्वस्थापितपात्रतः ॥ तोयंगृहीत्वावामांगुष्ठाभ्यांविसृजेद्बलिम् ॥
१८ ॥ यांयोगिनीभ्यःस्वाहासवर्णयोगिनीपदम् ॥ हुंफट्स्वाहेतिधृत्यर्णो
योगिनीनांबलौमनुः ॥ १९ ॥ वामांगुष्ठानामिकाभ्यांमध्येचपातयेद्बलिम् ॥
सद्दीर्घयुक्तंक्षंप्रोक्तास्थानेक्षेत्रेनिपानभूः ॥ २० ॥ धूपदीपादिसहितंबलिंगृह्ण
द्वयंवदः ॥ अग्नेरष्टनवार्णोयंक्षेत्रपालबलेर्मनुः ॥ २१ ॥ अंगुष्ठतर्जनीभ्यां
चतर्जन्यानैकयापिच ॥ गांगींगूंगणपतयेवरवरदसर्वच ॥ २२॥जनंमेवशमा
नयबलिंगृह्णद्वयंवदेत् ॥ स्वाहान्तएकत्रिंशच्चमनोवर्णाःप्रकीर्तिताः ॥ २३ ॥

वामांगुष्ठमध्यमाभ्यांप्रोक्ताग्रेबलिमुत्सृजेत् ॥ निर्माल्यभोजिनीचास्यादेवी त्रिपुरचण्डिका ॥ २४ ॥ नजपेत्रिंशतान्यूनंसाधकस्तुकदाचन ॥ तत्सम्प्रदायशुद्धात्मगुरोर्लब्ध्वामनुंसुधीः ॥ २५ ॥ प्रजपेत्सिद्धयेसूर्य्यलक्षंमन्त्रंहढव्रतः ॥ तत्सहस्त्रंप्रजुहुयात्पलाशकुसुमैर्नवैः ॥ २६ ॥ त्रिस्वाद्वयुक्तैरस्वारि कुसुमैरथवाहुनेत् ॥ रक्ताम्बरःप्रीतमनामौक्तिकाभरणैर्युतः ॥ २७ ॥ चन्दनागुरुकर्पूरकृतगात्रानुलेपनः ॥ ब्रह्मचर्य्यरतःशान्तोविरतःपरवद्गुणे ॥ २८ ॥ सर्वभूतसुहृन्मौनीकुमारीपूजकोभवेत् ॥ अथैतस्याएकबीजप्रयोगोवक्ष्यतेधुना ॥ २९ ॥ नवकुन्दनिभांदेवींमुक्ताजालविभूषिताम् ॥ मुक्ताकलापविद्याक्षमालाराजच्चतुर्भुजाम् ॥ ३० ॥ एतस्याःप्रथमम्बीजंलक्षंजपतिसंयुतः ॥ कविताजायतेतस्यनानावृत्तार्थशोभना ॥ ३१ ॥ अथद्वितीयबीजस्यध्यानादिकमिदंस्मृतम् ॥ रक्तांसुरतरोर्मूलविलसन्मणिपीठगाम् ॥ ३२ ॥ पाशश्चबीजपूरञ्चबाणानंकुशमेवच ॥ कपालञ्चधनुश्चेतिषड्भुजैर्दधतींभजे ॥ ३३ ॥ रक्तैरलंकृतांपुष्पैर्मदाघूर्णितलोचनाम् ॥ हेलाविलाससम्पन्नांनवयौवनसुन्दरीम् ॥ ३४ ॥ देवींध्यात्वाजपेद्बीजंयोलक्षमध्यतोवशी ॥ त्रैलोक्यंक्षोभयेदाशुपुरवत्सिद्धिभागसौ ॥ ३५ ॥ अथतृतीयबीजस्यवक्ष्येध्यानादिकंत्वथ ॥ अक्षमालासुधाकुम्भमुद्रापुस्तकधारिणीम् ॥ ३६ ॥ नवकुन्देन्दुसङ्काशांराजन्मौक्तिकभूषणाम् ॥ शक्तिंसच्चिन्मयंध्यात्वाबीजंसारस्वतंवशी ॥ ३७ ॥ योजपेज्जायतेतस्यकविताभुविसम्मता ॥ पलासपुष्पैस्त्रिस्वाद्वयुतैर्होमोयुतद्वयम् ॥ ३८ ॥ कुर्य्यात्सरस्वतीतुष्ट्यैसौभाग्यानांगृहंहिसः ॥ जातीकरञ्जसशमीवटोद्भवसमिद्भैः ॥ ३९ ॥ विल्वप्रसूनैस्त्रिस्वाद्वयुतैर्होमंसमाचरेत् ॥ परनारीनृपाणांचरञ्जनंभवतिध्रुवम् ॥ ४० ॥ मालतीबकुलोद्भूतैर्दलैश्चन्दनवारिणा ॥ सिक्तैर्हुनेत्क्रमात्तस्यकवित्वमभिजायते ॥ ४१ ॥ अनुलोमविलोमेनमध्यस्थंसाध्यकर्म्मयुक् ॥ मनुंप्रजप्यहोतव्यंलोणराजिकयाततः ॥ ४२ ॥ नरनारीनृपांश्चैववशयेन्नात्रसंशयः ॥ त्रिस्वाद्वयुग्बिल्वफलैर्होमोमत्त्यीवरञ्जनः ॥ ४३ ॥ साधकस्यसमृद्धिश्चकमलायाभवेदपि ॥ त्रिस्वाद्वयुग्गुडूचीभिर्होमोरोगारिनाशनः ॥ ४४ ॥ गुप्तरूपास्थिताकाश्यामेवंत्रिपुरभैरवी ॥ अथसम्पत्प्रदांवक्ष्येदेवींत्रिपुर

भैरवीम् ॥ ४५ ॥ आहुतांगणनाथेनकौलिकाचारपूजिताम् ॥ हकारंचसकारंचखकारंचफरौतथा ॥ ४६ ॥ ऋकारस्वरसंयुक्ताबिन्दुनादविभूषिताः ॥ पञ्चवर्णात्मकंकूटंप्रथमंपरिकीर्त्तितम् ॥ ४७ ॥ द्वितीयंबीजमृजमैःकात्कौस्याचतृतीयकम् ॥ एवंमन्त्रःसमाख्यातोद्विरावृत्याषडङ्गकम् ॥४८॥ प्राग्वदस्याचरेन्न्यासंध्यानमस्यानिरूप्यते ॥ उद्यत्सूर्य्यसहस्राभांचन्द्रचूडांत्रिलोचनाम् ॥ ४९ ॥ नानालङ्कारशुभगांसर्ववैरिनिकृन्तनीम् ॥ स्रवद्रुधिरमुण्डालिललितांरक्तवाससम् ॥ ५० ॥ डमरुञ्चत्रिशूलंचखड्गखेटकमेवच ॥ पिनाकंचशरान्पाशानंकुशंपुस्तकंतथा ॥ ५१ ॥ अक्षमालांचबिभ्राणांशवसिंहासनस्थिताम् ॥ एवंध्यात्वायजेत्पीठंप्रथमंपीठमन्त्रतः ॥ ५२ ॥ अघोरेऐंओंचघोरेमायांघोरद्वयान्तरम् ॥ श्रींसर्वतःसर्वसर्वेभ्योनमस्तेपदंवदेत् ॥ ५३ ॥ रुद्ररूपेभ्योह्रींश्रींचदेवार्णेपीठमन्त्रकः ॥ ततःपूज्यास्तुपीठस्यशक्तयःपृष्ठदेशतः ॥ ५४ ॥ वामांज्येष्ठांचरौद्रींचकालींचवरलोचनाम् ॥ कलाढ्यांचबलाढ्यांचयजेद्विकारिणींततः ॥ ५५ ॥ बलप्रमथिनीञ्चैवसर्वभूतदमांतथा ॥ द्वादशैताःक्रमाद्देव्योमदनींचमनोन्मनीम् ॥ ५६ ॥ पूजापीठंसमुद्धृत्यप्राग्वदङ्गानिपूजयेत् ॥ रत्यादित्रयमभ्यर्च्यतथानङ्गादिकान्यजेत् ॥ ५७ ॥ ब्राह्मयादियुग्मंसम्पूज्यवसुपत्रेषुमातृकाः ॥ भूपुरेलोकपालांश्चसायुधान्परमेश्वरि ॥५८॥ अन्यत्सर्वप्रयोगोयंत्रिपुराभैरवीसमम् ॥ चैतन्यभैरवीमन्त्रस्त्र्यक्षरःकथ्यतेधुना ॥ ५९ ॥ सहावकारसंयुक्तौप्रथमंबीजमीरितम् ॥ सकलैरीसमायुक्ताद्वितीयंबीजमुच्यते ॥ ६० ॥ सहरौद्रांसमायुक्ताविसर्गान्तास्तृतीयकम् ॥ उद्यद्भानुसहस्राभांनानालङ्कारभूषिताम् ॥ ६१ ॥ मुकुटोर्ध्वलसच्चन्द्ररेखांरक्ताम्बरांचिताम् ॥ पाशांकुशधरांनित्यांवामहस्तकपालिनीम् ॥ ६२ ॥ वरदाभयशोभाढ्यांपीनोन्नतघनस्तनीम् ॥ एवंध्यात्वायजेद्देवींपूर्वसिंहासनेस्थिताम् ॥ ६३ ॥ द्विरावृत्याषडङ्गानिन्यसेत्सर्वाङ्गलक्षणम् ॥ त्रिकोणंचैवषट्कोणंवसुपत्रंततःपरम् ॥ ६४ ॥ चतुरस्रंचचतुर्द्वारमेवंमण्डलमालिखेत् ॥ प्रथमावरणंचात्रषडङ्गैःपरिकल्पयेत् ॥ ६५ ॥ रत्यादिकामतःपूज्यास्त्रिकोणाग्रेवसन्तकम् ॥ वामेकामंविधुंदक्षेयजेद्बाणांश्चपूर्ववत् ॥ ६६ ॥ डाकिनींशाकिनींचैवला

किनींकाकिनींततः ॥ शाकिनींहाकिनींचापिपश्चिमादिक्रमाद्यजेत् ॥ ६७॥ अनङ्गकुसुमाद्याश्चवसुपत्रेषुपूर्ववत् ॥ परभृत्सारसाख्यौचशुकमेघाह्वयौ पुनः ॥ ६८॥ अपाङ्गभ्रूविलासौचभावहावौचपूजयेत् ॥ पुरश्चर्यादिकंप्रा ग्वत्प्रयोगांश्चापिसाधयेत्॥ ६९ ॥ तद्वद्देवचपूजापिशेषंन्यासादिकंतथा ॥ अथातःसम्प्रवक्ष्यामिभुवनेश्वरभैरवीम् ॥ ७० ॥ हसावकारसंयुक्तौप्रथमंबीज मीरितम् ॥ हसकलाह्रींसमेताद्वितीयंबीजमुच्यते ॥ ७१ ॥ हसावौकारसंयु क्तौविसर्गान्तंतृतीयकम् ॥ षड्दीर्घान्वितमध्येनबीजेनोक्तंषडङ्गकम् ॥ ७२ ॥ जपाकुसुमसङ्काशांदाडिमीकुसुमप्रभाम् ॥ चन्द्ररेखांजटाजूटांत्रिनेत्रांरक्तवास सम् ॥ ७३ ॥ नानालङ्कारसुभगांपीनोन्नतघनस्तनीम् ॥ पाशांकुशवराभी तिंदधानांचशिवांश्रये ॥ ७४ ॥ चैतन्यभैरवीवत्स्याद्यद्यन्नोक्तमिहाथतत् ॥ षडङ्गावरणंचात्रपूर्ववत्परितोयजेत् ॥ ७५ ॥ रत्याद्याःपूजयेद्देवित्रिकोणेतदन न्तरम् ॥ ब्रह्मविष्णुमहेशाद्यास्तत्रपूज्याबहिःपुनः ॥ ७६ ॥ डाकिन्याद्याव सुदलेषड्दलेहाकिनीमुखाः ॥ अनङ्गकुसुमाद्याश्चब्राह्म्यादिकसमन्ततः ॥ ७७ ॥ भूबिम्बेलोकपालाश्चवटुकाद्याश्चपूजयेत् ॥ चतुःषष्टियोगिनीभ्यो ह्यन्तोयंदशाक्षरः ॥ ७८ ॥ अष्टपत्रेषुभूबिम्बेत्वेकोच्चारेणपूजयेत् ॥ एकाद शमहाकोटियोगिनीभ्योनमोर्चयेत् ॥ ७९ ॥ जपादिकंप्रयोगाश्चज्ञेयंप्राग्व त्तदेवहि ॥ अथातःसम्प्रवक्ष्यामिभैरवींकमलेश्वरीम् ॥ ८० ॥ हसस्थानेसहे त्युक्त्वासर्वंमन्त्रादिपूर्ववत् ॥ राज्ञाज्ञाताततःशप्तातुहिनागेभवेन्नदी ॥८१॥ त्यक्तस्तयावाममार्गोराजभीत्यातुमत्कृतः ॥ यतोलब्धंतयादुःखंकलौख्यातिं गमिष्यति ॥ ८२ ॥ पुनस्तेषुचदेवेषुप्रत्यक्षेयंभविष्यति ॥ अवर्णाश्चापि वर्णाश्चभविष्यन्तिवरप्रदाः ॥ ८३ ॥ त्यक्त्वामपञ्चकंपूजांकृत्वायेचैवमत्प राः ॥ अस्यास्तीरेपुरीश्वर्य्यानचतान्सम्प्रसीदति ॥ ८४ ॥ भुवनेशीभैरवी तुकृत्वारूपान्तरंमम ॥ कार्य्यार्थंबहवःशिष्याःकौलिकावामनाःकृताः ॥८५॥ तस्माद्ध्यानाद्यर्चनादिप्राग्वद्दक्षिणमार्गतः ॥ अथातःसम्प्रवक्ष्यामिहसराद्यां चभैरवीम् ॥ ८६ ॥ भुवनेश्वरभैरव्याबीजादौहसरान्पठेत् ॥ त्रयाणामपिबी जानांप्रथमंव्यञ्जनात्मकम् ॥ ८७ ॥ हसराद्यांस्तथाविद्यात्प्राग्वत्पूजादिकं

मतम् ॥ अथातःसम्प्रवक्ष्यामिसिद्धांकौलेशभैरवीम् ॥ ८८ ॥ आद्यन्तबीज
योरेफरहिताहसरादिका ॥ कौलेश्वरीभवेद्विद्याकौलिकानांसुसिद्धिदा ॥
८९ ॥ सम्पत्प्रदाभैरवीवत्सर्वंध्यानादिकंमतम् ॥ कुर्वन्तोपीदृशंकर्म्मदिवो
दासस्यतेजसा ॥ ९० ॥ नशक्तास्तत्रसंस्थातुंतदावेदेनदुर्गदिना ॥ जपदुर्गा
देवतास्माद्भुक्तिमुक्तिफलप्रदा ॥९१॥ताराद्यैःपञ्चमन्त्रस्यपदैःसर्वैशधीमता ॥
जातियुक्तैरङ्गक्लृप्तिःपदपदैस्तैःषडङ्गकम् ॥ ९२ ॥ अष्टपत्राम्बुजद्वन्द्वंचतुरस्र
त्रयावृतम् ॥ चतुर्द्वारसमायुक्तंकुंकुमादिभिरुद्धरेत् ॥ ९३ ॥ कुर्य्यात्स्वपीठपू
जायांनवशक्तिसमर्चनम् ॥ प्रभामायाजयाचैवसुप्रभाचविशुद्धिका ॥ ९४ ॥
नादिनीसुप्रभाचापिविजयासिद्धिदातथा ॥ एकवह्निशरक्लीबहीनैरर्द्भिःप्रपूज
येत् ॥ ९५ ॥ तारोवज्रनखदंष्ट्रायुधायमहासिंहाय ॥ हूंफट्नमःसिद्धमनुः
पीठंचानेनपूजयेत् ॥ ९६ ॥ आसनंमनुनानेनदद्यान्मूलेनकल्पयेत् ॥ मूर्त्ति
मावाह्यतस्यान्तःपूजयेच्चन्दनादिभिः ॥ ९७ ॥ क्रमादावरणाङ्गैश्चजयादि
सुरभादिभिः ॥ देवायुधैर्दिगीशैश्चहेतिभिर्ध्यानमुच्यते ॥ ९८ ॥ मेघा
भांचन्द्रमुकुटांसिंहास्थांत्रीक्षणांकरैः ॥ चक्रंखड्गंचर्म्मदरंदधानांचक्रमात्करैः ॥
९९ ॥ जयाचविजयाकीर्त्तिःप्रीतिश्चापिप्रभामता ॥ श्रद्धामेधाश्रुतिश्चे
तिओंआद्यक्षरपूर्विकाः ॥ ६०० ॥ असिर्दरोगदाखड्गपाशांकुशशराधनुः ॥
इत्यायुधानिप्रोक्तानिलक्षाणांपञ्चकंजपेत् ॥ १ ॥ दशांशंजुहुयादाज्यैस्तर्प
णादिततश्चरेत् ॥ ततःसिद्धमनुर्मन्त्रीप्रयोगानाचरेत्सुधीः ॥२॥ इमंमन्त्रंजपे
द्भूयःप्रविशेत्क्षत्रसङ्गरम् ॥ अशेषेणरिपुंहन्यान्नात्रकार्य्याविचारणा ॥३॥ विवा
देव्यवहारादौजप्तोविजयदोभवेत् ॥ अनयाविद्ययास्त्राणिशस्त्राणिसुबहून्य
पि ॥४॥ सन्नप्तानिचसंग्रामेसम्यग्विजयदानितु ॥ एतदाराधनाद्देवादिवोदा
सोभवत्क्षणात् ॥ ५ ॥ योच्चारणार्थमानीतादिवोदासस्यभूभुजः ॥ वनदुर्गा
स्थितागङ्गापारेतस्यामनुंशृणु ॥ ६ ॥ उत्तिष्ठपुरुषीत्युक्त्वाकिंस्वपिषिभयंवदे
त् ॥ मेशमुपेतिचोच्चार्य्यपश्चादब्रूयात्स्थितंतथा ॥ ७ ॥ यदिशक्यमशक्यंवा
तन्मेभगवतीतिच ॥ शमयाग्निवधूश्चेतिमन्त्रोनगगुणार्णकः ॥८॥ स्वका
र्य्यंसाधयित्वैवंगणनाथेनकीलिता ॥ एनांजपेच्चनिष्कीलांतदासिद्धिःप्रज

यते ॥ ६ ॥ ओंह्रींदुंदुंपुनर्दुंचप्रथमंबीजपञ्चकम् ॥ मन्त्रादौयोजयेदन्तेदुंह्रींओं इतिजप्यते॥१०॥निष्कीलाजायतेविद्यासाधकानांसुसिद्धिदा॥ आरण्यकोमुनिःप्रोक्तोह्यनुष्टुप्छन्दईरितम् ॥ ११ ॥वनदुर्गादेवतास्यसर्वशत्रुविनाशिनी॥ स्वत्वष्टाष्टसूत्राणैर्मन्त्रार्णैःस्यात्षडङ्गकम् ॥ १२॥ दक्षपादांगुलीमूलेगुल्फजानुनिचोरुके॥ गुदेलिङ्गेतथामूलाधारेचजठरेतथा॥१३॥ पार्श्वयुग्मेहृदिकुचद्वन्द्वे कण्ठेचसन्धिषु ॥ करयोर्वदनेनासागण्डयुक्कर्णयुग्मके ॥१४॥ भ्रूमध्येमूर्धनिमनोर्वर्णान्न्यस्यायथाविधि ॥ विद्युन्निभांत्रिनेत्रांचह्यरुणेपङ्कजेस्थिताम् ॥१५॥ चक्रंदरंवराभीतिंहस्तेषुदधतींशुभाम् ॥ स्वर्णोद्यत्कान्तिवसनांशशिमौलिवनस्थिताम् ॥ १६ ॥ प्रसन्नांपुष्पभूषाढ्यांपार्श्वोद्यन्मृगशावकाम् ॥ इतिध्यात्वायजेद्देवींपीठेपूर्वोदितेततः ॥ १७ ॥ पूर्वमङ्गानिपूज्यानिततआर्यादिकायजेत् ॥ चक्राद्यस्त्राणिमातृश्चलोकेशानायुधानिच ॥ १८॥ आर्य्यादुर्गाचभद्राचभद्रकाल्यम्बिकातथा ॥ क्षेम्याचवेदगर्भाचशङ्करीचाष्टमीमता ॥ १९ ॥ चक्रशङ्खासिखेटेषुधनुःशूलंगदेतिच ॥ वेदलक्षंजपेन्मन्त्रंतद्दशांशंहुनेत्तिलैः ॥ २० ॥ श्रीह्याज्यतिलदुग्धान्नैर्दुर्गांसञ्चिन्त्यचानले ॥ तर्पणंमार्ज्जनंकुर्याद्ब्राह्मणाराधनंतथा ॥ २१ ॥ धनधान्यादिभिःसम्यक्तोषयित्वानिजंगुरुम् ॥ एवंसिद्धमनुर्मन्त्रीवाञ्छितार्थान्प्रसाधयेत् ॥२२॥ दुर्गाप्रयोगभेदेनाचिन्तयेद्वनवासिनीम् ॥ ध्यायेच्छ्रियेश्यामलाङ्गींह्यरेर्मूर्धनिस्थिताम् ॥ २३॥ शङ्खचक्रासिबाणांश्चतर्जनींचर्म्मखेटकम् ॥ चापंचदधतींहस्तैःसुप्रसन्नाननांभजे ॥ २४ ॥ प्रत्यहंप्रजपेन्मन्त्रीस्वरक्षार्थंशतंसदा॥ सहस्रंचतदन्तेचप्रयोगान्कर्तुमर्हति ॥२५॥ यद्यद्दुद्दिश्यचमनुंसहस्रंवायुतंजपेत् ॥ अचिराल्लभतेतत्तत्साध्यमपिसाधकः ॥२६॥ प्रातःस्नायीन्यासपूर्वंस्मरन्देवीमनन्यधीः॥ नित्यंसहस्रंप्रजपेन्मन्त्रंसाधकसत्तमः ॥ २७ ॥ क्रूरसर्पग्रहाद्यांश्चदोषान्प्रशमयेत्सुधीः ॥ हुनेदारण्यकतिलैराजिकाभिश्चवाहुनेत् ॥ २८ ॥ अपामार्गसमिद्भिर्वानाशयेत्सकलान्गदान् ॥ अपस्मारादिकान्मन्त्रीनात्रकार्य्याविचारणा ॥ २९ ॥ न्यग्रोधोत्थसमिद्भिश्चसशुङ्गाभिर्हुनेत्सुधीः ॥ दशाहतोवांछितार्थसिद्धिर्भवतिनान्यथा ॥ ३० ॥ त्र्यहंवाससरात्रंवाचेध्मैरासमुद्ध

वैः ॥ एकैकंसकलंमन्त्रीहुनेद्वाञ्छितसिद्धये ॥ ३१ ॥ त्रिंशच्छरान्सिताग्रां श्चविधायजुहुयाद्बुधः ॥ कटुतैलैःसहस्रंवाह्ययुतैस्तदनन्तरम् ॥ ३२ ॥ सम्पाततैलरसनान्समभ्यर्च्यंयथाविधि ॥ पूर्ववत्प्रजपेन्मन्त्रंताञ्छरानपिभूप तिः ॥३३॥ शुद्धाचारश्चधीरश्चधन्वीसंग्राममानसः ॥ गृहीत्वापरसेनायांम ध्येगच्छेदभीतवत् ॥ ३४ ॥ साधनानिदिशःसर्वाःसमन्तात्सफलास्तदा ॥ सआगत्यपुनर्भूयोगुरुंध्यानैर्धनैरपि ॥ ३५ ॥ वस्त्रालङ्करणैश्चाभितोषयेज्ज यदायिनम् ॥ अष्टाधिकशतेनाथसज्जसंरावभस्मच ॥ ३६ ॥ निक्षिपेद्यस्यशि रसिसत्रिद्विष्टोभवेज्जनैः ॥ देशाद्देशान्तरंचैवकाकवद्भ्रमतेसदा ॥ ३७ ॥ कारस्करद्रुमोत्थैश्चपत्रैर्वायुनिपातितैः ॥ सहस्रंजुहुयात्पादरजोभिःसहवैरि णः ॥ ३८ ॥ उच्चाटोथभवेत्सद्योविषवृक्षसमुद्भवैः ॥ पुष्पैर्हुनेत्तद्दलंचसेनांसं स्तम्भयेद्बुधः ॥ ३९ ॥ तावद्भिस्तस्यपत्रैश्चमन्त्रीसेनांनिवर्त्तयेत् ॥ विषवृक्ष समुद्भूतांशत्रोःप्रतिकृतिंशुभाम् ॥ ४० ॥ कृत्वाप्रतिष्ठितप्राणांखण्डखण्डीकृतां निशि॥कृष्णपक्षेचतुर्दश्यांकाकोलूकवसायुतैः ॥४१ ॥ होमाद्रिपुर्नाशमेति ह्युन्मत्तसमिधांतथा ॥ होमान्मत्तोरिपुर्नूनंभवत्येवसहस्रतः ॥ ४२॥ वैरिणःप्रति मांकृत्वासम्यक्संस्थापितानिलाम् ॥ विषत्रिकटुकालिप्तांसम्यगुष्णजलेक्षिपे त् ॥ ४३ ॥ प्रजपेच्चमनुंसद्योज्वराक्रान्तोभवेद्रिपुः ॥ दुग्धाभिषेकतःशान्ति र्भवत्यस्यनसंशयः ॥ ४४ ॥ प्रतिमांविषवृक्षोत्थांनिक्षिपेदुष्णवारिणि ॥ उन्मादश्चरिपोःसद्यःपूर्ववच्छान्तिरीरिता ॥ ४५ ॥ सूर्य्यबिम्बवदारक्तांशूल तर्जनिकाधराम् ॥ ध्यात्वायुतंप्रजप्याथमारयेद्रिपुसञ्चयम् ॥ ४६ ॥ असिखेट करार्कस्थाक्रुद्धासावनवासिनी ॥ संस्मृतामन्त्रजापेनशमयेच्छत्रुसञ्चयम् ॥ ४७ ॥ शरधन्वकरांसिंहस्थितांपावकसन्निभाम् ॥ कारस्करद्रुसमिधामयुतं जुहुयात्सुधीः ॥ ४८ ॥ रोगिणःकरिणःसर्वेजायन्तेचाचिरात्तदा ॥ विषवृक्षो त्थितैःपत्रैरभिनाशंप्रयान्तिच ॥ ४९ ॥ तद्वृक्षसुमनोभिःस्यादुच्चाटःकरिणां ध्रुवम् ॥ राजवृक्षसमिद्धोमाद्रोगानश्यन्तिदन्तिनाम् ॥ ५० ॥ विषवृक्षप्रसू नैश्चत्रिमध्वक्तैरिभव्रजः ॥ वशीभवेत्तथाशीघ्रंपत्रैरादित्यकोत्थितैः ॥ ५१ ॥ त्रिस्वाद्वयुक्तैःकरिणोजातिसन्तोभवन्तिच ॥ अभ्यङ्गःपञ्चगव्येनलोकरक्षाकर

स्मृतः ॥ ५२ ॥ करिणांमनुजानांचप्राग्वैतन्त्रविदुत्तमैः ॥ सर्पिस्तिलैर्नि त्यकटुराजिकापञ्चगव्यकैः ॥ ५३ ॥ हविस्तण्डुलकैश्चैवप्रत्येकंतुसहस्रतः ॥ जुहुयादिभसङ्घानांवृद्धिर्भवतिनान्यथा ॥ ५४ ॥ महान्तंब्रह्मवृक्षंचच्छित्त्वानि र्मिद्यपञ्चधा ॥ दिक्क्रमेणैवपञ्चाथआयुधानिप्रकल्पयेत् ॥ ५५ ॥ सम्यङ्नि त्यंगदाशङ्खोनन्दकश्चक्रशार्ङ्गकौ ॥ कौमोदकीतिक्रमतोप्युक्तमायुधपञ्चक म् ॥ ५६ ॥ निक्षिप्यपञ्चगव्येचजपेत्पञ्चसहस्रकम् ॥ तावच्चाज्येनजुहुयात्स म्पातंतत्रपातयेत् ॥ ५७ ॥ भूपश्चपूर्वसंख्याकंजपंकुर्य्याद्विचक्षणः ॥ विद ध्यादेवतान्पञ्चपञ्चगव्यप्रपूरितान् ॥ ५८ ॥ मध्यादितेष्वायुधानिनिक्षिपेद्भू तलेसमे ॥ कुर्य्याच्छान्तिंततोमन्त्रैर्बलिंहव्यंनिजैःशुभैः ॥ ५९ ॥ नगरग्रामदे शानांकारयेत्क्षेममीदृशम् ॥ यत्रेयंक्रियतेरक्षासकलातत्रवर्धते ॥ ६० ॥ धनधान्यसमृद्धिःस्याद्रिपुचौरभयंनच ॥ पद्मैर्नृपंवशीकुर्य्यात्तत्पत्नीमुत्पलै रपि ॥ ६१ ॥ ब्राह्मणान्कुमुदैर्हुत्वाकह्लारैर्विशएवच ॥ शूद्रांल्लवणहोमेनग्रा मंजातिप्रसूनकैः ॥ ६२ ॥ शङ्खचक्रगदाम्भोजहस्तंसञ्चिन्तयेच्छुभम् ॥ रविबिम्बेसुकुन्दंचमनुप्रोक्तेष्टलिङ्गकम् ॥ ६३ ॥ प्रजपेद्वाथपुरुषोभगवत्पादयो रथ ॥ सर्वसिद्धिकरःप्रोक्तःप्रकारोयंसुमन्त्रिभिः ॥ ६४ ॥ साध्यनामाक्षरैःस म्यग्विदर्भितमनुंलिखेत् ॥ यन्त्रेततःकुलालस्यकरलग्नांप्रगृह्यच ॥ ६५ ॥ तयाकृतायाप्रतिमातस्याहृदिचसन्न्यसेत् ॥ संस्थापित्वाभिमुख्येनमन्त्राहंजज पेन्मनुम् ॥ ६६ ॥ सन्ध्यात्रयेशतंचाष्टाधिकंवश्योभवेत्पुमः ॥ व्रीहीन्हुनेदष्ट शतंप्रत्यहंवत्सराद्भवेत् ॥ ६७ ॥ व्रीहिमान्गोपयोभिश्चपशुमान्भवतिध्रुवम् ॥ घृतहोमान्मन्त्रिणःस्यात्काञ्चनःसिर्महीयसी ॥ ६८ ॥ दध्नाचसर्वसिद्धिःस्याद न्नैरन्नसमृद्धियुक् ॥ मधुहोमेनरत्नानांनिधिर्भवतिनान्यथा ॥ ६९ ॥ दूर्वाहो मेनदीर्घायुर्मन्त्रीभवतिनिश्चितम् ॥ श्वेतगुञ्जाःसमानीयकुडवप्रमिताः शुभाः ॥ ७० ॥ एतन्मन्त्रंतुजप्त्वाताविकरेच्छत्रुसैन्यके ॥ मन्त्रोत्तमःसुज प्तःसतेनासौवैरिणश्चमूः ॥ ७१ ॥ ज्वरादिकैर्महारोगैःपीडितासानृणांचिर म् ॥ सेनाधिपतिमुख्यानांपरस्परविरोधतः ॥ ७२ ॥ एवंह्युपद्रवैर्नानाविधैर्ना शंप्रयातिच ॥ अथातःसम्प्रवक्ष्यामिवीजरूपंमहामनुम् ॥ ७३ ॥ द्विरित्येकाक्ष

रोमन्त्रस्सर्वमन्त्रोत्तमोमतः ॥ ऋषिःकाश्यपउद्दिष्टोगायत्रीछन्दईरितम् ॥ ७४ ॥ देवतातुभवेद्दुर्गापडङ्गानांविधिस्तथा ॥ षड्दीर्घयुक्तबीजेनविसर्गेणान्वितेनच ॥ ७५ ॥ दूर्वाश्यामांत्रिनेत्रांचकमलेष्टदलेस्थिताम् ॥ शूलंबाणंखड्गचक्रेशङ्खंखेटंशरासनम् ॥ ७६ ॥ कपालानिचदत्त्वाधःक्रमेणदधतींस्मरेत् ॥ चतुर्लक्षंजपेन्मन्त्रंदशांशंजुहुयात्तिलैः ॥ ७७ ॥ पूजादिकंप्रयोगादिनवदुर्गासमंस्मृतम् ॥ येयेभूपोपकारायलक्ष्मीमन्त्राःसुरोधिताः ॥ ७८ ॥ गणेशेनैवकाश्यांतेचार्थदास्तान्ब्रवीम्यहम् ॥ नमःकमलवासिन्यैस्वाहाचेतिदशाक्षरः ॥ ७९ ॥ ऋष्याद्यादक्षवदेवोकमलासमुदीरिता ॥ देवीचपद्मिनीविष्णुपत्नीतुवरदामता ॥ ८० ॥ तयाकमलरूपाचङेनमोन्तांचविन्यसेत् ॥ पञ्चाङ्गेषुचताराद्यांध्यानमस्यानिरूप्यते ॥ ८१ ॥ तडित्कान्तिपद्मयुगवरदाभयसत्कराम् ॥ शरीरभासाभुवनंभासयन्तींसरोजगाम् ॥ ८२ ॥ काञ्चीमुकुटमञ्जीरनूपुरैरुचिरांश्रये ॥ आदावङ्गानितद्वाह्येकमलाद्यष्टशक्तयः ॥ ८३ ॥ तद्वाह्येलोकपालांश्चतदस्त्राणिचतद्बहिः ॥ एवमभ्यर्चयेल्लक्ष्मींभवेत्सद्योधनाधिपः ॥ ८४ ॥ पञ्चलक्षंजपेन्मन्त्रंहविष्याशीजितेन्द्रियः ॥ तद्दशांशंसरसिजैस्त्रिस्वाद्वक्तैर्हुनेत्सुधीः ॥ ८५ ॥ नद्यांसमुद्रगामिन्यांकण्ठदघ्नेजलेस्थितः ॥ लक्षत्रयंजपेन्मन्त्रीभवेदर्थान्वितोनरः ॥ ८६ ॥ नन्द्यावर्त्तप्रसूनैश्चजुहुयादुत्तराक्रमे ॥ रमांसम्पूज्यसाहस्रंतावद्भिर्ल्वैर्मधुप्लुतैः ॥ ८७ ॥ फलैर्हुनेत्पौर्णमास्यांपञ्चम्यांवासिताम्बुजैः ॥ शुक्रवारेब्जपुष्पैश्चमासंयोजुहुयात्सुधीः ॥ ८८ ॥ संवत्सराद्धनंपूर्णंलभतेनात्रसंशयः ॥ किम्बहूक्तेनभजतेमनुमेनंजितेन्द्रियः ॥ ८९ ॥ सवाञ्छितार्थंल्लँभतेवसुधान्यसमृद्धियुक् ॥ अथवक्ष्येगणेशेनकाशीराज्याप्तयेमम ॥ ९० ॥ साम्बादित्यस्यरक्षोदिग्भागेलक्ष्मीरुपासिता ॥ लक्ष्मीविनायकस्तत्रप्रसिद्धोसौगजाननः ॥ ९१ ॥ दक्षिणेनैवमार्गेणतस्याःसिद्धिर्नवामतः ॥ सकारंचहकारंचकलरावर्णपञ्चकम् ॥ ९२ ॥ ईकारस्वरसंयुक्तंप्रथमंकूटमुच्यते ॥ हंबीजंतुद्वितीयंस्यात्प्रोक्तोयंत्र्यक्षरोमनुः ॥ ९३ ॥ ऋषिर्हरिश्चगायत्रीछन्दोलक्ष्मीश्चमोहिनी ॥ साम्राज्यदादेवतोक्ताकूटंबीजंप्रकीर्त्तितम् ॥ ९४ ॥ शक्तिंश्रींचपडङ्गानिपड्भिर्दीर्घैःसमाचरेत् ॥ अतसीपुष्पसङ्काशांरत

भूषणभूषिताम् ॥६५॥ शङ्खचक्रगदापद्मशार्ङ्गबाणधरांकरैः ॥ षड्भिःकराभ्यां देवेशींवरदाभयशोभिताम् ॥ ६६ ॥ पूजायन्त्रंत्रिकोणंस्यादष्टपत्रंसभूपुरम् ॥ मध्येप्रपूजयेद्देवींषडङ्गानिततोयजेत् ॥ ६७ ॥ त्रिकोणकोणेगायत्रींसावित्रीं चसरस्वतीम् ॥ ईशकोणात्क्रमेणैवब्राह्मयाद्याश्चदलाष्टके॥६८॥ एकोच्चारक्रमेणैवभूपुरेमनुनापुरा ॥ अष्टादशमहाकोटियोगिनीभ्योनमोस्त्विति ॥ ६६ ॥ मन्त्रेणपूजयेत्पश्चादिन्द्रादीनायुधान्यपि ॥ पुनर्देवींसमभ्यर्च्यगन्धपुष्पाक्षतादिभिः ॥ ७०० ॥ वटुकक्षेत्रपालेभ्योयोगिनीभ्योबलिंहरेत् ॥ एवमष्टसु जांध्यात्वात्रिलक्षंप्रजपेत्सुधीः ॥ १ ॥ तद्दशांशेनपद्मैस्तुहुनेत्साम्राज्यसिद्धये ॥ एवमाराधयेल्लक्ष्मींसाम्राज्यंस्यादसंशयम् ॥ २ ॥ अथातःसम्प्रवक्ष्यामि नित्यक्लिन्नामनुंपरम् ॥ भवार्णोसौमुखेमायानित्यक्लिन्नेमदद्रवे ॥ ३ ॥ स्वाहान्तोस्यमुनिर्ब्रह्माछन्दस्त्रिष्टुप्चदेवता ॥ नित्यक्लिन्नाह्रींचबीजंस्वाहाशक्तिःसमीरिता ॥ ४ ॥ क्लिन्नेतिकीलकंप्रोक्तंहृदाद्येनसमीरितम् ॥ द्वाभ्यांद्वाभ्यांचशेषाणिकुर्य्यादङ्गानिसाधकः ॥ ५ ॥ हृदयेदृग्द्वयेकर्णद्वयेनासाद्वयेपि च ॥ लिङ्गेगुह्येपादयोश्चमन्त्रार्णान्क्रमतोन्यसेत् ॥ ६ ॥ अरुणामरुणाकल्पामरुणांशुकधारिणीम् ॥ अरुणास्रग्विलेपांतांचारुस्मेरमुखाम्बुजाम् ॥ ७ ॥ नेत्रत्रयोल्लसद्वक्त्रांभालेघर्माम्बुमौक्तिकैः ॥ विराजमानांमुकुटलसदर्धेन्दुशेखराम् ॥८॥ चतुर्भिर्बाहुभिःपाशमंकुशंपानपात्रकम् ॥ अभयंबिभ्रतींपद्ममध्यासीनांमदालसाम् ॥ ६ ॥ ध्यात्वैवंपूजयेन्नित्यंप्राक्प्रोक्तेशक्तिपीठके ॥ त्रिकोणमादौतस्यान्तःषट्कोणंबाह्यकेलिखेत् ॥ १० ॥ पद्ममष्टदलंबाह्येभूपुरेण चवेष्टितम् ॥ तत्रमध्येयजेद्देवींचन्दनादिभिरुत्तमैः ॥ ११ ॥ कर्णिकायोनिमध्यस्थदेशेवाय्वीशवह्निषु ॥ नैर्ऋत्यांपुरतोदिक्षुयजेदङ्गानिषट्क्रमात् ॥ १२॥ क्षोभिणींमोहिनींलोकांत्रिषुकोणेषुपूजयेत्॥ नित्यानिरञ्जनाक्लिन्नाक्लेदिनीमदनातुरा ॥ १३ ॥ मदद्रवाद्राविणीचद्राविताचाष्टपत्रके ॥ मदाविला मङ्गलाचमन्मथार्त्तामनस्विनी ॥ १४ ॥ महोन्मोदामानमयीमायामन्दासितावती ॥ द्वारपार्श्वेषुकोणेषुदिक्षुद्वादशपूजयेत् ॥ १५ ॥ देव्यग्रद्वारकेवामंपार्श्वमारभ्यपूजयेत् ॥ लोकेशानपितद्बाह्येतदस्त्राणिततोबहिः ॥ १६ ॥

ध्यात्वैवंप्रजपेल्लक्षमनुमेनंदशांशतः ॥ बन्धूकपुष्पैःस्वाद्वक्तैर्जुहुयाद्धविषाथवा ॥ १७ ॥ तद्दशांशंकल्पयित्वाजलैःकर्पूरवासितैः ॥ आत्मानमभिषिञ्च्याथब्राह्मणान्भोजयेत्ततः ॥ १८ ॥ वित्तभूषाम्बराद्यैश्चतोषयेद्गुरुमात्मनः ॥ सिद्धेमन्त्रेप्रकुर्वीतप्रयोगान्मन्त्रवित्तमः ॥ १६ ॥ ततोविद्याप्रयोगार्होनित्यार्चानिरतस्तथा ॥ सहस्रजापीतद्वक्तः कुर्य्याद्वक्तंनचान्यथा ॥ २० ॥ पद्मैरक्तैस्त्रिमध्वक्तैर्होमाल्लक्ष्मीमवाप्नुयात् ॥ तथैवकैरवैरक्तैराज्ञश्चस्ववशंनयेत् ॥ २१ ॥ समानरूपवत्सायाःशुक्लायागोःपयःप्लुतैः ॥ मल्लिकामालतीजातीशतपत्रैर्हुनेद्भवेत् ॥ २२ ॥ स्वर्णाप्तिःस्तम्भनंशत्रोर्नृपादीनांक्रुधोपिच ॥ आज्याक्तैःकरवीरोत्थैःप्रसूनैराहुतैर्ध्रुवम् ॥ २३ ॥ रक्ताम्बराणिवाणिज्यंभूतमर्त्यवशंनयेत् ॥ भूमावाहनवाणिज्यसिद्धयःस्युःस्वधोत्थिताः ॥ २४ ॥ लवणैःसर्षपैर्गौरैरितरैर्वाथहोमतः ॥ तत्तैलाक्तैर्निशामध्येत्वानयेद्वाञ्छितांवधूम् ॥ २५ ॥ तैलाक्तैर्जुहुयात्कृष्णदरपुष्पैर्निशान्तरा ॥ मासादरातिस्तीव्रार्त्तिज्वरेणपरिपीड्यते ॥ २६ ॥ अरुष्करघृतात्यक्तैस्तद्वीजैर्निशिहोमतः ॥ व्रणाःशरीरातेःस्युर्दुस्साध्याश्चचिकित्सकैः ॥ २७ ॥ तैलेनदलितांङ्गस्तुरिपुर्यातियमालयम् ॥ तयातत्तैलसंसिक्तैर्वीजैरङ्कोलकैरपि ॥ २८ ॥ मरिचैःसर्षपाज्याक्तैर्निशिहोमात्तुमानसाम् ॥ वाञ्छितांवनितांकामज्वरार्त्तामानयेद्ध्रुवम् ॥ २६ ॥ मरीचैःसर्षपोपेतैःसप्तरात्रंहुतैर्निशि ॥ धनमानकुलैर्नित्यंदुष्प्राप्यामानयेद्वधूम् ॥ ३० ॥ अन्नाद्यैर्जुहुयान्नित्यंशतमष्टोत्तरंतुवा ॥ तेनान्नपूर्णेभवनेभोक्ताचभवतिध्रुवम् ॥ ३१ ॥ शालिभिराज्ययुक्तैश्चहोमाच्छालीनवाप्नुयात् ॥ साध्यर्क्षवृक्षसम्भूतमिष्टपादरजःकृताम् ॥ ३२ ॥ राजीमरिचलवणोत्थांकृत्वातुपुत्तलींपुनः ॥ प्रपाकिनिधनंचास्यवाञ्छयानान्ययोगतः ॥ ३३ ॥ पिष्टेनगुडयुक्तेनमरीचैर्जीरकैर्युताम् ॥ कृत्वापुत्तलिकांसाध्यज्ञानमुक्तामथोहृदि ॥ ३४ ॥ सनामहोमसम्पातघृतेसम्राच्यतांपुनः ॥ स्पृशन्निजकराग्रेणसहस्रंप्रजपेन्मनुम् ॥ ३५ ॥ अभ्यर्च्यतद्घृताक्तेनभक्षयेत्तद्धियाजपन् ॥ नरनारीनृपास्तस्यवश्यास्स्युर्मरणावधि ॥ ३६ ॥ तैरेवपिष्टैर्वृत्तंतुकृत्वातन्मध्यतस्तथा ॥ साध्यनामस्फुटंकृत्वाप्राग्वत्सम्पाज्यभक्षणात् ॥ ३७ ॥ वश्यास्तेवत्सरंभूयःस्वनामा

र्थान्वितैस्तथा ॥ कृत्वाविपाच्यस्वादस्तुवशयेत्तंतदर्थकम् ॥ ३८ ॥ नारिके
लपयोभिस्तुतर्पणाद्वनितावशाः ॥ कर्पूरवासितैस्तोयैर्मनुष्यान्वशयेत्स्थिता
न् ॥ ३९ ॥ कस्तूरीवासितैस्तोयैस्तर्पणाद्भूमिपावशाः ॥ चम्पकैर्वासितजलै
स्तर्पणंसर्वरञ्जनम् ॥ ४० ॥ पाटलीशतपत्राभ्यांवासितैस्तर्पणैर्जलैः ॥
सर्वलोकचमत्कारकारीभवतिनित्यशः ॥ ४१ ॥ कस्तूरीवासिताम्भोभिस्त
र्पणंसर्वसिद्धिकृत् ॥ इन्द्रचन्दनसौरभ्यवासिताम्भःप्रतर्पणम् ॥ ४२ ॥
वाञ्छितार्थपुसंसिद्धिस्तर्पयेद्वैरिमृत्यवे ॥ केवलोष्णोदकैस्तस्यतीव्रज्वरस
मुद्भवः ॥ ४३ ॥ निम्बपत्ररसोपेतैरम्बुभिस्तर्पणन्द्विषाम् ॥ जायतेन्योन्यवैरस्यं
येनतेनाशमाप्नुयुः ॥४४॥ तथैवात्युष्णसलिलैस्तर्पणाद्वेषिणोभृशम् ॥ अती
सारादिभिर्दोषैरौद्रैरोगमाप्नुयुः ॥ ४५ ॥ सर्वविद्यास्वियंमुख्यादेवीश्रीविद्य
यासमा ॥ अथातःसम्प्रवक्ष्यामिनित्यक्लिन्नामनुंपरम् ॥ ४६ ॥ ॐह्रींऐमि
तिबीजानिनित्यक्लिन्नेमदद्रवे ॥ ॐह्रींस्वाहेतितिथ्यर्णोमन्त्रोयंवाञ्छितार्थ
दः ॥ ४७ ॥ ऋषिःसम्मोहनश्छन्दोविराडुक्तंतुदेवता ॥ नित्यक्लिन्नाभिधादे
वीचतुर्वर्गफलप्रदा ॥ ४८ ॥ विनावाग्भवबीजंतुद्विद्विर्युग्मेपुवाणकैः ॥ स
मस्तेनाङ्गषट्कंस्यान्नित्यक्लिन्नांस्मरेत्ततः ॥ ४९ ॥ सुरासमुद्रमध्येतुपृथुद्वीपंस्म
रेद्बुधः ॥ तेजोमयंतत्रवनंनानाकल्पद्रुमान्वितम् ॥ ५० भृङ्गालिमंजुनादेन
मन्दवातेनसेवितम् ॥ मनोज्ञतृणपुष्पाद्यैर्युक्तेमाणिक्यमण्डपे ॥ ५१ ॥ रत्न
सिंहासनंतस्यमध्येराजत्रिकोणके ॥ तन्मध्येष्टदलेदेवीमुपविष्टांचसंस्मरेत् ॥
५२ ॥ शीतांशुचूडामरुणाम्भोजाभाम्बिभ्रतींकरैः ॥ पाशांकुशौकल्पवल्लींक
पालंदोर्युगेनच ॥ ५३ ॥ वादयन्तींकलांवीणांत्र्यक्षांनित्यांस्मराम्यहम् ॥ इ
तिध्यात्वायजेत्पीठंचतुरशक्तियुतंसुधीः ॥ ५४ ॥ सयोनिकर्णिकंपद्ममष्टपत्र
विराजितम् ॥ आंद्राविण्यैचवामायैहृल्लेशानकेयजेत् ॥ ५५ ॥ ईंस्यादाह्ला
दकारिण्यैज्येष्ठायैहृद्रुदासने ॥ ऊंक्षोभिण्यैचरौद्र्यैचनमःपश्चिमकोणके ॥
५६ ॥ ऐंगुह्यशक्त्यैहल्मोक्कायजेन्मध्येत्रिकोणके ॥ ह्रींसर्वशक्तिकमलासना
यहृदन्ततः ॥ ५७ ॥ पूज्यंत्रयोदशार्णेनदेव्याश्चासनमुत्तमम् ॥ नित्यक्लि
न्नांतत्रयजेद्वक्ष्यमाणेनवर्त्मना ॥ ५८ ॥ केशरेष्वङ्गपूजास्यात्पत्रेष्वेताःप्र

पूजयेत् ॥ इंनित्याईसुभद्राचमङ्गलावनचारिणी ॥ ५६ ॥ उंऊंपूर्वाएंसुभगाऐं पूर्वाचापिदुर्भगा ॥ मनोन्मनीचअंपूर्वाऔंपूर्वारुद्ररूपिणी ॥ ६० ॥ चतुर्थ्यन्त हृदन्तेननाममन्त्रेणपूजयेत् ॥ वल्लकीवादनपराउष्णारक्तामनोहराः ॥ ६१ ॥ मदमन्थरगामिन्यःसुभूषाश्चारुभूषणाः ॥ द्व्यञ्जनाद्यंकामस्यवीजंविन्दुद्व यान्वितम् ॥ ६२ ॥ उच्चार्य्यङेहृदन्तांश्चानङ्गादीन्पूजयेत्क्रमात् ॥ पञ्चपत्रेषु देव्यग्रप्रादक्षिण्येनतेतथा ॥ ६३ ॥ अनङ्गश्चस्मरोमन्मथाख्योकामश्चमार कः ॥ पञ्चपुष्पेषुपाशाद्वनांकुशेक्षुधनुर्भृतः ॥ ६४ ॥ पृष्ठभागेभूषणयुक्ताशक्ति स्तत्पार्श्वसंस्थिताः ॥ भूषायुक्ताःस्मरेद्रक्तकमलाःसाधुपूजयेत् ॥ ६५ ॥ ततो बाह्येदशदलेदेव्यग्रादिप्रदक्षिणम् ॥ षण्डान्तस्वरहीनञ्चककारंबिन्दुभूषितम् ॥ ६६ ॥ एकैकंपूर्वमुच्चार्य्यङेहृदन्तञ्चनामच ॥ अयन्तुपूजामन्त्रःस्यात्सर्वासां चाप्यनुक्रमात् ॥ ६७ ॥ रमिश्चविरतिःप्रीतिविप्रीतिश्चमतिस्थता ॥ दुर्मति र्निधृतिविधृतिस्तुष्टिश्चापिवितुष्टिकाः ॥ ६८ ॥ अरुणाभरणोपेतावीणाहस्ताः स्मिताननाः ॥ लोकपालास्ततोबाह्येतदस्त्राणिततोबहिः ॥ ६९ ॥ वह्निलक्षं जपेन्मन्त्रंतद्दशांशंहुनेत्पुनः ॥ घृतेनतर्पणाद्यंचकृत्वासन्तोष्यदेशिकम् ॥ ७० ॥ धनधान्यादिभिःसम्यक्प्रयोगानाचरेत्ततः ॥ पूर्वमन्त्रोदितान्सम्यक्पू र्वोक्तविधिनासुधीः ॥ ७१ ॥ एवंयःपूजयेद्भक्त्यानित्यक्लिन्नांमनोहराम् ॥ प्राप्नोतिमहतींलक्ष्मींयाच्यतेप्रमदाजनैः ॥ ७२ ॥ षडाम्नायैश्चिरंसेव्यापारंप र्य्यविचार्य्यच ॥ अथातोस्याःप्रवक्ष्यामिद्वादशार्णंमहामनुम् ॥ ७३ ॥ ऐंक्लीं बीजंसमुच्चार्य्यनित्यक्लिन्नेमदद्रवे ॥ स्वाहान्तोयंमनुःप्रोक्तोमुनिःसम्मोहनोम तः ॥ ७४ ॥ छन्दोनिवृत्समाख्यातंनित्यक्लिन्नाञ्चदेवता ॥ वाग्भवेनषडङ्गानि कृत्वादेवींविचिन्तयेत् ॥ ७५ ॥ रक्ताम्बरांरक्तवर्णांरक्तगन्धानुलेपनाम् ॥ कमलञ्चसृणिंपाशंकपालंबिभ्रतींकरैः ॥ ७६ ॥ मदाकुलितसर्वाङ्गींत्रिने त्रांशशिशेखराम् ॥ शाक्तपीठेयजेद्देवींप्रोक्ताङ्गानिपुरायजेत् ॥ ७७ ॥ पूर्वोक्ताश्चततोबाह्येशक्तीर्नित्यादिकायजेत् ॥ अरुणानीलकमलकपाला ढ्यकराम्बुजाः ॥ ७८ ॥ शतक्रत्वादिकान्बाह्येवज्रादींश्चततःपरम् ॥ अथवक्ष्येमहाकालींसमस्तजनमोहिनीम् ॥ ७९ ॥ आनीतांश्रीगणेशेनवाम

मार्गप्रचारिणीम् ॥ त्वरितंवाममार्गेणअस्याःसिद्धिःप्रजायते ॥ ८० ॥ दि
वोदासोच्चाटकरांदुर्गायाउत्तरस्थिताम् ॥ ॐक्ष्लैंक्ष्लैंक्रैंक्रैंअपशुंगृहाणकवचंवदे
त् ॥ ८१ ॥ अस्त्रंस्वाहाशक्रवर्णोमन्त्रकाल्याउदीरितः ॥ नन्यासोनचमुद्रा
दिर्नात्रकाचिद्विचारणा ॥ ८२ ॥ यथेष्टंखानपानेनमैथुनेनप्रसीदति ॥ कृष्ण
तोयेनसम्पूर्णेकुम्भेचैवाथकालिकाम् ॥ ८३ ॥ ब्राह्मयादिभिःशक्तिभिश्चयु
क्तांभक्त्याप्रपूजयेत् ॥ पञ्चवक्त्रांमहारौद्रींप्रतिवक्त्रंत्रिलोचनाम् ॥ ८४ ॥ श
क्तिशूलधनुर्बाणखेटखड्गभयावरान् ॥ दधानांदक्षभुजैर्देवींबिभ्राणाम्भोगभूषि
ताम् ॥ ८५ ॥ ध्यात्वैवंसिद्धकंसाध्यंसाधयेन्मनसिस्थितम् ॥ ब्राह्मीमाहेश्वरी
चैवकौमारीवैष्णवीतथा ॥ ८६ ॥ वाराहीचतथेन्द्राणीचामुण्डाचण्डिकाष्ट
मी ॥ प्रोक्तेईशानपर्य्यन्तंकुम्भकुक्षिस्थिताइमाः ॥ ८७ । कार्त्तिकेयातमोदे
वीमहाकालीभयापहा ॥ वर्णलक्षंजपेन्मन्त्रंघृताक्तैस्तिलैर्भिर्हुनेत् ॥ ८८ ॥
तर्पणादिततःकृत्वासिद्धोमन्त्रःप्रजायते ॥ नामोच्चारणसंरब्धरज्ज्वाप्रज्वलिते
नले ॥ ८९ ॥ जुहुयाद्वैरिणःक्रुद्धोदेवीमन्त्रंजपन्यथा ॥ समिधःपिचुमन्दस्य
विभीताङ्गारहोमतः ॥ ९० ॥ सप्ताहाद्वैरिणंहन्तिकालिकामन्त्रयोगतः ॥ उ
च्चाटमपराह्णेचसन्ध्यायांमारणन्तथा ॥ ९१ ॥ दक्षिणस्यांदिशिस्थित्वाग्रामा
देर्दक्षिणामुखः ॥ एतैरेवभवेद्धोमस्तत्तत्कर्मसुसिध्यति ॥ ९२ ॥ अथातःसम्प्र
वक्ष्यामिमहागणपसेविताम् ॥ महाकृत्यांयथानार्य्यःपातिव्रत्यव्रताच्च्युताः ॥
९३ ॥ नानाविधाश्चमत्कारानारीभ्यश्चप्रदर्शिताः ॥ पातिव्रत्याद्भ्रंशिता
स्ताःपापराशिर्महानभूत् ॥ ९४ ॥ स्त्रीपुंकृत्यासुजातासुगार्हस्थ्येभंगुरेसति ॥
पुरुषायांसमासाद्यगृहस्थाःसुखिनोभवन् ॥ ९५ ॥ तांकृत्यांसम्प्रवक्ष्यामिगृह
स्थाश्रममण्डितम् ॥ ह्रींमहायोगिनींप्रोक्तागौरीमुक्ताभुवेतिच ॥ ९६ ॥ नभ
यङ्करिहुञ्चेतिमन्त्रोयंषोडशाक्षरः ॥ अङ्गिराश्चमुनिर्देवीगायत्रीछन्दईरितम् ॥
९७ ॥ एवंफडन्तंभुवनभयङ्करिशिरोमतम् ॥ पुनरेवन्त्रिरावृत्याषडङ्गानिस
माचरेत् ॥ ९८ ॥ सिंहासीनांकृष्णमुखींलम्बमानपयोधराम् ॥ दंष्ट्राकराल
वदनांत्रिनेत्रांसर्वतोज्ज्वलाम् ॥ ९९ ॥ कृष्णकञ्चुकसंवीतांविधूमाग्निस
मप्रभाम् ॥ त्रिशूलचक्रचषकखट्वाङ्गवरपङ्कजाम् ॥ १०० ॥ लेलिहानांमहाजि

ह्रांविद्युत्प्रेक्षणभीषणाम् ॥ ध्यात्वाकृत्यांविधानेनपूजयेन्मन्त्रवित्तमः ॥ १ ॥ भीषणांश्रीमतींदेव्याअग्रादारभ्यपूजयेत् ॥ प्रतिष्ठाञ्चतथाविद्यांतद्वाह्येतुचतुर्दले ॥ २ ॥ पूर्वस्यांशाङ्करींनामशुभ्रवर्णाम्बराबृताम् ॥ द्विभुजांसौम्यवरदांपाशांकुशधरांशिवाम् ॥ ३ ॥ दक्षिणेमालिकांनामलम्बजिह्वांभयङ्करीम् ॥ पूजयित्वाजपेन्मन्त्रंनित्यमष्टोत्तरंशतम् ॥ ४ ॥ लोकेशार्चादिकंवाह्येनियोगोस्याथकथ्यते ॥ कालंविदित्वाप्रतिमांमारणेचाप्यधोमुखीम् ॥ ५ ॥ तस्याधोमेखलायुक्तंत्रिकोणंवह्निकोणके ॥ चन्द्रगौरंविधायाग्निंपरिस्तीर्य्यशरैस्तृणैः॥ ६ ॥ विभीतकपरिध्यांचकल्पयेद्वाऽस्यमारणे ॥ जुहुयान्निम्बतैलाक्तैःकाकोलूकोत्थविट्ककैः ॥ ७ ॥ दारयैनंशोषयैनंमारयेत्थंविधायच ॥ अष्टोत्तरशतेनैवमनुनाजुहुयाद्बुधः ॥ ८ ॥ होमान्तेविधिवत्कृत्वामारणाग्नेश्चसन्निधौ ॥ योमेकण्ठग्रहोवापिदूरस्थोप्यन्तिकेपिच ॥ ९ ॥ विपक्षव्ध्यमसूक्तस्येत्थमुक्त्वाचनिवेदयेत् ॥ संरक्ष्याग्निंविधानेननवरात्रंसमापयेत् ॥ १० ॥ मृतस्तिष्ठतितेनाशंतावदस्यरिपोर्मृतिः ॥ अर्कक्षीरेणमरिचंपिष्ट्वासिद्धार्थमेवच ॥ ११ ॥ जलेसह्रौंडयमन्त्रेणरिपुंध्यात्वानिरुद्धहृक् ॥ कृष्णाम्बरोत्तरीयोग्रपादेनाक्रम्यचेद्रिपुम् ॥ १२ ॥ वज्रंशूलमितिध्यात्वाअद्भिस्तस्योपरिक्षिपेत् ॥ नवरात्रान्तेरशत्रुर्म्रियतेनात्रसंशयः ॥ १३ ॥ हरसिद्धेचितावह्नौतैलसिक्तैर्विभीतकैः ॥ जुह्वतोम्रियतेशत्रुःसत्यमौशनसोदितम् ॥ १४ ॥ रिपोःप्रतिकृतिंध्यात्वासाध्यर्क्षफलकेनले ॥ अर्कक्षीरेणमरिचंपिष्ट्वातत्रैवलेपयेत् ॥ १५ ॥ फट्कारंहृदयेकृत्वाशिवंनिर्मायकूपके ॥ क्षिपेत्कृष्णचतुर्दश्यांजप्त्वामन्त्रंसहस्रशः ॥ १६ ॥ सद्योवगाहनंकृत्वातस्यामेवचलक्षणम् ॥ मन्त्रंजप्त्वाविधानेनभेदयन्नशिवमुद्रया ॥ १७ ॥ षण्मासान्म्रियतेशत्रुःसन्ध्ययोरुभयोरपि ॥ वायव्यासमुद्भूतंपत्रंशुष्कंवैभीतकन्ततः ॥ १८ ॥ लिखित्वाविलिखेन्मन्त्रीकृष्णसर्पास्यशोणितैः ॥ नामधेयंरिपोरन्तेवायुबीजंनियोजयेत् ॥ १९ ॥ निखनेत्तस्यगेहेतुकाकवद्भ्रमतेध्रुवम् ॥ वातोद्धूतैःशुष्कपत्रैःकाष्ठैर्दशनिपातितैः ॥ २० ॥ उष्ट्रास्थिनाशवाङ्गारैःशत्रोरुच्चाटनंभवेत् ॥ दूर्वागुडूचींसम्पिष्ट्वासर्पिषातिलतण्डुलैः ॥ २१ ॥ अग्नेःसमिद्भिःपालाशैःशान्तिंकुर्य्याद्विचक्षणः ॥

लक्ष्मींबिल्वफलैःपत्रैर्नन्द्यावर्तैःश्रियंतथा ॥ २२ ॥ रक्तपुष्पैरपामार्गैरिङ्गालैश्च समुक्षैः ॥ मधुरत्रयसंसिक्तैरेभिःकुर्य्यात्तुवश्यकम् ॥ २३ ॥ शान्तिंकृत्वाविधानेनकृत्यामन्त्रमिमञ्जपेत् ॥ महाव्याधिप्रशमनंनित्यमष्टाधिकंशतम् ॥ २४॥ जपेदेकाग्रचित्तस्तुलोकवश्यकरंपरम् ॥ मनसाचिन्तयेत्कृत्यागजारूढांविषङ्गमाम् ॥ २५ ॥ तस्यवश्यम्भवेत्क्षिप्रमश्वारूढांतथाभवेत् ॥ चौरव्याघ्रमृगादीनांसलिलादिभयापहम् ॥ २६ ॥ सप्ताभिमन्त्रितंतोयंपीत्वामन्त्रसमाहितः ॥ मेधावीचभवेद्वाग्मीतावज्जप्त्वाभिषेकतः ॥ २७ ॥ सप्ताभिमन्त्रितंकृत्वाविषमप्यमृतम्भवेत् ॥ पक्षंमासंद्विमासंवापणमासंवत्सरन्तुवा ॥ २८ ॥ एवंयःकुरुतेमर्त्यःसपुण्यांगतिमाप्नुयात् ॥ अथवक्ष्येमहाशान्तिंसर्वोपद्रवनाशिनीम् ॥ २९ ॥ वामाचारस्यसङ्गोप्त्रींसमस्तसुरतुष्टिदाम् ॥ वाममार्गभवंपापंहरेत्पुण्यंविवर्द्धयेत् ॥ ३० ॥ अकालमृत्युमथनीसदाविजयवर्द्धनी ॥ आयुष्यपावनपुष्टिलक्ष्मीसौभाग्यवश्यकृत् ॥ ३१ ॥ पुत्रदंपौत्रदञ्चैवलक्ष्मीमलविनाशनम् ॥ महाव्याधिप्रशमनमपस्मारविनाशनम् ॥ ३२ ॥ योगिनीभूतवेतालाः प्रेतकूष्माण्डपन्नगाः ॥ तत्रस्थानेनतिष्ठन्तिडाकिन्याद्याविशेषतः ॥ ३३ ॥ कृत्वामभ्यर्चयेद्वह्नेयथाविधिपुरःसरम् ॥ षोडशारंलिखेत्पद्मंयोनियुक्तंसबिन्दुकम् ॥ ३४ ॥ तन्मध्येष्टदलंलेख्यमकारादिन्यसेत्क्रमात् ॥ तन्मध्येरसकोणंतुलिखेन्मूलमनुंस्मरन् ॥ ३५ ॥ चन्द्रबिम्बंलिखेत्पद्मेतस्योर्ध्वेप्रेतमालिखेत् ॥ तस्यमध्येन्यसेत्कुम्भंवस्त्ररत्नविभूषितम् ॥ ३६ ॥ कुम्भमध्येन्यसेत्कृत्यांसर्वलक्षणसंयुताम् ॥ अर्चयेच्चयथान्यायंपायसन्तुनिवेदयेत् ॥ ३७ ॥ लोकेशान्तंयजेद्देवींतदग्रेहोममाचरेत् ॥ जुहुयादाज्यसंसिक्तापामार्गतिलसर्पिषा ॥ ३८ ॥ दूर्वाप्लक्षखदिराश्वत्थैःप्रत्येकंतुशताष्टकम् ॥ कुण्डेचस्थण्डिलेवापिहोमकर्म्मसमाचरेत् ॥ ३९ ॥ तस्यदक्षिणपार्श्वेतुलक्ष्मीन्ध्यायेद्यथाविधि ॥ कुम्भमध्येन्यसेद्देवींदक्षिणेतुश्रियंस्मरेत् ॥ ४० ॥ वामपार्श्वेयजेद्देवींहल्लेखांपरमेश्वरीम् ॥ तस्यैववामपार्श्वेतुपूजयेद्गणनायकम् ॥ ४१ ॥ अयुतंमूलमन्त्रन्तुजपेन्मृत्युविनाशनम् ॥ लक्षंतुभ्रूणहत्यायांमद्यपानेसहस्रकम् ॥ ४२ ॥ गुरुद्रोहेकोटिमितंतथाचाष्टोत्तरंशतम् ॥ ब्रह्मद्रोहेतुप्रयुतंगुरुतल्पगमेतथा ॥ ४३ ॥ मदा

त्ययादधर्मादोपञ्चलक्षमितंजपेत् ॥ वामेवाकौलिकेमार्गेकापालेगन्तुमिच्छति ॥ ४४ ॥ तेनादौसाधयेन्मन्त्रमिमंपरिमलाह्वयम् ॥ पापनाशकरोयस्माच्छत्रुभीतिनिवारकः ॥ ४५ ॥ गुरुदोषाःशिष्यदोषाअधर्म्माङ्गभवाश्चये ॥ तेसर्वेनाशमायान्तिमनोरस्यजपेकृते ॥ ४६ ॥ दक्षिणाचारनिष्ठोपिदुःखनाशायसेवयेत् ॥ शष्कुल्यःफेणिकामुद्रामांसन्तुवटकेण्डिराः ॥ ४७ ॥ सौवीरंकाञ्जिकंमद्यंस्वस्त्रीःशक्तिःप्रकीर्तिता ॥ वृन्ताकशाकंमत्स्यार्थेवामादधिकसिद्धिदम् ॥ ४८ ॥ अथातःसम्प्रवक्ष्यामिविघ्नंत्रैलोक्यमोहनम् ॥ प्रपञ्चितंप्रपञ्चेपि शक्तिभिर्बहुधातथा ॥ ४९ ॥ दिवोदासस्यतपसाशाक्तेमार्गेनयेविशन् ॥ तदासम्मोहनोनामकेदारस्यतुपश्चिमे ॥ ५० ॥ गणेशोभूत्तदातेनसम्पूर्णंमोहितंपुरम् ॥ तस्यमन्त्रंप्रवक्ष्यामिसोर्ध्वाम्नायेनसिद्धिदः ॥ ५१ ॥ वक्रतुण्डैकदंष्ट्रायक्लींह्रींश्रींगंवदेत्ततः ॥ गणपतिंवरयुग्मंदान्तंसर्वजनंवदेत् ॥ ५२ ॥ मेवशमानयस्वाहात्रयस्त्रिंशल्लिपिर्मनुः ॥ मुनिस्तुगणपःप्रोक्तोगायत्रंछन्दईरितम् ॥ ५३ ॥ त्रैलोक्यमोहनोविघ्नोदेवतापरिकीर्तिता ॥ रुद्रेषुपञ्चवेदाङ्गनेत्रवर्णैर्मनोःक्रमात् ॥ ५४ ॥ षडङ्गविधिरुद्दिष्टोध्यानपूजादिकंवदेत् ॥ महागणेशवत्सर्वंप्रयोगादिकमाचरेत् ॥ ५५ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतऊर्ध्वाम्नायगणपतिमन्त्र प्रकाशःसप्तदशः ॥ १७ ॥

श्रीशिवउवाच ॥ अथातःसम्प्रवक्ष्यामिपूर्वाम्नायगणेश्वरान् ॥ हृल्लेखांविरियुग्मंचगणपतेवरद्वयम् ॥ १ ॥ दकारंसर्वलोकंमेवशमानयथद्वयम् ॥ पञ्चविंशाक्षरोमन्त्रःप्रोक्तोयंपुत्रपौत्रदः ॥ २ ॥ मुनिर्गणकआख्यातश्छन्दोगायत्रमुच्यते ॥ देवताविरिविघ्नेशोदृष्टादृष्टफलप्रदः ॥ ३ ॥ वेदवेदेषुपञ्चार्णैः शरलोचनसंख्यकैः ॥ विभक्तैर्मूलमन्त्रार्णैःषडङ्गानिसमाचरेत् ॥ ४ ॥ सिन्दूराभंत्रिनयनंवामोर्ध्वपाशधारिणम् ॥ दक्षोर्ध्वेचांकुशंदक्षतलेमध्येकपालकम् ॥ ५ ॥ पुष्करायेनिंवामतलहस्तेनैवचबिभ्रतम् ॥ चन्द्रमौलिहस्तिमुखंदक्षिणेनकरेणच ॥ ६ ॥ पुष्ट्यालिङ्गितसर्वाङ्गंस्पृशन्त्यावामपाणिना ॥ लिङ्गाग्रन्तुगणेशस्यऊर्ध्वयोःकरयोर्द्वयोः ॥७॥ सन्दधानंपद्मयुग्ममेवंगणपतिंभजे ॥

यजेत्पीठेपुराप्रोक्तेनवशक्तिसमन्विते ॥ ८॥ मूलमन्त्रेणक्लृप्तायांमूर्त्तावावाह्य पूजयेत् ॥ मिथुनानियजेदादौदामोदादीन्दिगम्बरान् ॥ ६ ॥ अङ्गानिपूज येत्पश्चान्मातृश्चैवततःसुधीः ॥ अर्चयेल्लोकपालांश्चतदस्त्राणिततोबहिः ॥ १० ॥ षडावरणसंयुक्तंविरि विघ्नेश्वरंयजेत् ॥ अथमन्त्रान्तरंवक्ष्येविरि विघ्ने श्वरस्यतु ॥ ११ ॥ वरद्वयंदकारश्चतदालोकपदंवदेत् ॥ एकोनविंशत्यर्णोयं निवृच्छन्दउदाहृतम् ॥ १२ ॥ न्यासःषट्त्रिंशदर्णोक्तएकैकंबीजपूर्वकः ॥ अथध्यानंप्रवक्ष्यामिह्यूर्ध्वाद्वूर्ध्वकरेषुतु ॥ १३ ॥ बीजपूरंगदांचापंचक्रंमालां चदक्षिणे ॥ वामेपद्मंपाशबाणान्रदंरत्नाढ्यकुम्भकम् ॥ १४ ॥ पद्मद्वयकरां पुष्टिमङ्कस्थामरुणप्रभाम् ॥ आलिङ्गयन्तमरुणंस्रवन्मदकपोलकम् ॥ १५ ॥ त्रिनेत्रंपीतवसनंदृढमुत्थापितध्वजम् ॥ किरीटिनंकुण्डलिनंध्यायेद्देवंगजान नम् ॥ १६ ॥ अथातःसम्प्रवक्ष्यामिब्रह्मणासमुपासितम् ॥ काश्यपाबाह्मणसौ म्यस्थंविरिञ्चिगणनायकम् ॥ १७ ॥ ह्रींविरि ञ्चिपदंप्रोक्त्वाङेन्तंगणपतिंपुनः ॥ प्राग्वद्वदेद्वरादीनिपञ्चिंशत्यर्णकोमनुः ॥ १८ ॥ वेदपञ्चेषुपञ्चेषुद्व्यर्णैरुक्तंषड ङ्गकम् ॥ ध्यानपूजादिकंप्राग्वद्विशेषादस्यसाधकः ॥ १९ ॥ साङ्गान्सार्थां न्सकृच्छ्रुत्वावेदान्पठतियाज्ञिकः ॥ स्वयमेवप्रजायेतकर्त्ताहर्त्तायथाविधिः ॥ २० ॥ वेदेलक्षमिताप्रोक्तासर्वेषांतुपुरस्क्रिया ॥ मधुरत्रयसंयुक्तैःपूर्वोक्तैरष्टभिर्हु नेत् ॥ २१ ॥ एवंसाधितमन्त्रस्तुप्रयोगान्कर्त्तुमर्हति ॥ विकचोत्पलहोमेनव शयेत्सकलंजगत् ॥ २२ ॥ तिलतण्डुलहोमेनश्रियमाप्नोत्यनिन्दिताम् ॥ मोदकानाज्यसंयुक्तान्हुत्वाविजयमाप्नुयात् ॥ २३ ॥ मधुरत्रयहोमेनराजानं वशमानयेत् ॥ अभीष्टसाधनोहोमोभक्ष्यभोज्यादिकैःकृतः ॥ २४ ॥ अथश क्तिगणेशस्यत्र्यक्षरोमन्त्रउच्यते ॥ ह्रींग्रींह्रींइतिच्छन्दोस्यविराड्भार्गवउच्य ते ॥ २५ ॥ मुनिर्देवःशक्तिगणेशोस्यमन्त्रस्यकीर्तितः ॥ षड्दीर्घभाजाबीजे नषडङ्गानिप्रकल्पयेत् ॥ २६ ॥ गजेन्द्रवदनंसाक्षाच्चतुर्बाहुंसुचामरम् ॥ हेमव र्णंत्रिनेत्रंचपाशांकुशधरंविभुम् ॥ २७ ॥ स्वदन्तंदक्षिणेहस्तेबीजपूरञ्चवाम के ॥ पुष्करेमोदकांश्चैवधारयन्तंत्वनुस्मरेत् ॥ २८ ॥ पूर्वोक्तेपूजयेत्पीठेतीव्रा दिनवशक्तिके ॥ अष्टपत्राम्बुजेदेवंचतुरस्त्रत्रयावृते ॥ २९ ॥ प्रथमाङ्गावृतिः

प्रोक्ताद्वितीयामातृभिःस्मृता ॥ तृतीयालोकपालैःस्याद्वज्राद्यैश्चचतुर्थिका ॥ ३० ॥ लक्षमेकंजपेन्मन्त्रंहविष्याशीजितेन्द्रियः ॥ तद्दशांशंप्रजुहुयादपूपैर्घृतसम्प्लुतैः ॥ ३१ ॥ एवंसिद्धमनुर्मन्त्रीकाम्यकर्म्माणिसाधयेत् ॥ शुक्लपक्षेचतुर्थ्यान्तुपूजयित्वाविनायकम् ॥ ३२ ॥ अपूपैर्गुडसम्मिश्रैःपक्वान्नैश्चघृतप्लुतैः ॥ मरिचैर्जीरकैश्चैवसैन्धवेनविमिश्रितैः ॥ ३३ ॥ देवस्यसन्निधौमन्त्रीजुहुयात्रिसहस्रकम् ॥ गद्यपद्यमयीवाणीसप्ताहाद्भवतिध्रुवम् ॥ ३४ ॥ वश्यार्थीमधुहोमेनराजानंवशमानयेत् ॥ कन्यार्थीजुहुयाल्लाजैस्तन्नामयुतमन्त्रतः ॥ ३५ ॥ एकांकन्यामथोसप्तभोजयेल्लभतेवधूम् ॥ चन्द्रसूर्य्यग्रहेप्रास्थपलन्तुकपिलाघृतम् ॥ ३६ ॥ कर्षमात्रंवचाचूर्णंमिश्रीकृत्याभिमन्त्रयेत् ॥ पिबेत्तुनियतोभूत्वादेवताध्यानतत्परः ॥ ३७ ॥ यावज्जीवंभवेत्तावन्नाश्नीयात्किमपीहसः ॥ सप्ताहाज्जायतेशीघ्रमपरोवाक्पतिर्यथा ॥ ३८ ॥ बन्ध्यातुस्नानदिवसेपूजयित्वाविनायकम् ॥ निष्कार्धपादमानेनहरिद्रांसैन्धवंवचाम् ॥ ३९ ॥ गोमूत्रेकुडवेपिष्ट्वासहस्रमभिमन्त्रयेत् ॥ अन्नैःसुभक्ष्यभोज्यैश्चभोजयित्वाचकन्यकाः ॥ ४० ॥ गुरवेदक्षिणांदत्त्वापिबेन्नारीतदौषधम् ॥ ततःसालभतेपुत्रंसर्वलक्षणसंयुतम् ॥ ४१ ॥ अथास्यभेदंवक्ष्यामितारांद्यश्चतुरर्णकः ॥ ऋषिःशुक्रोनिगदितश्छन्दोगायत्रमुच्यते ॥ ४२ ॥ देवताशक्तिगणपःसर्वसिद्धिकरःपरः ॥ पूर्ववच्चषडङ्गानिध्यानमस्यनिरूप्यते ॥ ४३ ॥ हेमाभंहेमवस्त्रंचत्रिनेत्रंतुन्दिलंभुजैः ॥ पाशाक्षसूत्रदशनान्धारयन्तंतथांकुशम् ॥ ४४ ॥ पुष्करेणदधानञ्चमोदकंहेमभूषणम् ॥ मध्याह्नादित्यसङ्काशंचारुशक्त्यासमन्वितम् ॥ ४५ ॥ ततःपूर्वोदितेपीठेदेवमावाह्यपूजयेत् ॥ प्रथमावृत्तिरङ्गैःस्याद्दलपद्मेततःपरम् ॥ ४६ ॥ पद्मेचाष्टदलेवक्रतुण्डादींश्चदलाग्रतः ॥ मातृकाःपूजयेद्बाह्येभूपुरेलोकपालकान् ॥ ४७ ॥ आयुधानिचतद्बाह्येप्राग्वच्छेषंसमापयेत् ॥ लक्षमेकंजपेन्मन्त्रंतद्दशांशंसमाहितः ॥ ४८ ॥ जुहुयाद्घृतसंयुक्तैस्तिलैर्मन्त्रविदुत्तमैः ॥ तर्पणादिततःकुर्य्यादेवंसिद्धोभवेन्मनुः ॥ ४९ ॥ काम्यकर्मततःकुर्य्याद्देशिकोयतमानसः ॥ आज्यान्नैर्जुहुयान्नित्यमन्नवान्वत्सराद्भवेत् ॥ ५० ॥ पायसाज्येनमहतींश्रियमाप्नोतिमानवः ॥ रम्भातुल्यांलभे

त्कन्यामेनंयोभजतेनरः ॥ ५८ ॥ अथातःसम्प्रवक्ष्यामिभेदमस्यार्कवर्णकम् ॥ ह्रींगंह्रींचमहाप्रोक्ताङेन्तंगणपतिंपुनः ॥ ५९ ॥ स्वाहान्तोस्यभवेच्छन्दोगायत्रीपूर्वकानिवृत् ॥ ऋषिर्गणकआख्यातोदेवःशक्तिविनायकः ॥ ६० ॥ एकेनैकेनचैकेनसप्तभिर्द्वितयेनच ॥ समस्तेनचमन्त्रार्णैरङ्गक्लृप्तिरिहोदिता ॥६१॥ मुक्तावलीचन्द्रधरंव्यालनेत्रंचदक्षिणे ॥ऊर्ध्वाधरेपद्मसृणीदधानंवामऊर्ध्वके ॥ ६२॥ दशकुम्भंतलस्थेनप्रियायोनिंप्रसन्नयेत्॥नागवक्त्रंमणिमयंमुकुटंबिभ्रतंप्रभुम् ॥ ६३ ॥ एवंसञ्चिन्त्यविधिवत्साधकःसर्वसिद्धये ॥ यजेत्पूर्वोदितेपीठेविरिविघ्नेशवर्त्मना ॥ ६४ ॥ लक्षमेकंजपेन्मन्त्रमयुतंजुहुयात्ततः ॥ अपूपैर्घृतसंयुक्तैर्विधिवत्पूजितेनले ॥ ६५ ॥ तर्प्पणंमार्जनंकृत्वाब्राह्मणान्भोजयेत्ततः ॥ एवंसिद्धमनुर्मन्त्रीप्रयोगान्विधिवच्चरेत् ॥ ६६ ॥ इक्षुदण्डैःकृतोहोमोराजलक्ष्मींप्रयच्छति ॥ कदलैर्नारिकेलैश्चहोमोलोकवशङ्करः ॥ ६७ ॥ ससितैःपृथुकैर्होमोराजानंवशमानयेत् ॥ शष्कुभिश्चकृतोहोमोब्राह्मणानांवशङ्करः ॥ ६८ ॥ सर्पिषाजुहुयात्सम्यग्धनधान्यादिसम्पदे ॥ पूर्वोक्ताश्चापिकर्तव्याःप्रयोगाःसाधकैरिह ॥ ६९ ॥ अथान्यंसम्प्रवक्ष्यामिमन्त्रंशक्तिगणेशितुः ॥ओंह्रींगंह्रींचवशमानयस्वाहाभवार्णकः ॥ ७० ॥ पूर्वोदितास्तुमुन्याद्यामन्त्रार्णैरङ्गकल्पनम् ॥ बन्धूकाभंत्रिनेत्रंचनागास्यंशशिशेखरम् ॥ ७१ ॥ भोगिमालंगुणसृणीवरेक्षून्हस्तपङ्कजैः ॥ दधानंशुण्डयास्पृष्टभगंचालिङ्गितंतया ॥ ७२ ॥ श्यामलाङ्ग्यालिङ्गपद्महस्तयाभावयेद्धृदि ॥ पूर्वोक्तपीठेपूर्वोक्तपूजाकार्य्यामनीषिणा ॥ ७३ ॥ लक्षत्रयंजपेन्मन्त्रमपूपैस्तद्दशांशतः ॥ घृतप्लुतैश्चजुहुयात्तर्प्पणादिततश्चरेत् ॥ ७४ ॥ ततोनिजगुरुंध्यात्वाधनधान्यैश्चतोषयेत् ॥ ततःकाम्यप्रयोगास्तुतत्कल्पोक्तान्प्रसाधयेत् ॥ ७५ ॥ स्वादुत्रयाप्लुतापूपैर्होमःकान्तावशङ्करः ॥ शक्तिंविनागणेशोनशक्तिश्चापिनतंविना ॥ ७६ ॥ तस्माद्बुधैःसाधनीयःसर्वथाशक्तिसङ्गमः ॥ तस्मादादौप्रवक्ष्यामिशक्तिंश्रीभुवनेश्वरीम् ॥ ७७ ॥ ह्रीमित्येकाक्षरंबीजंतस्यामन्त्रःप्रकीर्त्तितः ॥ ऋषिःशक्तिर्वशिष्ठश्चसूतश्छन्दोस्यकथ्यते॥७८॥ गायत्रीदेवताबोधसंविद्याच्याकलापरा ॥ हकारस्तुभवेद्बीजमीकारःशक्तिरुच्यते॥ ७९ ॥

रेफस्तुकीलकंप्रोक्तंनियोगोखिलसिद्धये ॥ षड्दीर्घयुक्तबीजेनषडंगानिस माचरेत् ॥ ८० ॥ संहारमातृकांसृष्टिमातृकांविन्यसेत्ततः ॥ देव्यैकता पादनाथमन्त्रन्यासोथवक्ष्यते ॥ ८१ ॥ भालेह्रींहल्लेखायैमुखेह्रूंमगनामता ॥ ह्रूंरक्ताहृदयेस्थाप्यागुदेह्रींचकरालिका ॥ ८२ ॥ हुंपादयोर्महोच्छुष्मापञ्चवक्त्रे षुविन्यसेत् ॥ ऊर्ध्वोदग्याम्यपूर्वाशाप्रत्येकस्थेषुचक्रमात् ॥ ८३ ॥ कण्ठेन्यसे च्चगायत्रींसावित्रींवामगेकुचे ॥ सरस्वतींदक्षकुचेब्रह्माणींवामगेंसके ॥ ८४ ॥ हृदिविष्णुंमहेशंचदक्षिणेंसेप्रविन्यसेत् ॥ ब्रह्माणंविन्यसेद्भालेगायत्र्यासहि तंसुधीः ॥ ८५ ॥ विष्णुंकपोलदेशेतुसावित्र्यासहितंन्यसेत् ॥ महेशंवाम गण्डेचवागीश्वर्यायुतंन्यसेत् ॥ ८६ ॥ वामेधनपतिंयुक्तंश्रियाश्रोत्राग्रके न्यसेत् ॥ ८७ ॥ स्मरंरत्यायुतंवक्त्रेगणंपुष्ट्यायुतंन्यसेत् ॥ दक्षश्रोत्राग्रकेम न्त्रीनिधीशक्तियुतौन्यसेत् ॥ ८८ ॥ श्रवःकपोलान्तरयोर्मूलवक्त्रेन्यसेत्ततः ॥ गलमूलेकुचयुगेवामांसेहृदिदक्षिणे ॥ ८९ ॥ अंसेपार्श्वेयुगेचैतान्न्यसेन्मन्त्री समाहितः ॥ ९० ॥ अष्टमातॄन्न्यसेद्भालेअंसेपार्श्वेतथोदरे ॥ पार्श्वेचांसेचम न्त्रज्ञस्तथापादेगलेहृदि ॥ ९१ ॥ व्यापयेन्मूलमन्त्रेणतनुंदेवींततःस्मरेत् ॥ उद्यदादित्यरुचिरांशीतांशुकृतशेखराम् ॥ ९२ ॥ पद्मासनांत्रिनेत्रांचपाशां कुशवराभयैः ॥ अलंकृतचतुर्बाहुंमन्दस्मितलसन्मुखीम् ॥ ९३ ॥ कुचभारविनम्रा ङ्गलतांदेवींहृदिस्मरेत् ॥ आदौकृत्वातुषट्कोणंतद्बाह्येष्टदलाम्बुजम् ॥ ९४ ॥ तद्बाह्येषोडशदलंचतुरस्त्रत्रयंबहिः ॥ चतुर्द्वारसमोपेतंमण्डलंप्रोक्तमुत्तमम् ॥ ९५ ॥ तत्रपीठंयजेत्पूर्वंनवशक्तिसमन्वितम् ॥ जयाचविजयाचैवाजिता ख्याचापराजिता ॥ ९६ ॥ नित्याविलासिनीदोग्ध्रीह्यघोरमङ्गलाततः ॥ एतास्तुशक्तयःपूज्याःकेशरेषुचमध्यके ॥ ९७ ॥ दद्यान्मूलेनासनंतुमूर्तिंतेनै वकल्पयेत् ॥ देवीमावाहयेत्तस्यामङ्गावरणसंयुताम् ॥ ९८ ॥ पाशांकुशवरा भीतिधराभूतनिभाश्चताः ॥ हृल्लेखाद्यासमभ्यर्च्यविविधाभरणोज्ज्वलाः ॥ ९९ ॥ मध्याग्रयाम्योदक्प्रत्यक्स्थानेषुक्रमतस्तथा ॥ अग्नीशासुरवायव्यकोणे ष्वग्रेहृदादिकान् ॥ १०० ॥ यजेदस्त्रन्तथाशासुकोणाग्रेमिथुनानिच ॥ गाय त्रीमरुणाभासामरुणाकल्पभूषिताम् ॥ १ ॥ चतुर्मुखींकरैर्दण्डंकुण्डकाम

क्षिमालिकाम् ॥ अभीतिंविभ्रतींतद्वद्ब्रह्माणंपुरतोयजेत् ॥ २ ॥ सावित्रींह
स्तकमलैररिशङ्खगदाम्बुजैः ॥ बिभ्राणांपीतवसनंकेयूराङ्गदभूषिताम् ॥ ३ ॥
किरीटहाररशनानूपुरैरुपशोभिताम् ॥ तादृग्रूपमयंविष्णुंरक्षःकोणेग्रकेयजे
त् ॥ ४ ॥ शुभ्रांत्रिनेत्रामभ्यन्तःशुभ्रवस्त्रविराजिताम् ॥ टङ्काक्षसूत्राभयद
वरयुक्तांचतुर्भुजाम् ॥ ५ ॥ सरस्वतींयजेद्वायोःकोणेचेशंचतादृशम् ॥ लक्ष्मीं
प्रियाङ्गसंस्थांचदक्षेनालिङ्गयबाहुना ॥ ६ ॥ पतिंकामेनकमलंधनदंचपृषोदर
म् ॥ पीतंरत्नघटंरत्नकरञ्जंबिभ्रतींयजेत् ॥ ७ ॥ आग्नेयेरमणाङ्कस्थांरतिंस
व्येनपाणिना ॥ आलिङ्ग्यरमणंपद्ममन्यतोदधतींस्मरेत् ॥ ८ ॥ बन्धूकाभं
वाणगुणसृणिचापकरञ्जले ॥ ऐशान्यांपूजयेत्सम्यग्विघ्नराजंप्रियान्वितम् ॥
९॥सृणिपाशधरंकान्तावराङ्गस्पृक्करांगुलिम् ॥ माध्वीपूर्णकपालाढ्यविघ्नराजं
दिगम्बरम् ॥ १० ॥ पुष्करेविगलद्रत्नस्फुरच्चषकधारिणम् ॥ सिन्दूरसदृशा
कारामुद्दाममदविह्वलाम् ॥ ११ ॥ धृतरक्तोत्पलामन्यपाणिनातद्ध्वजस्पृशा
म् ॥ आश्लिष्टकान्तामरुणांपुष्टिमर्चेद्दिगम्बराम् ॥ १२ ॥ कर्णिकायांनिधिं
पूज्यषट्कोणस्याथपार्श्वयोः ॥ आद्यात्वनङ्गकुसुमाह्यनङ्गकुसुमातुरा ॥ १३ ॥
अनङ्गमदनान्यातुह्यन्याभुवनपालिनी ॥ षष्ठीगगनवेगास्याच्छशिरेखाच
सप्तमी ॥ १४ ॥ अन्तेगगनरेखेषुपत्रेषुपरितःस्थिता ॥ पाशांकुशवराभीति
करारक्ताःसुभूषिताः ॥ १५ ॥ ततःषोडशपत्रेषुकरालीविकरालिका ॥ सरस्वती
श्रीदुर्गोषालक्ष्मीश्रुत्योस्मृतिर्धृतिः ॥ १६ ॥ श्रद्धामेधामतिःकान्तिरार्य्याःषोड
शशक्तयः ॥ खड्गखेटकधारिण्यःश्यामाःपूज्याःप्रदक्षिणैः ॥ १७ ॥ ब्राह्मया
द्यास्तद्बहिःपूज्याःपत्रसन्धिषुदिक्क्रमात् ॥ पश्चाद्बहिःसमभ्यर्च्याःशक्तयः
परिचारिकाः ॥ १८ ॥ अनङ्गरूपानङ्गादिमदनामदनातुरा ॥ तथाभुवनवे
गास्यादग्रेभुवनपालिका ॥ १९ ॥ षष्ठीचसर्वशिशिरातदग्रेनङ्गवेदना ॥
अनङ्गमेखलाचेतितद्बाह्येतुदिगीश्वरान् ॥ २० ॥ रक्तारक्तोज्ज्वलाकल्पार
क्तान्तायतलोचनाः ॥ रक्तोत्पलकरावामेदक्षिणेक्रमतस्त्विदम् ॥ २१ ॥
चषकंतालवृन्तंचताम्बूलंछत्रचामरे ॥ दर्पणंचांशुकंपुष्पंबिभ्राणांदक्षिणैः
करैः ॥ २२ ॥ वज्रादीन्यपितद्बाह्येपूजयेच्चोत्तमोत्तमे ॥ कौर्प्येदिव्यावृतेचित्ते

चतुर्भिरपिचोत्तमा ॥ २३ ॥ हृल्लेखाद्यैस्तदङ्गैश्चलोकपालैस्तदायुधैः ॥ मध्यात्रावरणैःपूजाङ्गलोकेशतदस्त्रकैः ॥२४॥ द्वाभ्यांकनिष्ठाङ्गलोकपालाभ्यां साप्रवासके ॥ अनन्यगतिकापूजाअङ्गैनैकेनकीर्त्तिता ॥ २५ ॥ पूजालोपं नकुर्वीतभुवनेश्याःकदाचन ॥ सन्ध्यालोपेयथापापंपूजालोपेतथाभवेत् ॥ २६ ॥ सप्ताहपूजालोपेतुशापःपततिदारुणः ॥ शुक्रेतुदक्षिणीवामीरवौपूजां नलोपयेत् ॥ २७ ॥ सप्तशुक्रंमानवोयोनिष्पूजोभवतीहसः ॥ द्वात्रिंशल्लक्ष मानेनजपेन्मन्त्रंसमाहितः ॥ २८ ॥ तद्दशांशंहुनेदष्टद्रव्यैस्त्रिस्वादुसंयुतैः ॥ तर्प्पणादिततःकुर्य्यान्मन्त्रीशास्त्रोक्तवर्त्मना ॥ २६ ॥ अथान्यदपिमन्त्रस्य पुरश्चरणमुच्यते ॥ एकलिङ्गेशिवागारेदक्षिणामूर्त्तिमाश्रितः ॥ ३० ॥ बद्ध पद्मासनोभस्मशायीचकुशविष्टरः॥ कृष्णाष्टमींसमारभ्ययावत्कृष्णाचतुर्दशी॥ ३१ ॥ नित्यमिष्टाशिवंशक्तिंजपेन्मन्त्रंसहस्रकम् ॥ दधिक्षौद्रघृताभ्यक्ताव्याघातसमिधोहुनेत् ॥ ३२ ॥ ततःसाग्रसहस्रेणध्यायेत्सर्वेश्वरीमुर्वीम् ॥ ततः सिद्धोभवेन्मन्त्रोनात्रकार्य्याविचारणा ॥ ३३ ॥ अश्वत्थोदुम्बरप्लक्षन्यग्रोध समिधस्तथा ॥ तिलसर्षपदुग्धाज्यद्रव्याण्यष्टमितानिच ॥ ३४ ॥ प्रतिद्रव्यं न्तुहोमेस्यद्ययुतानांचतुष्टयम् ॥ एवंसिद्धमनुर्मन्त्रीसर्वान्कामान्प्रसाधयेत् ॥ ३५ ॥ नित्यंसौभाग्यदंपञ्चविंशज्जप्त्वाभिषेचनम् ॥ मेधावीचभवेद्वाग्मीता वज्जप्ताम्बुपानतः ॥ ३६ ॥ जिह्वाग्रेन्यस्यसञ्जप्तंवाक्सिद्धिःकविताभवेत् ॥ तज्जप्तमञ्जनंवश्यंकर्पूरागुरुमिश्रितम् ॥ ३७ ॥ सासृग्भस्मारुणालेपैर्वश्याय तिलकक्रिया ॥ जानुमात्रजलेस्थित्वानिश्चलोन्मीलितेक्षणः ॥ ३८ ॥ जपेत्सहस्रंतद्रात्रामिष्टामाकर्षयेत्स्त्रियम् ॥ लाजैःकन्यामवाप्नोति तिलैरारोग्यमश्नुते ॥ ३६ ॥ पुष्टिमान्दधिहोमेन तण्डुलैश्चतथाभवेत् ॥ ब्राह्मीरसयुताँल्लाजान्वचयाचसमन्वितान् ॥ ४० ॥ त्रिसहस्रेणाभिसम्मन्त्र्य मासमेकंप्रभक्षयेत् ॥ बृहस्पतिसमोमन्त्री सर्वविद्याधिपोभवेत् ॥ ४१ ॥ अश्वत्थसमिधःस्वादुयुक्ताहुत्वाद्विजानसौ ॥ वशयेत्पद्महोमेन राज्ञस्तन्मन्त्रिणस्तथा ॥ ४२ ॥ कुमुदैराजपत्नीश्च ब्रह्मक्षेत्रप्रसूनकैः ॥ तण्डुलानांपिष्टकृतां प्रतिमांस्वादुसंयुताम् ॥ ४३ ॥ कृतप्राणप्रतिष्ठांतां सञ्जप्तांमनुनामुना ॥ भक्षयेत्तामर्कवारे त

तःकुर्य्याद्दर्शनंनरम् ॥ ४४ ॥ राजानंप्रमदांवापि यंयंवाञ्छत्यनुत्तमम् ॥ फ
लकेभूतिनाशङ्कि ससाध्यांविलिखेत्सुधीः ॥ ४५ ॥ गर्भिण्यैदर्शयेदाशु सा
सुखप्रसवाभवेत् ॥ अभिषेकविधानंतु वक्ष्यतेवाञ्छितार्थदम् ॥ ४६ ॥ मण्ड
पेमण्डलंकुर्य्याद्देवीपीठान्वितंशुभम् ॥ यथावत्पीठमभ्यर्च्य कलशान्विन्यसे
त्सुधीः ॥ ४७ ॥ कर्णिकायांदलाग्रेतु स्वर्णरौप्यसुताम्रजम् ॥ मार्त्तिकंतत्र
विन्यस्यपञ्चैकंवापितन्त्रवित् ॥ ४८ ॥ महतावाद्यघोषेण मनुनास्थापयेत्सु
धीः ॥ पूर्वोक्तैरुपचारैस्तु निजेष्टायैचमन्त्रवित् ॥ ४६ ॥ घटेष्वेषुचसम्पूज्या
मातरोदिक्क्रमाद्बुधैः ॥ यदिस्युःपञ्चकलशा मध्यादिषुयजेत्क्रमात् ५० ॥
हृल्लेखाद्याःपञ्चसुधीरभिषिञ्चेत्तदुत्तरम् ॥ प्रथमंघृतकुम्भेन कषायेणततःपरम् ॥
५१ ॥ तैलेनचकषायेण मधुनाचततःपरम् ॥ द्विजवृक्षत्वचःक्काथैरभिषिञ्चे
त्ततःसुधीः ॥ ५२ ॥ द्वारकुम्भदलैःपश्चादन्तरालेसमाचरेत् ॥ वक्रहस्तपद
क्षालाचमनान्यपिमन्त्रवित् ॥ ५३ ॥ एकैककलशस्नानानन्तरंपुनरेवहि ॥
कारयेत्तेननीरेण त्वेवंशक्तोनरोभवेत् ॥ ५४ ॥ ब्राह्मणान्भोजयेन्नानाविधैर्भ
क्ष्यैश्चतोषयेत् ॥ प्राप्नोतिमहतींलक्ष्मीं सर्वदाविजयीभवेत् ॥ ५५ ॥ पला
शाश्वत्थविल्वानां फलंग्राह्यंपलार्धकम् ॥ अग्निमन्थप्लक्षसेव्यनाम्नोःकर्म्म
विदुत्तमः ॥ ५६ ॥ प्रसारिणीकाश्मरिकारोहिणीनांतदर्धकम् ॥ उदुम्बरीपाट
लीन्दुकुभागाःपरिकीर्तिताः ॥ ५७ ॥ एतत्क्काथोदकेनैव पूरयेत्कलशंततः ॥
अथचात्रप्रवक्ष्यामित्र्यक्षरंमन्त्रमुत्तमम्॥५८॥ऐंह्रींश्रीमिति पूर्वोक्तामुन्याद्या
श्चात्रकीर्त्तिताः ॥ आद्याद्येनचमध्येनदीर्घषट्कानितेनच ॥५६॥ अंगुल्या
दिषडङ्गानिशेषन्यासाश्चपूर्ववत् ॥ बन्धूकाभांत्रिनयनांचन्द्रार्धकृतशेखराम्॥
६० ॥ रत्नपात्रंवामहस्तेदक्षेपद्मंततोमनुम् ॥ जपेद्द्वादशलक्षंचजुहुयात्तद्दशां
शतः ॥ ६१ ॥ त्रिस्वाद्वयुक्तहविषातर्प्पणादिततश्चरेत् ॥ ततःप्रयोगान्कुर्वी
तमन्त्रीस्वेष्टफलाप्तये ॥ ६२ ॥ ब्रह्मवृक्षप्रसूनैश्चहोमोलक्ष्मीप्रदोमतः ॥ वत्सरा
ज्जप्तसुब्राह्मीसर्पिःपानात्कवित्वभाक् ॥ ६३ ॥ गौरसर्षपयुग्लोणहोमस्तुव
शयेत्स्त्रियम् ॥ नरंनरपतिंवान्यंवशयेन्नात्रसंशयः ॥६४॥ आरग्वधोत्थैःकुसु
मैःसंसिक्तैश्चन्दनाम्भसा ॥ दुकूलयुक्तैरत्नौघैराज्यलक्ष्मींचविन्दति ॥ ६५ ॥

तिलतण्डुलसम्मिश्रैर्होमात्पूर्वोदितंफलम् ॥ पूर्वोदितान्प्रयोगांश्चकुर्य्या दत्रापिसाधकः ॥ ६६ ॥ एवमाराधितोमन्त्रोभुक्तिमुक्तिप्रदायकः ॥ अथान्यं त्र्यक्षरंवक्ष्येद्रुतंवाग्विभवप्रदम् ॥ ६७ ॥ ऐंह्रींऐंइतिमुन्याद्याज्ञेयापूर्वोदितास्त था ॥ आद्यन्तपुटितेनैवदीर्घयुग्मध्यमेनच ॥ ६८ ॥ जातिभाञ्जिषडङ्गानि विदध्यान्मन्त्रवित्तमः ॥ एकाक्षरोदितंन्यासंकुर्य्यान्मन्त्रविदुत्तमः ॥ ६९ ॥ उद्यद्युतिंत्रिनयनांपीतवक्षोजनामिताम् ॥ पद्मंचरत्नपात्रंच अभयंचवरंतथा ॥ ७० ॥ हस्तैर्दधानांरक्ताब्जसंस्थांचशशिशेखराम् ॥ मुक्ताहारसमायुक्तांभाव येद्भुवनेश्वरीम् ॥ ७१ ॥ एकाक्षरोदितेपीठेपूजयेद्भुवनेश्वरीम् ॥ पूर्वोक्ताःपूर्व वत्पूज्याहल्लेखाद्याश्चमन्त्रिणा ॥ ७२ ॥ सम्पूजयेत्कोणषट्केपूर्ववन्मिथुना निच ॥ किञ्जल्केषुषडङ्गानिपूजयेच्चदलेषुताः ॥ ७३ ॥ ब्राह्मयाद्यानिजना थाङ्कस्थिताःस्मेराननालसाः ॥ असिताङ्गोरुरुश्चण्डक्रोधोन्मत्तौकपाल्यथ ॥ ७४ ॥ बिभीषश्चैवसंहारःप्रोक्तास्तत्पतयस्त्विमे ॥ शूलंकपालंप्रेतंचक्षुद्रडुन्दु भिमेवच ॥ ७५ ॥ बिभ्राणाःपाणिभिर्हस्तित्वग्वस्त्राभीमविग्रहाः ॥ स्मर्त व्यावक्रकेशाश्चपूजाकालेचमन्त्रिणा ॥ ७६ ॥ दीर्घाद्यामातरःपूज्याद्र स्वाद्याभैरवास्तथा ॥ तद्बाह्येस्वरपत्रेषु करालाद्याःपुरोदिताः ॥ ७७ ॥ पूज्यास्त्वनङ्गरूपाद्यालोकेशाहेतिभिःसह ॥ मनुंजपेत्तत्त्वलक्षंब्रह्मवृक्षप्रसून कैः ॥ ७८ ॥ त्रिमध्वक्तैराजवृक्षपुष्पैर्वातद्दशांशतः ॥ जुहुयात्तर्प्पणादीनि कुर्य्यान्मन्त्रस्यसिद्धये ॥ ७९ ॥ एवंसूक्तविधानेनयोभजेद्भुवनेश्वरीम् ॥ मदविह्वलयोषाःसराज्ञश्चवशयेत्सुधीः ॥ ८० ॥ एकाक्षरोदितान्सर्वान्प्रयो गानाचरेत्तथा ॥ अथान्यंसम्प्रवक्ष्यामित्र्यर्णंयन्त्रादिसिद्धिदम् ॥ ८१ ॥ ओंह्रींक्रोंइतिवह्न्यर्णोमुन्याद्येकाक्षरोदितम् ॥ कल्पयेन्माययाङ्गानिध्यानम त्रनिरूप्यते ॥ ८२ ॥ अंकुशंचगुणाभीतिवरांश्चदधतींकरैः ॥ कमलस्थांप्रो द्यदर्ककान्तिहृदिविभावयेत् ॥ ८३ ॥ पूर्वोदितेयजेत्पीठेहल्लेखाद्यायथापुरा ॥ किञ्जल्केषुषडङ्गानिब्राह्मयाद्यादलमध्यतः ॥ ८४ ॥ ततःशक्रादयोबाह्येहेत योर्च्यास्तुतद्बहिः ॥ एवंयःपूजयेद्भक्त्यासभवेत्तुकुबेरवत् ॥ ८५ ॥ अनुरक्ताः सर्वलोकाभवेयुस्तस्यमन्त्रिणः॥मन्त्रंजपेत्तत्वलक्षंजुहुयात्तत्सहस्रकम् ॥८६॥

त्रिस्वाद्वयुग्दुग्धवृक्षसमिद्भिःप्रोक्तसङ्ख्यया ॥ शुद्धैस्तिलैःपयोयुक्तैस्तर्प्पणादिततश्चरेत् ॥ ८७ ॥ अश्वत्थोदुम्बरप्लक्षवटाश्चत्वारएवच ॥ होमेवृक्षाःसमाख्याताःप्रत्येकंषट्सहस्रकम् ॥ ८८ ॥ होमोयंस्यादागमेनचतुर्विंशतिसङ्ख्यकाः ॥ सहसासूर्य्यसदृशस्तेनाधिष्ठितमन्दिरम् ॥ ८९ ॥ रजन्यांनिःप्रदीपंचप्रदीपशतसंकुलम् ॥ विलोक्यतेसर्वजनैरेतन्मन्त्रप्रसादतः ॥ ९० ॥ लवणैर्मिश्रसिद्धार्थैरजन्यांसुघृतप्लुतैः ॥ जुहुयाच्चैवराजानंराजपत्नींवशंनयेत् ॥ ९१ ॥ अन्नहोमेनमन्त्रज्ञःसमृद्धान्नगृहोभवेत् ॥ विकचोत्पलहोमेनलक्ष्मीरेनंनसन्त्यजेत् ॥ ९२ ॥ चतुरंगुलपुष्पैश्चहोमःस्यात्कविताप्रदः ॥ तिलहोमेनपापानांनाशोमन्त्रिणएवहि ॥ ९३ ॥ आयुष्कामोघृतैनैवजुहुयान्मन्त्रवित्तमः ॥ पूर्वोदितान्प्रयोगांश्चकुर्य्यादत्रापिमन्त्रतः ॥ ९४ ॥ अस्मिन्नसिद्धेमनौमन्त्रीभुक्तिमुक्तिमवाप्नुयात् ॥ अथातःसम्प्रवक्ष्यामिवक्रतुण्डायहुंत्विति ॥ ९५ ॥ सर्वसिद्धिकरोमन्त्रःप्रोक्तश्चायंषडक्षरः ॥ ह्रस्वंतुकवचंस्त्रीभिर्जप्यंसर्वसिद्धिदम् ॥ ९६ ॥ भार्गवोमुनिराख्यातोनुष्टुप्छन्दउदाहृतम् ॥ देवतावक्रतुण्डोस्यसुरासुरनमस्कृतः ॥ ९७ ॥ विधायमूलमन्त्रेणकरशुद्धिंजितेन्द्रियः ॥ षड्भिर्मन्त्रगतैर्वर्णैःषडङ्गानिप्रकल्पयेत् ॥ ९८ ॥ भ्रूमध्येकण्ठहृदयेनाभ्यामाधारकेतथा ॥ षडक्षराण्यथोन्यस्यसर्वेणव्यापकंतथा ॥ ९९ ॥ उद्यद्दिनेश्वररुचिंपाशांकुशवराभयम् ॥ हस्तैर्दधानंस्मेरास्यमरुणंचिन्तयेद्धृदि ॥ २०० ॥ पूर्वोक्तेपूजयेत्पीठेवक्रतुण्डंगणेश्वरम् ॥ अष्टपत्राम्बुजद्वन्द्वंचतुर्द्वारयुतेनच ॥ १ ॥ चतुरस्रत्रयेणाथवेष्टितंचक्रमालिखेत् ॥ मध्येदेवंसमभ्यर्च्यपुष्पितैरुपचारकैः ॥ २ ॥ आदावङ्गानिसम्पूज्ययथास्थानंविशालधीः ॥ पूर्वदिग्दलमूलेषुशक्तीरष्टौक्रमाद्यजेत् ॥ ३ ॥ विद्याख्याविश्वधात्रीचभोगदाविघ्ननाशिनी ॥ निधिप्रदाचपापघ्नीतथापुण्याशशिप्रभा ॥ ४ ॥ दलेषुचयजेत्तत्रब्रह्माणिमाद्याःपुरोदिताः ॥ द्वितीयेष्टदलेतद्वद्वक्रतुण्डादिकान्यजेत् ॥ ५ ॥ चतुरस्रेलोकपालान्स्तदस्त्राणिचपूजयेत् ॥ प्राग्वदीथीद्वयेसम्यग्वक्रतुण्डार्चनंत्विति ॥ ६ ॥ वर्णलक्षंजपेन्मन्त्रंजुहुयात्तद्दशांशतः ॥ अष्टद्रव्यैःपुराप्रोक्तैर्मधुराक्तैर्यथाविधि ॥ ७ ॥ एवंसिद्धेमनौमन्त्रीका

म्यकर्म्माणिसाधयेत् ॥ तर्प्पयेत्पूर्वमार्गेणवक्रतुण्डंगणेश्वरम् ॥ ८ ॥ चतुरस्रंहस्तमात्रंकुण्डंकुर्य्यात्तदग्रतः ॥ आदधीतमथित्वाग्निमनूचानगृहाद्धरेत् ॥ ९ ॥ प्राणायामत्रयंकृत्वामन्त्रीकर्म्मसमाचरेत् ॥ ततःपूर्वोक्तवत्कृत्वामन्त्रन्यासंपडङ्गकम् ॥ १० ॥ गन्धपुष्पादिकैरग्निंसम्पूज्यस्थापयेत्ततः ॥ कृशानुमध्येतत्राथनागयज्ञोपवीतिनम् ॥ ११ ॥ लम्बोदरंभास्करंतंचैकदन्तंत्रिलोचनम् ॥ पद्मासनसमारूढंचतुर्बाहुंत्रिलोचनम् ॥ १२ ॥ किरीटहारकेयूराङ्गदालङ्कारभूषितम् ॥ एवंसञ्चिन्त्यमनसासमावाह्यगणेश्वरम् ॥ १३ ॥ गन्धादिभिःसमभ्यर्च्यजलेनाग्निंप्रसिच्यच ॥ षडर्णेनद्धिथान्तेनजुहुयाच्चघृताहुतीः ॥ १४ ॥ अष्टाधिकसहस्रंचततःसिद्धोभवेन्मनुः ॥ सहस्राष्टचतुर्थीषुपक्षयोरुभयोरपि ॥ १५ ॥ शतंहुनेदपूपैश्चवत्सराल्लभतेधनम् ॥ मध्याह्नकालेनित्यंहितदग्रेप्रजपेन्मनुम् ॥ १६ ॥ सहस्रंत्रिशतंवाथशतंवाष्टोत्तरंसुधीः ॥ अचिरेणैवमहतींलक्ष्मींप्राप्नोत्ययत्नतः ॥ १७ ॥ प्रसन्नतात्रमनसःस्तुतिरन्येप्सितातथा ॥ स्वापेवैमुख्यताचापिस्वप्नेद्विरददर्शनम् ॥ १८ ॥ एतानिमन्त्रसिद्धेर्हिचिह्नान्युक्तानिमन्त्रिभिः ॥ पूर्वोक्तसिद्धोदनेनत्रिमासंत्रिशतंहुनेत् ॥ १९ ॥ महानिधीनांभवनंभवेद्वैश्रवणोपमः ॥ गुडाक्तैःपृथुकैर्नारिकेलैर्मरिचसंयुतैः ॥ २० ॥ अपूपैर्जुहुयान्मन्त्रीगणेशस्यचसन्निधौ ॥ अग्नौसहस्रंजुहुयात्समन्त्रीधनवान्भवेत् ॥ २१ ॥ शुभशालिमयैश्चूर्णैर्मरिचाद्यैःससैन्धवैः ॥ सजीरकैर्बहुगुडैःशुभैरतिघृतप्लुतैः ॥ २२ ॥ अपूपैर्जुहुयान्मन्त्रीगणेशस्यचसन्निधौ ॥ सहस्रमात्रंप्रलभेन्महतीमचिराद्रमाम् ॥ २३ ॥ साध्यनामार्णपुटितमनुनाजुहुयात्सुधीः ॥ अपामार्गसमिद्भिर्वापक्वैःपनसजैःफलैः ॥ २४ ॥ सहस्रंकदलैर्वाथनरंनारीवशंनयेत् ॥ लाजाभिर्जुहुयादग्नौसहस्रंकन्यकाप्तये ॥ २५ ॥ सहस्रमाज्याहुतीनांहुनेत्क्षीराहुतीरपि॥सहस्रंरोगशान्त्यर्थंमन्त्रशास्त्रविशारदः॥२६॥ सर्वाहुतीनांजुहुयाल्लक्षंमृत्युञ्जयोभवेत् ॥ ब्रह्मवृक्षोत्थसमिधोमधुरत्रयलोलिताः ॥ २७ ॥ सहस्रंजुहुयान्मन्त्रीमासाच्छत्रूञ्जयेद्ध्रुवम् ॥ बिभीतकस्यसमिधांसहस्रंसाष्टकंनिशि ॥ २८ ॥ लोहिताक्तंश्मशानाग्नौजुहुयान्मारयेद्रिपुम् ॥ भूमौशत्रुस्वरूपंचविलिख्यास्योदरेनलम् ॥ २९ ॥ प्रज्वाल्यसिद्धार्थवरैःसहस्रं

जुहुयात्सुधीः ॥ तंमारयेत्सप्तदिनान्नात्रकार्य्याविचारणा ॥ ३० ॥ शोणमेघस मानाभंगणेशंनिजशुण्डया ॥ रिपुंगृहीत्वावडवामुखेवह्नौमहोत्कटे ॥ ३१ ॥ प्रक्षि पन्तंगणपतिंध्यात्वामुंप्रजपेन्मनुम् ॥ सहस्रंत्रिदिनेनासौशत्रुमुच्चाटयेद्ध्रुवम् ॥ ३२ ॥ समुद्रगांनदींप्राप्यगृहीत्वाञ्जलिनाजलम् ॥ सहस्रकृत्वेभिमन्त्र्यपरिषिञ्चे त्स्वमूर्धनि ॥ ३३ ॥ अनेनविधिनामन्त्रीपापौघंनाशयेद्ध्रुवम् ॥ शनैश्चरादि नेश्वत्थमालभ्यत्रिसहस्रकम् ॥ ३४ ॥ जपन्मनुंगणंध्यायेद्दोषान्ग्रहभवान्हरे त् ॥ वेतसोत्थसमिद्धोमात्सहस्रंवृष्टिमाप्नुयात् ॥ ३५ ॥ धनार्थीजुहुयाद्धान्यैरन्ना र्थ्यन्नैर्हुनेद्ध्रुवम् ॥ कमलैरुत्पलैर्वापिहोमोवस्त्रप्रदोमतः ॥ ३६ ॥ क्षेत्राभिकांक्षी पललैर्गुडाभ्यक्तैर्हुनेत्सुधीः ॥ तमर्चयित्वागणपंहरिद्रांसैन्धवंवचाम् ॥ ३७ ॥ निष्कार्धार्धप्रमाणेनसम्पिष्यैतानिनित्यशः ॥ प्रसूत्युन्मिनगोमूत्रेसहस्रेणा भिमन्त्रयेत् ॥ ३८ ॥ स्नातामृतुस्नानदिनेविशुद्धांरक्तवाससम् ॥ पायये त्तांचसावन्ध्याप्रसूतेवत्सरात्सुतम् ॥ ३९ ॥ उपोष्यसोमग्रहणेभास्करग्रहणेथ वा ॥ कपिलाज्यंपलंचूर्णंवचायाश्चपलार्धकम् ॥ ४० ॥ एतत्सहस्रसञ्जप्तंसं हस्तंप्रपिबेत्सुधीः ॥ अवाप्यमेधांमहतींकवितांलभतेध्रुवम् ॥ ४१ ॥ गोचर्म्म मात्रंभूतेशंचोपलिप्यांशुकावृतम् ॥ कृत्वात्रस्थापयेत्कुम्भंपूजितंचन्दनादि भिः ॥ ४२ ॥ कुमारंवाकुमारींवादीपस्याग्रेनिधायच ॥ जपेत्तन्मन्त्रप्रवरमष्टो त्तरसहस्रकम् ॥ ४३ ॥ ततःस्पृष्टाकुमारीवाकुमारोवाब्रवीतितत् ॥ मनोगतं हिसकलंभविष्यंभूतमेवच ॥ ४४ ॥ वर्त्तमानंमनोरस्यप्रसादान्नात्रसंशयः ॥ मन्त्रान्तरमथोवक्ष्येवक्रतुण्डगणेशितुः ॥ ४५ ॥ मेघोल्कायतथास्वाहामन्त्रः प्रोक्तःषडक्षरः ॥ भार्गवोमुनिरस्याणोरनुष्टुप्छन्दईरितम् ॥ ४६ ॥ वक्रतुण्डग णेशोस्यदेवतादेववन्दितः ॥ मन्त्रवर्णैःषडङ्गानिषड्भिःकुर्य्याद्यथापुरा ॥ ४७ ॥ ध्यानपूजादिकंसर्वंमन्त्रीपूर्ववदाचरेत् ॥ अथातःसम्प्रवक्ष्यामिमन्त्रंद्वात्रिंश दर्णकम् ॥ ४८ ॥ रायस्पोषस्यदयितानिधिदोरत्नदोमतः ॥ रक्षोहनोवलग हनाथाद्यश्चषडक्षरः ॥ ४९ ॥ ऋष्यादिकंपुराप्रोक्तंध्यानपूजादिपूर्ववत् ॥ ज पेदर्कसहस्राणिजुहुयात्तद्दशांशतः ॥ ५० ॥ हविषाघृतसिक्तेनतदन्तेतोषयेद् गुरुम् ॥ एवंसिद्धेमनौमन्त्रीसाधयेदिष्टमात्मनः ॥ ५१ ॥ षडर्णप्रोक्तमन्त्रापि

सर्वंकाम्यंसमाचरेत् ॥ अथास्यभेदंवक्ष्यामिमन्त्रमन्यंतथाविधम् ॥ ५२ ॥ रायस्पोषस्यदयितानिधिदोरत्नदातुमान् ॥ रक्षोहणोबलगहनोवक्रतुण्डायहूमिति ॥ ५३ ॥ शायकैस्त्रिभिरष्टाभिश्चतुर्भिःपञ्चभीरसैः ॥ मन्त्रार्णैःस्युःषडङ्गानिमुन्याद्याःपूर्ववन्मताः॥५४॥ प्राग्वत्प्रयोगोनिधिदोविशेषेणमनुस्त्वयम् ॥ अथवक्ष्येवक्रतुण्डगायत्रींगणपप्रियाम् ॥ ५५ ॥ तत्पुरुषायविद्महेवक्रतुण्डायधीमहि ॥ तन्नोदन्तीप्रचोदयात् ॥ ५६ ॥ आद्यन्तयोर्जपेदेनांसर्वमन्त्रप्रसिद्धये ॥ अष्टोत्तरशतंनित्यंपुरश्चरणकृन्नरः ॥ ५७ ॥ अष्टाविंशतिसंख्याकांगणेशानदिनेजपेत् ॥ जपाद्यन्तेथाष्टसंख्यामन्यजापीसुसिद्धये ॥ ५८ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेपूर्वाम्नायगणपतिमन्त्रप्रकाशोष्टादशः ॥ १८ ॥

श्रीशिवउवाच ॥ अथातःसम्प्रवक्ष्यामिपश्चिमाम्नायसिद्धिदान् ॥ नानाश्चर्य्यकरान्काशीसंस्थितान्गणनायकान् ॥ १ ॥ महागणपतेरंशाश्चतुःषष्टिविनायकाः ॥ एकैकान्तेगृहीत्वातुयोगिनींचेटिकामपि ॥ २ ॥ स्वर्गभूमिंसमासाद्ययावदन्तंगृहंमम ॥ अष्टावरणकैरष्टौसंस्थिताःसिद्धिदायकाः ॥ ३ ॥ तत्राष्टौकाशिकाबाह्येस्वर्गभूमौसमास्थिताः ॥ योजनैकंबहिःकाश्यांकीर्तितःपरिधिस्तुसः ॥ ४ ॥ गंविघ्नायनमःप्रोक्तोमन्त्रएषषडक्षरः ॥ क्षिप्रप्रसादनसममष्टानांसाधनंस्मृतम् ॥ ५ ॥ वेदायुतंजपेन्मन्त्रंहोमश्चघृतपायसैः ॥ प्रयोगाःपूर्ववच्चात्रक्षिप्रमेवचसिद्धयः ॥ ६ ॥ गजाननायोगिनीतुयोगिनीरूपधारिणी ॥ नान्त्यर्णस्सबिन्दुस्तन्नाममन्त्रइतीरितः ॥ ७ ॥ प्रियाचेषस्यगदितातत्सिद्धिंकथयाम्यथ ॥ ॐशिवेशिवपत्नीतिशंशिवेस्वकरेतिच ॥ ८ ॥ पङ्कजंफलंदेहीतिमनोजवमिदंवदेत् ॥ चरणयोर्देहिदेहितुभ्यंनमइतीरितः ॥ ९ ॥ षट्त्रिंशदक्षरोमन्त्रोध्यानमस्यानिरूप्यते ॥ उद्यद्भानुसहस्राभांकमलासनपूजिताम् ॥ १० ॥ हस्तेमोहमयंपाशंदधानांप्रभजेशिवाम् ॥ जपेत्रिंशत्सहस्राणिशतपत्रीवनान्तरे ॥ ११ ॥ कौशुम्भकुसुमैर्होमस्तर्प्पणादिततश्चरेत् ॥ एवंसिद्धमनुर्मन्त्रीचेतिकान्तांप्रसाधयेत् ॥ १२ ॥ श्रावणेमासिचाष्टम्यांकृष्णपक्षेनिशान्तरे॥ पूजयित्वाजपेन्मन्त्रन्तदानादान्शृणोतिच॥१३॥

भीषयन्तिचभूतानितदाचेद्दृढमानसः ॥ तदानेकक्षुरैर्युक्ताप्रत्यक्षास्यशिवा भवेत् ॥ १४ ॥ तुष्टाफलन्ददात्येकन्तेनासौसाधकोत्तमः ॥ दूरंयातिक्षणेनैव मनसोप्यतिवेगवान् ॥ १५ ॥ अदृश्यःसर्वलोकानामपिराजगृहान्तरे ॥ एवंविघ्नगणेशेनमोहिताबहवोजनाः ॥ १६ ॥ विनायकायहृदयंगंबीजाद्यो ष्टवर्णकः ॥ वर्णलक्षम्पुरश्चर्य्यागणेशानांप्रकीर्त्तिता ॥ १७ ॥ सर्वासांयोगि नीनान्तुस्वबीजाद्याहृदन्तकाः ॥ नाममन्त्रास्स्मृतामन्त्रावर्णलक्षम्पुरस्क्रि या ॥ १८ ॥ गणेशस्यप्रभावेनसिद्धिःस्यात्पारलौकिकी ॥ योगिनीसेवना दत्रनविघ्नैःपरिभूयते ॥ १९ ॥ चेटिकाप्रोक्तफलदासर्वत्रैषविनिश्चयः ॥ सिंहास्यायोगिनीचात्रजटिलावेषधारिणी ॥ २० ॥ अथकाम्याचेटिकाया मनुंविंशतिवर्णकम् ॥ ब्रवीमिवर्णद्वितयात्पातालतलवासिनीम् ॥ २१ ॥ श्यामलेश्रीसिद्धिमितिदेहिस्वाहेतिचिन्तयेत् ॥ तालवनान्तरेस्वस्थांकरता लीमनोरमाम् ॥ २२ ॥ आलिभिःसहिताङ्गीतकारिणींश्यामलाम्भजे ॥ जपे दयुतसंख्याकंशान्तात्मातालकानने ॥ २३ ॥ तद्दशांशेनजुहुयात्सताली फलखण्डकैः ॥ कर्पूरागुरुयुक्तैश्चपूर्णंतत्रिःप्रदक्षिणम् ॥ २४ ॥ कुर्य्यात्तालीव नेतत्राथैतन्मध्येवनान्तरे ॥ ज्येष्ठामायांयजेद्रात्रौसहस्रद्वितयंमनुम् ॥ २५ ॥ अर्धरात्रेचरेद्धोमम्पूर्णंतालफलेनच ॥ झञ्झामारुतआयातिप्रकाशोतीव जायते ॥ २६ ॥ तन्मध्येतुमहादेवीश्यामाषोडशवार्षिकी ॥ नीलांशुकप रीधानाकस्तूरीचन्दनप्रिया ॥ २७ ॥ तान्नमस्कृतविश्वेशींतुष्टाभववरानने ॥ इत्युक्तामन्त्रिणेतुष्टासाददातिफलत्रयम् ॥ २८ ॥ परमानसविज्ञानविद्यांजा तिमनोरमाम् ॥ कन्दर्पवत्स्वरूपञ्चजगतीमोहनक्षमम् ॥ २९ ॥ गंवीरायनम श्चेतिप्रोक्तोमन्त्रःषडक्षरः॥योगिनीचास्यगृध्रास्याद्वेषतःसातपस्विनी॥३०॥ तस्याश्चेटीतुबालोक्ताएकोनत्रिंशदक्षरा ॥ ॐपञ्चवार्षिकीत्युक्ताबालेवचन माधुरीम् ॥ ३१ ॥ ममदेहिद्वयान्तेतुहुरुणांहुरुयुग्मकम् ॥ भुवनेशीद्वयंचेति ध्यानमस्यानिरूप्यते ॥ ३२ ॥ गोरोचनाचर्चिताङ्गांहेमगौरांसुरार्चिताम् ॥ चन्द्रावतंसांललितवचनांनेत्रसुन्दरीम् ॥ ३३ ॥ गोमयेनसमालिप्यशून्यगेह स्यभूमिकाम् ॥ चन्दनेनसमालिख्यतत्पश्चात्कुंकुमेनच ॥ ३४ ॥ तत्रदूर्वा

दलैःपूज्याबालालक्षंजपेत्ततः ॥ धत्तूरकुसुमैर्होमसहस्रैकंसमाचरेत् ॥ ३५ ॥
तद्बीजैःपूजनंकार्य्यंकौशेयवसनोयजेत् ॥ काषायवस्त्रोनग्नोवासिद्धमन्त्रःस
माचरेत् ॥ ३६ ॥ धत्तूरतैलेनाभ्यङ्गंपौर्णमास्यांविधूदये ॥ पुष्पस्यतद्गृहेग
त्वानग्नोबालामनुंजपेत् ॥ ३७ ॥ ततोरात्रिप्रान्तभागेदूरतःपञ्चवार्षिकी ॥
दृश्यतेसाङ्कुमारूढाधावंस्तत्सन्निधौव्रजेत् ॥ ३८ ॥ सापिमोदप्रहृष्टाहिचुम्बत्या
सुतदाननम् ॥ तच्चुम्बनात्तस्यजिह्वारससन्दोहिनीभवेत् ॥ ३९ ॥ तद्दृष्टतया
यातिमोहंराजाराज्येखिलोजनः ॥ व्याघ्रादिपशुजातीनांमोहनंतद्वचोभवे
त् ॥ ४० ॥ मुखंतस्यसमालोक्यसर्वेमुह्यन्तिजन्तवः ॥ गंस्तुरायनमश्चेतिप्रो
क्तोमन्त्रःषडक्षरः ॥ ४१ ॥ योगिनीकाकतुण्डास्यास्फुटाक्षीचेटिकेरिता ॥ वि
शालाक्षिगजान्तेतितिलेदेहियुगंवदेत् ॥ ४२ ॥ दारिद्र्यंदाहयेत्युक्त्वाह्रींस्फुटाहुं
कलत्रकम् ॥ वह्नेर्मन्त्रःसमाख्यातोनागनेत्रमिताक्षरः ॥ ४३ ॥ नारङ्गनारिके
लानावनेवाथनदीतटे ॥ अथवाचित्तटेरम्येताद्दृग्वनविभूषिते ॥ ४४ ॥ अथवा
कमलामोदभूषितेसुसरित्तटे ॥ लक्षमेकंजपित्वातुहोमंकुर्य्याद्दशांशतः ॥ ४५ ॥
नारिकेलैस्ततःसिद्धमन्त्रोमन्त्रीसमाचरेत् ॥ माघेमासितथाष्टम्यांकृष्णपक्षे
निशाविधौ ॥ ४६ ॥ सहस्रंप्रजपेन्मन्त्रंवेतालाःखड्गपाणयः ॥ साधकंतेभी
षयन्तिनभेतव्यंतदाक्कचित् ॥ ४७ ॥ वामहस्तासृजातांश्चसिञ्चेत्तेयान्तिदूर
तः ॥ पुनर्जपेसमारब्धेतदाकात्यायनीस्वयम् ॥ ४८ ॥ आयातिशवमुण्डा
निचर्वयन्त्यतिभीषणा ॥ वामजङ्घासृजासिञ्चेत्ततःसापिप्रयातिच ॥ ४९ ॥ पु
नर्जपेसमारब्धेभैरवीयातिभीषणा ॥ गजमुण्डञ्चर्वयन्तीवमन्तीशोणितम्भु
वि ॥ ५० ॥ तयासहसमायान्तिभीषणाभैरवास्तदा ॥ सिञ्चेद्भैरवांस्तांश्च
ततोभालोद्भवासृजा ॥ ५१ ॥ पुनःसहस्रंजप्त्वान्तेनारिकेलत्रयंहुनेत् ॥ त
दादेवीसमागत्यनारिकेलंप्रयच्छति ॥ ५२ ॥ तस्मिंस्थितेजगद्वश्यंजायतेन
गेन्द्रिश ॥ गमुक्त्वाप्रवदेन्ङेन्तवरदाक्षविनायकम् ॥ ५३ ॥ हृदन्तोरुद्रव
र्णोयंमन्त्रःप्रोक्तोस्ययोगिनी ॥ उष्ट्रग्रीवाभिधाप्रोक्तासैरन्ध्रीरूपधारिणी ॥
५४ ॥ वेदास्याहरितालाक्षीमन्त्रःसप्तदशाक्षरः ॥ तारंह्रींहरितालाक्षिवदेद्र
तिकलाततः ॥ ५५ ॥ दहयुग्मंवह्निजायांध्यानमस्यानिरूप्यते ॥ जपापुष्प

सहस्रौघद्योतमानांमहेश्वरीम् ॥ ५६ ॥ ध्यायेत्तांहरितालाक्षींसिद्धिदांशंवि
तन्वतीम् ॥ मृगप्रवेशसञ्जातोद्वितीयचरणेध्रुवम् ॥ ५७ ॥ आदिमेदिवसेरा
त्रौगत्वावैनिर्जनेवने ॥ दिवसेचसमानीयहरितालंमुखेस्वके ॥ ५८ ॥ लेप
यित्वाप्रथमतोजपेदयुतसंख्यकम् ॥ घृतकर्पूरकाश्मीरंकौशुम्भैर्होमंमाचरेत् ॥
५६ ॥ पूर्णंकुर्य्यात्कुलिङ्गेनहरितालरसस्पृशा ॥ ततोदेवीसमायातिलक्षि
ताहरितालिका ॥ ६० ॥ नानावाक्यैर्मोहयन्तींसाधकंतांनविश्वसेत् ॥ ततः
प्रभातसमयेमूलमन्त्रप्रभावतः ॥ ६१ ॥ भगिनींस्वांरतिकलांसाधकस्यप्रय
च्छति ॥ वशीभूतारतिकलागृहीत्वामन्त्रिणंध्रुवम् ॥ ६२ ॥ खेचरंकुर्वतीस
द्योनयेद्देशेविचिन्तिते ॥ यक्षिणीभूतवेतालभैरवानतिभैरवान् ॥ ६३ ॥ आ
नयतिक्षणेनैवमन्त्रिणोवश्यमादरात् ॥ देवकिन्नरगन्धर्वविद्याधरपुरेनयेत् ॥
६४ ॥ आनयेच्चपुनर्भूमौनानावस्तुप्रदर्शयेत् ॥ गमुक्काचेभवक्त्रायहृद
न्तोयंगजाक्षरः ॥ ६५ ॥ योगिन्यस्यहयग्रीवाभवेन्मासोपवासिनी ॥ अ
स्यास्तुकुण्डलीचेटीमन्त्रोविश्वमिताक्षरः ॥ ६६ ॥ ॐकुण्डनिनागवाहने
फुर्फुर्वह्निगेहिनी ॥ महानागसमारूढामानिम्नस्फुटलोचनाम् ॥ ६७ ॥ दी
प्यन्तीमन्धकारेचफूत्काराहतभूरुहाम् ॥ एकलिङ्गोमहादेवोयत्रस्यादबिल्व
कानने ॥ ६८ ॥ तत्रेमंप्रजपेन्मन्त्रंलक्षहोमंसमाचरेत् ॥ बिल्वमूलेनमन्त्र
स्यतदासिद्धिःप्रजायते ॥ ६९ ॥ रात्रौशिवचतुर्दश्यामेकान्तेशिवमन्दिरे ॥
जपेत्सहस्रत्रितयंहुनेत्तस्यदशांशतः ॥ ७० ॥ बिल्वमूलेनहोमान्तेकुण्डोना
ममहाफणी ॥ विस्तीर्णवदनोलम्बोदृश्यतेयुगविंशकः ॥ ७१ ॥ फणांप्रसा
र्य्यनागोसौपुनस्तिष्ठतिमन्त्रिणः ॥ पुरस्तात्तस्यनिर्भीत्यास्थातव्यंतेनमन्त्रि
णा ॥ ७२ ॥ फूत्काराणांसहस्राणिफणाभिःकुरुतेध्रुवम् ॥ तस्यवक्त्राच्छतं
ज्वालानिस्सरन्तिपुनःपुनः ॥ ७३ ॥ तथाविषाणिबहुधानीलपीतच्छवी
निच ॥ पललानिततोधूमपत्रिणश्चापिशाखिनः ॥ ७४ ॥ एवंविधंमहो
त्पातंदृष्ट्वाबिभ्यतिनैवचेत् ॥ तदासादृश्यतेदेवीतन्नागफणसंस्थिता ॥ ७५ ॥
तांस्तुत्वास्तुभिर्देवींनत्वासापिददातिच ॥ अमृतन्तोलकमितन्तेनस्यादजरा
मरः ॥ ७६ ॥ निधीन्पश्यतिभूमिस्थान्वाणीसत्याप्रजायते ॥ गमेकदन्तंके

न्तश्चहृदयान्तोगजाक्षरः ॥ ७७ ॥ वाराहीयोगिनीजातावेषाच्छूकरचारिणी ॥ अस्यदेवस्यचेटीतुप्रोक्तात्रमधुवासिनी ॥ ७८ ॥ त्रयोदशाक्षरोमन्त्रः प्रणवोमधुवासिनी ॥ कामदेवीतिचोच्चार्य्यक्लींस्वाहेतिमनुःस्मृतः ॥ ७९ ॥ स्तूयमानाचकामेनबिभ्रतीस्वर्णपङ्कजम् ॥ ध्यायेन्नवरसांदेवींमृगाक्षींब्रह्मसौख्यदाम् ॥ ८० ॥ मधुवृक्षतलेस्थित्वाजपेल्लक्षमितम्मनुम् ॥ वासन्तीकुसुमैर्होमोमधुपुष्पैस्तथापिवा ॥ ८१ ॥ कर्पूरागुरुसम्मिश्रैःकुर्य्यादयुतसङ्ख्यया ॥ मधुमासिसिताष्टम्यामेकान्तेनिर्जनेजपेत् ॥ ८२ ॥ मधुवृक्षतलेनीरेगोदावर्य्याविशेषतः ॥ होमःप्राग्वत्सहस्रंस्याज्जपेन्नवसहस्रकम् ॥ ८३ ॥ मधुनामातदायक्षोज्वालामालेतिभीषणः ॥ माहिषेणविषाणेनदक्षहस्तेनसम्पिबेत् ८४ ॥ रक्तञ्चवामहस्तेनसुराम्पिबतिभीषणः ॥ जिह्वयैवचयक्षोहिलताद्वृक्षादिगुल्मकान् ॥ ८५ ॥ उत्पाट्यचर्वमाणोहिभक्ष्यन्देहीतिभाषते ॥ नभयंप्राप्नुयात्तस्यमिथ्यात्रासादिभिस्तदा ॥ ८६ ॥ तस्मैरक्तंप्रदातव्यम्मन्त्रिणास्वकरोद्भवम् ॥ ततस्तस्मिन्गतेयक्षेदेवीवृक्षतलेतदा ॥ ८७ ॥ प्रत्यक्षाजायतेतस्मैदद्यात्पौष्पञ्चकार्मुकम् ॥ वितस्तिमात्रन्तेनस्यात्सर्वमोहनकारकः ॥ ८८ ॥ धनन्देहम्प्रयच्छन्तितस्मैकामविमोहिताः ॥ गश्चलम्बोदरंङेन्तंहृदयान्तोष्टवर्णकः ॥ ८९ ॥ योगिनीशरभास्यास्यज्वालामालावपुर्धरा ॥ चेटीतुमन्थराप्रोक्तामन्त्रोजिनमिताक्षरः ॥ ९० ॥ ॐमन्थरेवदेत्पश्चादिक्षुक्षितिनिवासिनि ॥ ममेष्टवरयुग्मञ्चतुंथंमंवह्निगेहिनी ॥ ९१ ॥ करेवहन्तीकोदण्डमैक्षवंलोललोचना ॥ जपाकुसुमशोणाङ्गीममचित्तेस्तुमन्थरा ॥ ९२ ॥ इक्षुवाटीस्थलञ्चैवगुडपाकस्थलंहियत् ॥ रसपञ्चसमीपेतुरचयित्वाशुभंस्थलम् ॥ ९३ ॥ लक्षमात्रम्पुरश्चर्य्याइक्षुखण्डैश्चहोमयेत् ॥ मल्लारिषष्ठीरात्रौतुजपेत्सोमेशतद्वयम् ॥ ९४ ॥ तद्दशांशैर्हुनेदिक्षुखण्डैरायातिमन्थरा ॥ ददातिमधुपात्रंहिदिव्यमाध्वीकमिश्रितम् ॥ ९५ ॥ तत्पूजयेत्त्रिसन्ध्यंहितन्मुखान्मन्थरावदेत् ॥ भाषयास्पष्टयादद्यात्पूजान्तेयन्मनोगतम् ॥ ९६ ॥ भूतञ्चवर्त्तमानञ्चभविष्यंनात्रसंशयः ॥ यदायदातिसङ्कष्टञ्जायतेमन्त्रिणोध्रुवम् ॥ ९७ ॥ तदातदातुतान्देवींमधुपानैःप्रपूजयेत् ॥ सङ्कष्टंहरतेतूर्णंविग्रहादौप्रपूजयेत् ॥ ९८ ॥

रसपञ्चसमीपेतुभूमिपूजांविशेषतः ॥ कुंकुमैश्चापिसिन्दूरैरक्चन्दनवन्दनैः ॥ ६६ ॥ मध्यन्दिनीजपापुष्पकरवीरप्रसूनकैः ॥ यावदालोहितंवस्तु तावद्भिःपरिपूजयेत् ॥ १०० ॥ वक्ष्येथकालिकप्रोक्तान्स्थितानष्टौविनायकान् ॥ नमोभगवतेपूर्वङ्न्तन्तन्नामचोच्चरेत् ॥ १ ॥ अष्टानामपिमन्त्रोयमैन्द्र्यां सिद्धिविनायकः ॥ उलूकीयोगिनीतत्रनापितारूपधारिणी ॥ २ ॥ विधिस्तत्रसमाख्यातोह्यणिमाद्यष्टसिद्धयः ॥ साधकोयांसिद्धिमिच्छेत्तद्युक्ताय पदंवदेत् ॥ ३ ॥ मन्त्रमध्येवर्णलक्षंजपेद्धोमंसमाचरेत् ॥ महागणपवत्सर्वंतस्तांसिद्धिमाप्नुयात् ॥ ४ ॥ काश्यामाग्नेयदिग्भागेविज्ञेयोर्कविनायकः ॥ योगिनीचशिवाएवमूर्त्तिकारूपधारिणी ॥ ५ ॥ हंसवागस्यचेटीस्यान्मन्त्रो स्याद्वादशाक्षरः ॥ ॐहंसगेंत्रोधमितिवाक्श्रीबीजाग्निवल्लभाः ॥ ६ ॥ शतचन्द्रसमज्योत्स्नांचन्द्रार्धकृतशेखराम् ॥ वरदाभयहस्तांचसंसेवेहंसगामिनीम् ॥ ७ ॥ सहस्राणांतुपञ्चाशत्पुरश्चरणमस्यतु ॥ अयुतार्धन्ततोहोमंपञ्चाक्षैराज्यसंयुतैः ॥ ८ ॥ कुर्य्याद्धोमंयवैस्तद्वत्पञ्चयुक्तसरित्तटे ॥ हिरण्यकशिपुप्राणनाशकालेतितौध्रुवम् ॥ ९ ॥ सन्ध्यामारभ्यजप्तव्यंप्रहरात्रितयावधि ॥ भूर्ज्जपत्रैश्चहोतव्यंपञ्चाक्षैःखखखाष्टकम् ॥ १० ॥ ततोहंससमारूढाशतचन्द्रसमप्रभा ॥ सादेवीमन्त्रिणेतस्मैपञ्चमालांप्रयच्छति ॥ तन्मालाजपतोमन्त्रीजायतेशास्त्रपारगः ॥ ११ ॥ अज्ञानाच्चेत्सगर्वोपिजायतेसत्त्वमस्यतु ॥ दुर्गयास्थापितःकाश्यांयाम्येदुर्गविनायकः ॥ १२ ॥ मायूरीयोगिनीतत्रलोकानामौषधप्रदा ॥ ॐह्रीन्दुमुक्तादुर्गायैहृदयान्तोष्टवर्णकः ॥ १३ ॥ मुनिःप्रोक्तोनारदाख्योगायत्रीछन्दईरितम् ॥ दुर्गादेवीययादुर्गवधार्थंसेवितोगणः ॥ १४ ॥ प्रणवंपूर्वमुच्चार्य्यदीर्घषट्कसमन्वितम् ॥ क्रमादाद्यन्तयोर्मायांदुर्गायैचेतिमध्यतः ॥ १५ ॥ पल्लवाद्याःषडङ्गानिचेतिमन्त्राःप्रकीर्तिताः ॥ सिंहासनांमरकतद्युतिंचन्द्रार्धशेखराम् ॥ १६ ॥ शङ्खचक्रधनुर्बाणान्दधतींत्रीक्षणांभजे ॥ अष्टपत्राम्बुजद्वन्द्वेचतुरस्रत्रयावृते ॥ १७ ॥ चतुर्द्वारसमायुक्तेकुंकुमादिभिरुद्धृते ॥ कुर्य्यात्स्वपीठपूजायांतवशक्तिसमर्चनम् ॥ १८ ॥ प्रभासमाजयासूक्ष्माविशुद्धानन्दिनीतथा ॥ सुप्रभाविजयापूर्वंदलात्सर्वार्थसिद्धिदा ॥ १९ ॥

एवंवह्निसरक्षोवह्नीनैरद्भिःप्रपूजयेत् ॥ ॐवज्रनखदंष्ट्रायुधायप्रोक्त्वामहाप दम् ॥ २० ॥ सिंहायहुंफट्हृदयमूनविंशतिवर्णकः ॥ सिंहमन्त्रःसमाख्यातो तेनसिंहंप्रपूजयेत् ॥ २१ ॥ मूर्त्तिमावाह्यतस्यान्तुपूजयेच्चन्दनादिभिः ॥ प्र थमावृत्तिरङ्गैःस्याद्द्वितीयातुप्रभादिभिः ॥ २२ ॥ सबिन्दुनाद्यवर्णाद्यैर्जयादी नान्तुनामभिः ॥ ङेन्तैर्नमोन्तैस्तृतीयावरणंपरिकीर्तितम् ॥ २३ ॥ जयाचवि जयाकीर्तिःप्रीतिश्चापिप्रभामता ॥ श्रद्धामेधाश्रुतिश्चापिचतुर्थावरणंक्रमा त् ॥ २४ ॥ शङ्खंचक्रंगदांखड्गंपाशांकुशशरान्धनुः ॥ बाह्यवीथीद्वयेलोक पालानस्त्राणिचक्रमात् ॥ २५ ॥ जितेन्द्रियोहविष्याशीविमुलक्षंजपेन्मनुम् ॥ तत्सहस्रंतिलैःस्वाद्वक्तैलिप्तैर्वापयोन्धसा ॥ २६ ॥ जुहुयादेधितेवह्नौतर्प्पणा दिततश्चरेत् ॥ एवंसिद्धेमनौमन्त्रीप्रयोगानाचरेत्सुधीः ॥ २७ ॥ यथोक्तेनवि धानेननवकुम्भान्मनोरमान् ॥ पञ्चरत्नसमायुक्तान्नवस्थानेषुविन्यसेत् ॥ २८ ॥ मन्त्रीदुर्गांयजेन्मध्येष्वन्यत्रचजयादिकाः ॥ चन्दनाद्यैःसमभ्यर्च्यधूपदीपै श्चमन्त्रवित् ॥ २९ ॥ अभिसिञ्चेत्स्त्रियंसाध्यंराजानंवाशिशुंबुधः ॥ विजयश्री समायुक्तोराजाभवतिनान्यथा ॥ ३० ॥ भूतापस्मारवेतालपिशाचाद्यैर्विमुच्य ते ॥ बन्ध्याचललनापुत्रंविनीतंप्राप्नुयाच्छुभम् ॥ ३१ ॥ आमयान्मुच्यतेम र्त्योदीर्घायुश्चनसंशयः ॥ अनेनैवविधानेनजनानामनुरञ्जनम् ॥ ३२ ॥ दुर्गा मनुंचभजतांबह्वायुश्चाघनाशनम् ॥ काश्यानैर्ऋत्यभागेतुज्ञेयश्चण्डविनाय कः ॥ ३३ ॥ वेश्यावृत्तिकरीचास्ययोगिनीचाकितानना ॥ हंसीनाम्नीतस्यचेटी तस्याःसाधनमुच्यते ॥ ३४ ॥ शुधाकरसमज्योत्स्नांशुकशोभितसत्कराम् ॥ वामेहंसंदधानांचपीनोन्नतपयोधराम् ॥ ३५ ॥ एकान्तेचनदीतीरेजपेन्मन्त्र युतत्रयम् ॥ मुस्तकन्दैःसहोशी रैर्दशांशंहोममाचरेत् ॥ ३६ ॥ एवंसिद्धप्रयो गस्तुनदीतीरेचकानने ॥ गहनेबिल्ववृक्षाणामेकान्तेप्यथवासुधीः ॥ ३७ ॥ तुङ्गभद्रानदीतीरेयत्रलक्ष्मीश्वरःशिवः ॥ ३८ ॥ तत्रस्नात्वातटेतस्याह्यज्ञा द्यांचदिनंयजेत् ॥ भानोर्वारेनिशिहुनेत्प्राग्वद्देवींतदायजेत् ॥ ३९ ॥ न त्वास्तुत्वाप्रार्थयित्वानिर्भयोजनवर्जितः ॥ ददातिमन्त्रिणेशीघ्रंस्फटिकाख्यं मनोहरम् ॥ ४० ॥ तस्मिन्पश्यतिभूतंचभविष्यंवर्त्तमानकम् ॥ तथास्वस्यप

रस्यापिसर्वज्ञोजायतेनरः ॥ ४१ ॥ काश्याःपश्चिमदिग्भागेसदेहलिविनाय
कः ॥ योगिनीत्वष्टवक्रास्यवर्णिकर्म्मप्रकुर्वती ॥४२॥ विचित्रानामचेट्यस्य
त्रयोविंशतिवर्णकः॥ह्रींविचित्रेचित्रचैलेचैलंदेहिपदंवदेत्॥४३॥वायुंपूरययु
ग्मंचहुंस्वाहेत्युदितोमनुः ॥ अयुतंप्रजपेत्तीरेसरितस्तद्दशांशतः ॥ ४४ ॥
कमलाक्षैर्भवेद्धोमस्तत्तत्काम्यंसमाचरेत्॥चैत्रेचाश्विनमासेचचतुर्दश्यांनिशा
न्तरे ॥ ४५ ॥ सरस्तीरेजपेन्मन्त्रंसमस्तांरात्रिमन्ततः ॥ ततोदेवीसमायाति
विचित्रवसनाञ्चलम् ॥ ४६ ॥ ददातितत्पूजयित्वारात्रौसंस्थापयेद्गृहे ॥
तद्गृहंपूर्य्यतेवस्त्रैराजमन्दिरगैरपि ॥ ४७ ॥ काश्यावायव्यकोणेयमुद्दण्डा
ख्योविनायकः ॥ योगिनीकोटराक्ष्यस्यचेटीस्याद्धिपूर्वकम् ॥ ४८ ॥ केश
मुञ्चार्य्यचावर्त्तनखेरेहिपदंततः ॥ ह्रींश्रींस्वाहेतिमन्त्रोथतस्यध्यानमिहोच्य
ते ॥ ४९ ॥ स्वच्छतोयैश्चसम्पूर्णंवामेधत्तेकमण्डलुम् ॥ स्वर्णकुण्डलक्षिप्ता
द्यगण्डान्तंविधिपूर्वकम् ॥ ५० ॥ जपेल्लक्षमितंमन्त्रंनदीतीरेमनोरमे ॥
होमयेच्चत्रिमधुरैःप्रयोगंतचमाचरेत् ॥ ५१ ॥ कृष्णातीरेमहातीर्थेथवापञ्चनदे
शुभे ॥ माघमासेद्वितीयायांकृष्णपक्षेनिशान्तरे ॥ ५२ ॥ कृत्वातृणकुमूलं
तुनिक्षिपेत्तत्स्थलान्तरे ॥ कृत्वासायन्तनंकर्मकुसूलंपूजयेत्ततः ॥ ५३ ॥ तत्र
देवींस्मरेन्मन्त्रीकुमूलान्तर्विशेद्ध्रुवम् ॥ तत्रबद्धासनोयोगीशीतबाधामुपेक्ष्य
हि ॥ ५४ ॥ जपेत्पञ्चसहस्रंतुदेवतांविधिपूर्वकम् ॥ पञ्चवक्रांत्रिनेत्रांचपश्ये
दष्टभुजांशिवाम् ॥ ५५ ॥ ततःसादेवतातस्मैददातिचकमण्डलुम् ॥ जलपू
र्णंततस्तस्यजलेनासेचयेच्चयम् ॥ ५६ ॥ सनरस्तत्क्षणादेवससजन्मसमुद्भवा
म् ॥ जातिंवदतितत्कालंतत्तत्कर्म्मकरोतिच ॥ ५७ ॥ काश्यामुत्तरभागेन
पाशपाणिर्विनायकः ॥ योगिन्यस्यभवेत्कुब्जाव्यालग्राहास्वरूपतः ॥५८॥
यदानमहिषंशक्रापातितुंविन्ध्यवासिनी ॥ वज्रस्तदाकृतोनेनमहिषोविनिपा
तितः ॥ ५९ ॥ तस्मान्महिषमर्द्दिन्यामन्त्रंवक्ष्येसमासतः ॥ महिषमर्दिनीत्यु
क्त्वास्वाहान्तोऽष्टाक्षरोमनुः॥६०॥मार्कण्डेयोमुनिश्छन्दोगायत्रंदेवतंमनोः॥
सुरासुरनुतादेवीप्रोक्तामहिषमर्द्दिनी ॥ ६१ ॥ मर्दिनिहुंफट् हृदयंपरिकीर्त्ति
तम् ॥ महिषारेशानिहुंफट्शिरोगंसमुदीरितम् ॥ ६२ ॥ मन्त्रैरेभिर्जातियुक्तैः

पञ्चाङ्गानिप्रकल्पयेत् ॥गारुडोपलदीप्तिंचमणिमौक्तिककुण्डलाम्॥६३॥तिष्ठ न्तींमाहिषेशीर्षेनौमिभालविलोचनाम् ॥ चक्रंशङ्खंकृपाणंचबाणंशूलंचतर्ज नीम्॥६४॥ कार्मुकंखेटकंहस्तैर्बिभ्रतींशशिशेखराम् ॥ जटामुकुटशोभाढ्यांस र्वाभरणभूषिताम् ॥ ६५ ॥ पीताम्बरधरांदेवींपीनोन्नतकुचद्वयाम् ॥ ततःपूर्वो दितेपीठेद्येन्महिषमर्द्दिनीम् ॥६६॥ प्रथमावृत्तिरङ्गैःस्याद्दुर्गाद्याभिःपरेरिता॥ स्वाग्रादिभ्रादक्षिण्येनदुर्गाचवरवर्णिनी ॥ ६७ ॥ आर्य्याकनकप्रभाख्याकृत्ति काचाभयप्रदा ॥ कन्यास्वरूपाआंईंऊंदिंघोंदिस्वरपूर्विकाः ॥ ६८॥ क्लीबान्तर हितंचात्रप्राद्यंदीर्घस्वराष्टकम् ॥ परादिकंप्रथमतःसबिन्दुंवर्णमुच्चरेत् ॥ ६९ ॥ ततोदेव्यायुधंप्रोक्त्वातृतीयावरणेयजेत्॥चतुर्थीलोकपालैःस्यात्पञ्चमीचतदा युधैः ॥ ७०॥ प्रजपेद्वसुलक्षंचतत्सहस्रंतिलान्हुनेत् ॥ एवंसिद्धेमनौमन्त्रीप्रयो गानाचरेत्ततः ॥ ७१ ॥ तिलहोमाद्वशीकारोनृणांस्त्रीणांभवेद्ध्रुवम् ॥ आम यान्मुच्यतेमर्त्यःसद्यःसर्षपहोमतः ॥ ७२ ॥ पद्महोमात्तथाराज्ञःसंग्रामेविजयो भवेत् ॥ दूर्वाहोमेनमर्त्यानांरोगशान्तिर्भवेद्ध्रुवम् ॥ ७३ ॥ ब्रह्मवृक्षोत्थकुसुमै र्लभतेपुष्टिमुत्तमाम्॥धान्यहोमेनधान्यानिकाकपक्षहुतेनच॥७४ ॥विद्वेषोजा यतेलोकेचात्यन्तसुहृदोरपि ॥ शत्रुर्गच्छतिपञ्चत्वंसत्यंमरिचहोमतः ॥ ७५ ॥ एवंयोभजतेदेवींदुर्गांमहिषमर्दिनीम् ॥ सनाशयेत्क्षुद्रभूतान्चौरादीन्दर्श नादपि ॥ ७६ ॥ उपासितोपासितातिनिकटेद्रुतसिद्धिदा ॥ काश्यामीशा नदिग्भागेज्ञेयःसर्वविनायकः ॥ ७७ ॥ दासीरूपंसमास्थायस्थिताविकटलो चना ॥ योगिनीजयदुर्गाचसिद्धिदातत्रसंस्थिता ॥ ७८ ॥ तारोदुर्गेद्वयंप्रो क्त्वारक्षिणीत्यग्निगेहिनी ॥ दशाक्षरोमनुःप्रोक्तोभजतामिष्टसिद्धिदः ॥७९॥ नारदर्षिर्विराट्छन्दोजयदुर्गाचदेवता ॥ ताराद्यैःपंचयमन्त्रस्यपदैःसर्वेणस म्मता ॥८० ॥ जातियुक्ताचाङ्गक्लृप्तिःकाम्येकर्म्मणयथोच्यते ॥ दुर्गेतिहृदयं प्रोक्तंदुर्गाशिरईरितम् ॥ ८१ ॥ दुर्गायैस्याच्छिखावर्म्मभूतरक्षाक्षिकीर्ति ता ॥ ८२ ॥ तारादिदुर्गद्वितयंरक्षिण्यक्षिप्रकीर्त्तितम् ॥ तारादियुगलंदुर्गे राक्षिण्यस्त्रमुदीरितम् ॥ ८३ ॥ मेघश्यामांग्लौकिरीटांत्रिनेत्रांसिंहवाहिनी म् ॥ चक्रंदरंखड्गशूलौबाहुभिर्बिभ्रतींभजे ॥ ८४ ॥ दौर्गेपीठेयजेद्देवीमुक्तमा

र्गेणमन्त्रवित् ॥ प्रजपेत्पञ्चलक्षंचतद्दशांशंहुनेद्घृतैः ॥८५॥ तर्प्पणादिततः कुर्य्यात्ततःसिद्धोभवेन्मनुः ॥ ततःसिद्धमनुर्मन्त्रीप्रयोगानाचरेत्ततः ॥ ८६ ॥ इमंमनुंजपेद्भूयःप्रविशेच्छत्रुसङ्गरम् ॥ अशेषेणरिपुंहन्यान्नात्रकार्याविचारणा ॥ ८७ ॥ विवादेव्यवहारादौयशोविजयदोभवेत् ॥ अनयाविद्ययाजसापताकाध्वजदुन्दुभीः ॥ ८८ ॥ शृङ्गंशङ्खादिकंसर्वंयानंसेनाचसैन्यपः ॥ सञ्जप्तस्तत्रसंग्रामेसम्यग्विजयदोभवेत् ॥ ८९ ॥ अथास्याःप्रोच्यतेभेदोयदाघोरस्थलेपतेत् ॥ ऋणंवाजायतेताराद्वमःप्रोक्त्वात्रपूर्ववत् ॥ ९० ॥ द्वादशार्णोभवेन्मन्त्रःसंग्रामविजयप्रदः ॥ मुन्याद्यंपूर्ववत्प्रोक्तंध्यानपूजादिकंतथा ॥ ९१ ॥ व्यस्तेनचसमस्तेनमन्त्रेणाङ्गानिषट्क्रमात् ॥ काशीप्रान्तस्थिताएतेकीर्तितागणनायकाः ॥ ९२ ॥ देहलीसञ्ज्ञगणपेनिकटेन्येतुषोडश ॥ विनायकास्तुकाश्यांवैवेदकर्म्मप्रवर्त्तकाः ॥ ९३ ॥ तान्त्रिकाणांनात्रसिद्धिर्वामिनांतुविशेषतः ॥ वेदस्वनादिस्तस्यात्रद्रुतंसिद्धिःप्रजायते ॥ ९४ ॥ अभक्तविघ्नकर्ताचभक्तानांविजयप्रदः ॥ पापिनांतापहर्ताचवाममार्गप्रसाधकः ॥ ९५ ॥ तपोवनपरित्राताशीतारक्षाकरस्तथा ॥ आयुःकर्त्तारोगहर्त्तानिद्धिदाताद्विजाधिपः ॥ ९६ ॥ तुन्दिलोविश्वरक्षाकृद्गणनाथोगणाधिपः ॥ दुग्धदश्चेतिनामानिसर्वसिद्धिकराणिच ॥ ९७ ॥ हृदन्तानिप्रजप्तानिमन्त्रार्णायुतसंख्यया ॥ नामानुसारिणीसिद्धिरवश्यंस्यान्नसंशयः ॥ ९८ ॥ अथातःसम्प्रवक्ष्यामियेविमुक्तान्तसंस्थिताः ॥ सीमाविनायकाअष्टौमन्त्रस्तेषांनिरूप्यते ॥९९॥धराबीजंसमुच्चार्य्यतत्त्वद्वयंसमुच्चरेत् ॥ ङेन्तंतन्नामगंप्रोक्त्वाहृदयान्तोमनुःस्मृतः ॥ ५०० ॥ अविमुक्तेपूर्वदिशिलम्बोदरविनायकः ॥ शुष्कोदरीयोगिनीतुधात्रीरूपंसमाश्रिता ॥ १ ॥ तत्रैवशूलिनीदुर्गातस्यास्साधनमुच्यते ॥ ज्वलद्वयंशूलिनीतिवदेद्दुष्टग्रहेततः ॥ २ ॥ हुंफट्स्वाहेतिमन्त्रोयंतिथिवर्णःप्रकीर्त्तितः ॥ मुनिर्दीर्घतमाश्छन्दःककुबुक्तंचदेवता ॥ ३ ॥ शूलिन्याद्यामहादुर्गासर्वारिष्टविनाशिनी ॥ दुर्गेस्याद्धृदयंशीर्षंवरदेविन्ध्यवासिनी ॥ ४ ॥ शिखावर्म्मासुरान्तेचदमन्यन्तेततोवदेत् ॥ शुद्धंप्रियंवदेत्पश्चात्त्रासयरूपमीरितम् ॥ ५ ॥ अस्त्रंचदेवसि

द्धान्तेवदेन्मन्त्रीसुपूजिते ॥ नन्दिन्यन्तरेरक्षयुग्मंसमस्तयोगेश्वरीतिच ॥६॥
शूलिनीतिपदाद्याश्चवर्म्मास्त्रान्ताःप्रकीर्त्तिताः ॥ पञ्चाङ्गमत्रमुद्दिष्टमेवंन्यस्तं
चमन्त्रिणः ॥ ७ ॥ रक्षाकृद्ग्रहदोषघ्नमङ्गकर्तुर्भवेद्ध्रुवम् ॥ एवंन्यस्यशरीरादौ
ध्यायेद्दुर्गांसुरैर्नुताम् ॥ ८ ॥ गदांदरमरिंखङ्गबाणान्शूलंचखेटकम् ॥ करा
लिकांपाशधनुर्दिग्भिर्हस्तैश्चबिभ्रतीम् ॥ ९ ॥ मेघाभामिन्दुमुकुटांसिंहा
रूढांचतसृभिः॥ कन्यकाभिःपरिवृतांत्र्यक्षांभूषणभूषिताम्॥१०॥एवंध्यात्वापु
नर्न्यासान्कृत्वाकुर्वीतसाधकः॥दुर्गापीठेपुराप्रोक्तेध्यात्वादेवींप्रपूजयेत्॥११॥
दुर्गाद्याभिर्द्वितीयास्यादायुधाद्यैःसमन्ततः॥दुर्गाचवरदाविन्ध्यवासिन्यसुरम
र्दिनी ॥ १२ ॥ प्रोक्तायुद्धप्रियादेवसिद्धाद्यापूजितापिच ॥ नन्दिनीसुमहा
योगेश्वरीतिगदिताश्चताः ॥ १३ ॥ चक्रंशङ्खंखङ्गगदेशरांश्चापंत्रिशूलक
म् ॥ पाशंदेव्यग्रतश्चैतान्पूजयेच्चप्रदक्षिणम् ॥ १४ ॥ दिशादिनाथैर्वज्राद्यैः
पञ्चावरणपूजितम् ॥ वर्णलक्षंजपेन्मन्त्रंजुहुयात्तद्दशांशतः ॥ १५ ॥ आज्ये
नसाज्यहविषातर्पणादिततश्चरेत् ॥ आराध्यविप्रान्विधिवद्भक्त्याभ्यर्च्यगु
रुंततः ॥ १६ ॥ एवंसिद्धमनुर्मन्त्रीप्रयोगान्निजवाञ्छितान् ॥ विदधीत
विधानेनगुरोराज्ञापुरःसरम् ॥ १७ ॥ शूलाद्यायुधसंयुक्तामुग्रास्यांशूलिनींत
था ॥ विचिन्त्यप्रजपेन्मन्त्रंयस्तंस्पृष्ट्वाविधानतः ॥ १८ ॥ तमाविश्यक्षणंसर्वं
वदेत्पश्चाद्विनश्यति ॥ मन्त्रावृत्त्यातदानींचभूतसङ्घःपलायते ॥ १९ ॥ स्मृ
त्वाचरोगिणांमध्येशूलिनींस्वायुधैर्युताम् ॥ जपतोविद्रवन्त्याशुग्रहश्चोपग्र
हादयः ॥ २० ॥ क्षेमंकरींपूजयित्वामनुमेनंजपेत्सुधीः ॥ परायुधानिगृह्णाति
सेनानिश्चेष्टिताभवेत् ॥ २१ ॥ तिलयुक्तैस्सर्षपैश्चवैरिनामसुसंयुतैः ॥ लक्षं
प्रजुहुयाच्छत्रुर्यमस्यातिथ्यमाप्नुयात् ॥ २२ ॥ त्रिस्वादुयुक्ततिलैरष्टसहस्रंप्रत्य
हंहुनेत् ॥ शक्तिरस्याप्रतिहतावत्सरात्प्राग्भवेदलम् ॥ २३ ॥ घृतेनाष्टशतंम
न्त्रीजुहुयाद्वाञ्छितंलभेत् ॥ वत्सरात्प्राग्दूर्वयाचमधुरत्रययुक्तया ॥ २४ ॥
सम्यगष्टोत्तरशतंजुहुयादीप्सितंलभेत् ॥ अष्टोत्तरशतंमन्त्रीगुलिकांगोमयस्य
च ॥ २५ ॥ जुहुयात्सप्तदिवसैरिष्टैःसङ्गस्तदादरात् ॥ अस्पृष्टभूम्यन्तरिक्षेगृही
त्वागोमयंशुभम् ॥ २६ ॥ त्रिसहस्रमितंजप्तंयियासोर्द्वारिसङ्खनेत् ॥ तस्यसं

स्तम्भनंतत्रभवनेनात्रसंशयः ॥ २७ ॥ सेनामुखेनिखातंचसेनास्तम्भंकरोत्यलम् ॥ ग्रामंवानगरंगच्छेत्संस्मरेदम्बिकांसुधीः ॥ २८ ॥ पानीयान्नकराचैवप्रसन्नांप्रजपेन्मनुम् ॥ तर्पयित्वाप्रविष्टस्तंप्राप्नुयान्मिष्टभोजनम् ॥ २६ ॥ सहस्रभृत्यवर्गेणप्राप्नुयान्नात्रसंशयः ॥ अर्कवृत्तसमिद्भिश्चत्रिमध्वक्ताभिरुक्तवत् ॥ ३० ॥ जुहुयाद्दविसाहस्रंयान्समुद्दिश्यसाधकः ॥ भवन्त्येवहितेवश्यास्तथाश्वत्थसमिद्वरैः ॥ ३१ ॥ प्रसन्नचेताश्चातिलैःपूर्वकर्म्मणिवाहुनेत् ॥ दुर्गाकल्पोदितान्सर्वान्प्रयोगान्साधयेत्सुधीः ॥ ३२ ॥ अथवक्ष्येकूटदन्तंगणेशंकूटसिद्धिदम् ॥ योगिन्यस्यज्वलज्जिह्वानर्त्तकीरूपधारिणी ॥ ३३ ॥ गृध्रदुर्गास्यनिकटेसाधकाभीष्टदायिनी ॥ तारोनमोभगवतिज्वालामालिनिसंवदेत् ॥ ३४ ॥ गृध्रगणपतिंवृत्तेस्वाहान्तोद्विनखाक्षरः ॥ त्रिचतुःपञ्चवस्वक्षिमितैर्वर्णैर्मनोःक्रमात् ॥ ३५ ॥ पञ्चाङ्गानिसुधीरस्यजातियुक्तानिकल्पयेत् ॥ अन्यच्छूलिनिदुर्गावत्सर्वमस्याःप्रकीर्त्तितम् ॥ ३६ ॥ अथातःसम्प्रवक्ष्यामिदेवंशालकटंकटम् ॥ स्वदंष्ट्रायोगिनीचास्यनानासङ्गीतकोविदा ॥ ३७ ॥ विधात्रीचेटिकाचास्यतस्याःसाधनमुच्यते ॥ ओंविधात्रिनीरक्षीरविधायिनिपदंवदेत् ॥ ३८ ॥ स्वाहान्तस्थितिवर्णोयंजपोलक्षमितोमतः ॥ धात्रीतरुसमीपस्थांविधात्रींकमलासनाम् ॥ ३६ ॥ विशाललोचनांवन्देनीरक्षीरविधायिनीम् ॥ नदीतीरेतुयत्रास्तेधात्रीवृक्षोमनोरमे ॥ ४० ॥ सफलस्तस्यभूमौतुकार्त्तिक्यांपौर्णिमातिथौ ॥ सोमवारेतदामन्त्रीनिशायांत्रिशतंजपेत् ॥ ४१ ॥ होमोधात्रीफलैःकार्य्यस्ततस्तुतरुतोध्रुवम् ॥ जायतेहिमहाशब्दःप्रसन्नास्मीतिशोभनः ॥ ४२ ॥ तन्मन्त्रपठनान्मन्त्रीनीरक्षीरंभजेदिह ॥ इत्युक्तंकिलसम्भूत्वासम्पठेन्मन्त्रमुत्तमम् ॥ ४३ ॥ नीरान्वितंततोक्षीरंजायतेक्षीरमादरात् ॥ अथातःसम्प्रवक्ष्यामिकूष्माण्डाख्यविनायकम् ॥ ४४ ॥ बालग्रहपतिश्चास्ययोगिनीवारुणानना ॥ वेणुवादनमेवेयंकृत्वाकाश्यांसदारतिः ॥ ४५ ॥ चेटीतुवैनतेयाक्षीतस्याःसाधनमुच्यते ॥ तारंचवैनतेयाक्षिसर्पसेवितइत्यपि ॥ ४६ ॥ नागदेवींङेन्तमुक्त्वास्वाहान्तोष्टादशाक्षरः ॥ नानाकमलसर्पादिवेष्टिताविन्ध्यवासिनीम् ॥ ४७ ॥ ध्यायामिवैनतेयाक्षींविषदोषहरांशिवाम् ॥

चतुःषष्टिसहस्राणिपुरश्चरणमस्यतु ॥ ४८ ॥ श्रावणेमासिनागानांपञ्चमी याप्रकीर्त्तिता ॥ तस्यांजपेन्महामन्त्रीरात्रौवल्मीकभूमिषु ॥ ४९ ॥ अयुतंवै नतेयाक्षीहोमःस्यान्मातुलुङ्गकैः ॥ ततःसागारुडींविद्यांप्रसन्नांसम्प्रयच्छति ॥ ५० ॥ सर्पाकर्षणशक्तिंचसमस्तविषनाशिनीम् ॥ मुण्डंविनायकंवक्ष्येत्रक्षा क्षीयोगिनीयुतम् ॥ ५१ ॥ काशतेकाशिकायान्तुवीणावादनतत्परा ॥ किङ्करीनामचैतस्यचेटीतत्साधनंब्रुवे ॥ ५२ ॥ किङ्करीजलदेवीतिजलंपूरय पूरय ॥ धंधंसप्तदशार्णोयंजपेद्वर्णसहस्रकम् ॥ ५३ ॥ आवृष्टिकालेरात्रौ हिरात्रौनद्यांजलेजपेत् ॥ कण्ठमात्रेयुतंचैकंध्यायन्देवींसमाहितः ॥ ५४ ॥ किङ्करींवारुणंपाशंबिभ्रतींजलरूपिणीम् ॥ दिपक्षतस्वरूपाभांघोरगर्जनभी षणाम् ॥ ५५ ॥ प्रभातेवृष्टिरायातिसाहिपञ्चदिनावधि ॥ अथवक्ष्ये गणेशानंविख्यातंविकटद्विजम् ॥ ५६ ॥ योगिनीकेकराख्यस्यमृदङ्गं वादयेद्वरम् ॥ वाग्वादिनीचास्यशक्तिर्मन्त्राद्यस्यनिरूप्यते ॥ ५७ ॥ वदयुग्मंवाग्वादिनिस्वाहेतिचदशाक्षरः ॥ ऋषिःकण्वोविराट्छन्दोदेवता तुसरस्वती ॥ ५८ ॥ मातृकोक्तविधानेनमन्त्रीकुर्य्यात्षडङ्गकम् ॥ केशोत्र योर्दृशोनासेकपोलास्येतथेन्द्रिये ॥५९॥ गुदेचविन्यसेद्वर्णांस्ततोवागीश्वरीं यजेत् ॥ सितपद्मगतांश्वेतांलेखनीपुस्तकान्विताम् ॥ ६० ॥ नम्रांचकुचभा रेणवाग्देवींचन्द्रशेखराम् ॥ ओंह्रींवर्णजायचोक्त्वासरस्वत्यासनायच॥६१॥ नमःपञ्चदशार्णोयमासनस्यमनुर्मतः ॥ अङ्गानिपूजयेदादौस्वरद्वन्द्वंतता र्चयेत् ॥ ६२ ॥ वर्गाष्टकंततोभ्यर्च्यततोष्टौशक्तयस्त्विमाः ॥ योगसन्ध्याच विमलाज्ञानवृद्धिःस्मृतिस्तथा ॥ ६३ ॥ मेधाप्रज्ञाततःपूज्यामातृकाश्चदिगी श्वराः ॥ तदायुधानिपूज्यानिभूपुरादौयथाक्रमम् ॥ ६४ ॥ दशलक्षंजपेदन्ते त्रिमध्वक्तैश्चकैरवैः ॥ जुहुयात्तद्दशांशेतुशुद्धैश्चाथतिलैर्हुनेत् ॥ ६५ ॥ तर्प णंमार्जनंकृत्वाब्राह्मणान्भोजयेत्ततः ॥ एवंसिद्धेमनौमन्त्रीब्रह्मचर्य्यव्रतेस्थि तः ॥ ६६ ॥ जपहोमरतोरामांचिन्तयेद्देवताधिया ॥ अचिरादेवसभवेत्कवी नामग्रणीध्रुवम् ॥ ६७ ॥ न्यासान्वितमिमंमन्त्रंदिनादौप्रत्यहंजपेत् ॥ लभते नात्रसन्देहोवाक्सिद्धिमतुलांनरः ॥ ६८ ॥ ब्रह्मवृक्षरमावृक्षसुमनोभिःसमि

द्वैः ॥ मधुरत्रयसंयुक्तैर्जुहुयात्साधकःस्वयम् ॥ ६९ ॥ अचिराद्वाग्विलासेन कवीनामग्रणीर्भवेत् ॥ अथातःसम्प्रवक्ष्यामिराजपुत्रंगणेश्वरम् ॥ ७० ॥ योगिन्यस्यबृहत्तुण्डाताण्डवादनतत्परा ॥ मात्रिकासिद्धिवश्याद्यंतस्मात्तन्मन्त्रमुच्यते ॥ ७१ ॥ यस्यामन्तर्गतामन्त्रास्त्रयस्त्रिंशच्चकोटयः ॥ गायत्रीवा मात्रिकावःपिसाधितासनरोभवेत्॥७२॥समस्तागममन्त्राणांदातानास्त्यत्र संशयः॥ अकारादिक्षकारान्तावर्णावायुश्चदेवता ॥७३॥ वदन्तिमातृकांदेवींययासर्वमिदंततम् ॥ ब्रह्मामुनिश्चगायत्रीछन्दोदेवीचमात्रिका ॥ ७४ ॥ हलोबीजान्यचःप्रोक्ताःशक्तयःकीलकंभवेत् ॥ अव्यक्तंसत्त्वनिर्वाच्यंव्यञ्जनैः स्वरसङ्गमः ॥ ७५ ॥ प्रागुक्तमात्रिकान्यासास्सर्वेमुख्याभवन्तिच ॥ सुधाकुम्भाक्षवटिकावरपुस्तकधारिणीम् ॥ ७६ ॥ पञ्चाशदर्णव्याप्ताङ्गींचन्द्रार्धाङ्कित शेखराम् ॥ त्र्यक्षांकुन्देन्दुरुचिरांपद्मस्थांकुचनामिताम् ॥ ७७ ॥ मुक्तावृतस्फुरद्रूपांभजेमातृसरस्वतीम् । लिखेत्स्वर्णादिजेपत्रेरोचनाकुंकुमादिभिः॥ ७८ ॥ अष्टपत्रंशुभंपद्मंभूपुरात्रितयावृतम्॥ कर्णिकायांतुस्फेंबीजंकेशरेषुद्वयंद्वयम्॥ ७९ ॥ कचटादिकवर्गाश्चलिखेदष्टदलेषुच ॥ तत्कमलस्याग्रदिक्षुवंबीजंठंविदिक्षुच ॥ ८० ॥ पूजापीठमिदंप्रोक्तमादावङ्गानिसंयजेत् । ८१ ॥ स्वरद्वन्द्वंततोवर्गान्केशरेषुयजेदिमाः ॥ ८२ ॥ मेधांप्रज्ञांप्रभांविद्यांधीधृतिस्मृतिबुद्धयः ॥ विद्येश्वरीमध्यमान्तंपूज्याःपीठेततःपरम् ॥ ८३ ॥ वर्गाष्टकेत्विमाःपूज्याव्यापिनीपालिनीतथा ॥ पावनीक्लेशिनीचापिधारिणीमालिनीतथा ॥ ८४ ॥ हंसिनीशान्तिनीपत्रस्याग्रेर्च्यामातरःपरम् ॥ वीथ्यांलोकेश्वरानग्रे वीथ्यामस्त्राणिपूजयेत् ॥ ८५ ॥ तद्दशांशेनजुहुयान्मधुरत्रयलोलितैः ॥ तिलैःशुद्धैस्तर्पणादिकृत्वाशुद्धोभवेन्मनुः ॥ ८६ ॥ तत्त्वैर्भूपैश्चदिग्भिःकनकरजतताम्रांसकैर्भिन्नसूत्रैः सम्यक्कृत्वात्रिवेणीस्तवकमथजपेद्गव्यमाज्यंहुनेच ॥ वस्वप्राणाश्वपातंसुजनितद्दविपाचाभिषिञ्चेद्घृतेतादेवीमत्यर्घ्यधार्य्यग्रहगदशमनंसङ्गरेस्याज्जयाय ॥ ८७ ॥ तोयम्पिबेद्दिनादौचत्रिवारंजप्तमेतया ॥ वत्सराज्जायतेसम्यक्प्रमूर्खोपिकवित्वभाक् ॥ ८८ ॥ ब्राह्मीरसेनवचयापयसापाचयेद्घृतम् ॥ अयुतञ्जप्तमनयाभक्षितंकवितापदम् ॥ ८९ ॥

वर्णौषधीकाथसुवर्णकुम्भैर्जप्त्वासहस्रञ्चनरंप्रसिञ्चेत् ॥ कीर्त्तिश्चलक्ष्मीःकवि
तातथायुर्भवेच्चबन्ध्यालभतेसुताग्र्यम् ॥ ६० ॥ अथप्रवक्ष्येप्रवरङ्गणेशंसुराप्रिया
साखिलकर्म्मविज्ञा ॥ स्याद्योगिनीचास्यशुभङ्करीचचेटीनदीयाम्यतटेपयो
स्याः॥ ६१ ॥आकृत्यर्णौमनुस्तारःशुभङ्करीपरेतिच॥देवतेममेष्टदेहिद्विर्युग्नीशि
खिवल्लभा॥ ६२ ॥कलाकपालान्यरिपालयन्तीविभावयन्तीविषयाननेकान्॥
नारीनरेन्द्रानपिमोहयन्तीसामानसेमेस्तुशुभङ्करीश्रीः ॥ ६३ ॥ जप्त्वालक्ष
न्नरकैर्हयरिपुकुसुमैर्होमयेत्सिद्धमन्त्रः कृष्णायाम्भाद्रकृष्णेहयरिपुगहनेचापि
सेफालिसिन्धोः ॥ याम्येतीरेचनद्यानिशिजपमयुतन्तद्दशांशेनहोमंकुर्य्यात्मा
तस्तुनीराज्जयतिसुखकरान्साधकेन्द्रोगतोसौ ॥ ६४ ॥ नानाभोगकरःकामं
यंयंप्रार्थयतेतुताम् ॥ स्वयंददातिसादेवीसुस्त्रीवित्ताम्बरादिकम् ॥ ६५ ॥
अथातःसम्प्रवक्ष्यामिवाराणस्यान्तुयेस्थिताः ॥ आवृतावक्रतुण्डाद्याश्चेटी
शक्तिसमन्विताः ॥ ६६ ॥ ङेन्तन्तन्नामहृच्चेतितेषाम्मन्त्रःप्रकीर्त्तितः ॥ वक्रतु
ण्डविधिःपूर्वमुक्तोष्टानांसएवहि ॥ ६७ ॥ कपालहस्तयुक्तानांप्रदिष्टाऋक्ष
योगिनी ॥ शतनादेयोगिनीतिदेहिदेहिवदेत्ततः ॥ ६८ ॥ ह्रींहूंस्वाहेतिम
न्त्रोयंध्यानमस्यानिरूप्यते ॥ वीणातन्त्रीस्फुरद्धस्तातन्नादचलकुण्डलाम्॥
६६ ॥ कुशुम्भवसनांनम्रांस्तनभारेणयोगिनीम् ॥ नदीतीरेचाम्रवर्णेजपेन्म
न्त्रन्दशायुतम्॥ ६०० ॥ आम्रपत्रैःसमूलैश्चहुनेत्सिद्धोभवेन्मनुः ॥ अमा
यांश्रावणेमासिरात्रौदूरेनदीतटे ॥ १ ॥ तत्ररात्रौमनुंदेव्याजपेदष्टसहस्रक
म् ॥ प्राग्वद्धुनेदष्टशतंततःसर्वान्शृणोतिच ॥ २ ॥ वीणावेणुमृदङ्गानां
किन्नरीणाञ्चभूयसः ॥ इत्यादयःशतंनादाजायन्तेनापिभीषणाः ॥ ३ ॥
ततःसायोगिनीरूपाप्रत्यक्षामन्त्रिणेभवेत् ॥ ददातियोगमुद्रांसादर्शयेत्कुण्ड
लीपथम् ॥ ४ ॥ ततःस्वानुभवोमन्त्रीयोगीज्ञानीप्रजायते ॥ वाक्सिद्धिश्च
भवेदस्यब्रह्मभूयायकल्पते ॥ ५ ॥ अथातःसम्प्रवक्ष्यामिचैकदन्तुलविघ्नपम्॥
योगिनीतस्यरक्ताक्षीगन्धवादरतासदा ॥ ६ ॥ नेत्ररम्याचेटिकास्यवेदाग्न्य
र्णोमनुश्चओम् ॥ नेत्ररम्येअञ्जनञ्चदेहियुग्मंनिधिंवदेत् ॥ ७ ॥ दर्शयद्धि
तयम्प्रोक्तापटलम्पदमुद्धरेत् ॥ दूरीकुरुयुगम्पञ्चस्वाहेतिकथितोमनुः ॥ ८ ॥

पुरश्चरणमेतस्या अयुतात्रितयंवदेत् ॥ घृताक्तगुग्गुलैर्होमोदेवतांसाधयेत्ततः॥ ९ ॥ काननेकरवीराणांरात्रौवैशाखमासितु ॥ चतुर्दश्यांजपेद्देवींनेत्ररम्यां शतत्रयम् ॥ १० ॥ भौमस्तुवासरःप्रोक्तस्त्वथवाशुक्रवासरः ॥ घृताक्तगुग्गुलैर्होमंततःकुर्य्याच्छतत्रयम् ॥ ११ ॥ ददातिमन्त्रिणेतस्मैस्वाञ्जनंनेत्रबोधकम् ॥ निधिंभूमिगतंवस्तुदूरदेशगतन्तथा ॥ १२ ॥ सोयंपश्यतिमन्त्रीचसद्योभवतिभूपतिः ॥ अथातःसम्प्रवक्ष्यामिकपिसिंहद्विपाननम् ॥ १३ ॥ एवं त्रिवदनन्तस्ययोगिनीतुपुकीमता ॥ रसज्ञाचेटकीचास्यपङ्कजाक्षीप्रकीर्त्तिता ॥ १४ ॥ ॐ पङ्कजाक्ष्यमृतफलन्देहीतियुगन्तथा ॥ श्रींस्वाहामेघवर्णोयंजपःषष्टिसहस्रकम् ॥ १५ ॥ होमःपलासपुष्पैःस्यादभावेचसमिद्वरैः ॥ सश्रीवयन्तीचमदंलोलनेत्राभिसुन्दरी ॥ १६ ॥ पङ्कजाक्षीकार्य्यकरीनानालङ्कारशोभिता ॥ वसन्ततौचगङ्गायास्तटेब्रह्मरुहेवने ॥ १७ ॥ कृष्णाष्टम्याश्चैत्रमासेभौशुक्रेथवानिशि ॥ सहस्रत्रितयञ्जप्त्वापालासैर्होममाचरेत् ॥ १८ ॥ ततोदेवीसमायातिददातिफलमुत्तमम् ॥ जरामरणराहित्यंतत्कालम्भक्षितेसति ॥ १९ ॥ फलेतस्मिन्समायातिसद्गुरुप्रार्थितम्पुनः ॥ अथातःसम्प्रवक्ष्यामिपञ्चास्यञ्चगजाननम् ॥ २० ॥ श्वेन्यस्ययोगिनीप्रोक्तारागालापनतत्परा ॥ पयोनिदीचेटिकास्यएकत्रिंशाक्षरोमनुः ॥ २१ ॥ तारम्पयोदिनीत्युक्त्वाजलधाराधरेतथा ॥ अग्निशमयवाडववंह्निचशमयद्वयम् २२ ॥ श्रींस्वाहानमइत्येतज्जपेदन्तसहस्रकम् ॥ सरस्तीरेपयःकार्य्येहुनेत्सघृतपायसम् ॥ २३ ॥ वर्षतीजलबिन्दूश्चमेघमालामनोरमा ॥ श्यामाम्बरपरीधानारेचित्तेस्तुपयोदिनी ॥ २४ ॥ श्रावणेबहुलाष्टम्यांरोहिणीऋक्षसम्भवः ॥ भौमोबृहस्पतिर्वापिशुक्रोवातत्रवासरः ॥ २५ ॥ रात्रौस्नानविधिंकृत्वासरस्तीरे मनोरमे ॥ अयुतम्प्रजपेन्मन्त्रम्पायसैर्होममाचरेत् ॥ २६ ॥ सहस्रैकन्ततोदेवीसाक्षात्सातुपयोदिनी ॥ २७ ॥ ददातिवरकञ्चैकम्मन्त्रिणेतोषमागता ॥ अग्निदाहोस्यनैवास्तितथाचकरकान्विता ॥ २८ ॥ अवृष्टावपिकर्तव्यन्ध्यात्वादेवींभवेज्जलम् ॥ अथातःसम्प्रवक्ष्यामिहेरम्बङ्गणनायकम् ॥ २९ ॥ चत्वरादिककाम्यास्ययोगिन्यस्तिकपोतिका ॥ हंसवागीश्वरीशक्तिर्मन्त्राद्यस्यनि

रूप्यते ॥ ३० ॥ ऐंह्रींऐंह्रींऐंतथोक्तासरस्वत्यैनमस्त्विति ॥ ऋषिशक्तिश्च
देव्यादिगायत्रीछन्दईरितम् ॥ ३१ ॥ हंसवागीश्वरीदेवीदेवतापरिकीर्त्तिता ॥
विद्वान्तृतीयबीजेनषडङ्गन्यासमाचरेत् ॥ ३२ ॥ सुषुम्नाग्रेभ्रुवोर्मध्येरन्ध्रानांन
वमेतथा ॥ मन्त्राक्षराणिविन्यस्यचिन्तयेदिष्टदेवताम् ॥ ३३ ॥ हंसपृष्ठस्थपद्म
स्थांकान्तकर्पूरसन्निभाम् ॥ चन्द्राननांमन्दहासांचन्द्रार्धकृतशेखराम् ॥ ३४ ॥
पुस्तकंचकरैर्वीणांजपमालासुधाघटम् ॥ इतिध्यात्वाजपेत्पीठेमातृकायाःपुरो
दिते ॥ ३५ ॥ वर्णाद्येनाशनंदद्यान्मूर्तिंमूलेनकल्पयेत् ॥ तस्यामावाह्यतांदे
वीमर्चयेद्गन्धपुष्पकैः ॥ ३६ ॥ पार्श्वयोर्वाचसम्पूज्यसंस्कृतेप्राकृतेउभे ॥
ततोङ्गानिचतच्छक्तिमातृलोकेश्वरानपि ॥ ३७ ॥ तदस्त्राणिततोबाह्येदेवी
मित्थंप्रपूजयेत् ॥ प्रज्ञामेधाश्रुतिःशक्तिःपञ्चमीस्मृतिरीरिता ॥ ३८ ॥ वागी
शीसुमतिःस्वस्तिरष्टौतच्छक्तयोमताः ॥ वर्णैकाधिकलक्षन्तुजपेन्मन्त्रंसमाहि
तः ॥ ३९ ॥ तत्सहस्रंप्रजुहुयात्सिताक्तैर्नागचम्पकैः ॥ तर्प्पणादिततःकुर्य्या
त्साधकोनियतव्रतः ॥ ४० ॥ इदंमनुंयोभजतेपातकैर्मुच्यतेचिरात् ॥ लक्ष्मी
यशःकान्तियुतःकवित्वस्यालयोभवेत् ॥ ४१ ॥ कुर्य्यात्पूर्वानुगदितान्प्रयोगा
नत्रमन्त्रवित् ॥ अथमन्त्रान्तरंवक्ष्येयत्तस्याःषोडशार्णकम् ॥ ४२ ॥ ऐंकारंपू
र्वमुच्चार्य्यनमोभगवतीतिच ॥ वेदयुग्मंचवाग्देवीस्वाहान्तोमन्त्रईरितः ॥ ४३ ॥
पूर्वमन्त्रोदिताश्चात्रमुन्याद्याःसम्प्रकीर्त्तिताः ॥ पदैर्मन्त्रस्यषड्भिःस्यात्षडङ्गं
चैवजातिमत् ॥ ४४ ॥ कुन्देन्दुभासिवसनांश्वेतमाल्यानुलेपनाम् ॥ वनमा
लांतथाव्याख्यांमुद्रांपुस्तकमेवच ॥ ४५ ॥ सुधाकुम्भंहस्तपद्मैर्दधतींश्वेतपद्म
गाम् ॥ त्र्यक्षांचन्द्रार्धमालांचपीनोन्नतपयोधराम् ॥ ४६ ॥ प्राग्वत्पूजांप्रयो
गादिविशेषोत्रनिगद्यते ॥ अष्टलक्षंजपेन्मन्त्रंहविष्याशीजितेन्द्रियः ॥ ४७ ॥
यथाविधिजपान्तेचतद्दशांशंहुनेत्तिलैः ॥ आज्याप्लुतैस्तर्पणादिसर्वंपूर्ववदा
चरेत् ॥ ४८ ॥ अह्नोमुखेप्रत्यहंयएतज्जप्त्वाजलंपिबेत् ॥ संवत्सराद्भवेद्विद्वा
न्नात्रकार्य्याविचारणा ॥ ४९ ॥ स्नानकालेमन्त्रजप्तैस्तोयैःसिञ्चेत्स्वमूर्धनि ॥
सर्वैस्तोयैस्तर्पयेत्तांमेधावंशेभवेद्ध्रुवम् ॥ ५० ॥ एतन्मन्त्राभिजसंचपुष्पगन्धा
दिकंसुधीः ॥ शिरसाधारयेत्तेनसभापूज्यःसजायते ॥ ५१ ॥ वादंचविजयो

नित्यंभवेत्तस्यनसंशयः ॥ अन्यमन्त्रान्तरंचास्यावक्ष्यतेरुद्रवर्णकम् ॥ ५२ ॥ ऐंवाचस्पतेअमृतेप्लुवःप्लुरितिकीर्तितः ॥ दशाक्षरवदस्यान्यत्पञ्चाङ्गंतुमनोःप रैः ॥ ५३ ॥ पद्मसंस्थापद्मयुगाक्षमालापुस्तकानिच ॥ करैर्दधानांचन्द्रार्धमु कुटांत्रीक्षणांसिताम् ॥ ५४ ॥ नानाप्रुनिनुतांनम्रांस्तनभारेणताम्भजे ॥ य जेच्चमातृकापीठेदशार्णोक्तेनवर्त्मना ॥ ५५ ॥ प्रयोगादिप्रकुर्वीतपूर्ववद्देदशा र्णवत् ॥ अथातःसम्प्रवक्ष्यामिविघ्नराजंविनायकम् ॥ ५६ ॥ योगिनीपाशह स्तास्यवंशारोहणकारिणी ॥ सरस्वतीशक्तिरस्यत्र्यर्णाचेटीत्रयान्विता ॥ ५७ ॥ चारुस्वामीतिमन्त्रोस्याविप्राणांपरिकीर्त्तितः ॥ वाक्तुस्वामीतिजप्तव्यःक्ष त्रियैःपरतापकैः ॥ ५८ ॥ ग्वारुंस्वामीतिवैश्यानांऐंरुंस्वोमंत्रिजन्मनाम् ॥ ऋष्यादिकंदशार्णोक्तंदेवीत्र्यर्णसरस्वती ॥ ५९ ॥ द्विरुच्चरितमूलेनषडङ्गजा तिसंयुतम् ॥ करांगुल्यौविधायाथध्यायेद्देवींसरस्वतीम् ॥ ६० ॥ मुक्ताहारस मायुक्तांचन्द्रार्धकृतशेखराम् ॥ रत्नकुम्भंव्याख्यामुद्रांत्वक्षमालांचपुस्तकम् ॥ ६१ ॥ पीनोत्तुङ्गकुचानम्रांश्वेताब्जस्थांसरस्वतीम् ॥ पुराप्रोक्तेमातृकायाःपी ठेदेवींसमर्चयेत् ॥ ६२ ॥ यथापूर्वप्रत्यहंयःसभवेद्वाक्पतिर्ध्रुवम् ॥ वर्ण लक्षंजपेन्मन्त्रंहविष्याशीजितेन्द्रियः ॥ ६३ ॥ आज्याक्तहविषावह्नौतद्दशां शंहुनेत्ततः ॥ तर्पणादिततःकुर्यात्प्रागुक्तविधिनाततः ॥ ६४ ॥ एवं सिद्धमनुर्मन्त्रीप्रयोगान्कर्तुमर्हति ॥ चतुरंगुलसम्भूतैःसुमनोभिर्हुनेत्तुयः ॥ ६५ ॥ वाचःसोऽप्रतिमांसिद्धिमचिराल्लभतेध्रुवम् ॥ कुचन्दनोदकेनाक्तैर्जा तीपुष्पैःसिताम्बुजैः ॥ ६६ ॥ नद्यावर्त्तोद्भवैःकुन्दसंयुतैःकुसुमैर्हुनेत् ॥ अचिरादतुलांवाचांसिद्धिंप्राप्नोत्यसंशयाम् ॥ ६७ ॥ एवंमन्त्रंजपेन्मन्त्री सभायांजयमाप्नुयात् ॥ वचांश्वेतांतथाब्राह्मींप्रजप्तांमनुनामुना ॥ ६८ ॥ अह्लाप्रुखेचयःखादेत्समेधांवाञ्छितांलभेत् ॥ पाण्डवीपृथुमध्याचपार्थिवाचे तिचेटिकाः ॥ ६९ ॥ ॐपाण्डवीतिवगलेततश्चवगलाप्रुखि ॥ शत्रोः पादंस्तम्भयद्धिःक्लींह्रींभुवंचरेवदेत् ॥ ७० ॥ स्फींस्वाहेतित्रिंशार्णोमन्त्रो ध्यानंनिरूप्यते ॥ पीताम्बरांपीतवर्णांपीतगन्धानुलेपनाम् ॥ ७१ ॥ प्रे तासनांपीतवर्णांविचित्रापाण्डवींभजे ॥ अयुतत्रितयंजप्त्वाकुशुम्भकुसुमैर्हु

नेत् ॥ ७२ ॥ एवंकृत्वापुरश्चर्य्यांपश्चात्साधनमाचरेत् ॥ वत्सरादौप्रतिपदि शुक्रवारेजपेन्निशि ॥ ७३ ॥ अयुतंतद्दशांशेनकुसुम्भकुसुमैर्हुनेत् ॥ प्रसन्ना जपतोदेवीवस्त्रमेकंददातिच ॥ ७४ ॥ वैरिणोद्वेगतोबद्धंगातिस्तम्भःप्रजाय ते ॥ कार्त्तिकेकृष्णषष्ठ्यान्तुवटवृक्षतलेस्थितः ॥ ७५ ॥ जप्त्वायुतंचूतपत्रैः ससुगन्ध्यगुरूद्भवैः ॥ तैलयुक्तैर्भवेद्धोमःपृथुमध्याप्रसीदति ॥ ७६ ॥ ददाति पीठंतत्रस्थोद्दृष्ट्वारामाश्चमोहयेत् ॥ वहन्तिपञ्चभूतानितत्पीठंतेनखेगतिः ॥ ७७ ॥ उन्मत्तजनगांदेवींस्थूलाङ्गींकलहप्रियाम् ॥ कार्त्तिकेयगुहाखेलांपृथु मध्यांभजाम्यहम् ॥ ७८ ॥ ॐपार्थिवेचपृथिवीतलचारिणिवायुना ॥ ततो लिनिचतारुण्यांकुरुयुग्मंचधंचधम् ॥ ७९ ॥ स्वाहैकोनात्रिंशदर्णःपार्थिवा यामनुःस्मृतः ॥ नदीतीरेवृष्टिकालेचतुर्दश्यांनिशान्तरे ॥ ८० ॥ कूलंखनि त्वाकुहरंकर्त्तव्यंयुगसप्तकम् ॥ जपस्यार्धायुतंहोमःकदलीखण्डकैस्तथा ॥ ८१ ॥ पृथिवीतलसञ्चारशालिनींवायुमालिनीम् ॥ भजामिपार्थिवींदेवींता रुण्यङ्कप्रदांशिवाम् ॥ ८२ ॥ तुष्टाददातिसाशक्तिंपृथिव्यन्तरचारिणी ॥ जरामरणराहित्यंप्रातरश्चैवसर्वगः ॥ ८३ ॥ विनायकस्तुप्रवरोदण्डहस्ता स्ययोगिनी ॥ रघुरोहास्वरूपासाचेटीकंकालिकामता ॥ ८४ ॥ ऐंकंकाली कलिकलाभ्यामुच्चरेत् ॥ स्वाहान्तस्थितिवर्णोयंलक्षमस्यजपोमतः ॥ ८५ ॥ हुनेदस्यसहस्रैकंकङ्कालीवरदाभवेत् ॥ ईप्सितंतत्साधकस्यतदेकंसाप्रयच्छति ८६ ॥ अथातःसम्प्रवक्ष्यामिगणेशंमोदकप्रियम् ॥ प्रचण्डायोगिनीचास्य चेटिकापङ्कवासिनी ॥ ८७ ॥ ओपङ्कवासिनीपङ्कजावतीवनदेवते ॥ कंदा रंदेहिसिद्धिंचकुरुद्विःकामबीजकम् ॥ ८८ ॥ रमाबीजंवह्निजायाचैकत्रिं शाक्षरोमनुः ॥ वैशाखेपङ्कसरसिस्वल्पोदेजलवर्जिते ॥ ८९ ॥ सप्तरात्रंजपेन्म न्त्रंदिवसेलक्षसङ्ख्यया ॥ होमस्तत्पत्रपुष्पैश्चदेव्याध्यानंनिरूप्यते ॥ ९० ॥ पङ्कजाक्षिनिशिवैशिवदूतीस्मेरवक्त्रनयनाम्बुजलीला ॥ मानसेममवस स्मरदेविप्रत्यहंकमलकाननसंस्था ॥ ९१ ॥ तदादेवीसमागत्यत्रिजगद्वश कारकम् ॥ ददातिकेशरंचैकंकल्पपुष्पातिगन्धमत् ॥ ९२ ॥ घर्षयित्वास्यति लकेकृतेस्यादखिलंजगत् ॥ वश्यंराजस्त्रियोभूपाःपण्डितादेवताअपि ॥ ९३ ॥

अथातःसम्प्रवक्ष्यामिपूर्वादिस्थान्विनायकान् ॥ महाश्मशानमावृत्यस्थितान भयदायकान् ॥ ६४ ॥ प्रथमंमनवश्चैषांस्वबीजहृदयादिकम् ॥ चतुर्थ्यन्तं भवेन्नामयोगिनीवसुविक्रमा ॥ ६५ ॥ चेष्टांवातुलवत्कुर्य्यात्पारिजातसरस्वती ॥ अस्यशक्तिस्तुतन्मन्त्रंप्रोक्तएकादशाक्षरः ॥ ६६ ॥ ॐह्रींहंसवर्णाश्चसैकाराबिन्दुसंयुताः ॥ पुनर्ह्रींमांसरस्वत्यैहृदयान्तोमनुर्मतः ॥ ६७ ॥ ऋषिध्यानंन्यासजपंहंसवागीश्वरीमतम् ॥ प्रयोगाश्चापिसिध्यन्तिपूर्वोक्ताः सर्वएवहि ॥ ६८ ॥ वराननाचेटिकास्यतस्याःसाधनमुच्यते ॥ वराननेपदं प्रोक्तावामलोचनइत्यपि ॥ ६९ ॥ परस्यमालिनीप्रोक्तामालिनीद्वितयंततः ॥ धुंधुंधींवह्निजायान्तोमनुःषट्त्रिंशदर्णकः ॥ ७०० ॥ सौन्दर्य्यामृतसन्दोहसारभूतामिमांपराम् ॥ विवर्धितांस्थिरांदेवींसम्भजेतांवराननाम् ॥ १ ॥ रथ्याद्वारेकुजेकृष्णसप्तम्यांतुशुचिर्यजेत् ॥ सहस्रत्रितयंहोमःशङ्खैश्चापिकपर्दकैः ॥ २ ॥ ततःस्त्रीरूपिणीदद्यात्कपर्दैकंवरानना ॥ कपर्दस्थापयेत्तद्यत्करादीनांकुशूलकैः ॥ ३ ॥ त्रिदिनावधितद्धान्यंविक्रीतंनैवहीयते ॥ ततोधान्यान्तरंस्थाप्यंवृद्धिस्तत्रापिजायते ॥ ४ ॥ सिंहतुण्डोगणाध्यक्षोवेणुश्रीचास्ययोगिनी ॥ पृथिव्यावेष्टनकरीसप्तकोटेश्वरीमता ॥ ५ ॥ शक्तिश्चेटीविधिश्रेष्ठाततःसाधनमुच्यते ॥ कःसःउल्काचण्डिकाचसःकःसप्ताक्षरोमनुः ॥ ६ ॥ ऋषिर्ब्रह्माचगायत्रीछन्दःप्रोक्तंचदेवता ॥ सप्तकोटेश्वरी देवीवागैश्वर्य्यकरीमता ॥ ७ ॥ षड्दीर्घयुक्चकारेणषडङ्गंसम्प्रकीर्तितम् ॥ अस्याःपूजादिकंसर्वंत्रिपुरावत्प्रकीर्तितम् ॥ ८ ॥ विधुश्रेष्ठामनुंवक्ष्येविधुश्रेष्ठेविपद्गते ॥ मानंपूरयकर्णान्तेताटङ्कंदेहियुग्मकम् ॥ ९ ॥ थं लक्ष्मीर्वह्निजायान्तःसप्तविंशाक्षरोमनुः ॥ चित्रायांसोमवारेचयदासोमग्रहो भवेत् ॥ १० ॥ यावद्विधुविमोक्षःस्यात्तावन्मन्त्रंजपेज्जले ॥ तदादेवीतुताटङ्कं दद्यात्सव्यश्रुतिस्थितम् ॥ ११ ॥ पूर्णचन्द्रप्रभामन्तदमाम्पूर्णांकरोतिच ॥ १२ ॥ साधकोलोकमान्यश्चध्यानमस्यानिरूप्यते ॥ चन्द्रमण्डलसंस्थान्तां

---

१ चांहृदयायनमः चींशिरसेस्वाहा चूंशिखायैवषट् चैंकवचायहुम् चौंनेत्रत्रयायवौषट् चः अस्त्रायफट् ॥ २ विधुश्रेष्ठेविपद्गतेमानंपूरयकर्णान्तेताटङ्कंदेहिदेहिथंश्रींस्वाहा ॥

विद्युच्छेष्ठांवियद्गताम् ॥ १३॥ काश्मीरचारुताटङ्कांध्यायामिशिववल्लभाम् ॥ १४ ॥ अथातःसम्प्रवक्ष्यामिकुपिताक्षङ्गजाननम् ॥ पापहन्त्रीयोगिनीतुपुत्र दारूपधारिणी ॥१५॥ कुपिताक्षस्यशक्तिस्तुबालास्याद्वामलोचना ॥ अस्य चेटीसमाख्यातातस्याःसाधनमुच्यते ॥ १६ ॥ ऐंक्लींसौरितिबालायास्त्र्यक्ष रोमन्त्रउच्यते ॥ ऋषिस्तुदक्षिणामूर्तिःपंक्तिश्छन्दोस्यदेवता ॥ १७॥ बाला बीजंवाग्भयंस्यात्तार्त्तीयंशक्तिरुच्यते ॥ कीलकंकामराजःस्याद्भिरोवृत्यापडङ्ग कम् ॥ १८ ॥ यथात्रिपुरभैरव्यास्त्र्यर्णन्यासाःपुरोदिताः ॥ एतद्बीजेनते सर्वेकर्त्तव्यास्तत्फलाप्तये ॥ १९ ॥ अभयंपुस्तकंबालांवरंचदधतीङ्करैः ॥ अरुणामरुणाब्जस्थांरक्तवस्त्रांद्विजेशकाम् ॥ २० ॥ यन्त्रोद्धारश्चपूजाया म्पूजनंसकलन्तथा ॥ ज्ञेयंत्रिपुरभैरव्यास्त्र्यक्षरायाश्चतत्समम् ॥ २१ ॥ जपोलक्षत्रयंहोमोद्रव्याद्यंतद्धदेवहि ॥ कुमारीपूजनंनित्यंकाम्यसिद्ध्यर्थमुच्य ते ॥ २२ ॥ मालतीजातिकामल्लीकुसुमैर्मधुमिश्रितैः ॥ घृतचूर्णैर्हुतेनदेवींवा गीशत्वंप्रजायते ॥ २३ ॥ मूकस्यापिहिमूढस्यशिलारूपस्यनान्यथा ॥ जपा पुष्पैराज्ययुतैरक्तक्षीरैस्तथाविधिः ॥ २४ ॥ कस्तूरीकुंकुमेन्दूनांहवनात्कामव द्भवेत् ॥ चम्पकैःपाटलैर्होमान्महतीश्रियमाप्नुयात् ॥ २५ ॥ गुग्गुलागुरुकर्पू रचन्दनानांचहोमतः ॥ राजनागेन्द्रदेवानांपुरन्ध्रींवशमानयेत् ॥ २६ ॥ लाक्षाहोमाल्लभेद्राज्यंपक्वान्नमधुहोमतः ॥ उपसर्गनिवृत्तिःस्यात्कह्लारहवना द्धनम् ॥ २७ ॥ दुग्धेनायुर्धनंदध्नामेधारोग्यंघृतेनतु ॥ समिद्भिर्जायते क्षीरंमधुनामृत्युनाशनम् ॥ २८ ॥ दधिमाक्षिकहोमेनसौभाग्यंधनमाप्नु यात् ॥ कह्लारहवनाद्भाग्यंमधुरत्रयरक्तयुक् ॥ २९ ॥ छागमांसंहुनेत्सर्वं परराष्ट्रंवशंनयेत् ॥ वैरिस्तम्भःसितांहोमाल्लाद्याक्षीरपयोदधि ॥ ३० ॥

---

१ ॐ अस्यश्रीबालामन्त्रस्यदक्षिणामूर्तिर्ऋषिःपंक्तिश्छन्दः बालादेवता ऐं बीजम् सौः शक्तिः क्लींकीलकं बालादेवताप्रीतये चेष्टसाधने विनियोगः २ ऐं क्लीं सौः ऐं क्लीं सौःइनन्ह बीजोंसे षडङ्गन्यास करलेना, जैसे ऐं हृदयायनमः, क्लीं शिरसे स्वाहा, सौः शिखायैवषट्, ऐं कवचायहुं, क्लीं नेत्रत्रयाय वौषट् सौः अस्त्रायफट् ३ चमेली ४ बेला ५ केशर ६ कपूर ७ हैजा इत्यादि ८ शहद ९ ब्राह्मणादिकोंके लिये वर्जितही है शूद्रों में भी शुद्ध चित्तवाले इसके अधिकारी नहीं होसक्ते क्योंकि अहिंसा परमोधर्म्मश्चाहिंसापरमंतपः १० मिश्री॥

हुतंतदल्पमृत्योश्चरोगानांचापिनाशनम् ॥ कमलैररुणैर्होमःसम्यक्सम्पत्तिदायकः ॥ ३१ ॥ रक्तोत्पलैर्जगद्वश्यंलक्ष्मीर्भाग्यंसितोत्पलैः ॥ ३२ ॥ दाडिमंमातुलुङ्गंच नारङ्गंसकलंक्रमात् ॥ कूष्माण्डंहोमयेद्विप्रादिकावश्या नसंशयः ॥ ३३ ॥ खर्ज्जूरीफललक्षस्य होमात्सर्वेनृपावशाः ॥ द्राक्षालाक्षासिद्धयष्टीकदलीफलहोमतः ॥ ३४ ॥ लक्षाद्विंशतिराजानो वश्यालक्षंतुहोमयेत् ॥ नारिकेलेनलक्षंचेद्धुतोग्निर्नृपवद्भवेत् ॥ ३५ ॥ पक्वाम्रलक्षहोमेनसम्पूर्णधरणीवशा ॥ पनसस्यफलैर्लक्षं होमाद्वश्याःशतंनृपाः ॥ ३६ ॥ गुग्गुलस्यतुहोमेन सर्वदुःखानिनाशयेत् ॥ वश्याःसर्वेतिलाज्याभ्यां चन्दनेनतु शत्रवः ॥ ३७ ॥ रक्तचन्दनहोमेन वश्याःस्युःपुरुषाःस्त्रियः ॥ खर्ज्जूरस्यतुहोमेन वाग्वश्यंजायतेनृणाम् ॥ ३८ ॥ कस्तूरीहोमतोभूपा मन्त्रिणःपरिचारकाः ॥ नीलतण्डुलहोमेन शान्तिर्भवतुमन्दिरे ॥ ३९ ॥ शर्कराघृतहोमेन सर्वकार्याणिसाधयेत् ॥ घृतपायसहोमेन धान्यसिद्धिर्भवेद्ध्रुवम् ॥ ४० ॥ तत्तदन्नस्यहोमेन तत्तत्सिद्धिःप्रजायते ॥ सोपस्करैश्चवटकैरुपसर्गान्विनाशयेत् ॥ ४१ ॥ बन्धूककुसुमैर्होमात्सर्वसत्त्वान्वशंनयेत् ॥ जपापुष्पैर्जगद्वश्यं बाणपुष्पैश्चमोहनम् ॥ ४२ ॥ बहुलस्यहुनेत्पुष्पैः सौभाग्यंजायतेमहत् ॥ दशाङ्गधूपहोमाच्च सौभाग्यमतुलंभवेत् ॥ ४३ ॥ जम्बूफलैःस्त्रियोवश्याः कूष्माण्डैर्दैत्यकन्यकाः ॥ श्रीफलैरतुलालक्ष्मीरिक्षुदण्डैःसुखंभवेत् ॥ ४४ ॥ रसादिक्षोराजकन्या नारिकेलफलेनवा ॥ केवलंघृतहोमेन वरदाःसर्वशक्तयः ॥ ४५ ॥ वामीतुसङ्गमात्पूर्वं प्रजपेद्वामलोचनाम् ॥ शतमात्रंपूर्णमास्यां विशाखादित्यसङ्क्रमे ॥ ४६ ॥ सद्यःप्रसन्नादेवीस्याद्वीर्य्यस्तम्भंददातिसा ॥ अपिकान्ताशतासङ्गे नासौस्खलतिमानवः ॥ ४७ ॥ रतिदेवींरतिप्रीतिंकामकीर्तिंमनोरमाम् ॥ ममकामप्रदांसद्यः सम्भजेवामलोचनाम् ॥ ४८ ॥ ईंलींभींरंसमुच्चार्य्य वसुक्त्वावामलोचने ॥ वीर्य्यस्तम्भयद्विःप्रोक्त्वा नादेमाकुरुचोच्यते ॥ ४९ ॥ पञ्चविंशतिवर्णोयं स्वाहान्तेमन्त्रईरितः ॥ मदना

---

१ निम्बू का भभेद । २ खजूर के फल व छुहारा । ३ जिस जिस अन्न से होम किया जावे उस उस की शीघ्रही सिद्धि होवेगी ॥

धोलक्षजपात्सिध्येद्वावामलोचना ॥ ५० ॥ प्रागुक्तोयस्तुविघ्नेशो नाम्ना क्षिप्रप्रसादनः ॥ कालीचयोगिनीतस्य शक्तिर्वागीशभैरवी ॥ ५१ ॥ चित्राक्षीचेटिकाचास्य पुरेवसतियोगिनी ॥ स्थैंह्रींचैवसमुच्चार्य्यनित्यक्लिन्नेपदं वदेत् ॥ ५२ ॥ मदद्रवेचसहशऔकारेणसमन्विताः ॥ एकादशाक्षरोमन्त्रो न्यासध्यानादिकंतथा ॥ ५३ ॥ चैतन्यभैरवीतुल्यं विशेषोयंचपूजने ॥ अग्रकोणेचचैतन्यनित्याक्लिन्नांमदद्रवाम् ॥ ५४ ॥ षडङ्गावरणंपश्चादन्यत्सर्वंयथोक्तवत् ॥ तुल्यंचैतन्यभैरव्याः प्रयोगाद्यंप्रकीर्तितम् ॥ ५५ ॥ चित्राक्ष्याः साधनंवच्मि तदेकान्तेनदीतटे ॥ पट्कोणंमण्डलंकृत्वा तोयपूर्णान्घटान्न्यसेत् ॥ ५६ ॥ कोणषट्केतेषुसुरान् प्रसादौतुप्रपूजयेत् ॥ इन्द्रंविधिंयमंकालं विष्णुमीशंक्रमेणच ॥ ५७ ॥ अक्षय्यपात्रतोयोयमारम्भस्य प्रकीर्तितः ॥ तदूर्ध्वमासनंकृत्वा मध्याह्नेप्रजपेन्मनुम् ॥ ५८ ॥ नित्यं शतत्रयंहोमस्त्रिटयेलायाःफलैर्भवेत् ॥ कुर्य्यादेवंप्रत्यहन्तु तृतीयात्वाष्ट्रसंयुता ॥ ५९ ॥ सोमेन रविणावापि यदायुक्ताभवेत्तदा ॥ प्रातःकालाज्जपःकार्य्यो घटाद्देवीवदेत्स्फुटम् ॥६०॥ येषुकुम्भेषुयद्द्रव्यं स्थापनीयंतयातुतत् ॥ भविष्यतितदक्षय्यंध्यानमस्यानिरूप्यते ॥६१॥ रुद्रादिप्रेतमौलिस्थां कलशांकुरमालिनीम् ॥ चित्राक्षीं चित्रवेषांतां सम्भजेपरमेश्वरीम् ॥ ६२ ॥ चित्राक्षिचित्ररूपेण इन्द्रादिप्रेतसंवदेत् ॥ स्थेप्रसीदेतियुगलं श्रींस्वाहात्रिद्विवर्णकः ॥ ६३ ॥ अथातःसम्प्रवक्ष्यामि चिन्तामणिविनायकम् ॥ योगिनीलक्षणज्ञास्य नाम्नारुधिरवाहिनी ॥ ६४ ॥ पट्कूटभैरवीशक्तिश्चित्रकण्ठ्यस्यचेटिका ॥ हसकलरकारांश्चडकारैकारसंयुतान् ॥ ६५ ॥ बिन्दुयुक्तान्कूटरूपोमनुरस्याःप्रकीर्तितः ॥ सम्पत्प्रदाभैरवीवत्सर्वं न्यासादिकंमतम् ॥ ६६ ॥ समस्तंचिन्तितंदद्याद्रिपुभारविनाशिनी ॥ सेनाविनायकःकाश्यांस्थापितस्त्वनयापुरा ॥ ६७ ॥ अथातःसाधनंवक्ष्ये चित्रकन्यासमासतः ॥ चैत्रशुक्लचतुर्दश्यांवसन्तेनिशिसञ्जपेत् ॥ ६८ ॥ सहस्त्रितयंहोमोमधूककुसुमैर्भवेत् ॥ त्रिंशत्सहस्रंसादेवीतदादद्याच्चमन्त्रिणे ॥ ६९ ॥ कोकिलास्वरमत्यन्तमोहनंजगतामपि ॥ अपिपक्षिमृगादीनासुरगा

---

१ स्थैंह्रींनित्यक्लिन्नेपदद्रवेरह्रौम् । इतिमन्त्रः ॥

णांचमोहनः॥७०॥ चूतांकुरावतंसासावीणानादनिनादिनी॥चित्रकण्ठीचि
त्रनादस्वरंदेहियुगंतथा ॥ ७१ ॥ मींरींस्वाहेतिमन्त्रोयंमन्त्रार्णःपरिकीर्ति
तः॥ अथातःसम्प्रवक्ष्यामिदन्तहस्तंविनायकम्॥ ७२ ॥ वसाधयायोगिनी
चचित्ररेखास्वरूपिणी ॥ पञ्चबाणेश्वरीशक्तिचिह्नगम्याचचेटिका ॥ ७३ ॥
द्रांद्रींक्लींब्लूंसइत्येषाबाणेश्वर्य्यामनुर्मतः ॥ ऋषिःकामस्तुगायत्रीछन्दोबाणे
श्वरीसुरी॥७४॥एकान्तरेणसर्वैश्चमनोर्वर्णैःषडङ्गकम्॥रक्तवस्त्रामिक्षुधनुःपुष्प
कोदण्डधारिणीम् ॥ ७५ ॥ सालङ्कारांचसूर्य्याभांबाणेशींसुन्दरींभजे ॥
त्रिपुरेशींचपूज्यासामोहयेत्सकलंजगत्॥ ७६ ॥ पञ्चलक्षंजपेद्धोमोबन्धूक
कुसुमैर्मतः॥ कृष्णपक्षेचतुर्थ्यांतुचित्रायांसोमवासरे ॥ ७७ ॥ ध्यात्वायु
तंजपेद्रात्रौतदासावरदाभवेत् ॥ प्रयोगाद्यंसर्वमस्यास्त्रिपुरावत्प्रकीर्त्तितम् ॥
७८ ॥ तत्ररात्रौगृहेसम्यग्दिव्यान्नंयावदीप्सितम् ॥ तावद्ददातिहेमन्त्रिन्दि
व्यभोगानपिध्रुवम् ॥ ७९ ॥ मन्त्रस्तुदिव्यकमलेचिह्नाङ्गेमेप्रसीदच ॥
श्रींस्वाहातिथिवर्णोयंध्यायेत्कण्ठेब्जकस्रजाम्॥ ८० ॥ हस्तेचामृतकुम्भंच
सालंकारांमनोहराम् ॥ अथातःसम्प्रवक्ष्यामिपिचिण्डिलविनायकम्॥८१॥
सिद्धिप्रदंराक्षसानांगर्भहस्तास्ययोगिनी ॥ मनोहराकर्म्मकरीचेटीचास्यत्रि
लोचना ॥ ८२॥ नारीरम्याभिधामन्त्रोस्ययोविंशतिवर्णकः ॥ आदौतारं
ततोनारीरम्याकमलवासिनी ॥ ८३ ॥ त्वंनारींमोहयद्वन्द्वंक्लींस्वाहाध्यानमु
च्यते॥ लग्नांकल्याणमूर्त्तिंचमोहरूपांस्थितांवने ॥ ८४ ॥ पद्मानांप्रार्थितां
शम्भुविष्णुब्रह्मादिकैःसुरैः॥ मार्गकृष्णचतुर्दश्यांभौमरात्रौसरस्तटे॥ ८५ ॥
त्रिसहस्रंजपेत्पश्चान्नारङ्गैर्होममाचरेत्॥ चिह्नितास्त्रीभवेद्वश्याप्राणैरपिधनै
रपि॥ ८६॥ यदाचेच्छाभवेत्स्त्रीणांनारीरम्यांतदाजपेत्॥ उद्दण्डमुण्डहेरम्ब
मथवक्ष्येसमासतः ॥ ८७ ॥ योगिनीशरहस्तास्यरूपतःसावशङ्करा ॥ निधि
प्रान्ताचेटिकास्यमन्त्रोस्यास्तिथिवर्णकः॥ ८८ ॥वदेत्तारंनिधिप्रान्तेनिधिंदे
हिद्वयंरमा ॥ स्फ्रींस्वाहेतिचमन्त्रोयंध्यायेद्देवींत्रिमालिनीम्॥ ८९ ॥रसायन

---

१ ॐनारीरम्याकमलवासिनी त्वंनारींमोहयमोहयक्लींस्वाहा॥ इतिमन्त्रः॥ २ ओंनिधिप्रा
न्तेनिधिंदेहिदेहि श्रीं स्फ्रीं स्वाहा ॥

निधिप्रीतांभवलक्ष्मींनिधिप्रदाम् ॥ आषाढशुक्लसप्तम्यांचतुर्थ्यांवासमाहितः ॥ ६० ॥ जपेत्सप्तशतंमन्त्रंपलासतरुसन्निधौ ॥ पलासमूलैरत्यन्तैःकोमलैर्होममाचरेत् ॥ ६१ ॥ ततोदेवीनिधिप्रान्तामन्त्रिणेतोषमागता ॥ ददाति निधिमेकंहित्रैलोक्येपिसुदुर्लभम् ॥ ६२ ॥ एतासामष्टचेटीनांद्वात्रिंशच्चसहस्रकम् ॥ निर्जनेचवटाधस्थाद्वागणेशसमीपतः ॥६३॥ जपःकार्य्यस्तदासिद्धिरर्चयित्वागणेश्वरम् ॥ अथातःसम्प्रवक्ष्यामिनगरावरणेस्थितान् ॥ ६४ ॥ स्थूलदन्तादिकानष्टौगणेशान्योगिनीयुतान् ॥ शक्तिभिश्चेटिकाभिश्चयुक्तान्गम्बीजपूर्वकम् ॥ ६५ ॥ तद्बीजंचपठेन्नामङेन्तंभगवतेपदम् ॥ हृदयान्तस्तथाष्टानांमन्त्रोयंपरिकीर्त्तितः॥६६॥ पञ्चकामेश्वरीचास्यशक्तिस्तन्मन्त्र उच्यते ॥ ह्रींक्लींऐंब्लूंमितिप्रोक्त्वाश्रींमन्त्रःपञ्चवर्णकः ॥ ६७ ॥ ऋषिःसम्मोहनश्छन्दोगायत्रंदेवतामताः॥ कामेशीचषडङ्गानि[1]पृथग्वर्णैस्ततोखिलैः॥६८॥ रक्तारक्तदुकूलाङ्गलेपनांरक्तभूषणाम् ॥ पाशांकुशशरानक्षमालिकामभयंधनुः॥ ६९ ॥ पुस्तकंचवरंहस्तैर्बिभ्राणांवशकारिणीम् ॥ पञ्चकामैःपरिवृतामस्याःपूजादिकंभवेत् ॥ ८०० ॥ बाणेश्वरीसमानंतुवामेकामौतथार्चयेत् ॥ उदग्दक्षिणयोर्देव्यास्स्थलकेत्रिपुयोगिनी ॥ १ ॥ अञ्जनानांसिद्धिकरीनष्टवेषास्यचेटिका ॥ तारंचनष्टवेषेचभ्रामिणीह्रींद्वयंवदेत् ॥ २ ॥ स्त्रींस्त्रींस्वाहाविश्ववर्णो मन्त्रोध्यानंनिरूप्यते ॥ मांसंचरुधिरंसद्यश्चर्वयन्तींसुभीषणाम् ॥ ३ ॥ प्रेतासनांमहादेवींनष्टवेषांभजाम्यहम् ॥ जपेत्सहस्रत्रितयंकृष्णाष्टम्यांमहानिशि॥ ४ ॥होमश्चगजदन्तेनदशांशस्तुष्यतिध्रियम्॥ ददातिमन्त्रिणेचार्द्रमस्थिते नतुसाधकः॥ ५ ॥भूतप्रेतपिशाचादीन्खिलन्संवशयेदपि॥ अथातःसम्प्रवक्ष्यामिकलिप्रियगजाननम् ॥ ६ ॥ योगिन्यस्यबृहत्कक्षीगुटीसिद्धिप्रदामता ॥ त्रिवर्णेशीशक्तिरस्य क्लींऐंसौश्चमनुर्मतः ॥ ७ ॥ द्विरावृत्या[3]षडङ्गानि

१ ह्रींअंगुष्ठाभ्यांनमः, क्लींतर्जनीभ्यांनमः, ऐंमध्यमाभ्यांनमः, ब्लूंअनामिकाभ्यांनमः, श्रींकनिष्ठिकाभ्यांनमः, ह्रींक्लींऐंब्लूंश्रींकरतलकरपृष्ठाभ्यांनमः ॥ इसी रीतिसे हृदयादिन्यास की भी करलेवे २ ॐनष्टवेषेभ्रामिणिह्रींह्रींस्त्रींस्त्रींस्वाहा ॥ यह चौदह अक्षर का मन्त्रहै ३ क्लीं ऐंसौः क्लीं ऐं सौः । इन छःबीजोंसे षडङ्गन्यास होताहै जैसे क्लीं हृदयाय नमः, ऐं शिरसे स्वाहा, सौःशिखायै वषट्, क्लीं कवचायहुम्, ऐं नेत्रत्रयायवौषट्, सौःअस्त्रायफट्

पञ्चबाणान्प्रविन्यसेत् ॥ पञ्चकामाश्चविन्यस्यमूलेनव्यापकंचरेत् ।।८।।उद्य
त्सूर्य्यसहस्राभांमाणिक्यवरभूषणाम् ॥ स्फुरद्वलदुकूलाढ्यांनानालङ्कारभूषिता
म् ॥ ९ ॥ इक्षुकोदण्डबाणांश्च ह्यक्षमालांचपुस्तकम् ॥ दधतींपूजयेत्पश्चा
त्षडङ्गानिप्रपूजयेत् ॥ १० ॥ पञ्चबाणास्ततःपूज्यारत्यादित्रितयंततः ॥
कामाष्टकंततोभैरवाष्टकञ्चापिमातरः ॥ ११ ॥ पीठाष्टकंचलोकेशान्मध्ये
देवान्समर्चयेत् ॥ पुरश्चरणकृत्यादि काम्यकर्म्मतथाखिलम् ॥ १२ ॥ एत
स्यास्त्रिपुरेशीचचेटिकास्यनिनादिनी ॥ निनादिनीचगुटिकां देहिस्त्रींवह्नि
गेहिनी ॥ १३ ॥ द्वादशार्णोमनुर्ध्यानसूर्ध्वकेशींत्रिलोचनाम् ॥ खेचरीं
तांचञ्चलाक्षीं महानादांभजाम्यहम् ॥ १४ ॥ अमायांचनरःसायंनद्यांस्ना
नाद्विशेषतः ॥ कृष्णायांनिशिकर्तव्यस्तत्तीरेचायुतंजपः ॥ १५ ॥ कस्तूरी
कमलैर्होमोदशांशंतत्रदेवता ॥ महाशब्दंप्रकुरुतेभीतिदंध्यानतत्परः॥१६॥
नबिभेतियदामन्त्री तदादेवीप्रसीदति ॥ ददातिगुटिकामेकांसिद्धिदां
चमनोहराम् ॥ १७ ॥ अथातःसम्प्रवक्ष्यामिचतुर्दन्तंगजाननम् ॥ सर्प्पास्या
योगिनीचास्य धातुवादक्रियाकरी ॥ १८ ॥ एककामेश्वरीशक्तिः काम
बीजंमनुर्मतः ॥ ऋषिःसम्मोहनश्छन्दो गायत्रीदेवतामता ॥ १९ ॥ एकका
मेश्वरीबीजं कःशक्तिर्बिन्दुरुच्यते ॥ लःकीलकंषडङ्गानि षड्दीर्घान्वितमूल
तः ॥ २० ॥ पूर्वोक्तपञ्चबाणांश्च न्यसेद्ध्यानंसमाचरेत् ॥ २१ ॥ जपाकुसु
मसङ्काशांधनुर्बाणकरांस्मरेत्॥नानालङ्कारशुभगांमोहयन्तींजगत्त्रयम्॥२२॥
त्रिकोणंचाष्टपत्रंच ततोभूबिम्बमालिखेत्॥मोहिनीक्षोभिणीचैव शशिनीस्त
म्भिनीतथा॥२३॥ आकर्षिणीद्राविणीच तथैवाह्लादिनीमता ॥ क्लिन्नाचक्लेदि
नीचापि ततःसिंहासनंयजेत् ॥ २४ ॥ ततोदेवींसमावाह्यार्चयेन्मुद्राश्चदर्शये
त् ॥ अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ २५ ॥ त्रिपुरायास्ततश्चाङ्गा
नर्चयेच्चदलाष्टके ॥ अनङ्गपदमुच्चार्य्य रूपिणीमदनातथा ॥ २६ ॥ मन्मथाकु

---

१ पांच बाण और पांच कामों के नाम पीछे लिखे हैं २ निनादिनिगुटिकांदेहि देहि स्त्रींस्वाहा ॥ इतिमन्त्रः ॥ ३ श्लोकोक्तरूपिणी आदि नामों के प्रथम अनङ्ग पद को जोड़ लेना ॥ जैसे, अनङ्ग रूपिणी । अनङ्गमदना । इत्यादि ॥

सुमाचेति तदग्रेमदनातुरा ॥ शिरामेपवलातद्वद्दीपिकाष्टौसमीरिता ॥२७॥ दिगीश्वरास्ततःपूज्याजपेदर्कसहस्रकम् ॥ हुनेद्वन्धूककुसुमैस्तर्प्पणादितत श्चरेत् ॥ २८ ॥ नमोन्तामनवस्तेषांक्रमान्नामानिवच्म्यहम् ॥ अग्रेपृष्ठेद्विद न्तादिद्वितुण्डाक्षोविनायकः ॥ २९ ॥ तथासृष्टिगणेशश्चयक्षविघ्नेशएवच ॥ गजकर्णशिचत्रघण्टःस्यान्मङ्गलविनायकः ॥ ३० ॥ विनायकश्चमित्रादि रथवानन्दकाननम् ॥ व्यवस्थितागणेशायेतेवक्ष्यन्तेमयाधुना ॥ ३१ ॥ मोदंप्रमोदंसुमुखंदुर्मुखंगणनायकम् ॥ विनायकोज्ञानपूर्वोद्वारविघ्नेशएवच ॥ ३२ ॥ अविमुक्तेशनिकटेत्वविमुक्तविनायकः ॥ योगिन्यश्चक्रमादेषांकीर्त्य न्तेप्रेतवाहना ॥ ३३ ॥ दन्तसूकाकरारौद्रीमृगशीर्षावृषानना ॥ व्यालास्या धूर्त्तविश्वासाव्योमैकचरणार्धदृक् ॥ ३४ ॥ तापिनीतुष्टिपूर्वाचशोषिणीको टरीतथा ॥ विद्युत्प्रभास्थूलनासामार्जारीकंठपूरणा ॥३५॥ कामाक्ष्यट्टाट्टहा साचबलाकागतिपुण्यदा ॥ मूकास्याचेतियोगिन्योऽन्तंनामनमोन्तकम् ॥ ३६ ॥ स्वबीजाद्यंभवेन्मन्त्रोयथानामार्थकारकः ॥ अथातःसम्प्रवक्ष्यामिश क्तिमेषांसुसिद्धिदाम् ॥ ३७ ॥ विख्यातांराजमातङ्गींसद्यःप्रत्ययकारकाम् ॥ ऐंह्रींश्रींमनवःप्रोक्ताभगवतीपदंवदेत् ॥ ३८ ॥ श्रीमातङ्गेवदेदेतच्छूरिसर्वजने तिच ॥ मनोहरिसर्वमुखराजिसर्वमुखेतिच ॥ ३९ ॥ रजनीसर्वराजेतिवशं करिवदेत्ततः ॥ सर्वस्त्रीपुरुषेत्युक्त्वावशंकरिपदंवदेत् ॥ ४० ॥ सर्वदुष्टमृगव शंकरिसर्वपदंततः ॥ सत्त्ववशंकरिसर्वलोकमुक्त्वामुकंवदेत् ॥ ४१ ॥ मेवशा मानयस्वाहेत्यष्टाशीत्यक्षरोमनुः ॥ एकविंशद्विश्वधृतिधृतिविश्वकरैर्मनोः ॥ ४२ ॥ ओंनमोमुखमंत्राणैःऐंह्रींश्रींबीजपूर्वकैः ॥ षडङ्गन्यासउदितःपदन्या संप्रवीम्यहम् ॥ ४३ ॥ शिरोललाटभ्रूमध्यतालुकण्ठेमनोगले ॥ हृदयेऽनाह तेबाहोर्जठरेनाभिमण्डले ॥ ४४ ॥ स्वाधिष्ठानेव्यञ्जनेचपादयोर्दक्षिणान्य योः ॥ मूलाधारेगुदेन्यस्यपदान्यष्टदशक्रमात् ॥ ४५ ॥ त्र्येकद्विचतुर्वसुषट् नगाष्टदशदिग्गजैः ॥ वेदाग्नीन्दुद्वित्रिनेत्रैर्वर्णैर्मन्त्रपदानितु ॥ ४६ ॥ ऐंह्रींश्रींराजमातङ्गेनमउक्त्वान्यसेत्ततः ॥ मूलाधारेपूर्वबीजत्रयंप्रीत्यैपदंव देत् ॥ ४७ ॥ मातङ्गचैनमइत्युक्त्वाहृदयेविन्यसेत्पुनः ॥ बीजत्रयंततोमनो

भवायैचनमोवदेत् ॥ ४८ ॥ भ्रूमध्येविन्यसेत्पश्चाद्देवीन्यासंसमाचरेत् ॥
शिरोवदनहृद्गुह्येपादेपुक्रमतोन्यसेत् ॥ ४९ ॥ हृल्लेखांगगनांरक्तांततश्चा
पिकपालिकाम् ॥ महोच्छुष्मांस्वनामादिवर्णबीजपुरस्सरम् ॥ ५० ॥ मात
ङ्ग्यन्तांप्रविन्यस्यबाणशक्तिंतथान्यसेत् ॥ मूर्धपादास्यगुह्येपुहृदयेद्राविणीं
क्रमात् ॥ ५१ ॥ शोषिणींबन्धिनींमोहिनींचैवाकर्षिणीन्तथा ॥ मातङ्ग्यन्तां
स्वबीजाद्यांततःकामाष्टकंन्यसेत् ॥ ५२ ॥ बीजत्रयाद्यांमातङ्गीपदान्तंमन्म
थंमुखे ॥ मकरध्वजंवामांसेमदनंवामपार्श्वके ॥ ५३ ॥ वामकट्यांपुष्प
धन्वानाभौबकुसुमायुधः ॥ कन्दर्पोदक्षकट्यांचदक्षपार्श्वेमनोभवम् ॥
५४ ॥ रतिप्रियंचदक्षांसेतच्छक्तिन्यासउच्यते ॥ मातङ्ग्यन्ताअनङ्गाद्याःस्थाने
ष्वेष्वेवविन्यसेत् ॥ ५५ ॥ कुसुमामेखलाप्रोक्तामदनामदनातुरा ॥ मद
नोद्वेगिताग्रेसम्भवाभुवनपालिनी ॥ ५६ ॥ शशिरेखाततःकुर्य्यान्न्यासं
लक्ष्म्यादिकंयथा ॥ ङेमातङ्गीनमोन्तांश्चलक्ष्मींचापिसरस्वतीम् ॥ ५७ ॥
रतिंप्रीतिंकीर्त्तिंशान्त्यौपुष्टिंतुष्टिंक्रमेणच ॥ मूलाधारेतथामूलेमणिपूरेतथाह
दि ॥ ५८ ॥ कण्ठेमुखेभ्रुवोर्मध्येशिरस्येवंचविन्यसेत् ॥ ब्राह्म्याद्याःपूर्वमुद्दि
ष्टामातङ्गीपदपश्चिमाः ॥ ५९ ॥ मूलाधारेस्वाधिष्ठानेनाभौहृदिगलेमुखे ॥
भ्रूमध्येमस्तकेचैवमसिताङ्गादिभैरवान् ॥ ६० ॥ मान्तङ्ग्यन्तान्न्यसेत्पश्चा
न्मातङ्ग्यन्ताइमाअपि ॥ आधारेविन्यसेद्वामांज्येष्ठांलिङ्गस्यमूलके ॥ ६१ ॥
नाभौरौद्रींतथाशान्तिंहृदयेसिद्धिदांगले ॥ वागीश्वरींचभ्रूमध्येक्रियाशक्तिं
चबिन्दुके ॥ ६२ ॥ लक्ष्मींकलापदेसृष्टिंरोधिकायांतथान्यसेत् ॥ अर्धेन्दौमो
हिनींन्यस्यनादेतुप्रथमांन्यसेत् ॥ ६३ ॥ भाविनींचापिनादान्तेततोमान्यांत
डिल्लताम् ॥ विष्णुंवज्रेविष्णुशक्तिंध्रुवमण्डलकेन्यसेत् ॥ ६४ ॥ ऐंह्रींश्रींपूर्व
काश्चैताङेमातङ्गीनमोन्तकाः ॥ चतस्रःशक्तयोन्यस्यामातङ्गींशिरसिन्यसेत् ॥
६५ ॥ ललाटेमहामातङ्गींमहालक्ष्मींतथाहृदि ॥ सिद्धलक्ष्मींतथामूलेमूलाधा
रेप्रविन्यसेत् ॥ ६६ ॥ मूलमन्त्रंपुनस्तेनसर्वाङ्गव्यापकंचरेत् ॥ एवंन्यस्तश
रीरोसौचिन्तयेन्मन्त्रदेवताम् ॥ ६७ ॥ अमृतोदधिमध्यस्थेरत्नद्वीपेमनोहरे ॥
स्वर्णप्राकारसंवीतेमण्डपेरत्ननिर्म्मिते ॥ ६८ ॥ कदम्बबिल्वकल्हारकल्पवृक्षो

पशोभिते ॥ वेदीमध्येसुखास्तीर्णेरत्नसिंहासनेशुभे ॥ ६६ ॥ अष्टपत्रंमहाप
द्मंकेशराढ्यंसकर्णिकम् ॥ तन्मध्येतुत्रिकोणंस्यादष्टपत्रंततोबहिः ॥ ७० ॥
पुनःषोडशपत्रंस्यात्तद्बाह्येस्याच्चतुर्दलम् ॥ वेदास्रंसचतुर्द्वारंमण्डलंप्रोक्तमुत्तम
म् ॥ ७१ ॥ तस्यमध्येसुखासीनांश्यामवर्णांशुचिस्मिताम् ॥ कदम्बमाला
भरणांपूजितांचसुरासुरैः ॥ ७२ ॥ प्रलम्बालकसंयुक्तांचन्द्ररेखावतंसिकाम् ॥
ललाटेतिलकोपेतामीषत्प्रहसिताननाम् ॥ ७३ ॥ किञ्चित्स्वेदाम्बुमधुरलला
टफलकोज्ज्वलाम् ॥ वलीतरंगमध्याभांरोमराजीविराजिताम् ॥ ७४ ॥ सर्वा
भरणसंयुक्तांमुक्ताहारविभूषिताम् ॥ ७५ ॥ नानामणिगणोन्नद्धकटिसूत्रैरलं
कृताम् ॥ वलयैरत्नखचितैःकेयूरैर्मणिभूषितैः ॥ भूषितांद्विभुजांबालांमदाघूर्णि
तलोचनाम् ॥७६॥ आपीनमण्डलाभोगसमुन्नतपयोधराम् ॥ प्रलम्बकर्णा
भरणांस्वर्णोत्तंसविराजिताम् ॥ ७७ ॥ तमालनीलांतरुणींमधुमत्तांमतङ्गिनी
म् ॥ चतुष्षष्टिकलारूपांपार्श्वस्थशुकसारिकाम् ॥ ७८ ॥ कोटिबालार्कस
ङ्काशांजपाकुसुमसन्निभाम् ॥ एवंवापीतवर्णांवाध्यायेन्मातङ्गिनींपराम् ॥
७६ ॥ धर्म्मादिक्लृप्तपूर्वोक्तेपीठेचर्याःशक्तयोनव ॥ ऐंह्रींश्रींबीजपूर्वाङ्गेमात
ङ्गीनमोन्तकाः ॥ ८० ॥ विभूतिरुन्नतिःकान्तिःकीर्त्तिःसृष्टिश्चसम्मतिः ॥
पुष्टिरुत्कृष्टिर्ऋद्धिश्चमातङ्ग्यानवशक्तयः ॥ ८१ ॥ वांछायाकमलासर्व
शक्त्यन्तेकमलापदम् ॥ सनायनमइत्युक्त्वामातङ्ग्याःपीठमर्चयेत् ॥ ८२ ॥
देव्यामूर्तिंचमूलेनकल्पयित्वायथाविधि ॥ तस्यामावाहयेद्देवीमर्चयेत्तदन
न्तरम् ॥ ८३ ॥ पाशांकुशवराभीतिखड्गचर्म्मधनुःशरान् ॥ मौशलीदुर्गि
बाणाख्यांयोनिमुद्रांप्रदर्शयेत् ॥८४ ॥ त्रिकोणेपूर्वरक्षोदकोणेरत्यादिका
यजेत् ॥ पाशांकुशाचश्वेताभाप्रथमायान्तुसाञ्जलिः ॥ ८५ ॥ अन्त्यारुणे
क्षुकोदण्डपञ्चबाणलसत्करा ॥ त्रिकोणकाष्टदलयोरन्तरालेतुपूजयेत् ॥
८६॥ मध्येदिक्षुक्रमात्पञ्चहृल्लेखादिकशक्तयः ॥ गुणंसृण्यभयेष्टानिवहन्त्योमृ
तसन्निभाः ॥८७॥ अग्नीशरक्षःपवनकोणेष्वग्रेदिशासुच॥ यजेदङ्गानिमन्त्र

१ ऐं ह्रीं श्रीं सर्वशक्तिकमलासनायनमः ॥ इति मन्त्रः योनिमुद्राका लक्षण पीछे कई जगह लिखचुके हैं ॥

ङ्गःपञ्चबाणास्ततोर्चयेत् ॥८८॥ दिक्ष्वग्रेक्रमतोमुक्तास्वर्णविद्रुमहीरकान् ॥
अमलारुणभायुक्तान्धनुर्बाणायुधांस्तथा ॥८९॥ दलेषुपूजयेदग्रादनङ्गकुसु
मादिकाः ॥ गुणसृष्ट्यभयेष्टानिधारयन्त्योरुणप्रभाः ॥९०॥ अग्रेदलानांसम्पू
ज्यालक्ष्म्याद्याश्चारुभूषणाः ॥ लक्ष्मींहेमप्रदांपद्मकराकौशुम्भकाम्बराम् ॥
९१॥सरस्वतीशङ्खनिभाचिन्मुद्रापुस्तकंरतिः॥श्वेताभापुष्पबाणेक्षुहस्ताचाम
ललोचना ॥९२॥ धनुर्बाणकराप्रीतिर्मेचकाभासिताम्बरा ॥ कीर्त्तिःकुण्डसमा
पद्मचिन्मुद्राकरशालिनी ॥ ९३ ॥ चिन्मुद्राभययुक्शान्तिर्ध्यानस्तिमितलो
चना ॥ बालाभयङ्करापुष्टिः पीताङ्गाचारुभूषणा ॥ ९४ ॥ तुष्टिर्वराभयकरा
प्रसन्नमुखपङ्कजा॥ द्वितीयाष्टदलेपूज्यामन्मथाद्यामदोद्धताः ॥ ९५॥ पुरआ
कृष्टचापेज्यापृष्ठदेशनिषङ्गकाः ॥ पत्रसंस्थामातरस्तुतदग्रेचाष्टभैरवाः॥९६ ॥
कपालशूलडमरुवेतालासक्तपाणयः ॥ दीर्घस्वराद्याब्राह्मयाद्याह्रस्वाद्याभैर
वाअपि ॥ ९७ ॥ ततःषोडशपत्रस्थावामाद्याःश्यामविग्रहाः ॥ आदर्श
रत्नदीपंचव्यजनञ्चततःपरम् ॥ ९८ ॥ नागवल्लीदलञ्चैवचामरंज्ञानकोश
कम् ॥ वासोमाल्यातपत्राणांभरणांशुकशालिकैः ॥ ९९ ॥ चामरंरत्नक
लशंतालवृन्तप्रदीपकम् ॥ बिभ्राणावामहस्तैश्चदेवेशाःखड्गपाणयः॥१००॥
रक्तवर्णाःसुविमलाभावयेदर्चयेदिमाः ॥ वादयन्तेसदावीणाञ्चतुःपत्रेततो
र्चयेत् ॥ १ ॥ मातङ्ग्याद्यास्तत्रपूज्याःपाशांकुशवराभयैः ॥ अलंकृतभु
जारक्ताद्वितीयाचेन्दुसन्निभा ॥ २ ॥ असिखेटकशूलाब्जमुण्डहस्तातथापरा ॥
पाशांकुशसरोजानियोनिमुद्राञ्चबिभ्रतीम् ॥ ३ ॥ अरुणाचान्तिमाहेमरत्न
पत्रेवराभया ॥ दधानाश्यामवर्णाचध्यातव्यामन्त्रिसत्तमैः ॥ ४ ॥ अ
ग्निनैर्ऋत्यवायव्यरुद्रकोणेषुसंयजेत् ॥ गणेशदुर्गावटुकक्षेत्रपालान्बहिर्य
जेत् ॥ ५ ॥ चतुरस्रेलोकपालास्तदस्त्राणिचतद्बहिः ॥ प्रजपेदयुतम्म
न्त्रीमन्त्रम्पश्चाद्दशांशतः ॥ ६ ॥ त्रिस्वाद्वयुक्तैर्जुहुयाद्बन्धूककुसुमैर्वशी ॥
तर्प्पणम्मार्जनंकृत्वाब्राह्मणाराधनन्तथा ॥ ७ ॥ एवंसिद्धमनुर्मन्त्रीसाधये
न्निजवाञ्छितम् ॥ भाग्यार्थीजुहुयाज्जातीमल्लिकानागकेशरैः ॥ ८॥ श्री
फलैश्चापितत्पत्रैर्होमाद्राज्यश्रियंलभेत् ॥ राजपुत्रःपङ्कजैःस्वांश्रियमाप्नोत्य

नुत्तमाम् ॥ ६ ॥ लक्ष्मीपुष्पोत्पलैश्चैववशयेत्सकलंजगत् ॥ जपावन्धूक बकुलैर्वञ्जवृक्षसमुद्भवैः ॥ सुमनोभिश्चजुहुयाद्वश्यायैवहिमन्त्रवित् ॥ १० ॥ मधुनाचहुनेन्मन्त्रीसर्वसिद्धिर्भवत्यलम् ॥ त्रिस्वादुसंयुतैःसम्यग्वेतसोत्थस मिद्वरैः ॥ ११ ॥ जुहुयाद्वृष्टिकामस्तुगुडूचीभिर्ज्वरंहरेत् ॥ कदम्बकुसुमैर्हुत्वा वशयेत्प्रमदाजनान् ॥ १२ ॥ आयुःकामःप्रजुहुयाद्दूर्वाभिर्नात्रसंशयः ॥ अन्नंप्रजुहुयान्मन्त्रीचान्नवाञ्जायतेचिरात् ॥ १३ ॥ शालितण्डुलहोमेनधना कुलगृहोभवेत् ॥ होमद्रव्यन्तुयत्प्रोक्तंत्रिस्वाद्वक्तंतुतद्भवेत् ॥ १४ ॥ नन्द्याव र्त्तप्रसूनैःस्याद्धोमोवाक्सिद्धिदःपरः ॥ निम्बप्रसूनहोमाच्चकमलांवाञ्छितां लभेत् ॥ १५ ॥ हुनेत्किंशुकहोमैर्यःसभवेत्तेजसांनिधिः ॥ चन्दनागुरुकर्पूररो चनाकुंकुमैरपि ॥ १६ ॥ होमात्तुविश्वंसकलंवशयेन्नात्रसंशयः ॥ अथाभि जप्तैरेतैस्तुतिलकंजनमोहनम् ॥ १७ ॥ सिन्दुवारस्यमूलानिहोमयेद्वन्धमुक्त ये ॥ उग्रगन्धस्यतैलेनसंसिक्तैर्लवणैर्हुनेत् ॥ १८ ॥ अचिराच्छत्रुसङ्घंसनाश येन्नात्रसंशयः ॥ सञ्चूर्णितनिशामिश्रैर्लवणैःस्तम्भयेद्रिपुम् ॥ १९ ॥ परिप क्वैरतिरसैःफलैःपुष्पैःसुगन्धिभिः ॥ होमाद्वाञ्छितमाप्नोतिनात्रकार्य्याविचा रणा ॥ २० ॥ अथमन्त्रान्तरंवक्ष्येमातङ्गयाअतिसिद्धिदम् ॥ ऐं क्लींसौः ऐंसमु च्चार्य्यह्रींश्रींतारंसमुच्चरेत् ॥ २१ ॥ नमोभगवतीत्यादिश्चतुर्विंशतिवर्णकः ॥ उच्चरेत्सर्वमन्त्रस्यरञ्जनींक्लींततोवदेत् ॥ २२ ॥ तथाश्रीवीजमुच्चार्य्य सर्वरा जादिकान्वदेत् ॥ पूर्वमन्त्रस्यवर्णास्तुचत्वारिंशत्क्रमात्ततः ॥ २३ ॥ वशंकरि पदंप्रोक्तापश्चान्मन्त्रस्यामुकादिकान् ॥ एकादशार्णान्प्रवदेच्छ्रींह्रींऐंसौस्ततोव देत् ॥ २४ ॥ क्लींएवेतिद्व्यूनशतंमन्त्रेवर्णाःप्रकीर्तिताः ॥ अयंमन्त्रस्त्रिभुव नवशीकारकरःपरः ॥ २५ ॥ आचार्य्यानुग्रहात्प्राप्योमहापुण्यतमैर्जनैः ॥ दुष्प्राप्योऽकृतपुण्यैश्चमुनीन्द्राद्यैश्चसेवितः ॥ २६ ॥ वाञ्छावितरणेक ल्पपादपःपरिकीर्त्तितः ॥ ऋष्याद्याःपूर्वमुदितामन्त्रस्यास्यभवन्तिहि ॥ २७ ॥ ततस्तुमातृकान्यस्यदेवताभावसिद्धये ॥ पञ्चबाणानंगुलीपुतलयोर्मक रध्वजम् ॥ २८ ॥ न्यसेन्मन्त्रंदशार्णंसौर्वाग्भवंङेन्तमुच्चरेत् ॥ मकरध्वजइत्येत द्ध्रींनमोन्तःप्रकीर्तितः ॥ २९ ॥ शिखाशिरोललाटेषुभ्रूमध्येनेत्रयुग्मके ॥ श्रोत्र

योर्घ्राणयोर्वक्त्रेगण्डयोःककुदिक्रमात् ॥ ३० ॥ अक्षयोरुरसिन्यस्यस्तनयो र्हृदयाम्बुजे ॥ नाभिमण्डलकेगुह्येमूलाधारेपदानिहि ॥ ३१ ॥ त्रयोविंश तिसङ्ख्यानित्रिर्द्व्येकद्विचतुस्तथा ॥ षडष्टकैकचन्द्राष्टनवाष्टदशपङ्क्तिभिः ॥ ३२ ॥ वस्वष्टवह्निचन्द्राक्षित्रिद्वित्रित्रिक्रमान्न्यसेत् ॥ एकोनविंशदित्युक्ता न्मत्रार्णानादितःक्रमात् ॥ ३३ ॥ पदैःषड्भिःषडङ्गानिऐंह्रींश्रींपूर्वकैश्चरे त् ॥ कामशक्तीन्दिराबीजान्युक्तानिचशिखामनोः ॥ ३४ ॥ षड्दीर्घकाम युक्तेनषडङ्गान्वाप्रकल्पयेत् ॥ द्राविण्याद्याःपुनःपञ्चकुक्षौपार्श्वद्वयेहृदि ॥ ३५ ॥ मणिपूरेन्यसेदत्रब्राह्म्याद्याश्चात्रविन्यसेत् ॥ दक्षपादांगुलीमूलेगु ल्फसन्धौचजानुनि ॥ ३६ ॥ दक्षोरुमूलेवामोरुमूलेजानुनिगुल्फके ॥ वाम पादांगुलीमूलेततोलक्ष्म्यादिकान्न्यसेत् ॥ ३७ ॥ वामदोर्मूलकेमध्येसन्धौ चमणिबन्धके ॥ वामहस्तांगुलीमूलेदक्षहस्तांगुलीतटे ॥ ३८ ॥ मणिबन्धे मध्यसन्धौकक्षयोर्मूलकेक्रमात् ॥ मस्तकेचभ्रुवोर्मध्येनेत्रयोःश्रोत्रयोर्गुदे ॥ ३९ ॥ नासायुग्मेमुखेगण्डद्वन्द्वेजिह्वाग्रदेशके ॥ मूलाधारेस्वाधिष्ठानेतालौ वामादिकान्न्यसेत् ॥ ४० ॥ लक्ष्म्यादिकस्थलेन्यस्याअसिताङ्गादिभैरवाः ॥ मातङ्ग्यादिचतुष्कंचहृदिनाभौशिरोगुदे ॥ ४१ ॥ गणेशदुर्गावटुकक्षेत्रपा लास्ततोन्यसेत् ॥ कम्बुकण्ठेषुमूलेचमन्त्रेणव्यापकंचरेत् ॥ ४२ ॥ सरस्व तींमहालक्ष्मींनिधियुग्मंप्रविन्यसेत् ॥ आननेचभ्रुवोर्मध्येदक्षपादेतथोत्तरे ॥ ४३ ॥ एवंन्यस्यमनुंमन्त्रीध्यायेद्देवीमनन्यधीः ॥ अमृतस्यसमुद्रेक्षुरत्नद्वीपे महावने ॥ ४४ ॥ पञ्चानांकल्पवृक्षाणांमण्डपेमणिसंयुते ॥ मणिसिंहासन स्योर्ध्वमुपविष्टांविचिन्तयेत् ॥ ४५ ॥ मधुपानेनमुदितांपूर्णमानानिरीक्षणा म् ॥ शुभ्रांशुवदनांनीपपुष्पगुम्फितवेणिकाम् ॥ ४६ ॥ वीणालसत्करांर क्तवस्त्रांबिम्बाधरांशुभाम् ॥ कस्तूरीतिलकांचन्द्रमुकुटामुन्नतस्तनीम् ॥ ४७ ॥ शङ्खपत्रश्रुतिंमध्यांनम्रांसंमेचकच्छविम् ॥ वलयाङ्गदहारादिमञ्जीररशनान्वि ताम् ॥ ४८ ॥ हास्यैर्भक्तांस्तोषयन्तींपार्श्वसंस्थालकांशुकाम् ॥ पूर्वोक्तेचशु भेपीठेयन्त्रमेतत्प्रकल्पयेत् ॥ ४९ ॥ त्रिकोणंपञ्चकोणंवाप्यष्टपत्रंकलाछदम् ॥ अष्टपत्रंवेदंदलंचतुरस्रंमनोरमम् ॥ ५० ॥ चतुर्द्वारसमायुक्तंसर्वदृष्टिमनोहर

म् ॥ अत्रावाह्यजेद्देवींमन्त्रीश्रृङ्गारवेषतः ॥ ५१ ॥ मूलेनमूर्तिसङ्कल्प्यकृत्वा र्घ्यस्थापनादिकम् ॥ मातङ्गीपीठमभ्यर्च्यकृत्वामूलप्रकल्पनम् ॥ ५२ ॥ ततः पुष्पोपचारान्तेलयाङ्गंसम्यगर्चयेत् ॥ त्रिकोणेभ्यन्तरेप्राग्वत्षडङ्गानिप्रपूजयेत् ॥ ५३ ॥ मातङ्ग्याद्याश्चतुःपत्रेचतुरस्रेत्रिकोणतः ॥ गणेशादिचतुष्कंच चतुर्द्वारेषुचार्चयेत् ॥ ५४ ॥ सरस्वत्यादिकान्यासप्रोक्ताश्चाग्रेदिगीश्वरान् ॥ तदस्त्राणिचतद्बाह्येन्यासपूर्वजपेन्मनुम् ॥ ५५ ॥ पुनरभ्यर्च्याङ्गषट्कंसुमिष्टान्नैश्चखाद्यकैः ॥ सदुग्धैश्चनिवेद्याथदेवींनत्वाततोबलिम् ॥ ५६ ॥ दद्याद्धक्तेनमन्त्रज्ञस्तेनेष्टंलभतेचिरात् ॥ नमोभगवतीत्युक्त्वामातङ्गेश्वरितत्परम् ॥ ५७ ॥ इमंबलिंगृह्णयुग्मंस्वाहान्तःसिद्धवर्णकः ॥ ततोदेव्याउत्तरतोवायव्यादिसकोणकम् ॥ ५८ ॥ पङ्क्तिक्रमेणऐंह्रींक्लींगुरुभ्योनमउच्चरेत् ॥ परमेष्ठिगुरुभ्यश्चपरमाचार्य्यगुरुभ्यः ॥ ५९ ॥ आदिसिद्धगुरुभ्यःसद्गुरुभ्यो नमउच्चरेत् ॥ सर्वत्रपञ्चस्थानेषुगुरून्सम्पूजयेदिति ॥ ६० ॥ पूर्वमेवजपेल्लक्षं पुरश्चरणसिद्धये ॥ पलासपुष्पैस्त्रिस्वादुयुक्तैरन्तेऽयुतंहुनेत् ॥ ६१ ॥ तर्प्पणंमार्ज्जनंकुर्य्याद्भोजयेद्भूसुरानपि ॥ कुमारीर्भोजयेच्चापिवशयेत्क्षोभयेज्जगत् ॥ ६२ ॥ मातङ्ग्यनुगृहीभूत्वासर्वकर्म्माणिसाधयेत् ॥ कुण्डेवास्थण्डिलेवापिविधेयंकाम्यकर्म्मकम् ॥ ६३ ॥ रक्तवस्त्रपरीताङ्गोरक्तमाल्यानुलेपनः ॥ घृताक्तगुग्गुलैर्हुत्वाराज्ञश्चवशयेत्सुधीः ॥ ६४ ॥ मल्लिकाजातिपुन्नागैर्जुहुयाद्भाग्यवान्भवेत् ॥ राज्यार्थीबिल्वपत्रैश्चहुनेत्पद्मैर्विशेषतः ॥ ६५ ॥ श्रीकामःश्वेतपद्मैश्चरक्तैर्वापिचसंहुनेत् ॥ उत्पलैर्धनकामस्तुलक्ष्मीपुष्पैश्चहोमयेत् ॥ ६६ ॥ बन्धूकैश्चैववागर्थीकिंशुकैर्बकुलैर्हुनेत् ॥ आकर्षणेतुलवणैस्तिलैर्मधुरसंयुतैः ॥ ६७ ॥ वञ्जुलैर्वृष्टिमाप्नोतिगुडूचीभिर्हरेज्ज्वरम् ॥ अन्नार्थीजुहुयादन्नैर्धान्यार्थीशालितण्डुलैः ॥ ६८ ॥ गन्धद्रव्येणहोमस्तुसर्वसौभाग्यदायकः ॥ कुंकुमैरोचनाभिर्वाहोमोवश्यार्थिनोमतः ॥६९॥ नन्द्यावर्त्तप्रसूनैश्चवागर्थीजुहुयात्तथा ॥ पलासपुष्पैस्तेजोर्थीकपिलाज्येनवाहुनेत् ॥७०॥

---

१ लक्ष्मी छींगुर नामक वृक्षप्रसिद्ध है २ बन्धूक दुपहरिया का भेद है केकईसा वृक्षहोता है ३ मौलशिरी ४ केशर ५ गोरोचन व हल्दी ॥

शत्रोरुन्मादकृद्धोमउन्मत्तकुसुमैरपि ॥ विषमेधाह्वनिम्बोक्षश्लेष्मान्तक बिभीतकैः ॥ ७१ ॥ उलूककाकगृध्रोत्थपक्षैस्तैलपरिप्लुतैः ॥ त्र्यस्रकुण्डेच शैर्वर्य्यांरिपुनाशायहोमयेत् ॥ ७२ ॥ पायसैर्गुडसम्मिश्रैःखण्डैरिक्षुदलैस्त था ॥ उन्मादनाशनोहोमःपायसैर्वाघृतप्लुतैः ॥ ७३ ॥ मरिचंतिलतैलाक्तंका शश्वासज्वरापहम् ॥ निर्गुण्डीमूलहोमेननिगडस्यविमोचनम्॥७४॥ अथा तःसम्प्रवक्ष्यामिजीवस्याकर्षणंपरम् ॥ साध्यप्रतिकृतीःकुर्य्याच्चतस्रोमन्त्रवित्त मः ॥ ७५ ॥ एकासाँध्यर्क्षवृक्षोत्थामधूच्छिष्टेनचापरा ॥ पराकुलालमृद्भूता शालिपिष्टेनचापरा ॥ ७६ ॥ लिखेत्तासांतुहृदयेमुकंमेवशमानय ॥ साध्य नामामुकस्थानेसाध्येप्राणांश्चतत्रच ॥ ७७ ॥ संस्थाप्यतास्ततःस्पृष्ट्वामूलम ष्टोत्तरंशतम् ॥ जपेन्मूलेमुकस्थानेसाध्यनामतुयोजयेत् ॥ ७८ ॥ अमुकंपद रूपंयद्यन्त्रमन्त्रेषुदृश्यते ॥ साध्याभिधानंतद्रूपंतत्रस्थानेनिवेशयेत् ॥ ७९ ॥ कुण्डमध्येद्व्यंगुलाधःपुत्तलींदारुजांखनेत् ॥ उत्तानामथपिष्टोत्थांस्वासनाध स्तथाखनेत् ॥ ८० ॥ पादन्यासस्यसंस्थानेमृन्मयींभुविपूरयेत् ॥ लवणेनसहै तास्तुतिस्रःपूर्य्यास्ततःपरम् ॥ ८१ ॥ ततोमधूच्छिष्टमयीमूर्ध्वपदामधोमुखी म् ॥ ८२ ॥ अर्कतूलकडोरेणबद्धपादांप्रलम्बयेत् ॥ कुण्डोपरिचधूमेनतथा साव्याकुलाभवेत् ॥ ८३ ॥ ततस्तुलवणंग्राह्यंकुडवैकंकृतंमधु ॥ गुडंचपेषये त्तक्षंपुत्तलीन्तेनकारयेत् ॥ ८४ ॥ स्पष्टाङ्गींसाध्यरूपेणतुल्यांश्लक्ष्णांमनोह राम् ॥ रक्तमाल्याम्बरालेपःकृतन्यासविधिःस्वयम् ॥ ८५ ॥ प्रतिमा यान्तुसं हारभागेनन्यासमाचरेत् ॥ नामप्रतिष्ठितप्राणांसाध्यानांसप्तधाछिदेत् ॥ ८६ दक्षोरुमूलात्पादान्तःप्रथमोभागईरितः ॥ वस्तितस्तुततःकण्ठंदक्षभागोद्विती यकम् ॥ ८७ ॥ भुजोदक्षस्तृतीयःस्याच्चतुर्थोमस्तकम्मतम् ॥ भुजोवामःपञ्च मःस्यात्षष्ठंवामोदरादिकम् ॥ ८८ ॥ स्यात्सप्तमंतथोर्वादिपादान्तःसव्यदेह तः ॥ स्त्रीणांविभागउद्दिष्टःकृच्छ्रसाध्योथवक्ष्यते ॥ ८९ ॥ गुल्फद्वयंतथाजानु

---

१ मोथा २ कालानिमक ३ अनारदृन ४ बहेड़ा ५ रातिमें ६ प्रतिमा ७ साध्यके नामका जो नक्षत्रहो उसके वृक्षकी लकड़ी से दूसरी प्रतिमा का निर्माण करे ८ मदार के फलकी रुई के डोरेसे ९ तौलमें चार टकेका कुड़वहोताहै ॥

द्वयंजङ्घाद्वयंतथा ॥ मध्यद्वयंचभुजयोर्द्वयंशीर्षेतदाभवेत् ॥ ९० ॥ शरीरेमेका दशधाह्यसाध्यस्याथवक्ष्यते ॥ प्राकृतानांतुसप्तानांचैकैकस्यतुसप्ततु ॥९१॥ एकैकंजुहुयाद्भागंस्मरञ्छत्रुंनिशामुखे ॥ दक्षपादाच्चपुरुषान्वामपादात्तथास्त्रियः ॥९२॥ एवंसप्ताहहतोनार्य्याःसंक्षुब्धामदनातुराः॥स्विद्यदङ्गयोवेपमानाः साधकन्तुष्टमानसाः ॥९३॥ त्राहित्राहिक्षमस्वेतिपश्यमाम्मापरित्यज ॥ एवं सर्वाव्याहरन्त्यःकरुणायुक्तमानसाः ॥९४॥ पतन्तिसाधकस्याग्रेमदनानलपीडिताः ॥ तिष्ठन्तिदासवच्चास्यमन्त्रिणोयोषितःसदा ॥ ९५ ॥ लवणन्तिलतैलाक्तंहोमयेच्छत्रुनाशनम् ॥ हरिद्राचूर्णसंयुक्तंलवणंस्तम्भनेमतम् ॥९६॥ मातङ्गीप्रीतयेनित्यम्भौमवारेप्रपूजयेत् ॥ कन्यामेकान्तथातिस्रःपञ्चसप्तथवा पुनः ॥ ९७ ॥ स्वादुभिर्भक्ष्यभोज्यैश्चखानपानैर्मनोहरैः ॥ अर्चनीयाश्च मन्त्रज्ञैःकन्यकाश्चैवसर्वदा ॥ ९८ ॥ सर्वानार्य्योभावनीयाःश्यामाएवात्रमन्त्रिणा ॥ भौमवारेतथापिष्टमयान्दीपांश्चकारयेत् ॥ ९९ ॥ प्रज्वालयेद्घृतेनैतान्मातङ्गीप्रीतये बुधः ॥ मातङ्गीप्रीतयेमन्त्रीयोगिन्यष्टकमायजेत् ॥ १०००॥ दिव्याचमहतीसिद्धागणेशीप्रेतखादिनी ॥ डाकिनीकालिकाकालरात्रिश्चेशानगोचराः ॥ १ ॥ निशाचरीचोर्ध्वकेशीशुष्काङ्गीभोजिनीतथा ॥ वीरभद्राविरूपाक्षीधूम्राप्राच्याजटाधरा ॥ २ ॥ कलहाघोररक्ताक्षीविश्वरूपाभयङ्करी ॥ प्रियाचराक्षसीवीरकुमारीवह्निकोणगाः ॥ मुण्डरारीरुद्रकार्य्याभीषणाचभयातुरा ॥ ३ ॥ त्रिपुरान्ताक्रोधिनीचदुर्मदाध्वंसिनीयमे ॥ दीर्घालम्बोष्ठिकाहंसीतापिनीमन्त्रयोगिनी ॥ ४ ॥ आदित्याचापिखट्वाङ्गीकालाग्निरितिनैर्ऋते ॥ ग्राहिणीचक्रिणीपश्चात्कङ्कालीभुवनेश्वरी ॥ ५ ॥ हंकालीयमदूतीचकौमारीचकपालिनी ॥ केशिनीमदिराद्याचचारिणीलोमजङ्घिका ॥ ६ ॥ नामकीकामुकीवायौलोमकाधोमुखीतथा ॥ व्याघ्रजटीसर्पजटीकुण्डाख्यारिविनाशिनी ॥ ७ ॥ घोरोग्ररूपाविकटाचोदग्दिशिकपालि

---

१ ईशानकोण से लेकर उत्तर तक आठदिशाओं मे आठ आठ योगिनियों की पूजा करे उनके नाम मूलसे समझ लेना ॥ ईशान, पूर्व, आग्नेय, दक्षिण, नैर्ऋत्य, पश्चिम, वायव्य और उत्तर इस क्रमसे पूजा करना ॥

नी ॥ लक्षार्धंप्रजपेन्मन्त्रंक्षोभयेत्सर्वयोषितः ॥ ८ ॥ पृथ्वीश्वरांस्तदर्धेन वशयेन्नात्रसंशयः ॥ तदर्धेनचसत्त्वानिवशगानिभवन्तिहि ॥ ९ ॥ दूरस्था योषितःसर्वाआयान्त्ययुतजापतः ॥ स्वदेशीयास्तदर्धेनसमायान्त्येवनिश्चि तम् ॥ १० ॥ सहस्रत्रितयात्सर्ववाञ्छितात्प्तिर्भवेद्ध्रुवम् ॥ अथातःसम्प्रव क्ष्यामिमन्त्रभेदम्महाफलम् ॥ ११ ॥ अष्टाशीत्यक्षरेमन्त्रेसर्वसत्त्ववशङ्करि ॥ एतस्याग्रेवदेत्सौश्चराज्यलक्ष्मीप्रदेतथा ॥ १२ ॥ सप्ताक्षराणीतिपुनःसर्वलो कादिकंवदेत् ॥ पञ्चोनशतसंख्याकवर्णोयंमन्त्रईरितः ॥ १३ ॥ ऋष्यादि कम्पूर्वमुक्तंषड्बीजैश्चषडङ्गकम् ॥ ध्यानपूजादिकंसर्वमष्टाशीतिमनोर्मतम् ॥ १४ ॥ प्रयोगाश्चतएवात्रपुरश्चर्य्यादिकन्तथा ॥ अथान्यत्सम्प्रवक्ष्यामिच तुःपञ्चाशदक्षरम् ॥ १५ ॥ ॐह्रींनमश्चपद्मेश्रींराजितेराजपूजिते ॥ जयेवि जयेगौर्य्येवंगान्धारीतिपदंवदेत् ॥ १६ ॥ त्रिभुवनवशङ्करिसर्वस्त्रीपुरुषेति च ॥ वशङ्करिसुखद्वयेवेंत्रेंवावाग्निगेहिनी ॥ १७ ॥ अजोमुनिस्तथाछन्दो निचृद्गायत्रमीरितम् ॥ देवताराजमातङ्गीषडङ्गानितुमायया ॥ १८ ॥ सर्व मेवात्रपूर्वोक्तंध्यानपूजादिकन्तथा ॥ अथास्यप्रोच्यतेभेदएकषष्टिकवर्णकः ॥ १९ ॥ त्रिभुवनवशङ्करिएतदन्तेवदेत्पुनः ॥ पठेत्प्रणवहीनोयम्मन्त्रःसर्वत्रपूर्व वत् ॥ २० ॥ किञ्चिद्वर्णविभेदेनायंप्रोक्तःपार्वतीमनुः ॥ सतारोयंसमाख्या तोविजयस्यपदंवदेत् ॥ २१ ॥ गौरिगान्धारीतिपुनःप्राग्वदेवसमापयेत् ॥ एकषष्ट्यक्षरोमन्त्रोनिचृच्छन्दोह्यजोमुनिः ॥ २२ ॥ गौरीदेवीषडङ्गानि शंक्राशेभेभदिग्भवैः ॥ मन्त्राक्षरैःषडङ्गानिध्यानमस्यानिरूप्यते ॥ २३ ॥ पाशांकुशकरांरत्नयुक्ताभरणवेणिकाम् ॥ बन्धूकाभांत्रिनयनांस्वर्णलेखांभ जाम्यहम् ॥ २४ ॥ प्राग्वत्षडङ्गंपीठेतुभुवनेश्यायजेदिमाम् ॥ आदावङ्गा निषट्कोणेब्राह्म्याद्यास्त्वष्टपत्रके ॥ २५ ॥ आशाधिपांस्तदस्त्राणिभूपु रदेसमर्चयेत् ॥ अयुतंप्रजपेन्मन्त्रंजुहुयात्पायसैर्घृतैः ॥ २६ ॥ तर्पणा दिततःकुर्य्यादेवंसिद्धोभवेन्मनुः ॥ प्रयोगाश्चात्रपूर्णायामातङ्ग्यावासमा चरेत् ॥ २७ ॥ अथातःसम्प्रवक्ष्यामिवश्यमातङ्गिकामनुम् ॥ ॐराजमुखीरा

---

१ चौदह, दश, आठ, आठ, दश, गेरह २ दिक्पाल ॥

जाभिमुखींवश्यमुखीतिच ॥ २८ ॥ मायांह्रींक्लींदेवदेविमहादेवितितोवदेत् ॥ देवाधिदेविसर्वेतिजनस्यमुखमुच्चरेत् ॥ २९ ॥ ममवश्यंकुरुद्वन्द्वंस्वाहान्तोगं कृतार्णकः ॥ दिक्सप्तऋतुवेदेषुमैत्राणैरङ्गकल्पनम् ॥ ३० ॥ विज्ञेयंराजमात ङ्गीतुल्यंपूजाजपादिकम् ॥ प्रयोगांश्चापिजानीयाद्विशेषाद्वश्यकृत्त्वयम् ॥ ३१ ॥ मायानमोहिलिहिलिचण्डमातङ्गिनीतित्र ॥ स्वाहेतितिथिवर्णोस्य न्यासपूजादिकंभवेत् ॥ ३२ ॥ राजमातङ्गिकातुल्यंजपश्चायुतसङ्ख्यया ॥ घृतपायसहोमश्चप्रयोगाद्यंचपूर्ववत् ॥ ३३ ॥ अथातःसम्प्रवक्ष्यामिकर्णमा तङ्गिकामनुम् ॥ वाग्भवंहृदयंचाथश्रीमातङ्गीपदंवदेत् ॥ ३४ ॥ अमोघेसत्य वादिनिममकर्णेपदंततः ॥ अवतारपदंद्वेधासत्यंकथययुग्मकम् ॥ ३५ ॥ ए ह्येहिश्रीश्चमातङ्ग्यैनमस्त्र्यैकव्यर्णकोमनुः ॥ अङ्गानिवाग्भवेनात्रपूजाद्यंचकृ ताकृतम् ॥ ३६ ॥ लक्षंजपःपायसाज्यैर्होमःसिद्धोभवेन्मनुः ॥ कर्णेतुकथयेदे वीपृच्छकस्यशुभाशुभम् ॥ ३७ ॥ अथातःसम्प्रवक्ष्यामिसर्वमन्त्रोत्तमोत्तमम् ॥ ऐंह्रींश्रींआंसमुच्चार्य्यह्रींक्रोंबीजैस्तथाभवेत् ॥ ३८ ॥ द्विरुक्तैश्चषडङ्गस्यवि धिःपूजाजपादिकम् ॥ लक्षत्रयंजपेन्मन्त्रंमधुरत्रयलोलितैः ॥ ३९ ॥ बन्धूक पुष्पैर्होमःस्यात्सितयापायसेनच ॥ हुनेत्कदल्याश्चफलैर्मन्त्रसिद्धिःप्रजाय ते ॥ ४० ॥ समस्तमन्त्रदानादौसिद्धःस्यात्साधकोत्तमः ॥ अथान्यत्सम्प्रव क्ष्यामिमातङ्गीमन्त्रमुत्तमम् ॥ ४१ ॥ कामिनीरञ्जिनीस्वाहाष्टाक्षरोयमुदीरितः ॥ ऋषिस्सम्मोहनश्छन्दोनिवृत्प्रोक्तास्यदेवता ॥ ४२ ॥ सर्वसम्मोहनीचाङ्गंद्विरा वृत्तिपदैर्भवेत् ॥ श्यामाङ्गींवल्लकींदोर्भ्यांवादयन्तींसुभूषणाम् ॥ ४३ ॥ चन्द्रा वतंसांविविधैर्गायनैर्मोहतींजगत् ॥ पूजामातङ्गिनीपीठेरत्याद्यास्तुत्रिकोण के ॥ ४४ ॥ पश्चावरणतःपूज्याःकेशरेष्वङ्गपूजनम् ॥ अनङ्गकुसुमाद्यास्तुपत्रे

---

१ ह्रीं २ सैंतालीस अक्षर का मन्त्रहै ३ नमः ४ तेंतालीस अक्षरका मन्त्र होताहै जैसे ऐंनमः श्रीमातङ्गिअमोघेसत्यवादिनिममकर्णेअवतरावतरसत्यंकथयकथयएह्येहिश्रीमातङ्ग्यैनमः ५ ऐंबीजसे अंगन्यास करलेना ६ मंत्रके छः अक्षरों से दो दो बार पढकर षडंग न्यास करना ७ मंत्रके तीन पदों को तीन अंगों में और फिर उन्हीं तीनपदों को शेष तीन अंगों में न्यास करना होता है जैसे कामिनी हृदयायनमः, रञ्जिनीशिरसेस्वाहा, स्वाहाशिखायै वषट् कामिनीकवचायहुम्, रञ्जिनीनेत्रत्रयाय वौषट्, स्वाहाअस्त्रायफट् ॥

ष्वग्रेषुमातरः ॥ ४५ ॥ लोकपालैश्चवज्राद्यैस्सप्तावृत्तिरियंमता ॥ प्रजपेदयुत द्वन्द्वंदशांशंजुहुयात्ततः ॥ ४६ ॥ मधूकजैस्त्रिमध्वक्तैःसर्वंसम्मोहयेज्जगत् ॥ छन्दोनिवृच्चगायत्रीमुनीनारदतुम्बुरौ ॥४७॥देवताचात्रमातङ्गीचोच्छिष्टागो ऽजवर्णका ॥ नमउच्छिष्टचाण्डालिमातङ्गीतिपदंवदेत् ॥ ४८ ॥ सर्ववशंकरि स्वाहामन्त्रोयंमोहयेज्जगत् ॥ नेत्ररामकृशानुत्रिरसनेत्रमितैःक्रमात् ॥४९॥ अङ्गानिस्युर्मन्त्रवर्णैस्ततोध्यायेद्धृदम्बुजे ॥ कृष्णाम्बरांयावकार्द्रचरणामुन्नत स्तनीम् ॥ ५० ॥ मुक्ताप्रवालमालाढ्यांशङ्खकुण्डलधारिणीम् ॥ त्र्यस्रेरत्या दिकाःपूज्याःकर्णिकायान्तुतद्बहिः ॥ ५१ ॥ पञ्चबाणास्तथाङ्गानिब्रह्माद्या श्चाष्टपत्रके ॥ द्वितीयेष्टदलेपूज्या अनङ्गकुसुमादिकाः ॥ ५२ ॥ चतुरस्रेलो कपालास्तदस्त्राणिततोबहिः ॥ अथास्यभेदावक्ष्यन्ते क्लींह्रींश्रींपूर्वकंजपेत् ॥ ५३॥ क्लींपूर्ववाजपेन्मन्त्रानेतयोर्मदनोमुनिः ॥ पूजाजपादिकंप्राग्वद्भेदांश्चा स्यापराञ्छृणु ॥ ५४ ॥ आं क्लीं ह्रीमादिकंमन्त्रक्लींह्रीआमन्तकंजपेत् ॥ वा ग्मित्वंचकवित्वंचगानशक्तिंकरोतिच ॥५५॥ मुनिःस्याद्दक्षिणामूर्तिरन्यत्सर्वं पुरोक्तवत् ॥ आंह्रींक्रोंभिर्द्विरावृत्या षडङ्गानिसमाचरेत् ॥ ५६ ॥ अंशेतुवे शीकुसुमामुक्ताभूषोन्नतस्तनीम् ॥ चूलिकानीलचूडांच वादयन्तींचवल्लकी म् ॥ ५७ ॥ माध्वींमत्तांमधुवशांश्यामलाङ्गींसुकोमलाम् ॥ त्रिकोणंपञ्च कोणञ्चबहिरष्टदलद्वयम् ॥ ५८ ॥ षोडशारंचाष्टदलंभूपुरत्रितयंलिखेत् ॥ पूज्यबीजंतथानाम वदेदुच्छिष्टपादुकाम् ॥ ५९ ॥ पूजयामीतिचप्रोक्त्वा देवतापूजनंमतम् ॥ त्रिकोणेषुचरत्याद्याः कोणान्तेतुत्रिशक्तयः ॥ ६० ॥ इच्छाज्ञानक्रियाख्याश्च पूज्याश्चाङ्गानिबाह्यतः ॥ द्राविण्याद्याःपञ्चको णेसम्पूज्याःकामशक्तयः ॥ ६१ ॥ तद्बाह्याष्टदलेपूज्याश्चाष्टदीर्घस्वरान्वि ताः ॥ ब्राह्माद्याःकन्यकानाम्न्यो द्वितीयेष्टदलेतथा ॥ ६२ ॥ अनङ्गकुसुमा द्याश्चकन्याख्यास्ताःप्रपूजयेत् ॥ उर्वश्याद्याःषोडशारेकन्यकाख्याःप्रपू

---

१ उन्नीश अक्षरका मंत्रहै २ दो, तीन, तीन, तीन,छः और दोअक्षरों से अंग न्यास करलेना जैसे नमः हृदयायनमः, उच्छिष्टशिरसेस्वाहा, चाण्डालिशिखायैवषट् इसप्रकार से और भी ज्ञातव्य हैं ॥

जयेत् ॥ ६३ ॥ उर्वशीमेनकारम्भाघृताचीमञ्जुकेशिका ॥ काश्यपीचसुकेशी मञ्जुघोषानागकन्यका ॥ ६४ ॥ यक्षकन्याचगन्धर्वकन्यावैसिद्धकन्यका ॥ परकायप्रवेशिन्याःकन्यकांदूरदर्शिनः ॥ ६५ ॥ गुटिकासिद्धकन्यांचपादुकासिद्धकन्यकाम् ॥ ततश्चतुर्षुद्वारेषुपूजयेद्द्वारदेवताः ॥ ६६ ॥ ततंचविततं चैवघनंचसुषिरंतथा ॥ वटुकंचगणेशंचक्षेत्रपालंचयोगिनीम् ॥ ६७ ॥ उच्छिष्ट शब्दपुरतःपादुकांपूजयाम्यथ ॥ स्वनामाद्यक्षरंबीजंकृत्वाग्नेयादिकेयजेत् ॥ ६८ ॥ पुनःसर्वोपचारैश्चमध्येभगवतींयजेत् ॥ स्वरास्सर्वेश्रुतियुतावामभागेततःपरम् ॥ ६९ ॥ रतिश्चरागिणीयुक्तापूज्यापार्श्वेचदक्षिणे ॥ अभ्यर्च्य परमेश्वर्य्याःपार्श्वयोःशुकसारिके ॥ ७० ॥ पुरतोगुरुपंक्तिंचस्वगुरुंपूजयेत्ततः ॥ बीजत्रयन्तुबालायाःसाधकस्यशुभंभवेत् ॥ ७१ ॥ यत्किञ्चिद्वाथवा मायाःकामोवाग्वारमापिवा ॥ मनोरुच्छिष्टमातङ्ग्यादत्त्वादौपूजयेन्मनुम् ॥ ७२ ॥ तेनानेकेमन्त्रभेदाःपूजाद्यंचयथेच्छया ॥ गौरवाल्लाघवाद्वापिकर्तव्यन्तुजपोखिलः ॥ ७३ ॥ शुचिःस्रग्वीसुवस्त्रश्चजपेल्लक्षमतन्द्रितः ॥ उच्छिष्टभक्तेनबलिंनिशिनित्यंनिवेदयेत् ॥ ७४ ॥ नित्यंजपंचकाम्यंचउच्छिष्टेनैवचाचरेत् ॥ पलासकुसुमैःस्वाद्वयुक्तैर्होमंतथात्रतु ॥ ७५ ॥ एतावतानसिद्धिश्चेद्दर्शलक्षंजपेन्मनुम् ॥ कुमारीपूजनंप्रोक्तंकुर्य्यात्तदपिसाधकः ॥ ७६ ॥ योगिन्यष्टाष्टकस्यापिपूजाकार्यात्रमन्त्रिणा ॥ उच्छिष्टभक्तशेषेणरात्रौतस्यबलिं हरेत् ॥ ७७ ॥ पूर्वोदितेनमनुनामन्त्रोयंतेनसिध्यति ॥ जपेच्चतुर्दशावृत्तिं पूजनानन्तरंमनुम् ॥७८॥ भूपतीनांपूजनीयानारीणांचविशेषतः ॥ अष्टोत्तर सहस्रेणताम्बूलंमनुनामुना ॥७९॥ प्रजसंभक्षयेद्यास्त्रीयाचितानङ्गभोगिका ॥ मन्त्रिणश्चवशेतिष्ठेद्यावदायुर्नसंशयः ॥ ८० ॥ सहदेवी[1]तथादूर्वा[2]मुशली[3] मधुयष्टिका ॥ भद्राचविष्णुदयिता[4]लक्ष्मीवल्ली[5]न्द्रवल्ल्यपि[6] ॥ ८१ ॥ अञ्जलिन्यपिसम्प्रोक्ताःपृथगेताःस्पृशञ्जपेत् ॥ अष्टोत्तरशतंमन्त्रीततस्तन्मूर्द्धिधारयेत् ॥ ८२ ॥ नरोनारीनृपोवाथधत्तेदर्पसमूहकम् ॥ इन्द्राग्निविष्णुयुग्माङ्कमन्वष्टवसुदिक्मिताः ॥ पृथग्जप्ताःशतशतमेताःसंयोज्यपेषयेत् ॥ ८३ ॥ शुष्कास्तुगुटि

१ सहदेई २ मूशरि ३ मुरेठी ४ तुलसी ५ श्रीबेलि ६ अमरबेलि ॥

कामन्त्रजप्ताश्चाथसहस्रशः ॥ ललाटेचधृताःसम्यक्सर्वस्त्रीजनरञ्जिकाः ॥ ८४ ॥ भवन्तिसर्वलोकस्यदक्षारञ्जनकर्म्मणि ॥ कुर्य्याचगुटिकारेणुयोगे नमनुवित्तमः ॥८५॥ तूलवर्त्यांचकृष्णाज्ययुक्तयाकज्जलंधृतम् ॥ सहस्रमनुनाजप्तंमन्त्रितंनेत्रयोःशुभम् ॥८६॥ प्रत्यहंचजगद्वश्यंनारीसंक्षोभकारकम् ॥ प्रेतग्रहगणादींश्चनाशयेदचिरादपि ॥ ८७ ॥ पूर्वोक्तैर्दशभिर्द्रव्यैःपञ्चगव्यैश्च कापिलैः॥ युक्तंचभसितंजप्तंसहस्रंमनुनामुना॥८८॥धृतंललाटेभुवनंवशयेन्नैव नान्यथा ॥ क्षौमेपटेप्रविन्यस्यवर्त्तिकारचिताशुभा ॥ ८९ ॥ विष्ण्वाह्वाकुमुदश्यामपद्मरेणुसुगर्भिता ॥ कृष्णगोसर्पिषादीप्तातदुत्पन्नाचयामषी ॥ ९० ॥ मातङ्गीमनुनाजप्तानेत्राञ्जनीनृणाम् ॥ तद्वन्नमस्कारिणीसगदितानात्र संशयः ॥ ९१ ॥ लक्ष्मीःसविष्णुदयिताभृङ्गराजोद्भवंरजः॥ एतद्भावितवर्त्ती साकपिलाज्यप्रदीपिता ॥ ९२ ॥ तज्जातापिमषीपूर्वफलदानात्रसंशयः ॥ कर्पूरचन्दनंपद्मयुगंबकुलरोचने ॥ ९३ ॥ त्रैलोक्यंवशयत्येषामषीतत्सम्भवाभृशम् ॥ विजयंचेन्द्रियाणांचफलंक्रमुकसम्भवम् ॥ ९४ ॥ मूलैर्निर्वास्यनीरैश्चतन्तुभिर्वेष्टयेत्फलम् ॥ भुवःसूनोर्दिनेभूमौस्थापयेत्तत्फलंततः ॥ ९५ ॥ आभौमवारसञ्जप्तंकर्पूरंतत्फलंततः ॥ पिष्ट्वाचैवाम्बुनाजप्त्वागुटिकाःकारयेद्बुधः ॥ ९६ ॥ मसूरकमिताएताःखादितावश्यदाःपरम् ॥ हेमपञ्चाङ्गकंचात्ममलपञ्चकसंयुतम् ॥ ९७ ॥ सहस्रवारसञ्जप्तंभक्षयेत्पानकेपुच ॥ यस्मैदत्तंनरेशायसवश्योनात्रसंशयः ॥ ९८ ॥ पूर्वमन्त्रोदितान्सर्वान्प्रयोगान्मन्त्रवांश्चरेत् ॥ अथातःसम्प्रवक्ष्यामिद्वात्रिंशद्वर्णकंमनुम् ॥९९॥ तारोमायावाग्रमाचनमोभगवतीतिच ॥ उच्छिष्टचाण्डालिपदंश्रीमातङ्गितथेश्वरि॥ ११००॥ सर्वजनवशंकरिस्वाहान्तोयंमनुःस्मृतः॥ मातङ्गोमुनिरस्योक्तोनुष्टुप्छन्दश्चदेवता ॥ १ ॥ मातङ्गीस्यादङ्गषट्कंमन्त्राणैर्वेदैषड्

१ धतूर, फल, फूल, मूल, पत्र, और पेड़, इनपांचोंको पंचांग कहते हैं २ ॐ ह्रीं ऐं श्रीं नमोभगवतिउच्छिष्टचाण्डालि श्रीमातङ्गीश्वरि सर्वजनवशंकरिस्वाहा ॥ इतिमन्त्रः ३ चार, छः, छः, छः आठ और दो अक्षरों से षडङ्गन्यास होता है जैसे, ॐ ह्रीं ऐं श्रीं हृदयायनमः, नमोभगवति शिरसे स्वाहा, उच्छिष्टचाण्डालि शिखायैवषट्, श्रीमातङ्गीश्वरि कवचायहुम् सर्वजनवशंकरिनेत्रत्रयावौषट्, स्वाहाअस्त्रायफट् ॥

सैः ॥ षडष्टबाहुभिश्चेतिध्यायेच्छ्यामांसुलोचनाम् ॥ २ ॥ शुकोदितंचशृ ण्वन्तींरत्नपीठोपरिस्थिताम् ॥ रक्ताम्बरांसुरापानमत्तांपद्मस्थसत्पदाम् ॥ ३ ॥ वल्लकींवादयन्तींतांमातङ्गींहृदिभावयेत् ॥ जपोयुतसहस्रन्तुहोमःपुष्पै र्मधूकजैः ॥ ४ ॥ मध्वक्तैश्चयजेत्पीठेवक्ष्यमाणेविधानतः ॥ त्रिकोणाष्टदल द्वन्द्वंकलारंचतुरस्रकम् ॥ ५ ॥ पीठंकृत्वायजेत्तस्मिन्पीठशक्तीर्नवेष्टदाः ॥ विभूतिरुन्नतिःकान्तिःसृष्टिःकीर्त्तिश्चसन्नतिः ॥ ६ ॥ व्यूष्टिरुत्कृष्टिर्ऋद्धि श्चमातङ्गयन्ताइमाःस्मृताः ॥ सर्वशक्तिकमार्णान्ते लासनायहृदन्तकः ॥ ७ ॥ तारमायावाग्रमाद्यःपीठमन्त्रःकलार्णकैः ॥ विष्टरासनमेतेनपाद्यादीनिप्रकल्प येत् ॥ ८ ॥ मूलेनपीठपूजान्ते कुर्य्यादावरणार्चनम् त्रिकोणेष्वर्चयेत्तिस्रो रतिप्रीतिमनोभवा ॥ ९ ॥ केशरेषुषडङ्गानि मातृश्चदलमध्यगाः ॥ द्वि तीयेष्टदलेपूज्या असिताङ्गादिभैरवाः ॥ १० ॥ षोडशारेतुवामाख्या ज्येष्ठारौ द्रीप्रशान्तिका ॥ श्रद्धामाहेश्वरीचापि क्रियाशक्तिश्चसप्तमी ॥ ११ ॥ सु लक्ष्मीसृष्टिमोहिन्यौ प्रथमाचारिणीतथा ॥ विद्युल्लताचचिच्छक्तिःसुरापानन्द यासह ॥ १२ ॥ नन्दबुद्धिःषोडशीतुपूजनीयाप्रयत्नतः ॥ चतुरस्रचतुर्दिक्षु मातङ्गीसामहादिका ॥ १३ ॥ लक्ष्मीस्तथामहालक्ष्मीः पुनर्वह्न्यादिकोण तः ॥ ध्रुवादिकंयजेदादौ मातङ्गीपरमंततः ॥ १४ ॥ सर्वावरणशक्तीनां ङे न्तंनामहृदन्तकम् ॥ विघ्नेशदुर्गावटुकक्षेत्रेशादिक्सुरास्तथा ॥ १५ ॥ व ज्राद्यापूजनीयास्स्युरित्थंसिद्धिर्मनोर्भवेत् ॥ रम्भादण्डैःशुभैर्होमाद्रोगोरा ज्यन्तुबिल्वकैः ॥ १६ ॥ पत्रैःफलैर्वावश्यास्याज्जनताब्रह्मवृक्षजैः ॥ रोगना शोऽमृताखण्डैर्निम्बैःश्रीरतण्डुलैरपि ॥ १७ ॥ अवृष्टिंलवणैर्विद्यात्तगरैर्वेतसै र्जलम् ॥ लवणैर्निम्बतैलाक्तैः शत्रुनाशोधिकाशनम् ॥ १८ ॥ निशाचू र्णयुतैःकाशैर्होमात्स्यात्स्तम्भनंद्विषाम् ॥ रक्तचन्दनकर्पूर माँसीकुंकुमरोच

---

१ त्रिकोण, अष्टदल, अष्टाष्टदल, षोडशदल, और चतुष्कोण घेर ऐसा यन्त्र लि- खकर पूजाकरो २ ॐ ह्रीं ऐं श्रीं सर्वशक्ति कमलासनायनमः यह पीठ पूजाकामन्त्र मूल श्लोक से निकल आता है ३ सोलह ४ मातङ्गी, महामातङ्गी, ५ गुर्च ६ हल्दी ७ जटामासी ॥

नाः ॥ १६ ॥ चन्दनागुरुकर्पूर गन्धाष्टकमुदीरितम् ॥ एतद्धोमाज्जगद्वश्यं जायतेमन्त्रिणोध्रुवम् ॥ २० ॥ एतत्पिष्टायुतंजप्त्वा तिलकेनजगत्प्रियः ॥ कदलीफलहोमेन सर्वेष्टंसमवाप्नुयात् ॥ २१ ॥ किंबहूक्तेनमातङ्गी पूजिताकामदानृणाम् ॥ मध्वष्टलोलरचितां पुत्तलींदक्षिणार्धतः ॥ २२ ॥ हूयादष्टोत्तरशतंखादिराग्नौनरोनिशि ॥ शालिपिष्टमयींतांतु भक्षयेत्स्त्रीवशीकृते ॥२३॥ कृष्णभूतनिशिध्वांक्षोदरेक्षिप्त्वाशुभप्रभाम् ॥ नीलसूत्रेणसंवेष्ट्यचिताग्नौ प्रजपेदमुम् ॥ २४ ॥ सहस्रजप्तंतद्वह्निं यस्मैदद्यात्सदासवत् ॥ एवंगणेश्वराः प्रोक्ताः पश्चिमाम्नायसंस्थिताः ॥ २५ ॥ मुनिदेव्यादिसेव्यानां काश्यांसङ्ख्यानविद्यते ॥ प्रणवादिचतुर्थ्यन्तैर्नमसापिसमन्वितैः ॥ २६ ॥ स्वबीजाख्यैर्वर्णलक्षजपस्तेषामुदाहृतः ॥ इक्षुखण्डैस्तिलैर्वापिकमलाख्यैःप्रमोदकैः ॥ २७ ॥ तेषांहोमःप्रकर्तव्यो मधुरत्रयसंयुतैः ॥ भवन्तिफलदास्तेतु विन्ध्यादिकविनायकाः ॥२८॥ आकर्षाद्याश्चवटुकाः देवतास्ताःफलप्रदाः॥ ११२६ ॥

इति श्रीमद्दामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेपश्चिमाम्नायगणपतिमन्त्रकथनं प्रकाशऊनविंशः ॥ १९ ॥

---

श्रीशिवउवाच ॥ अथातःसम्प्रवक्ष्यामि उत्तराम्नायसिद्धिदान् ॥ वदेद्धस्तिपिशाचीतिलिःलिःस्वाहानवाक्षरः ॥ १ ॥ कंकालोस्यमुनिश्छन्दो विराडुच्छिष्टनामकः ॥ गणेशोदेवताप्रोक्तस्सर्वसम्पत्प्रदायकः ॥ २ ॥ द्वित्रीन्द्विन्दुद्विभिश्चापि पचाङ्गविधिरीरितः ॥ ध्यानंपूजापुरश्चर्यादिकंस्याद्वक्रतुण्डवत् ॥ ३ ॥ नवलक्षंजपःप्रोक्तः काम्यकर्माण्यथध्रुवे ॥ प्रतिमांकारयेद्धीमान्निम्बकाष्ठमयींशुभाम् ॥ ४ ॥ साध्यांगुष्ठप्रमाणांच गणेशस्यमहात्मनः ॥ स्पृष्ट्वातांप्रजपेन्मन्त्रं काम्यसिद्धिस्ततोभवेत् ॥ ५ ॥ षष्ठ्यांचैवचतुर्दश्यांकृष्णपक्षेचमन्त्रवित् ॥ उच्छिष्टोरात्रिमध्येतु जपेन्मन्त्रमिमंशुभम्॥६॥ वाञ्छितोवशमायाति साधकस्यनसंशयः ॥ भूर्ज्जपत्रेसमालिख्य साध्यनामयथाविधि॥ ७ ॥ मन्त्रेणवेष्टितंकृत्वा जपेन्मन्त्रमनन्यधीः ॥ पादेनाक्रम्यतत्पत्रंहस्तकृष्टियंमता ॥ ८ ॥ लिखित्वापूर्ववत्पत्रं पूजयित्वाविधानतः ॥ साध्यंस्मृत्वाजपे

न्मन्त्रं सर्वलोकंवशंनयेत् ॥ ६ ॥ धारयेन्मस्तकेयन्त्रं जपन्मन्त्रमनन्यधीः ॥ राजानंराजपत्नींवा कर्षयेत्तत्क्षणात्सुधीः ॥ १० ॥ ताम्बूलपत्रपुष्पाणिवस्त्राण्याभरणानिच ॥ फलमूलादिवस्तूनिसमादायजपेन्मनुम् ॥ ११ ॥ एकविंशतिवाराणिदद्यादिष्टायनान्यथा ॥ उलूककाकयोःपक्षांस्तद्वसारक्तसंयुतान् ॥ १२ ॥ श्मशानाग्नौतुजुहुयाद्विद्वेषस्निग्धयोर्भवेत् ॥ शत्रुपादरजोयुक्तंचाक्रिहस्तमृदंबुधः ॥ १३ ॥ श्मशानभस्मसंयुक्तामुद्वर्त्तनसमन्विताम् ॥ शत्रोस्तत्पुत्तलींकुर्य्यात्सर्वावयवशोभिताम् ॥ १४ ॥ तस्याहृदिलिखेन्नाममूलमन्त्रेणवेष्टयेत् ॥ कृत्वाप्राणप्रतिष्ठान्तुविषरक्ताढ्यपात्रके ॥ १५ ॥ स्थापयित्वाजपेन्मन्त्रंसम्यगेकाग्रमानसः ॥ म्रियतेरिर्नसन्देहोदेवताभिःसुरक्षितः ॥ १६ ॥ चितायांदग्धदम्पत्योर्भस्मादाययथाविधि ॥ रोचनाकुंकुमाभ्यांचभूर्ज्जेनाम समालिखेत् ॥ १७ ॥ वेष्टितंमूलमन्त्रेणप्राणस्थापनमाचरेत् ॥ साध्यंस्मृत्वाजपेन्मन्त्रंसम्यगष्टोत्तरंशतम् ॥ १८ ॥ द्विष्टयोर्जनयोःसम्यक्स्नेहोभवतितत्क्षणात् ॥ अथमन्त्रान्तरंवक्ष्येचोच्छिष्टस्यगणेशितुः ॥ १६ ॥ ॐह्रीं क्लींह्रींसमुच्चार्य्यह्रीं ह्रींघेंघेंतथाचफट् ॥ स्वाहान्तोभववर्णोयंप्राग्वद्धय नादिकं मतम् ॥ २० ॥ मुन्यादयःप्रयोगाश्चवर्णलक्षमितोजपः ॥ अथान्यत्सम्प्रवक्ष्येहंचोच्छिष्टस्यमहामनुम् ॥ २१ ॥ [1]एकदंष्ट्रायेतिहस्तिमुखलम्बोदरायच ॥ उक्त्वोच्छिष्टात्मनेक्रांक्लूंह्रींह्रींघेघेग्निगेहिनी ॥ २२ ॥ सप्तविंशतिवर्णोयंवक्रतुण्डपडर्णवत् ॥ [2]चतुर्थ्यन्तंहस्तिमुखपदमात्रंयदोच्चरेत् ॥ २३ ॥ त्रयोविंशतिवर्णस्तुतस्यमन्त्रःप्रकीर्त्तितः ॥ मुन्यादिदेवतोच्छिष्टगणनाथप्रकीर्त्तितः ॥ २४ ॥ प्राग्वज्ज्ञेयंप्रयोगादिसिद्धिःकलियुगेद्भुतम् ॥ अथान्यत्सम्प्रवक्ष्यामिमन्त्रंपड्विंशवर्णकम् ॥ २५ ॥ [3]तारोनमोभगवतएकदंष्ट्रायहस्तिच ॥ मुखलम्बोदरायेतितथोच्छिष्टमहात्मने ॥ २६ ॥ क्रौंक्लौंह्रींह्रुंततोघेघेस्वा

---

१ एकदंष्ट्रायहस्तिमुखलम्बोदरायउच्छिष्टात्मनेक्रांक्लूंह्रींह्रींघेंघेंस्वाहा २ पूर्वोक्तमन्त्र में उच्छिष्टात्मने इसपदके आगेहस्तिमुखाय यह पद जोड़ने से तेईस अक्षरका मन्त्र होताहै। और ऋषिछन्द देवता पूर्ववत् जानलेना ३ ॐनमोभगवतेएकदंष्ट्रायहस्तिमुखलम्बोदराय उच्छिष्टमहात्मनेक्रौंक्लूंह्रींहुंघेघेस्वाहा ॥

हान्तोयम्मनुर्मतः ॥ ऋष्यादिकंपुराप्रोक्तं[1]क्रौं क्लूंहुंचघेद्वयम् ॥ २७ ॥ एतैः षडङ्गंकुर्वीतप्राग्वद्ध्यानंचपूजनम् ॥ अथान्यमस्यवक्ष्यामिद्वादशार्णमहामनुम् ॥ २८ ॥ ह्रींगंहस्तिपिशाचिलिखेत्स्वाहेतिमन्त्रकः ॥ नवार्णमन्त्रवत्सर्वंध्यानपूजादिकंमतम् ॥ २९ ॥ पुरश्चर्य्यार्कलक्षंस्यात्प्रयोगादिचपूर्ववत् ॥ [2]तारोनमोच्छिष्टगणेशायदशाक्षरोमनुः ॥ ३० ॥ ध्यानपूजाप्रयोगादि सर्वमस्यदशार्णवत् ॥ दशाक्षरस्यास्यचान्तेकथितश्चेन्नवाक्षरः ॥ ३१ ॥ एकोनविंशवर्णःस्यात्तदामन्त्रःसुसिद्धिकृत् ॥ ध्यानपूजादिकंसर्वंविज्ञेयंतुनवार्णवत् ॥ [3]व्यगैर्द्वित्रिद्विद्विभिश्चमन्त्रार्णैःस्यात्षडङ्गकम्॥३२॥ अथान्यत्सम्प्रवक्ष्यामिद्वात्रिंशद्वर्णकंमनुम् ॥ [4]तारंहस्तिमुखेतिचङेन्तंलम्बोदरंवदेत् ॥ ३३ ॥ उच्छिष्टेतिमहात्मेतिनेआंक्रौंह्रींसमुच्चरेत् ॥ क्लींह्रींहुंघेद्वयंचापिउच्छिष्टायाग्निगेहिनी ॥ ३४ ॥ रसे[5]पुंसप्तपट्षट्कनेत्रार्णैरङ्गकल्पनम् ॥ उच्छिष्टगणनाथस्यमन्त्रेष्वेपुनशोधनम् ॥ ३५ ॥ सिद्ध्यादिचक्रमादादौप्रशस्तेसिद्धिदागुरोः ॥ मनवोमीसदागोप्यानप्रकाश्याइतस्ततः ॥ ३६॥ वाममार्गाराधनंतुविनानेननसिध्यति ॥ जातिभ्रंशोनिर्धनत्वंवंशच्छेदोन्यथाभवेत् ॥ ३७ ॥ अथातःसम्प्रवक्ष्यामिकृतयुक्तास्तुशाक्तयः ॥ ब्राह्मणेभ्यःसदागोप्याविशेषाद्वेदकर्म्मिणः ॥ ३८ ॥ [6]उच्छिष्टचाण्डालिनीतिचसुमुखीचमहापिशाचिनिह्रींवत्रयंबिन्दुविसर्गाभ्यांचसंयुतम् ॥ ३९ ॥ विंशत्यर्णोमनुःप्रोक्तोभजतामिष्टसिद्धिकृत् ॥ यस्यतिष्ठतिमन्त्रोयंनसविघ्नैस्तुबाध्यते ॥ ४० ॥ शवोपरिसमासीनांरक्ताम्बरपरिच्छदाम् ॥ रक्तालङ्कारसंयुक्तांगुणहारविराजिताम् ॥ ४१ ॥ रक्तांषोडशवर्षांचपीनोन्नतघनस्तनीम् ॥ डाष्टेनबलिन्दत्त्वाजपेत्तद्गतमानसः ॥ ४२ ॥ उच्छिष्टेनप्रकर्त्तव्योजपोस्याःसिद्धिमिच्छता ॥ उच्छिष्ट

---

१ क्रौंहृदयायनमः,क्लूंशिरसेस्वाहा, हुंशिखायैवषट्,घेकवचायहुम्,घेनेत्रत्रयायवौषट् क्रौंक्लूंह्रींहुंघेघेअस्त्रायफट् २ ॐनमःउच्छिष्टगणेशाय ३ सात ४ ॐहस्तिमुखाय लम्बोदराय उच्छिष्ट महात्मने आंक्रौंह्रींक्लींह्रींहुंघेघेउच्छिष्टायस्वाहा ५ छः, पांच, सात,छः,छः, और दो अक्षरों से पूर्वोक्त ॐहस्तिमुखाय इस मन्त्र का न्यास करना ६ उच्छिष्टचाण्डालिनिसुमुखि महापिशाचिनिह्रींवंवंवः यह मन्त्रमूल से निकलआता है ॥

जपमानस्यजायन्तेसर्वेसिद्धयः ॥ स्थण्डिलंमण्डलंकृत्वाचतुरस्रंसमाहितः ॥ ४३ ॥ पूजयेन्मण्डलेदेव्यामूलमन्त्रेणमन्त्रवित् ॥ तत्रचाग्निंसमाधायवह्निरूपांव्यवस्थिताम् ॥ ४४ ॥ देवींध्यात्वाचरेद्धोमंदधिसिद्धार्थतण्डुलैः ॥ सहस्रैकंविधानेनराजाभवतिवश्यगः ॥ ४५ ॥ मार्ज्जारस्यतुमांसेनयोदेव्यैहोममाचरेत् ॥ सप्राप्नोतिपरांविद्यांशस्त्रशास्त्रवशीकृताम् ॥ ४६ ॥ कुर्याच्छागस्यमांसेनहोमंमधुसमन्वितम् ॥ सहस्रैकंविधानेनभवन्तिधनसिद्धयः ॥ ४७ ॥ विद्याकामश्चरेद्धोमंशर्कराघृतपायसैः ॥ मासात्तस्यभवन्त्येवसिद्धाविद्याश्चतुर्दश ॥ ४८ ॥ रजस्वलायावस्त्रेणमधुनापायसेनच ॥ होमंकृत्वामहादेवित्रैलोक्यंवशमानयेत् ॥ ४९ ॥ नागवल्याचरेद्धोमंमधुनासहसर्पिषा ॥ अयुतैकंविधानेनसिद्धयोऽष्टौभवन्तिच ॥ ५० ॥ नरमार्जारमांसेनघृतेनमधुनासह ॥ चाण्डालकेशयुक्तेनभवेदाकर्षणंध्रुवम् ॥ ५१ ॥ तथावकस्यमांसेमधुनालोलितेनच ॥ कृत्वाहोममवाप्नोतिविद्याविज्ञवरस्त्रियः ॥ ५२ ॥ मधुशर्करस्यहोमेनचितावह्नौतुमन्त्रवित् ॥ कोकिलाकाकपक्षैश्चहोमाच्छत्रून्विनाशयेत् ॥ ५३ ॥ उच्चाटनायशत्रूणांहोमंकुर्य्याच्चमन्त्रवित् ॥ पूर्वोक्तेनविधानेनचिताकाष्ठहुताशने ॥ ५४ ॥ उलूककाकपक्षाभ्यांकृत्वाहोमंनिरन्तरम् ॥ शत्रून्विद्वेषयेद्द्वेष्टाचान्योन्यकलहाकुलान् ॥ ५५ ॥ उलूकपक्षहोमेनगर्भपातोभवेत्स्त्रियः ॥ सहस्रैकंविधानेनकुर्य्याद्धोमंसमाहितः ॥ ५६ ॥ बिल्वपत्रैःसमध्वाज्यैर्मासमेकंनिरन्तरम् ॥ बन्ध्यापिलभतेपुत्रंचिरञ्जीविनमुत्तमम् ॥ ५७ ॥ प्रातरुत्थाययःकश्चित्कुर्य्याद्धोमंदिनेदिने ॥ जपापुष्पैराज्ययुतैरष्टोत्तरशतंप्रिये ॥ ५८ ॥ षण्मासस्यप्रयोगेनभवेदाकर्षणंध्रुवम् ॥ देवगन्धर्वकन्याश्चतथानागादिकन्यकाः ॥ ५९ ॥ हठाचागत्यकामार्त्ताबलादालिङ्गयन्तितम् ॥ विद्यायैक्रियतेहोमस्तिलैःपायससमिश्रितैः ॥ ६० ॥ सप्राप्नोतिमहाविद्यांशास्त्रौघदशशालिनीम् ॥ मधुनारुरुमांसेनहोमंकुर्य्यात्प्रयततः ॥ ६१ ॥ विद्यावान्धनवान्वापिसर्वशास्त्रवशीकृतः ॥ भोजनानन्तरंचास्यावलिंकृत्वादिनेदिने ॥ ६२ ॥ शतमष्टोत्तरंमन्त्रमुच्छिष्टेनजपेत्सदा ॥ उत्कटेवाश्मशानेवाशून्यागारेचतुष्पथे ॥ ६३ ॥ बलिप्रदानतोदेवीप्रत्यक्षा

भवतिध्रुवम् ॥ गोपनीयंप्रयत्नेनकथनीयंनकस्यचित् ॥ ६४ ॥ गुरुभक्तिश्च कर्त्तव्याकायेनचधनेनच ॥ अथातःसम्प्रवक्ष्यामिवामदक्षिणनिर्णयम् ॥ ६५ ॥ कलौविष्णुप्रार्थनयासर्वतन्त्रेषुगोपितम् ॥ मनुष्याःपशवोज्ञेयाःपशवोपिनराःसुराः ॥ ६६ ॥ पशवोप्यसुराश्चापिखानंपानंचमैथुनम् ॥ जानन्तितुल्यंभेदेनशीतोष्णाद्याःषडूर्मयः ॥ ६७ ॥ सर्वानेवहिबाधन्तेममानन्दवनेसुतः ॥ द्वयोस्तुल्यागतिःप्रोक्ताकामक्रोधादिकामतः ॥ ६८ ॥ तत्कथं मनुजाःश्रेष्ठास्तत्रत्यांप्रब्रवीमिच ॥ पशुदेहादन्यलोकसाधनंनैवजायते ॥ ६९ ॥ नृदेहात्तद्भवेद्यस्मात्तस्माच्छ्रेष्ठानगमताः ॥ योयस्यधर्म्मोविहितस्तेन धर्म्मेणयोव्रजेत् ॥ ७० ॥ तस्यैवपरलोकोस्तियावत्पुण्यंवशेोदिवि ॥ पुनराढ्यगृहेजन्मसत्सङ्गश्चोपजायते ॥ ७१ ॥ सावधानस्तत्रयदाशास्त्रश्रवणतोभवेत् ॥ तदायंजायतेविप्रःश्रोत्रियाणांकुलेसुराः ॥ ७२ ॥ तत्रापिसावधानश्चेद्ब्रह्मधर्म्मपरोयदा ॥ तदामयानन्दवनेदीक्ष्यतेसभान्तरे ॥ ७३ ॥ पुनःकोपिस्वधर्म्मस्थोज्ञानभावाद्वियोनिषु॥जायतेधर्म्मसाहाय्यंमयाकार्य्यां विमुच्यते ॥ ७४ ॥ कालस्यांशोधिकस्तत्रजपेच्चबहुजीवति ॥ उपासनाद्विधाप्रोक्तासकामाकामविच्युता ॥ ७५ ॥ मोक्षबीजंतुनिष्कामासकामाभवबीजकम् ॥ पन्थास्तुदक्षिणःश्रेष्ठोवामःश्रेष्ठतरोमतः ॥ ७६ ॥ यस्तुवामंविजानातिसएवपरमंगुरुः ॥ अहंजानामिसम्पूर्णंपादोनंसनकादयः ॥ ७७ ॥ अर्धंचापिवशिष्ठाद्याःशक्राद्याःपादसम्मितम् ॥ जानन्तिनाथाःषष्ठांशंकोट्यंशमितरेजनाः ॥ ७८ ॥ जानन्तिकोटयश्चात्रजायन्तेकृमियोनिषु ॥ यःकरोतिसुरापानं जीवन्मुक्तःसजायते ॥ ७९ ॥ सुरतंयःप्रकुरुतेत्रैलोक्यकरणक्षमः ॥ योभक्षयतिमत्स्यांश्चसशिवोनात्रसंशयः ॥ ८० ॥ मुद्रांभक्षयतेयस्तु ससिद्धीनांपतिर्भवेत् ॥ मांसंखादतियोमर्त्यस्तस्यमृत्युभयंकुतः ॥ ८१ ॥ एतस्यचार्थत्रितयंसात्त्विकोराजसस्तथा ॥ तामसश्चेतितत्राद्योवाममार्गोनिरूप्यते ॥ ८२ ॥ तंमार्गंयेविजानन्तितेमुक्तानात्रसंशयः ॥ श्रीकृष्णोवाममार्गन्तुफाल्गुणायोपदिष्टवान्॥८३॥मयाचिन्तयताद्दृष्टोसमुनिश्चनिरूपितः ॥ चाण्डालोवातुरुष्कोवाब्रह्महावाथमत्सरी॥८४॥ श्रोत्रियोवावाममार्गीभुक्तिमुक्त्योः

सभाजनम् ॥ ज्ञातोयंशुकदेवेन गर्भस्तम्भेनधीमता ॥ ८५ ॥ तंनिन्दयति यःपापी विष्ठायांजायतेकृमिः ॥ वाममार्गेचतन्त्राणि मयात्रीणिकृतानितु ॥ ८६ ॥ दत्तात्रेयायचैकन्तु श्रीकृष्णायतथापरम् ॥ देव्यैदत्तंतृतीयन्तु दत्तेन तुयुगद्वये ॥ ८७ ॥ बहवोब्रणकाद्याश्च वाममार्गेणमोचिताः ॥ श्रीकृष्णा यतुयद्दत्तंतेनचद्वापरेयुगे ॥ ८८ ॥ इहलोकेपुसन्दत्त्वा देवलोकेप्रवेशिताः ॥ यत्तन्त्रंतुमयादेव्यै दत्तंतेनविमोहिताः ॥ ८९ ॥ पण्डिताअपिसंसारे चान्ये षांतुकथास्तिका ॥ तत्सारंसम्प्रवक्ष्यामि सर्वतन्त्रेषुगोपितम् ॥ ९० ॥ कुण्ड लीशक्तिमुत्थाप्य हठयोगेनभोःसुराः ॥ कृत्वाबुभुक्षितांतान्तु जीवंतस्यैप्रदर्श येत् ॥ ९१ ॥ साजीवभक्षणार्थन्तु मुखंव्याकुरुतेयदा ॥ शिरश्चन्द्रामृतंत स्यामुखंयात्येतदीरितम् ॥ ९२ ॥ जरामृत्युहरंदेवाःसुरापानन्तुवामिनाम् ॥ पीत्वापीत्वापुनःपीत्वा देहोभवतिकाष्ठवत् ॥ ९३ ॥ प्राक्कर्म्मवेगतोदेहेनाना कर्म्माणिभान्तिच ॥ जीवःप्राप्यात्मसाम्यत्वं नित्यानन्दमयोभवेत् ॥ ९४ ॥ देहाभिमानेगलिते साधकःस्यान्महेश्वरः ॥ भ्रामितन्तुकुलालेनचक्रंचरति वेगतः ॥ ९५ ॥ तथास्यदेहश्चरतिव्यहङ्कारस्तुकर्म्मतः ॥ यथाकेशनखादी नां निर्गतानांतुकर्तने ॥ ९६ ॥ दुःखंभवतितद्वन्न ज्ञानिनांदेहताडने ॥ जी वःसर्वगतःकेश नखादीनांयथाभवेत् ॥ ९७ ॥ वृद्धिस्तथास्यदेहस्य व्यापा रःसम्प्रवर्तते ॥ यथावृक्षःसजीवोपि पीडयानानुभूयते ॥ ९८ ॥ तथाचन्द्रसुरा मत्तः कामाद्यैर्नानुभूयते ॥ इडापिङ्गलयोःप्राणंसुषुम्नायांप्रवर्त्तयेत् ॥ ९९ ॥ सुषुम्नाशक्तिरुद्दिष्टा जीवोयन्तुपरःशिवः ॥ तयोस्तुसङ्गमोदेवाः सुरतंनाम कीर्तितम् ॥ १०० ॥ वीर्य्यपातस्यसमये सुषुम्नासन्नमारुते ॥ उत्पद्यतेतुय त्सौख्यं तस्मात्कोटिगुणंतुतत् ॥ १ ॥ समाधिस्थास्तुयोगीन्द्रा स्तेनसौख्ये ननिर्वृताः ॥ सहस्रयुगकालन्तु मन्यन्तेतेनिमेषवत् ॥ २ ॥ एतदेवरतंप्रोक्तम न्यत्स्यादासभंरतम् ॥ पञ्चक्लेशास्तुमत्स्याःस्युःविवेकेनैवताञ्जयेत् ॥ ३ ॥ मत्स्यभक्षणमित्युक्तं मुक्तिमार्गनिदर्शकैः ॥ क्लेशकर्म्मविपाकैश्च आशयैः स्यादसङ्गतिः ॥ ४ ॥ तदानींह्यानन्दमयआत्मत्वंप्रतिपद्यते ॥ आत्मनो जायतेमोद स्तामुद्राःपरिकीर्तिताः ॥ ५ ॥ ताञ्ज्ञेयाधारणाध्यान समाध्या

ण्यास्तुमोक्षदाः॥ देहबन्धकरंयत्तुतन्मांसंपरिकीर्त्तितम्॥६॥ अज्ञानेनयतोजीवोदेहपाशेनबध्यते॥ अज्ञानभक्षणंप्रोक्तं तन्मांसस्यचभक्षणम्॥७॥ अज्ञाननाशञ्ज्ञानस्योदयान्मोक्षःप्रजायते॥ दत्तात्रेयाययत्प्रोक्तं सात्त्विकंतन्निरूपितम्॥८॥ अनेनवाममार्गेण मोक्षोभवतिसर्वथा॥ श्रीकृष्णार्पितसारार्थन्तन्त्रराजस्यगृह्यताम्॥९॥ यद्दीयतेलभ्यतेतदितिशास्त्रेषुनिश्चयः॥ नमांसभक्षणेदोषोनमद्येनचमैथुने॥१०॥ प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहाफला॥ व्यामोहकारकंमद्यं निषिद्धंनरकप्रदम्॥११॥ ब्राह्मणोनस्पृशेन्मद्यंवैदिकेवर्त्मनिस्थितः॥ यावद्वेदश्चवेदीचकलौभूमौप्रवर्त्तते॥१२॥ तावन्नब्राह्मणोमद्यंकलौसेवेतकर्हिचित्॥ यथामृतन्तथामद्यन्प्रोक्तंकालेनिषेवितम्॥१३॥ अमृतेनसहोत्पन्नंस्थानेमद्यंसुधायते॥ विषेणापिसमुत्पन्नंतेनमद्यंविषायते॥१४॥ अग्निर्नामचगायत्रीसाप्राप्ताचेद्गुरोर्मुखात्॥ कुलद्वयविशुद्धेनवैदिकेनैववर्त्मना॥१५॥ अज्ञातेतन्मुखाग्नौतुसद्योबिन्दुःपतेद्यदि॥ प्रतारकोवचोभिर्वाधनबुद्ध्यातथापरम्॥१६॥ इहलोकेसदुःखीस्यात्प्रेतराक्षसतांव्रजेत्॥ यदितन्त्रक्रियायुक्तोगुरुणासंस्कृतोभवेत्॥१७॥ तदाकिञ्चित्सुखंप्राप्यप्रेत्यलक्षाधिपोभवेत्॥ विष्णोरभ्यर्चनंकुर्य्यात्सर्पणंसुरयापुनः॥१८॥ अविभ्रंशौख्यमाप्नोतिप्रेत्यब्रह्मणिलीयते॥ गौडीपैष्टीचमाध्वीचसुराइत्यभिधीयते॥१९॥ दैवात्कदाचिद्विप्रोपिधूर्त्तमन्त्रैःप्रतारितः॥ दैवेनमद्यपोजातस्तस्योद्धारोमयोच्यते॥२०॥ त्यजेत्सवैदिकंकर्मतुलसींनैवसंस्पृशेत्॥ चाण्डालोवातुरुष्कोवायःकश्चित्कौलमास्थितः॥२१॥ तस्यैवसङ्गःकर्त्तव्योनान्यविप्रस्यकुत्रचित्॥ प्रत्यहम्पूजयेद्देवींशाक्तैःसङ्गस्तथान्वहम्॥२२॥ देवताञ्चिन्तयेच्छक्तिंनपुमान्स्वयमेवहि॥ एवम्भावनयायुक्तःशाक्तैःसङ्गंसमाचरेत्॥२३॥ प्राणस्यायमनाद्वापिभेषजामन्त्रतस्तथा॥ संस्तभ्यशुक्रम्प्रजपेद्यावत्स्खलतिचाङ्गना॥२४॥ शक्तयग्नौतद्दशांशेनस्खलनंहोमएवतत्॥ पुनारतंसमारभ्यस्खलिताभ्यांचतर्प्पणम्॥२५॥ पुनारतान्मार्ज्जनञ्चएतदष्टदिनञ्चरेत्॥ सम्भोज्याःशक्तयःपञ्चनवमेतुदिनेतथा॥२६॥ एवंकृतेविधानेचदेवतावरदाभवेत्॥ रोहितकैस्तुतृप्तिः

स्यादर्धमासञ्चमदगुरे ॥ २७॥ त्रिरात्रन्तितिमिभिस्तृप्तिः शृंग्यावापिदिनद्वयम् ॥ भागाष्टकंमाषपिष्टंषड्भागोजपलस्यच ॥ २८ ॥ सुरस्यचसुपक्कस्यग्राह्यंभाग चतुष्टयम् ॥ भागद्वयंतण्डुलानांमेथिकाहिंगुजीरकम् ॥ २९ ॥ लवणंचतथा योग्यंसुरयामर्दितंदृढम् ॥ चक्रीकृतंनागवल्लीदलैश्चपरिवेष्टितम् ॥ ३० ॥ जलयन्त्रेविपक्वंतच्छक्तिमुद्रेयमीरिता ॥ कालखण्डंकर्करस्यचान्ययन्त्रविपाचि तम् ॥३१॥ माषाढकीमसूराणांचणकानांसमन्वितम् ॥ समभागेनचूर्णेनतच्च हिंग्वादिभिर्युतम् ॥३२॥ वटकाःकटुतैलेनपक्वाःस्यान्मुद्रिकापरा ॥ सर्वासामे वमुद्राणांकरणेतुजलस्थले ॥३३॥ सुरादेयाथवामद्यमासवंवानचेतरत् ॥ गोधू मचूर्णमांसंचपक्वंसम्मेलयेद्दृढम् ॥ ३४ ॥ दिनत्रयंजलेस्थाप्यंयावदम्लंप्रजाय ते ॥ सूक्ष्मंमत्स्यंमाषपिष्टंमसूरान्नंचचूर्णकम् ॥ ३५ ॥ गोधूमशष्कुलीमध्येद त्त्वाज्येपरिपाचयेत् ॥ इदंतुपरमामुद्राशक्तीनामतितृप्तिदा ॥ ३६ ॥ धारिका पूरिकाश्चैववेष्टनीपूर्णपूरिका ॥ दक्षमार्गस्थशक्तीनांमुद्रिकाःपरिकीर्तिताः ॥ ३७॥ सम्यक्सुपक्कंमांसंचतथामत्स्यभवंपलम् ॥ स्विन्नेनहरिमन्थानांद्विदलेन चमेलयेत् ॥ ३८ ॥ सम्यक्पिष्ट्वाकटाहेतद्घृतेनपरिपाचयेत् ॥ समंचसमितंद त्त्वामरिचानिचपत्रजम् ॥ ३९ ॥ लवङ्गंचापिक्षुद्रैलांजातीकंकोलकंविधुम् ॥ यथोचितंतत्रदत्त्वामोदकान्कारयेद्दृढान् ॥ ४० ॥ वाममार्गगणेशानांमुद्राप रमतोपकृत् ॥ माषामकुष्ठश्चणकामुद्राढकपरंसमम् ॥४१ ॥ सम्यक्पिष्टानि बद्धंचदधिदत्त्वाविलोडितम् ॥ सूक्ष्मास्यतुवटीबद्धापङ्क्तितासितयातथा॥४२॥ एलादिकसुगन्धैश्चोद्धूलिकामुष्किकामता ॥ सम्यक्स्विन्नस्यमांसस्यराजि कावत्कृतस्यच ॥ ४३ ॥ शुष्कस्यभानुकिरणैराज्येपक्वस्यषड्गुणम् ॥ दुग्धं दत्त्वापचेत्सम्यग्यावद्भवतिपिण्डितम् ॥ ४४ ॥ समितांचसमांदत्त्वाकर्पूरादि यथारुचि ॥ मुद्रेयंगणनाथस्यप्रियातोषकरापरा ॥ ४५ ॥ सम्यक्तित्तिरमांसं चजलयन्त्रेणपाचयेत् ॥ घृतसम्भर्जितंतेनतुल्यंचणकचूर्णकम् ॥ ४६ ॥ सं मेल्यभर्ज्जयित्वाघृतेसम्यग्विपाचयेत् ॥ सितयामुद्रिकाचेयंगणेशानांप्रियंक री ॥ ४७ ॥ हरिमच्छकविन्दूनांमुद्गानांचूर्णकस्यच ॥ तथागोधूमचूर्णानांमु द्रचूर्णस्यलड्डुकाः ॥ ४८ ॥ दक्षिणानांगणेशस्यप्रीतिदामुद्रिकामता ॥ अत्रा

क्षणनराणान्तुमांसंसर्वोत्तमंमतम् ॥ ४६ ॥ मृगाणांचतथाप्रोक्तंतित्तिरादिक
पक्षिणाम् ॥ मांसंतत्सिकरंज्ञेयंत्र्यहङ्कालीयकस्यतु ॥ ५० ॥ दिनाष्टकंयथा
न्यायंयस्मिन्देशेतुयद्भवेत् ॥ खाद्यमांसंदेवतायैसम्यक्कृत्वानिवेदयेत् ॥ ५१ ॥
पूजायन्त्रंदक्षमार्गेप्रोक्तंगन्धाष्टकेनतत् ॥ लिखेद्वाकेशरहिमरोचनाभिःसमा
लिखेत् ॥ ५२ ॥ वाममार्गेलिखेदाद्यपुष्पेणयदियन्त्रकम् ॥ षण्मासपूजना
त्तत्रत्वरितंसिद्धिमाप्नुयात् ॥ ५३ ॥ युवत्याश्चप्रसूतायाअभावेगृह्यतेरजः ॥
तदभावेतरुण्यास्तुनीरोगायारजोमतम् ॥ ५४ ॥ तदभावेतुकुसुमंग्राह्यञ्चैवा
पराजितम् ॥ तस्योर्ध्वभागेनिक्षिप्यघर्षितंरक्तचन्दनम् ॥ ५५ ॥ तदागणंमू
लमार्गोत्तेनयन्त्रंसमालिखेत् ॥ तदभावेतुसुरयाघृतरक्तकचन्दनैः ॥ ५६ ॥
यथोक्तंविलिखेद्यन्त्रंतुष्टाभवतिदेवता ॥ नवमेत्रप्रकाशेस्तिवाममार्गेसुरोत्त
मं ॥ ५७ ॥ वाममार्गप्रवृत्तस्तुपूजालोपंकरोतिचेत् ॥ नित्यंनकुरुतेतस्य
देवतातिबुभुक्षिता ॥ ५८ ॥ सन्ततिञ्चापिसम्पत्तिंभक्षयेन्नात्रसंशयः ॥
प्रतिवर्षेपूजनन्तुयन्त्रद्रव्योक्तवर्त्मना ॥ ५९ ॥ वर्षार्धार्धार्धमासेनदेवतातृप्ति
कारकम् ॥ निर्धनैर्नैवकर्तव्योवाममार्गःक्षयावहः ॥ ६० ॥ रतिमात्रेवामिनात्र
कर्तव्याबुद्धिरीदृशी ॥ लिङ्गंशिवोभगःशक्तिर्गाङ्गंवारिजलंमतम् ॥ ६१ ॥
इतिभावनयावामीरतिंकुर्वन्नविमुच्यते ॥ अन्यथास्त्रीगमनेननरकेपरिपच्यते॥
६२ ॥ जीवस्यहननेपापंवामिनांतन्नविद्यते ॥ यदीदृशीतदाबुद्धिर्नोचेन्निर
यमाप्नुयात् ॥ ६३ ॥ अवश्यमेवकर्तव्यंमृत्युरोगागतेनच ॥ तस्मादस्यप
शोःपापक्षयार्थंगमनायच ॥ ६४ ॥ सुरलोकेघातयामितत्सुखस्यापिसिद्ध
ये ॥ देवतापरलाभेनतमोहनहनाम्यहम् ॥ ६५ ॥ इत्थंविचार्य्ययोहन्यात्त
स्यतुष्यतिदेवता ॥ पूर्वजन्मनियैर्वामिभिःकृतंयदुपासनम् ॥ ६६ ॥ सिद्ध्य
न्तेतेतुपशवोबलियोग्याभवन्तिहि ॥ देवतासन्निधौत्यक्त्वाप्राणान्यातिसुराल
यम् ॥ ६७ ॥ वामिनातुसदाकार्य्यासर्वासुप्रमदास्वपि ॥ देवीबुद्धिःकठोरं
वाप्रियंनैवसुसंवदेत् ॥ ६८ ॥ आत्मजायातथानार्योयक्षिणीप्रमुखाःपराः ॥
वामिनाताश्चभोक्तव्याएषधर्म्मःसनातनः ॥ ६९ ॥ उत्तरायांनैवकोपिपतंवी
र्यस्यकारयेत् ॥ चाण्डालीनामपिस्त्रीणांस्पर्शदोषंनमानयेत् ॥ ७० ॥ रज

स्वलाभगंदृष्ट्वाकुर्य्यादेकांपुरस्क्रियाम् ॥ केवलंसुरयाहोमस्तत्प्रत्यक्षंसमाचरेत् ॥ ७१ ॥ तदाचेत्तिष्ठतेकुण्डाद्देवतार्धाङ्गदर्शिनाम् ॥ ब्रूयाद्वरंगृहाणेतिमनोभीष्टन्तुयोर्चयेत् ॥ ७२ ॥ स्मशानेवाशून्यगेहेचैत्याधस्ताच्छवोपरि ॥ मुण्डोपर्य्यथवाशौचस्थानेवाशून्यमन्दिरे ॥ ७३ ॥ सुरास्थानेप्रकर्त्तव्यस्तत्रतिष्ठन्तिदेवताः ॥ शालग्रामोनार्चनीयस्तुलसींनैवसंस्पृशेत् ॥ ७४ ॥ तीर्थयात्रांनकुर्वीतगङ्गास्नानंनचाचरेत् ॥ स्थानाभावेजपंकुर्य्यात्प्रथमर्त्तुसमन्वितम् ॥ ७५ ॥ आसनाधोवरंकृत्वाजपन्सिद्धिमवाप्नुयात् ॥ प्रायशोवाममार्गेतुसिद्धमन्त्रोयदागुरुः ॥ ७६ ॥ तदैवजायतेसिद्धिरन्यथाप्रेतवद्भवेत् ॥ वाममार्गेद्रुतंसिद्धिःकर्म्मणायेनजायते॥७७॥ तदहन्तेसम्प्रवक्ष्यामिसूक्ष्मसाधनमद्भुतम्॥ अष्टम्यांवाचतुर्दश्यांकृष्णायाम्भौमवासरे ॥ ७८ ॥ गृहीत्वानृकपालन्तुमद्यम्मांसंतथौदनम् ॥ कुल्माषोन्मिश्रितंकृत्वागच्छेदश्वत्थभूमिकाम् ॥ ७९ ॥ एकान्तेनिर्जनेतस्यतलेसँलिप्यभूमिकाम् ॥ दण्डमात्रामष्टदिक्षुकीलान्मूलेनपूरयेत् ॥ ८० ॥ अष्टोत्तरसहस्रेणसप्ततन्तुकडोरकम् ॥ निबन्धयेत्तत्रपूजांदेवतायाःसमाचरेत् ॥ ८१ ॥ देवींतुहृदिसंस्थाप्यतस्मिन्स्थानेतुदीपकम् ॥ कुर्याच्चैरण्डतैलेनाभावेकपिलहव्यकैः ॥ ८२ ॥ तदभावेतुतैलेनकुडवप्रमितेनच ॥ दीपंकुर्य्यादष्टशतसूत्राणांवर्त्तिकामता ॥ ८३ ॥ तस्योपरिकपालंतत्कज्जलार्थंनिवेशयेत् ॥ दीपंदृष्ट्वाजपेन्मन्त्रंनान्यतस्तुविलोकयेत् ॥ ८४ ॥ अर्धेप्रज्वलितेतैलेभूतप्रेतपिशाचकाः ॥ नानारूपाभिन्नशब्दाःसाधकंभीषयन्तिते ॥ ८५ ॥ नभेतव्यंतदन्नन्तुवामहस्तेननिक्षिपेत् ॥ तेषामग्रेनान्यदृष्टिःप्रपश्येद्दीपमेवहि ॥८६॥ किञ्चिच्छेषेदीपतैलेदेवीसावरदाभवेत् ॥ तस्यैतत्त्वबलिन्दत्त्वास्तुत्वासंयाचयेद्वरम् ॥८७॥ पूर्वकर्म्मविपाकेनयदिनायातिदेवता ॥ दीपान्तेकज्जलंग्राह्यंतत्रदेवींप्रपूज्यच ॥८८॥ आनयेत्तद्गृहेसिद्धंदत्त्वाक्ष्णोःस्याज्ज

---

१ दण्डलक्षणमुक्तंश्रीभास्कराचार्य्येण ॥ यवोदरैरंगुलमष्टसंख्यैर्हस्तोंगुलैःषड्गुणितैश्चतुर्भिः ॥ हस्तैश्चतुर्भिर्भवतीहदण्डःक्रोशःसहस्रद्वितयेनतेषाम् ॥ पेटसे पेट जोड़कर धरने से आठ यव का एक अंगुल, चौवीस अंगुल का हस्त, चार हस्त कोही दण्ड कहते हैं और दो हजार दण्डों का एक कोश होता है यह कोश दो मीलसे बड़ा होगा ॥

गद्धशम् ॥ दत्त्वाक्ष्णोःकज्जलंतच्चप्रयोगानाचरेत्ततः ॥ ८९ ॥ सर्वएवप्रसिद्ध्य न्तिलोलुपेतिगुरौसति॥रक्षयेदञ्जनंसम्यङ्नोचेद्भवतिभैरवः ॥ ९० ॥ इत्येतद्धो निगदितंगणेशरचितंमहत् ॥तद्ब्रुवन्तुसुराःसर्वेवक्तव्यंकिमतःपरम् ॥ १९१॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेउत्तराम्नायगणपति मन्त्रकथनंविंशतितमःप्रकाशः ॥ २० ॥

---

श्रीदेव्युवाच ॥ भगवन्देवदेवेशगणेशस्यमयाश्रुताः ॥ सरहस्यामहाम न्त्राःकलौसिद्धिप्रदायकाः ॥ १ ॥ अतःपरंदेववरःकथंपूज्योदिवाकरः ॥ ब्रूहि तस्यचकेमन्त्राःकेष्वाम्नायेषुकीर्त्तिताः ॥ २ ॥ श्रीशिवउवाच ॥ एकएवास्य चाम्नायोदक्षिणःपरिकीर्त्तितः ॥ यथायंपावनंविप्रंस्वयमेवकरैःस्पृशेत् ॥ ३ ॥ उपासनातथैतस्यस्वधर्म्माचारपूर्विका ॥ चतुर्युगेषुप्रत्यक्षोदेवोयंसर्वसम्मतः ॥ ४ ॥ सर्वेषामेवदेवानांनेत्रभूतोजगत्पतिः ॥ तस्यमन्त्रान्प्रवक्ष्यामिसावधाना भवाम्बिके ॥ ५ ॥ ॐघृणिःसूर्य्यआदित्योमन्त्रश्चाष्टाक्षरोमतः ॥ देवभागो मुनिश्छन्दोगायत्रीदेवतारविः ॥ ६ ॥ तेजोज्वालामणेहुंफट्स्वाहेतिचदशा क्षरः ॥ हृन्मन्त्रःसत्यपूर्वोयंब्रह्मपूर्वःशिरोमनुः ॥ ७ ॥ विष्णुपूर्वःशिखामन्त्रो वर्म्मार्णूरुद्रपूर्वकः ॥ अग्निपूर्वोनेत्रमनुरस्त्रंसर्वपदादिकः ॥ ८ ॥ विधायैवंष डङ्गानिन्यसेन्मूर्त्तीर्यथाक्रमम् ॥ मस्तकाननहृद्गुह्यपाददेशेषुदेशिकः ॥ ९ ॥ सँद्यहृस्वैःसहादित्योरविर्भानुश्चभास्करः ॥ सूर्य्यस्ततश्चमन्त्रार्णान्प्रणवा द्यान्न्यसेद्बुधः ॥ १० ॥ ध्यायेत्ततःकुण्डलिनंशतपत्रलसत्करम् ॥ पद्मेचैवस मासीनंवरकेयूरभूषणम् ॥ ११ ॥ त्रिनेत्रंरक्तवर्णञ्चसुप्रसन्नंदिवाकरम् ॥ पूज

---

१ सत्यतेजोज्वालामणेहुंफट् स्वाहाहृदयायनमः २ ब्रह्मतेजोज्वामणेहुंफट्स्वाहा शिर सेस्वाहा ३ विष्णुतेजोज्वालामणेहुंफट्स्वाहा शिखायैवषट् ४ रुद्रतेजोज्वालामणेहुंफट् स्वाहाकवचायहुम् ५ अग्नितेजोज्वालामणेहुंफट्नेत्रत्रयायवौषट् ६ सर्वतेजोज्वालाम णेहुंफट्स्वाहाअस्त्रायफट् । इस षडङ्गन्यासको करके मूर्त्तिन्यास करे वह जैसे ७ ॐ आ- दित्यायनमः मस्तके ॥ ॐरवयेनमःमुखे । ॐभानवे नमः हृदये । ॐभास्कराय नमः लिङ्गे, ॐसूर्य्याय नमः पादयोः ॥ इति श्रीसूर्य्यस्यमूर्त्तिन्यासविधिः ८ अथ मन्त्राक्षरन्यासः ॐ घृशीर्षणि, ॐ णिः मुखे, ॐ सूकण्ठे, ॐ र्यः हृदये, ॐ आकुक्षौ, ॐ दिलिंगे, ॐ त्यः पादयोः, इसप्रकार न्यासों को करके ध्यानकरे ॥

यित्वायोगपीठन्तत्पीठेचार्चयेद्दविम् ॥ १२ ॥ धर्म्मादीनांस्थलेतत्रयजेत्कोण-
चतुष्टये ॥ ईशानान्मध्यपर्य्यन्तंसमाराध्यंप्रभूतकम् ॥ १३ ॥ विमलञ्चतथासारं
परमंसुखमेवच ॥ तद्बाह्येष्टदलंकृत्वादलमूलेषुचार्चयेत् ॥ १४॥ पूर्वादिषुतथाम
ध्येदीप्तासूक्ष्माजयातथा ॥ भद्राविभूतिर्विमलाह्यमोघाविद्युतातथा ॥ १५ ॥
सर्वतोमुखिकाचैताअग्निवर्णाःसुभूषिताः ॥ आसांबीजानिरांरींरूंरैंरोंरौंक्रमे
णच ॥ १६ ॥ रंरश्चनवपीठार्णैर्ब्रह्मविष्णुशिवात्मने ॥ सौराययोगपीठायह
दन्तोष्टादशाक्षरः ॥ १७ ॥ अनेनपीठंसम्पूज्यखखोल्कायाग्निगेहिनी ॥ मू
र्त्तिचकल्पयामीतिप्रोक्त्वामूर्त्तिप्रकल्पयेत् ॥ १८ ॥ तस्यामावाह्यदेवेशंतत्रसू
र्य्यंसमर्चयेत् ॥ तद्बाह्येष्टदलंकृत्वादिर्ग्दलेषुयजेदिमान् ॥ १९ ॥ आदित्यञ्च
रविंभानुंभास्करंसूर्य्यमेवच ॥ आद्यार्णबीजाहृदन्तेविदिक्पत्रेयजेदिमाः ॥
२० ॥ उषांप्रज्ञांप्रभांसन्ध्यांब्राह्मथादीश्चदलाग्रतः ॥ सूर्य्यस्याग्रेरुणःपूज्यो
प्यथविध्वादयोग्रहाः ॥ २१ ॥ तद्बाह्येभूपुरेपूज्यालोकपालास्तदग्रतः ॥ तद

---

१ ध्यान करने के बाद योगपीठ की भावना करे ॥ मंडूकश्चाथकालाग्नीरुद्रआधारश क्तियुक् ॥ कूर्म्मोधरासुधासिन्धुःश्वेतद्वीपंसुरांघ्रिपाः ॥ इत्यादि पूर्वोक्तरीतिसे उसमें धर्म्म ज्ञान, वैराग्य, ऐश्वर्य्य, अधर्म्म, अज्ञान, अवैराग्य, अनैश्वर्य्य, इन आठों की जगह पर प्रभूत, विमल, सार समाराध्य, और परम सुखको जानना तहां बीच में परम सुखको और ईशानादि कोणों में क्रमसे प्रभूत आदिकों को पूजे ॥ और शेष अनन्तादि योगपी-ठोक्त विधि को पूर्ववत् समझना ॥ तदनन्तर आठ दिशाओं और मध्यमें दीप्तादि नवपीठ शक्तियों की पूजा करना इनके बीज मूलमें स्पष्ट लिखे हैं उनको जोड़लेना जैसे, रांदीप्तायै नमः, रींसूक्ष्मायै नमः इत्यादि २ ग्रन्थान्तरों में इस मन्त्र के आदिमें ॐकार भी कहागयाहै इससे उसके जोड़नेसे ग्यारह अक्षर का मन्त्रहोताहै जैसे, ब्रह्म विष्णु शिवात्मने सौराययो-गपीठाय नमः, ३ अन्य ग्रन्थोंमें यह मन्त्र कुछ विशेषता से है जैसे, ॐ हं खं खः खोल्काय नमः । इति मूर्त्तिकल्पनमन्त्रः ४ प्रथम न्यासोक्त षडङ्गों को पूजकर बीचमें ॐ आदित्याय नमः पूर्व में रंरवये नमः दक्षिणमें उंभानवे नमःपश्चिममें इंभास्कराय नमः उत्तरमें अंसूर्य्याय नमः ईशानादि कोणस्थदलों में, आंउषायै नमः,प्रंप्रज्ञायै नमः, प्रंप्रभायै नमः,संसन्ध्यायै नमः, ५ नाम के प्रथम अक्षर को बीज बनाकर चतुर्थ्यन्त नाम में नमः पद जोड़ करके पूजा करना ॥ पूजाकी रीति ग्रन्थान्तरों में स्पष्ट है उसको लिखताहूं ॥ जैसे, चंचन्द्राय नमः पूर्व में, बुंबुधाय नमः दक्षिण, गुंगुरवे नमः पश्चिम, शुंशुक्राय नमः उत्तर, अंअंगारकाय नमः ईशान, शंशनैश्चराय नमः आग्नेय, रांराहवे नमःनैर्ऋत्य,कें केतवे नमः वायव्यमें इसरीति से समझ लेना ॥

स्त्राणि च तद्बाह्ये भास्करार्चनमीरितम् ॥ २२ ॥ अष्टलक्षं जपित्वान्ते दुग्धवृक्ष समिद्वरैः ॥ जुहुयात्सत्सहस्राणि दुग्धार्कैः साधकोत्तमः ॥ २३ ॥ तर्पयेच्छुद्ध सलिलैश्चन्द्रैश्चन्दनवासितैः ॥ स्वाभिषेकं ततः कृत्वा ब्राह्मणान्भोजयेत्ततः ॥ २४ ॥ एवं सिद्धे मनौ मन्त्री प्रयोगान्कर्त्तुमर्हति ॥ रक्ताम्बरधरो रक्तमाल्यो रक्ता नुलेपनः ॥ २५ ॥ घृतक्षीरसमायुक्तगुडभक्ताशनो निशि ॥ भिक्षाहारस्तथा वीतसङ्गः सन्तोषवान्सदा ॥ २६ ॥ मन्त्रमावर्त्तयेन्नित्यमाराधनपरायणः ॥ रथमभ्यर्च्य भास्वन्तमर्घ्यं तस्मै निवेदयेत् ॥ २७ ॥ प्रत्यहं रविवारे वा तद्विधान मुदीर्य्यते ॥ अग्रे मण्डलमालिख्य यजेत्पीठं यथाविधि ॥ २८ ॥ तत्र संस्थापये त्पात्रं शुद्धं ताम्रसमुद्भवम् ॥ रम्यं प्रस्थजलग्राहि मूलमन्त्रं समुच्चरेत् ॥ २९ ॥ शुद्धोदकेन सम्पूर्य्य प्रक्षिपेत्तत्र कुंकुमम् ॥ रोचनां राजिकां रक्तचन्दनं वंशतण्डु लाम् ॥ ३० ॥ श्यामाकतण्डुलान्शालीन्करवीरजपाभवान् ॥ सञ्चिन्त्य देव तात्मैक्यं भास्करं सम्यगर्चयेत् ॥ ३१ ॥ उपचारैर्निवेद्यान्तैस्तत्पिधाय जपेन्म नुम् ॥ सम्यगष्टोत्तरशतं भूयः पुष्पादिभिर्यजेत् ॥ ३२ ॥ उद्धृत्यामस्तकं पात्रं जानुस्पृष्टमहीतलः ॥ दृष्टिं निधाय व्योम्न्यर्कं साङ्गं सावरणं स्मरेत् ॥ ३३ ॥ त तो जपन्मूलमनुं धिया दद्याच्च भानवे ॥ अर्घ्यं प्रसन्नचेताः सन्दद्याच्च सुमनोञ्जलि म् ॥ ३४ ॥ पुनर्नियतधीस्तावद्यावद्वानुर्निजैः करैः ॥ अर्घोदकं समादत्ते यजे दष्टोत्तरं शतम् ॥ ३५ ॥ ततः प्रसन्नो भगवान्प्रयच्छेदिष्टमात्मनः ॥ अनेन तु प्रयो गेण भवेदायुर्निरुग्णता ॥ ३६ ॥ वृद्धिः पुत्रकलत्राणान्तेजो वीर्य्यं धनं यशः ॥ तन्मन्त्रसहिताम्भोभिः सप्तधाञ्जलिसेचनम् ॥ ३७ ॥ पापान्धकारदारिद्र्यना शनं श्रीकरं परम् ॥ स्थण्डिले स्थापयेत्कुम्भं तीर्थोदकसुपूरितम् ॥ ३८ ॥ हिर ण्यरत्नगन्धादि तत्र निक्षिप्य पूरयेत् ॥ देवं सपरिवारं तु प्रागुक्तविधिना ततः ॥ ३९ ॥ स्थण्डिलेग्निं समारोप्य कपिलापयसा चरुम् ॥ पचेत्तेनैव जुहुयाद्गव्या ज्यसहितेन च ॥ ४० ॥ सहस्रं कृतसम्पातं शुद्धपात्रे तु कारयेत् ॥ ऋतुस्नातां सुनियतां पूर्वाङ्गसमुपोषिताम् ॥ ४१ ॥ अष्टमे दिवसे तान्तु सहस्रमभिमन्त्रि तैः ॥ अभिषिञ्चेत्कुम्भजलैर्दद्यात्तस्यै तु मन्त्रवित् ॥ ४२ ॥ सहस्रमन्त्रितं हो

१ कपूर २ लाल कपड़े आदि ॥

मसम्पातान्तंततोनिशि ॥ नरोपिसूर्य्यएवाहमितिध्यात्वातयासह ॥ ४३ ॥ सम्भोगमाचरेत्तेनसुपुत्रोगुणवान्भवेत् ॥ अथमन्त्रान्तरंवक्ष्येदिनेशस्यषडक्षरम् ॥ ४४ ॥ हंखंखःखोल्कायेतितथान्तेचाग्निगेहिनी ॥ मुनिर्ब्रह्माचगायत्रं छन्दःसवितृदेवतम् ॥ ४५ ॥ सूक्ष्मरूपायाग्निवधूर्मन्त्रेणहृदयंमतम् ॥ सूक्ष्माकारायाग्निवधूरितिमन्त्रेणशीर्षकम् ॥ ४६ ॥ सूक्ष्मबालायस्वाहेतिकवचञ्च सनेत्रकम् ॥ सूक्ष्माकारायहुंफडित्येवंशस्त्रंप्रकीर्त्तितम् ॥ ४७ ॥ मन्त्रवर्णैः षडङ्गंस्याद्ध्यानमस्योच्यतेधुना ॥ रक्तपद्मद्वयंहस्तैर्बिभ्रतञ्चवराभये ॥ ४८ ॥ बन्धूकाभन्त्रिनेत्रञ्चरविन्ध्यायेत्सुभूषितम् ॥ पूर्वोक्तेपूजयेत्पीठेदेवमावाह्य मन्त्रवित् ॥ ४९ ॥ लक्षमेकंजपेन्मन्त्रंनियतात्माजितेन्द्रियः ॥ जुहुयात्त द्दशांशेनबिल्वैरथपलाशजैः ॥ ५० ॥ उदुम्बरसमुद्भूतैस्त्रिमध्वक्तैःसमिद्भिः ॥ ५१ ॥ तर्प्पणादिततःकुर्य्यात्प्राक्प्रोक्तविधिनासुधीः ॥ अर्घादिकंच कुर्वीतपूर्ववद्वाञ्छितासये ॥ ५२ ॥ एतत्संसेवनान्नॄणाखेचरीसिद्धिरीरिता ॥ नभास्करसमःकश्चिद्भुक्तिमुक्तिप्रदायकः ॥ ५३ ॥ प्रणवश्चखखोल्कायमन्त्रःपञ्चाक्षरोस्यच ॥ न्यासोध्यानंचपूजाचप्राग्वदेवसमीरिता ॥ ५४ ॥ खंबीजादिकएषोहिषडर्णःसप्तवर्णकः ॥ भवेत्तन्न्यासपूजादिध्यानाद्यङ्गंषडर्णवत् ॥ ५५ ॥ सप्ततुरङ्गायविद्महेसहस्रकिरणायधीमहि ॥ तन्नोरविःप्रचोदयात् ॥ ५६ ॥ इयन्तुसूर्य्यगायत्रीजपतामिष्टदायिनी ॥ भग्नानांराजपुत्राणांक्षेत्रतेजोविधायिनी ॥ ५७ ॥ यत्स्पृष्टंनारिभिर्दृष्टंस्पृष्टंनैवकदाचन ॥ परस्त्रीभिर्यच्छरीरंपुरश्चर्य्याचतुष्टयम् ॥ ५८ ॥ जातिमात्रंराजपुत्रःपुरश्चर्य्याप्रभावतः ॥ सार्वभौमत्वमाप्नोतिब्राह्मणान्प्रतिपालयेत् ॥ ५९ ॥ ओंह्रींहंसश्चतुर्वर्णोमन्त्रःप्रोक्तोदिनेशितुः ॥ ऋषिर्ब्रह्माचगायत्रीछन्दःसूर्य्यश्चदेवता ॥ ६० ॥ ताराद्ययाषडंगानिषड्दीर्घान्वितमायया ॥ देदीप्यमानरत्नौघमुकुटेनविराजितम् ॥ ६१ ॥ पाशांकुशवराभीतिकरंरक्तंभजेरविम् ॥ नवशक्तिसमायुक्तेपीठे पूर्वोदितेयजेत् ॥ ६२ ॥ प्रकल्प्यमूर्त्तिंमूलेनतत्रावाह्यदिवाकरम् ॥ सम्पूज्य

---

१ हं खं खः खोल्काय यह छः अक्षर का मन्त्र है और अन्त में स्वाहा पद के जोड़ने से अष्टाक्षर होजाता है तथा आदि में ओंकार जोड़ने से अष्टाक्षर भी नवर्ण होता है ॥

तस्यावरणानर्चयेत्क्रमतःसुधीः ॥ ६३ ॥ हृल्लेखागगनारक्ताकरालीचचतुर्थिका ॥ महोच्छुष्मापञ्चमीचमध्यात्पूर्वादिकेयजेत् ॥ ६४ ॥ अङ्गेर्द्वितीयावरणंमातृकाभिस्तृतीयकम् ॥ सोमज्ञगुरुशुक्राश्चदिक्ष्वारशनिराहवः ॥ ६५ ॥ केतुर्विदिक्षुपूज्याश्चचतुर्थावरणंरवेः ॥ स्वानामाद्यक्षरंबिन्दुभूषितंप्रथमंवदेत् ॥ ६६ ॥ ङेन्तंहृदन्तंखेटस्यनामपूजामनुर्मतः ॥ पञ्चमीलोकपालैःस्यात्षष्ठीचापितदायुधैः ॥ ६७ ॥ चतुर्लक्षंजपेन्मन्त्रंजुहुयात्तद्दशांशतः ॥ ब्रह्मवृक्षसमद्भूतैःपुष्पैस्त्रिमधुरप्लुतैः ॥ ६८ ॥ सरोजैर्वातदादेवंतर्पयेदभिषेचयेत् ॥ ब्राह्मणाराधनंकुर्य्यात्ततःसिद्धोभवेन्मनुः ॥ ६९ ॥ एवंसाधितमन्त्रस्तुकाम्यकर्म्माणिसाधयेत् ॥ जपेदेवंप्रतिदिनंरविवारेथवासुधीः ॥ ७० ॥ दद्यादर्घद्वयमपिभवेत्तस्योदितंफलम् ॥ अथश्रेयोजनानांतुयदसौवक्ष्यतेमनुः ॥ ७१ ॥ त्र्यक्षरोस्यतुह्रांह्रींसःप्रोक्तःसर्वार्थदायकः ॥ अजोस्यमुनिरुद्दिष्टोगायत्रीछन्दउच्यते ॥ ७२ ॥ देवतास्यमनोःप्रोक्तःसवितासुरपूजितः ॥ गुह्यात्पादतलेयावद्गलादागुह्यकंततः ॥ ७३ ॥ मूर्धादिकण्ठपर्य्यन्तंमन्त्रार्णान्विन्यसेत्सुधीः ॥ मायाबीजेनषड्दीर्घभाजाङ्गानिप्रविन्यसेत् ॥ ७४ ॥ स्थितःपद्मेरुणेत्र्यक्षोरुणवर्णसुभूषणः ॥ पद्मद्वयवराभीतिहस्तश्चारुणसेवितः ॥ ७५ ॥ पूर्वोदितेयजेत्पीठेनवशक्तिसमन्विते ॥ षडङ्गावरणंचाद्यंप्राग्वच्चैवद्वितीयकम् ॥ ७६ ॥ दिक्पालैश्चतृतीयंस्याच्चतुर्थन्तुतदायुधैः ॥ ततश्चतेजश्चण्डायनिर्माल्यंविनिवेदयेत् ॥ ७७ ॥ जपेद्द्वादशलक्षंचतत्सहस्रंहुनेत्तिलैः ॥ घृताक्तमधुराक्तैश्चयवान्नैश्चैवतद्दशैः ॥ ७८ ॥ तर्पणादिततःकुर्य्यात्प्रयोगान्साधयेदथ ॥ दद्यात्पूर्वोदितंचार्घ्यदिनेशायसुसाधकः ॥ ७९ ॥ सोप्यस्यधनधान्यादिपुत्रपौत्रविवर्धनम् ॥ करोतिरत्नवस्त्रादिभूषणानिविवर्धयेत् ॥ ८० ॥ अष्टपत्राम्बुजंकुर्य्यात्तत्रकुम्भान्नवन्यसेत् ॥ पत्रमध्येकर्णिकायांतांश्चतोयेनपूरयेत् ॥ ८१ ॥ नवग्रहान्समावाह्यतेषुकुम्भेषुमन्त्रवित् ॥ कर्णिकाकलशंमूलमन्त्रेणैवसहस्रकम् ॥ ८२ ॥ प्रजप्यान्येषुतन्मन्त्रान्शतकृत्वोजपेत्सु

---

१ जिससे जनोंका कल्याण होता है वह श्रेयोजनक नामक मन्त्र कहाजाता है
२ घृत व त्रिमधुसे भीगेहुये यवों से ॥

धीः ॥ तज्जलैरभिषिञ्चेतसाधकोग्रहदोषतः ॥ ८३ ॥ रोगानश्यन्तिसततंल क्ष्मीश्चापिस्थिराभवेत् ॥ ग्रहहोमःप्रकर्त्तव्योग्रहाणांवैकृतेतथा ॥८४॥ चन्द्रसा न्वोश्चोपरागेनिजर्क्षेवाथमन्त्रवित् ॥ विग्रहादौभयेचापिघोररूपेमहागदे ॥ ८५ ॥ पूर्वंमण्डलकंकृत्वाग्रहान्सम्पूज्यतत्रच ॥ स्वदिक्षुचाग्नीन्संस्थाप्यजु हुयाञ्चसमिद्भरैः ॥ ८६ ॥ अर्कद्विजद्रुमापूराश्वत्थोदुम्बरखादिरैः ॥ शमीदूर्वा कुशोद्भूतैः क्रमाद्धोमःसमीरितः ॥ ८७ ॥ अष्टाधिकंसहस्रञ्चहुनेत्सूर्य्यस्य चाहुतीः ॥ अन्तेचान्यैर्व्याहृतिभिर्हुत्वाहोमंसमापयेत् ॥ ८८ ॥ गुरुंसन्तोष्य ऋत्विग्भ्योयथाशक्त्याचदक्षिणाम् ॥ दद्याञ्चभोजयेद्विप्रान्संग्रामेविजयीभ वेत् ॥ ८९ ॥ रोगाःशान्तिंव्रजन्त्याशुदीर्घमायुश्चविन्दति ॥ कृत्याद्रोहारि काणाञ्चशान्तिरेवाशुजायते ॥ ९० ॥ सर्वेषाञ्चग्रहाणाञ्चहोमएकत्रभावयेत् ॥ धनधान्यैश्वर्य्यपूर्णआयुर्दीर्घंसविन्दति ॥ ९१ ॥ अथान्यत्सम्प्रवक्ष्यामिसं ग्रामविजयाभिधम् ॥ मन्त्रं सूर्य्यस्यरांहुंचत्र्यक्षरोयंमहामनुः ॥ ९२ ॥ ऋषि श्छन्दोदेवताश्चब्रह्मजगात्रसुभानवः ॥ सर्वपूजादिकञ्चास्यश्रेयोजनकमन्त्रव त् ॥ ९३ ॥ अथातःसम्प्रवक्ष्यामिहंसोयंत्र्यक्षरोमनुः ॥ ब्रह्मामुनिःसमुद्दिष्टो गायत्रंछन्दउच्यते ॥ ९४ ॥ देवीपूर्वन्देवतास्यपरमात्मासमीरितः ॥ षड्दी र्घेणसकारेणहंपूर्वेणषडङ्गकम् ॥ ९५ ॥ रक्ताब्जकाञ्चननिभंगुणटङ्कवराभयम् ॥ करैर्दधानंपद्मस्थंहरंगौर्य्यङ्कगम्भजे ॥ ९६ ॥ पूर्वोदितेयजेत्पीठेदिक्कालादि प्रकल्पिते ॥ तत्रदेवंयजेन्मूर्त्तिमूलेनाकल्प्यमन्त्रवित् ॥ ९७ ॥ पूर्वमंगैर्यजे न्मन्त्रीदलेषुचप्रपूजयेत् ॥ ऋतुंवसुंनरञ्चापिपरञ्चविदिशासुच ॥ ९८ ॥ अ ब्जांगोजाञ्चऋतजामद्रिजाञ्चप्रपूजयेत् ॥ ततोलोकेश्वरांश्चापितदग्रेचायु धान्यपि ॥ ९९ ॥ जपेद्द्वादशलक्षञ्चतद्दशांशंतदाहुनेत् ॥ सर्पिषाक्तेनहवि षातर्पणादिततश्चरेत् ॥ १०० ॥ पूर्वोदितेनविधिनासूर्य्यायार्घंनिवेदयेत् ॥ गोमयेनोपलिप्तायाम्भूमावष्टदलंलिखेत् ॥ १ ॥ सूर्य्याष्टगन्धैरथवाचन्दना भ्यांमनुन्त्विमम् ॥ लिखेत्तत्कर्णिकायान्तुतस्योर्ध्वंस्थापयेद्घटम् ॥ २ ॥ ती र्थादिजलसम्पूर्णन्तस्योर्ध्वंस्थापयेत्करम् ॥ दक्षिणंवामहस्तेनमूलमष्टोत्तरंशत म् ॥ ३ ॥ जपेत्सुधामयन्तचकलशंचेतिभावयेत् ॥ तेनाभिषिञ्चेत्साध्यन्तुजा

यतेगतभीस्त्वसौ ॥ ४ ॥ गतरोगोदीर्घजीवीविपद्बाधापरिच्युतः ॥ चेत्स्त्रीवै नित्यसौभाग्यामन्त्रयेद्दक्षिणङ्करम् ॥ ५ ॥ आदौतेनविधातव्यःकरेणकरकः शुभः ॥ अष्टोत्तरसहस्रञ्चमन्त्रयेत्करकंपुनः ॥ ६ ॥ भावयित्वाजलन्तच्चामृत न्तेनाभिषेचयेत् ॥ विषिणंनिर्विषोभूयात्स्थावराज्जङ्गमादपि ॥ ७ ॥ महा सर्प्पेणदष्टश्चेन्मनुनामन्त्रयेत्करम् ॥ विन्यसेद्दंशिनोमूर्द्धिमन्त्रयित्वाविषंहरे त् ॥ ८ ॥ मन्त्रंसुधाकरकरशुद्धधाराप्लुतंस्मरेत् ॥ प्लुतश्चामृतधाराभिर्भावयि त्वामनुञ्जपेत् ॥ ९ ॥ गदिनंमार्ज्जयेत्पश्चात्क्षुद्रामयविनाशनम् ॥ अपस्मृ तिन्त्रिदोषोत्थान्रोगान्हन्यान्नसंशयः ॥ १० ॥ शीर्षस्थचन्द्रबिम्बहंसउरूप कम् ॥ सञ्चिन्त्यप्रजपेन्नित्यंक्षेपयेत्पलितञ्जराम् ॥ ११ ॥ ध्यायेन्मन्त्रादिमंव र्णंसुधाधारापरिप्लुतम् ॥ द्वितीयश्चन्द्रधाराभिर्मार्ज्जयेत्तेनमन्त्रवित् ॥ १२ ॥ मार्त्तण्डभैरवस्याथमन्त्रंवक्ष्यामिसिद्धिदम् ॥ हकारोरेफसंयुक्तःपकारेणसम न्वितः ॥ १३ ॥ औकारस्वरसंयुक्तस्तलेञ्जकारसंयुतः ॥ बिन्दुयुक्तंकूटमुक्तं मार्तण्डस्यत्रिवर्णकम् ॥ १४ ॥ पुटितंबिम्बबीजेनसर्वकामफलप्रदम् ॥ बि म्बबीजंदक्षमार्गेभजतांसिद्धिदायकम् ॥ १५ ॥ वाममार्गेणभजतामादे श्यंकिमिदंबुधैः ॥ ब्रह्मामुनिर्निवृच्छन्दोमार्त्तण्डाख्यस्तुभैरवः ॥ १६ ॥ देवतोक्ताथहंबीजंबिन्दुःशक्तिःप्रकीर्त्तिता ॥ मूर्त्तयःपञ्चचोद्दिष्टासूर्य्यभास्करभा नवः ॥ १७ ॥ रविर्दिवाकरश्चापिन्यस्तव्याह्यंगुलीपुताः ॥ पञ्चह्रस्वाद्यबीजे नपञ्चदीर्घान्वितेनच ॥ १८ ॥ शिरोवदनहृद्गुह्यपाददेशेपुतान्यसेत् ॥ ततः षडङ्गनेत्रान्तंकुर्य्याद्दीर्घयुताणुना ॥ १९ ॥ अस्त्रन्यासानन्तरन्तुनेत्रन्यासःप्र कीर्त्तितः ॥ व्यापकंमूलबीजेनकुर्वीततदनन्तरम् ॥ २० ॥ जपाकुसुमसङ्काश मष्टबाहुंचतुर्मुखम् ॥ मुखेमुखेत्रिनयनंमाणिवन्मुकुटान्वितम् ॥ २१ ॥ पद्माङ्कप द्मचक्राणिशङ्खंपाशंतथासृणिम् ॥ अक्षमालांकपालंचदधतंकरपङ्कजैः ॥ २२ ॥ अर्धाङ्गस्थितयाशक्त्यालिंगितंहारशोभितम् ॥ पद्मस्थितंहास्यमुखं मार्तण्डंद्युमणिंभजे ॥ २३ ॥ पीठेदीप्तादिभिर्युक्तेप्राग्वदेवंप्रपूजयेत् ॥ आदा वंगानिसम्पूज्यकर्णिकायामुपादिकाः [illegible]४ ॥ पूर्वादिदिक्षुसूर्य्यादीनविदि

१ अकारोवासुदेवःस्यादुकारःशङ्करःस्मृतः । [illegible] इथो [illegible] शिवरूप [illegible]

क्षुपरिपूजयेत् ॥ नेत्रमीशानकोणेचतद्बाह्येखेचरानपि ॥ २५ ॥ दिगीश्वरा
नायुधानिमार्त्तण्डार्चनमीरितम् ॥ लक्षाणांत्रितयंमन्त्रीजपेद्बीजंचबिम्बयोः
२६ ॥ दशांशंकमलैःफुल्लैर्जुहुयान्मधुरोक्षितैः ॥ जुहुयान्मातुलुंगैश्चलभते
र्थंसुवाञ्छितम् ॥ २७ ॥ एवंयःसाधयेन्मन्त्रीतस्यविद्यायशोबलम् ॥ पुत्रल
क्ष्मीश्चसौभाग्यंसर्वदाविजयीभवेत् ॥ २८ ॥ पूर्वोक्ताष्टाक्षरेतारादग्रेह्रींबीजमु
च्चरेत् ॥ श्रीमन्त्रोयंदशार्णस्तुपञ्चाम्नायेषुकीर्त्तितः ॥ २९ ॥ ओं ह्रां ह्रीं ह्रौं स
बिन्दुःससूर्य्यायेत्यग्निगेहिनी ॥ दक्षारस्तुजप्तोयंद्वादशायुतसंख्यया ॥ ३० ॥
दुष्टग्रहास्तुसौम्यास्तुराजमान्यःप्रजायते ॥ उपास्यस्तुकृतेविष्णुस्त्रेतायांतुमहे
श्वरः ॥ ३१ ॥ इन्द्रयज्ञौद्वापरेतुकलौचण्डीविनायकौ ॥ भास्करःसर्वतुल्यस्तु
सर्वेषांफलदायकः ॥ ३२ ॥ यद्यत्तेजोमयंतत्तज्ज्ञेयंसूर्य्यस्वरूपकम् ॥ इत्येतत्तु
भ्यमाख्यातंकिंवाच्यमथतद्वद ॥ १३३ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेसूर्य्यमन्त्रप्रकाशएकविंशः ॥ २१ ॥

---

श्रीदेव्युवाच ॥ सूर्य्यमन्त्राःश्रुतादेवतद्दशानांखचारिणाम् ॥ श्रोतुमिच्छा
मिचमनून्सप्रयोगांश्चतान्वद ॥ १ ॥ श्रीशिवउवाच ॥ साधुपृष्टंत्वयादेवित्रै
लोक्यमुपकारकम् ॥ कालेनकथितंमह्यंतन्मयाकीर्त्यतेधुना ॥ २ ॥ माययाम
मर्पंचब्रह्मविष्णुमहेश्वराः ॥ तत्त्वतोनैवजानन्तिकिम्पुनःशङ्कितोजनाः ॥
३ ॥अ[illegible]त्यक्षंमहाविष्णोस्तद्ब्रह्माह्वयमुच्यते ॥ तथाममग्रहारूपंतवमायेति
कीर्त्तितम् ॥ ४ ॥ ग्रहास्तुष्टास्तदादेवाभूपालाश्चाखिलंजगत् ॥ तुष्टंभवतिरु
ष्टेपुशत्रुत्वमुपजा[illegible]ते ॥ ५ ॥ कदाचिद्ब्रह्मलिखितंमिथ्यादैवाद्भविष्यति ॥
नतुग्रहकृतंदुःखंसौख्यंमिथ्याप्रजायते ॥ ६ ॥ सौमित्येकाक्षरंबीजंचन्द्रस्यपरि
कीर्त्तितम् ॥ पङ्क्तिश्छन्दोदेवताचचन्द्रमाभार्गवोमुनिः ॥ ७ ॥ सदीर्घनिजबी

१ आंसौ हृदयाय नमः [illegible] शिखायैवषट् ऐंसौं कवचाय हुम् औं
[illegible] करके चां चीं चूं चैं चौं चः इन छः
[illegible] जैसे चांअंगुष्ठाभ्यां नमः चीं तर्जनी
[illegible] नामिकाभ्यां नमः चौं कनिष्ठिकाभ्यां नमः चः करतल
[illegible] शिरसे स्वाहा इत्यादि ॥

जेनषडङ्गानिसमाचरेत् ॥ श्वेताब्जसंस्थंरजतकान्तिहारविराजितम् ॥ ८ ॥
नीलकेशंचकुमुदंवामेदक्षकरेवरम् ॥ पीठेधर्म्मादिसंयुक्तेगगनंपरिपूज्यच ॥
९ ॥ चन्द्रमण्डलपर्य्यन्तंततःसम्पूजयेद्विधुम् ॥ राज्ञीकुमुद्वतीभद्रासुधासञ्जी
विनीक्षमा ॥ १० ॥ आप्यायिनीचान्द्रिकाचह्लादिनीनवशक्तयः ॥ पूर्वादिक्र
मतोमन्त्रीमध्यान्ताःपूजयेदिमाः ॥ ११ ॥ अमृतातारकाज्योत्स्नाविमलाब्या
पिनीतथा ॥ चित्राचकृत्तिकाकान्तिःश्रवणापीठशक्तयः ॥ १२ ॥ अमृतान्ते
कलात्मनेसंवित्पीठायवैनमः ॥ अनेनपीठंसम्पूज्यंनाममन्त्रैश्चशक्तयः ॥ १३ ॥
किञ्जल्केषुषडङ्गानितच्छक्तीःपत्रगायजेत् ॥ रोहिणीकृत्तिकाचैवरेवतीभरणी
तथा ॥ १४ ॥ रात्रिरार्द्रातथाज्योत्स्नाकलाध्यानमथोच्यते ॥ सुसिताःश्वेतव
सनाःश्वेतमाल्यानुलेपनाः ॥ १५ ॥ मुक्ताहारालंकृताङ्ग्यःपाणयञ्जलिपुटाःशु
भाः ॥ आपीनोन्नतवक्षोजहाराक्रान्तावलग्नकाः ॥ १६ ॥ मदनमदगामि
न्यप्राणनाथाक्रमानसाः ॥ प्रसन्नचन्द्रवदनाःफुल्लेन्दीवरलोचनाः ॥ १७ ॥
ग्रहानष्टौकलाश्रेषुलोकेशांश्चततोयजेत् ॥ वज्रादीनिततोबाह्येप्येवंपूजासमी
रिता ॥ १८ ॥ वर्णलक्षंजपेन्मन्त्रंजुहुयात्तत्सहस्रकम् ॥ हविषाघृतसिक्तेनत
र्पणादिततश्चरेत् ॥ १९ ॥ ततःसिद्धोभवेन्मन्त्रःप्रयोगानाचरेत्ततः ॥ चन्द्रं
शिरसिसञ्चिन्त्यजपेन्मन्त्रमनन्यधीः ॥ २० ॥ त्रिसहस्रंतेनलभतेराज्यैश्वर्य्य
मकिञ्चनः ॥ लघुमिष्टहविष्याशीजलस्थोविजितेन्द्रियः ॥ २१ ॥ वेदलक्षमि
तंमन्त्रंप्रजपेद्यतमानसः ॥ धरागतंनिधानंसध्रुवंप्राप्नोतितत्क्षणात् ॥ २२ ॥ घो
रेज्वरेमहाक्लेशेशिरोरोगेचदारुणे ॥ शत्रूत्पादितकृत्यासुकामलाद्यामयेषुच ॥
२३ ॥ अयुतंप्रजपेन्मन्त्रंतच्छांतिरचिराद्भवेत् ॥ पौर्णिमायांयथाशक्त्याजपे
न्मन्त्रंजितेन्द्रियः ॥ २४ ॥ सौभाग्यारोग्यसम्पत्तिभाजनंमनुजोभवेत् ॥ मैत्र
वारुणविस्तीर्णंमण्डलानांत्रयंबुधः ॥ २५ ॥ लिप्तभूमण्डलेकृत्वानिषीदेत्प
श्चिमेस्वयम् ॥ मध्यस्थेमण्डलेन्यस्यपूजोपकरणानिच ॥ २६ ॥ अग्रस्थम
ण्डलेपद्मसंयुतेपूर्ववद्यजेत् ॥ विधुंततोरौप्यजातंपात्रंसंस्थाप्यपूरयेत् ॥ २७ ॥
शुद्धगोपयसामन्त्रीस्पृशन्पात्रंमनुंजपेत् ॥ अष्टाधिकशतंपश्चाद्राकायामुद
येद्विधुः ॥ २८ ॥ चन्द्रायविद्यामनुनादद्यादर्घयथाविधि ॥ कान्तियथेप्सितां

कन्यांसत्कीर्त्तिंलभतेध्रुवम् ॥ २६ ॥ विद्येविद्यामालिनीयुक्चन्द्रिन्यन्तेचच न्द्रयुक् ॥ मुखिशिरोन्तस्ताराद्योविद्यामनुरयंस्मृतः ॥ ३० ॥ वंसंवमितिचन्द्र स्यत्र्यर्णोमन्त्रोस्यदेवता ॥ सोमःश्रीश्छन्दउद्दिष्टमेकतत्त्वोमुनिर्मतः ॥ ३१ ॥ आकारःशक्तिरुद्दिष्टोरुंबीजंपरिकीर्त्तितम् ॥ बीजेनैवषडङ्गानिध्यानपूजादिपू र्ववत् ॥ ३२ ॥ चन्द्रस्यमण्डलाभ्यान्तुउकारंपुटितंस्मरेत् ॥ अमृतंनिस्सृतंतें नप्लावितंसकलंवपुः ॥ ३३ ॥ एवंभावनयातोयंमन्त्रयेत्तिथिवारकम् ॥ सम स्तविषरोगादिकाल्पमृत्युविनाशनम् ॥ ३४ ॥ इत्थंसूर्य्योदयात्पूर्वंजलपानं तुयश्चरेत् ॥ पापक्षयायुर्वृद्धिश्चवलीपलितनाशनम् ॥ ३५ ॥ ओंश्रींश्रींश्रूं सबिन्दुःससोमायेत्यग्निगेहिनी ॥ दशाक्षरश्चन्द्रमन्त्रोजप्यश्चायंदयायुतः ॥ ३६ ॥ होमादिकप्रयोगांश्चसर्वंपूर्ववदाचरेत् ॥ एतेप्रोक्ताश्चन्द्रमन्त्राभौमस्या थमनुंब्रुवे ॥ ३७ ॥ अथभौममनुंवक्ष्येसर्वरोगनिवारणम् ॥ अंचअङ्गारकोङे न्तोहृदन्तश्चाष्टवर्णकः ॥ ३८ ॥ ऋष्याद्याब्रह्मगायत्रीभूमिपुत्राःप्रकीर्त्तिताः ॥ अङ्गषट्कन्त्वस्यमनोरादिबीजेनसम्मतम् ॥ ३६ ॥ नमाम्यङ्गारकंरक्तंरक्ताम्बर विभूषणम् ॥ जानुस्थवामहस्ताढ्यंभाजनेतरपाणिकम् ॥ ४० ॥ लक्षाष्टकंज पःप्रोक्तंखादिरैरिन्धनैर्हुनेत् ॥ साज्यैस्सन्तर्प्पणंरक्तचन्दनाद्यैःसमाचरेत् ॥ ४१ ॥ एवंकृतेप्रयोगेस्यसमरेनपराजयः ॥ अनुग्रहात्तस्यलोकस्त्वनृणी व्याधिविच्युतः ॥ ४२ ॥ ओंश्रींक्लींमनुमुच्चार्य्यङेन्तोभौमोहृदन्तकः ॥ दशाक्षरोमनुःप्रोक्तोविरूपाक्षोमुनिर्मतः ॥ ४३ ॥ गायत्रीछन्दउद्दिष्टंदेवताम ङ्गलोभवेत् ॥ ह्रींबीजंश्रीञ्चशक्तिःस्यात्कीलकंक्लींप्रकीर्त्तितम् ॥ ४४ ॥ काला दिकंसमुच्चार्य्यनियोगोऋणनाशने ॥ षड्दीर्घयुक्तबीजेनअंगुल्यादिषडङ्गक म् ॥ ४५ ॥ ब्रह्मरन्ध्रेकर्णयोश्चअक्ष्णोर्नासिकयोर्मुखे ॥ लिङ्गेगुदेचमन्त्रस्यदश वर्णान्क्रमान्न्यसेत् ॥ ४६ ॥ मंगलोभूमिपुत्रश्चऋणहर्त्ताधनप्रदः ॥ स्थिरस्व नोमहाकायःसर्वकर्म्मावरोधकः ॥ ४७ ॥ लोहितोलोहिताक्षश्चसामगानां कृपाकरः ॥ धरात्मजःकुजोभौमोभूमिदोभूमिनन्दनः ॥ ४८ ॥ अङ्गारकोप

१ ॐ अंगारकाय नमः २ ब्रह्माऋषिः गायत्रीछन्दः भूमिपुत्रोदेवता ३ ॐ इति बीजेन षडङ्गन्यासः ॥

मश्चैवसर्वरोगापहारकः ॥ वृष्टिकर्त्तापहर्त्ताचसर्वकर्म्मफलप्रदः ॥ ४६ ॥ शिखायांमूर्द्धिभालेचनेत्रयोःकर्णयोर्नसोः ॥ मुखेचचिबुकेकण्ठेस्कन्धयोर्भुजयोस्तथा ॥ ५० ॥ पाण्योर्हृद्युदरेनाभौकट्यांलिङ्गेस्फिचोस्तथा ॥ जान्वोश्चजङ्घयोरंघ्र्योःक्रमान्नामानिविन्यसेत् ॥ ५१ ॥ चतुर्थ्यन्तहृदन्तानिसबिन्द्वाद्यक्षराणिच ॥ ततोध्यायेद्रक्तवर्णंरक्तमाल्यांशुकावृतम् ॥ ५२ ॥ कण्ठेकमलकालाढ्यङ्करयोःशक्तिशूलकम् ॥ मङ्गलानांमङ्गलञ्चसर्वकामफलप्रदम् ॥ ५३ ॥ एवन्ध्यात्वाजपेल्लक्षंजुहुयात्तुकरवीरजैः ॥ जपाप्रसूनैःपुरुभिर्मधुरत्रितयान्वितैः॥ ५४ ॥ रक्तचन्दनगन्धाद्यैर्यजेदरुणभूषणम् ॥ विधिनाभूमितनयंसर्वाभीष्टफलप्रदम् ॥ ५५ ॥ अङ्गान्यभ्यर्च्यपूर्वन्तुमङ्गलाद्यांस्ततोर्चयेत् ॥ एकविंशतिकोष्ठेपुततोचाष्टौग्रहान्न्यसेत् ॥ ५६ ॥ भैरव्यष्टकमर्च्यन्तुब्राह्मीनारायणीतथा ॥ माहेश्वरीचचामुण्डाकौमारीचापराजिता ॥ ५७ ॥ वाराहीनारसिंहीचततोष्टौभैरवाअपि ॥ असिताङ्गंरुरुंचण्डंक्रोधमुन्मत्तसञ्ज्ञकम् ॥ ५८ ॥ कपालिनंभीषणंचतथासंहारभैरवम् ॥ इन्द्रादिलोकपालांश्चतद्बाह्येचायुधानिच॥५६॥ एवंसिद्धमनुर्मन्त्रीप्रयोगान्कर्तुमर्हति ॥ पूजोत्तरंभौमवारेङ्गारकेणत्रिरेखिकाम्॥स्वागतोवामपादेनप्रव्रज्याष्टोत्तरंशतम् ॥ ६० ॥ जपेद्दशांशंहोमस्यतर्प्पणंपयसाचरेत् ॥ ब्राह्मणंभोजयेदेकंगुडप्रचुरवस्तुभिः ॥ ६१ ॥ स्तुत्वानत्वार्चयेद्देवंसाधकःस्थिरमानसः ॥ अनेनक्रमयोगेननिहत्यऋणमादरात् ॥ ६२ ॥ लभतेमहतींलक्ष्मींवत्सरेणनसंशयः॥विशेषान्मङ्गलेवारेदेवमेनंसमर्चयेत्॥६३॥ जुहुयात्तर्प्पयेन्मन्त्रीप्राप्नुयान्निजवाञ्छितम् ॥ त्रिकोणंपूर्वमुद्धृत्यपञ्चधाविभजेत्ततः ॥ ६४ ॥ ततस्तृतीयरेखांन्तुचिह्नाभ्यांलाञ्छयेत्ततः ॥ आद्यरेखातुयुगलंतृतीयाचिह्नयोर्न्यसेत् ॥ ६५ ॥ द्वितीयाग्रेसमाकृष्यतृतीयाचिह्नयोर्न्यसेत् ॥ युतारेखातृतीयातुसमभाज्यासमन्ततः ॥ ६६ ॥ तुर्य्याचिह्नद्वयेनाथत्रिभिश्चिह्नैश्चपञ्चमी ॥ तृतीयाग्रेप्रकुर्वीतपञ्चम्यामध्यचिह्नजे ॥ ६७ ॥ तुर्य्याग्रेयोजयेत्सम्यक्पञ्चम्याश्चिह्नयोर्द्वयोः ॥ अथमीनद्वयेदद्यात्सूत्रयुग्मंविचक्षणः ॥ ६८ ॥ एवमेकाधिकासम्यक्कोष्ठानांविंशतिर्भवेत् ॥ तृतीयातूर्य्ययोर्मध्येस्थितवह्निगृहेर्चयेत् ॥ ६६ ॥ देवंतदग्रतोमन्त्रीत्रिकोणेदक्षिणेक्रमा

त् ॥ मङ्गलाद्यांस्तारपूर्वान्नमोन्तानेकविंशतिम् ॥ ७० ॥ भौमभक्तस्यैकविंश त्पौरुषीनास्तिनिस्स्वता ॥ अथमन्त्रान्तरंवक्ष्येभूमिजस्यमहाद्भुतम् ॥ ७१ ॥ तारंमायांरमांम्लांचमंमङ्गलपदंवदेत् ॥ ङे-तंहृदन्तंरुद्रार्णैःप्रोक्तोभौमप्रियोम नुः ॥ ७२ ॥ प्राग्वत्पूजादिकंसर्वंचावाहनमनुस्त्वयम् ॥ भगवन्देवदेवेशएहिएहिमहाप्रभो ॥ ७३ ॥ ऐश्वर्य्यंत्रशमायातिभूतलेपुसमाश्रितम् ॥ एकविंशतिभिःपुष्पैरक्तैःप्रत्येकमर्चयेत् ॥ ७४ ॥ रक्तगन्धादिवस्त्रैश्चनैवेद्यंचगुडोदनम् ॥ कृत्वातुत्रिगुणंभूमौएकविंशतिरोटिकाः ॥ ७५ ॥ गोधूमचूर्णजास्तत्र स्थापयित्वाप्रभक्षयेत् ॥ सगुडाःप्रत्यहंजप्यमष्टोत्तरसहस्रकम् ॥ ७६ ॥ भौमस्तोत्रपुराणादिचर्चयातुदिनंनयेत् ॥ एकविंशद्दिनंप्रोक्तंयस्यकस्यापिचामतः ॥ ७७ ॥ याचनीयंयोग्यवस्तुसत्वरञ्चप्रयच्छति ॥ अथमन्त्रान्तरंवक्ष्ये भूमिपुत्रस्यसिद्धिदम् ॥ ७८ ॥ ओंह्रांहंसःखंखइतिमन्त्रःप्रोक्तःषडक्षरः ॥ मुनिर्विरूपोगायत्रीछन्दोदेवोधरात्मजः ॥ ७९ ॥ षड्भिर्वर्णैःषडङ्गानिमन्त्रोः कुर्वीतसाधकः ॥ जपाकुसुमसङ्काशंशक्तिशूलगदाधरम् ॥ ८० ॥ मेषसंस्थं रक्तवस्त्रंतंवन्देहंधरात्मजम् ॥ रसलक्षंजपेद्धोमःसमिद्भिःखदिरस्यच ॥ ८१ ॥ शैवपीठेयजेद्भौमंप्रागङ्गानितुपूजयेत् ॥ एकविंशतिकोष्ठेपुमंगलादीन्प्रपूजयेत् ॥ ८२ ॥ तद्बहिःककुभांनाथान्कुलिशादींस्ततोर्चयेत् ॥ इत्थंसुसिद्धंमन्त्रे शंस्वेष्टसिद्ध्यैप्रयोजयेत् ॥ ८३ ॥ नारीपुत्रमभीप्सन्तीमङ्गलव्रतमाचरेत् ॥ मार्गशीर्षेथवैशाखेतस्यारम्भःप्रशस्यते ॥ ८४ ॥ अरुणोदयवेलायामुत्थायशुचिविग्रहः ॥ दन्तान्धावेद्वेदमार्गसमिधामौनसेवितः ॥ ८५ ॥ नद्यादिसलिलेस्नात्वाधारयेद्रक्तवाससी ॥ नैवेद्यकुसुमालेपादिकान्सम्पाद्यसंयतः ॥ ८६ ॥ विधिज्ञंविप्रमाहूयभौममर्चेत्तदाज्ञया ॥ रक्तगोगोमयालिप्तदेशेपीठंनिषेचनी ॥ ८७ ॥ मङ्गलादीनिनामानिस्वप्रतीकेपुविन्यसेत् ॥ अंघ्र्योश्च जानुनोरूर्वोःकटौगुह्येतथोरसि ॥ ८८ ॥ वामबाहौदक्षबाहौगलेचवदनेनसोः ॥ अक्ष्णोर्भालेभ्रुवोर्मध्येकेशिखायांकलेवरे ॥ ८९ ॥ बाहुद्वयेथमूर्द्धादि पादपर्य्यन्तविग्रहे ॥ पादतोमूर्द्धपर्य्यन्तंतथादिक्षुप्रविन्यसेत् ॥ ९० ॥ आरंवक्रंभूमिजंचनाभौवक्षासिमूर्द्धनि ॥ एवंन्यस्तशरीरोसौध्यायेद्धरणिनन्द

नम् ॥ ६१ ॥ अर्घ्यंसंस्थाप्यविधिवत्पूजयेदुपचारकैः ॥ एकविंशतिकोष्ठा द्वयेत्रिकोणेताम्रपात्रके ॥ ६२ ॥ आवाह्यधरणीपुत्रंस्वर्णपुष्पैश्चचन्दनैः ॥ अङ्गानिपूजयेत्प्राग्वदेकविंशतिकोष्ठतः ॥६३॥ मङ्गलादींस्त्रिकोणेप्रुवक्रमारं चभूमिजम् ॥ ब्राह्म्याद्यामातृकाब्राह्येशक्त्यादीनायुधान्यपि ॥ ६४॥ धूपदीपौ निधायाथगोधूमान्नंनिवेदयेत् ॥ जलपूर्णेताम्रपात्रेधूपदीपाक्षतान्विते॥६५॥ फलंनिधायमन्त्राभ्यांभौमायार्घ्यंनिवेदयेत् ॥ भूमिपुत्रमहातेजःस्वेदोद्भवपि नाकिनः ॥ ६६ ॥ सुतार्थिनीत्वांप्रपन्नागृहाणार्घ्यंनमोस्तुते ॥ एकविंशति कृत्वोथप्रणमेत्पूर्वनामभिः ॥६७॥ प्रदक्षिणाविधातव्यातावत्योवसुधात्मजः॥ खादिराङ्गारकेणाथकुर्य्याद्रेखात्रयंसमम् ॥६८॥ वामपादेनमन्त्राभ्यामेताभ्यां तत्प्रमार्जयेत् ॥ दुःखदौर्भाग्यनाशायपुत्रसन्तानहेतवे ॥ ६९॥ कृतरेखात्रयंवा मपादेनैवप्रमार्ज्म्यहम् ॥ ऋणदुःखविनाशायमनोभीष्टार्थसिद्धये॥१००॥मार्ज याम्यसितारेखास्तिस्रोजन्मत्रयोद्भवाः ॥ ततःपुष्पाञ्जलिंकृत्वास्तुवीतधरणी सुतम् ॥ १ ॥ ध्यायन्तीचरणाम्भोजंपूजासाङ्गत्वसिद्धये ॥ धरणीगर्भसम्भू तंविद्युत्तेजःसमप्रभम् ॥ २ ॥ कुमारंशक्तिहस्तंचमङ्गलंप्रणमाम्यहम् ॥ ऋण हन्त्रेनमस्तुभ्यंदुःखदारिद्र्यनाशिने ॥ ३ ॥ नमोविद्योतमानायसर्वकल्याण कारिणे ॥ देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥ ४ ॥ सुखंयान्तियतस्तस्मै नमोधरणिसूनवे ॥ योवक्रगतिमापन्नोनृणांदुःखंप्रयच्छति ॥ ५ ॥ पूजितः सुखसौभाग्यंतस्मैक्ष्मासूनवेनमः ॥ प्रसादंकुरुमेनाथमङ्गलप्रदमङ्गल ॥ ६ ॥ मेषवाहनरुद्रात्मन्पुत्रंदेहिधनंयशः ॥ एवंसम्पूज्यसम्भूयगृह्णीयादब्राह्मणा शिषः ॥ ७ ॥ गुरवेदक्षिणान्दत्त्वाभुञ्जीतान्नंनिवेदितम् ॥ प्रतिभौमदिनेकु र्य्यादेवंसंवत्सरावधि ॥ ८ ॥ तिलैर्विधायहोमंचशतार्धंभोजयेद्द्विजान् ॥ माहेयमूर्त्तिंसौवर्णामाचार्य्यायनिवेदयेत् ॥ ९ ॥ मण्डलस्थेघटेभ्यर्च्यसुतसौ भाग्यसिद्धये ॥ १० ॥ अङ्गारकायविद्महेशक्तिहस्तायधीमहि ॥ तन्नोभौमः प्रचोदयात् ॥ ११ ॥ एषाङ्गारकगायत्रीजप्ताभीष्टप्रदायिनी ॥ एतस्यास्तु जपादेवप्रसीदतिधरासुतः ॥ १२ ॥ ॐक्रांक्रींक्रौंसबिन्दुःसकुजायेत्यग्निगे हिनी ॥ दशाक्षरोभौममन्त्रोजप्यश्चायंनवायुतम् ॥ १३ ॥ अथातःसंप्रव

क्ष्यामिबुधमन्त्रंमहाद्भुतम् ॥ बुंङेन्तंबुधशब्दंचहृदयान्तःषडर्णकः ॥ १४ ॥ बुधमन्त्रोस्यमुन्याद्यात्रह्मपंक्तिबुधामताः ॥ षडङ्गानिस्वबीजेनविन्यस्यैवंविचिन्तयेत् ॥ १५ ॥ वन्देबुधंसदादेवंपीताम्बरसुभूषणम् ॥ जानुस्थवामहस्ताब्जंसाभयेतरपाणिकम् ॥ १६ ॥ प्रजपेद्वर्णसाहस्रंदशांशंजुहुयाद्घृतैः॥ अर्चनंत्वङ्गखेटाशोपतिभिस्त्र्यावृतंस्मृतम् ॥ १७ ॥ ॐब्रांब्रींब्रूंसबिन्दुःसबुधायेत्यग्निगेहिनी ॥ दशाक्षरःसौम्यमन्त्रोजपोलक्षैकसङ्ख्यया ॥ १८ ॥ ॐजांजींजूंसबिन्दुसचतुर्थ्यन्तोबृहस्पतिः ॥ वैह्निस्त्रीविश्ववर्णोयंजप्यःपञ्चदशायुतम् ॥ १९ ॥ अथातःसम्प्रवक्ष्यामिगुरुमन्त्रंगुरुत्वकृत् ॥ बृंबृहस्पतयेहृच्चमन्त्रश्चाष्टाक्षरोमतः ॥ छन्दोनुष्टुम्मुनिर्ब्रह्मादेवःप्रोक्तोबृहस्पतिः ॥२०॥ बृंबीजंतेनकुर्वीतबीजैनैवाङ्गकल्पनम् ॥ सुवर्णाभंपीतवस्त्रंरत्नस्वर्णाम्बरादिकम् ॥ २१ ॥ किरन्तंदक्षहस्तेनतद्राशिंवामपाणिना ॥ स्पृशन्तंसम्यगपरंबृषणौकनकादिकम् ॥ २२ ॥ नानालङ्कारशोभाढ्यंविद्यासागरपारगम् ॥ जपित्वाशीतिसाहस्रंहुत्वातेनघृतेनवा ॥ २३ ॥ धर्म्माधर्मादिपीठेतंपूजयेदङ्गदिकुसुरैः ॥ सिद्धेमनौप्रकुर्वीतप्रयोगानिष्टसिद्धये ॥ २४ ॥ हरिद्राकुंकुमैर्हुत्वाघृताक्तैर्दिवसत्रयम् ॥ सप्तविंशच्छतान्मन्त्रीवासांसिलभतेमणीन् ॥ २५ ॥ शत्रुरोगादिपीडासुकलहेस्वजनोद्भवे ॥ जुहुयात्पिप्पलोत्थाभिस्समिद्भिस्तन्निवृत्तये ॥ २६ ॥ गुरोरुपासकानांतुजायन्तेसर्वसम्पदः ॥ वंक्रंमेदेहिशुक्रायहृदयान्तःशुभादिकः ॥ २७ ॥ एकादशाक्षरोमन्त्रोविराट्छन्दउदाहृतम् ॥ ब्रह्मामुनिर्देवतातुशुक्रोदैत्यातिपूजितः ॥ २८ ॥ षैड्भिःपदैःषडङ्गानिततोदेवंविचिन्तयेत् ॥ शुक्रंनमाम्यासनस्थंमुक्ताभरणभूषितम् ॥ २९ ॥ स्वर्णवासोरत्नधाराचिन्मुद्राक्तकरद्वयम् ॥ अयुतंप्रजपेमन्त्रंसहस्रंजुहुयाद्घृतैः ॥ ३० ॥ अङ्गग्रहाशेशहेतिचतुरावरणंमनोः ॥ शुक्रस्योपासकोयस्तुतस्यम्लेच्छादयोवशाः ॥ ३१ ॥ भवन्तिमन्त्रमाहात्म्यान्नश्यन्तेचक्ष

---

१ ग्रह २ दिक्पाल ३ स्वाहा ४ वंक्रंमेदेहि शुंशुक्रायनमः इतिएकादशाक्षरोमन्त्रः ५ वंक्रंहृदयायनमः मेशिरसेस्वाहा देहिशिखायैवषट्, शुंकवचायहुम्, शुक्रायनेत्रत्रयायवौषट्, नमःअस्त्रायफट् ६ अंगग्रहदिक्पाल और वज्रादि आयुध ॥

यादयः ॥ मन्त्रान्तरस्तुताराद्यस्स्वाहान्तोयंभवार्णकः ॥ ३२ ॥ बीजंतारो ग्निभार्य्यातुशक्तिर्मुन्यादिपूर्ववत् ॥ अङ्गेन्द्राद्यायुधैःपूजात्रिरावृत्यास्यकीर्त्तिता ॥ ३३ ॥ सुगन्धैःश्वेतकुसुमैर्जुहुयाच्छुक्रवासरे ॥ एकविंशतिवारंयो लभतेसांशुकंमणिम् ॥ ३४ ॥ एतन्मन्त्रोपासकानांप्रभुत्वमुपजायते ॥ ॐ ह्रांह्रींह्रौंसबिन्दुस्सशुक्रायेत्यग्निगेहिनी ॥ ३५ ॥ दशाक्षरःशुक्रमन्त्रोज प्योयंद्वादशायुतम् ॥ उदुम्बरसमिद्भिश्चहोमयेत्सकलापदः ॥ ३६ ॥ भूपैः कृताविनश्यन्तिस्त्रीसौख्यमुपजायते ॥ शंनैश्चरायहृदयंशमाद्यश्चाष्टव र्णकः ॥ ३७ ॥ र्मुन्याद्याब्रह्मगायत्रीशनैश्चरसमाह्वयाः ॥ षड्दीर्घयुक्तबी जेनषडङ्गानिसमाचरेत् ॥ ३८ ॥ वन्देशनैश्चरंवक्रदंष्ट्रंनीलविभूषणम् ॥ वामजानुस्थितंवामकरंदक्षेवरंदधत् ॥ ३९ ॥ जपेदक्षरसाहस्रंतद्दशांशंहुने द्घृतैः ॥ षडङ्गग्रहदिक्पालसायुधैःपरिपूजनम् ॥ ४० ॥ शनैश्चरस्यभक्ता नामापदोनदरिद्रता ॥ ॐ प्रांप्रींप्रौंसइत्युक्त्वाशनैश्चरपदंवदेत् ॥ ४१ ॥ ङेन्तंस्वाहाद्वादशार्णोजपःप्रयुतसम्मितः ॥ हुनेच्छमीसमिद्भिश्चक्लीवाःस र्वेस्यवश्यगाः ॥ ४२ ॥ क्लीवानत्रानयेत्युक्तंसाधकोस्यप्रभावतः ॥ अपरंतु मनुंवक्ष्येराहवेनमउच्चरेत् ॥ ४३ ॥ एंपूर्वकःषडर्णोयंवर्णैरेवाङ्गकल्पनम् ॥ मुन्याद्याब्रह्मगायत्रीराहवःपरिकीर्त्तिताः ॥ ४४ ॥ वन्देराहुंधूम्रवर्णंसर्पकायं कृताञ्जलिम् ॥ विकृतास्यंरक्तनेत्रंधूम्रालङ्कारमन्वहम् ॥ ४५ ॥ जपेद्वर्णसह स्रंतुहोमयेद्द्वाघृतेनच ॥ ग्रहाशाधिपशस्त्रैश्चपूजावृत्तिरुदीरिता ॥ ४६ ॥ राहोरुपासकोभूपःसंग्रामेविजयीभवेत् ॥ ॐसांसींसौंसबिन्दुःसराहवेचाग्नि गेहिनी ॥४७॥ दशाक्षरोराहुमन्त्रोजप्यश्चायंदशायुतम् ॥ दूर्वाभिर्होमयि त्वाचद्विजान्सन्तर्प्यसिद्ध्यति ॥४८॥ यात्रासिद्धिश्चसंग्रामेनियतोविजयो भवेत् ॥ कंकेतवेहृदित्येवंकेतुमन्त्रःषडर्णकः ॥ ४९ ॥ ब्रह्मामुनिर्मतश्छन्दः पंक्तिःकेतुश्चदेवता ॥ कंबीजंकेतुशक्तिश्चबीजेनैवषडङ्गकम् ॥ ५० ॥ वन्दे

---

१ शुंकी जगहपर ॐ और नमः की जगह पर स्वाहा मिलाने से भी ग्यारह अक्षरका मन्त्र होताहै २ ॐ ह्रां ह्रीं ह्रौंसः शुक्रायस्वाहा इति दशाक्षरमन्त्रः ३ शंशनैश्चरायनमः ४ ब्रह्मामुनिर्गायत्रीछन्दः शनैश्चरो देवता अभीष्टसिद्ध्ये शनिप्रीतये विनियोगः ॥

केतुंकृष्णवर्णंकृष्णवस्त्रविभूषितम् ॥ वामोरुन्यस्तसद्धस्तंसाभयेतरपाणि
कम् ॥ ५१ ॥ अङ्गैर्ग्रहैश्चदिक्पालैःपूजावृत्तित्रयात्मिका ॥ अत्रतुग्रहपूजा
यांपूज्यंमध्येनिवेदयेत् ॥ ५२ ॥ तदग्निमंचोत्तरस्यामीशानादितदग्रतः ॥
ॐग्रांग्रींग्रौंसविन्दुःसकेतवेवह्निगेहिनी ॥ ५३ ॥ दशाक्षरःकेतुमन्त्रोजप्योयं
द्वादशायुतम् ॥ होमःकुशैःप्रकर्तव्योघृताक्तैस्तर्पणादिच ॥ ५४ ॥ उपास
कानामेतस्यकेतवोग्रेचलन्तिहि ॥ अथातःसम्प्रवक्ष्यामि गृहमातृसुसाधन
म् ॥ ५५ ॥ ग्रहमातरितुष्टायां किंग्रहैर्दुस्स्थितैरपि ॥ ग्रहमातरिरुष्टायांसुग्रहैः
किंप्रयोजनम् ॥ ५६ ॥ मङ्गलापिङ्गलाधान्या भ्रामरीभद्रिकातथा ॥ उल्का
सिद्धासङ्कटाच विकटागर्भपालिका ॥ ५७ ॥ रुद्रनेत्रान्विताचाष्टौ जन्मर्क्षा
चक्रमाद्दशाः ॥ फलंनामनिरूपंस्यादेकोपचयताद्वयोः ॥ ५८ ॥ पिङ्गला
सूर्यजननी महाधिव्याधिकारिका ॥ तुष्टाचेच्छत्रुवर्गस्य रुष्टाकुर्यात्तुसाध
के ॥ ५९ ॥ क्षेंत्रीजन्तुसमुच्चार्य्य पिङ्गलेवैरिवारणि ॥ प्रसीदफडितिप्रोक्त्वा
णुत्वयोदशवर्णकः ॥ ६० ॥ दीर्घषट्कयुजापूर्वबीजेनैवषडङ्गकम् ॥ पिङ्गवर्णां
पिङ्गकेशीं पिङ्गनेत्रांधनुःशरान् ॥ ६१ ॥ हस्ताभ्यांदधतीपद्मयुगलं तांभजा
म्यहम् ॥ अथपूजाविधिंवक्ष्ये सर्वासामेवतन्त्रतः ॥ ६२ ॥ जपापुष्पाणिश
स्तानि धूपोगुग्गुलसम्भवः ॥ घृतप्रदीपमधुरा नैवेद्यापायसादयः ॥ ६३ ॥
अलङ्कारास्तथारक्तास्तथावस्त्राणिचन्दनम् ॥ स्वर्णालङ्करणैश्चापि सद्रव्यैर्वहु
चम्पकैः ॥ ६४ ॥ तर्पयेत्परमेशानीं तत्तन्मन्त्रैःसहस्रधा ॥ सुवर्णपात्रेनि
क्षिप्तेद्दहस्तायामेमनोरमे ॥ ६५ ॥ कृत्वायन्त्रंयथोक्तन्तु योगिनींतत्रपूजये
त् ॥ तत्तन्मन्त्रवरंजप्त्वा विघ्नशान्त्यैसहस्रशः ॥ ६६ ॥ सप्ताहेनप्रजायेतत्रि
विधोत्पातवारणम् ॥ ततश्चकुण्डंविधिवत्कृत्वाचचतुरस्रकम् ॥ ६७ ॥ अ
थवास्थण्डिलेशुद्धे सुलिप्तेगोमयाम्बुभिः ॥ चतुर्हस्तप्रमाणेनयोजयेत्स्थिरमा
नसः ॥ ६८ ॥ योगिन्यग्निन्तुसंस्थाप्य कृत्वापूर्वोदिताःक्रियाः ॥ अन्यासां
दशवारन्तु विरुद्धायाःसहस्रधा ॥ ६९ ॥ बिल्वपत्रैस्तत्फलैश्च कमलैर्नाग
केशरैः ॥ जुहुयात्पायसान्नेनतथैवकुलवस्तुना ॥ ७० ॥ सहस्रमयुतंवापि

१ तीन २ त्रां त्रीं त्रूं त्रैं त्रौं त्रः । इन अक्षरों से षडंगन्यासकरे ।

लक्षंवाकामनाक्रमात् ॥ अथपूजांप्रवक्ष्यामि मध्येदेवींप्रपूजयेत् ॥ ७१ ॥ इच्छांज्ञानांक्रियाशक्तिं त्रिपुकोणेपुपूजयेत् ॥ मन्मथान्पञ्चतदधः पञ्चकोणेपुपूजयेत् ॥ ७२ ॥ षडङ्गंपूजयेत्पश्चादष्टपत्रेन्ययोगिनीः ॥ तद्बाह्येभूपुरे लोकपालानस्त्राणिपूजयेत् ॥ ७३ ॥ पूजाप्रकारोहोमश्च सर्वासामयमेव हि ॥ विशेषःपुनरत्रास्तिशत्रूच्छेदाभिचारकैः ॥७४॥ खड्गचर्मधरामुग्रांध्यायेत्तद्भुजधारिणीम् ॥ गरुडासनमासीनां वैरिनिग्रहकारिणीम् ॥ ७५ ॥ लक्षमेकंप्रजप्यादौ जपेल्लक्षंहितर्प्पयेत् ॥ सर्वशत्रुविनाशःस्याद्दुःखंनाप्नोतिकुत्रचित् ॥ ७६ ॥ अथातःसम्प्रवक्ष्यामि चन्द्रमातुश्चसाधनम् ॥ मायाद्योवह्निजायान्तो मङ्गलेमङ्गलालये ॥ ७७॥ एकादशाक्षरोमन्त्रो मङ्गलायाःप्रकीर्तितः ॥ कृत्वाद्येनषडङ्गानि दीर्घषट्कयुतातथा ॥ ७८ ॥ ध्यायेदेनांत्रिनयना मुद्यदादित्यसन्निभाम् ॥ दरस्मेरमुखाम्भोजांसिन्दूरसुन्दराधराम् ॥ ७९ ॥ पद्मद्वयेधनुर्बाणान्दधतींभुजपल्लवैः ॥ सुगुञ्जन्मञ्जुमञ्जीरां काञ्चीगुणविराजिताम् ॥ ८० ॥ एवंध्यात्वामहेशानीं पूर्ववत्परिपूजयेत् ॥ ततोलक्षंमनुं जप्त्वा तारमायापुरःसरम् ॥ ८१ ॥ योगिनीक्षेत्रवटुकगणाधिपबलिंहरेत् ॥ सर्वासामेवपूजान्ते मङ्गलैवंप्रसीदति ॥ ८२ ॥ योगिन्यास्तुप्रसादार्थं वर्णलक्षंमनुंजपेत् ॥ दुर्योगिन्यनुकूलार्थं जपेत्तत्सङ्ख्यकायुतम् ॥८३॥ अदृष्टप्रतिबद्धस्तु शुभायाश्चफलस्यच ॥ प्राप्तयेप्रजपेत्तावत्सहस्रन्तुमनुंसुधीः ॥८४॥ प्रेकर्तव्योवर्णशतं यावत्तुष्टास्तियोगिनी ॥ तुष्टयावर्णशतकंरोगिणांचाभिमन्त्रयेत् ॥ ८५ ॥ वर्णतुल्येनमन्त्रेण यस्याःसेवापरोभवेत् ॥ तस्याःपीडानिवृत्तिः स्याद्वर्णाभ्यन्तर्गतैर्जपैः ॥ ८६ ॥ एवंविधिर्नवानांतु विज्ञेयःसुरसत्तमाः ॥ योगिनीतुल्यफलदावामेमार्गेचदक्षिणे ॥ ८७ ॥ अथातःसम्प्रवक्ष्यामि भ्रामरींभीममातरम् ॥ क्ष्मींभ्रामरीपदंप्रोक्त्वा जपतांमेअधीश्वरि ॥८८॥ भ्रामयक्लींपदद्दशार्णो मन्त्रोस्याःपरिकीर्तितः॥पिङ्गलावत्सर्वमस्याः सिद्धेयं शर्करादश ॥ ८९ ॥ मन्त्रयित्वातथामार्गे दशदिक्षुचसन्त्यजेत् ॥ प्रातस्ततोव्रजेन्मार्गं मार्गस्थास्सर्वएवहि ॥ ९० ॥ सर्वेमोहंसमायान्ति व्याघ्राःसर्प्पाश्च

---

१ ह्रीं मङ्गलेमङ्गलालये स्वाहा २ जपःप्रकर्तव्य जप इति शेषः ॥

तस्कराः ॥ शुल्किनोदुष्टभूपाश्च नित्यमेवंसमाचरेत् ॥ ९१ ॥ उपानत्कतले यस्य लिखित्वानामचव्रजेत् ॥ योजनैकंजपन्मन्त्रंसभ्रमेचवसुन्धराम् ॥९२॥ अथातःसम्प्रवक्ष्यामि भद्रिकांबुधमातरम् ॥ ब्लंबीजं तोयभूयोगाज्जातमादौ समुच्चरेत् ॥ ९३ ॥ भद्रिकेमेममभद्रं देहीत्येवपदंवदेत् ॥ पुनश्चपरपद्राणि नाशयद्वितयंततः ॥ ९४ ॥ स्वाहान्तोजिनवर्णोयं भद्रिकायामनुर्मतः ॥ षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ॥ ९५ ॥ मङ्गलावच्छुभानां स्याद्धया नन्तुफलदायिनाम् ॥ पिङ्गलावत्समुद्दिष्टं जपाद्यंप्रोक्तवर्त्मना ॥ ९६ ॥ अथातःसम्प्रवक्ष्यामि धान्याख्यांगुरुमातरम् ॥ श्रींधनदेसमुच्चार्य्य धान्येस्वाहा ष्टवर्णकः ॥ ९७ ॥ षड्दीर्घाढ्याद्यबीजेन षडङ्गविधिरीरितः ॥ नास्तिधान्या समाकाचिदिहलोके धनप्रदा ॥ ९८ ॥ पुरश्चर्य्यात्रयंकृत्वा प्राग्जन्मार्ज्जि तपातकम् ॥ दहेत्तुधान्याददतेधन्यत्वसाधकायच ॥ ९९ ॥ बृहस्पतीश्वरात्प श्चात्काश्यांधान्यांविलोकयेत् ॥ पुरश्चर्य्यातत्रकृत्वायशोधन्यःप्रजायते ॥ २०० ॥ अथातःसम्प्रवक्ष्यामि सिद्धांशुक्रस्यमातरम् ॥ ह्रींसिद्धिदेसर्वंममसमु क्त्वासाधयद्वयम् ॥ १ ॥ हृदन्तोयंषोडशार्णःसिद्धःसिद्धमनुर्मतः ॥ बीजेनैव षडङ्गानि जपाद्यंपूर्ववच्चरेत् ॥ २ ॥ नास्तिसिद्धोपासकानां कर्म्मासिद्धिस्तु कुत्रचित् ॥ उपासकायसिद्धाय येनाम्नायेनजायते ॥ ३ ॥ तेनाम्नायेनदे वानां पाकेस्यात्सर्वमेवहि ॥ षट्कर्मसिद्धतेतस्य मनोराराधनंविना ॥ ४ ॥ अथातःसम्प्रवक्ष्यामि चोल्कांमन्दस्यमातरम् ॥ ऐंह्रींउल्कापदंपश्चाद्देव्यैह च्चाष्टवर्णकः ॥ ५ ॥ मन्त्रःप्रोक्तःप्रजप्तोयं धनारोग्यप्रदोमतः ॥ अथातःसम्प्रव क्ष्यामि सङ्कटांराहुमातरम् ॥ ६ ॥ ह्रींसङ्कटेचरोगंमे परमंनाशयद्वयम् ॥ षो डशार्णस्तुमन्त्रोयं सर्वदुःखापहोमतः ॥ ७ ॥ कारागृहेजपेल्लक्षं बन्धमोक्षःप्र जायते ॥ वीरेश्वराद्दुदक्काश्यां सङ्कटायत्रसंस्थिता ॥ ८ ॥ तत्रषोडशलक्षा

---

१ ब्लां, ब्लीं, ब्लूं, ब्लैं, ब्लौं, ब्लः, इन छः अक्षरोंसे षडंगन्यास करे जैसे, ब्लां हृदयायनमःब्लीं शिरसेस्वाहा इत्यादि २ श्रींधनदे धान्येस्वाहा इति मन्त्रः ३ ह्रींसिद्धिदेसर्वं ममसाधयसाधयनमः ४ ऐं ह्रीं उल्कादेव्यैनमःइति अष्टाक्षरमन्त्रः ऐं और ह्रीं दोनों बीजों से षडंगकल्पना होती है जैसे ऐं ह्रीं हृदयायनमः ऐंह्रीं शिरसे स्वाहा ऐं ह्रीं शिखायै वषट् ऐं ह्रीं कवचाय हुम् ऐं ह्रीं नेत्रत्रयायवौषट् ऐं ह्रीं अस्त्रायफट् ॥

णि जप्त्वाहोमस्तुदूर्वया ॥ तस्यसिद्धोभवेन्मन्त्रस्तन्मुखाद्यदिनिस्सरेत् ॥ ६ ॥ अमुकस्यामुकंकष्टं गतंतद्गतमेवहि ॥ अथातःसम्प्रवक्ष्यामि विकटांकेतु मातरम् ॥ १० ॥ तारोनमोभगवतिविकटेवीरपालिके ॥ प्रसीदयुगलंमन्त्र प्रकृत्यर्णःप्रकीर्त्तितः ॥ ११ ॥ काश्यांवीरेश्वरासन्ना पश्चिमेविकटास्थिता ॥ तत्रमन्त्रमिमंजप्त्वा ग्रहतप्ताश्चबालकाः ॥ १२ ॥ उदरंचापिबन्ध्यायाः प्रजावत्यास्तथाशिरः ॥ पित्रादित्यक्तबालाश्च तथामातृविवर्ज्जिताः ॥ १३ ॥ साधकस्यकरस्पृष्टा नीरोगाश्चिरजीविनः ॥ २१४ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेश्रीशिवप्रणीतेनवग्रहप्रकाशोद्वाविंशः ॥ २२ ॥

---

मुनयऊचुः ॥ देवदेवमहादेवभक्तानुग्रहकारक ॥ ब्राह्म्याद्यष्टौभास्करस्य तटेतिष्ठन्तिशक्तयः ॥ १ ॥ रणेमृतानांयोगेनमृतानांसहगामिनाम् ॥ स्वर्णंयाश्चप्रयच्छन्तितन्मनून्ब्रूहिशङ्कर ॥ २ ॥ श्रीशिवउवाच ॥ ब्रह्मशक्तिस्तुशक्तीनांनायिकापरिकीर्त्तिता ॥ योगिनांमुक्तिदात्रीसाभोगिनांभोगदामता ॥ ३ ॥ ब्रामित्येकाक्षरंबीजंमुनिर्वाचस्पतिर्मतः ॥ गायत्रीछन्दउद्दिष्टंवःशक्तिःकीलकंचरः ॥ ४ ॥ ध्यायेद्ब्राह्मींपद्मसंस्थांहंसारूढांचतुर्मुखाम् ॥ अक्षमालावराभीतिकमण्डलुकरारुणाम् ॥ ५ ॥ [2]बीजेनैवषडङ्गानिमध्येदेवींप्रपूजयेत् ॥ षट्कोणेचषडङ्गानिमध्येदेवींप्रपूजयेत् ॥ ६ ॥ षट्कोणेचषडङ्गानिशक्तयोर्याःकलादले ॥ चिन्[3]तामणिज्ञाननीलघटकिन्यन्तरिक्षतः ॥ ७ ॥ महत्पूर्वचसप्तैतास्सरस्वत्यःप्रकीर्त्तिताः ॥ लोकेश्वरीशिवान्तेचत्रिपुराद्वितयंभवेत् ॥ ८ ॥ वागीश्वरीरुद्रविष्णुमुखान्तेचाक्षयामता ॥ पद्मावत्येवरूढाचषोडशीकीर्त्तिनायिकाः ॥ ६ ॥ तत्तन्मन्त्रैःपूजनीयाबाह्येदिक्पाःसहेतयः ॥ लक्षमेकं जपेन्मन्त्रंपलाशकुसुमैर्हुनेत् ॥ १० ॥ तत्पुष्पयुक्तसलिलैस्तर्प्पयेन्मार्ज्जयेत्कुशैः ॥ ऐश्वर्य्यार्थंतुसिध्यर्थंगायत्रीप्रथमांघ्रियुक् ॥ ११ ॥ संरक्षणार्थंपु

---

१ ॐ नमोभगवति विकटेवीरपालिके प्रसीदप्रसीद २ ब्रांहृदयायनमः, ब्रांशिरसेस्वाहा, ब्रांशिखायैवषट्, ब्रांकवचायहुम्, ब्रांनेत्रत्रयायवौषट्, ब्रांअस्त्रायफट्, ३ चिन्तामणिसरस्वती, ज्ञानसरस्वती, नीलसरस्वती, घटसरस्वती, किनिसरस्वती, अन्तरिक्षसरस्वती ॥

ष्ट्यर्थंद्वितीयचरणान्वितम् ॥ मारणोच्चाटनाद्यर्थंतृतीयेनसमन्वितम् ॥ १२ ॥ लक्षमात्रंजपेन्मन्त्रंकार्य्यसिद्धिःप्रजायते ॥ अथादौसम्प्रवक्ष्यामिचिन्तामणि सरस्वतीम् ॥ १३ ॥ तारंमायांचहसरानैकाराद्यान्सबिन्दुकान् ॥ पुनर्मा यांचतारंचवदेन्ङेन्तांसरस्वतीम् ॥ १४ ॥ हृदयान्तोभवार्णोयंमन्त्रस्तुपरि कीर्त्तितः ॥ त्रिष्टुप्छन्दोमुनिःकंठश्चिन्तामणिसरस्वती ॥ १५ ॥ देवताद्यं चबीजंस्याद्ध्रींशक्तिस्त्वङ्गकल्पनम् ॥ स्वरसम्पुटितैःकादिवर्गैःस्यादंगकल्प नम् ॥ १६ ॥ पुनश्चातारहृल्लेखापुटितंदीर्घषट्कयुक् ॥ स्वकूटंतेनचांगानि मन्त्रार्णान्विन्यसेत्ततो ॥ १७ ॥ मूर्द्धभ्रूमध्यकर्णाक्षिनासिकास्यगुदांघ्रिषु ॥ हंसारूढांमौक्तिकाभांमन्दहासेन्दुशेखराम् ॥ १८ ॥ वीणामृतघटाक्षस्रग्दीप्तह स्ताम्बुजस्थिताम् ॥ ध्यात्वैवंमनसापूज्याकुर्य्याद्बाह्यार्चनंततः ॥ १९ ॥ वा ग्देव्यौपार्श्वयोःपूज्येसंस्कृतप्राकृताह्वये ॥ ततःषडंगावरणंततश्चाष्टदलेर्चये त् ॥ २० ॥ प्रज्ञांमेधांश्रुतिंचैवस्मृतिशक्तिंततोर्चयेत् ॥ वागीश्वरींवसुमतींस्व स्तिब्राह्मयादिकाअपि ॥ २१ ॥ दिक्पालैश्चचतुर्थस्याज्जपेद्द्वादशलक्षकम् ॥ घृताक्तैरविसाहस्रंहुनेद्व्रीह्याद्यचम्पकैः ॥ २२ ॥ एवंसिद्धमनुर्मन्त्रीकाम्य कर्माणिसाधयेत् ॥ सूर्य्यमण्डलगांदेवींध्यायेत्प्रतिदिनंयजेत् ॥ २३ ॥ सह स्रत्रितयंयस्तुत्रिमासात्स्यान्महाकविः ॥ अथातःसम्प्रवक्ष्यामिज्ञानपूर्वांसर स्वतीम् ॥ २४ ॥ ऐकारयुक्ताहसराब्रिन्दन्ताःपूर्वबीजकम् ॥ हसक्षलरइत्येवंपं चईकारसंयुताः ॥ २५ ॥ विसर्गान्तास्तृतीयंस्याद्बीजंज्ञानप्रदोमनुः ॥ ऋषिस्तुदक्षिणामूर्त्तिर्देवीज्ञानसरस्वती ॥ २६ ॥ अन्तबीजंभवेच्छक्तिराद्यबी जन्तुकीलकम् ॥ आद्यबीजेनचांगानिकृत्वाबीजानिविन्यसेत् ॥ २७ ॥ दक्षिणेचकरेवामेद्धयेबीजत्रयंपुनः ॥ पादादिनाभिपर्य्यन्तंनाभ्यादिहृदया

---

१ ॐ ह्रीं ह्स्रैं ह्रीं ॐ सरस्वत्यैनमः इति एकादशाक्षरमन्त्रः २ अं कं खं गं घं ङं आंहृद यायनमः, इं चं छं जं झं ञं ईं शिरसेस्वाहा इसरीतिसे न्यास होताहै ३ फिर ॐ और ह्रीं बीज से संपुटित करके, स्ह्रां, स्ह्रीं, स्ह्रूं, स्ह्रैं, स्ह्रौं, स्ह्रः, इन कूटोंसे षडंगन्यासकरे जैसे ॐ ह्रीं स्ह्रां ॐ ह्रीं हृदयायनमः इत्यादि ४ ॐ मूर्ध्नि ह्रीं भ्रूमध्ये, स्हैं दक्षकर्णे, ह्रींवामकर्णे, ॐ दक्षनेत्रे स वामनेत्रे, रनासिकायाम्, स्वमुखे, त्यैंगुदे, नदक्षपादे, मःवामपादे, इति अक्षर न्यासः ।

न्तकम् ॥ २८ ॥ हृदयादिचशीर्षान्तंक्रमाद्बीजत्रयंन्यसेत् ॥ ततोध्याये त्सूर्य्यनिभांत्र्यक्षांचन्द्रकलाधराम् ॥ २६ ॥ करैर्दधेजपवटींपुस्तकंवरदा भये ॥ पीनोत्तुंगस्तनींपूर्णचन्द्रास्यामरुणाम्बराम् ॥ ३० ॥ एवंध्यात्वार्च येत्तेनततोबाह्येसमर्चयेत् ॥ नवयोनित्रिकोणेषुवामाज्येष्ठादिकायजेत् ॥ ३१ ॥ श्राद्यमध्ययोन्योरन्तस्तुयजेच्छक्तिचतुष्टयम् ॥ आद्यावह्नीविपर्ग्नी स्यात्ततोद्दूरतरीमता ॥ ३२ ॥ सर्वादौतेनतावाह्येपञ्चकोणंसमाचरेत् ॥ आ ग्नऐशाननैर्ऋत्यवायव्येपश्चिमेक्रमात् ॥ ३३ ॥ यजेत्कोणेपञ्चबाणान् शोषणंमोहनन्तथा ॥ सन्दीप्तसम्मोहनकौतथाचोन्मादनोन्तिमः ॥ ३४ ॥ ततोङ्गावरणंपूज्यंपूर्वाशाद्यष्टयोनिषु ॥ क्रमेणशक्तयःपूज्याःशुभगाचतथा भगा ॥ ३५ ॥ भगपूर्वासर्पिणीचततश्चभगमालिनी ॥ अनङ्गानङ्गकुसुमा ततश्चानंगमेखला ॥ ३६ ॥ अनङ्गमदनाचेतिध्यानमासांनिरूप्यते ॥ अक्ष स्रक्पुस्तककरारक्ताभाःसर्वशक्तयः॥३७॥ दिव्याम्बराःसर्वभूषाःसर्वाभीष्टप्रदा यिकाः ॥ ब्राह्मयाद्याश्चततोभ्यर्चास्तदग्रेपूजयेत्पुनः ॥ ३८ ॥ भैरवानसि ताङ्गाद्यान्शक्रादीनायुधान्यपि ॥ यजेद्द्वादशलक्षंस्याज्जपस्त्रिमधुरान्वितैः ॥ ३९ ॥ हुनेत्पलाशपुष्पैश्चदशांशंवाशतांशकम् ॥ एवंसिद्धमनुर्मन्त्रीप्रयो गानाचरेदथ ॥ ४० ॥ पलाशपुष्पैरयुतसौभाग्यायचहोमयेत् ॥ लक्ष्म्यै तथैवजुहुयान्महासारस्वतायच ॥ ४१ ॥ मधुरत्रितयोपेतबिल्वैश्चैवायुतं हुनेत् ॥ भवन्तिसकलालोकावश्यानास्त्यत्रसंशयः ॥ ४२ ॥ एवंकुर्य्यात्स मृद्ध्यर्थबीजैकैकस्यकथ्यते ॥ पृथक्प्रयोगोध्यानंचपञ्चाशद्वर्णशोभिताम् ॥ ४३ ॥ रक्तांसुरतरोर्मूलेविलसन्मणिपीठगाम् ॥ शृणिपाशकपालेषुमातुलुङ्ग धनुःकराम् ॥ ४४ ॥ रत्नैरलंकृतांकाममदघूर्णितलोचनाम् ॥ हेलाविलास सम्भिन्नांनवयौवनसुन्दरीम् ॥ ४५ ॥ देवींध्यात्वाजपेल्लक्षंयोबीजंमध्यमं वशी ॥ त्रैलोक्यंक्षोभयेदाशुपुरावत्सिद्धिभागसौ ॥ ४६ ॥ अक्षमालासु धाकुम्भमुद्रापुस्तकधारिणीम् ॥ नवकुन्देन्दुसङ्काशांराजमौक्तिकभूषणाम् ॥ ४७ ॥ शक्तिसंविन्मयींध्यात्वाबीजंसारस्वतंवशी ॥ योजपेत्सायएतस्यक वितासुविसम्मता ॥ ४८ ॥ अथातोवाममार्गस्थांवक्ष्येनीलसरस्वतीम् ॥

तारेलक्ष्मीश्चहृल्लेखाहसाओङ्कारसंयुतौ ॥ ४९ ॥ हुंफट्नीलसरस्वत्यैस्वाहान्तोमनुवर्णकः ॥ ऋष्याद्याब्रह्मगायत्रीतथानीलसरस्वती ॥ ५० ॥ नेत्रैचन्द्रेन्दुनेत्राङ्गनेत्रार्णैरङ्गकल्पनम् ॥ मन्त्रोत्थितैरथोध्यायेद्देवींसर्वेष्टसिद्धिदाम् ॥ ५१ ॥ घण्टांशिरःशूलमसिंकराब्जैर्दधतींभजे ॥ पोथयन्तींपादतलेपशुंचन्द्रकलाधराम् ॥ ५२ ॥ जपपूजादिकंसर्वमस्यास्तारावदाचरेत् ॥ विशेषाज्जयदावादेविद्येयंसाधितानृभिः ॥ ५३ ॥ अथान्यत्सम्प्रवक्ष्यामितारंचभुवनेश्वरीम् ॥ श्रीमदङ्कजटेनीलसरस्वतिपदंवदेत् ॥ ५४ ॥ महोग्रतारेदेवीतिखेखःसर्वपदंवदेत् ॥ भूतपिशाचराक्षसान्ग्रहयुग्मंममेतिच ॥ ५५ ॥ जाड्यंछेदययुग्मंचश्रींह्रींफट्वह्निगेहिनी ॥ द्विपञ्चाशल्लिपिश्चायंध्यानपूजादिपूर्ववत् ॥ ५६ ॥ अथातःसम्प्रवक्ष्यामित्रिवर्णंमन्त्रनायकम् ॥ ह्रींश्रींहुमितिमुन्याद्यंयथात्रिपुरभैरवी ॥ ५७ ॥ अथान्यंसम्प्रवक्ष्यामिऐंब्लूंवंवदयुगंतथा ॥ त्रीहुंफट्चनवार्णोयंध्यानपूजादिपूर्ववत् ॥ ५८ ॥ अथातःसम्प्रवक्ष्यामिवामांघटसरस्वतीम् ॥ हैंसखफरवर्णाश्चएंकारेणसमन्विताः ॥ ५९ ॥ तस्याःस्यादादिमंकूटंहसराश्चौंसमन्विताः ॥ विसर्गान्ताद्वितीयंस्याद्धसौफोरेफएवच ॥ ६० ॥ ईकारेणचसंयुक्तास्तृतीयंकूटमुच्यते ॥ वाचंमायांरमांद्रांह्रींकामंब्लूसस्तथैवच ॥ ६१ ॥ ग्रींबीजंचसमुच्चार्य्यततोघटसरस्वति ॥ घटेवदद्वयम्पश्चात्तुरयुग्मंवदेत्ततः ॥ ६२ ॥ रुद्राज्ञयाममाभीतिलाषंकुरुयुगंतथा ॥ स्वाहान्तोग्निकृतार्णोयंप्राग्वत्पूजादिकंभवेत् ॥ ६३ ॥ अथातःसम्प्रवक्ष्यामिविद्यांकिनिसरस्वतीम् ॥ वामाचारेणफलदावाग्बीजंहैंसमुच्चरेत् ॥ ६४ ॥ ह्रींमुच्चार्य्यकिनिद्वन्द्वंविच्चेमन्त्रोनवाक्षरः ॥ चामुण्डामन्त्रवत्सर्वंजपन्यासादिकंभवेत् ॥ ६५ ॥ अथा

---

१ ओं श्रीं ह्रीं स्हौंहुं फट् नीलसरस्वत्यैस्वाहा इति चतुर्दशाक्षरोमन्त्रः २ दो, एक, एक, दो, छः, और दो अक्षरों से षडंगन्यास होता है जैसे, ओं श्रीं हृदयायनमः ह्रीं शिरसे स्वाहा इत्यादि ३ ओं ह्रीं श्रीमदङ्कजटेनीलसरस्वाति महोग्रतारेदेविखेखः सर्व भूतपिशाच राक्षसान् ग्रहग्रसममजाड्यं छेदयछेदय श्रीं ह्रीं फट्स्वाहा इति द्विपञ्चाशदक्षरोमन्त्रः ४ ब्लूंवं वदवद श्रीहुंफट् इति नवाक्षरो मन्त्रः ५ ह्स्ख्फ्रें ह्सौं स्फ्रौं ऐं ह्रीं श्रीं द्रां ह्रीं क्लीं ब्लूंसः घटसरस्वति घटे वदवद तुर तुर रुद्राज्ञया ममाभिलाषं कुरु कुरु स्वाहा यह तेंतालीस, अक्षरका मन्त्रहै ॥

तःसम्प्रवक्ष्यामिह्यन्तरिक्षसरस्वतीम् ॥ वाचंमायामन्तरिक्षसरस्वत्यग्निगेहिनी ॥ ६६ ॥ द्वादशार्णोमनुर्जप्तोवर्णलक्षमितोयदा ॥ शृणुयादीप्सितांवार्तांदूरस्थामपिसाधकः ॥ ६७ ॥ महासरस्वतींवक्ष्येसर्वकामफलप्रदाम् ॥ [1]ऐंह्रींश्रींक्लींसमुच्चार्य्यसौंक्लींह्रींऐंपुनर्वदेत् ॥ ६८ ॥ ब्लूंतुस्त्रींनीलतारेचसरस्वतिपदंततः ॥ द्रांह्रींक्लींब्लूंसउच्चार्य्यऐंह्रींश्रींक्लींपुनर्वदेत् ॥ ६९ ॥ सौःसौःह्रीं वह्निजायान्तोमन्त्रोद्वात्रिंशदर्णकः ॥ ब्रह्मानुष्टुप्सरस्वत्योमुन्याद्याःपरिकीर्तिताः ॥ ७० ॥ पञ्चपञ्चाष्टपञ्चेषुयुगार्णैरङ्गकल्पनम् ॥ नवासनांसर्प्पभूषांक र्त्रींचापिकपालकम् ॥ ७१ ॥ चषकंचत्रिशूलंचदधतींचचतुष्करैः ॥ मुण्डमालाधरांत्र्यक्षांभजेनीलसरस्वतीम् ॥ ७२ ॥ चतुर्लक्षंजपेद्विद्यांकिंशुकैर्मधुरान्वितैः ॥ दशांशंजुहुयात्पूजांपीठेकुर्य्यात्तदुच्यते ॥ ७३ ॥ आदौत्रिकोणंषट्कोणमष्टषोडशपत्रके ॥ द्वात्रिंशत्पत्रमन्तेस्याच्चतुःषष्टिदलंतथा ॥७४॥ त्रिरेखाढ्यंधरागेहंचतुरस्रमतःपरम् ॥ एवंयन्त्रंसमालिख्यबाह्यतःपूजनंचरेत् ॥ ७५ ॥ चतुरस्रस्याग्निकोणेविघ्नेशंपरिपूजयेत् ॥ वायुकोणेक्षेत्रपालमैशानेभैरवंतथा ॥ ७६ ॥ नैर्ऋतेयोगिनीस्सर्वावामभागेगुरुंयजेत् ॥ भूगृहस्याद्यरेखायामणिमालघिमातथा ॥ ७७ ॥ महिमाचेशितापूज्यावशिताकामरूपिणी ॥ गरिमाप्राप्तिरित्येताःपूज्याःपूर्वादिदिक्क्रमात् ॥ ७८ ॥ धरागृहस्य रेखायांद्वितीयायांतुभैरवाः ॥ भूमिगेहेतृतीयायां रेखायांमातरःपुनः ॥७९॥ इत्थमावृतिंचेष्ट्वायोनिमुद्रांप्रदर्शयेत् ॥ चतुःषष्टिदलेपद्मेशक्तिरर्च्यचतावतीः ॥ ८० ॥ कुलेशीकुलनन्दाचवागीशीभैरवीतथा ॥ उमाश्रीशान्तयश्चचण्डाधूम्राकालीकरालिनी ॥ ८१ ॥ महालक्ष्मीश्चकङ्कालीरुद्रकालीसरस्व

---

१ ऐंबीजम् २ ऐं ह्रीं श्रीं क्लीं सौं क्लीं ह्रीं ऐं ब्लूं स्त्रीं नीलतारे सरस्वति द्रां ह्रीं क्लीं ब्लूं सः ऐं ह्रीं श्रीं क्लीं सौः सौः ह्रीं स्वाहा ३ पांच, पांच, आठ, पांच, पांच, और चार अक्षरों से षडंगन्यासहोता है जैसे ऐं ह्रीं श्रीं क्लीं सौं हृदयायनमः इत्यादि इसी रीतिसे अंगन्यास करलेना ४ तीनरेखाओं से युक्तहोवे ५ भूपुर ६ चतुष्कोण ७ असितांगो रुरुश्चण्डः क्रोधोन्मत्तकपालिनःभीषणश्चाथसंहारएतेऽष्टौभैरवामताः ८ ब्राह्मी माहेश्वरी, कौमारी, वैष्णवी, वाराही, इन्द्राणी, चामुण्डा, महालक्ष्मी, इति अष्टमातरः ॥

ती ॥ वाग्वादिनीचनकुलीभद्रकालीशशिप्रभा ॥ ८२ ॥ प्रत्यङ्गिरासिद्धल क्ष्मीर्ह्यमृतेशीचचण्डिका ॥ खेचरीभूचरीसिद्धाकामाक्षाहिंगुलाबला ॥८३॥ जयाचविजयाचाप्यजितानित्याऽपराजिता ॥ विलासिनीतथाघोराचित्रामु ग्धाधनेश्वरी ॥ ८४ ॥ सोमेश्वरीमहाचण्डाविद्याहंसीविनायिका ॥ वेदग र्भातथाभीमाउग्रावैद्याचसद्गतिः ॥ ८५ ॥ उग्रेश्वरीचन्द्रगर्भाज्योत्स्नासत्या यशोवती ॥ कुलिकामालिनीकाम्याज्ञानवत्यथडाकिनी ॥ ८६ ॥ राकिनी लाकिनीचाथकाकिनीशाकिनीह्यपि ॥ हाकिनीचचतुःषष्टिशक्तयःसिद्धिदा यिकाः ॥ ८७ ॥ दर्शयेत्खेचरींमुद्रांद्वितीयावरणेर्चिते ॥ द्वात्रिंशत्पत्रमध्ये तुपूज्याएतास्तुशक्तयः ॥ ८८ ॥ किरातायोगिनीवीरावेतालायक्षिणीहरा ॥ ऊर्ध्वकेशीचमातङ्गीमोहिनीत्र्यंशवर्द्धिनी ॥ ८९ ॥ मालिनीललितादूतीम नोज्ञापद्मिनीधरा ॥ शर्वरीछत्रहस्ताचरक्तनेत्राविचर्चिका ॥ ९० ॥ मातृका दूरदर्शाचक्षेत्रेशीरङ्गिणीनटी ॥ शान्तिर्दित्यावज्रहस्ताधूम्राश्वेतासुमङ्गला ॥ ९१ ॥ इष्टातृतीयावरणेबीजमुद्रांप्रदर्शयेत् ॥ ततःषोडशपत्रेषुपूज्याःषोडश शक्तयः ॥ ९२ ॥ मुग्धाश्रीःकुरुकुल्लाचत्रिपुरातुतलक्रिया ॥ रतिःप्रीतिस्तथा बालासुमुखीश्यामलाविला ॥ ९३ ॥ पिशाचीचविदारीचशीतलावज्रयो गिनी ॥ सर्वेश्वरीतिसम्पूज्यसृणिमुद्रांप्रदर्शयेत् ॥ ९४ ॥ अष्टपत्रेस्वस्वमन्त्रै र्यजेदष्टसरस्वतीः ॥ नमःपद्मासनेपद्मरूपेवाग्भुवनेश्वरी ॥ ९५ ॥ कामोवद द्वयंवाग्वादिनिस्वाहाध्रुवादिकाः ॥ वागीश्वर्य्यामनुःप्रोक्तश्चतुर्विंशतिवर्ण कः ॥ ९६ ॥ महाकविर्वर्णलक्षजपात्प्राच्यांचपूजनम् ॥ हंसकलहरायुक्ताई कारेणवदद्वयम् ॥ ९७ ॥ चित्रेश्वरीतिवाग्बीजंस्वाहान्तोद्वादशाक्षरः ॥ चि त्रेश्वर्य्यामनुर्लक्षंजपाच्चित्रकलाप्रदः ॥ ९८ ॥ स्त्रीवश्यकृत्तथानेनवह्निकोणे

---

१ कामिनी इति क्वचित्पाठः २ परिवर्त्य करौ स्पष्टावर्धचन्द्राकृती प्रिये ॥ तर्जन्यंगुष्ठयुगलं युगपत्कारयेत्ततः ॥ १ ॥ अधःकनिष्ठावष्टब्धेमध्यमेविनियोजयेत् ॥ तथैवकुटिलेयोज्येसर्वा धस्तादनामिके ॥ २ ॥ बीजमुद्रेयमुदितासर्वसिद्धिप्रदायिनी ३ अंकुशमुद्रा ४ ॐनमः पद्मास ने पद्मरूपे ऐं ह्रीं क्लीं वदवदवाग्वादिनिस्वाहा इति मन्त्रः ५ ॐकारआदि में जोड़ने से चौबीस अक्षर होते हैं ६ हसकल, इन चार अक्षरों को ह्रीं बीजमें संयुक्त करके फिर वदवद और चित्रेश्वरि ऐंस्वाहा इन पदोंके जोड़नेसे बारह अक्षरका मन्त्रहोता है ॥

प्रपूजयेत् ॥ वाग्बीजंकुलजेवाक्चसरस्वत्यनलाङ्गना ॥ ९९ ॥ एकादशार्णे मन्त्रेणकुलजांदक्षिणेर्चयेत् ॥ वाङ्मायाश्रींवदद्द्वन्द्वंकीर्त्तीश्वर्य्यनलप्रिया ॥ १००॥ त्रयोदशार्णेनयजेन्नैर्ऋत्येकीर्त्तिनायिकाम्॥ पश्चाद्यजेच्चपूर्वोक्तामैन्त रिक्षसरस्वतीम् ॥ १ ॥ वायव्यकोणेपूर्वोक्तांयजेद्घटसरस्वतीम् ॥ उदङ्नीलस रस्वत्यानवार्णेनचतांयजेत् ॥ २ ॥ ईशानेपूजयेत्पूर्वप्रोक्तांकिनिसरस्वतीम् ॥ पञ्चम्यावृत्तिमाराध्यक्षोभमुद्रांप्रदर्शयेत् ॥ ३ ॥ तस्यवाह्येतुषट्कोणेडाकिनीरा किनीतथा ॥ लाकिनीकाकिनीचैवशाकिनीहाकिनीतथा ॥ ४ ॥ दर्शयेद्द्रा विणींमुद्रांषष्ठावरणपूजने ॥ त्रिकोणेतद्बहिःपूज्यापराबालाचभैरवी ॥ ५ ॥ दर्शयेत्कर्षिणींमुद्रांपूजाचेत्थंप्रकीर्तिता ॥ गणेशायक्षेत्रपाययोगिन्यैभैरवाय च ॥ तारायैचापिवितरेद्बलिंनित्यंचतुष्पथे ॥ ६ ॥ परमान्नंचशाकाज्यपाय सापूपकादिकान् ॥ वलिद्रव्यंसमाख्यातंयेनेष्टंसाप्रयच्छति ॥ ७ ॥ अस्याध्या नंत्रिधावच्मिसत्त्वादिगुणभेदतः ॥ श्वेताम्बराढ्यांहंसस्थांमुक्ताभरणभूषिता म् ॥ ८ ॥ चतुर्वक्त्रामष्टभुजैर्दधानांमुद्रिकांभजे ॥ वराभयेपाशशक्तीअक्षस्रक् पुष्पमालिके ॥ ९ ॥ शब्दपाथोनिधौध्यायेत्सृष्टिध्यानमुदीरितम् ॥ अथ चान्यत्प्रवक्ष्यामिध्यानंतदवधारय ॥ १० ॥ रक्ताम्बरारत्नसिंहासनस्थांहेम भूषिताम् ॥ एकवक्त्रांवेदसंख्यैर्भुजैःसम्बिभ्रतींक्रमात् ॥ ११ ॥ अक्षमाला म्पानपात्रमभयंवरमुत्तमम् ॥ श्वेतद्वीपस्थितांध्यायेत्स्थितिध्यानमितीरित म् ॥ १२ ॥ कृष्णाम्बराढ्यांनौसंस्थामस्थ्याभरणभूषिताम् ॥ नववक्त्राम्भुजै रष्टादशभिर्दधतींवरम् ॥ १३ ॥ अभयम्परशुंदर्वीखड्गंपाशुपतंहलम् ॥ भि न्दिपालञ्चमुशलंकर्त्रींशक्तिंत्रिशीर्षकम् ॥ १४ ॥ संहारास्त्रंवज्रपाशौखट्वाङ्गं गदयासह ॥ रक्ताम्भोधौस्थितान्ध्यायेत्संहारध्यानमीरितम् ॥ १५ ॥ कर्म्म सुक्रूरसौम्येषुध्यायेन्मन्त्रीतथातथा ॥ एवंसिद्धेमनौमन्त्रीगिरावाचस्पतिर्भ

---

१ ऐं कुलजे ऐं सरस्वतिस्वाहा इति मन्त्रः २ ऐं ह्रीं श्रीं वदवद कीर्त्तीश्वरिस्वाहा ३ ऐं ह्रीं अन्तरिक्षसरस्वतिस्वाहा इति मन्त्रः ४ घटसरस्वतीका मन्त्र पीछे लिखाहै ५ ब्लूं वें वदवद त्रींहुंफट्स्वाहा इति मंत्रः ६ ऐं हें ह्रीं क्रिणि क्रिणि विच्चे इति क्रिणि सरस्वती मंत्रः, यह नव अक्षर का मंत्र है ॥

वेत्॥१६॥दूर्वोत्थयातुलेखन्यारोचनारसयुक्तया॥बालस्याच्छिन्ननालस्यजिह्वायांविलिखेन्मनुम्॥ १७ ॥ सम्प्राप्तेसोष्टमेवर्षेसर्वशास्त्रज्ञतामियात्॥ अयुतमन्त्रसञ्जप्तांवचांबालस्यकण्ठतः ॥ १८ ॥ बध्नीयात्पूर्वसम्प्रोक्तंबलिंदत्त्वाविधानतः॥ द्वादशेवत्सरेप्राप्तेभक्षितासाकवित्वकृत् ॥ १६ ॥ ज्योतिष्मतीभवन्तैलंकर्षमात्रंसुमन्त्रितम् ॥ उपरागेजलस्थोयोऽश्नीयाद्वाचस्पतिर्भवेत् ॥ २० ॥ चतुष्पथेश्मशानेवाहित्वालज्जाम्भयन्तथा ॥ जपेच्छवंसमारुह्यविद्यान्तत्परमानसः॥२१॥शृणोत्यसावमुंशब्दंनिशीथेजपतत्परः॥ पारगोभवविद्यानांसर्वसिद्धिमवाप्नुहि॥२२॥ विद्वत्कुलसमूद्भूतमष्टवर्षशिशुद्वयम्॥ उपविश्यतयोर्मूर्द्धिकरौदत्त्वाजपेन्मनुम् ॥ २३ ॥ वेदान्तन्यायसंयुक्त्याविवदेतेउभावपि॥ यःकौतुकीसआश्चर्य्यविद्यायाःपश्यतुध्रुवम्॥ २४ ॥ विधायवेदिकांरम्यांविजनेकदलीवने ॥ तत्रासीनोजपेद्विद्यामर्कलक्षंविधानतः ॥ २५ ॥ दासीचालितदोलायामारूढांसुस्मिताननाम् ॥ पुन्नागचम्पकाशोकरम्भाविपिनसंस्थिताम् ॥ २६ ॥ एवंध्यात्वाभगवतींबलिंदद्याज्जपान्ततः ॥ एवंकुर्वन्नरःसर्वमभीष्टंलभतेध्रुवम्॥ २७ ॥ निर्वासाविशिखःप्रेतभूमिस्थोयोजपेन्मनुम्॥ अयुतंकृष्णभूताहेसवाक्सिद्धिमवाप्नुयात्॥२८॥ विद्यांसौख्यंधनम्पुष्टिमायुःकीर्त्तिंबलंश्रियः ॥ रूपंकामयमानेनसेव्येयन्तुसरस्वती ॥ २६ ॥ अथलोकेश्वरींवक्ष्येत्रिकूटाख्यांसरस्वतीम्॥ श्रींह्रींक्लींमितिमन्त्रोस्यास्त्रिबीजःपरिकीर्त्तितः ॥ ३० ॥ मुनयस्त्वस्यसम्प्रोक्ताभृगुसम्मोहनादयः ॥ छन्दोनिवृचगायत्रीदेवीलोकेश्वरीमता ॥ ३१ ॥ ह्रींबीजंक्लींचशक्तिःस्याद्विर्मन्त्रार्णैःषडङ्गकम् ॥ ध्यानमस्याःप्रवक्ष्यामिनानारत्नचयेस्थितम् ॥ ३२ ॥ सुवर्णजंकल्पतरुंमणिकुट्टिमभूमिगम्॥ तस्याधस्ताद्रत्नमयेस्थितांसिंहासनोपरि॥ ३३ ॥ श्वेतपद्मेसमासीनाम्मणिकुण्डलभूषिताम्॥

---

१ जो लोकमें मालकाँगुनी या ककूँदनि नाम करके प्रसिद्ध है २ सूर्य्य व चन्द्रमा के ग्रहण समय के बाद ३ नग्न और चोटी की गांठको खोले हुये पुरुष श्मशान में मंत्र जपे ४ तीनों बीजों से दो आवृत्ति करके षडङ्गन्यास करे जैसे, श्रींहृदयाय नमः ह्रीं शिरसे स्वाहा, क्लीं शिखायैवषट् श्रीं कवचायहुम्, ह्रीं नेत्रत्रयाय वौषट् क्लीं अस्त्रायफट्॥

केयूरहारमुकुटरसनानूपुरान्विताम् ॥ ३४ ॥ पद्मद्वयंपाशवरौचांकुशेक्षुशरा
सने ॥ अभीतिंपुष्पबाणांश्चदधानांकरपल्लवैः ॥ ३५ ॥ हेमाभांसप्तदूती
भिस्तरुणीभिःसमावृताम् ॥ चामरादर्शकरकताम्बूलकरशोभिभिः॥ ३६ ॥
प्रसन्नदृष्ट्यापश्यन्तिसाधकंत्वितिचिन्तयेत् ॥ सूर्य्यलक्षंजपेन्मन्त्रंहुनेत्त्रिमधु
रान्वितैः ॥ ३७ ॥ राजवृक्षसमिद्भिश्चतद्दशांशंप्रजुहुयेत् ॥ षट्कोणमध्ये
देवेशींकोणेष्वङ्गानिपूजयेत् ॥ ३८ ॥ लक्ष्मींहरिंपार्वतींचशङ्करंचरतिंस्मरम्॥
पार्श्वद्वयेशङ्खपद्मनिधीपूज्यौतदनन्तरम् ॥ ३९ ॥ ब्रह्मादिभिस्तृतीयंस्यात्स्त्री
रूपैर्लोकपालकैः ॥ चतुर्थंपञ्चमन्तेषामायुधैरितिपूजनम् ॥ ४० ॥ ततःका
म्यानिकुर्वीतजपेत्सूर्य्यसहस्रकम्॥ तावद्धुनेद्बिल्वफलैःसम्पत्तिःपरमाभवेत्॥
४१ ॥ राजवृक्षसमिद्धोमात्कांक्षिताकर्षणम्भवेत् ॥ जपाकुसुमहोमस्तुसम
स्तजनवश्यकृत् ॥ ४२ ॥ पलाशपुष्पहोमेनात्युत्कृष्टकविताभवेत्॥ अथातः
संप्रवक्ष्यामित्रिपुरांशिवसञ्ज्ञिताम् ॥ ४३ ॥ सबिन्दवोद्वादशैवस्वराःप्रथमबी
जकम् ॥ द्वितीयंकामबीजंस्यात्तृतीयंसौरितिस्मृतम् ॥ ४४ ॥ तुल्यंज्ञान
सरस्वत्याध्यानन्यासार्चनादिकम् ॥ अथातःसम्प्रवक्ष्यामिरुद्रविश्वेश्वरीमनुँ
म् ॥४५॥ ऊँवांश्रींह्रींसमुच्चार्य्यस्फ्रेंसौंस्वाहान्तकोमनुः ॥ अष्टाक्षरोमुनिश्चा
स्यत्रिविक्रमउदाहृतः ॥ ४६ ॥ रुद्रवागीश्वरीदेवीगायत्रीछन्दईरितम् ॥
स्वाहाशक्तिश्चवांबीजंषड्भिर्मन्त्रार्णकैःक्रमात् ॥ ४७ ॥ सांसींसूंचापिसैं
सौंसःपूर्वकैरङ्गकल्पनम् ॥ सर्वज्ञामृततेजोज्वालामालिनितद्वत्तरम् ॥ ४८ ॥
तृप्तेत्युक्तावदवदअनादिबोधवज्रिणे ॥ वज्रधरायस्वतन्त्रनित्यमलुप्तशक्ति

---

१ होमद्रव्यैः इति शेषः, त्रिमधुरसंयुक्त तिलादि द्रव्यों से होमकरे २ अंआं इंई उंऊं एंऐं ओंऔं अंअः क्लीं सौः ३ ओंवां श्रीं ह्रीं स्फ्रेंसौं स्वाहा ४ ओंवां इत्यादि मन्त्रके छः अक्षरों के आदिमें सां सीं इत्यादि छः बीजों को जोड़कर षडङ्गन्यास करे जैसे सां ओं हृदयाय नमः सींवां शिरसे स्वाहा सूं श्रीं शिखायैवषट् सैं ह्रीं कवचाय हुम्, सौंस्फ्रें नेत्रत्रयायवौषट् ,सः सौं अस्त्रायफट् ५ सर्वज्ञामृततेजोज्वालामालिनि तृप्ता वदवद अनादि बोधेवज्रिणे वज्रधरायस्वतन्त्र नित्यमलुप्तशक्तिसहजातिरूपिणे अनन्तशक्तिबलिपशुंहुफट् पाशुपतास्त्राय सहस्राक्षाय ॥

च ॥ ४९ ॥ सहजातिरूपिणेचानन्तशक्तिवलिंवदेत् ॥ पशुंहुंफट्पाशुपता स्त्रायेतिपदमुच्चरेत् ॥ सहस्राक्षायेतिमन्त्रःप्रोक्तःसप्ततिवर्णकः ॥ ५० ॥ सर्वकामप्रदश्चैवंध्यानमस्यानिरूप्यते ॥ ५१ ॥ शुभ्राभांत्रीक्षणांदोर्भिर्विभ्रतींफलपुस्तके ॥ वराभयेसर्पभूषांरुद्रवागीश्वरींभजे ॥ ५२ ॥ जपपूजाप्रयोगादिज्ञेयं वाग्वादिनीसमम् ॥ अथातः सम्प्रवक्ष्यामिविष्णुवागीश्वरीमनुम् ॥ ५३ ॥ ह्रींवाचस्पतेअमृतप्लूःप्लूंह्रींसौंचसंवदेत् ॥ द्वादशार्णोमन्त्रउक्तोमुनिःकंठःप्रकीर्त्तितः ॥ ५४ ॥ विष्णुवागीश्वरीदेवीविराट्छन्दःप्रकीर्त्तितम् ॥ प्लुःशक्तिर्वाक्चबीजंस्याद्दृत्तुवाचस्पतेइति ॥ ५५ ॥ अमृतेतिशिरःप्रोक्तंप्लूःशिखाप्लूंचवर्म्मकम् ॥ वाचस्पतेअमृतेतिनेत्रंप्लूःप्लूंतथास्त्रकम् ॥ ५६ ॥ ध्यानपूजादिकंप्राग्वत्प्रयोगःकथ्यतेधुना ॥ संवत्सरंहविष्याशीसहस्रम्प्रत्यहञ्जपेत् ५७ ॥ जपान्ते दशवारञ्चजप्त्वातेनोदकंपिबेत् ॥ तेनलोकान्तरामेधाजायतेनात्रसंशयः ॥ ५८ ॥ जपेद्वोमूत्रपकाशीतिथिलक्षंमनुंत्विमम् ॥ साज्यकोलसमिद्भिस्तुहुनेदष्टसहस्रकम् ॥ ५९ ॥ भूतम्भव्यंवर्त्तमानंसर्वंजानातिसाधकः ॥ कपिलाज्ययुतंब्राह्मीरसम्प्रातस्तुयःपिबेत् ॥ ६० ॥ चुलुकैकम्मन्त्रितन्तुदशवारम्पलत्रयम् ॥ धारयेद्देदशास्त्रादिप्रोक्तञ्चत्वेकवारकम् ॥ ६१ ॥ सकृच्छ्रुतन्तुयत्तेननचविस्मरतिकिंचित् ॥ प्रकुर्य्यान्मायायाङ्गानिध्यानमस्यानिरूप्यते ॥ ६२ ॥ रक्तोत्पलकरद्वन्द्वांपद्मस्थांकमलाननाम् ॥ बन्धूकाभांत्रिनयनांनानाकल्पोज्ज्वलां स्मरेत् ॥ ६३ ॥ शक्तिपीठेयजेद्देवींपुरोङ्गानिचमातरः ॥ लोकपालांस्तदस्त्राणि पद्मावत्यर्चनंस्मृतम् ॥ ६४ ॥ लक्षमेकम्पुरश्चर्य्यांदशांशंजुहुयाद्घृतैःएवम्मनुंयोभजतेसुभगःसर्वयोषिताम् ॥ ६५ ॥ पद्मावतीसमान्यातुनास्तिसौभाग्यदाभुवि ॥ अथातःसम्प्रवक्ष्यामिअश्वारूढामहामनुम् ॥ ६६ ॥ तारमुक्तातथाचैहिपरमेश्वर्य्यग्निगेहिनीम् ॥ दशार्णोयंमुनिर्ब्रह्माविराट्छन्दश्चदेवता ॥ ६७ ॥ अश्वारूढापडंगानि तारद्यैस्त्रिपदैर्द्विधा ॥ अश्वारूढांचन्द्रभालांग्यद्धांपाशेनसाधकम् ॥ ६८ ॥ बध्वानयन्तींवामेन दक्षेकनकवेत्रकाम् शक्तिपीठेयजेद्देवींपुरांगानिप्रपूजयेत् ॥ ६९ ॥ मातॄरिन्द्रादिदिग्बाह्ये तदस्त्राणिततोबहिः ॥

१ ह्रीं बीजकरके षडङ्गन्यास करे ॥ २ ओं एहि परमेश्वरि स्वाहा । इतिमन्त्रः ॥

जपेदयुतसङ्ख्याकंदशांशंजुहुयादघृतैः ॥ ७० ॥ तर्प्पणादिततःकुर्य्यात् पूर्वोक्तविधिनासुधीः ॥ इत्थंध्यात्वैवसकलं विश्वंवशयतेऽचिरात् ॥ ७१ ॥ आज्यान्नंजुहुयान्मन्त्री लभतेवाञ्छितंफलम् ॥ त्रिमध्वाक्तैस्थालोनैर्वश्या दभूपान्हुनेत्तुयः ॥ ७२ ॥ पूर्वोक्तेनविधानेनवश्याःस्युर्वनिताअपि ॥ अनयाविद्ययासर्प्पिर्होमःकाञ्चनदोमतः ॥ ७३ ॥ त्रिस्वादुभिःसहस्रंचहु नेत्स्त्रीवशासिद्धये ॥ पूर्वोक्तेनैवहोमेननारीमाकर्षयेद्ध्रुवम् ॥ ७४ ॥ तारादि रथमायादिरयमेकादशार्णकः ॥ षड्दीर्घमाययैवास्यषडङ्गविधिरीरितः॥७५॥ ॐ ॐ ह्रीं क्रों पूर्वकोयंप्रोक्तोविश्वमितार्णकः ॥ द्विभूभूत्रीषुयुग्मैश्च षडङ्ग विधिरीरितः ॥ ७६ ॥ पञ्चलक्षंपुरश्चर्य्या पूजाद्यंपूर्ववन्मतम् ॥ पूर्वेचावर णेप्रोक्ताःसाक्षयाःकीर्त्तिनायिकाः ॥७७॥ इन्द्रादिबाह्यावरणेप्रोक्तो ब्राह्मयावि धिस्त्वयम् ॥ अथातःसम्प्रवक्ष्यामि सम्यङ्माहेश्वरीविधिम् ॥ ७८ ॥ ॐ ह्रींनमोभगवतिमाहेश्वर्य्येहिसंवदेत् ॥ परमेपदमुच्चार्य्य श्वरिस्वाहान्तकोम नुः ॥ ७६ ॥ तारादिरेकविंशार्णोऽश्वारुढावत्परंमतम् ॥ वृषारूढांभालचन्द्रां त्रिनेत्रांशशिसन्निभाम् ॥ ८० ॥ दधतींशूलडमरुं महाहिवलयांभजे ॥ वर्ण लक्षंजपेन्मन्त्रं बिल्वपत्रैर्घृतप्लुतैः ॥ ८१ ॥ जुहुयात्तद्दशांशेनमहदैश्वर्य्यमा न्भवेत् ॥ आदावङ्गानिसम्पूज्य राशिपत्रेततोयजेत् ॥ ८२ ॥ आदौबालां तथाशक्तिं नित्यक्लिन्नाग्निवासिनीम् ॥ अन्नपूर्णांतथागौरीं वज्रप्रस्तारिणी मपि ॥ ८३ ॥ वज्रेश्वरींचत्वरितांशिवदूतींत्रिकण्टिकाम् ॥ वश्येत्रिकण्टि कींचापिस्वस्वमन्त्रैःसमर्चयेत् ॥ ८४ ॥ ततोदिक्पांस्तदस्त्राणि चेत्थंमाहे श्वरीमता ॥ अथातःसम्प्रवक्ष्यामि बालामन्त्रान्सुसिद्धिदान् ॥ ८५ ॥ वौ कामसौस्त्रिबीजानि सौःक्लींऐंचपुनःपठेत् ॥ षडर्णोयंमनुःप्रोक्तो दक्षिणामूर्ति

---

१ ॐ ह्रीं एहि परमेश्वरि स्वाहा। ॐ के आगे ह्रीं जोड़नसे उक्त मन्त्र पूर्वोक्तदशाक्षर हीसेबनजाताहै २ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः क्रमसे इन बीजों करके अथवा आं ह्रीं हृदयायनमः ईं ह्रीं शिरसे स्वाहा ऊं ह्रूं शिखायैवषट् ऐं ह्रीं कवचायहुम्, औं ह्रीं नेत्रत्रयायवौषट्, अः ह्रीं अस्त्रायफट् इस रीतिसे न्यास करे ३ ॐ आं ह्रीं क्रों एहिपरमेश्वरि स्वाहा, तेरह अक्षरका मन्त्र है ४ ओं ह्रीं नमोभगवति माहेश्वरि एहि परमेश्वरि स्वाहा ॥ इति मन्त्रः ॥ ५ ऐं क्लीं सौः सौः क्लीं ऐं ॥

कोमुनिः ॥ ८६ ॥ गायत्रीछन्दउद्दिष्टं देवीत्रिपुरबालिका ॥ पाशांकुशौ पुस्तकाक्षसूत्रंचदधतीकरैः ॥ ८७ ॥ रक्ताव्यक्षाचन्द्रभालाध्येयाबालसुरार्चिता ॥ न्यासानत्रप्रकुर्वीत षडङ्गान्मातृकासमान् ॥ ८८ ॥ जपेल्लक्षंदशांशेन होमःपुष्पैर्हयारिजैः ॥ पूजापूर्वोदितेपीठेनैर्ऋत्यादिशायकैः ॥८६॥ प्रभादिभिर्दिग्गीशास्त्रैः प्रयोगःपूर्ववन्मतः ॥ श्रीं क्लीं ह्रीं ऐं कामसौश्च ह्रीं क्लींश्रींचनवाक्षरः ॥ ६० ॥ ध्यानपूजादिकंसर्वं पूर्वप्रोक्तषडर्णवत् ॥ अथान्यत्सम्प्रवक्ष्यामि वैाकामोसौस्समुच्चरेत् ॥ ६१ ॥ बालत्रिपुरेस्वाहेति दशार्णोऽन्यच्चपूर्ववत् ॥ अथान्यत्सम्प्रवक्ष्यामि क्लीं ह्रीं ऐंचसमुच्चरेत् ॥ ६२ ॥ ततश्चबालेत्रिपुरेसिद्धिंदेहिनमस्त्विति ॥ चतुर्दशाक्षरोमन्त्रो मुन्याद्यंचषडर्णवत् ॥६३॥ प्रयोगाश्चात्रसिध्यन्तित्रिवर्णोक्तास्तथाखिलाः ॥ अथान्योवक्ष्यतेह्रींश्रींक्लींप्रोक्त्वात्रिपुरेतिच ॥ ६४ ॥ भारतिकवित्वंदेहिस्वाहान्तोऽन्यच्च पूर्ववत् ॥ ह्रीं ह्रीं ह्रीं प्रौढत्रिपुरेआरोग्यमैश्वर्य्यंदेहि ॥ ६५ ॥ स्वाहान्तोष्टादशार्णोयंन्यासाद्यंस्यात्षडर्णवत् ॥ ह्रींश्रींक्लींबालत्रिपुरेमदायत्तांवदेत्ततः ॥ ६६ ॥ विद्यांकुरुनमःस्वाहाविंशत्यर्णश्चपूर्ववत्॥ अथान्यत्सम्प्रवक्ष्यामिमायांश्रीं क्लीं परात्परे ॥ ६७ ॥ त्रिपुरेसर्वमित्युक्त्वा ईप्सितंसाधयेतिच ॥ स्वाहाविंशतिवर्णोयं मुन्याद्यन्तुषडर्णवत् ॥ ६८॥ सिद्धेमन्त्रेलक्षजपादभीष्टंसिध्यतिध्रुवम् ॥ अथान्यंसम्प्रवक्ष्यामि क्लीं क्लीं श्रींच ह्रींद्वयम् ॥ ६६ ॥ त्रिपुरेललितेप्रोक्त्वा मदीप्सितांचयोषिताम्॥ तेहियाञ्छितमित्युक्त्वा कुरुज्वलनकामिनी ॥ २००॥ अष्टाविंशतिवर्णोयं श्रीदःसर्वन्तुपूर्ववत् ॥ अथान्यंसम्प्रवक्ष्यामि शक्तेरष्टाक्षरंमनुम् ॥ १ ॥ आं श्रीं ह्रीं क्लीं क्लींच ह्रींच श्रीं आं अष्टाक्षरोमनुः ॥ अजोमुनिश्चगायत्रीछन्दःशक्तिश्चदेवता ॥ २ ॥ स्त्रीवश्याकर्षणादौचविनियोगउदाहृतः ॥ षड्दीर्घमाययाङ्गानि सर्वैरष्टाङ्गमीरितम् ॥ ३ ॥ हृच्छिरश्चशिखावर्म्म नेत्रास्त्रोदरपृष्ठकम् ॥ अष्टाङ्गंविन्यसेन्मन्त्रं मूलेनव्यापकंचरेत् ॥ ४ ॥ आनन्दरूपिणींदेवीं पाशांकुशधनुःशरान् ॥ बिभ्रतींदोर्भिररुणांकुचार्त्ताहृदिभावयेत् ॥ ५ ॥ शक्तिपीठे

१ क्लींश्रीनत् २ ऐं क्लीं सौःबालत्रिपुरेस्वाहा ॥

यजेद्देवींहृल्लेखादिभिरंगकैः॥ मातृभिर्लोकपालैश्चवज्राद्यैःपञ्चमावृतिः॥६॥ अष्टलक्षंजपेत्साज्यैर्दशांशंजुहुयात्तिलैः ॥ नित्यक्लिन्नामथोवच्मिनित्यक्लिन्नेमदद्रवे ॥ ७ ॥ नमश्चेतिदशार्णोयं मुनिरत्रिःप्रकीर्त्तितः ॥ नित्यक्लिन्ना देवताचात्रिष्टुप् छन्दउदाहृतम् ॥ ८ ॥ नित्याद्यैर्हृदयंस्वाहासाम्नायैःशिर ईरितम् ॥ क्लिन्नेस्वाहाशिखानित्यक्लिन्नेचकवचंमतम् ॥ ९ ॥ नित्यक्लिन्ने नमश्चास्त्रं ध्यानंपूर्ववदाचरेत् ॥ पूजादिकमथोमन्त्रो पूर्ववत्परिकल्पयेत् ॥ १० ॥ एकलक्षंजपेन्मन्त्रन्तद्दशांशंहुनेत्तिलैः ॥ तर्प्पणादिततःकुर्य्यात्पूर्वोक्त विधिनासुधीः ॥११ ॥ प्राग्वत्प्रयोगाः सेव्येयंदारिद्र्येसुखकारिणी ॥ अथा तोवह्निवासिन्यानवार्णोमनुरुच्यते ॥ १२ ॥ ॐ ह्रींचवह्निवासिन्यै नमश्चे तिमुनिर्मतः ॥ वशिष्ठश्चतथाछन्दो गायत्रीदेवतास्त्वियम् ॥ १३ ॥शक्तिबी जन्तुशक्तिस्स्यात्कीलकंमध्यमेरितम् ॥ विद्याद्वितीयबीजेन दीर्घस्वरयुतासु धीः ॥ १४ ॥ मायान्तेनषडङ्गानि कुर्य्यान्मन्त्रीकराङ्गयोः ॥ नेत्रयोःकर्णयो र्नासाकपोलास्यध्वजेगुदे ॥ १५ ॥ मन्त्राक्षराणिविन्यस्य सर्वेणव्यापकंच रेत्॥तप्तकाञ्चनसङ्काशां नवयौवनसुन्दरीम् ॥ १६ ॥ चारुस्मेरमुखाम्भोजां विलसन्नयनत्रयाम् ॥ अष्टभिर्बाहुभिर्युक्तां माणिक्याभरणोज्ज्वलाम् ॥१७॥ वामहस्तेपुरत्नाब्जं शङ्खंपुण्ड्रेक्षुजंधनुः ॥ ग्लौमण्डलंदक्षिणेषु कह्लारंहेमश्रृ ङ्गकम् ॥ १८ ॥ पुष्पेषुंमातुलुङ्गंचस्वसमानसखीवृताम् ॥ नवकोणेकर्णिका यामादावङ्गानिचार्चयेत् ॥ १९ ॥ अष्टयोनिषुसम्पूज्यास्तदग्रास्तुप्रदक्षिण म् ॥ ज्वालिनीविश्वलिङ्गन्यामङ्गलाचमनोहरा ॥ कमलाकितन्नाविश्वावि विधाचेतिशक्तयः ॥ २० ॥ तद्बहिर्द्वादशदले सम्पूज्याराशिशक्तयः ॥ मे षावृषाचमिथुनाकर्कटाद्याश्चतामताः ॥ २१ ॥ दशदिक्षुतथाचाग्रे दशश क्तीःप्रपूजयेत् ॥ घस्मरांसर्वभक्षांच विश्वाख्यांविविधोद्भवाम् ॥ २२ ॥ चित्र रूपांनिस्सपत्नां निरातङ्कांचपावनीम् ॥ अचिन्त्यांवैभवस्तुतांतदग्रेलोकपा

---

१ ह्रां ह्रीं अंगुष्ठाभ्यांनमः, ह्रीं ह्रीं तर्जनीभ्यांनमः ह्रूं ह्रीं मध्यमाभ्यांनमः ह्रैं ह्रीं अनामिकाभ्यांनमः, ह्रौं ह्रीं कनिष्ठिकाभ्यांनमः ह्रः ह्रीं करतलकरपृष्ठाभ्यांनमः, इस रीति से हृदयादि न्यासको भी कर लेना ॥

लकान् ॥ २३ ॥ तदस्त्राणीतिपूजोक्ता देव्याःसर्वसमृद्धिदा ॥ एकलक्षंजपेन्म न्त्रंदशांशन्तुहुनेद्घृतैः ॥ २४ ॥ तर्प्पणंमार्ज्जनंकृत्वा ब्राह्मणराधनंतथा ॥ सिद्धमन्त्रःप्रकुर्वीत प्रयोगान्निजवाञ्छितान् ॥ २५ ॥ काम्यहोमविधिंवक्ष्ये सम्यग्वाञ्छितदायकम् ॥ शालितण्डुलमादाय प्रस्थंभाण्डेनवेक्षिपेत् ॥ २६ ॥ तत्फूत्कृत्यसुसंस्कृत्य विद्ययाष्टोत्तरंशतम् ॥ जप्त्वाहोमोविधातव्योमहालक्ष्मीकरोभवेत् ॥ २७ ॥ नित्यमष्टोत्तरशतंपञ्चम्यांप्रतिपद्यपि ॥ शुक्लेसहस्राण्यष्टौचवर्षमेवंसमाचरेत् ॥ २८ ॥ तदानृपसमानःस्याद्धनधान्यादिभिर्महान् ॥ घृतहोमादवाप्नोतिसकलंवाञ्छितंफलम् ॥ २९ ॥ पञ्चमीषुविशेषेणपूजांकुर्यादव्रतीभवेत् ॥ अथातःसम्प्रवक्ष्यामिअन्नपूर्णेश्वरीमनुम् ॥ ३० ॥ ॐ श्रीह्रींक्लींनमःप्रोक्त्वाभगवतिपदंवदेत् ॥ माहेश्वरिचान्नपूर्णेस्वाहाविंशतिवर्णकः ॥ ३१ ॥ छन्दस्त्रिष्टुम्मुनिर्ब्रह्माह्यन्नपूर्णाचदेवता ॥ ह्रींबीजंचापिशक्तिःश्रींकीलकंक्लींप्रकीर्तितम् ॥ ३२ ॥ षड्दीर्घयुक्तहृल्लेखाषडंगेषुप्रकीर्तिता ॥ ब्रह्मरन्ध्रेचसीमन्तेभालेभ्रूमध्ययोर्नसि ॥ ३३ ॥ वक्त्रेकण्ठेचहृदयेकुक्षिनाभिषुलिंगके ॥ आधारेस्फिग्द्वयेबाहुद्वयेजानुद्वयेतथा ॥ ३४ ॥ पादयोश्चनवद्वारेपदन्यासउदाहृतः ॥ पुनर्मूर्धनिभालेचभ्रूमध्येचमुखेगले ॥ ३५ ॥ हृन्नाभिलिंगेपदयोःपदानिक्रमतोन्यसेत् ॥ ३६ ॥ व्युत्क्रमेणपुनःकुर्य्यात्सर्वमन्त्रेणसाधकः ॥ तप्तकाञ्चनसङ्काशांबालेन्दुकृतशेखराम् ॥ ३७ ॥ नवरत्नप्रभादीप्तमुकुटांकुंकुमारुणाम् ॥ चित्रवस्त्रपरीधानांमीनाक्षींकमलस्तनीम् ॥ ३८ ॥ नृत्यन्तमीशमनिशंदृष्ट्वानन्दमयींपराम् ॥ सानन्दमुखलोलाक्षींमेखलाढ्यनितम्बिनीम् ॥ ३९ ॥ अन्नदानरतांनित्यांभूमिश्रीभ्यांनमस्कृताम् ॥ दुग्धान्नभरितंपात्रंसरत्नंवामहस्तके ॥ ४० ॥ दक्षिणेतुकरेदेव्या

---

१ सोलहटके २ ह्रीम् ३ ब्रह्मरन्ध्र से लेकर पाद पर्यन्त अक्षरन्यास करे जैसे ॐब्रह्मरन्ध्रे श्रींसीमन्ते, ह्रींभाले इसरीति से फिर ४ दक्षिण व वाम दोनों कोखियों में ५ दोनों कूलोंमें, ६ मन्त्रके नव पदोंको नवोद्वारों में न्यासकरे ७ पुनः मूर्द्धाआदि उक्तस्थानों में नवोपदों का न्यास करे जैसे ॐ मूर्द्धनि, श्रींभाले, ह्रींभ्रूमध्ये, क्लींमुखे, नमःगले भगवति हृदये, माहेश्वरि नाभौ, अन्नपूर्णेलिंगे, स्वाहा पादयोः इत्यादि सब न्यासों को करै ॥

दर्वीध्यायेत्सुवर्णजाम् ॥ त्रिकोणंचचतुष्पत्रवसुपत्रंततःपरम् ॥ ४१ ॥ कला
पत्रंचभूबिम्बंचतुरस्रत्रयावृतम् ॥ आदावंगानिसम्पूज्यत्रिकोणाग्रेशिवंय
जेत् ॥ ४२ ॥ ॐह्रांशिवायेतिपूजामन्त्रोनगाक्षरः ॥ अनेनपूजयेद्देवंध्या
नंतस्यंनिरूप्यते ॥ ४३ ॥ गोक्षीरधामधवलंपञ्चवक्त्रंत्रिलोचनम् ॥ प्रसन्नव
दनंशान्तंनीलकण्ठविराजितम् ॥ ४४ ॥ कपर्दिनंस्फुरत्सर्पभूषणंमल्लसन्नि
भम् ॥ नृत्यन्तमीश्वरंदेवंत्रिकोणाग्रेसुरेश्वरम् ॥ ४५ ॥ वामभागेत्रिकोण
स्यवराहंपरिपूजयेत् ॥ तारोनमोभगवतेवराहपदमुच्चरेत् ॥ ४६ ॥ रूपायभू
र्भुवइतिस्वःपतयेचकीर्त्तयेत् ॥ भूपतित्वंमेदेहीतिप्रदापयशिखिप्रिया ॥ ४७॥
वराहपूजनेप्रोक्तोमन्त्रोरामाग्निवर्णकः ॥ नारायणंदक्षकोणेनमोनारायणा
यच ॥ ४८ ॥ ताराद्येनाष्टवर्णेनमन्त्रेणपरिपूजयेत् ॥ वामदक्षिणयोःपूज्येभू
श्रियौस्वस्वमन्त्रतः ॥ ४९ ॥ अंन्नंमह्यमन्नमितिदेहीत्युक्त्वापुनर्वदेत् ॥ अन्ना
धिपतयेचेतिममान्नंचप्रदापय ॥ ५० ॥ स्वाहान्तआकृत्यर्णोयंग्लौंपुटोभूमिपू
जने ॥ श्रीपूजनेश्रीपुटःस्याच्चतुष्पत्रेततोर्चयेत् ॥ ५१ ॥ पश्चिमादिक्रमेणैव
पराविद्यांध्रुवेणच ॥ भुवनेशींस्वबीजेनरमांमयाकमलांतथा ॥ ५२ ॥शुभगांका
मबीजेनब्राह्म्याद्यास्त्वष्टपत्रके ॥ चन्द्रमण्डलरूपिण्यःपश्चिमादिक्रमेणच ॥
५३ ॥ कलाःषोडशसम्पूज्याअन्नपूर्णायसंवदेत् ॥ तन्नामान्तेनमश्चोक्त्वा
इतिमन्त्रेणपूजयेत् ॥ ५४ ॥ अमृतामानदातुष्टिः पुष्टिःप्रीतीरतिश्चह्रीः ॥
श्रीश्चस्वाहास्वधाज्योत्स्ना ततोहैमवतीभवेत् ॥५५॥छायाचपूर्णिमानित्या
अमावस्येतिषोडश ॥ भूपुरेलोकपालाश्च तदस्त्राणितदग्रतः॥५६॥लक्षंजपे
त्सानियमो दशांशेनचहोमयेत् ॥५७॥ रम्यपायससर्पिर्भ्या सिद्धिदाभवतिध्रु
वम् ॥ तर्प्पणादिततःकुर्य्यात्पूर्वोक्तविधिनासुधीः ॥ ५८ ॥ अन्नपूर्णेश्वरी
देवी पूजितान्नसुवर्णदा ॥ बीजहीनेयमेवस्यात्षोडशार्णातथापरा ॥ ५९ ॥
मायाद्याचाथताराद्या मतासप्तदशाक्षरा ॥ मायातारादिकाचान्या गदिताष्टा

---

१ अन्नंमह्यमन्नंदेहि अन्नाधिपतयेममान्नंप्रदापयस्वाहा ॥ २ पूर्वोक्त इसी मन्त्र के आदि अन्त में ग्लौंबीज मिलाने से भूमि पूजने का मन्त्र होजाता है तथा श्रीं बीजसे सम्पुटित श्रीपूजा का मन्त्र होताहै ३ ॐकारेण ४ ह्रीं बीजेन ५ श्रीं बीजेन ॥

दशाक्षरा ॥ ६० ॥ मुन्याद्याःपूर्वमुदितामाययांगक्रियामता ॥ अष्टनागेन्द्र वज्राद्यैःसाधयेत्पूर्ववच्चताः ॥ ६१ ॥ अन्नप्रदाख्यमन्त्रस्य पूर्वोक्तस्योच्यतेविधिः ॥ ऋषिर्ब्रह्माकृतिश्छन्दो देवतेभूश्रियौमते ॥ ६२ ॥ पञ्चांगानिमनोर्वर्णैर्वेदेष्वर्त्त्वंगवायुभिः ॥ क्षीराब्धौस्वर्णरजतद्वयद्वीपेसुगन्विते ॥ ६३ ॥ शुभकल्पद्रुमावृत्ति शोभितेमणिकुट्टिमे ॥ वित्तपस्याग्रतस्तत्रस्वासीनेवसुधाश्रियौ ॥ ६४ ॥ धनौधान्संमृजन्त्यौच भक्तार्थंप्रतिचिन्तयेत् ॥ आवाह्यवैष्णवेपीठे देव्यागन्धादिभिर्यजेत् ॥ ६५ ॥ पूर्वमंगानिसम्पूज्य पूजयेच्चदलाष्टके ॥ दिग्दलेषुक्रमात्खंच वायुमग्निंतथाजलम् ॥ ६६ ॥ विदिग्दलेनिवृत्तिंच प्रतिष्ठामीशकोणतः ॥ विद्यांशान्तिंततोबाह्येष्टदलेचाष्टशक्तयः॥६७॥ एकाक्षरंश्रियःप्रोक्त्वा बलाकाद्याःसमर्चयेत् ॥ इन्द्रादयस्तदस्त्राणि पूजाचैवं समीरिता ॥ ६८ ॥ लक्षंजपेदाज्यपक्वेनान्नेनजुहुयात्तथा ॥ तर्पणादिततः कृत्वा विप्रान्सम्भोजयेत्ततः ॥ ६९ ॥ गुरुंसन्तोष्ययत्नेन मन्त्रसिद्धिमवाप्नुयात् ॥ दिनादौप्रजपेन्मन्त्रमष्टोत्तरशतंबुधः ॥ ७० ॥ छत्रधान्यान्नरत्नौघसमृद्धोभवतिध्रुवम् ॥ अथान्यंसम्प्रवक्ष्यामि तारोह्रींश्रींमनोभवः ॥ ७१ ॥ नमोभगवतीत्युक्त्वा माहेश्वरिममेतिच ॥ अभीप्सितंतथान्नंच देहियुग्ममनन्तरम् ॥ ७२ ॥ अन्नपूर्णेवह्निजायाचैकत्रिंशार्णकोमनुः ॥ युगाङ्गवेदसप्ताब्धिषडर्णैरङ्गकल्पनम् ॥ ७३ ॥ ध्यानपूजाप्रयोगादिप्राग्वत्सर्वं समीरितम् ॥ अथान्यंसम्प्रवक्ष्यामि पञ्चविंशतिवर्णकम् ॥ ७४ ॥ तारोरमाचहृल्लेखा नमो भगवतीतिच ॥ माहेश्वरिप्रसन्नेति वरदेपदमुच्चरेत् ॥ ७५ ॥ अन्नपूर्णेग्निजायान्तो मन्ववर्णैरङ्गकल्पनम् ॥ त्रिपञ्चदन्तवेदाक्षिवर्णैर्ध्यानजपादिकम् ॥ ७६ ॥ सर्वंप्राग्वत्परिज्ञेयं विशिष्टंजपतःफलम् ॥ अथातःसम्प्रवक्ष्यामि गौरीमन्त्रान्महाफलान् ॥ ७७ ॥ ह्रींगौरीरुद्रदयिते योगेश्वरिपदंवदेत् ॥ हुंफट्स्वाहाषोडशार्णो गौरीमन्त्रउदाहृतः ॥ ७८ ॥ अजोस्यमुनिराख्यातो नुष्टुप्छन्दोस्तिदेवता ॥ गौरीसद्भाग्यशब्दस्य सर्वसम्पत्प्रदायिका ॥ ७९ ॥ षड्दीर्घमाययाकुर्यात्षडङ्गानिमनोरथ ॥ हेमाभांबिभ्रतींदोर्भिर्दर्पणाञ्जनसाधने ॥ ८० ॥ पाशांकुशौसर्वभूषां तांगौरींसर्वदास्मरेत् ॥ शाक्तेपीठेयजेद्देवीं

चन्दनाद्यैर्मनोहरैः ॥ ८१ ॥ अङ्गानिपूर्वमभ्यर्च्य शुभगाद्यास्ततोयजेत् ॥ शुभगाललिताचान्या कामिनीकाममालिनी ॥ ८२ ॥ पाशांकुशादर्प्पणाख्याचाञ्जनाचशलाकिका ॥ शक्तयोदिक्षुसम्पूज्या आयुधाख्याविदिक्षुच ॥ ८३ ॥ शक्रादयस्तदस्त्राणि गौरीपूजासमीरिता ॥ ८४ ॥ एकलक्षंजपेन्मन्त्रंदशांशंजुहुयाद्घृतैः ॥ तर्प्पणादिततःकुर्य्याद्गुरुंसन्तोष्ययत्नतः ॥८५॥ सिद्धेमन्त्रेप्रकुर्वीतमन्त्रीकाम्यानिनान्यथा ॥ ८६ ॥ वामाक्षीणामक्षिमध्या वामोरौविलिखेन्मनुम् ॥ आच्छादयन्वामदोष्णातन्मनाःप्रजपेन्मनुम् ॥ ८७ ॥ शतंसहस्रंलोलाक्षीमानयेत्काममोहिताम् ॥ एतन्मन्त्रेणसञ्जप्तांगन्धपुष्पफलादिकम् ॥ ८८ ॥ दत्तंसंसेवितंसर्वजनतावश्यकारकम् ॥ अथान्यत्सम्प्रवक्ष्यामिसर्वस्त्रीवश्यकारकम् ॥ ८९ ॥ कांक्षितस्त्रीवशङ्करिशुंद्वयेवापृथग्द्वयम् ॥ स्त्रीस्वाहेत्यूनविंशार्णोन्यासःप्राग्वत्समीरितः ॥ ९० ॥ गौंगौरीमूर्त्तयेहृच्चपीठमन्त्रउदाहृतः ॥ शुभगायैविद्महेकाममालिन्यैधीमहि ॥ तन्नोगौरीप्रचोदयात् ॥ ९१ ॥ गायत्र्यात्वनयासर्वानुपचारान्प्रकल्पयेत् ॥ अङ्गानिपूर्वमभ्यर्च्यसुभगाद्यास्ततोयजेत् ॥ ९२ ॥ तदग्रेष्टदलेपूज्यामध्यान्तंस्वाग्रतःक्रमात् ॥ दीर्घाष्टकोपेतमेवंप्रथमंयोजितंचवै ॥ ९३ ॥ सबिन्दुङेन्तंतन्नामनमोन्तंतन्मनुर्मतः ॥ प्रभाज्ञानाचवाग्वागीश्वरीस्याज्ज्वालिनीततः॥९४॥ वामाज्येष्ठाचरौद्रीचगुह्यशक्तिःक्रमादिमाः ॥ लोकपालास्तदस्त्राणिहोमाद्यंपूर्ववन्मतम् ॥ ९५ ॥ अस्याद्यवर्णतस्त्ववर्वाक्साध्यायचप्रयोजयेत् ॥ जपेन्मन्त्रंशतंचापिसवश्योभवतिध्रुवम् ॥ ९६ ॥ ब्रह्मश्रीनामकांगौरीमथवक्ष्येसमासतः ॥ मायानमश्चब्रह्मश्रीराजितेराजपूजिते ॥९७॥ जयेचविजयेगौरीगान्धारीत्रिभुवेतिच ॥ नवशङ्करित्युक्त्वासर्वलोकवशङ्करि ॥ ९८ ॥ सर्वस्त्रीपुरुषेत्युक्त्वासर्वलोकवशङ्करि ॥ पदंवदेत्सुद्वद्वेह्रींस्वाहाशूरसार्णवान् ॥ ९९ ॥ ऋषिर्ब्रह्मानिवृच्छन्दोगौरीदेवीप्रकीर्त्तिता ॥ स्वाहाशक्तिश्चबीजंह्रीं मन्त्रार्णैःस्यात्षडङ्गकम् ॥ १०० ॥ इन्द्रदिग्वसुहस्ताशारुद्रार्णैर्ध्यानमुच्यते ॥ पूर्णचन्द्रलसन्मौलिंबन्धुजीवारुणाङ्गकाम् ॥ १ ॥ पाशांकुशधरांत्र्यक्षां

१ आथर्वण ब्राह्मण ॥

शुकपुष्पविराजिताम् ॥ शोणलेपांजगद्वन्द्यांकुशुम्भारुणवस्त्रकाम् ॥ २ ॥ आदावङ्गानिसम्पूज्यमातृकावेष्टनंततः ॥ लोकपालांस्तदस्त्राणिपूजाक्रमउदाहृतः ॥ ३ ॥ अयुतंचजपःकार्य्यःपायसेनहुनेत्ततः ॥ मधुरत्रयसंयुक्तैर्होमःस्यात्तिलतण्डुलैः ॥ ४ ॥ रक्तोत्पलैर्वालवणैरथवामधुरैःफलैः ॥ दिनत्रयंसहस्रंतुशीघ्रंवश्यकरःस्मृतः ॥ ५ ॥ प्रातःकालेतुसूर्य्यस्यमण्डलस्थांचदेवताम् ॥ ध्यात्वाचाष्टोत्तरशतंजपेत्सर्वजगद्वशम् ॥ ६ ॥ अथराजमुखींगौरींवक्ष्येसप्ताब्धिवर्णकाम् ॥ ॐराजमुखिराजाधिमुखिवश्यमुखीतिच ॥ ७ ॥ शक्तिश्रीकामबीजानिदेविदेविसमुच्चरेत् ॥ महादेवीतिदेवाधिदेवीसर्वजनस्यच ॥ ८ ॥ मुखंममवशंचेतिकुरुयुग्माग्निगेहिनी ॥ मैत्रवर्णैस्तुहृदयंत्रिशाङ्किःशिरईरितम् ॥ ९ ॥ मन्त्रारम्भात्पुनःसप्तदशभिस्तुशिखास्मृता ॥ वर्म्माष्टभिःशरैर्नेत्रंमेघैरस्त्रंप्रकीर्त्तितम् ॥ १० ॥ ऋष्यादिध्यानपूजादिप्राग्वद्वक्ष्येप्रयोगकम् ॥ सर्वजनपदस्थानेसाध्यनामनियोजयेत् ॥ ११ ॥ जपहोमतर्प्पणादिकरणेपरमंवशम् ॥ मधुरत्रयसंयुक्तमष्टोत्तरशतंहुनेत् ॥ १२ ॥ सपुष्पसहदेव्यास्तुसमिधःसप्तरात्रकम् ॥ तद्भस्मनाप्रयोगस्तुसमस्तजनवश्यकृत् ॥ १३ ॥ अथास्यभेदंवक्ष्यामिहसरावाग्भवान्विताः ॥ आद्यकूटंद्वितीयंस्याद्राजमुख्यादिपूर्ववत् ॥ १४ ॥ अष्टचत्वारिंशदर्णोमन्त्रस्तद्वत्समीरितः ॥ योविशेषस्तंतुवक्ष्येभवर्ष्यब्ध्यब्धिसायकैः ॥ १५ ॥ मेघैश्चापिमनोर्वर्णैःषडङ्गविधिरीरितः ॥ जपहोमादिकंप्राग्वत्प्रयोगइहतूच्यते ॥ १६ ॥ ससम्पन्नंघृतंहुत्वासहस्रंसप्तवारकम् ॥ सम्पाताज्यन्तुसाध्यस्यप्राणिनांवशकारकम् ॥ १७ ॥ साध्यनक्षत्रवृक्षेणकुर्य्यात्साध्याकृतिंशुभाम् ॥ तस्यामसुंप्रतिष्ठाप्यप्राङ्गणेनिखनेच्चताम् ॥ १८ ॥ तत्रानलंसमाधायरक्तचन्दनसंयुतैः ॥ जपापुष्पैर्निशीथिन्यांजुहुयात्सप्तवासरम् ॥ १९ ॥ सहस्रंप्रत्यहंपश्चात्तांनिष्कास्यसरित्तटे ॥ निखनेत्साधकस्तस्यसाध्योदासोभवेद्ध्रुवम् ॥ २० ॥ अथातःसम्प्रवक्ष्यामिवज्रप्रस्तारिणीमनुम् ॥ वाग्बीजंचापिहल्लेखानित्यक्लिन्नेमदद्रवे ॥ २१ ॥ स्वाहान्तोद्वादशार्णोयमङ्गिरास्तुमुनिर्मतः ॥ त्रिष्टुप्छन्दोदेवताचवज्रप्रस्तारिणीमता ॥ २२ ॥ बीजेना

१ ऐं बीजम् २ ह्रीं बीजम् ॥

धेनचाङ्गानिषड्दीर्घान्वितेनच ॥ अस्याःपूजादिकंसर्वंनित्यक्लिन्नावदाचरे
त् ॥ २३ ॥ अथातःसम्प्रवक्ष्यामिवज्रेश्वर्य्यामहामनुम् ॥ ह्रीं क्लीं क्लिन्नेतथा
क्रोंचपश्चान्नित्यमदद्रवे ॥ २४ ॥ ह्रीं चेतिद्वादशार्णोयंबीजंशक्तिश्चह्रीम
ता ॥ ऋषिर्ब्रह्माचगायत्रीछन्दोवज्रेश्वरीश्वरी ॥ २५ ॥ आद्योमायाभवेद्बीजं
चान्तिमाशक्तिरुच्यते ॥ वाग्भवंकीलकंज्ञेयं ह्रीं क्लीं ह्रीं च हृन्मनुः ॥ २६ ॥
[1]ह्रीं क्लीं शिरःशिखाह्रीं क्रों ह्रीमथकवचंभवेत् ॥ ह्रीं नित्यक्लिन्ने ह्रीं नेत्रं ह्रीं
मदेह्रीमितीरितम् ॥ २७ ॥ ह्रीं द्रवेह्रीमिदंचास्त्रंवर्णन्यासक्रमंब्रुवे ॥ इत्येवंश
क्तिपुटितान्मन्त्रार्णान्दशविन्यसेत् ॥ २८ ॥ श्रोत्रनासाकपोलाक्षिनाभि
गुह्येषुचक्रमात् ॥ ततःसञ्चिन्तयेद्देवींसर्वसौख्यप्रदायिनीम् ॥ २९ ॥ रक्तां
क्ताम्बरांरक्तगन्धमाल्यविभूषिताम् ॥ चतुर्भुजांत्रिनयनांमाणिक्यमुकुटोज्ज्व
लाम् ॥ ३० ॥ पाशांकुशाविक्षुचापदाडिमीपुष्पशायकान् ॥ दधानांबाहु
भिर्नैत्रैर्दर्प्पणामोदशीतलैः ॥ ३१ ॥ पश्यन्तींसाधकंत्र्यस्रेषट्कोणाढ्यमही
पुरे ॥ चक्रमध्येसुखासीनांस्मेरवक्त्रसरोरुहाम् ॥ ३२ ॥ शक्तिभिःस्वस्वरूपा
भिरावृतांपोतमध्यगाम् ॥ सिंहासनेऽभितःप्रेङ्खत्पोतस्थाभिश्चशक्तिभिः ॥ ३३ ॥
वृतान्ताभिर्विनोदार्थांयातायातादिभिस्तथा ॥ शोणाब्धौहेमपोतेचसिंहासन
मनन्तरम् ॥ ३४ ॥ तत्रचक्रंतत्रदेवींसम्यगावाह्यपूजयेत् ॥ त्रिकोणस्याग्र
मारभ्यइच्छांज्ञानांक्रियाभिधाम् ॥ ३५ ॥ शक्तिंसम्पूज्यदेव्यास्तुवामकोणा
दितोर्चयेत् ॥ शक्तिषट्कंचषट्कोणेडाकिनींशाकिनींतथा ॥ ३६ ॥ लाकिनीं
काकिनींचैवशाकिनींहाकिनींतथा ॥ बहिर्द्वादशपत्रेचदेव्यग्रात्सव्यतोयजे
त् ॥ ३७ ॥ हृल्लेखाक्लेदिनीक्लिन्नाक्षोभिणीमदनातुरा ॥ निरञ्जनीरागवती
तथैवमदनावती ॥ ३८ ॥ मेखलाद्राविणीवेगवतीद्वादशशक्तयः ॥ तद्बहिः
षोडशदलेकमलांकामिनींयजेत् ॥ ३९ ॥ कल्यांकान्तांचकलितांकौतारूयां
चकिरातिकाम् ॥ कलांचकलनांचैवकौशिकींकम्बुवादिनीम् ॥ ४० ॥
कातरांककर्टांकीर्त्तिकुमारींकुंकुमामपि ॥ चतुरस्रेतुदेव्यग्रेद्वारदक्षिणपार्श्व

---

१ ह्रीं क्लीं ह्रीं इस मन्त्रसे शिखामें न्यासकरना क्योंकि इस न्यास में मन्त्रके अक्षर ह्रींबी-जसे सम्पुटित देखे जातेहैं इस से यहभी वैसेही होगा ॥

तः ॥ ४१ ॥ क्रमाद्यजदेद्वारयोर्द्वेकोणेकोणेतथैकिकाम् ॥ भगिनींवेगिनींना
गांचपलांपेशलांसतीम् ॥ ४२ ॥ रतिंश्रद्धांभोगलोलांमन्दांमत्तांमनस्विनी
म् ॥ यजेदाशाधिपान्बाह्येतदस्त्राणिततोबहिः ॥ ४३ ॥ एवंसम्पूजयन्मर्त्यो
दरिद्रान्मुच्यतेऽचिरात् ॥ रोगापमृत्युदौर्भाग्यजराशोकादिविच्युतः ॥
४४ ॥ मन्त्रीलक्षत्रयंजप्त्वातद्दशांशंहुनेद्घृतैः ॥ आरग्वधप्रसूनैर्वाप्रसूनैर्वकु
लोद्भवैः ॥ ४५ ॥ तर्प्पयेद्विधिनातद्वत्सलिलैर्भक्तिमान्सुधीः ॥ आत्मानम
भिषिञ्च्याथतर्प्पयेद्ब्राह्मणानपि ॥ ४६ ॥ एवंसंसिद्धमन्त्रस्तुनित्यार्चानिर
तःसदा ॥ गुरुभक्तःप्रकुर्वीतप्रयोगान्निजवाञ्छितान् ॥ ४७ ॥ सहस्रजापी
स्थिरधीर्मन्त्रवीर्यविदात्मवान् ॥ यःसोपिकाम्यान्कुर्वीतप्रयोगान्निजवाञ्छि
तान् ॥ ४८ ॥ यदज्ञानेनमोहेनचापलेनाथवाचरेत् ॥ अनर्थक्लेशरोगादि
पीडाःप्राप्नोतिनिश्चितम् ॥ ४९ ॥ अरुणैःपङ्कजैर्होमंकुर्य्यात्त्रिमधुरप्लुतैः ॥
मण्डलाल्लभतेलक्ष्मींमहतींश्लाघ्यविग्रहाम् ॥ ५० ॥ कह्लारैःक्षौद्रसंयुक्तैःपूर्णा
ब्दंतद्दिनावधि ॥ जुहुयान्नित्यशोभक्त्यासहस्रंविकचैःशुभैः ॥ ५१ ॥
तद्दिनेपुचपूर्वोक्तान्भोजयेद्भक्तरूपतः ॥ तावज्जप्याद्धोमान्तेयावत्संख्यंहुतं
कृतम् ॥ ५२ ॥ चम्पकैःक्षौद्रसंसिक्तैःसहस्रहवनाद्ध्रुवम् ॥ लभतेस्वर्णनि
ष्कानांशतंमासेनपूर्ववत् ॥ ५३ ॥ पाटलैर्घृतसंयुक्तैस्त्रिसहस्रंहुनेत्तथा ॥
दर्शादिमासाल्लभतेचित्राणिवसनानिच ॥ ५४ ॥ कर्पूरचन्दनादीनिसुग
न्धीनिचमासतः ॥ वस्तूनिलभतेह्यैर्वस्तुभिर्भोगयोगिभिः ॥ ५५ ॥ शालि
भिःक्षीरसिक्ताभिर्मन्त्रविच्चशतंहुनेत् ॥ तेनशालिसमृद्धिःस्यान्मासैःषड्भिर
संशयम् ॥ ५६ ॥ तिलैर्हुतैस्तुदिवसैर्वर्षादारोग्यमाप्नुयात् ॥ स्वजन्मसूचि
पुतथादूर्वाभिर्जुहुयात्सुधीः ॥ ५७ ॥ निरातङ्कोमहाभागीशतंवर्षाणिजीव
ति ॥ गुडूचीतिलदूर्वाभिःस्वजन्मसुसदाहुनेत् ॥ ५८ ॥ चिरायुःश्रीयशो
भाग्यपुण्यदृष्ट्यादिभाग्भवेत् ॥ घृतपायसदुग्धैश्चहुनेत्तेषुत्रिपुक्रमात् ॥
५९ ॥ आयुरारोग्यविभवैर्जनमान्योभवेत्तदा ॥ सप्तम्यांकदलीहोमात्सौभा
ग्यंलभतेध्रुवम् ॥ ६० ॥ दूर्वात्रिकैस्तुप्रादेशमात्रैस्त्रिस्वादुसंयुतैः ॥ पराभा
सादब्दतोवापिरोगमुक्तःसुखीभवेत् ॥ ६१ ॥ तद्दिनेपुजपेद्विद्यांनित्यशःस

लिलंस्पृशन् ॥ सहस्रवारंतैस्तोयैःस्नानंपानंसमाचरेत् ॥ ६२ ॥ पाकाद्यम पितेनैवकुर्य्याद्रोगविमुक्तये ॥ साध्यर्क्षवृक्षसञ्चूर्णं[1]त्र्यूषणंसर्षपास्तिलाः ॥ ६३ ॥ पिष्टंचसाध्यपादोत्थरजसाचसमन्वितम् ॥ कृत्वापुत्तलिकान्तैस्तुह दयेनचसंयुताम् ॥ ६४ ॥ प्राग्वच्छित्त्वायसैःशस्त्रैस्तीक्ष्णैःपुत्तलिकांहुनेत् ॥ त्रिसहस्रंत्रियामायांसर्षपैस्तद्रसप्लुतैः ॥ ६५ ॥ शतयोजनदूरादप्यानयेद्वनि तांबलात् ॥ तान्तुपुत्तलिकामग्रमधूच्छिष्टसमन्विताम् ॥ ६६ ॥ कृतप्राणप्रति ष्ठांचश्मशानेनिखनेन्निशि ॥ क्लेशैस्तैःसविनिर्मुक्तःसुखीजीवतिभूतले॥६७॥ साध्यवृक्षेणकृत्वातांसर्षपाढ्येनचेष्टिताम् ॥ तोयमध्येनिधायैतांक्राथयेद्युतवा सरे ॥ ६८ ॥ वैरीघोरज्वरेणार्त्तःकृतेप्राग्वत्सुखीभवेत् ॥ तथैवचण्डिका गेहेयथाविधियुतोयजेत् ॥ ६९ ॥ साध्योवशःस्यान्नृपतिर्भास्करायतनेतथा ॥ तद्विधानेनसहितेशत्रुरुन्मादवान्भवेत् ॥ ७० ॥ अथातःसम्प्रवक्ष्यामित्वरिता मन्त्रमुत्तमम् ॥ ॐह्रींहूंखेंचेंक्षैंक्षःश्रींहूंक्षेंह्रींफट्मनुर्भवेत् ॥ ७१ ॥ त्वरितायां द्वादशार्णोमुनिरर्जुनईरितः ॥ विराट्छन्दश्चॐबीजंह्रींशक्तिस्त्वरितासुरी॥ ७२ ॥ ॐह्रींहूंहृदयंप्रोक्तं शिरःखेंचेंसमीरितम् ॥ क्षैंक्षः शिखाचवर्म्मश्रींह्रूंक्षें नेत्रम्प्रकीर्त्तितम् ॥ ७३ ॥ ह्रींफडस्त्रंषडङ्गानिकृत्वावर्णास्ततोन्यसेत् ॥ कभा लकण्ठहृन्नाभिगुह्योरुषुसजानुषु ॥ ७४ ॥ जङ्घयोःपादयोर्मन्त्रीसर्वेणव्याप कञ्चरेत् ॥ लसच्छ्यामतनुंरक्तपङ्कजोद्यत्पदाम्बुजाम् ॥ ७५ ॥ ताटङ्कातङ्क विद्योतिरशनानूपुरात्मकैः ॥ विप्रक्षत्रियविट्शूद्रजातिभिर्भीमविग्रहैः॥७६॥ द्विद्विक्रमादष्टनागैःकल्पितोद्यत्सुभूषणाम् ॥ पल्लवांकुशसंवीतशिखिपुच्छ कृतैःशुभैः ॥ ७७ ॥ वलयैर्भूषितभुजाम्माणिक्यमुकुटोज्ज्वलाम् ॥ बर्हिबर्ह कृतापीडांछत्रान्तान्तत्पताकिनीम् ॥ ७८ ॥ गुञ्जाफललसद्धारविलसत्कुच मण्डलाम् ॥ त्रिनेत्रांचारुवदनांमन्दस्मितमुखाम्बुजाम् ॥ ७९ ॥ वराभय करांगण्डद्वयाम्मुकुटशोभिताम् ॥ फणासहस्रसंयुक्तावथतक्षकवासुकी ॥८०॥ शङ्खपालःस्वर्णवर्णःफणाष्टकशतावृतः ॥ आसनेहेमरचितेत्वष्टसिंहवृतेभि

---

१ सोंठ, पीपर, मिर्च इन तीनों कोही त्र्यूषण कहते हैं ॥

तः ॥ ८१ ॥ आदौतुपीठमन्त्रेणदेवीपीठम्प्रपूजयेत् ॥ क्षंहुंहंवज्रदेहेतिक्षिप्तो क्त्वाचकुरुद्वयम् ॥ ८२ ॥ गर्ज्जद्वयन्तथाहुंहुंछांचपञ्चाननायच ॥ नमःपड्विंशदर्णोयंकुर्य्यादष्टदलन्ततः ॥ ८३ ॥ कर्णिकायाञ्चपूर्वादिकेशरेष्वष्टसुक्रमात् ॥ षडङ्गानिप्रणीतांचतद्वायत्रींक्रमाद्यजेत् ॥ ८४ ॥ हुंकालींखेचरींचण्डांछेदिनींक्षेपिनींस्त्रियम् ॥ हूंकारींवाशचींक्षेमकरींपूर्वादिपत्रके ॥ ८५ ॥ तद्बहिर्भूपुरद्वन्द्वंपश्चिमद्वारसंयुतम् ॥ फट्कारींपूजयेद्वारमध्येदेव्यास्तुकिङ्करीम् ॥ ८६ ॥ कृष्णांकर्बुरकेशींचहस्ततालवतींयजेत् ॥ जयांचविजयांद्वारपार्श्वयोर्वेत्रधारिणीम् ॥ ८७ ॥ तयोरग्रेकिङ्करंचगदाहस्तम्प्रपूजयेत् ॥ किङ्करायरक्षरक्षत्वरिताज्ञास्थिरोभव ॥ ८८ ॥ हुंफडष्टादशार्णोयम्मन्त्रःकिङ्करपूजने ॥ तदग्रेलोकपालांश्चतदस्त्राणिततोयजेत् ॥ ८९ ॥ गायत्र्यर्चाचसम्पूज्यादेवसान्निध्यकारिणाम् ॥ त्वरितादेविविद्महेतुणिविद्यायैधीमहि ॥ तन्नोदेविप्रचोदयात् ॥ ९० ॥ प्रणवेनविनामन्त्रोभवार्णःपरिकीर्त्तितः ॥ मोहनःसर्वलोकानान्तेनमोहननामकः ॥ ९१ ॥ प्रणवानान्तुनवकमादौचस्यात्रखार्णवान् ॥ सर्वसिद्धिप्रदायित्वात्सर्वसिद्धीश्वरोमतः ॥ ९२ ॥ आरक्तैर्वनसम्भूतैर्मनोज्ञैश्चसुगन्धिभिः ॥ धूपदीपादिभिर्नृत्यगीतैःसम्पूजयेच्छिवाम् ॥ ९३ ॥ एवम्पूजांविधायाग्रेयजेद्विद्यांसहस्रकम् ॥ शतंवाकृतहोमस्तुप्राग्वत्पूजांसमापयेत् ॥ ९४ ॥ एवंसंस्मृत्यलक्षैकम्प्रजपेन्मनुमुत्तमम् ॥ मध्वक्तबिल्वसमिधोजुहुयात्तद्दशांशतः ॥ ९५ ॥ सुगन्धिसलिलैश्चैवतर्प्पयेत्त्वरिताम्पराम् ॥ आत्मानमभिषिञ्च्याथब्राह्मणानपिभोजयेत् ॥ ९६ ॥ एवंसिद्धेमनौतस्मैनरनारीनराधिपाः ॥ नमस्क्रियाम्प्रकुर्वन्तिनात्रकार्य्याविचारणा ॥ ९७ ॥ देवदानवगन्धर्वयक्षचारणयोषितः ॥ सिद्धविद्याधराणांचयोषितोप्सरसस्तथा ॥ ९८ ॥ विस्पष्टजघनोरस्काःपृष्ठदोर्मूलमञ्जुलाः ॥ प्रस्खलत्पदविन्यासाःसंस्फुरद्दशनांशुकाः ॥ ९९ ॥ प्रलोल्यमानोमन्त्रज्ञोयदाविक्रियतेनसः ॥ तदैववाञ्छितन्तस्मैददन्तित्वरिताखिलम् ॥ ४०० ॥ सञ्जप्यकर्णयोर्विद्यांपदभ्यांचजपसिद्धये ॥ सन्ताड्यशीर्षेसहसामृतमुत्थापयेद

१ क्षंहुंहं वज्रदेहांचकुरुकुरु गर्जगर्ज हुंहुंछांपञ्चाननाय नमः ॥

सौ ॥ १ ॥ काम्यहोमविधिंवक्ष्येयथाविधिविधानवित् ॥ कृत्वायोनिंकुण्ड मध्येसमाधायाग्निमत्रतम् ॥ २ ॥ सम्पूज्यपूर्वंविधिनादेवतांविधिवत्सु धीः ॥ तिलसर्षपगोधूमशालिधान्ययवैर्हुनेत् ॥ ३ ॥ त्रिमध्वक्तैरेकशोवास मेतैर्वासमृद्धये ॥ बकुलैश्चम्पकैरक्तैः कह्लारैररुणोत्पलैः ॥ ४ ॥ कैरवैर्मल्लि काकुन्दमधुकैरिन्दिराप्तये ॥ अशोकैःपाटलैर्बिल्वैस्तत्तदाप्नोतिनिश्चितम् ॥ ५ ॥ दूर्वांगुडूचीमश्वत्थंवटमारग्वधंतथा ॥ सिताज्यलक्षकंहुत्वारोगान्मुक्तो नरोऽचिरात् ॥ ६ ॥ इक्षुजम्बूनारिकेरमोचागुडासिताहुनेत् ॥ अबलालभ तेलक्ष्मींभोक्ताचभवतिध्रुवम् ॥ ७ ॥ एतैरुदीरितैराज्यमधुक्षीरप्लुतैर्हुनेत् ॥ एकैकैर्वनितावश्यायावज्जीवंधनादिभिः ॥ ८ ॥ एतैराज्यप्लुतैर्भूयोवश्यास्स्यु र्हवनात्तथा ॥ क्षीराक्तैस्तैर्हुनेन्मर्त्योवशेतिष्ठन्त्यशेषतः ॥ ६ ॥ सर्षपाज्यैर्हुने न्मृत्युकाष्ठाग्नौवैरिमृत्यवे ॥ तद्भक्तवैरिणोनित्यम्भासैरपिचतत्कृते ॥ १० ॥ य क्षेन्धनाग्नौयोनित्यंक्षतजोत्पादितंचरुम् ॥ कारस्करघृतोपेतंफणिशीर्षस्रुचा हुनेत् ॥ ११ ॥ कृष्णांशुकशिरोवेष्टःखड्गपाणिश्चरोपवान् ॥ निशामध्येहु नेत्सद्योनिहन्तुंवैरिणंहठात् ॥ १२ ॥ मृत्युकाष्ठानलेतस्यफलैःपत्रैश्चहोमतः ॥ सप्तरात्रादरातेस्तुगजाश्वारोगमाप्नुयुः ॥ १३ ॥ चतुरंगुलजेहोमेचतुरङ्गबले नृपः ॥ सप्ताहाद्रोगमाप्नोतिदुःखार्त्तोनैवसंशयः ॥ १४ ॥ मन्त्रजप्तोदकैःसे काद्रोगशान्तिर्भविष्यति ॥ तज्जप्तमष्टधातावद्यज्जलंचुलुकोदकात् ॥ १५ ॥ होमसंख्यायावतीस्याज्जपसंख्याचतावती ॥ तत्कर्णरन्ध्रजापाच्चसद्योनश्यु र्विषग्रहाः ॥ १६ ॥ तद्यन्त्रस्थापनंचैवविषभूतारिनाशनम् ॥ अथातःसम्प्रवक्ष्या मिशिवदूतीमनुम्परम् ॥ १७ ॥ मायाचशिवदूत्यैहृत्सप्तार्णोयम्मनुर्मतः ॥ ऋ षीरुद्रोस्यगायत्रीछन्दःस्याद्देवताशिवा ॥ १८ ॥ ह्रींबीजंचनमःशक्तिःशिव दूत्यैचकीलकम् ॥ षड्दीर्घयुक्तमनुनाषडङ्गविधिरीरितः ॥ १६ ॥ तेनैवपुटि तैरङ्गैमन्त्रार्णैर्विन्यसेत्तनौ ॥ श्रोत्रनासाकपोलाक्षिनाभिपुक्रमतःसुधीः ॥ २० ॥ पृष्ठेमनसिविन्यस्यव्यापकंविद्ययाचरेत् ॥ निदाघकालमध्याह्नदिवा करसमप्रभाम् ॥ २१ ॥ नवरत्नकिरीटांचत्रीक्षणामरुणाम्बराम् ॥ नानाभरण सम्भिन्नदेहकान्तिविराजिताम् ॥ २२ ॥ शुचिस्मितामष्टभुजांस्तूयमानाम्म

हर्षिभिः ॥ पाशंखेटङ्गदांरत्नचषकंवामबाहुभिः ॥ २३॥ दक्षिणैरंकुशंखड्गंकुठ रंकमलन्तथा ॥ दधानांसाधकाभीष्टंदानोद्यमसमन्विताम् ॥ २४ ॥ ध्यात्वै वम्पूजयेद्देवींदूतींदुरितनाशिनीम् ॥ वृत्तद्वयंबहिःकुर्य्यादन्तरालेऽङ्गषट्ककम् ॥ २५ ॥ त्रिकोणस्याग्रकोणादिप्रादक्षिण्येनतद्बहिः ॥ इच्छाज्ञानक्रियाशक्ती स्त्रिपुकोणेपुपूजयेत् ॥ २६ ॥ तद्बाह्येकोणषट्केतुस्वाग्रतःपूजयेदिमाः ॥ सि द्धावाणीपूर्णसिद्धाग्रेविग्रहवतीतथा ॥ २७ ॥ नदामनोन्मतीचेतितद्बहि श्चापिपद्दले ॥ डाकिन्याद्यास्तदग्रेतुयजेदष्टदलाम्बुजे ॥ २८ ॥ शिवदूती समकास्वर्णायुधसमन्विताः॥सुमुखीसुन्दरीसारासुमनाचसरस्वती ॥ २९॥ समायासर्वगासिद्धास्तद्बाह्येष्टदलेयजेत् ॥ वागीशावरदाविश्वाविनदाविघ्न कारिणी ॥ ३० ॥ वीरविघ्नहराविद्यातदग्रेभूपुरेयजेत् ॥ द्वारस्यदक्षिणम्भा गंसमारभ्यप्रदक्षिणम् ॥ ३१ ॥ विह्वलाकर्षिणीलोलानित्यामदनमालिनी ॥ प्रमोदाकौतुकापुण्यालोकेशास्त्राणितद्बहिः ॥ ३२ ॥ लक्षञ्जपेत्प्रयत्नेनघृता क्तेनचहोमयेत् ॥ तर्प्पयेद्गन्धसलिलैरात्मानमभिषेचयेत् ॥ ३३ ॥ ब्राह्मणा न्भोजयेच्चापिगुरुंयत्नेनतोषयेत् ॥ वशयेद्वनिताहोमाद्गुग्गुलैर्मधुमिश्रितैः ॥ ३४ ॥ नारिकेलफलोपेतैर्गुडैर्लक्ष्मीमवाप्नुयात् ॥ महिषीर्महिषीराजैरजागव्यै श्चगास्तथा ॥ ३५ ॥ अवाप्नोतिहुतैराज्यैरम्लैरत्नादिसाधकः ॥ शालिपिष्ट मयींकृत्वापुत्तलींचसितायुताम् ॥ ३६ ॥ हृद्देशेन्यस्यसाध्याख्याम्पचेत्तैलाज्य योर्निशि ॥ताम्मन्त्रीवुदिवारात्रौविद्याजप्तान्तुभक्षयेत् ॥ ३७ ॥ सप्तरात्रप्र योगेणनरोनारीनृपोथवा ॥ दासवच्चसमायातिविप्रप्राणादिचार्चयेत् ॥ ३८ ॥ हयारिपुष्पैररुणैस्सितैर्वाजुहुयात्ततः ॥ त्रिसप्तरात्रान्महतीमवाप्नोतिश्रियं नरः ॥ ३९ ॥ छागमांसैस्त्रिमध्वक्तैर्होमात्स्वर्णमवाप्नुयात् ॥ क्षीराक्तैःसस्यस म्पन्नाम्भुवमाप्नोतिमण्डलात् ॥ ४० ॥ पद्माक्षैर्जुहुयाल्लक्ष्मीमवाप्नोतित्रिभिर्दि नैः ॥ समस्तापत्तारणीयम्मोहिनीविश्वमोहिनी ॥ ४१ ॥ श्रीकरीशिवरूपा ह्यप्रोक्तासर्वसमृद्धिदा ॥ अथातःसम्प्रवक्ष्यामित्रिवर्णान्तुत्रिकण्टकाम् ॥ ४२॥ हुंखेंक्षःफट्इतिमन्त्रऋष्यादित्वरितासमम् ॥ पडङ्गन्तुद्विरुक्तार्णैर्ध्यानमस्या निरूप्यते ॥ ४३ ॥ पादादिनाभिपर्य्यन्तमरुणांनाभितोगलम् ॥ नीलाङ्ग

त्वादब्रह्मरन्ध्रंश्वेतांचचतुराननाम् ॥ ४४ ॥ हस्तेपुशङ्खचक्रेचदीपौचन्द्रार्धशेखराम् ॥ अर्चयेत्त्वरितापीठेप्रयोगाद्यन्तथैवच ॥ ४५ ॥ वर्णलक्षंजपेदन्तेदशांशेनघृतंहुनेत् ॥ आत्मानन्देवतारूपंध्यात्वाकृत्वाकरद्वये ॥ ४६ ॥ शूलमुद्रांग्रहग्रस्तन्दृष्ट्वेमम्प्रजपेन्मनुम् ॥ आशुग्रहात्प्रमुच्येतनरोमन्त्रप्रभावतः ॥ ४७ ॥ ततःपरतराविद्याग्रहनिर्वापणक्षमा ॥ अथातःसम्प्रवक्ष्यामिविद्यांवश्यत्रिकशिटकीम् ॥ ४८ ॥ खेंस्त्रींक्षेंत्र्यर्णमन्त्रोयंनिखिलंत्वरितासमम् ॥ अथातःसम्प्रवक्ष्यामिकौमार्य्याविधिमुत्तमम् ॥ ४९ ॥ कौंकौमार्य्यैनमइतिषडर्णोमन्त्रईरितः ॥ मुनिर्ब्रह्माचगायत्रीछन्दःकौमारिकाभवेत् ॥ ५० ॥ देवताकौमिदंबीजंकौमार्य्येशक्तिरुच्यते ॥ मन्त्रवर्णैःषडङ्गानिहृदिध्यायेच्चदेवताम् ॥ ५१ ॥ शक्त्यक्षस्रग्वराभीतिकरांबन्धूकसन्निभाम् ॥ मयूरध्वजिनींचैवरक्तामौदुम्बरस्थिताम् ॥ ५२ ॥ हरित्कञ्चुकिकांरम्यांनानालङ्कारभूषिताम् ॥ आदावङ्गानिचाभ्यर्च्यपञ्चकोणेयजेत्पुनः ॥ ५३ ॥ अहल्यान्द्रौपदींसीतान्तारांमन्दोदरीमपि ॥ ब्राह्म्यादिकाअष्टदलेदिक्पतीनायुधानितु ॥ ५४ ॥ मुख्यापूजाभवेदस्याःकुमार्य्याएवनान्यतः ॥ कुमार्य्यभावान्यदेशेपूजेयंतुसमीरिता ॥ ५५ ॥ लक्षषट्कञ्जपःप्रोक्तःपञ्चखाद्यैस्तथाहुनेत् ॥ मधुरत्रयसंयुक्तैःसिद्धमन्त्रस्ततोभवेत् ॥ ५६ ॥ तर्पणम्मार्जनंकृत्वाकुमारीरपिभोजयेत् ॥ अथमोटनकंवक्ष्येदेवाविर्भावकारणम् ॥ ५७ ॥ पाकक्रियाप्रकर्त्तव्याचतुर्भक्ष्यसमन्विता ॥ भार्य्ययासाधकेन्द्रस्यपातिव्रत्यादियुक्तया ॥ ५८ ॥ अप्रसूताःस्त्रियःपञ्चआहूयसकुमारिकाः ॥ अलंकृताःपवित्रास्ताएकपंक्त्योपवेशयेत् ॥ ५९ ॥ तदादौविघ्नपस्थानमन्त्रेतुवटुकस्यच ॥ ताःसम्पूज्यमहत्पात्रंपवित्रंचतथाचरेत् ॥ ६० ॥ स्वस्वद्विगुणमानेनमध्वाज्यसमितादधि ॥ दुग्धंचनिक्षिपेत्तत्रनैवेद्यन्तत्रनिक्षिपेत् ॥ ६१ ॥ कुमारिकायाहस्तेनमन्थयेयुःस्त्रियश्चतत् ॥ मन्थयेयुस्स्त्रियस्तत्त्वदेवावेशःप्रजायते ॥ ६२ ॥ देवावेशेजायमानेसुगन्धोवातिसर्वतः ॥ सर्वंमनोगतंवक्तिदेवतासुप्रसीदति ॥ ६३ ॥ सिद्ध्यन्तिसर्वकार्य्याणिमोटकानांशतेनच ॥ नवैर्भवेद्विवाहस्तुपञ्चाशद्भिःसुतास्तथा ॥ ६४ ॥ अशीत्यागतराज्यासिविंशत्यालभतेधनम् ॥ अष्टोत्तरशतेनापिसाधकेनतुमे

लयेत् ॥ ६५ ॥ कौमारिकाचेष्टदेवंकुमार्य्याईरितोविधिः ॥ अथातःसम्प्रवक्ष्या मिवैष्णवीमन्त्रमद्भुतम् ॥६६॥ अकचटतपयशवैष्णव्यामन्त्रईरितः ॥ अष्टा क्षरोमुनिश्चास्यनारदोनुष्टुबुच्यते ॥ ६७ ॥ छन्दस्तुवैष्णवीदेवीन्यासःप्रण वपूर्वकः ॥ मूलमन्त्राक्षरैःकुर्य्यात्रिभिस्त्रिभिरनुक्रमात् ॥ ६८ ॥ विन्यसेदक्ष राण्यष्टावोङ्कारंचतथास्मरेत् ॥ शोणपद्मप्रतीकाशांमुक्तामूर्द्धजलम्बिनीम् ॥ ६९ ॥ लसत्काञ्चनसम्भूतकुण्डलोज्ज्वलशालिनीम् ॥ स्वर्णरत्नसमुन्नद्धकि रीटसूत्रधारिणीम् ॥ ७० ॥ कृष्णशुक्लारुणैर्नेत्रैस्त्रिभिश्चापिविभूषिताम् ॥ ब न्धूकदन्तरसनाशिरीषसुमनासिकाम् ॥ ७१ ॥ कम्बुग्रीवांविशालाक्षींसूर्य्यको टिसमप्रभाम् ॥ चतुर्भुजांविवसनांपीनोन्नतपयोधराम् ॥ ७२ ॥ दक्षिणाभ्यां कराभ्यांतुखङ्गंचजपमालिकाम् ॥ बिभ्रतींवामहस्ताभ्यांत्वभयंचवरंतथा ॥ ७३ ॥ अनल्पनागवामोरुगुप्तगुल्फांसुपल्लिकाम् ॥ गात्रेणरत्नस्तम्भंचसम्य गालम्ब्यसंस्थिताम् ॥ ७४ ॥ किमिच्छसीतिवचनंव्याहरन्तीमुहुर्मुहुः ॥ प ञ्चाननंपुरःसंस्थंनिरीक्षन्तींस्ववाहनम् ॥ ७५ ॥ ईदृशींचण्डिकांध्यात्वानमः फडितिमस्तके ॥ स्वबीजेसुमनोदद्यात्साहमेवंविचिन्तयेत् ॥ ७६ ॥ पञ्चाननं मण्डलस्थंमध्येवश्यंप्रपूजयेत् ॥ आवाहनंततःकुर्य्याद्गायत्र्याशिरसासह ॥ ७७ ॥ महामायायैविद्महेचण्डिकायैधीमहितन्नोदेवीप्रचोदयात् ॥ ७८ ॥ ततस्तुमूलमन्त्रेणगन्धंपुष्पंसदीपकम् ॥ दीपादिकन्तुदद्याच्चमोदकंपायसंत था ॥ ७९ ॥ पुष्पाञ्जलित्रयंदद्यान्मूलमन्त्रेणशोभनम् ॥ एवंसम्पूज्यमध्येतु मन्त्रेणाङ्गानिपूजयेत् ॥ ८० ॥ शैलपुत्रींचन्द्रघण्टांस्कन्दमातरमेवच ॥ काल रात्रिंचदिक्पत्रेष्वर्चयेच्चन्दनादिभिः ॥ ८१ ॥ चण्डिकामथकूष्माण्डांतथा कात्यायनींशुभाम् ॥ महागौरींचाग्निकोणनैर्ऋत्यादिषुपूजयेत् ॥ ८२ ॥ त तःसम्पूज्यलोकेशींतदस्त्राणिचमन्त्रवित् ॥ महामायांनमामीतिमूलमन्त्रेण चाष्टधा ॥ ८३ ॥ पूजयेत्पद्ममध्येतुसुमनाञ्जलिभिस्तथा ॥ अष्टभिश्चमहामायां नमामीतिचमन्त्रतः ॥ ८४ ॥ देव्यैसमर्प्यधूपादिसर्वंप्राग्वत्समापयेत् ॥ लक्ष द्वयंभवेदस्यपुरश्चरणकर्म्मतु ॥ ८५ ॥ दशांशंहोममाज्येनकर्तव्यंतर्पणादि कम् ॥ अशुचिर्नमहामायांपूजयेत्तुकदाचन ॥ ८६ ॥ अवश्यंतुस्मरेन्मन्त्रं

योतिभक्तियुतोभवेत् ॥ दन्तरक्तेसमुत्पन्नेस्मरणंनचविद्यते ॥ ८७ ॥ दुःखान्ने त्रतलेजातेक्रोधादिक्षुद्रकर्म्मणि ॥ ८८ ॥ धूमोद्गारेमैथुनेचसूतकेमृतकेचवै ॥ जलौकाचतथासर्प्पकृमिभूनागमेवच ॥ ८९ ॥ कामाज्जातेङ्गनास्पर्शेमृतेपि तरिवत्सरम् ॥ आसेव्येगुरुविप्राणांक्षीणेवीर्य्येच्युतेतथा ॥ ९० ॥ आकर्षेमा तृमरणेषण्मासंचगुरौमृते ॥ भार्य्यामृतौत्रिमासंचमासमेकंतुराजनि ॥ ९१ ॥ नस्मरेच्चमहामायांशुचितापत्यसिद्धिदा ॥ ॐनमोन्तेमहामायायैमनुर्वसुवर्ण कः ॥ ९२ ॥ प्राग्वन्मुन्यादिकंप्रोक्तंपूजाजपमुखंतथा ॥ ॐनमोन्तेचवैष्ण व्यैमन्त्रःप्रोक्तःषडक्षरः ॥ ९३ ॥ मन्त्राणैरत्रचाङ्गानिशेषंपूर्ववदाचरेत् ॥ अ थातःसम्प्रवक्ष्यामिसर्वसिद्धिप्रदंमनुम् ॥ ९४ ॥ नमस्तेअस्तुअभयेअनघेपू जितेवदेत् ॥ अमितेपदमुच्चार्य्यतदग्रेचापराजिते ॥ ९५ ॥ ततश्चसिद्धकथि तेसाधकपदमुच्चरेत् ॥ सिद्धस्मृतेमहाविद्येअनेकांसेउमेध्रुवे ॥ ९६ ॥ अरु न्धतीचसावित्रिगायत्रिजातवेदसि ॥ मानस्तोकेसरस्वतिरमणीरामणीति च ॥ ९७ ॥ धरणीधारिणीचेतिसौदामिनितथादिति ॥ दितीतिविनतेचे तिगौरिगान्धारिसंवदेत् ॥ ९८ ॥ मातङ्गिकृष्णयशोदेसत्यवादिनिसंवदेत् ॥ ब्रह्मवादिनिकालीतिकपालिनिकरालिच ॥ ९९ ॥ नेत्रसद्योमातरितितत: स्थलगतंवदेत् ॥ अन्तरिक्षगतंचेतिजलगतंवदेत्पुनः ॥ ४०० ॥ वामपादान्ते रक्षयुग्मंसर्वभूतपदंवदेत् ॥ सर्वोपद्रवेपुस्त्वाहाताराद्यन्तोमनुर्मतः ॥ १ ॥ मुनिर्नारदआख्यातोगाथाछन्दःप्रकीर्तितम् ॥ अघोरवैष्णवीदेवीचायुतंज पईरितः ॥ २ ॥ प्राग्वत्पूजादिकंसर्वंफलमस्यनिरूप्यते ॥ यस्याःप्रणश्यतेपु ष्पंगर्भश्चापततेयदि ॥ ३ ॥ म्रियतेबालकोयस्याःकाकबन्ध्याचयाभवेत् ॥ भूर्ज्जपत्रेत्विमांविद्यांलिखित्वाधारयेद्यदि ॥ ४ ॥ एतैर्दोषैर्नलिप्यन्तिशुभगा पुत्रिणीभवेत् ॥ पुमांश्चधारयेद्यश्चसोभीष्टंफलमाप्नुयात् ॥ ५ ॥ रणेराजकुले द्यूतेसङ्ग्रामेशत्रुसङ्कटे ॥ अग्निचौरभयेघोरे नित्यंतस्यजयोभवेत् ॥ ६ ॥ नि त्यंनिवारयेत्तेषांसमरेकाण्डधारिणी ॥ गुल्मशूलाक्षिरोगाणिक्षिप्रंनाशयति व्यथाम् ॥ ७ ॥ शिरोरोगज्वराणांचनाशनंसर्वदेहिनाम् ॥ अथातःसम्प्रव क्ष्यामित्रैलोक्यविजयाभिधाम् ॥ ८ ॥ वैष्णवींचन्द्रवेदाग्निवर्णांसाधकासि

द्धिदाम् ॥ एकाहिकद्व्याहिकत्र्याहिकचातुर्थिकेतिच ॥ ९ ॥ मासिकद्विमासिकेतिवातिकपैत्तिकेतिच ॥ श्लेष्मिकेसन्निपातिकेसततज्वरसम्भवे॥ १०॥ विषज्वरग्रहर्क्षादिसर्वदोषान्तकारिणि ॥ कालीसरयुगंगौरीधनयुग्मंवदेत्तथा ॥ ११ ॥ विद्याशालेतथातालमालेरुद्ररूपेपचद्वयम् ॥ विघ्ननाशयपापंचहरदुस्स्वप्नमित्यपि ॥ १२ ॥ विनाशिनिपदंब्रूयात्ततश्चकमलासने ॥ रजनीसन्ध्येदुन्दुभिनादेमानसइत्यपि ॥ १३ ॥ वेगेशङ्खिनिचक्रिणिवज्रिणीगदिनीतिच ॥ ततश्चशूलिनिवदेदपमृत्युविनाशिनि ॥ १४ ॥ विश्वेश्वरीद्राविडीतिवदेद्द्राविडिकेशिच ॥ दयितेऽतःपशुपतेर्मेदुःखेतिपदंवदेत् ॥ १५ ॥ विमर्द्दिनिपदंपश्चाद्दुन्दुभिनादसंवदेत् ॥ मोदयुक्ताशर्वरीतिकिरातिनिपदंवदेत् ॥ १६ ॥ मातङ्गीप्रणवंह्रांह्रींहूंक्षौंकुरुयुगंतथा ॥ येमांद्विषन्तिप्रत्यक्षंपरोक्षंवेतितान्वदेत् ॥ १७ ॥ सर्वान्हनयुगंप्रोक्तादमयुग्मंपचद्वयम् ॥ मर्दयद्वितयंचापितापयद्वयमेवच ॥ १८ ॥ द्विःशोषयोत्सादयद्विब्रह्माणीतिसंवदेत्॥ भूतेषुमांप्रियंचेतिकुरुद्वन्द्वाग्निवल्लभाः ॥ १९ ॥ ध्यानपूजादिकंप्राग्वत्पुरश्चर्य्यायुतद्वयम् ॥ प्राग्वद्धोमफलंचास्यसाधकःसात्त्विकोभवेत् ॥ २० ॥ मानयन्तिचभूपाद्याःशापानुग्रहणक्षमः ॥ सन्तत्याचापिसम्पत्त्याभवेत्कीर्त्यासमन्वितः ॥ २१ ॥ दर्शनादेवनश्यन्तिभूताद्याभैरवाअपि ॥ अथातःसम्प्रवक्ष्यामिवैष्णवीमपराजिताम् ॥ २२ ॥ तारमाकर्षिणिपदंआवेशिनिपदंवदेत् ॥ ज्वालामालिनिरमणीरामणीधरणीतिच ॥ २३ ॥ धारिणीतपनीत्युक्तातापिनिमदोन्मादिनि ॥ शोषिणीतिपदंप्रोक्तात्ततःसम्मोहिनीतिच ॥ २४॥ तथानीलपताकेतिमहानीलेमहाप्रिये ॥ महाग्नेयीमहाचण्डेमहारौद्रीमहेतिच ॥ २५ ॥ वज्रिणीतितथादित्याद्येचजाह्नविसंवदेत् ॥ यमघण्टेकिलिकिलिचिन्तामणिपदंवदेत् ॥ २६ ॥ सुरभिसुरोत्पन्नेचसरस्वतिपदंततः ॥ सर्वकामदुघेप्रोच्ययथाममनीषितम् ॥ २७ ॥ कार्य्यंतन्ममसिद्ध्यत्वितिस्वाहान्तोयंमनुर्मतः ॥ षड्द्वादशार्णोमुन्यादिप्राग्वत्सौख्यप्रदोमनुः ॥ २८ ॥ जपेद्वर्णशतंहोमादिकंपूर्ववदाचरेत् ॥ असिद्धसाधिनींदेवींप्रवक्ष्याम्यथवैष्णवीम् ॥ २९ ॥ ताराद्यावह्निजायान्तापृथक्चयुगषड्वदेत् ॥ तिस्रोव्याहृतयः

श्लोकःस्वधास्वाहावशानिकम् ॥ ३० ॥ यतएवागतंपापंतत्रैवप्रतिगच्छ
तु ॥ ॐबलेअबलेमहाबलेअसिद्धसाधिनि ॥ ३१ ॥ स्वाहान्तःषड्बाणवर्णो
लक्षमेकंजपःस्मृतः ॥ तृतीयाव्याहृतिश्चात्रस्वैरितिपरिकीर्तिता ॥ ३२ ॥
होमपूजादिकंप्राग्वद्येनसिद्ध्यतिदेवता ॥ ३३ ॥ स्वाहान्तैर्मन्त्रखण्डैस्तुहुने
दष्टसहस्रकम् ॥ वसुदेवसहस्राणिचावदानानितत्रतु ॥ ३४ ॥ देवकल्पोदि
तैर्द्रव्यैस्तदासादेवतावशा ॥ प्राक्कर्म्मप्रतिबद्धापिवैष्णवीत्रासतस्तुसा॥३५॥
साधकस्यमनोभीष्टंकामंयच्छतिसत्वरम् ॥ इयंदेवीमयापूर्वंललितावश्यकाम
दा ॥ ३६ ॥ उपासितातदाजम्भाललिताललिताचसा ॥ त्रयस्त्रिंशत्कोटिदे
वनायिकाललितातुया ॥ ३७ ॥ बलात्कारेणकामस्यवशीकृत्यययापुनः ॥
चेटीवन्मदधीनातुकृत्वाकन्यांतुतादृशीम् ॥ ३८ ॥ यस्यकस्यापिदेवस्यहोम
द्रव्यंविलोक्यच ॥ मन्त्रेणानेनजुहुयात्तत्तत्कर्म्मप्रसिद्ध्यति ॥ ३९ ॥ इयंहोम
प्रियादेवीभुक्तिमुक्तिप्रदायिका ॥ मारणोच्चाटनेचापिनप्रयोज्याकदाचन॥४०
अथवार्त्तालिकांवक्ष्येवाराहींशत्रुघातिनीम् ॥ ऐंग्लौंठंठमितिहूंस्वाहान्तोष्टाक्ष
रोमनुः ॥४१॥ छन्दोनुष्टुप्चकपिलोमुनिर्वार्त्तालिकासुरी ॥ वाराह्यत्रषडङ्गा
निक्रमाद्दीन्द्विन्दुभ्रूकुभिः ॥ ४२ ॥ द्वाभ्यांध्यायेत्ततोदेवींविद्युद्भासांकराम्बु
जैः ॥ दधानामंकुशंपाशंमुद्गरंशक्तिमेवच ॥ ४३ ॥ विद्युद्भासांत्रिनेत्रांचना
शयन्तींतथारिपून् ॥ अङ्गषट्कदिशाधीशायुधानीत्यावृतित्रयम् ॥ ४४ ॥ व
सुलक्षंजपित्वान्तेबिल्वपत्रैर्हयारिजैः ॥ धात्रीफलैर्भृङ्गराजैःकुशैश्चापिदशां
शतः ॥४५॥ होमःकार्य्यस्तर्प्पणादिकुर्य्याद्ब्राह्मणभोजनम् ॥ एवंसिद्धमनुर्म
न्त्रीप्रयोगान्कर्त्तुमर्हति ॥४६॥ अंकुशेनारिमानीयबध्वापाशेनतंदृढम् ॥ मुद्गरे
णघ्नतींमूर्ध्नितांस्मरन्नयुतंजपेत् ॥ ४७ ॥ वन्योपलैःप्रजुहुयादयुतंभस्मतत्क्षिपे
त् ॥ वापीकूपतडागादौतत्पानीयस्यपानतः ॥ ४८ ॥ म्रियन्तेरिपवस्तस्यवाहिं

---

१ तीसरी व्याहृति अर्थात् भूर्भुवःस्वः इनमें तीसरापद स्वःयही है उसको सबलोग जानते हीहैं फिर तीसरी व्याहृति स्वः कहीजाती है यह कथन इसलिये है कि तीसरी व्याहृति के दो भेद ग्रन्थोंमें देखेजाते हैं एक स्वः और दूसरा सुवः इससे यहांपर स्वः इसव्याहृति का स्वीकार कियाहै ॥

सन्तिपरस्परम् ॥ स्थानंत्यक्त्वाचगच्छन्तिनात्रकार्य्याविचारणा ॥ ४९ ॥ अ
थास्याःसम्प्रवक्ष्यामिमालामन्त्रंसुसिद्धिदम् ॥ ॐ ऐं ग्लौं ऐं नमःप्रोक्तातततो
भगवतीतिच ॥ ५० ॥ वाराहिवाराहियुगंवराहमुखिवाग्भवम् ॥ ग्लौंऐंअ
न्धेअन्धिनीतिनमोरुन्धेचरुन्धिनि ॥ ५१ ॥ नमोजृम्भेजृम्भिणीतिनमोमो
हेचमोहिनि ॥ नमःस्तम्भेस्तम्भिनीति नमऐंग्लौंचवाग्भवम् ॥ ५२ ॥ सर्व
दुष्टप्रदुष्टानांसर्वेषांसर्ववाग्वदेत् ॥ चित्तचक्षुर्मुखगलेजिह्वास्तम्भंकुरुद्वयम् ॥
५३ ॥ शीघ्रंवश्यंकुरुकुरुऐंग्लौंऐंठश्चतुष्टयम् ॥ हुंफट्स्वाहेतिमन्त्रोयंवेदरु
द्राक्षरःस्मृतः ॥ ५४ ॥ मुनिःशिवोस्यजगतीछन्दोवार्तालिकासुरी ॥ वारा
ह्यस्यषडङ्गानिवार्त्तालीहृदयंस्मृतम् ॥ ५५ ॥ वाराहीतिशिरःप्रोक्तंशिखावारा
हमुख्यपि ॥ अन्धेअन्धिनिवर्म्मोक्तंरुन्धेरुन्धिनिनेत्रकम् ॥ ५६ ॥ जृम्भेजृ
म्भिणिचास्त्रंततोध्यायेच्चदेवताम् ॥ रक्ताब्जकर्णिकायान्तुशवासनसमास्थि
ताम् ॥ ५७ ॥ मुण्डमालालसत्कण्ठांनीलाभान्दधतीङ्करैः ॥ अभयंमुशलञ्चा
पिफलञ्चापिवरन्तथा ॥ ५८ ॥ वराहास्यान्तुङ्गकुचांत्रिनेत्रामरुणाम्बराम् ॥
जपेन्मन्त्रंसहस्राणिबन्धूककुसुमैस्तिलैः ॥ ५९ ॥ हुनेत्समधुरैःपूजाजयादि
नवशक्तिके ॥ पीठेस्वर्णमयेरौप्येताम्रेभूर्ज्जेथवारुणे ॥ ६० ॥ लिखेद्गोरोचना
रात्रिचन्दनागुरुकुंकुमैः ॥ योनिपञ्चास्त्रषट्कोणाष्टपत्रशतपत्रकम् ॥ ६१ ॥
सहस्रदलभूविम्बंसंवीतंद्वारशोभितम् ॥ कैलासाचलमध्यस्थंपीठमेतद्विचिन्त
येत् ॥ ६२ ॥ तत्रावाह्ययजेदेवीमुपचारैर्मनोहरैः ॥ त्रिकोणमध्येदेवेशींषडङ्गा
न्यपितत्रतु ॥ ६३ ॥ वार्त्तालयर्च्याचवाराहीत्र्यस्रेवाराहमुख्यपि ॥ जम्भिनी
मोहिनीचैवस्तम्भिनीपञ्चकोणके ॥ ६४ ॥ पूजयित्वातथाचेमाःषट्कोणेपुत
तोयजेत् ॥ डाकिन्याद्याःपार्श्वयोश्चस्तम्भिनीक्रोधिनीमपि ॥ ६५ ॥ षट्
कोणाग्रेयजेच्चखड्गंछत्रन्तस्याःसुतोत्तमम् ॥ शूलंभूखड्गञ्चडमरुङ्कपालंदधतङ्करैः॥
६६ ॥ इन्द्रनीलनिभंनग्नंजटाभारविराजितम् ॥ अष्टपत्रेतुवार्त्तालीमुखंदेव्य
ष्टकंयजेत् ॥ ६७ ॥ शतपत्रेतुसम्पूज्यारुद्रार्कवसवोश्विनौ ॥ शतकोणाग्र
तःसिंहःपूज्योमहिषसंयुतः ॥ ६८ ॥ सहस्रपत्रेवाराहीम्पूजयेच्चसहस्रशः ॥
क्रोंवाराह्येनमइतिपूजामन्त्रःषडक्षरः ॥ ६९ ॥ भूपुरद्वारदेशेतुवटुकंक्षेत्रपाल

कम् ॥ योगिनींगणनाथञ्चतत्तन्मन्त्रैःप्रपूजयेत् ॥ ७० ॥ वंवटुकायहृदयंस प्तार्णोवटुकोमतः ॥ क्षंक्षेत्रपालायनमोष्टार्णःक्षेत्रपपूजने ॥ ७१ ॥ योंयोगि नीभ्योहृदयंसप्तार्णोयन्तदर्चने ॥ गंगणपतयेनमोष्टवर्णोयंगणेशितुः ॥७२॥ दिक्पालानायुधैर्युक्तान्दिक्षुसम्पूजयेत्ततः ॥ पूजान्तेवटुकादिभ्योबलिमन्त्रै र्बलिंहरेत् ॥ ७३ ॥ एंह्येहिदेवीपुत्रेतिवटुकेतिचनाथच ॥ कपिलजटाभारेति भासुरेतिवदेत्ततः ॥७४॥ त्रिनेत्रज्वालामुखेतिसर्वविघ्नांस्ततोवदेत् ॥ नाशय द्वितयंसर्वोपचारसहितंबलिम् ॥ ७५ ॥ गृह्णयुग्मन्ततःस्वाहापञ्चपञ्चाक्षरोम नुः ॥वटुकस्यबलिंदद्यादनेनश्रद्धयान्वितः॥७६॥हूंस्थानक्षेत्रपालेशसर्वकामं चपूरय ॥ स्वाहान्तःषड्दीर्घयुक्तःक्षाद्यस्त्रिद्विमितार्णकः ॥ ७७॥ क्षेत्रपालबले मन्त्रोगणेशस्याथकथ्यते ॥ गांगींगूंगमितिप्रोक्ताङेन्तंगणपतिंतथा ॥ ७८ ॥ वरवरदसर्वेतिजनंमेवशमानय ॥ सर्वोपचारसहितंबलिंगृह्णयुगंपुनः॥ ७९ ॥ स्वाहान्तःखाब्धिवर्णोयंबलिमन्त्रउदाहृतः ॥ एवंतेभ्योबलिंदत्त्वास्व स्वमुद्राःप्रदर्शयेत् ॥ ८० ॥ अंगुष्ठानामिकेमध्यानामेक्षेत्रबलौमते ॥ किञ्चि द्वक्रीकृतामध्यागणनाथबलौस्मृता ॥ ८१ ॥ अनामामध्यमांगुष्ठायोगिनी नांबलौपुनः ॥ योगिनीनांबलेर्मन्त्रःसाधनान्तेपठेदिमम् ॥ ८२ ॥ योंयो गिनीभ्यःस्वाहेतिसप्तार्णःस्रग्धरात्वियम् ॥ ८३ ॥ ऊर्ध्वंब्रह्माण्डतोवादि विगगनतलेभूतलेनिष्कलेवापातालेवानलेवा सलिलपवनयोर्यत्रकुत्रस्थिता वा ॥ क्षेत्रेपीठोपपीठादिषुचकृतपदाधूपदीपादिकेनप्रीतादेव्यस्सदानः शुभ युतविधिनायान्तुवीरेन्द्रवन्द्याः ॥ ८४ ॥ एवंसम्पूज्यसंस्तूयनत्वात्मन्यु पसंहरेत् ॥ सिद्धमन्त्रःप्रकुर्वीतप्रयोगाञ्छिवभाषितान् ॥ ८५ ॥ हरिद्र याचन्दनेनलाक्षयागुरुणापिच ॥ पूरेणविविधैर्मासैर्जुहुयादिष्टसिद्धये ॥ ८६ ॥ हरिद्रामालयाकुर्य्याज्जपंस्तम्भनकर्म्मणि ॥ स्फाटिकैःपद्मबीजैश्च

---

१ एह्येहिदेवीपुत्रवटुकनाथ कपिल जटा भार भासुर त्रिनेत्र ज्वाला मुखसर्वविघ्ना- न् नाशय नाशय सर्वोपचार सहितं बलिंगृह्णगृह्ण स्वाहा २ आं ई ऊं ऐं औं अः क्षं हूं स्थानक्षेत्रपालेश सर्वकामं पूरय स्वाहा ३ गां गीं गूं गं गणपतये वरवरद सर्वजनं मे वशमानय सर्वोपचारसहितंबलिंगृह्णगृह्ण स्वाहा ४ आगे का श्लोक स्रग्धरा छन्द है ॥

रुद्राक्षैःशुभकर्म्मणि ॥ ८७ ॥ स्वर्णादिपात्रेसुरयाबन्धूककुसुमैस्तिलैः ॥ वाराहींतर्प्पयेत्सर्वकामंसम्पूर्त्तयेन्नरः ॥ ८८ ॥ चतुश्शतन्तुतापिच्छैर्जुहुयात्स्तम्भनेच्छया ॥ लाजचूर्णतिलैःकुर्य्याद्वरमेषासृजान्वितैः ॥ ८६ ॥ पिण्डंमनोहरंतंतुपूरयेत्तर्प्पयेदपि ॥ सम्पन्नमदनंसाङ्गमेतस्यैविनिवेदयेत् ॥ ६० ॥ कुण्डेपिण्डंविधायासुंजुहुयात्तत्रवायुतम् ॥ एकविंशतिरात्रीपुलाजैरक्तसमन्वितैः ॥ ६१ ॥ एवंकृतेवैरिवृन्दंभक्ष्यतेयोगिनीगणैः ॥ एवंवार्त्तालिकायास्तुसाधनंवाममार्गतः ॥ ६२ ॥ अथातःसम्प्रवक्ष्यामिवाराहींस्वप्नसञ्ज्ञिताम् ॥ ॐह्रींनमश्चवाराहिघोरेस्वप्नंविसर्गयुक् ॥ ६३ ॥ ठद्वयंवह्निजायान्तोमन्त्रःपञ्चदशाक्षरः ॥ ईश्वरोस्यमुनिःप्रोक्तोजगतीछन्दईरितम् ॥ ६४ ॥ देवतास्वप्नवाराहीबीजंतारःप्रकीर्तितः ॥ हृल्लेखाशक्तिरुद्दिष्टाठद्वयंकीलकंमतम् ॥ ६५ ॥ द्विपंञ्चनेत्रदस्त्राक्षियुग्मार्णैश्चाङ्गकंमनोः ॥ पादयोर्व्यञ्जनेकट्योःकण्ठगण्डद्वयेतथा ॥ ६६ ॥ नेत्रयोःकर्णयोर्नासाद्वयेमन्त्रार्णकान्न्यसेत् ॥ ततोध्यायेद्घनश्यामांत्रिनेत्रामुन्नतस्तनीम् ॥ ६७ ॥ कोलास्यांचन्द्रभालांचदंष्ट्रोद्धृतवसुन्धराम् ॥ खड्गांकुशौदक्षिणयोर्वामयोश्चर्म्मपाशकौ ॥ ६८ ॥ अश्वारूढांचकोलास्यांनानालङ्कारभूषिताम् ॥ त्रिकोणेतांसमाराध्यषट्कोणेष्वङ्गदेवताः ॥ ६६ ॥ षोडशारेयजेच्छक्तीर्वक्ष्यमाणाश्चषोडश ॥ उच्चाटनीतदीशीचशोषिणीशोषिणीश्वरी ॥ ५०० ॥ मारणीमारणीशीचभीषणीभीषणीश्वरी ॥ त्रासिनीत्रासिनीशीचकम्पिनीकम्पिनीश्वरी ॥ १ ॥ आशाविवर्त्तिनीपश्चादाशाविवर्त्तिनीश्वरी ॥ वस्तुजातेश्वरीपश्चात्सर्वसम्पादिनीश्वरी ॥ २ ॥ एताःपूज्याश्चतुर्थ्यन्ताःप्रणवाद्यानमोन्तकाः ॥ यजेदष्टदलेपद्मेमातृर्भैरवसंयुताः ॥ ३ ॥ लोकपालान्दशदलेद्वितयेहेतिसंयुतान् ॥ लक्षंजपेद्दशांशेननीलपद्मैस्तिलैर्हुनेत् ॥ ४ ॥ एवंसिद्धमनुर्मन्त्रीकाम्यकर्म्माणिसाधयेत् ॥ तर्प्पयेन्नालिकेरोत्थैर्जलैस्तीर्थोद्भवैरपि ॥ ५ ॥ आनयेत्तरुणींवर्षात्सर्वकाम

---

१ ॐ ह्रीं नमोवाराहिघोरे स्वप्नं ठःठःस्वाहा २ ॐह्रींहृदयायनमः नमोवाराहिशिरसेस्वाहा घोरेशिखायैवषट् स्वप्नंकवचायहुम् ठःठः नेत्रत्रयायवौषट् स्वाहा अस्त्रायफट् ३ वराहमुखीम् ४ उच्चाटनीश्वरी ६ ॐउच्चाटन्यैनमः इसरीति से समझलेना ॥

समृद्धये ॥ कृष्णपक्षेविश्वघस्रेभूताहेवाकृतव्रतः ॥ ६ ॥ चतुष्पथान्नदीकू लद्वयात्कुलालवेश्मनः ॥ मृदमानीयधत्तूररसैःसंयुक्तयानया ॥ ७ ॥ रचये त्पुत्तलींरम्यांसाध्यासुस्थापनान्विताम् ॥ ततःप्रेताम्बरेयन्त्रंनृमार्ज्जारासृजा लिखेत् ॥ ८ ॥ पीताङ्गारयुजायोनिंषट्कोणंभूपुरान्वितम् ॥ तदन्तर्मन्त्रमा लिख्यवेष्टयेन्मनुनामुना ॥ ६ ॥ साध्यमुच्चाटययुगंशोषयद्वितयंततः ॥ स हस्त्रंचाष्टकंभूयःपूजयेत्तांसमाहितः ॥ १० ॥ एवंकृतेनरानार्य्योराजानोराज वल्लभाः ॥ सिंहागजामृगाःक्रूराभवेयुर्वशगाध्रुवम् ॥ ११ ॥ चित्तेध्यात्वानि जंकार्य्यंशयीतविजनेव्रती ॥ यथाभावितथादेवीस्वप्नेवदतिमन्त्रिणे ॥ १२॥ अथातःसम्प्रवक्ष्यामिइन्द्राणीमिष्टराज्यदाम् ॥ ईंइन्द्राण्यैनमइतिमन्त्रःप्रोक्तःष डक्षरः ॥ १३ ॥ गुरुर्मुनिश्चगायत्रीछन्दोदेवीन्द्रवल्लभा ॥ ईंबीजंशक्तिरिन्द्रा णीनमःकीलकमुच्यते ॥ १४ ॥ वज्रपाशवराभीतिहस्तांश्यामाम्बरांवराम् ॥ चतुर्दन्तगजातल्पच्छायासंस्थांहिरण्यभाम् ॥ १५ ॥ कोणषट्केष्वङ्गपूजातद्बा ह्येष्टदलेयजेत् ॥ बगलांछिन्नमस्तांचतारांदक्षिणकालिकाम् ॥ १६ ॥ धूमाव तींभद्रकालींमहाकालींप्रतिक्रियाम् ॥ तत्तन्मन्त्रैस्तुतद्बाह्येलोकेशानायुधान पि ॥ १७ ॥ लक्षषट्कंजपेन्मन्त्रंमालतीकुसुमैर्हुनेत् ॥ त्रिमध्वक्तैस्तावदेवरा ज्यार्थंराजवृक्षजैः ॥ १८ ॥ अथातःसम्प्रवक्ष्यामिस्तम्भिनींबगलामुखीम् ॥ तारंमायांसमुच्चार्य्यवदेच्चबगलामुखि ॥ १६ ॥ तदग्रेसर्वदुष्टानांततोवाचंमुखं पदम् ॥ स्तंभयेतिपदंजिह्वांकीलयेतिततःपरम् ॥ २० ॥ बुद्धिंविनाशयह्रींॐ स्वाहावेदाग्निवर्णकः ॥ नारायणोमुनिस्त्रिष्टुप्छन्दश्चबगलामुखी ॥ २१ ॥ देवीबीजन्तुहल्लेखास्वाहाशक्तिःसमीरिता ॥ विनियोगोस्यविख्यातःपुरुषार्थ चतुष्टये ॥ २२ ॥ ह्रल्लेखाहृदयम्प्रोक्तंशिरश्चबगलामुखी ॥ शिखातुसर्वदुष्टानां ततोवाचम्मुखम्पदम् ॥ २३ ॥ स्तम्भयेतिचवर्म्मोक्तंजिह्वाकीलयनेत्रकम् ॥

---

१ ओंह्रींबगलामुखिसर्वदुष्टानांवाचंमुखंस्तम्भयजिह्वांकीलयबुद्धिंविनाशयह्रींओंस्वाहा ॥
२ ओंह्रीं हृदयाय नमः, बगलामुखिशिरसे स्वाहा, सर्वदुष्टानांशिखायैवषट्, वाचंमुखंस्त-म्भय कवचायहुम्, जिह्वांकीलय नेत्रत्रयायवौषट्, बुद्धिंविनाशयह्रींओंस्वाहा अस्त्रायफट् ॥

बुद्धिविनाशयास्त्रंस्यात्षडङ्गन्यासईरितः ॥ २४ ॥ मूर्द्धिभालेभ्रुवोर्मध्येनेत्रयोः श्रोत्रयोर्नसोः ॥ गण्डद्धयेतथाचोष्ठेऽधरास्यचिबुकेषुच ॥ २५ ॥ गलेचदक्षदो मूलेतन्मध्येमणिबन्धके ॥ अंगुलीनान्तथामूलेहस्ताग्रेचैवमेवहि ॥ २६ ॥ न्यसेद्वामभुजादौचदक्षोरुमूलकेततः ॥ दक्षजानुनिगुल्फेचांगुलिमूलेपदा ग्रतः ॥ २७ ॥ गम्भीराञ्चमदोन्मत्तान्तप्तकाञ्चनसन्निभाम् ॥ चतुर्भुजांत्रिन यनांकमलासनसंस्थिताम् ॥ २८ ॥ मुद्गरन्दक्षिणेपाशंवामेजिह्वांचवज्रकम् ॥ पीताम्बरधरांसान्द्रवृत्तपीनपयोधराम् ॥ २९ ॥ हेमकुण्डलभूषांचपीतचन्द्रार्ध शेखराम् ॥ पीतभूषणभूषाञ्चस्वर्णसिंहासनस्थिताम् ॥ ३० ॥ एवंध्यात्वाच देवेशींशत्रुस्तम्भनकारिणीम् ॥ भूप्रदेशेमनोरम्येपुष्पामोदसुधूपिते ॥ ३१ ॥ गोमयेनाथसंलिप्तेमण्डलेत्वासनंचरेत् ॥ सौवर्णेवाथरौप्येवापैत्तलेवापिभूर्ज्ज के ॥ ३२ ॥ कर्पूरागुरुकस्तूरीश्रीखण्डकुंकुमैरपि ॥ लिखेद्यन्त्रंप्रयत्नेनलेख न्याहेमतारयोः ॥ ३३ ॥ मध्येयोनिंसमालिख्यतद्बाह्येतुषडस्रकम् ॥ तद्बा ह्येष्टदलम्पद्मन्तद्बाह्येषोडशच्छदम् ॥ ३४ ॥ चतुरस्रत्रयंबाह्येचतुर्द्वारोपशो भितम् ॥ यत्रनोक्तन्देवतायाःपीठंवापीठशक्तयः ॥ ३५ ॥ तत्रमायोदितंपी ठंज्ञेयास्ताएवशक्तयः ॥ तद्बीजेनयजेत्पीठंयद्वामायाणुनाथवा ॥ ३६ ॥ त त्रावाह्ययजेद्देवींसुपीतैरुपचारकैः ॥ यजेदङ्गानिषट्कोणेपूर्वद्वारादिपुक्रमात् ॥ ३७ ॥ गणेशंवटुकंचापियोगिनीःक्षेत्रपालकम् ॥ ईशानादिनिर्ऋत्यन्तंगुरु पङ्क्तिंसमर्चयेत् ॥ ३८ ॥ बगलांपूर्वपत्रेतुस्तम्भिनींचततःपरम् ॥ जम्भिनींमो हिनींचैवप्रगल्भामचलांजयाम् ॥ ३९ ॥ दुर्धर्षाकल्मषाधीराकल्याणाकालकर्षि णी ॥ भ्रामिकामन्दगमनाभोग्याख्याचैवयोगिका ॥ ४० ॥ एताःषोडशपत्रे षुगन्धपुष्पाद्वतैर्यजेत् ॥ षोडशस्वरसंयुक्ताःसम्प्रदायात्कुलागमे ॥ ४१ ॥ यजेत्तुपत्रमध्येषुकल्पितेचाष्टपत्रके ॥ पूर्वाद्याब्राह्म्यादिकाअष्टौवाहनायुधसंयु ताः ॥ ४२ ॥ लोकेशांश्चतदस्त्राणिपूजयेद्बाह्यतस्तथा ॥ योनिमध्येमूलदे वींत्रिरञ्जलिभिरर्चयेत् ॥ ४३ ॥ धूपदीपसुनैवेद्यैर्गन्धताम्बूलदीपकैः ॥ नीरा

---

१ उक्त षडङ्गन्यास को करके फिर मन्त्रके एक एक अक्षरों को मूलोक्त मूर्द्धादिस्थानों में न्यास करे ॥

ज्यविधिवत्पश्चाद्यथासंख्यंनिवेदयेत् ॥ ४४ ॥ पवित्रारोपणंकार्य्यंदमनेन तुपूजयेत् ॥ देयंचापिसिताऽन्नेनप्रत्यहंबलिपञ्चकम् ॥ ४५ ॥ हरिद्राग्रन्थिजामालापीताम्बरधरःस्वयम् ॥ पीतासनःस्मरेत्पीतंचायुतंजपमाचरेत् ॥ ४६ ॥ दशांशेनकृतेहोमेपीतद्रव्यैःप्रतर्पयेत् ॥ सर्वपीतोपचारेणमन्त्रःसिद्ध्यतिमन्त्रिणः ॥ ४७ ॥ साध्यसञ्ज्ञांसमुच्चार्य्यस्तम्भयेतिततःपरम् ॥ गतिस्तम्भकरी विद्याअरिस्तम्भनकारिणी ॥ ४८ ॥ मेधांप्रज्ञांचशास्त्रादीन्देवदानवपन्नगान् ॥ स्तम्भयेच्चमहाविद्यासत्यंसत्यंनसंशयः ॥ ४९ ॥ एकान्तेपरमेरम्ये शुचौदेशेथवागृहे ॥ कुण्डंसलक्षणंकृत्वामेखलात्रयशोभितम् ॥ ५० ॥ योनिर्वितस्तिमात्रातुषट्कर्म्माण्यत्रसाधयेत् ॥ तथाकर्षणकामस्तुलोणंत्रिमधुरान्वितम् ॥ ५१ ॥ निम्बपत्रन्तैलयुक्तंविद्वेषणकरंपरम् ॥ हरितालंहरिद्राच लवणेनचसंयुतम् ॥ ५२ ॥ स्तम्भनेहोमयेद्देवींप्रज्ञायाश्चगतेर्मतेः ॥ आसुर्याश्चापितैलेनमहिषीरुधिरेणच ॥ ५३ ॥ रिपूणांमारणार्थन्तुश्मशानाग्नौ हुनेन्निशि ॥ गृध्राणामपिकाकानांगृहधूमयुतेनवै ॥ ५४ ॥ पक्षेणजुहुयाद्देवि शत्रोरुच्चाटनायवै ॥ दूर्वाकुलालमृत्तावल्यैरण्डश्चतुरंगुलः ॥ ५५ ॥ लाजास्त्रिमधुयुक्ताश्चसर्वरोगोपशान्तये ॥ लक्षमेकंयजेद्देवींब्रह्मचारीदृढव्रतः ॥ ५६ ॥ पर्वताग्रेमहारण्येसिद्धेशैवालयेगृहे ॥ सङ्गमेचमहानद्योर्निशायामपिसाधयेत् ॥ ५७ ॥ श्वेतब्रह्मतरोर्मूलेपादुकाश्चैवकारयेत् ॥ अलक्तस्यचरागेणरञ्जिताश्चहरिद्रया ॥ ५८ ॥ अनयाविद्ययाचापिलक्षैकेनचमन्त्रिता ॥ शतयोजनमात्रन्तुसगच्छेच्चिन्तितेपथि ॥ ५९ ॥ रसंमनःशिलातालंमाक्षिकेनसमन्वितम् ॥ पिष्ट्वाभिमन्त्र्यलक्षैकंसर्वाङ्गेलेपनेकृते ॥ ६० ॥ अदृश्यकारकंतत्स्याल्लोकेचमहदद्भुतम् ॥ सुरभेरेकवर्णायाधारोत्थंक्षीरमाहरेत् ॥ ६१ ॥ शर्करामधुसंयुक्तं त्रिशतैर्मन्त्रितंप्रिये ॥ पाययित्वातुहरतेविषंस्थावरजङ्गमम् ॥ ६२ ॥ दारिद्र्यमोचनंचैवलक्षमेकञ्जपेत्ततः ॥ दशांशेनकृतेहोमेणभिर्द्रव्यैःपृथक्पृथक् ॥ ६३ ॥ अथातःसम्प्रवक्ष्यामिवाममार्गेणसिद्धिदाम् ॥ इन्द्राण्याःपरमांशक्तिंछिन्नमस्तांमहेश्वरीम् ॥ ६४ ॥ प्रणवश्चरमालज्जाबीजद्वन्द्वञ्चवाग्भवम् ॥ वज्रवैरो

१ एक रंगकी गौका दूध ॥ २ ॐ श्रीं ह्रीं ह्रीं ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहा ॥

चनीयेह्रींह्रींफट्स्वाहाघनाक्षरः ॥ ६५ ॥ भैरवोस्यमुनिःप्रोक्तोविराट्छन्दउदाहृतम् ॥ छिन्नमस्ताभवेद्देवीवाममार्गेणसिद्धिदा ॥ ६६ ॥ आंखड्गायहृदाख्यातमींसुखड्गायमस्तकम् ॥ ऊंवज्रायशिखाप्रोक्ताऐंपाशायतनुच्छदम् ॥ ६७ ॥ औं अंकुशायनेत्रंस्यादःत्रासरक्षकायच ॥ हूंहूंनवार्णोस्त्रमन्त्रः सर्वेस्युःप्रणवादिकाः ॥ ६८ ॥ स्वाहान्ताःसर्वएवैतेततोध्यानंसमाचरेत् ॥ भास्वन्मण्डलमध्यस्थांविपरीतरतेस्थिते ॥ ६९ ॥ रतिकामसमारूढांविकीर्णसकलालकाम् ॥ वामेकरेनिजशिरश्छिन्नंसन्दधतींपुनः ॥ ७० ॥ गलान्निर्गतमसृक्चपिबन्तीन्तन्मुखेनच ॥ डाकिनीवर्णिनीभ्याञ्चसखीभ्यांपरिधारिताम् ॥ ७१ ॥ आधारशक्तिमारभ्यपरतत्त्वान्तपूजिते ॥ पीठेजयाख्याविजयाअजिताचापराजिता ॥ ७२ ॥ नित्याविलासिनीषष्ठीदोग्ध्रीघोराचमङ्गला ॥ दिक्षुमध्येचसम्पूज्यानवपीठस्यशक्तयः ॥ ७३ ॥ सर्वबुद्धिप्रदेवर्णनीयेसर्वपदंततः ॥ सिद्धिप्रदेडाकिनीयेप्रणवंवज्रवैवदेत् ॥ ७४ ॥ रोचनीयेतथैह्येहिनमोन्तःप्रणवादिकः ॥ ७५ ॥ पीठमन्त्रोवेदवह्निवर्णःपीठार्चनेमतः ॥ त्रिकोणंरसकोणञ्चाष्टदलंभूपुरन्ततः ॥ ७६ ॥ बाह्यावरणमारभ्यपूजयेत्प्रतिलोमतः ॥ भूपुरद्वाह्यभागेपुत्रआदीनिप्रपूजयेत् ॥ ७७ ॥ तदन्तःसुराजादीन्द्वारेषुद्वारपान्न्यसेत् ॥ करालंविकरालंञ्चातिकालंमहाकालकम् ॥ ७८ ॥ एकलिङ्गांयोगिनीञ्चडाकिनीम्भैरवींतथा ॥ महाभैरविकेन्द्राक्षीमसिताङ्गींसंहारिणीम् ॥ ७९ ॥ षट्कोणेषुषडङ्गानित्रिकोणेछिन्नमस्तकाम् ॥ डाकिनींवर्णिनींतारवाग्भ्यांतत्पार्श्वयोर्यजेत् ॥ ८० ॥ एवम्पूजाप्रकर्तव्याजपेल्लक्षचतुष्टयम् ॥ पालाशैर्बिल्वजैर्वापिजुहुयात्कुसुमैःफलैः ॥ ८१ ॥ तर्पणादिततःकुर्य्यादेवंसिद्धोभवेन्मनुः ॥ श्रीपुष्पैर्लभतेलक्ष्मींतत्फलैश्चसमाहि

---

१ ॐ आं खड्गाय स्वाहा हृदयाय नमः ॐ ईंसुखड्गाय स्वाहा शिरसेस्वाहा ॥ ॐ ऊं वज्राय स्वाहा शिखायैवषट्, ॐ ऐं पाशाय स्वाहा कवचायहुम्, ॐ अंकुशाय स्वाहा नेत्रत्रयायवौषट्, ॐ अःत्रासरक्षकाय हूं हूं स्वाहा अस्त्राय फट् ॥ इस रीति से न्यास करना २ ओं सर्वबुद्धिप्रदेवर्णनीये सर्वसिद्धिप्रदेडाकिनीये ओं वज्रवैरोचनीये एह्येहि नमः इति मन्त्रः, ३ षट्कोण, ४ सं और हारिणी दोनों के मिलाने से संहारिणी सिद्धहुवा ५ ओं ऐं डाकिन्यै नमः ॥ ओं ऐं वर्णिन्यै नमः, इति मन्त्रः ॥

तम् ॥ ८२ ॥ वाक्सिद्धिंमालतीपुष्पैश्चम्पकैर्हवनात्सुखम् ॥ घृताक्तंछागमा संयोज्जुहुयात्प्रत्यहंशतम् ॥ ८३ ॥ मासमेकन्तुवशगास्तस्यस्युःसर्वपार्थिवाः ॥ हयारिकुसुमैःश्वेतैर्लक्षसंख्यंजुहोतियः ॥ ८४ ॥ रोगजालंपराभूयसुखीजीवे च्छतंसमाः ॥ रक्तैस्तत्सङ्ख्ययाहुत्वावशयेन्मन्त्रिणोनृपान् ॥८५॥ फलैर्हुत्वा प्नुयाल्लक्ष्मीमुदुम्बरपलाशजैः ॥ गोमायुमांसैस्तामेवविवाहंपायसान्धसा ॥ ८६ ॥ बन्धूककुसुमैर्भाग्यंकर्णिकारैःसमीहितम् ॥ तिलतण्डुलहोमेनवशये न्निखिलाङ्गनाः ॥ ८७ ॥ नारीरजोभिराकृष्टंमृगमांसैःसमीहितम् ॥ स्तम्भ नंमाहिषैर्मांसैःपङ्कजैःसघृतैरपि ॥ ८८ ॥ चिताग्नौपरभृत्पक्षैर्जुहुयादरिमृत्य वे ॥ उन्मत्तकाष्ठदीप्तेग्नौतत्फलंवायसच्छदैः ॥ ८९ ॥ द्यूतेवनेनृपद्वारेसमरे वैरिसङ्कटे ॥ विजयंलभतेमन्त्रीध्यायेद्देवींजपन्मनुम् ॥ ९० ॥ मुक्तौमुक्तांसि तांध्यायेदुच्चाटेनीलरोचिषम् ॥ रक्तांवश्येमृतौधूम्रांस्तम्भनेकनकप्रभाम्॥९१॥ निशिदद्याद्बलिंतस्यैसिद्धयेमदिरादिना ॥ गोपनीयःप्रयोगोथप्रोच्यतेसर्व सिद्धिदः ॥ ९२ ॥ भूताहेकृष्णपक्षस्यमध्यरात्रेततोगते ॥ स्नात्वारक्ताम्बरधरो रक्तमाल्यानुलेपनः ॥ ९३ ॥ आनीयपूजयेन्नारींछिन्नमस्तास्वरूपिणीम् ॥ सुन्दरींयौवनाक्रान्तांनरपञ्चकगामिनीम् ॥ ९४ ॥ सस्मितांमुक्तकबरींभूषादा नप्रतोषिताम् ॥ विवस्त्रांपूजयित्वैनांचायुतंप्रजपेन्मनुम् ॥ ९५ ॥ बलिंद त्वानिशांनीत्वासम्प्रेक्ष्यधनतोषिताम् ॥ भोजयेद्विविधैरन्नैर्ब्राह्मणान्देवताधि या ॥ ९६ ॥ अनेनविधिनालक्ष्मींपुत्रान्पौत्रान्यशःसुखम् ॥ नारीमायुश्चिरं धर्ममिष्टमन्यदवाप्नुयात् ॥९७॥ तस्यांरात्रौव्रतंकार्यंविद्याकामेनमन्त्रिणा ॥ मनोरथेषुचान्येषुगच्छेत्तांप्रजपेन्मनुम् ॥ ९८ ॥ किंबहूक्तेनविद्याया अस्याविज्ञा नमात्रतः ॥ शास्त्रज्ञानंपापनाशःसर्वसौख्यंलभेद्ध्रुवम् ॥ ९९ ॥ उषस्युत्थायश य्यायामुपविश्यजपेच्छतम् ॥ षण्मासान्तरेमन्त्रीकवित्वेनजयेत्कविम् ॥ ५०० ॥ शिवेनकीलिताविद्यातदुत्कीलनमुच्यते ॥ मायांतारपुटांमन्त्रेजपेदष्टोत्तरंश तम् ॥ १ ॥ मन्त्रस्यादौतथैवान्तेभवेत्सिद्धिप्रदातुसा ॥ एषनूनंविधिर्गोप्यः

---

१ उसी लक्ष्मीकी प्राप्तिहोती है २ दूधमें पकेहुयेअन्नसे अर्थात् जाउरसे ३ वाञ्छित ४ अँधेरे पाखकी चतुर्दशी में ५ प्राप्ते आधीरातिके समय ॥

सिद्धिकामेनमन्त्रिणा ॥ २ ॥ उदिताच्छिन्नमस्तेयंमार्गेस्मिन्नतिसिद्धिदा ॥ अथवक्ष्येषोडशार्णंचतुर्भेदंमनूत्तमम् ॥ ३ ॥ श्रींह्रींहूंऐंवज्रवैरोचनीयेह्रींचहूं प्रिया ॥ दहनस्यतिथिर्वर्णोलक्ष्मीबीजादिकोधने ॥ ४ ॥ लज्जाबीजादिको वश्येहूंमाद्येनाघनाशनम् ॥ वाग्बीजाद्येनमोक्षःस्याञ्चत्वारःप्रणवादिकाः ॥ ५ ॥ भवन्तिषोडशार्णाश्चचतुर्मुखमुखेरिताः ॥ उपास्याश्चतुराम्नायैर्मुनि र्ब्रह्मासमीरितः ॥ ६ ॥ न्यासपूजादिकंप्राग्वत्किञ्चित्काम्यमिहोच्यते ॥ गु रवेदक्षिणांदद्याद्वस्त्राणिविविधानिच ॥ ७ ॥ धर्मार्थकाममोक्षाणांगुरुरेव समाश्रयः ॥ साधितोयंमहामन्त्रःसर्वसिद्धिप्रदायकः ॥ ८ ॥ ददात्यष्टौमहा सिद्धीःकिम्पुनःक्षुल्लकाःप्रियाः ॥ भुक्तौमुक्तौचशान्तौचश्वेतपुष्पंविनिर्दिशे त् ॥ ९ ॥ काम्यकर्म्मणिसर्वत्रध्यानंस्यात्पुष्पवर्णकम् ॥ जाग्रच्छयानउ त्तिष्ठन्भुञ्जानोमैथुनेपिवा ॥ १० ॥ सदाकालंजपेन्मन्त्रमापत्तस्यनविद्यते ॥ विलिख्यस्वकरेमन्त्रंमुष्टिबन्धंसमाचरेत् ॥ ११ ॥ स्तम्भयेत्पशुशस्त्राणियाव न्मुष्टिंनमुञ्चति ॥ लिखित्वास्वकरेमन्त्रमातुरंसंस्पृशन्जपेत् ॥ १२ ॥ विमु च्यतेहठाद्रोगान्मुक्तरोगःसुखीभवेत् ॥ अथातःसम्प्रवक्ष्यामिविश्ववर्णमहाम नुम् ॥ १३ ॥ वज्रवैरोचनीयेहूंह्रींश्रींस्वाहाध्रुवादिकः ॥ ध्यानपूजादिकंप्राग्व त्किञ्चित्काम्यमुदीर्य्यते ॥ १४ ॥ शुक्लेनध्यानमात्रेणमन्त्रमेनंजपेच्चयः ॥ महोरगशतैर्दष्टंमृतमुत्थापयेन्नरः ॥ १५ ॥ रक्तेनवशमायान्तिसर्वभूतलवासि नः ॥ पीतेनस्तम्भयेन्नित्यंनौकावाजिगजादिकम् ॥ १६ ॥ लिखित्वास्वकरे मन्त्रंयावन्मुष्टिंनमुञ्चति ॥ कृष्णेनध्यानमात्रेणरिपूनुच्चाटयेन्नरः ॥ १७ ॥ मा रयेदप्ययत्नेनकृष्णध्यानान्नसंशयः॥तर्प्पणंचप्रकुर्व्वीतपयसापायसेनच॥१८॥

---

१ श्रीं ह्रीं हूं ऐं वज्रवैरोचनीयेह्रीं हूं स्वाहा यह पन्द्रह अक्षरका मन्त्रहै २ श्रीं बीजको आदिमें करके जैसे ऊपर लिखा है इसको धनकेलियेजपे ३ ह्रीं श्रीं हूं ऐं वज्रवैरोचनीये ह्रीं हूं स्वाहा इसको वशीकरण में जपे ४ पापोंके नाशनेके लिये हूं आदिकरके जैसे हूं श्रीं ह्रीं ऐं वज्रवै०इत्यादि ५ और मोक्षके लिये ऐं बीजको आदिमें करे जैसे ऐं श्रीं ह्रीं हूं वज्रवै रोचनीये ह्रीं हूं स्वाहा ६ इनहीं चारोंमन्त्रों के आदिमें एक ओङ्कार के जोड़ने से सोलह सोलह अक्षरके चार मन्त्र होजाते हैं जैसे ओं श्रीं ह्रीं हूं ऐं वज्रवैरोचनीये ह्रींहूं स्वाहा इसीरीतिसे औरोंको भी समझलेना ॥

घृतेनमधुनावापिसुरयातत्रसाधकः ॥ ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चेतियथाक्रमम् ॥ १९ ॥ तर्पणस्यविधानेनहठात्सिद्धिःप्रजायते ॥ ततोहोमंप्रकुर्वीतसमिद्भिःकुसुमैस्तथा ॥ २० ॥ श्रीफलानांचहोमेनतथैवोदुम्बरस्यच ॥ सर्वसिद्धिप्रदोहोमोविधातव्यःप्रयत्नतः ॥ २१ ॥ शतमष्टोत्तरंकृत्वाजुहुयात्तर्पणोत्तरम् ॥ पुष्पहोमविधिंवक्ष्येसर्वकामसमृद्धिदम् ॥ २२ ॥ नित्यमष्टोत्तरशतंमासषट्कंसमाचरेत् ॥ अथवालक्षमात्रन्तुकुर्य्यात्सिद्धिर्भवेद्ध्रुवम् ॥ २३ ॥ आज्ययुक्तःसामिषश्चहोमान्तेप्रत्यहंबलिः ॥ श्वेताश्वमारकुसुमैर्जीवयेत्कालदंशितम् ॥ २४ ॥ मध्वक्ततिलपुष्पैस्तुभवेत्सम्पत्तिरुत्तमा ॥ कर्णिकारैश्चसतिलैःसहस्रैःसुन्दरींलभेत् ॥ २५ ॥ साज्यैर्बन्धूककुसुमैरयुतैःसुभगोभवेत् ॥ बन्धूकपुष्पैःसतिलैस्तण्डुलैश्चविमिश्रितैः ॥ २६ ॥ रक्तचन्दनरक्ताश्वमारपुष्पैर्नृपोवशः ॥ अथातःसम्प्रवक्ष्यामितारामन्त्रान्कवित्वदान् ॥ २७ ॥ सम्यग्गुरुमुखात्प्राप्तान्वामाचारेणसाधितान् ॥ यद्यदृष्टवशाल्लोभोमन्त्रस्यास्यप्रजायते ॥ २८ ॥ ज्येष्ठपुत्रायदातव्योनान्येभ्यश्चकदाचन ॥ येमन्त्रावाममार्गेणउपास्यन्तेतुतेऽखिलाः ॥ २९ ॥ स्वपुत्रादौप्रदातव्यादक्षिणानकदाचन ॥ योविप्रःस्वकुलंहित्वादक्षिणायप्रयच्छति ॥ ३० ॥ वाममार्गोपासनन्तुतौद्वौलोकद्वयाच्च्युतौ ॥ ॐमायात्रीं हूंफडितिपञ्चवर्णोमनुर्मतः ॥ ३१ ॥ मुनिरक्षोभ्यसञ्ज्ञोस्यबृहतीछन्दईरितम् ॥ तारादेवीह्रींचबीजंहूंशक्तिश्चास्यकीर्त्तिता ॥ ३२ ॥ षड्दीर्घयुग्लज्जयात्रषडङ्गविधिरीरितः ॥ न्यासषट्कंततःकुर्य्यात्तारायाःसर्वसिद्धिदम् ॥ ३३ ॥ तत्रादौप्रथमोन्यासःश्रीकण्ठादिःपुरोदितः ॥ मातृकाक्षरमुच्चार्य्यह्रींत्रींहूंपूर्वकंवदेत् ॥ ३४ ॥ श्रीकण्ठादिसपत्नीकंनमोन्तंमातृकास्थले ॥ विन्यस्यचचतुर्थ्यन्तंन्यासोयम्प्रथमःस्मृतः ॥ ३५ ॥ अस्मिन्न्यासेक्रियमाणेदेवीमेवंविधांस्मरेत् ॥ शवपीठसमासीनांनीलकान्तिन्त्रिलोचनाम् ॥ ३६ ॥ अर्धेन्दुशेखरांनानाभूषणा

---

१ ह्रांह्रींह्रूंह्रैंह्रौंह्रः इनमेंसे एक एक अक्षर को क्रमसे षडंगों में न्यासकरे ॥ २ श्रीकण्ठादि न्यास पहलेही कहागया है इससे यहां नहीं लिखा ॥

ढ्यांचतुर्भुजाम् ॥ द्वितीयन्तुग्रहन्यासंकुर्यात्तांसमनुस्मरन् ॥३७॥ त्रिबीजस्वरपूर्वंतुरक्तंसूर्यंहृदिन्यसेत् ॥ तथापवर्गपूर्वंतुसोमंशुक्लंभ्रुवोर्द्वयोः ॥ एवम्मन्त्रविधानज्ञःकवर्गाद्यञ्चमङ्गलम् ॥ ३८ ॥ रक्तंनेत्रत्रयेचापिचवर्गाद्यंचवक्षसि ॥ बुधंश्यामंन्यसेत्पीतंटवर्गाद्यंगलेगुरुम् ॥ तवर्गाद्यंश्वेतवर्णंघस्टिकायान्तुभार्गवम् ॥ ३९ ॥ नीलवर्णंपवर्गाद्यंनाभिदेशेशनैश्चरम् ॥ शवर्गाद्यंधूम्रवर्णंध्यात्वाराहुंन्यसेन्मुखे ॥ ४० ॥ लक्षाद्यंधूम्रवर्णाभंकेतुंनाभौपुनर्न्यसेत् ॥ न्यासन्तृतीयंवक्ष्यामिबीजत्रितयपूर्वकम् ॥ ४१ ॥ समानवर्णानुच्चार्यप्रागिन्द्रायनमोस्तुके ॥ दीर्घस्वरसमायुक्तंचाग्नेय्यामग्नयेनमः ॥ दक्षिणेयमायनमःकवर्गाद्यंललाटके ॥ ४२ ॥ चवर्गाद्यंचनैर्ऋत्यांनैर्ऋत्यायनमोमुखे ॥ टवर्गाद्यंगलेपश्चाद्वरुणायनमस्त्विति ॥ ४३ ॥ न्यसेद्धृदितवर्गाद्यंवायव्यांवायवेनमः ॥ पवर्गाद्यंकुबेरायनमोवैदक्षिणेकरे ॥ ४४ ॥ वामहस्तेयवर्गादीशानेरुद्रायहेद्भवेत् ॥ शवर्गाद्यूर्ध्वकामायनमोनाभौतुविन्यसेत् ॥ ४५ ॥ हूंलक्षाद्यंपृथिव्यैहत्पादयोरितिविन्यसेत् ॥ शिवशक्त्याभिधोन्यासश्चतुर्थःकथ्यतेधुना ॥ ४६ ॥ ह्रींत्रींहूंपूर्वकःकार्यइन्द्रियाघहरःपरः ॥ ब्रह्माणंडाकिनीयुक्तंवादिसान्तार्णपूर्वकम् ॥ ४७ ॥ मूलाधारेन्यसेच्चैवचतुर्दलसमन्विते ॥ श्रीविष्णुंशाकिनीयुक्तंबादिलान्तार्णपूर्वकम् ॥ ४८ ॥ स्वाधिष्ठानाभिधेचक्रेलिङ्गस्थेषड्दलेन्यसेत् ॥ रुद्रन्तुलाकिनीयुक्तंडादिफान्तार्णपूर्वकम् ॥ ४९ ॥ न्यसेच्चक्रेदशदलेनाभिस्थेमणिपूरके ॥ ईश्वरंकादिठान्तार्णपूर्वकंकाकिनीयुतम् ॥ ५० ॥ विन्यसेद्द्वादशदलेहृदयस्थेत्वनाहते ॥ सदाशिवंशाकिनींचषोडशस्व

---

१ ह्रीं त्रीं हूं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः रक्तवर्णायसूर्यायहृदि, ह्रींत्रीं हूं यं रं लं वं शुक्लवर्णाय सोमाय नमः भ्रुवोः ॥ ह्रीं त्रीं हूं कं खं गं घं ङं रक्तवर्णाय मङ्गलाय नमः लोचनत्रये, ह्रीं त्रीं हूं चं छं जं झं ञं श्यामवर्णाय बुधाय नमः वक्षसि, इसीरीतिसे शेषको भी करलेना ॥ २ ह्रीं त्रीं हूं अं इं उं ऋं लृं एं ओं अं मूर्ध्निपूर्वे इन्द्राय नमः ह्रीं त्रीं हूं आं ईं ऊं ॠं ॡं ऐं औं अः मूर्द्धाग्नेय्यामग्नये नमः, ह्रीं त्रीं हूं कं खं गं घं ङं दक्षिणे यमायनमोमुखे, इसी रीतिसे आगे भी प्रयोग बनालेना ॥ ३ हृत् अर्थात् नमः ॥ ४ ह्रीं त्रीं हूं वं शं षं सं डाकिनी युक्तं ब्रह्मणे नमः मूलाधारे, ह्रीं त्रीं हूं बं भं मं यं रं लं शाकिनीयुक्त विष्णवे नमः स्वाधिष्ठाने, डं ढं णं तं थं दं धं नं पं फं लाकिनीयुक्त रुद्राय नमः मणिपूरके इस रीतिसे शेषकोभी समझलेना ॥

रसंयुतम् ॥ ५१ ॥ कण्ठस्थेषोडशदलेविशुद्धाख्येप्रविन्यसेत् ॥ आज्ञाचक्रे परशिवंहाकिनीसंयुतंन्यसेत् ॥ ५२ ॥ हक्षार्णपूर्वंभ्रूमध्यसंस्थितेतिमनोहरे ॥ वक्ष्येथपञ्चमंन्यासंसमस्तारिष्टनाशनम् ॥ ५३ ॥ अं[1]आंकवर्गंह्रींत्रींहूंतारायैन मउच्यते ॥ विन्यसेद्ब्रह्मरन्ध्रेथइंईंचापिचवर्गकम् ॥ ह्रींत्रींहूंनमउग्रायैललाटेचापिविन्यसेत् ॥ ५४ ॥ उंऊंटवर्गंह्रींत्रींहूंमहोग्रायैनमोभवेत् ॥ विन्यसेच्चभ्रुवोर्मध्येकण्ठेऋंॠंतवर्गकम् ॥ ५५ ॥ ह्रींत्रींहूंचवज्रायैनमोन्तंसकलेष्वपि ॥ लृंलॄंपवर्गंह्रींत्रींहूंनमःकाल्यैहृदिन्यसेत् ॥ ५६ ॥ एंऐंयवर्गंह्रींत्रींहूंसरस्वत्यैचनाभिगाम् ॥ ओंऔंसवर्गंह्रींत्रींहूंकामेश्वर्य्यैचलिङ्गके ॥ ५७ ॥ अंअःलक्षौचह्रींत्रींहूंचामुण्डायैनमोन्यसेत् ॥ मूलाधारेन्यसेत्पश्चात्पीठन्यासंसमाचरेत् ॥ ५८ ॥ आ[2]धारेकामरूपाख्यंबीजह्रस्वार्णपूर्वकम् ॥ हृदिजालन्धरंपीठंदी[3]र्घपूर्वंप्रविन्यसेत् ॥ ५९ ॥ ललाटेपूर्णगिर्य्याख्यं[4]कवर्गाद्यंन्यसेत्सुधीः ॥ उ[5]ड्डियानंचवर्गाद्यंकेशसन्धौप्रविन्यसेत् ॥ ६० ॥ भ्रुवोर्वाराणसीपीठंट[6]वर्गाद्यंसमाहितम् ॥ तँवर्गपूर्वकांन्यस्येदवन्तींनयनद्वये ॥ ६१ ॥ पवर्गपूर्वकंमायापुरीपीठंमुखेन्यसेत् ॥ कण्ठेतुमथुरापीठंयवर्गाद्यंप्रविन्यसेत् ॥ ६२ ॥ नाभावयोध्यापीठन्तुशवर्गाद्यंप्रविन्यसेत् ॥ कटौकाञ्चीपुरीपीठंदशमन्तुप्रविन्यसेत् ॥ ६३ ॥ षोढान्यासस्तुतारायाःप्रोक्तोभीष्टप्रदायकः ॥ महाप्रलयपानीयेलसच्छ्वेताम्बुजस्थिताम् ॥ ६४ ॥ कर्त्रींखड्गंनीलपद्मंकपालंदधतींकरैः ॥ सर्प्पकाञ्चींसर्प्पकरांसर्प्पकङ्कणकुण्डलाम् ॥ ६५ ॥ सर्प्पकेयूरमञ्जीरांनीलाभांरक्तलोचनाम् ॥ पिङ्गोग्रैकजटांत्र्यक्षांव्याघ्रत्वक्परिधायिनीम् ॥ ६६ ॥ दंष्ट्राकरालवदनांलल्जिह्वांस्मिताननाम् ॥ नरास्थिपट्टंबध्नन्तींभालेऽक्षोभ्यमुनीश्वराम् ॥ ६७ ॥

---

१ ह्रीं त्रीं हूं अं आं कं खं गं घं ङं तारायै नमः ब्रह्मरन्ध्रे ह्रीं त्रीं हूं इं ईं चं छं जं झं ञं उग्रायै नमः ललाटे, ह्रीं त्रीं हूं उं ऊं टं ठं डं ढं णं महोग्रायै नमः भ्रुवोः इसी रीति से आगे भी समझ लेना २ ह्रीं त्रीं हूं अं इं उं ऋं लृं एं ओं अं कामरूपपीठायनमः आधारे ३ ह्रीं त्रीं हूं आं ईं ऊं ॠं लॄं ऐं औं अः जालन्धरपीठायनमः हृदि ४ ह्रीं श्रीं हूं कं खं गं घं ङं पूर्णागिरिपीठायनमः ललाटे ५ ह्रीं त्रीं चं छं जं झं ञं उड्डियानपीठायनमः केशसन्धौ ६ ह्रीं त्रीं हूं टं ठं डं ढं णं वाराणसीपीठायनमः भ्रुवोः ७ ह्रीं त्रीं हूं तं थं दं धं नं अवन्तीपीठायनमःनयनद्वये इत्यादि ॥

स्थापयन्तींचतदधोध्यायेच्छवहृदासनाम् ॥ नानाप्रकारपूजास्यास्तन्त्रेतन्त्रे प्रकाशिता ॥ ६८ ॥ जपात्सिद्धिरवश्यंस्यात्सापूजात्रनिगद्यते ॥ संस्कारा वैदिकायस्यतस्यैवविद्यानसिध्यति ॥ ६९ ॥ लोभाद्वामोहतोदर्पाद्गृहीयाद्य दिवैदिकः ॥ उभयोःकुलनाशःस्याद्दरिद्रोजन्मजन्मनि ॥ ७० ॥ शक्रेतुवैभ वोन्मत्तेब्रह्मविष्णुमहेश्वरैः ॥ साधितावाममार्गेणदेवानांविजयायच ७१ ॥ जनयित्वावारणादीन्मानयित्वासुरेश्वरम् ॥ स्वविक्रमंख्यापयित्वाशक्रोदेव पतिःकृतः ॥७२॥ उत्कर्षकारिणीतस्माद्वाममार्गेणसाधिता ॥ कृत्वातुतान्त्रि कस्नानम्पूजार्थंजलमाहरेत् ॥ ७३ ॥ तारंवज्रोदकेहुंफट्सप्तार्णोयंजलग्रहे ॥ उपानत्पादुकेत्युक्त्वापूजकोजलमाहरेत् ॥ ७४ ॥ त्रिधाचाचमनम्पश्चाद्दने नमनुनाचरेत् ॥ तारंमायांसुविशुद्धधर्म्मसर्वपदंवदेत् ॥ ७५ ॥ पापानिशा म्याशेषेतिविकल्पानयनेतिच ॥ यस्वाहेतिचषड्विंशदर्णआचमनेमनुः ॥७६॥ ततःकुर्य्याच्छिखाबन्धम्मन्त्रेणानेनॐमणि ॥ धरिवज्रिणिशिखरिणिच सर्ववशङ्करि ॥ ७७ ॥ णिहुंफट्वह्निजायान्तस्त्रयोविंशतिवर्णकः ॥ भूमि शुद्धिंनवार्णेनततःकुर्य्यात्तुसाधकः ॥ ७८ ॥ ॐरक्षरक्षहुंचास्त्रंस्वाहामन्त्रो नवाक्षरः ॥ त्रयोदशार्णमन्त्रेणविघ्नानुत्सारयेत्ततः ॥ ७९ ॥ ॐसर्वविघ्ना नुत्सारयहुंफट्ज्वलनप्रिया ॥ मायाबीजंजपापुष्पनिभंनाभौविचिन्तयेत् ॥ ८० ॥ तदुत्थेनाग्निनादेहन्दहेत्सार्द्धंस्वपाप्मना ॥ त्रींबीजन्तुसुवर्णाभंचि न्तयेद्धृदिमन्त्रवित् ॥ ८१ ॥ पवनेनतदुत्थेनपापभस्माक्षिपेद्भुवि ॥ हूंबीज मिन्दुकुन्दाभंभालेध्यायेच्चभावतः ॥ ८२ ॥ अनयाभूतशुद्ध्यातुदेवीसादृश्य माप्नुयात् ॥ ततस्तुदेव्यापूजार्थंमन्त्रयेत्काश्यपींध्रुवम् ॥ ८३ ॥ पवित्रवज्र भूमेहूंस्वाहामन्त्रोभवाक्षरः ॥ द्वादशार्णेनमन्त्रेणभूमौकुर्य्याच्चमण्डलम् ॥ ८४ ॥ ॐआसुरेखेवज्ररेखेहूंस्वाहाप्रणवादिकः ॥ चतुर्दशार्णमनुनाकुसुमानि

---

१ ॐवज्रोदकेहुंफट् ॥ २ ॐह्रीं सुविशुद्धधर्म्मसर्वपापानिशाम्याशेष विकल्पानयनय स्वाहा ॥ ३ ॐमणिधरिवज्रिणि शिखरिणिसर्ववशङ्करिणिहुंफट् स्वाहा ॥ ४ ॐ रक्ष रक्षहुंफट् स्वाहा ॥ ५ ॐसर्वविघ्नानुत्सारयहुंफट् स्वाहा ॥ ६ ह्रीम् ॥ इस जगहसे भूत शुद्धिकी विधि कहीजाती है इसको मनकी भावना से करलेना ॥ ७ पृथिवीम् ॥ ८ ओ ङ्कारम् ९ ॐपवित्रवज्रभूमेहूंफट्स्वाहा ॥ १० ॐआसुरेखेवज्ररेखेहूंस्वाहा ॥

सुशोधयेत् ॥ ८५ ॥ यथागताभिषेकेतिसामग्रीमेपदंवदेत् ॥ तारादिर्हुंफट्
स्वाहान्तोमनुवर्णोमनुर्मतः ॥ ८६ ॥ ततःसंशोधयेच्चित्तंपञ्चार्णेनसुसाधकः॥
ॐआंह्रींवह्निगृहिणीपञ्चार्णश्चित्तशोधने॥८७॥ अथार्घ्यस्थापनार्थन्तुलेवंशो
स्काप्रमार्जयेत् ॥ भूमिंपूर्वोक्तमन्त्रेणमण्डलस्यतुमण्डलम् ॥ ८८ ॥ कुर्य्याद्वृ
त्तंत्रिकोणंचभूपुरन्तस्यबाह्यतः ॥ कुर्य्यात्तत्राधारशक्तिंकूर्म्मशेषंचसंयजेत् ॥
८९ ॥ आधारंस्थापयेत्तत्रॐह्रींफडितिमन्त्रतः ॥ आधारम्पूजयेत्तत्रवंवह्निम
ण्डलायच ॥९०॥ नमोन्तेननवार्णेनततोनरकपालकम् ॥ हुंफट्मन्त्रेणसंक्षा
ल्यस्थीर्वीजेननिवेशयेत् ॥ ९१ ॥ ततोर्चयेन्नृकपालन्तज्जपेन्मन्त्रचतुष्टयम् ॥
कालीकपालायनमोह्रांह्रींहूंपूर्वकंवदेत् ॥ एकादशाक्षरोमन्त्रस्तेनपूजादिक
म्मतम् ॥९२॥ स्त्रांस्त्रींस्त्रूंतारिणीत्युक्ताकपालायनमोन्तकः॥द्वादशार्णेनात्र
भवेत्कपालार्चाद्वितीयका ॥ ९३॥ ह्रांह्रींहूंप्रोच्यनीलाकपालायनमइत्ययम् ॥
एकादशार्णेनेनोक्ताकपालार्चातृतीयका॥९४॥मायांस्त्रींहूंस्वर्गकपालायस
र्वपदंवदेत् ॥ ततोधारायसर्वायतथासर्वोद्भवायच ॥ ९५ ॥ सर्वशुद्धिमयाये
तिसर्वासुररुधीतिच ॥ रारुणायचशुभ्रायेतिसुराभाजनायच ॥ ९६॥ देवीक
पालायनमश्चतुर्थोमन्त्रईरितः॥ षट्पञ्चाशत्कवर्णोयंकपालस्यतुपूजने ॥९७॥
ततस्तस्मिन्कपालेतुपूजयेदर्कमण्डलम् ॥ ॐसूर्य्यमण्डलायेतिनमोन्तोयंन
वाक्षरः ॥९८॥ सूर्य्यमण्डलपूजायांनृकापालेमनुर्मतः ॥ मूलमन्त्रंपठंस्तस्मि
न्सुधाबुद्ध्यासुरांक्षिपेत् ॥ ९९ ॥ गन्धपुष्पाक्षतान्क्षिप्त्वात्रिखण्डाख्यांप्रदर्श
येत् ॥ मुद्रांसातुकरौन्यस्तावंगुष्ठौकारयेत्समौ ॥७००॥ अनामान्तर्गतेकृत्वा
तर्ज्जन्यौकुटिलाकृती ॥ कनिष्ठिकेनिजस्थानेत्रिखण्डाह्वानकर्म्मणि ॥ १ ॥

---



१ ॐ यथाभिषेकसामग्री मे हुंफट्स्वाहा २ ॐआंह्रीं स्वाहा
३ त्रिकोणवृत्त भूपुरक्रम से लिखेजाते हैं ४ ॐ वं वह्निमण्डलाय नमः
५ ह्रांह्रींहूं कालीकपालाय नमः ६ स्त्रां स्त्रीं स्त्रूं तारिणीकपालायनमः
७ ह्रां ह्रीं हूं नीलाकपालायनमः ८ ह्रीं स्त्रीं हूं स्वर्गकपालाय सर्वा
धाराय सर्वायसर्वोद्भवाय सर्वशुद्धिमयाय सर्वसुररुधिरारुणाय शुभ्राय सुराभाजनाय
देवीकपालायनमः ९ ॐ ह्रीं श्रीं हुंफट् ।

ततस्तस्यांसुरायान्तुपूजयेच्चन्द्रमण्डलम् ॥ एकादशार्णेनततःशङ्खतोयन्तुम न्त्रयेत् ॥ २ ॥ ह्रींश्रींह्रौंॐसमुच्चार्य्यह्रींत्रींहुंफट्समुच्चरेत् ॥ ह्सौःहूमितिच वागाद्योमन्त्रएकादशाक्षरः ॥ ३ ॥ ह्रींबीजेनततोमद्यंकिञ्चिच्छङ्खाम्बुनाक्षि पेत् ॥ ³शङ्खमुद्रांयोनिमुद्रांशङ्खतोयायदर्शयेत् ॥ ४ ॥ तत्रवृत्ताष्टषट्कोणंध्या त्वादेवींविचिन्तयेत् ॥ पूर्वोक्तांपूजयित्वैनांमूलेनाथप्रतर्प्पयेत् ॥ ५ ॥ तर्जनी मध्यमानामाकनिष्ठाभिर्महेश्वरीम् ॥ सांगुष्ठाभिश्चतुर्वारंमहाशङ्खस्थितेज ले ॥ ६ ॥ पश्चात्तराणुनापश्चात्तर्प्यआनन्दभैरवः ॥ ॐ ह्रौंह्सौंचनमोन्तो यंमन्त्रोभैरवपूजने ॥ ७ ॥ ततस्तेनार्घ्यतोयेनप्रोक्ष्यपूजनसाधनम् ॥ योनि मुद्रांप्रदर्श्याथप्रणमेद्भवतारिणीम् ॥ ८ ॥ ततस्तांपूजयेत्पीठेपद्मेषट्कोणक र्णिके ॥ धरागृहावृतेपीठमादावर्च्यक्षशक्तिकम् ॥ ९ ॥ ऐंक्लौंसरस्वतीयु क्तायोगपीठात्मनेनमः ॥ चतुर्दशाक्षरोमन्त्रःप्रोक्तःपीठस्यपूजने ॥ १० ॥ मेधाप्रज्ञाप्रभाविद्याधीधृतिस्मृतिबुद्धयः ॥ विद्येश्वरीतिसम्प्रोक्तापीठस्यनवश क्तयः ॥ ११ ॥ महीगृहचतुर्दिक्षुगणेशंवटुकन्तथा ॥ क्षेत्रपालंयोगिनींचध्या त्वासम्यक्प्रपूजयेत् ॥ १२ ॥ पाशांकुशौत्रिशूलंचकपालंदधतींकरैः ॥ अ लङ्कारचयोपेतंगणेशंप्राक्प्रपूजयेत् ॥ १३ ॥ कपालशूलहस्ताभ्यांदधतंसर्प भूषणम् ॥ श्वयूथवेष्टितंरम्यंवटुकंदक्षिणेऽर्चयेत् ॥ १४ ॥ डमरुंवसित्रिशूलां श्चकपालंदधतंकरैः ॥ कृष्णंदिगम्बरंक्रूरंक्षेत्रपंपश्चिमेयजेत् ॥ १५ ॥ डमरुं पाशलिङ्गंचकपालंदधतींकरैः ॥ रक्तमाल्यांरक्तवस्त्रांयोगिनीमुत्तरयजेत् ॥ १६ ॥ ततःसम्पूजयेद्देव्यामस्तकेक्षोभ्यसञ्ज्ञितम् ॥ मुनिंद्वादशवर्णेनमनुनासनिग द्यते ॥ १७ ॥ ⁵अक्षोभ्यवज्रपुष्पंचप्रतीच्छानलवल्लभा ॥ अथसम्पूजयेत्कोणप

---

१ वं सोममण्डलायनमः इस मंत्र से २ ऐं ह्रीं श्रीं ह्रौं ॐ ह्रीं त्रीं हुंफट् ह्सौः हुम् इति एकादशाक्षरो मन्त्रः ३ वामांगुष्ठंतुसंगृह्यदक्षहस्तस्यमुष्टिना । कृतोत्तानांतथामुष्टिमंगुष्ठंतुप्रसारयेत् ॥ वामांगुलयस्तथाश्लिष्टाः संयुताः सुप्रसादिताः ॥ दक्षिणांगुष्ठकेलग्नामुद्राशङ्खस्यभूतिदा ४ मिथःकनिष्ठिकेबद्ध्वातर्जनीभ्यामनामिके ॥ अनामिकोर्ध्वसंश्लिष्टदीर्घामध्यमयोरधः । अंगुष्ठाग्रद्वयंन्यस्ययोनिमुद्रेयमीरिता ५ अक्षोभ्यवज्रपुष्पंप्रतीच्छस्वाहा ॥

द्वेदेव्याःषडङ्गकम् ॥ १८ ॥ ततश्चाष्टदलेदिक्षुयजेद्वैरोचनामितौ ॥ पद्मना भंशङ्खपाण्डुरंपूर्वादौसमर्चयेत् ॥ १९ ॥ आग्नेयादिकपत्रेषुलामकांमाम कान्तथा ॥ पाण्डुरांतारकांचापिभूगृहद्वारतोर्चयेत् ॥ २० ॥ प्रागादिषुक्र मेणैवपद्मान्तकयमान्तकौ ॥ विघ्नान्तकंनरान्तंचवक्ष्यन्तेमनवोर्चने ॥ २१ ॥ आदौप्रणवमुच्चार्य्यनामबीजंसमुच्चरेत् ॥ सम्बुद्धयन्तंचतन्नामवज्रपुष्पम्प्रती च्छच ॥ २२ ॥ स्वाहान्तोमनुराख्यातोद्वादशानामयंक्रमः ॥ शक्रादीं श्चापिवज्रादीन्पूजयेत्तदनन्तरम् ॥ २३ ॥ ततश्चनित्यपूजान्तेन्वहंदेव्यैब लिंहरेत् ॥ मद्याम्बुमीनपिशितमुद्रापिष्टम्भवेद्यथा ॥ २४ ॥ तृप्तिःस्वस्यतुतन्मा नन्तत्रमन्त्रोनिगद्यते ॥ श्रीमदेकजटेनीलसरस्वतिमहोग्रच ॥ २५ ॥ तारेदे विखखेत्युक्त्वासर्वभूतपिशाचरा ॥ क्षसान्ग्रसग्रसममजाड्यंछेदयछेदय ॥ २६ ॥ श्रींह्रींफडूवह्निजायान्तस्तरमायादिकोमनुः ॥ भवेद्विपञ्चाशदर्णःपूजैवेष्टार्णता मियात् ॥ २७ ॥ रतंकुर्वन्नदन्भक्ष्यमनेकन्दधिमध्वपि ॥ मद्यंमांसञ्चताम्बूलञ्ज पेल्लक्षचतुष्टयम् ॥ २८ ॥ दशांशंजुहुयाद्रक्तपद्मक्षीराज्यलोलितैः ॥ आदौ यन्त्रम्पूजयित्वाजपस्थानेजपञ्चरेत् ॥ २९ ॥ नारींपश्यन्स्पृशन्गच्छन्नमहा निशिबलिंहरेत् ॥ नकार्य्यःसुश्रुवांद्वेषोयत्नतःपरिपूजयेत् ॥ ३० ॥ जपेन कलनियमोनस्थितौसर्वदाजपेत् ॥ श्मशानेशून्यसदनेदेवागारेथनिर्जने ॥ ३१ ॥ पर्वतेवनमध्येवाशवमारुह्यमन्त्रवित् ॥ समरेशत्रुनिहतंयदाषण्मासि कंशिशुम् ॥ ३२ ॥ विद्यांसंसाधयेच्छीघ्रंसाधितैवम्प्रसिद्ध्यति ॥ एवंसिद्धमनु र्मन्त्रीप्रयोगान्कर्त्तुमर्हति ॥ ३३ ॥ जातमात्रस्यबालस्यदिवसत्रितयादधः ॥ जिह्वायांविलिखेन्मन्त्रम्मध्वाज्याभ्यांशलाकया ॥ ३४ ॥ सुवर्णकृतयायद्वा

---

१ पूर्वादिचारदिशाओं में पूजे जैसे ॐ वैं वैरोचनवज्रपुष्पं प्रतीच्छस्वाहा, ॐ अं अमितवज्रपुष्पं प्रतीच्छ स्वाहा, ॐ पं पद्मनाभवज्र० ॐ शं शङ्खपाण्डुरवज्रपुष्पंप्रतीच्छस्वा हा २ आग्नेयादि चार कोणोंमें, ॐ लां लामके वज्रपुष्पंप्रतीच्छस्वाहा, ॐ मां मामके वज्र० ॐ पां पाण्डुरे वज्र० ॐ तां तारके वज्रपुष्पं प्र० ३ भूपुरके पूर्वादिक चारोंद्वारों में क्रमसे ॐ पं पद्मान्तकवज्रपुष्पं प्रतीच्छ स्वाहा, ॐ यं यमान्तकवज्र०, ॐ विं विघ्नान्तकवज्र०, ॐ नं नरान्तकवज्रपुष्पं प्रतीच्छस्वाहा ४ ॐ ह्रीं श्रीमदेकजटे नीलसरस्वतिमहोग्रतारेदेविखख सर्वभूतपिशाचरान्क्षसान्ग्रसग्रसममजाड्यंछेदयछेदय श्रींह्रींफट्स्वाहा ॥

मन्त्रीधवलदूर्वया ॥ गतेष्टमेब्देबालोसौजायतेकविराड्ध्रुवम् ॥ ३५ ॥ सूर्य्यग्रहेमवेत्काष्ठम्पद्मयुक्तसरोवरे ॥ तत्रत्यजलमध्येतत्समानीयतटेपुनः ॥ ३६ ॥ दन्तैर्धृत्वाततःकुर्य्याल्लेखनींद्वादशांगुलाम् ॥ मधुतैलसुराभिश्चविलिखेत्पद्मिनीदले ॥ ३७ ॥ मूलमन्त्रंमातृकार्णैर्मन्त्रीसम्यक्प्रवेष्टयेत् ॥ निखायतद्दलं कुण्डेचतुरस्रेसमेखले ॥ ३८ ॥ संस्थाप्यपावकन्तत्रहुनेन्मूलानुनाततः ॥ गोदुग्धमदिराक्तन्तुरक्तपद्मसहस्रकम् ॥ होमान्तेतेनमनुना पूर्वद्रव्यैर्बलिंहरेत् ॥ पद्मेपद्मेमहापद्मेपद्मावतिचइत्यपि ॥ ३९ ॥ स्वाहान्तःप्रणवादिश्चमन्त्रोयं षोडशाक्षरः ॥ ततोनिशीथेपिबलिंपूर्वोक्तमनुनाहरेत् ॥ ४० ॥ एवंकृतेपण्डितानामजेयःकविराड्भवेत् ॥ निवासोभारतीलक्ष्म्योर्जनतारञ्जनक्षमः ॥४१॥ गोरोचनामनेनैवमनुनातुशतञ्जपेत् ॥ ललाटेतिलकंकृत्वायंपश्येत्सतुदासवत् ॥ ४२ ॥ श्मशानाङ्गारमाहृत्यशर्वर्य्यांभौमवासरे ॥ कृष्णाम्बरेणसंवेष्ट्य निबद्धंरक्ततन्तुभिः ॥ ४३ ॥ शताभिजसम्मूलेननिक्षिपेद्वैरिवेश्मनि ॥ उच्चाटयतिसप्ताहात्सकुटुम्बंनसंशयः ॥ ४४ ॥ क्षाराढ्यर्योनिशामन्त्रंलिखित्वा पौरुषेस्थिनि ॥ रविवारेनिशीथिन्यांसहस्रमभिमन्त्रयेत् ॥ ४५ ॥ तत्क्षिप्तंशत्रुभवनेमण्डलभ्रंशकंभवेत् ॥ क्षेत्रेक्षिप्तंसस्यहान्यैजवद्धुरगालये ॥ ४६ ॥ अथातःसम्प्रवक्ष्यामिदैत्यानांवरसिद्धये ॥ ब्रह्मणोपासितान्तारांबल्यादिभिरुपासिताम् ॥४७॥ ॐ श्रीं ह्रीं हूंसमुच्चार्य्यह्रींहुंफट् सप्तवर्णकः ॥ मुनिर्ब्रह्माचगायत्रीछन्दस्ताराचदेवता ॥ ४८ ॥ न्यासांस्तुपूर्ववत्कुर्य्याद्ध्यानमस्यानिरूप्यते ॥ श्वेताम्बरांचन्द्रकान्तिंचन्द्रार्धकृतशेखराम् ॥ ४९ ॥ कर्त्तरींचकपालंच कराभ्यांदधतींभजे ॥ नानालङ्कारशोभाढ्यांत्रीक्षणाम्पद्मसंस्थिताम् ॥ ५० ॥ जपपूजादिकंत्वस्याःसर्वं पूर्ववदाचरेत् ॥ मधुपुष्करपत्रान्नहोमाद्विद्यानिधिर्भवेत् ॥ ५१ ॥ रक्तांवश्येस्वर्णनिभांस्तम्भनेमारणेऽसिताम् ॥ उच्चाटनेधूम्र

---

१ जङ्गली दूबसे २ सूर्य्यग्रहण समय में कमलयुक्त सरोवरके जल में उतरातीहुई लकड़ी को दांतों से पकड़कर तीर में लेआवे उसी की कलमकरके तेल मधु मद्यसे पुरैनपत्र में मूलमंत्र को मातृकाक्षरों से वेष्टित लिखकर उक्त कुंड में गाड़ के मूलमोक्त द्रव्यसे होमकरे ३ मङ्गलवारकी रातिमें ४ क्षारों से युक्त हल्दी से ५ पुरुषकी हड्डीमें ६ ॐ श्रीं ह्रीं हूं हुंफट् हुए ॥

वर्णांशान्तौश्वेतांविचिन्तयेत् ॥ ५२ ॥ अथातःसम्प्रवक्ष्यामितारकस्यवरा
यतु ॥ ब्रह्मणोपासितान्तारांद्वादशार्णांसुदुर्लभाम् ॥ ५३ ॥ वांचंलज्जां
रमांकामं ह्सौः हुंउग्रचोच्चरेत् ॥ तारेहुंफडितिप्रोक्तोमन्त्रोयंद्वादशाक्षरः ॥ ५४ ॥
अथातःसम्प्रवक्ष्यामिब्रह्मणासमुपासिताम् ॥ हिरण्यकशिपोर्दातुंवरंसप्तार्ण
सम्मिताम् ॥ ५५ ॥ प्रणवंकवचंमायांक्लींप्राक्कूटंचपञ्चमम् ॥ हुंफडन्तःसर्वम
स्यन्यासाद्यम्पूर्ववद्भवेत् ॥ ५६ ॥ अथातःसम्प्रवक्ष्यामिहरिणायाह्युपासिता ॥
बौद्धमार्गप्रचारार्थंसिद्धिदाद्वादशाक्षरी ॥ ५७ ॥ उपासिताब्रह्मणायांतस्याः
कूटेतुपञ्चमे ॥ सौरुक्त्वासाधिताविद्याद्वादशार्णातिबुद्धिदा ॥ ५८ ॥ यत्प्र
भावाद्दिवोदासःकश्याउच्चाटितःपुरा ॥ तस्यास्तुपूर्ववज्ज्ञेयंन्यासध्यानजपा
दिकम् ॥ ५९ ॥ अथातःसम्प्रवक्ष्यामिसप्तार्णांरामसेविताम् ॥ लक्ष्मींप्रभृतिरा
सार्थंतेनमँत्तस्तदाहली ॥ ६० ॥ ब्रह्मोपासितसप्तार्णमध्येकूटंतुपञ्चमम् ॥
त्यक्त्वातत्रसौश्चोक्त्वाविद्यारामेणसेविता ॥ ६१ ॥ सर्वसिद्धिकरीचेयंशत्रु
संहारकारिणी ॥ ध्यानपूजादिकम्प्राग्वत्प्रयोगादिकमेवच ॥ ६२ ॥ अ
थातःसम्प्रवक्ष्यामिनारायणसुसेविताम् ॥ पञ्चार्णांयत्प्रभावेणदैत्यानांकद
नंकृतम् ॥ ६३ ॥ त्रींहुंफट्क्लींवाग्भवंचपञ्चार्णासर्वसिद्धिदा ॥ एषांत्र
याणांतुमुनिर्विष्णुःप्राग्वज्जपादिकम् ॥ ६४ ॥ अथातःसम्प्रवक्ष्यामिमँया
यासमुपाश्रिता ॥ दत्ताचरविणादित्यैसाविद्यातुषडक्षरी ॥ ६५ ॥ ॐ ह्रीं
हूं ह्रीं हूं फडितिमुनिः सोहंचपूर्ववत् ॥ ज्ञेयंन्यासादिकंपूर्वंप्रयोगादिचपूर्वव
त् ॥ ६६ ॥ अथान्यंसम्प्रवक्ष्यामिचास्याःपञ्चाक्षरंमनुम् ॥ जलन्धरवधार्थंतुम
यासिद्धीकृतंपुरा ॥ ६७ ॥ त्रीं हुं मायाहुंफडितिमनुःपञ्चाक्षरोमतः ॥ मया
पञ्चमुखैर्जप्तोदक्षमार्गेणभोःसुराः ॥ ६८ ॥ देवांशेषुचविप्रेषुतथाधर्म्मपरेषु
च ॥ यमानांनियमानांचतत्रस्थानान्यदेवता ॥ ६९ ॥ वाममार्गाबाधिता

---

१ ऐं ह्रीं श्रीं क्लीं ह्सौः उग्रतारे हुंफट् २ ॐ हुं ह्रीं ह्रीं क्लीं सौ हुंफट् ३ ऐं ह्रीं श्रीं क्लीं सौः हुं
उग्रतारेहुंफट् ४ ॐ हुं ह्रीं क्लीं सौः हुंफट् ५ लक्ष्मी आदि गोपियों के संग रासलीला करने के
लिये उसी मन्त्र से मतवाले बलदेवजी प्रवृत्त हुये इहां राम व हली बलदेव जी का नाम
है ६ त्रीं हुंफट् क्लीं ऐं ७ इन तीनों मन्त्रोंके विष्णुऋषिहैं ८ सो मैं इसमन्त्रका मुनिहूं ९ ह्रीं ॥

स्वकार्य्यंसाधयितुंक्षमाः ॥ दक्षिणाराधितादेवारणसाहाय्यकारकाः ॥ ७० ॥ तेजोनिधीन्रिपून्हत्वानयन्तिब्रह्मशाश्वतम् ॥ क्षत्रियाणांक्षयार्थंतुमयारामायचार्पिता ॥ ७१ ॥ पञ्चामृतंसुरास्थानेमांसस्थानेचसूरणम् ॥ मत्स्यस्थानेखण्डकाद्यंधर्म्मपत्न्यांरतंमतम् ॥ ७२ ॥ अन्यच्चपूर्ववद्देवाभुज्यन्तेतत्प्रकाशितम् ॥ कस्तुतारांनसेवेतलोकद्धयपरीप्सया ॥ ७३ ॥ अस्याःपूजादिकंप्राग्वद्विशेषोत्रनिरूप्यते ॥ तारायाःसद्गुरौसिद्धिःस्त्रीरतेभ्रान्तताभवेत् ॥ ७४ ॥ अथातःसम्प्रवक्ष्यामिमहातारामनुंसुराः ॥ सिद्धामार्गद्धयेनापिवर्णवर्णाधिकारतः ॥ ७५ ॥ [1]त्रींह्रींह्रांहुंनमस्तारायैमहापदमुच्चरेत् ॥ तारायैसकलेत्युक्त्वादुस्तरांस्तारयद्धयम् ॥ ७६ ॥ तरद्धयंवह्निजायाद्धात्रिंशार्णोमनुर्मतः ॥ न्यासपूजाजपाद्यंतुप्राग्वत्सर्वंसमाचरेत् ॥ ७७ ॥ अथातःसम्प्रवक्ष्यामिदेवींदक्षिणकालिकाम् ॥ [2]क्रींक्रींक्रींहूंसमुच्चार्य्यहूंलज्जाद्धयमुच्चरेत् ॥ ७८ ॥ दक्षिणेकालिकेपश्चात्पुनर्बीजानिसंवदेत् ॥ क्रमेणैवाग्निगृहिणीमन्त्रोद्धाविंशदर्णकः ॥ ७९ ॥ भैरवोस्यमुनिःप्रोक्तस्त्रिष्टुप्छन्दउदाहृतम् ॥ देवताकालिकादेवीह्रींबीजंहूंचशक्तिका ॥ ८० ॥ [3]दीर्घषट्कयुताद्येनबिन्दुनासंयुतेनच ॥ षडङ्गानिन्यसेन्मन्त्रीद्विःसकृद्वायथाविधि ॥ [4]पंचाशद्भिर्मात्रिकार्णैर्हृदयंचभुजद्वयम् ॥ दशभिर्दशभिःकुर्य्यात्तथाजङ्घाद्वयंक्रमात् ॥ ८१ ॥ [5]ऐष्वङ्गेषुचमूलेनपञ्चभिःपञ्चभिःशरैः ॥ सप्तभिश्चापिमन्त्रार्णैर्व्यापकंचसमस्ततः ॥ ८२ ॥ करालवदनांघोरांमुक्तकेशींचतुर्भुजाम् ॥ कालिकांदक्षिणांदिव्यांमुण्डमालविभूषिताम् ॥ ८३ ॥ खड्गाभयवराञ्छिन्नंमुण्डंचदधतींकरैः ॥ महामेघप्रभां

---

१ त्रीं ह्रीं ह्रां हुंनमस्तारायै महातारायै सकलदुस्तरान् तारय तारय तर तर स्वाहा ॥
२ क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ३ क्रां क्रीं क्रूं क्रैं क्रौं क्रः इन छह बीजोंको षडङ्गमें न्यासकरै जैसे, क्रां हृदयायनमः, क्रीं शिरसेस्वाहा इत्यादि ४ अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं हृदये, एं ऐं ओं औं अं अः कं खं गं घं दक्षभुजे, ङं चं छं जं झं ञं टं ठं डं ढं वामभुजे, णं तं थं दं धं नं पं फं बं भं दक्षजङ्घायाम्, मं यं रं लं वं शं षं सं हं क्षं वामजङ्घायाम् ५ क्रीं क्रीं क्रीं हूं हूं नमो हृदये, ह्रीं ह्रीं दक्षिणे नमो दक्षभुजे कालिके क्रीं क्रीं वामभुजे, क्रीं हूं हूं ह्रीं ह्रीं स्वाहापादद्वये इस न्यासको करके फिर समस्त मूलमन्त्रको पढके व्यापक न्यासकरे ॥

श्यामांतथाचैवदिगम्बराम् ॥ ८४ ॥ कण्ठावसक्तमुण्डालीगलद्रुधिरचर्चिताम् ॥ कर्णावतंसतानीतशवयुग्मविराजिताम् ॥ ८५ ॥ घोरदंष्ट्राकरालास्यां पीनोन्नतपयोधराम् ॥ शवानांकरसङ्घातैःकृतकाञ्चींहसन्मुखीम् ॥ ८६ सृक्कद्वयगलद्रक्तधाराविस्फुरिताननाम् ॥ घोररूपांमहारौद्रींश्मशानालयवासिनीम् ॥ ८७ ॥ दन्तुरांदक्षिणांव्यापिमुक्तालम्बिकचोच्चयाम् ॥ शवरूपमहादेवहृदयोपरिसंस्थिताम् ॥ ८८ ॥ शिवाभिर्घोररावाभिश्चतुर्दिक्षुसमन्विताम् ॥ महाकालसमायुक्तांसर्वोपरिरतान्विताम् ॥ ८९ ॥ सुखप्रसन्नवदनां स्मेरारुणसरोरुहाम् ॥ एवंसञ्चिन्तयेत्कालींश्मशानालयवासिनीम् ॥ ९० ॥ आदौविरचयेत्पञ्चत्रिकोणानिततःपरम् ॥ पद्ममष्टदलंबाह्ये भूपुरंतत्रपूजयेत् ॥ ९१ ॥ ततोमध्यत्रिकोणान्तर्न्यसेद्देवींचदक्षिणे ॥ महाकालंचतत्रैव न्यसेदेषविधिःस्मृतः ॥ ९२ ॥ ततःपूर्वादिकोणेषुवामावर्त्तेनपूजयेत् ॥ कालींकपालिनींकुल्लांप्रथमेतुत्रिकोणके ॥ ९३ ॥ नीलांघनांबलाकांचद्वितीयेतुत्रिकोणके ॥ कुरुकुल्लाविरोधिन्यौविप्रचित्तांतृतीयके ॥ ९४ ॥ उग्रामुग्रप्रभांदीप्तांचतुर्थेतुत्रिकोणके ॥ मात्रांमुद्रांमित्रांचैवत्रिकोणेपञ्चमेयजेत् ॥ ९५ ॥ सर्वाःश्यामाअसिकरामुण्डमालाविभूषणाः ॥ तर्ज्जनींवामहस्तेनधारयन्तिचसस्मिताः ॥ ९६ ॥ ब्राह्मीनारायणीमाहेश्वरीमुण्डाकुमारिका ॥ अपराजिताचवाराहीनारसिंहीदलाष्टके ॥ ९७ ॥ सम्पूज्ययत्नतश्चापिबलिंसम्प्रतिपादयेत् ॥ हृदयंचापिदेवेश्यैसमर्प्यविधिवद्बुधः ॥ ९८ ॥ निर्माल्यंवैशुचौदेशेधारयेच्चसदैवहि ॥ एकलक्षंजपेन्मन्त्रंहविष्याशीदिवाशुचिः ॥ ९९ ॥ अशुचि

---

१ अब यन्त्र पूजाकी विधि कही जातीहै षट् कोण तीन त्रिकोण फिर वृत्तपर अष्टदल उसके आगे भूपुर बनावे षट्कोण के बीच में महाकाली तथा महाकालकी अन्यत्र और देवताओं की पूजा होती है षट्कोणों में काली, कपालिनी, कुल्ला, कुरुकुल्ला, विरोधिनी, विप्रचित्ता इनको पूजे पर तीन त्रिकोणों के तीन तिरको नवकोण होते हैं उनमें नवशक्तियों की पूजाकरे वे ये हैं उग्रा, उग्र प्रभा, दीप्ता, नीला, घना, बलाका, मात्रा, मुद्रा, मित्रा, तब अष्टदलों में ब्राह्मी, नारायणी, माहेश्वरी, मुण्डा इसीका चामुंडा नाम है कुमारिका अर्थात् कौमारी, अपराजिता, वाराही, नारसिंही भूपुरमें इन्द्रादि दिक्पाल और उनके वज्रादि आयुधोंकी पूजा होती है यह विधि ग्रन्थान्तरों में स्पष्टहै ॥

श्चतथारात्रौलक्षमेनंजपेन्मनुम् ॥ दशांशंहोमयेदाज्यैस्तर्पयेदभिषिञ्चयेत् ॥ ८०० ॥ होमश्चतर्प्पणंपूजाकर्त्तव्याचविशेषतः ॥ ततःप्रयोगान्कुर्वीतकाम्यानिष्टफलाप्तये ॥ १ ॥ नागयज्ञोपवीतिनींचन्द्रार्धकृतशेखराम् ॥ देवीमेवंचसञ्चिन्त्यमहाकालसमीपगाम् ॥ २ ॥ हूंहूंक्रींचतथाक्रींक्रींपञ्चबीजानियोजयेत् ॥ अन्तेतुमूलमन्त्रस्यजपपूजादिकंचरेत् ॥ ३ ॥ वश्यकामःसाधकश्चेद्रक्तपुष्पैःप्रपूजयेत् ॥ कामबाणसमाविद्धानिर्लज्जाविह्वलाःस्त्रियः ॥ ४ ॥ स्वंस्वंसन्त्यज्यभर्त्तारमालिङ्गन्तिसदैवतम् ॥ एवमाकर्षणेयोज्यमादौहूंक्रीं ततःपरम् ॥ ५ ॥ लोहितांशूलहस्तांचमहाकालाग्रसंस्थिताम् ॥ ध्यात्वासम्पूजयेत्पुष्पैःपीतैराकर्षणंभवेत् ॥ ६ ॥ कपिलांद्विभुजांकर्त्रींसव्येदक्षेकपालकम् ॥ ध्यात्वैवंसर्वमन्त्रान्तेठद्वयंपरिकीर्तयेत् ॥ ७ ॥ एवंप्रजप्यपुष्पेण कृष्णेनैवतुपूजयेत् ॥ मरणंतुभवेत्तस्ययमुद्दिश्यकृताक्रिया ॥ ८ ॥ उच्चाटयतिपिङ्गाक्षीसन्त्रासयतिकेकरा ॥ विद्रावयतिशुष्कास्याप्रोन्मत्तयतिघूर्णिता ॥ ९ ॥ विक्षोभयतिसंक्षुब्धासम्पादयतिसम्मता ॥ सङ्कोचयतिसंरुद्धाविरुद्धाचविरोधयेत् ॥ १० ॥ योयोभावोयत्रज्ञेयस्तद्भावंस्थापयेदिति ॥ अत्रसर्वत्रकर्त्तव्यंभावमात्रस्यचिन्तनम् ॥ ११ ॥ उच्चाटनंविनान्यत्रसर्वत्रसुरतंमतम् ॥ स्नातःशुक्लाम्बरधरःकृतनित्यक्रियोदिवा ॥ १२ ॥ रात्रौ नग्नःशयानश्चमैथुनेचव्यवस्थितः ॥ अवाक्योमुक्तकेशश्चतेनस्युःसर्वसिद्धयः ॥ १३ ॥ नग्नांवरस्त्रियंपश्यन्प्रजपेदयुतंमनुम् ॥ सभवेत्सर्वसिद्धीनांपारगःसर्वदैवहि ॥ १४ ॥ तस्यदर्शनमात्रेणवादिनोनिष्प्रभामताः ॥ गद्यपद्यमयीवाणी तस्यसर्वविधाभवेत् ॥ १५ ॥ अवाक्योमुक्तकेशश्च हविष्यंभक्षयन्नरः ॥ प्रजपेदयुतंतावदेवंप्रतिनिधिर्भवेत् ॥ १६ ॥ ऋतुमत्याभगंपश्यन्नयुतंप्रजपेन्नरः ॥ अनर्घकवितातस्यगद्यपद्यमयीभवेत् ॥ १७ ॥ अष्टोत्तरशतंजप्त्वाभगमालोक्यचान्ततः ॥ प्रयातिमैथुनंयोसौधनधान्यसुतान्वितः ॥ १८ ॥ सुरतेषुचजप्तव्यंसदापापविशुद्धये ॥ यदियोपित्प्रसङ्गेन रेतःपततियत्नतः ॥ १९ ॥ समुत्सार्य्यततोजप्तंसर्वकामसमृद्धये ॥ श्मशानाङ्गारमादाय मुक्तकेशोदिगम्बरः ॥ २० ॥ जपेदयुतसङ्ख्यंतुसर्वकामसमृद्ध

ये ॥ प्रेतमारुह्यतत्रैवयोजपेन्मन्त्रवित्तमः ॥ २१ ॥ अयुतंत्रार्ग्यतोभूत्वाक
विभिःसतुपूजितः ॥ जपपूजादिकंप्राग्वद्विशेषाद्भोगमोक्षदम् ॥ २२ ॥ क्रीं
मुक्त्वाकालिकेस्वाहाषडर्णोमन्त्रईरितः ॥ न्यासपूजादिकंप्राग्वद्विशेषाद्भो
गदोमतः ॥ २३ ॥ क्रींहूंह्रींत्र्यक्षरात्मायंमन्त्रःकाल्याःप्रकीर्त्तितः ॥ प्राग्व
ज्जपादिकंचास्यविशेषात्सन्ततिप्रदः ॥२४॥ कालीबीजंचहूंमायाहुंफट्पञ्चा
क्षरोमनुः ॥ न्यासध्यानादिकंप्राग्वद्विशेषाद्भूतनाशनः ॥ २५ ॥ क्रींहूंह्रींच
हुंफट्स्वाहान्तसप्ताक्षरोमतः ॥ प्राग्वन्न्यासादिकंसर्वंविशेषाच्छान्तिकार
कः ॥ २६ ॥ अथातःसम्प्रवक्ष्यामिधूमावत्यामनुंपरम् ॥ धूंधूंधूमावतिस्वाहा
मन्त्रोष्टाक्षरईरितः ॥ २७ ॥ पिप्पलादोमुनिश्छन्दोनिवृज्ज्येष्ठास्यदेवता ॥
षड्दीर्घबिन्दुयुक्तेनधकारेणषडङ्गकम् ॥ २८ ॥ आद्यबीजद्वयान्तस्थैःषडर्णै
र्न्यासमाचरेत् ॥ अंगुष्ठादिषडङ्गेषुपुनर्देवींविचिन्तयेत् ॥ २९ ॥ विवर्णांच
चलांकृष्णांदीर्घांचमलिनाम्बराम् ॥ विमुक्तकुन्तलांदीर्घांविधवांविरलद्विजा
म् ॥ ३० ॥ काकध्वजरथारूढांविलम्बितपयोधराम् ॥ शूर्पहस्तांतुरूक्षाक्षींधू
तहस्तांवरान्विताम् ॥ ३१ ॥ प्रवृद्धरोम्णींतुभृशंजटिलांकुटिलेक्षणाम् ॥
क्षुत्पिपासार्दितांनित्यंसदाकलहतत्पराम् ॥ ३२ ॥ एवंविधंसदाध्यायेत्ततः
कर्म्मसमाचरेत् ॥ पूर्वोक्तेपूजयेत्पीठेज्येष्ठांशत्रुनिवर्त्तने ॥ ३३ ॥ केशरेषुष
डङ्गानिपत्रस्थाअष्टशक्तयः ॥ क्षुधातृषारतिर्निद्रानिर्ऋतिर्दुर्गतीरुषा ॥ ३४ ॥
अक्षमेतिततोदेवाइन्द्राद्याआयुधान्विताः ॥ एवंज्येष्ठांसमाराध्यसिद्धमन्त्रः
प्रजायते ॥ ३५ ॥ उपोष्यकृष्णभूताहेनग्नोमुक्तशिरोरुहः ॥ शून्यागारेश्म
शानेवाकान्तारेभूधरेथवा ॥ ३६ ॥ प्रत्यहंप्रजपेन्निर्भीर्ध्यायेद्देवींशवासनाम् ॥
एवंलक्षंजपेन्मन्त्रंनाशयेदचिराद्रिपून् ॥ ३७ ॥ जुहुयाल्लवणोपेतांराजिकां
निशितत्फलम् ॥ आख्यापर्य्यन्तमालिख्यतस्मिन्स्थाप्यशिवंयजेत् ॥ ३८ ॥

---

१ क्रीं २ धां, धीं, धूं, धैं, धौं, धः, इन छः अक्षरों को षडंगों में न्यासकरे जैसे, धां अंगुष्ठाभ्यांनमः, धींतर्जनीभ्यांनमः, धूंमध्यमाभ्यांनमः, धैंअनामिकाभ्यांनमः धौंकनिष्ठिकाभ्यांनमः, धःकरतलकरपृष्ठाभ्यांनमः और इन्हीं के आदि में धूं धूं इन दोनों बीजोंको जोड़के भी न्यास करना उचित है ॥

अवष्टभ्यशिवंशत्रुनाम्नाथप्रजपेन्मनुम् ॥ सहस्राद्रूर्ध्वतःशत्रुर्ज्वरेणपरिगृह्यते ॥ ३६ ॥ पञ्चगव्येनशान्तिःस्याज्ज्वरस्यपयसापिवा ॥ मन्त्राद्यक्षरमालिख्य शत्रुनामततःपरम् ॥ ४० ॥ द्वितीयान्तंमनोःशत्रोर्नामैवंमनुमालिखेत् ॥ रणेऽयुतजपाच्छत्रोर्निश्चितंमरणंभवेत् ॥ ४१ ॥ कृत्वायन्त्रेरिपोराख्यामा रणेपद्मिनीदले ॥ उन्मादोजायतेशत्रोर्मनोरयुतजापतः ॥ ४२ ॥ दग्ध्वा कङ्कंश्मशानाग्नौतद्भस्मादायमन्त्रितम् ॥ ४३ ॥ विरोधिनाम्नाशशामुसद्य उच्चाटनंरिपोः ॥ श्मशानभस्मनाकृत्वाशिवंतस्योपरिन्यसेत् ॥ ४४ ॥ विरो धिनामसंरुद्धंकृष्णपुष्पैःसमर्चयेत् ॥ महिषीक्षीरधूपंचदद्याच्छत्रुविपत्करम् ॥ ४५ ॥ महिषीरूपेणागत्यस्वप्नेशत्रुंविनाशयेत् ॥ मन्त्रेणानेनलिखेत्तद्भस्म रिपुमन्दिरे ॥ ४६ ॥ समुच्चाटयतेतूर्णंनात्रकार्य्याविचारणा ॥ जलस्थंप्रज पेन्मन्त्रंहुङ्कारान्नाशयेदरीन् ॥ ४७ ॥ श्मशानभस्मनालिङ्गंकृत्वापुष्पादि नार्चयेत् ॥ भगवन्निितिसम्भाष्यमनसाकर्म्मचिन्तयेत् ॥ ४८ ॥ निम्बकाक च्छदानेकीकृत्वाचाष्टशतंजपेत् ॥ दद्याद्धूपंसाध्यनाम्नासद्योविद्वेषयेदरीन् ॥ ४६ ॥ चिताकाष्ठानलेक्षीरहोमाच्छान्तिःप्रजायते ॥ रजोधूमप्रदानेनगृध्र रूपेणकालिका ॥ ५० ॥ मारयत्यरिमागत्यशान्तिर्निर्माल्यधूपतः ॥ वाराहवालधूपेनहन्याच्छूकररूपिणी ॥ ५१ ॥ अश्वत्थपत्रधूपेनशान्तिर्भव तिनान्यथा ॥ शान्तिस्सर्वाभिचारस्यपञ्चगव्येनजायते ॥ ५२ ॥ क्षीरेणशा न्तिर्भवतिमधुरत्रितयेनवा ॥ कीलेक्ष्वेडतरोश्चापिशत्रोर्नामसमालिखेत् ॥ ५३ ॥ निदर्भ्येमूलमन्त्रेणशत्रोर्नामाक्षराणिवै ॥ जप्त्वापदद्वयेमन्त्रीखनेदु च्चाटनंरिपोः ॥ ५४ ॥ शत्रुपादद्वयाद्धूलिंघृताक्तांभक्तमिश्रिताम् ॥ वायसे भ्योबलिंदत्त्वाशत्रोरुच्चाटनंभवेत् ॥ ५५ ॥ शत्रुपादद्वयांधूलिंचिताभस्मयु तांक्षिपेत् ॥ शत्रुगेहेपिसञ्जप्तांशत्रोरुच्चाटनंभवेत् ॥ ५६ ॥ ज्येष्ठावासेश्मशाने वानिर्माल्यंपादगोचरम् ॥ मन्त्रंतंतुजपेल्लक्षंनिक्षिपेच्छत्रुवेश्मनि ॥ ५७ ॥ सेनामध्येपिसर्वेषांक्षणादुच्चाटनंभवेत् ॥ गर्तेपिपीलिकानान्तुपादधूलियुता न्कणान् ॥ ५८ ॥ सघृतान्सप्तवारन्तुजुहुयान्मन्त्रविन्निशि ॥ भ्रमतेकाक वत्सर्वांमहीमावरणादिषु ॥ ५६ ॥ कृत्वाप्रतिकृतिंशत्रोर्जन्मवृक्षेणमन्त्रवि

त् ॥ कृत्वाप्रतिष्ठांप्राणस्यविद्ध्वाममसुकण्टकैः ॥ ६० ॥ आयसैर्मन्त्रमावृत्य वक्ष्यमाणैःप्रवेष्टयेत् ॥ ६१ ॥ पूर्वोक्तशर्कराभिस्तुजप्त्वानित्यंप्रतापयेत् ॥ सप्तरात्रेणतस्यापिभवेदुच्चाटनंध्रुवम् ॥ ६२ ॥ मुख्यशैलाह्वयेलेख्योसारमेय वराहयोः ॥ मन्त्रेणदमितौसाध्यौभौमवारोदयोदये ॥ ६३ ॥ धत्तूररससंयुक्त चिताङ्गारेणमन्त्रिणा ॥ व्यत्यस्यपृष्ठतोवद्ध्वाकेशपाशेनतंजपेत् ॥ ६४ ॥ श्मशानेशत्रुमार्गेवातद्गृहेनिखनेन्निशि ॥ विद्वेषणंभवेत्सद्योगौरीशङ्करयो रपि ॥ ६५ ॥ अश्वत्थत्वचिमन्त्रार्णैर्दर्भितंसाध्यमालिखेत् ॥ अन्यद्विपत रोस्तद्वज्जप्त्वाउद्धृत्यविन्यसेत् ॥ ६६॥ पूर्वोक्तकण्टकैर्विद्ध्वाजपेत्स्पृष्ट्वाशतं शतम् ॥ विद्विष्टौभवतस्तौचनाम्नामपिचतत्क्षणात् ॥ ६७ ॥ एतेप्रयोगाः कथिताधूमावत्यामयासुराः ॥ अथातःसम्प्रवक्ष्यामिभद्रकाल्यामहामनुम् ॥ ६८ ॥ ह्रौंकालीतिमहाकालिद्धिःकिणिःफ ट्वसुप्रिया ॥ चतुर्दशाक्षरोमन्त्रो भद्रकाल्याउदाहृतः ॥ ६९ ॥ पदैःषड्भिःषडङ्गानिजातियुक्तानिकल्पयेत् ॥ ध्यातव्येयंसदादेवीभद्रकालीभयापहा ॥ ७० ॥ क्षुत्क्षामाकोटराक्षीचनाहंतृ प्तेतिवादिनी ॥ मषीमुखीमुक्तकेशीजगद्ग्रसनलालसा ॥ ७१ ॥ जम्बूफला भदशनाज्वलत्पाशंचबिभ्रती ॥ अशेषंकालिकांतन्त्रेयत्प्रोक्तंतदिहापिच ॥ ७२ ॥ जपपूजाप्रयोगाद्यंयोविशेषःसउच्यते ॥ आराध्यप्रजपेन्मन्त्रंनित्यम ष्टोत्तरंशतम् ॥ ७३ ॥ रिष्टमालाविधातव्याजपार्थंसिद्धिमिच्छता ॥ इयं देवीमहादेवीशत्रुविग्रहकारिणी ॥ ७४ ॥ यथेष्टचेष्टयाचिन्त्याधर्म्मकामार्थ सिद्धिदा ॥ अथमन्त्रान्तरंवक्ष्येभद्रकाल्याःसुगोपितम् ॥ ७५ ॥ गृध्रकर्णि विरूपाक्षिलम्बस्तनिमहोदरि ॥ उत्पादयोत्पादयेतिद्धिधोपरिपदंभवेत् ॥ ७६ ॥ द्विधावेत्तिपदंहुंफट्स्वाहासप्ताग्निवर्णकः ॥ पिप्पलादोमुनिःप्रोक्तो निचृच्छन्दउदाहृतम् ॥ ७७ ॥ भद्रकालीदेवतास्याङ्गिरुत्पादयहृत्स्मृतम् ॥

---

१ ह्रौंकालिमहाकालिकिणिकिणिफट्स्वाहा इतिचतुर्दशाक्षरोमन्त्रः २ मन्त्रके छह पदों से षडङ्गन्यासकरे ३ गृध्रकर्णिविरूपाक्षिलम्बस्तनिमहोदरिउत्पादयोत्पादयउपरिउपरिवेत्तिवे त्तिहुंफट्स्वाहा ४ उत्पादयोत्पादयहृदयायनमः उपरिउपरिशिरसेस्वाहा, वेत्तिवेत्तिशिखायै वषट् हुंफट्कवचायहुम्, स्वाहाअस्त्रायफट् इतिन्यासविधिः ॥

उपरिभ्यांशिरःप्रोक्तंवेत्तिभ्यांतुशिखास्मृतम् ॥ ७८ ॥ हुंफड्भ्यांकवचंप्रोक्तंस्वाहयास्त्रमुदीरितम् ॥ अतिरौद्रामहादंष्ट्राभृशंदीर्घाकृशोदरी ॥ ७९ ॥ सुवृत्तनयनासूर्ध्वदीर्घघोणामदातुरा ॥ स्निग्धगम्भीरनिर्घोषानीलजीमूतसन्निभा ॥ ८० ॥ कुटिलभ्रुकुटीदीप्तामहारदनभीषणा ॥ दष्टौष्ठकोपताम्राक्षीरक्तदीर्घशिरोरुहा ॥ ८१ ॥ त्रिशूलभयप्रदोर्दण्डानरकीपिप्पलाशिनी ॥ अतिरक्ताम्बरादेवीरक्तमांसासवप्रिया ॥ ८२ ॥ शिरोमालाभूषिताङ्गीपिबन्तीशोणितासवम् ॥ नृत्यन्तीचहसन्तीचपिशाचगणसेविता ॥ ८३ ॥ पिशाचस्कन्धमारुह्यभ्रमन्तीवसुधातले ॥ शङ्करस्यमुखोत्पन्नायोगिनीयोगवल्लभा ॥ ८४ ॥ इत्थंभूताभद्रकालीमातृभिःपरिवारिता ॥ ध्यात्वासम्यक्समाराध्यततोमन्त्रंजपेद्बुधः ॥ ८५ ॥ अयुतंमन्त्रसिद्ध्यर्थंमातृकान्याससतत्परः ॥ घृतहोमस्तथाकार्यस्तर्पणादिसमाचरेत् ॥ ८६ ॥ धूमावत्यांचयत्प्रोक्तमनयापितदाचरेत् ॥ उक्तप्रयोगएवात्रविशेषविधिरुच्यते ॥ ८७ ॥ आज्याप्लुतंतुनिर्दोषमेकमूलंवनान्तरात् ॥ विषवृक्षंसमादाय ततोहोमंसमाचरेत् ॥ ८८ ॥ शून्यागारेवनेवापि कुण्डंकृत्वात्रिकोणकम् ॥ विषवृक्षेन्धनेनाग्निं प्रज्वाल्यावाहयेत्सुधीः ॥ ८९ ॥ ततोदण्डंजपेन्मन्त्री विषवृक्षस्यसाधकः ॥ अष्टोत्तरशतंवह्नौतदण्डं निक्षिपेद्बुधः ॥ ९० ॥ सुविनीतंद्विजंवीरं कृत्वाचोत्तरसाधकम् ॥ दिक्षु सर्वासुसंस्थाप्य स्वभेदाःखड्गहस्तकाः ॥ ९१ ॥ कृतरक्षाःसमाराध्य वह्निंक्रोधसमन्वितः ॥ अष्टोत्तरशतंजप्त्वादण्डाग्रंजातवेदसि ॥ ९२ ॥ दत्त्वासिद्धार्थकैर्मन्त्री जुहुयात्तवनद्वयम् ॥ तैलोक्षितैश्चहोमान्ते दिक्पालवटुयोगिनीः ॥ ९३ ॥ अग्न्यादींश्चापिसन्तोष्य बलिदानेनदेवताम् ॥ ध्यायेच्चप्रलयोदग्रमेघाभांरक्तनेत्रकाम् ॥ ९४ ॥ शूलाग्रपोतसिंहांच नरमालाविभूषिताम् ॥ तीक्ष्णदंष्ट्रांरक्तमधुमत्तांचैवभयानकाम् ॥ ९५ ॥ उल्काहस्तांशत्रुसद्म शिलायांवनितांमुहुः ॥ भावयित्वाकरेणोल्कां दक्षिणेनरिपून्मुखीम् ॥ ९६ ॥ गत्वादूरेणविसृजेच्चद्रक्तध्यानमास्थितः ॥ सुसहायस्ततस्तीर्थंगच्छेत्पश्चात्तुयत्नतः ॥ ९७ ॥ स्नात्वावश्यंशुचिर्भूत्वा कण्ठमात्रोदकेस्थितः ॥ जपेत्सुदर्शनंदुर्गां सावित्रींचसमाहितः ॥ ९८ ॥ अष्टोत्तरंसहस्रन्तु जपेदन्यच्च

तंशतम् ॥ उष्णीषवासाआच्छाद्या ससहायःसुरालयम् ॥ ६६ ॥ गत्वातुमह
तींपूजांकृत्वादेवस्यचक्रिणः॥पादयुग्मंसमालम्ब्यवर्णलक्षंजपेन्मनुम्॥६००॥
तावज्जप्त्वाघटैःसम्यगभिषिञ्चेत्स्वकंवपुः ॥ दक्षिणांविधिवद्दत्त्वाशान्तिहो
मञ्चकारयेत् ॥ १ ॥ यद्वादुर्गालयेलक्षंसावित्रीयेतथैवच ॥ कृत्वाभिषेकंता
भ्यान्तु शक्तितोभोजयेद्द्विजान् ॥ २॥ दक्षिणांशक्तितोदद्यात्सिद्धोभवति
साधकः ॥ रुद्रदण्डप्रयोगोयंदारुणोरगसूदनः ॥ ३ ॥ विभीतकफलेशत्रोर्लि
खेन्नामविदर्भितम् ॥ मन्त्रंजप्त्वासहस्रन्तुखनेत्पीतावनौपुनः ॥ ४ ॥ उच्चा
टनंभवेत्क्षिप्रमचलस्यापिकिंनृणाम् ॥ धत्तूरबीजचूर्णेन विभीतकफलेलिखे
त् ॥ ५ ॥ त्रिकोणेरिप्रतिकृतिंलिखेत्सम्यगधोमुखीम् ॥ अष्टोत्तरसहस्रन्तु
जप्त्वातांनिखनेत्पुनः ॥ ६ ॥ पादपातोथवाशत्रोःस्यात्तथोच्चाटयेद्बलात् ॥
अथातःसम्प्रवक्ष्यामि महाकालमिनुंपरम् ॥ ७ ॥ ॐ क्ष्रीं क्ष्रीं क्रैं अतःक्रैंच
पशुंगृहाणचोच्चरेत् ॥ हुं फट्स्वाहाशक्रवर्णःसिद्धमन्त्रउदाहृतः ॥ ८ ॥
नास्यमुन्यादिकन्यासः सिद्धमन्त्रस्यविद्यते ॥ कृष्णतोयेनसम्पूर्णे घटेचा
हूयकालिकाम् ॥ ९ ॥ ब्राह्मयादिभिश्चदूतीभिर्युक्तांसम्पूज्यभक्तितः ॥ अ
ष्टमींचण्डिकास्तोत्रदेवींध्यायेद्गृहेपुनः ॥१०॥ पञ्चवक्त्रांमहारौद्रीं प्रतिवक्त्रं
त्रिलोचनाम्॥ शक्तिशूलधनुर्बाणखेटखड्गवराभयान्॥११॥दक्षादक्षभुजैर्देवीं
बिभ्राणांभोगिभूषणाम् ॥ वर्णलक्षंजपेन्मन्त्रंवामाचारेणसाधकः ॥ १२ ॥ पि
चुमन्दस्यसमिधोघृताक्ताञ्जुहुयात्ततः ॥ हुत्वाप्रज्वलितेवह्नौ तर्पणादिततश्च
रेत् ॥ १३॥ एवंसिद्धमनुर्मन्त्री मारयेदचिराद्रिपून् ॥ देवींप्रत्यङ्गिरांनामसर्वा
पत्तिविघातिनीम् ॥ १४ ॥ ॐ अं कं चं तथा टं पं यं शं ह्रां ह्रींसमुच्चरेत् ॥ हूं
सःउक्त्वाहुंतथाऋंस्वाहान्तःषोडशाक्षरः॥१५॥ मुनिर्विधाताछन्दोष्टिर्देवताः
षट्प्रकीर्तिताः ॥ महावायुर्महापृथ्वीमहाकाशस्तथैवच ॥ १६ ॥ महासमुद्र
नामाचमहापर्वतएवच ॥ महाग्निश्चेतिहूंबीजंह्रींशक्तिःपरिकीर्तिता ॥१७॥
लज्जयातुषडङ्गानिषड्दीर्घान्वितयाचरेत् ॥ मन्त्रदेवांस्ततोमन्त्रीध्यायेत्सुस्थि
रमानसः ॥ १८ ॥ तारत्नार्चिराक्रान्तमभःप्रस्रवणैर्युतम् ॥ व्याघ्रादिपशुभि

१ ॐ अं कं चं टं तं पं यं शं ह्रां ह्रीं हूं सः हुं फट्स्वाहा ॥ इति षोडशाक्षरमन्त्रः ॥

र्व्यासंसानुयुक्तंगिरिंस्मरेत् ॥ १९ ॥ मत्स्यकूर्म्मादिवीर्याढ्यंनवरत्नसमर्चितम् ॥ घनतोयंसकल्लोलमकूपारंविचिन्तयेत् ॥ २० ॥ ज्वालावलीसमाक्रान्तंजगत्त्रितयमद्भुतम् ॥ पीतवर्णंमहावह्निंसंस्मरेच्छत्रुशान्तये ॥ २१ ॥ स्वरात्समुत्थरेखाघमलिनमूर्ध्वंभूविदम् ॥ पवनंसंस्मरेद्विश्वजीवनंप्राणरूपतः ॥२२॥ नदीपर्वतवृक्षादिकलिताग्रामसंकुला ॥ आधारभूताजगतोध्येया पृथ्वीहमन्त्रिणा ॥ २३ ॥ सूर्य्यादिग्रहनक्षत्रकालचक्रसमन्वितम् ॥ निर्मलंगगनंध्यायेत्प्राणिनामाश्रयप्रदम् ॥ २४ ॥ एवंषड्देवताध्यात्वासहस्राणितुषोडश ॥ जपेन्मन्त्रंदशांशेनषड्द्रव्यैर्होममाचरेत् ॥ २५ ॥ व्रीहयस्सतिलाआज्यंसर्षपाश्चयवास्तिलाः ॥ एतान्हुत्वायथाभागंपीठेपूर्वोदितेयजेत् ॥ २६ ॥ अष्टदिक्पालवज्राद्यैरेवंसिद्धोभवेन्मनुः ॥ शत्रूपद्रवआपन्नेयुञ्जीतात्रमहामनुम् ॥ २७ ॥ अकारंपर्वताकारंधावन्तंशत्रुसम्मुखम् ॥ पतोन्मुखमत्युग्रंप्राच्यांदिशिविचिन्तयेत् ॥ २८ ॥ ककारंक्षुब्धकल्लोलंप्लावितांखिलभूतलम् ॥ समुद्ररूपिणंभीमंप्रतीच्यांदिशिचिन्तयेत् ॥ २९ ॥ तुरीयपञ्चमाद्यर्णैः पृथ्वीगगनरूपिणौ ॥ शत्रुवर्गंबन्धमानौचिन्तयेन्नियतात्मवान् ॥ ३० ॥ तदग्निमंवर्म्मयुगंशत्रोर्निःश्वासपद्धतिम् ॥ निरुन्धानंस्मरेन्मन्त्रीविदधद्रिपुमाकुलम् ॥ ३१ ॥ मायादिवर्णत्रितयंशत्रोर्नेत्रेश्रुतीमुखम् ॥ प्रत्येकंतुनिरुन्धानंचिन्तयेत्साधकोत्तमः ॥ ३२ ॥ वह्निसंक्षोभितंवस्त्रंरिपुमस्तकदेशतः ॥ उत्थाप्यवह्निंतद्देहंप्रदहेत्समनुंस्मरेत् ॥ ३३ ॥ एवंवर्णान्स्मरेन्मन्त्रंजपेद्वर्णसहस्रकम् ॥ मण्डलत्रितयादर्वाग्दारयेत्तेनविद्विषम् ॥ ३४ ॥ एवंयःकुरुतेकर्म्मप्राणायामजपादिभिः ॥ संशोधयित्वाचात्मानंस्वरक्षायैहरिंस्मरेत् ॥ ३५ ॥ अथप्रत्यङ्गिरामालामन्त्रःसिद्धःप्रकीर्त्यते ॥ ॐह्रींनमःकृष्णवाससेस्तुतेविश्वसहस्र ॥ ३६ ॥ हिंसिनिसहस्रावनेमहाबलेपराजिते ॥ प्रत्यङ्गिरे

---

१ ॐह्रींनमः कृष्णवाससेस्तुतेविश्वसहस्रहिंसिनिसहस्रावने महाबलेपराजितेप्रत्यङ्गिरेपरसैन्यपरकर्म्मविध्वंसिनिपरमन्त्रोत्सादिनिसर्वभूतदमनिसर्वदेवान्बन्धबन्धसर्वविद्यांछिन्धिछिन्धिक्षोभयक्षोभयपरयन्त्राणिस्फोटयस्फोटयसर्वशृङ्खलांत्रोटयत्रोटयज्वलज्वालाजिह्वे करालवदने प्रत्यङ्गिरेह्रींनमः ॥

परसैन्यपरकर्म्मपदंवदेत् ॥ ३७ ॥ विध्वंसिनिपरमन्त्रोत्सादिनीतिततोवदे
त् ॥ सर्वभूतेतिदमनिसर्वदेवान्वदेत्ततः ॥ ३८ ॥ बन्धयुग्मंसर्वविद्यांछिन्धि
न्धिक्षोभयद्वयम् ॥ परयन्त्राणीतिवदेत्स्फोटयद्वितयंततः ॥ ३९ ॥ सर्वशृङ्ख
लांत्रोटयत्रोटयज्वलचोच्चरेत् ॥ ज्वालाजिह्वकरालेतिवदनेप्रत्यगुच्चरेत् ॥४०॥
गिरेर्ह्रींनमइत्येषसपादशतवर्णवान् ॥ ब्रह्मानुष्टुम्मुनिश्छन्दोदेवीप्रत्यङ्गिरा
मता ॥ ४१ ॥ बीजशक्तीतारमायेकृत्याकार्येनियोजनम् ॥ षडङ्गानांविधि
श्चात्रषड्दीर्घान्वितमायया ॥ ४२ ॥ सिंहारूढातिकृष्णाङ्गीज्वालावक्त्राभय
ङ्करी ॥ शूलशस्त्रकराखङ्गंदधतीयातुतांभजे ॥ ४३॥ अयुतंप्रजपेन्मन्त्रंसहस्रं
तिलराजिकाः॥हुत्वासिद्धमनुर्मन्त्रीप्रयोगेषुशतंजपेत् ॥४४॥ ग्रहभूतादिका
रिष्टंसिञ्चेन्मन्त्रंजपञ्जलैः ॥ विनाशयेत्परकृतंयन्त्रमन्त्रादिसाधनम् ॥ ४५ ॥
अथातःसम्प्रवक्ष्यामिचामुण्डायामहामनुम् ॥ नवदुर्गात्मकंयस्यसेवनाद्भुक्तिमु
क्तयः ॥ सुरथोयत्प्रसादेनराज्यंप्राप्यभवेन्मनुः ॥ संसारबन्धनिर्नाशिज्ञानमाप्तं
समाधिना॥ ४६॥मार्कण्डेयपुराणोक्तचरित्रत्रितयस्तवः॥जपाद्यस्यफलंदद्या
त्तंमनुंवच्मिसाम्प्रतम् ॥ ४७ ॥ वाग्लज्जाकामबीजानिचामुण्डायैपदंवदेत् ॥
विच्चेनवार्णमन्त्रोयंशक्तिमन्त्रोत्तमोत्तमः ॥ ४८ ॥ ब्रह्मविष्णुमहेशास्तुमुन
योस्यप्रकीर्तिताः ॥गायत्र्युष्णिगनुष्टुप्च्छन्दस्त्रयमुदीरितम् ॥ ४९ ॥ दे
व्योस्यतुमहाकालीमहालक्ष्मीःसरस्वती ॥ नन्दाशाकम्भरीभीमाशक्तित्रय
मुदाहृतम् ॥ ५० ॥ अस्यबीजत्रयंदुर्गाभ्रामरीरक्तदन्तिका ॥अग्निवायुभगा
स्तत्त्वंप्राग्वद्दृष्यादिकंन्यसेत् ॥ ५१ ॥ स्तनयोःशक्तिबीजानितत्त्वानिहृदये
पुनः ॥ ततएकादशन्यासान्कुर्य्यादिष्टफलप्रदान् ॥५२॥ प्रथमंमातृकान्यासं
प्राक्प्रोक्तंचसमाचरेत् ॥ कृतेनयेनदेवस्यसारूप्यंयातिमानवः॥ ५३ ॥ अथद्वि
तीयंकुर्वीतन्यासंसारस्वताभिधम् ॥ [1]बीजत्रयंतुमन्त्राद्यंताराादिहृदयान्तकम्॥
५४ ॥ षडक्षरोभवेन्मन्त्रोनवस्थानेषुविन्यसेत् ॥ कनिष्ठानामिकामध्यातर्जन्यं
गुष्ठयुग्मके॥५५॥करमध्येहस्तपृष्ठेमणिबन्धेचकूर्प्परे ॥ हृदयादिषडङ्गेषुजाति

---

१ ऐं ह्रीं क्लीं चामुण्डायैविच्चे २ ॐ ऐं ह्रीं क्लींनमः कनिष्ठायुग्मे ॐ ऐं ह्रीं क्लींनमः अना-
मिकायुग्मे, ॐ ऐं ह्रीं क्लीं नमः इसी षडक्षर मन्त्रका न्यास शेषस्थानों में भी करे ॥

मुक्तंपुनर्न्यसेत् ॥ ५६ ॥ अस्मिन्सारस्वतेन्यासेकृतेजाड्यंविनश्यति ॥ न्यासः कार्यःसप्तशत्याःपठेत्कामविशेषतः ॥ ५७ ॥ ततस्तृतीयंकुर्वीतन्यासंमातृगणादिकम् ॥ मायाबीजादिकाब्राह्मीपूर्वतःपातुमांसदा ॥ ५८ ॥ माहेश्वरीतथाग्नेय्यांकौमारीदक्षिणेऽवतु ॥ वैष्णवीपातुकौण्यांवाराहीपश्चिमेवतु ॥ ५९ ॥ इन्द्राणीपावनेकोणेचामुण्डाचोत्तरेवतु ॥ ऐशान्येतुमहालक्ष्मीरूर्ध्वंव्योमेश्वरीतथा ॥ ॥ ६० ॥ सप्तद्वीपेश्वरीभूमौरक्षेत्कामेश्वरीतथा ॥ तृतीयेस्मिन्कृतेन्यासेत्रैलोक्येविजयीभवेत् ॥ ६१ ॥ न्यासंचतुर्थंकुर्वीतनन्दजादिसमन्वितम् ॥ नन्दजापातुपूर्वाङ्गंकमलांकुशमण्डिता ॥ ६२ ॥ खड्गपात्रकरापातुदक्षिणेरक्तदन्तिका ॥ पृष्ठेशाकम्भरीपातुपुष्पपल्लवसंयुता ॥ ६३ ॥ धनुर्बाणकरादुर्गावामेपातुसदैवमाम् ॥ शिरःपात्रकराभीमामस्तकाच्चरणावधि ॥ ६४ ॥ पादादिमस्तकंयावद्भ्रामरीचित्रकान्तिभृत् ॥ तुर्य्यन्यासंनरःकुर्य्याज्जरामृत्युंजयेदिति ॥ ६५ ॥ ब्रह्माद्यमथकुर्वीतन्यासंपञ्चममुत्तमम् ॥ पादादिनाभिपर्य्यन्तंब्रह्मापातुसनातनः ॥ ६६ ॥ नाभेर्विशुद्धिपर्य्यन्तम्पातुनित्यञ्जनार्दनः ॥ विशुद्धेर्ब्रह्मरन्ध्रान्तम्पातुरुद्रस्त्रिलोचनः ॥ ६७ ॥ हंसःपातुपदद्वन्द्वंवैनतेयःकरद्वयम् ॥ चक्षुषीवृषभःपातुसर्वाङ्गानिगजाननः ॥ ६८ ॥ परापरौदेहभागौपात्वानन्दमयोहरिः ॥ कृतेस्मिन्पञ्चमेन्यासेसर्वकामानवाप्नुयात् ॥ ६९ ॥ षष्ठंन्यासन्ततःकुर्य्यान्महालक्ष्म्यादिसंयुतम् ॥ मध्यंपातुमहालक्ष्मीरष्टादशभुजान्विता ॥ ऊर्ध्वंसरस्वतीपातुभुजैरष्टभिरूर्जिता ॥ ७० ॥ अधःपातुमहाकालीदशबाहुसमन्विता ॥ सिंहोहस्तद्वयम्पातुपरहंसोक्षियुग्मकम् ॥ ७१ ॥ महिषंहिसमारूढोयमःपातुपदद्वयम् ॥ महिषश्चण्डिकायुक्तःसर्वाङ्गानिममावतु ॥ ७२ ॥ षष्ठेस्मिन्विहितेन्यासेसद्गतिंप्राप्नुयान्नरः ॥ मूलाक्षरन्यासरूपन्ततःकुर्वीतसप्तमम् ॥ ७३ ॥ ब्रह्मरन्ध्रे

---

१ ह्रीं ब्राह्मीमांपूर्वतःपातु, ह्रीं माहेश्वरी आग्नेय्यां पातु, इस रीतिसे न्यासकरे २ नैर्ऋत्याम् ३ ऐंनमः ब्रह्मरन्ध्रे ह्रींनमः दक्षनेत्रे क्लींनमः वामनेत्रे इसरीतिसे उक्त स्थानों में शेष अक्षरोंका न्यासकरे अन्यन्यास भी मूलमें स्पष्ट लिखे हैं उनको भी करले वेतो रिपुरोगादिकोंसे निर्भयहोकर सदैव सुखपावै ॥

नेत्रयुगेश्रुत्योर्नासिकयोर्मुखे ॥ पायौमूलमनोर्वर्णांस्तारायान्विन्यसेत्सुधीः ॥ ७४ ॥ नमोन्तान्सप्तमेस्मिंस्तुकृतेरोगक्षयोभवेत् ॥ पायुतोब्रह्मरन्ध्रान्तंपुनस्तानेवविन्यसेत् ॥ ७५ ॥ कृतेस्मिन्नष्टमेन्यासेसर्वदुःखंविनश्यति ॥ कुर्वीतनवमंन्यासंमन्त्रव्यासिस्वरूपकम् ॥ ७६ ॥ मस्तकाच्चरणंयावच्चरणान्मस्तकावधि ॥ पुरोदक्षपृष्ठदेशेवामभागेपुसन्न्यसेत् ॥ ७७ ॥ मूलमन्त्रकृतोन्यासोनवमोदेवतासिकृत् ॥ ततःकुर्वीतदशमंषडङ्गन्यासमुत्तमम् ॥ ७८ ॥ मूलमन्त्रंजातियुक्तंहृदयादिषुविन्यसेत् ॥ कृतेस्मिन्दशमेन्यासेत्रैलोक्यंदशमानयेत् ॥ ७९ ॥ चण्डीपाठेपिकर्तव्यान्यासाश्चेष्टप्रदायकाः ॥ अन्यन्यासोक्तफलदंकुर्यादेकादशन्ततः ॥ ८० ॥ खड्गिनीशूलिनीत्यादिपठित्वाश्लोकपञ्चकम् ॥ आद्यंकृष्णतरंबीजंध्यात्वासर्वाङ्गकेन्यसेत् ॥ ८१ ॥ शूलेनपाहिनोदेवीत्यादिश्लोकचतुष्टयम् ॥ पठित्वासूर्यसदृशंद्वितीयंपृष्ठतोन्यसेत् ॥ ८२ ॥ ततःषडङ्गंकुर्वीतविभक्तैर्मूलवर्णकैः ॥ एकेनैकेनचैकेनचतुर्भिर्युग्मकेनच ॥ ८३ ॥ समस्तेनैवमन्त्रेणकुर्य्यादङ्गानिषट्क्रमात् ॥ शिखायांनेत्रयोःश्रुत्योर्नसोर्वक्त्रेगुदेन्यसेत् ॥ ८४ ॥ मन्त्रवर्णान्समस्तेनव्यापकाष्टकमाचरेत् ॥ ततोदेवीत्रयंध्यायेत्कालिकाध्यानमुच्यते ॥ ८५ ॥ दशास्यांदशपादांचदशहस्तांविधिस्तुताम् ॥ इन्द्रनीलद्युतिंखड्गंचक्रंशङ्खंशिरःशरान् ॥ ८६ ॥ दक्षहस्तेपुदधतींगदांशूलंभुशुण्डिकाम् ॥ परिघांचधनुर्बाणेदधतींब्रह्मसंस्तुताम् ॥ ८७ ॥ मधुकैटभनाशार्थंसालङ्कारांत्रिविक्षणाम् ॥ ततोध्यायेन्महालक्ष्मींमहिषासुरमर्दिनीम् ॥ ८८ ॥ समस्तदेवतातेजोजातांपद्मासनस्थिताम् ॥ अष्टादशभुजामक्षमालांपद्मंचसायकान् ॥ ८९ ॥ खड्गंवज्रंगदांचक्रन्दक्षहस्तेकमण्डलुम् ॥ शार्ङ्गंचदधतींवामेशक्तिंचपरशुंधनुः ॥ ९० ॥ चर्मदण्डौसुरापात्रंघण्टांपाशंत्रिशूलकम् ॥ सरस्वतींततोध्यायेच्छरच्चन्द्रसमप्रभाम् ॥ ९१ ॥ शङ्खंचमुशलंचक्रंदक्षहस्तेपुबिभ्रतीम् ॥ घण्टांशूलंहलंचापंवामहस्तेषुबिभ्रतीम् ॥ ९२ ॥ गौरीदेहसमुद्भूतांनृणामानन्ददायिनीम् ॥ आधारभूतांजगतःशुम्भादिकविमर्दिनीम् ॥ ९३ ॥ अधिष्ठात्रींतृतीयस्यचरित्रंचस्मरेत्सदा ॥ एवंध्यात्वाजपेल्लक्षचतुष्कंतद्दशांशतः ॥ ९४ ॥ पायसान्नेनजुहुयात्पू

जितेहेमरेतसि ॥ जयादिशक्तिभिर्युक्तेपीठेदेवींसमर्चयेत् ॥ ९५ ॥ एतद्यन्त्रोद्ब त्त्र्यस्रषट्कोणाष्टदलान्वितः ॥ श्रियाचनैर्ऋतेविष्णुंवायव्येउमयाशिवम् ॥ ९६ ॥ विदारयन्तंमहिषंप्राक्कोणेमृगपंयजेत् ॥ षट्कोणेषुचपूर्वादौनन्दजां रक्तदन्तिकाम् ॥ ९७ ॥ शाकम्भरींतथादुर्गांभीमांचभ्रामरींयजेत् ॥ तारस्वबी जपूर्वाश्चङेन्ताहृदयसंयुताः ॥९८ ॥ सर्वासामेवशक्तीनांनाममन्त्रायजौस्मृ ताः ॥ ततश्चाष्टदलेब्राह्मींमाहेशींचकुमारिकाम् ॥ ९९ ॥ वैष्णवींचापिवारा हींतथेन्द्राणींप्रपूजयेत् ॥ चामुण्डामथतद्बाह्येचतुर्विंशदलेर्चयेत् ॥ १००० ॥ विष्णुमायांचेतनांच बुद्धिंनिद्रांक्षुधान्तथा ॥छायांशक्तिंपरांतृष्णांक्षान्तिंजातिं तदुत्तरम् ॥ १ ॥ लज्जांशान्तितथाश्रद्धांकान्तिलक्ष्मींधृतिंतथा ॥ वृत्तिंश्रुतिं स्मृतिंचापिदयांतुष्टिंततःपरम् ॥ २ ॥ पुष्टिंचमातरंभ्रान्तिमर्चयेद्भूपुरेषुच ॥ चतुष्कोणेषुगणपंक्षेत्रेशंवटुकंतथा ॥ ३ ॥ योगिनीश्चसुरेशाद्यांस्तद्बाह्ये चायुधानिच ॥ मार्कण्डेयपुराणोक्तंनित्यंचण्डीस्तवंपठेत् ॥ ४ ॥ पुटितंमूल मन्त्रेणजपन्नाप्नोतिवाञ्छितम् ॥ कलौनचण्डीसदृशीसिद्धिदाभुवनत्रये ॥ ५ ॥ वामदक्षिणमार्गाभ्यामधिकारिफलप्रदा ॥ तत्रादिमंचरित्रंतुरोगना शाययोजयेत् ॥ ६ ॥ उपसर्गविनाशायमध्यमंयोजयेद्बुधः ॥ अन्त्यंवि षयकामस्तुचरित्रंपरिशीलयेत् ॥ ७ ॥ चरित्रद्वयशीलस्यनवंशश्छिद्यते क्वचित् ॥ पठेदाद्यंतुचरितंविपत्तिस्तस्यनश्यति ॥ ८ ॥ अनाद्यंपठतेयस्तुमा रयेदचिराद्रिपून् ॥ सार्थानुस्वारपद्यंचसप्तशत्याश्चयोजयेत् ॥ ९ ॥ यस्तुम न्त्रेणपुटितंतत्पृष्ठाङ्कस्यसंख्यया ॥ पठेच्चश्रींतथाद्यन्तेसकामस्तस्यसिद्ध्यति ॥ १० ॥ स्वशत्रून्दैत्यभावेनस्वमित्रान्देवताधिया ॥ भावेनयोजपेच्चण्डींत्रिस न्ध्यंमासमात्रकम् ॥ ११ ॥ मृतावामृतकल्पावाशत्रवःस्युर्नसंशयः ॥ सित पक्षादिमारभ्यचाष्टम्यन्तमिषस्यच ॥ १२ ॥ जपेल्लक्षमनुंहोमःखाद्यैस्त्रिमधुर

---

[१] इस यन्त्रके बनानेकी विधि यह है कि त्रिकोण, षट्कोण, वृत्त, अष्टदल, वृत्त, चतुर्विंशतिदल लिखकर मूलोक्तनामों की पूजाकरे और दिक्पाल आयुध गणेशादिकों को भी उक्तस्थानों में पूजे यद्यपि इस श्लोकमें क्रमनहीं है और चतुर्विंशति दलोंको बनाना नहीं कहागया तथापि इसीजगह पूर्वप्रकरण से वहभी स्पष्टहै ॥

स्तुतैः ॥ प्रत्यहंपूजयेद्देवींचण्डीमाद्यंतथापठेत् ॥ १३ ॥ विप्रान्गुरून्समाराध्य वाञ्छितंलभतेद्रुतम् ॥ सप्तशत्याश्चरित्रस्यप्रथमस्यविधिर्मुनिः ॥ १४ ॥ छन्दोगायत्रमुदितंमहाकालीतुदेवता ॥ वाग्बीजंपावकस्तत्त्वंधर्मार्थेविनियोजनम् ॥ १५ ॥ प्रयोगाणान्तुनवतिर्मारणेमोहनेत्रतु ॥ मध्यमस्यचरित्रस्यमुनिर्विष्णुरुदाहृतः ॥ १६ ॥ उष्णिक्छन्दोमहालक्ष्मीर्देवताबीजमद्रिजा ॥ वायुस्तत्त्वंधनप्राप्त्यैविनियोगउदाहृतः ॥ १७ ॥ उच्चाटेस्तम्भनेचात्रप्रयोगानां शतद्वयम् ॥ उत्तमस्यचरित्रस्यमुनिःशङ्करउच्यते ॥ १८ ॥ महासरस्वतीदेवी त्रिष्टुप् छन्दउदाहृतम् ॥ कामोबीजंरविस्तत्त्वंकामाप्त्यैविनियोजनम् ॥ १९ ॥ विद्वेषवश्ययोश्चात्रप्रयोगादिकृतैर्मिताः ॥ एवंसप्तशतंचात्रप्रयोगाःपरिकीर्तिताः ॥ २० ॥ तस्मात्सप्तशतीत्येवंव्यासेनपरिकीर्तिता ॥ सौम्यानियानि रूपाणीत्यत्रापिपरिकीर्तिताः ॥ २१ ॥ उपास्यादक्षिणेमार्गेलक्ष्म्याद्याःसप्त शक्तयः ॥ तस्मात्सप्तशतीत्येवंप्रोक्ताव्यासेनधीमता ॥ २२ ॥ महाविद्येत्यादि सप्तशक्तयोब्रह्मणास्तुताः ॥ तस्मात्सप्तशतीत्येवंप्रोक्ताव्यासेनधीमता ॥ २३ ॥ ब्रह्मेन्द्रगुरुशुक्राणांविष्णुरुद्रसुरद्विषाम् ॥ उपास्यादेवतायास्ताइहसप्तशतीह्यतः ॥ २४ ॥ लक्ष्मीश्चललिताकालीदुर्गागायत्र्यरुन्धती ॥ सरस्वतीचेतिसप्तउपास्यावाममार्गतः ॥ २५ ॥ कालीताराछिन्नमस्तासुमुखीभुवनेश्वरी ॥ बालाकुब्जेतिमनवःसूचिताःसम्प्रकीर्तिताः ॥ २६ ॥ नाम्नासप्तशतीचेतिमध्यमेचरितेद्विधा ॥ तत्तन्मन्त्रोक्तसद्बुद्धैर्मन्त्रशक्तिःप्रजायते ॥ २७ ॥ एवंस्तवाभियुक्तानामित्यारभ्यतृतीयके ॥ चरितेशक्तयस्सप्तचामुण्डान्ताःप्रकीर्तिताः ॥ २८ ॥ हंसयुक्तविमानाग्रेइत्यारभ्यप्रकीर्तिताः ॥ ब्रह्माण्याद्याःसप्तसंख्यावर्तमानाश्चतत्रच ॥ २९ ॥ वैवस्वतेन्तरेप्राप्तेइत्यारभ्यत्रसप्ततु ॥ शक्तयःप्रोक्ताःस्वयंदेव्यातस्मात्सप्तशतीस्मृता ॥ ३० ॥ सप्तशत्यास्तुसप्तत्वंवेदम्यहंसर्वमेवहि ॥ पादोनंश्रीहरिर्वेत्तिवेत्त्यर्धन्तुप्रजापतिः ॥ ३१ ॥ व्यासस्तुर्य्यांशकंवेत्तिकोट्यंशमितरेजनाः ॥ यथामन्त्रस्तुसिद्ध्यर्थंयोज्यतेक्रियतेयथा ॥ ३२ ॥ बीजादिकंतथासद्भिःकामनावशतःक्वचित् ॥ वर्णानांचपदानांचव्यत्यासस्तुव्यवस्थितः ॥ ३३ ॥ शब्दशास्त्रविरुद्धोयःपाठःसोऽशुभकर्म्मणि ॥ शब्दशास्त्राविरुद्ध

स्तुपाठः शान्तिकपौष्टिके ॥ ३४ ॥ सार्धसप्तशतीं पठेच्चण्डीस्तवं सप्तशताक्षरम् ॥ समासौ तु महालक्ष्मीं ध्यात्वा कृत्वा षडङ्गकम् ॥ ३५ ॥ जपेदष्टशतम्मूलं देवतायै निवेदयेत् ॥ एवं यः कुरुते सोत्र नावसीदति कुत्रचित् ॥ ३६ ॥ शतचण्डीविधानन्तु प्रवक्ष्ये च प्रियं नृणाम् ॥ नृपोपद्रवमापन्ने दुर्भिक्षे भूमिकम्पने ३७ ॥ अतिवृष्ट्यामनावृष्टौ परचक्रभये क्षये ॥ सर्वे विघ्ना विनश्यन्ति शतचण्डीविधौ कृते ॥ ३८ ॥ रोगाणां वैरिणां नाशो धनपुत्रसमृद्धयः ॥ शङ्करस्य भवान्या वा प्रासादनिकटे शुभम् ॥ ३९ ॥ मण्डपं द्वारवेद्याद्यं कुर्य्यात्सध्वजतोरणम् ॥ तत्र कुण्डं प्रकुर्वीत प्रतीच्याम्मध्यतोपि वा ॥ ४० ॥ स्नात्वा नित्यकृतिं कृत्वा वृणुयाद्दशवाडवान् ॥ जितेन्द्रियान्सदाचारान्कुलीनान्सत्यवादिनः ॥ ४१ ॥ व्युत्पन्नांश्चण्डिकापाठे लज्जादयावतः ॥ मधुपर्कविधानेन वस्त्रशस्त्रादिदानतः ॥ ४२ ॥ पाद्यार्घ्यमासनम्मालां दद्यात्तेभ्योपि भोजनम् ॥ ते हविष्यान्नमश्नन्तो मन्त्रार्थगतमानसाः ॥ ४३ ॥ भूमौ शयानाः प्रत्येकञ्जपेयुश्चण्डिकास्तवम् ॥ मार्कण्डेयपुराणोक्तं दशकृत्वः सचेतसः ॥ ४४ ॥ नवार्णचण्डिकामन्त्रञ्जपेयुश्चायुतं पृथक् ॥ यजमानः पूजयेच्च कन्यानां नवकं शुभम् ॥ ४५ ॥ द्विवर्षाद्या दशाब्दान्ताः कुमारीः परिपूजयेत् ॥ नाधिकाङ्गीं नहीनाङ्गीं कुष्ठिनीं च व्रणाङ्किताम् ॥ ४६ ॥ अन्धां काणां केकराक्षीं च कुरूपां रोगयुक्ततनुम् ॥ दासीजाताम्भोगयुक्तामिष्टां कन्यां न पूजयेत् ॥ ४७ ॥ विप्रां सर्वेष्टसंसिद्ध्यै यशसे क्षत्रियोद्भवाम् ॥ वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत् ॥ ४८ ॥ द्विवर्षा सा कुमार्य्युक्ता त्रिमूर्त्तिर्हायनत्रिका ॥ चतुरब्दा तु कल्याणी पञ्चवर्षा तु रोहिणी ॥ ४९ ॥ षडब्दा कालिका प्रोक्ता चण्डिका सप्तहायना ॥ अष्टवर्षा शाम्भवी स्याद्दुर्गा तु नवहायना ॥ ५० ॥ सुभद्रा दशवर्षोक्ता नाममन्त्रैः प्रपूजयेत् ॥ एकाब्दां त्वप्रीतिभावाद्द्वाब्दान्तु विवर्ज्जयेत् ॥ ५१ ॥ तासामावाहने मन्त्रः श्लोकरूपो निगद्यते ॥ मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् ॥ ५२ ॥ नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥ कुमारिकादिकन्यानाम्पूजामन्त्रान्ब्रुवे धुना ॥ ५३ ॥ जगत्पूज्ये जगद्वन्द्ये सर्वशत्रुविनाशिनि ॥ पूजां गृहाण कौमारि जगन्मातर्नमोस्तु ते ॥ ५४ ॥ त्रिपुरां त्रिपुराधारां त्रिवर्गज्ञानरूपिणीम् ॥ त्रैलोक्यवन्दि

तांदेवींत्रिमूर्त्तिंपूजयाम्यहम् ॥ ५५ ॥ कालात्मिकांकलानीतांकारुण्यहृदयां शिवाम् ॥ कल्याणजननीन्नित्यांकल्याणींपूजयाम्यहम् ॥ ५६ ॥ कामचारां शुभांकान्तांकालचक्रस्वरूपिणीम् ॥ कामदांकरुणोदारांकालिकाम्पूजयाम्यहम् ॥ ५७ ॥ चण्डीम्पूज्यांचण्डिमयींचण्डमुण्डप्रभञ्जिनीम् ॥ पूजयामि सदादेवींचण्डिकांचण्डविक्रमाम् ॥ ५८ ॥ सदानन्दकरींशान्तांसर्वदेवनमस्कृताम् ॥ सर्वभूतात्मिकांलक्ष्मींशाम्भवीम्पूजयाम्यहम् ॥ ५९ ॥ दुर्गमेदुस्तरेकार्य्येभवदुःखविनाशिनीम् ॥ सुन्दरींपूजयेद्भक्त्याद्दुर्गान्दुर्गार्त्तिनाशिनीम् ॥ ६० ॥ सुन्दरींस्वर्णवर्णाभांसुखसौभाग्यदायिनीम् ॥ सुभद्रजननीं देवींसुभद्राम्पूजयाम्यहम् ॥ ६१ ॥ एतैर्मन्त्रैर्लक्षणाढ्यान्तांतांकन्याम्प्रपूजयेत् ॥ गन्धैःपुष्पैर्भक्ष्यखाद्यैर्वस्त्रैराभरणैरपि ॥ ६२ ॥ वेद्यांविरचितेरम्येसर्वतोभद्रमण्डले ॥ घटंसंस्थाप्यविधिवत्तत्रावाह्यार्चयेच्छिवाम् ॥ ६३ ॥ तदग्रे कन्यकाश्चापिभोजयेद्ब्राह्मणानपि॥उपचारैश्चविधिवत्पूर्वोक्तावरणान्यपि॥ ६४ ॥ एवंचतुर्दिनंकृत्वापञ्चमेहोममाचरेत् ॥ पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारम्भाफलैरपि ॥ ६५ ॥ मातुलुङ्गैरिक्षुखण्डैर्नारिकेलैःपुरैस्तिलैः ॥ जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिः ॥ ६६ ॥ सप्तशत्यादशावृत्त्याप्रतिश्लोकंहुतंचरेत् ॥ अयुतंचनवार्णेनस्थापितेग्नौविधानतः ॥ ६७ ॥ कृत्वावरणदेवानांहोमंतन्नाममन्त्रतः ॥ कृत्वापूर्णाहुतिंसम्यग्देवमग्निंविसृज्यच ॥ ६८ ॥ अभिषिञ्चेद्यष्टारंविप्रौघैःकलशोदकैः ॥ निष्कंसुवर्णमथवाप्रत्येकन्दक्षिणांदिशेत् ॥ ६९ ॥ भोजयेच्चपृथग्विप्रान्भक्षखाद्यैःपृथग्विधैः ॥ तेभ्योपिदक्षिणान्दत्त्वागृह्णीयादाशिषःशुभाः ॥ ७० ॥ एवंकृतेजगद्वश्यंसर्वेनश्यन्त्युपद्रवाः ॥ राज्यंधनंयशःपुत्रानिष्टमन्यल्लभेतच ॥ ७१ ॥ एतद्दशगुणंकुर्याच्चण्डीसाहस्रजंविधिम् ॥ विद्यावतःसदाचारान्ब्राह्मणान्वृणुयाच्छतम् ॥ ७२ ॥ प्रत्यहं चण्डिकापाठान्विदध्युस्तेशतोन्मितान् ॥ अयुतंचजपेयुस्तेप्रत्येकंचनवार्णकम् ॥ ७३ ॥ पूर्वोक्ताःकन्यकाःपूज्याःपूर्वमन्त्रैःशतंशुभाः ॥ एवंदशाहंसम्पाद्यहोमंकुर्य्यात्प्रयत्नतः ॥ ७४ ॥ सप्तशत्याःशतावृत्त्याप्रतिश्लोकंविधानतः ॥ लक्षसंख्यंनवार्णंचपूर्वोक्तद्रव्यसञ्चयैः ॥ ७५ ॥ होतृभ्योदक्षिणान्दत्त्वा

पूर्वोक्तान्भोजयेद्विजान् ॥ सहस्रसम्मितान्साधून्देव्याराधनतत्परान् ॥ ७६ ॥ एवंसहस्रसंख्याकेकृतेचण्डीविधौनृणाम् ॥ सिद्ध्यत्यभीप्सितंकर्म्मदुःखौघश्च विनश्यति ॥ ७७ ॥ नारीदुर्भगरोगाद्यानश्यन्तिव्यसनोच्चयाः ॥ नेमंविधिं वदेद्दुष्टेखलेचौरेश्रुतिद्रुहि ॥ ७८ ॥ साधौजितेन्द्रियेदान्तेवदेद्विधिमिमम्परम् ॥ एवंसावर्णिकातुष्टाब्रह्मश्रोतॄन्प्ररक्षति ॥ ७९ ॥ अथातःसम्प्रवक्ष्यामिमहाल क्ष्म्यामहामनुम् ॥ ऐंह्रींश्रींक्लींवेदवर्णोमन्त्रस्यास्यउदाहृतः ॥ ८० ॥ ऋषि र्भृगुर्निवृत्पूर्वमनुष्टुप्छन्दईरितम् ॥ देवताकमलाप्रोक्तासर्वसम्पत्करीशुभा ॥ ८१ ॥ एकाक्षरविधानेनषडङ्गानिप्रकल्पयेत् ॥ चतुर्भिःश्वेतकरिभिर्घटैर्मणि मयैःसदा ॥ ८२ ॥ आसिञ्च्यमानारत्नाभापद्माक्षारवराभया ॥ पद्मद्वयंच हस्तेषुबिभ्रतीनृपसेविता ॥ ८३ ॥ एकाक्षरोदितेपीठेयजेद्देवींचपूर्ववत् ॥ अर्कलक्षंजपेन्मन्त्रीनियताशीचसंहुनेत् ॥ ८४ ॥ तत्सहस्रंसरोजैश्चरक्तैस्त्रि स्वादुसंयुतैः ॥ पूर्वत्रोक्तप्रयोगांश्चकुर्य्यान्मन्त्रीयथाविधि ॥ ८५ ॥ ऐंह्रींश्रीं क्लींसमुच्चार्य्यहसशऔयुताःपुनः ॥ विसर्गान्ताःपञ्चमन्तुबीजमेतदुदाहृत म् ॥ ८६ ॥ जगत्प्रसूत्यैहृदयंद्वादशार्णोमनुःस्मृतः ॥ प्रणवादिरयम्मन्त्रःस्या त्त्रयोदशवर्णकः ॥ ८७ ॥ ऋष्याद्याब्रह्मगायत्रीमहालक्ष्मीःप्रकीर्त्तिता ॥ सं शोध्यमनुनापाणिंप्रणवाद्यंहृदन्तकम् ॥ ८८ ॥ अंगुलीषुक्रमान्मन्त्रीविन्यसे द्बीजपञ्चकम् ॥ मन्त्रशेषंजपेन्मन्त्रीतलयोरुभयोरपि ॥ ८९ ॥ मूर्द्धादिचरणं यावन्मन्त्रेणव्यापकंन्यसेत् ॥ शेषंसमार्णकंमन्त्रीविन्यसेद्धृदयादिषु ॥ ९० ॥ पञ्चबीजैःपञ्चमन्त्रीशेषैःषष्ठन्तुकल्पयेत् ॥ चतुर्थ्यन्तज्ञानमुख्यैश्चयुक्तंकुर्य्यात्षडङ्ग कम् ॥ ९१ ॥ ज्ञानैश्वर्य्यैशक्तिबलेवीर्य्यंतेजश्चषट्क्रमात् ॥ एवंन्यसेन्मनुं मन्त्रीचिन्तयेदिष्टदेवताम् ॥ ९२ ॥ आदौस्मरेत्सउद्यानंसर्वर्तुप्रतिशोभित म् ॥ मन्दान्दोलितकर्पूरकदलीदलसञ्ज्ञया ॥ ९३ ॥ अशोकनागसर

---

१ ऐं ह्रीं श्रीं क्लीं ह्सौः जगत्प्रसूत्यैनमः इति द्वादशाक्षर मन्त्रः २ ऐं अंगुष्ठाभ्यां नमः ह्रीं तर्जनीभ्यां नमः श्रीं मध्यमाभ्यां नमः क्लीं अनामिकाभ्यां नमः ह्सौः कनिष्ठिकाभ्यां नमः जगत्प्रसूत्यै नमः करतलकर पृष्ठाभ्यां नमः एवं षडंगन्यासः ३ ज्ञानादिकः नामों को हृदयादि स्थानों मे न्यासकरे जैसे ज्ञानं हृदयाय नमः ऐश्वर्यं शिरसे स्वाहा इत्यादि ॥

लकोविदारमनोरमम् ॥ मल्लिकायूथिकाकुन्दमदयन्तीसुगन्धिका ॥ ९४ ॥ द्राक्षावल्लीनागवल्लीमाधवीदेवदारुभिः ॥ नमेरुभिर्लवङ्गैश्चचन्दनैरक्तचन्दनैः ॥ ९५ ॥ मञ्जुलैर्मातुलुङ्गैश्चदाडिमीलकुचैःशुभम् ॥ नारिकेलैश्चखर्ज्जूरैःपूगैः कुरबकैर्वृतम् ॥ ९६ ॥ मालतीकेतकीजातीपाटलीतुलसीवृतम् ॥ नद्यावर्त्तैर्मदनकैःसर्वर्त्तुकुसुमोज्ज्वलम् ॥ ९७ ॥ प्रमदैःपिचुमन्दैश्चमन्दारैरुपशोभितम् ॥ शिरिषैःपनसैरुच्चैःशाखोटैरुपशोभितम् ॥ ९८ ॥ महानसन्तस्यमध्येस्मरेन्मन्त्रीमनोरमम् ॥ मल्लिकायूथिकाकुन्दजातीमालतिकावृतम् ॥ ९९ ॥ भ्रमद्भ्रमरमालाभिरलंकृतचतुर्दिशम् ॥ केकिकेकारवाकीर्णं लक्ष्मणासारसावृतम् ॥ ११०० ॥ कौरव्यहंससङ्घातं चक्रकारण्डवोज्ज्वलम् ॥ फुल्लैःसरसिजै रम्यैः कह्लारैःकैरवैरपि ॥ १ ॥ नीलेन्दीवरसङ्घैश्च सुगन्धिकुसुमैर्वृतम् ॥ सर्वर्त्तुशोभिभिःकल्पद्रुमैर्मण्डितमुज्ज्वलम् ॥ २ ॥ पुलिनंतत्रतन्मध्ये रत्नमण्डपकुट्टिमम् ॥ समुद्यदर्कसन्दोहकिरणद्युतिभास्करम् ॥ ३ ॥ हिमरश्मिकरव्रातसिक्तामृतसुशीतलम् ॥ प्रोल्लसद्धलतस्वर्णप्राकारसुमनोहरम् ॥ ४ ॥ नवरत्नमयप्रोद्यत्कपालाट्टालिकावृतम् ॥ नूतनोद्यन्महारत्नरचितंतुङ्गगोपुरम् ॥ ५ ॥ तप्तगालितहेमादिदण्डध्वजसमूहकम् ॥ वैडूर्य्यादिमहारत्नरचितस्तम्भराजितम् ॥ ६ ॥ सन्तप्तस्वर्णरचितगवाक्षशतसंकुलम् ॥ हेमदण्डस्फुरद्दीपसहस्रसुमनोहरम् ॥ ७ ॥ नानाविधक्षौमवस्त्रै रचिताभिश्च काञ्चनैः ॥ सक्षुद्रघण्टिकायुक्तपताकाभिरलंकृतम् ॥ ८ ॥ शरद्राकासुधारश्मिदुकूलरचितैःशुभैः ॥ विचित्रवसनोद्भूतैर्युतंचन्द्रायुतैरपि ॥ ९ ॥ काञ्चनोर्वीमणिव्रातकुट्टिमालंकृतंशुभम् ॥ घनसारागुरुनखकस्तूरीकुंकुमैरपि ॥ १० ॥ तमालैर्द्रव्यजातैश्च सुगन्धिभिरथेतरैः ॥ क्रमादेवचतुर्द्वारं मण्डपंपरिचिन्तयेत् ॥ ११ ॥ तदन्तःपारिजातस्य मूलेसिंहासनंनवम् ॥ नानारत्नगणाकीर्णं तत्रदेवींविचिन्तयेत् ॥ १२ ॥ बालभास्करसत्कान्ति शशिशेखरमण्डिताम् ॥ मुक्ताहारोज्ज्वलांरम्यां रत्नाकल्पविभूषिताम् ॥ १३ ॥ हस्ताम्भोजैश्चबिभ्राणां नूतनांशालिमञ्जरीम् ॥ पद्मद्वयंकौस्तुभंच सस्मितास्यसरोरुहाम् ॥ १४ ॥ विकचोत्पलसंशोभि नयनत्रयभूषिताम् ॥ क्वणन्नूपुरसम्फुल्लरक्तोत्पलपदद्

याम् ॥१५॥ नितम्बविलसद्धेमरशनादाममञ्जुलाम् ॥ बलित्रयलसद्वेदिमध्यदेशसुशोभिताम् ॥१६॥ गभीरावृत्तहृन्नाभिहृद्दमण्डलमण्डिताम् ॥ यक्षकर्दमसंलिप्तपीनोन्नतघनस्तनीम् ॥ १७ ॥ कुम्भिकुम्भोद्भवंशोद्यन्मुक्तादामविराजिताम् ॥ क्षौमोत्तरासङ्गवतींपुष्पदामविभूषिताम् ॥ १८॥ माणिक्यस्वर्णखचितवैदूर्य्याद्यङ्गदोज्ज्वलाम् ॥ काञ्चनोद्यत्पद्मरागमणिसंवद्धकङ्कणाम् ॥ १९॥ नानाविधलसद्रत्नमुद्रिकालंकृतांगुलीम् ॥ कम्बुकण्ठकलारावांस्वर्णग्रैवेकराजिताम् ॥ २० ॥ विचित्रनानालङ्कारालंकृताङ्गींशुचिस्मिताम् ॥ उद्यदर्कप्रभाभास्वद्रत्नताटङ्कशोभिताम् ॥ २१ ॥ निर्लाञ्छनशरद्राकातारापिशुभाननाम् ॥ पञ्चशायककोदण्डजिद्भ्रूयुगविराजिताम् ॥ २२ ॥ विडालनासिकांप्रोद्यत्तिलपुष्पाक्षतांशुभाम् ॥ कर्णपूरीकृतस्वर्णबद्धरत्नांकुरांशुभाम् ॥ २३॥ प्रवालविलसत्कान्तिरुचिराधरपल्लवाम् ॥ शेखरेप्रोल्लसद्रत्नरशनावलिशोभिताम् ॥ २४ ॥ शीतांशुसकलाकाररुचिरालकराजिताम् ॥ कान्तकुञ्चितसंस्निग्धनीलमञ्जुलमूर्द्धजाम् ॥ २५ ॥ तप्तहाटकसम्बद्धनानारत्नौघशेखराम् ॥ सौन्दर्य्यसलिलाम्भोधिरत्नसारविभूषिताम् ॥ २६ ॥ विलासलक्ष्म्याभवनंमहालक्ष्मींविचिन्तयेत् ॥ वामाधःकरमारभ्यसाध्येदक्षकरावधि ॥ २७ ॥ आयुधानिचपूर्वोक्तेरमापीठेयजेदिमाम् ॥ दद्याद्बीजेनासनंचस्वानुनामूर्तिकल्पनम् ॥ २८॥ दक्षभागेयजेद्देव्यागणकंवामतस्तथा ॥ सुमनोञ्जलिहस्तंचपुष्पाभरणमर्चयेत् ॥ २९ ॥ अङ्गानिपूजयेदादौयथास्थानंचमन्त्रवित् ॥ अष्टपत्रेस्थितापूज्याउमाश्रीश्चसरस्वती ॥ ३० ॥ दुर्गाधरणिगायत्र्यौदेव्युषाचेतिशक्तयः ॥ नानालङ्करणाढ्यास्स्युरम्भोजद्वयपाणयः ॥ ३१ ॥ अंघ्रिप्रक्षालनार्थञ्चप्रोच्यन्तेवह्निसूर्यभे ॥ पूजनीयेप्रयत्नेनकराभ्यांधृतचामरौ ॥ ३२ ॥ निधीपूज्यौचवरुणंपश्चिमेछत्रधारिणम् ॥ परितश्चयजेद्राशीन्ग्रहान्नत्रततोर्चयेत् ॥ ३३ ॥ चतुर्दन्तान्दिग्गजांश्चयजेदाशासुमन्त्रवित् ॥ लोकपालांस्तदस्त्राणितत्तद्वाह्येयजेत्पुनः ॥ ३४ ॥ जपेद्भास्करलक्षंचनियताशीधृतव्रतः ॥ तद्दशांशंप्रजुहुयादघृतैस्त्रिस्वादुसंयुतैः ॥ ३५ ॥ पद्मैरमातुमफलैःप्रत्येकमयुतंहुनेत् ॥ सुशीतैःशुचिभिस्तोयैस्तर्प्पयेदयुतद्वयम् ॥ ३६ ॥

एवंसिद्धमनुर्मन्त्रीगुरुभक्तोदृढव्रतः ॥ कुर्य्यात्काम्यानिकर्माणिस्वाभीष्टानि
चमन्त्रवित् ॥ ३७ ॥ आज्यप्लुताभिर्दूर्वाभिरायुष्कामोहुनेन्नरः ॥ सहस्रंदश
रात्रंचसमिद्धेहव्यवाहने ॥ ३८ ॥ घृताक्ताभिश्चदूर्वाभिरष्टोत्तरसहस्रकम् ॥
सप्ताहंजुहुयाज्जीवेद्वत्सराणांशतंसुधीः ॥ ३९ ॥ दूर्वायुक्तैर्घृताभ्यक्तैःस्नि
ग्धैःप्रजुहुयाद्बुधः ॥ आरोग्यकामोजुहुयादारभ्यार्कदिनंसुधीः ॥ ४० ॥
दशाहंप्रत्यहंवापिसर्पिषाक्तान्समिद्वरान् ॥ कण्ठमात्रेजलेस्थित्वामहालक्ष्मी
मितिस्मरेत् ॥ ४१ ॥ अष्टाधिकसहस्रंचऊर्ध्वबाहुर्जपेन्मनुम् ॥ सत्राञ्छिता
र्थंलभतेतथारोग्यंचसाधकः ॥ ४२ ॥ अन्वहंजुहुयादष्टसहस्रंशालिभिर्ध्रुव
म् ॥ सोचिराल्लभतेलक्ष्मींमहतींसाधकोत्तमः ॥ ४३ ॥ रमालताप्रसूनैर्वान
द्यावर्त्तसमुद्भवैः ॥ श्वेतसर्षपकैराज्यप्लुतैर्वाजुहुयाद्बुधः ॥ ४४ ॥ प्रथीयसी
रमामाप्नोत्यचिरात्साधकोत्तमः ॥ मान्यतेचतथासर्वैर्जन्तुभिर्नान्यथात्रच ॥
४५ ॥ नारिकेलरसैर्युक्तैर्मरिचैर्वीरकान्वितैः ॥ गुडयुक्तघृतैःपक्वैरपूपैर्जुहुया
त्सुधीः ॥ ४६ ॥ संयतःप्रत्यहंचाष्टशतंपायससुग्द्विजः ॥ मण्डलाच्चध्रुवंसाक्षा
द्भवेद्वैश्रवणोयमः ॥ ४७ ॥ गुडमिश्रहविष्यस्यहोमादन्नसमृद्धिमान् ॥ अष्टो
त्तरसहस्रंचजपापुष्पाणिसंहुनेत् ॥ ४८ ॥ संगृह्यभस्ममन्त्रीतन्नागवल्लीरसे
नच ॥ सहितंतिलकंकुर्य्यात्सर्वंवश्यंभवेद्ध्रुवम् ॥ ४९ ॥ पलाशोत्थसमिद्भि
श्चकुसुमैर्जुहुयात्तथा ॥ वश्याभवेयुर्भुखरावशिनस्तस्यमन्त्रिणः ॥ ५० ॥ जा
तिकाकुसुमैर्मन्त्रीराजानंवशमानयेत् ॥ जुहुयादरुणाम्भोजैर्वश्यास्स्युस्त
स्यवश्यगाः ॥ ५१ ॥ नीलोत्पलानांहोमेनवश्याश्चारण्यसम्भवाः ॥ वश
येत्प्रमदाविद्वान्मधूककुसुमैर्हुनेत् ॥ ५२ ॥ नवकोष्ठात्मकंसम्यङ्मण्डलंरचये
त्सुधीः ॥ मध्येयन्त्रंवक्ष्यमाणंकल्पयेच्चयथाविधि ॥५३॥ तेषुकोष्ठेषुनवसुविन्य
सेत्कलशान्नव ॥ शुभांश्चन्दनकाश्मीरलिप्तान्सर्वाङ्गसुन्दरान् ॥ ५४ ॥
कुर्वंस्तण्डुलसंयुक्तान्सर्वदृष्टिमनोहरान् ॥ पूजयेच्चयथावत्तान्वासितैस्तीर्थ
पुष्करैः ॥ ५५ ॥ कर्पस्वर्णेनरचितन्नवरत्नसमन्वितम् ॥ कर्णिकामध्यविलसत्त
त्रपद्मंतुकारयेत् ॥ ५६ ॥ मध्यमेकलशेरम्येयथावत्तद्विनिःक्षिपेत् ॥ खादिरो
शीरकाश्मीरचन्द्रागुरुतमालकम् ॥ ५७ ॥ जातीकङ्कोलसंयुक्तंवीक्षितानि

विभागशः ॥ कलशेषुचसर्वेषुयथाविधिविलोडयेत् ॥ ५८ ॥ सदाभद्राचद्रू
र्वाचदेवीश्रीश्चमधुव्रता ॥ अपामार्गस्यपत्राणिमुशलीवज्रवल्लरी ॥ ५६ ॥
चक्रप्रियंगुव्रीहींश्चमुद्गगोधूमतण्डुलान् ॥ शालिमाषांश्चसतिलान्यवान्
प्रक्षाल्यनिक्षिपेत् ॥ ६० ॥ कदलीनालिकेरांश्चश्रीधात्रीकुचभूरुहान् ॥
फलानिपद्मवकुलजातीसौगन्धिकानिच ॥ ६१ ॥ मल्लिकाचम्पकाशोकपु
न्नागोत्थानिनिक्षिपेत् ॥ पुष्पाणिकेतकंतद्वत्तुलसीपल्लवांस्तथा ॥ ६२ ॥
न्यग्रोधोदुम्बरप्लक्षचैत्यानांत्रह्मकूर्चनम् ॥ प्रक्षिप्यघटवस्त्राणिच्छादयेच्चम्पकैः
शुभैः ॥ ६३ ॥ साक्षतैःसफलैस्तांश्चवेष्टयेत्क्षौम्यवाससा ॥ तेषुमध्यस्थकल
शेसमावाह्यमहेश्वरीम् ॥ ६४ ॥ महालक्ष्मींचन्दनाद्यैरुपचारैश्चसंयजेत् ॥
शेषेष्वष्टसुकुम्भेषुक्रमादुत्क्रमतोयजेत् ॥ ६५ ॥ सुगन्धैश्चन्दनैःपुष्पैर्मनोज्ञै
र्धूपदीपकैः ॥ भक्ष्यभोज्यनिवेद्यैश्चयथाविधियजेत्सुधीः ॥ ६६ ॥ संस्पृश्य
तान्घटान्मन्त्रीत्रिसहस्रंमनुंजपेत् ॥ ततःसाध्यंसमानीयसंयतंस्थण्डिलेशु
भैः॥६७॥सुपीठेतंनिवेश्यस्वंतस्मिन्साध्येनुयोजयेत्॥मनोहरैरलङ्कारैर्विविधैर्व
सनैरपि ॥ ६८ ॥ आदरादप्यलंकृत्यसुक्लृप्तसुमनोवृतम् ॥ सुवासिनीभि
र्जायाभिरर्चितानांद्विजन्मनाम् ॥ ६६ ॥ शमाशीर्वचनैःसर्ववाद्यानांनिन
दैःसह ॥ वेदघोषेणचसहलग्नेचैवतुशोभने ॥ ७० ॥ तेषुमध्यस्थितंकुम्भंसमु
द्धृत्यगुरुःस्वयम् ॥ मूलमन्त्रंजपन्सिञ्चेत्साध्यशीर्षिणततोपरैः ॥ ७१ ॥ कल
शैःपूर्ववत्सिक्त्वाहस्तेनास्यशिखाशिरः ॥ संस्पृशन्वेदगदितामाशिषंसंप्रय
च्छति ॥ ७२ ॥ कल्याणमस्तुचसदासम्पदश्चनिराकुलाः ॥ प्रसीदतुमहा
लक्ष्मीःसकलादेवताअपि ॥ ७३ ॥ रक्षन्तुत्वांसर्वदेवाविजयोस्तुसुखीभव ॥
इत्थंदत्त्वाशिषंपश्चाद्वासस्रीपरिधाय्यच ॥ ७४ ॥ आचान्तःप्रणमेत्सम्यग्यथा
विधिगुरुंशिशुः ॥ नानाविधैश्चवसनैर्नानालङ्करणैःशुभैः ॥७५॥ धनैर्धान्यै
रत्नगोभिर्महिषीभिश्चदासकैः ॥ दासीभिर्देवताबुद्ध्यागुरुंसन्तोषयेत्सुधीः ॥
७६ ॥ नानाविधैर्भक्ष्यभोज्यैर्लेह्यैश्चोष्यैस्तथेतरैः ॥ दीनान्धकृपणैःसार्धंभोज
येच्चद्विजन्मनः ॥ ७७ ॥ ततःस्वमन्दिरेकुर्य्यादुत्सवंबन्धुभिःसह ॥ महात्रिलो
कस्यश्चततःसन्नृवरःस्वयम् ॥ ७८ ॥ कृतार्थंमन्यतेसम्यगात्मानंनान्यथाक्वचि

त् ॥ राजाशत्रून्विजयतेभिषिक्तश्चयथाविधि ॥७६॥ राजपुत्रश्चराजास्याद
चिरादाप्नुयात्पदम् ॥ बन्ध्याभिषिक्तारमणादचिराद्वाञ्छितंसुतम् ॥ ८० ॥ म
हामतिंचलभतेनात्रकार्याविचारणा ॥ महामयेषुभूतादिनिषिक्तोत्थभयेषुच ॥
८१ ॥ कृत्याद्रोहादिदोषेचप्रकुर्य्यादभिषेचनम् ॥ अभिषेकेणामुनाचनृणांभव
तिनिश्चितम् ॥ ८२ ॥ सर्वसम्पच्चसौभाग्यंसर्वामयशमंतथा ॥ सर्वापद्वारणं
चैवसर्वसौख्यानिनिश्चितम्॥८३॥ अथातःसम्प्रवक्ष्यामिसप्तविंशाक्षरंमनुम्॥
तारोरमाशक्तिलक्ष्मीकमलेकमलालये ॥ ८४ ॥ प्रसीदद्वितयंश्रींह्रींश्रींमहाल
क्ष्मिहृत्तथा ॥ गायत्रीछन्दउद्दिष्टंमुनिर्दक्षप्रजापतिः ॥ ८५ ॥ लक्ष्मीर्देव्यथ
पैश्चाङ्गंत्रिवीजपुटितैर्मनोः ॥ वर्णैस्त्रिपञ्चरामाग्निरामैर्ध्यानमथोब्रुवे ॥ ८६ ॥
सिन्दूराभांचपद्मस्थांपद्मपत्रंचदर्पणम् ॥ अर्धगात्रेचदधतींसद्धारमुकुटान्विता
म् ॥ ८७ ॥ नानादासीपरिवृतांकाञ्चीकुण्डलमण्डिताम् ॥ लावण्यभूमिकां
वन्देसुन्दराङ्गदबाहुकाम् ॥ ८८ ॥ पूर्वोदितेयजेत्पीठेवर्त्तमानेनवर्त्मना ॥
पुरोङ्गानियजेत्पश्चाच्छ्रीधरादींस्ततःपरम् ॥ ८६ ॥ श्रीधरश्चहृषीकेशोवैकु
ण्ठोविश्वरूपकः ॥ वासुदेवश्चसङ्कर्षणःप्रद्युम्नानिरुद्धकौ ॥ ६० ॥ तदग्राष्ट
दलेपूज्याभारतीपार्वतीतथा ॥ ब्राह्मीसतीदिक्षुचैताआग्नेयादिविदिक्षुतु ॥
६१ ॥ दमकःसलिलश्चापिगुग्गुलुश्चकुरन्तकः ॥ चत्वारस्तुगजाएतेतती
येष्टदलेर्चयेत् ॥ ६२ ॥ अनुरागोविसंवादोविजयोवल्लभोमदः ॥ हर्षोबलश्च
तेजस्वीयजेल्लोकेश्वरान्बहिः ॥ ६३ ॥ तदायुधानितद्बाह्येपूजयेच्चन्दना
दिभिः ॥ एवंसम्पूजयेल्लक्ष्मींयोमर्त्यःसधनीभवेत् ॥ ६४ ॥ लक्षंजपेत्फलैर्बिल्वै
र्जुहुयान्मधुरोक्षितैः ॥ दशांशंसंस्कृतेवह्नौप्राक्प्रोक्तेनैववर्त्मना॥ ६५ ॥ एवंसि
द्धमनुर्मन्त्रीसाधयेदिष्टमात्मनः ॥ चन्दनाक्तैःसरसिजैर्लक्षंपञ्जुहुयात्सुधीः ॥
६६ ॥ लभतेवैरिणांराज्यंतथैवसमरंविना ॥ राज्यलक्ष्मीमनुंचैवप्राप्यराजस
भांव्रजेत् ॥ ६७ ॥ तथास्वंप्राप्यतेनित्यंनात्रकार्य्याविचारणा ॥ सहदेवीश्रील

---

१ ॐ श्रीं ह्रीं श्रीं कमलेकमलालये प्रसीदप्रसीद श्रीं ह्रीं श्रीं महालक्ष्मि नमः २ श्रीं ह्रीं श्रीं कमले श्रीं ह्रीं श्रीं हृदयायनमः श्रीं ह्रीं श्रीं कमलालये श्रीं ह्रीं श्रीं शिरसेस्वाहा इसी रीति से और भी न्यास कर्तव्य है ॥

ताचश्वेतदूर्वापराजिता ॥ ९८ ॥ भद्रामधुव्रताशक्रवल्लीसाञ्जलिमूशली ॥ हरि
चन्दनकालीयंकर्पूरंरक्तचन्दनम् ॥ ९९ ॥ कुष्ठकङ्कोलकाश्मीरहरिद्राशिखरीसमे॥
पिष्ट्वासम्यक्चसञ्जप्तमष्टोत्तरसहस्रकम् ॥ १२०० ॥ अनेनतिलकंकुर्यात्सर्वं
वश्यंभवेद्ध्रुवम् ॥ पूर्वोक्ताश्चात्रसिद्ध्यन्तिप्रयोगावाञ्छितार्थदाः ॥ १ ॥
ॐशुद्धवाससेप्रोक्तानमोमहाश्रियेचहृत्॥ चतुर्दशाक्षरोमन्त्रोलक्ष्मीहृदयना
यकः ॥ २ ॥ मनोःपदैश्चपञ्चाङ्गंपूर्ववद्ध्यानपूजनम् ॥ जपस्त्रिलक्षमेतस्यप
द्मैर्होमोदशांशतः ॥ ३ ॥ मुनिश्छन्दादिकंप्राग्वत्प्रयोगःपूर्ववन्मतः ॥ एत
स्योपासकानांतुनवंशेस्याद्दरिद्रता ॥ ४ ॥ यौनौमौनमऐंप्रोक्ताश्रियैश्रींन
मइत्यपि ॥ एकादशार्णोमन्त्रोयंजमदग्निर्मतोमुनिः ॥ ५ ॥ त्रिष्टुप्छन्दो
रमादेवीषडङ्गविधिरुच्यते ॥ यौनौमौनमऐंनमोहृदयायनमोस्तुहृत् ॥ ६ ॥
यौनौमौनमऐंस्वाहाशिरसेग्निवधूःशिरः ॥ यौनौमौनमऐंवषट्शिखायैचवषट्
शिखा ॥ ७ ॥ यौनौमौनमऐंहुंचकवचंकवचायहुम् ॥ श्रियैनेत्रायवौषट्चप्रो
क्तानेत्रंतुविन्यसेत् ॥ ८ ॥ श्रींनमोस्त्रायफट्चेत्यस्त्रमंगुल्यादिकंतथा ॥
ध्यानपूजादिकंसर्वंमहालक्ष्मीवदाचरेत् ॥ ९ ॥ नित्यंद्वादशसाहस्रंसप्तरात्रं
मनुंजपेत् ॥ तेनसिद्धोभवेन्मन्त्रःसाधकस्यनसंशयः ॥ १० ॥ होमःपूर्वो
दितैर्द्रव्यैर्दशांशंतर्पणादिकम् ॥ कृत्वाब्राह्मणभोजान्तंमन्त्रसिद्धिःप्रजाय
ते ॥ ११ ॥ लक्ष्मींसुवर्णककरांध्यात्वामन्त्रमिमंजपेत् ॥ अष्टोत्तरसहस्रं
चसलभेद्वाञ्छितंफलम् ॥ १२ ॥ जपन्नष्टशतंविश्वंतिलकाद्वशयेद्ध्रुव
म् ॥ मासत्रयंतथाजप्त्वाग्रामंमन्त्रीसमाप्नुयात् १३ ॥ अथातःसम्प्र
वक्ष्यामिलक्ष्मींपद्मप्रभाभिधाम् ॥ पद्मप्रभेपद्मसुन्दरिपद्मेश्यग्निगेहिनी ॥
१४ ॥ चतुर्दशाक्षरोमन्त्रोध्यानाद्येकाक्षरोदितम् ॥ पदैश्चतुर्भिःसर्वेणपञ्चा
ङ्गंगदितंमनोः ॥ १५ ॥ जपपूजापुरश्चर्य्यादिकमेकाक्षरोदितम् ॥ इयंसि
द्धामहाविद्याभक्तानांकल्पवल्लिका ॥ १६ ॥ अथातःसम्प्रवक्ष्यामिलक्ष्मी

---

१ पद्मप्रभे पद्मसुन्दरि पद्मेशि स्वाहा, अथ षडङ्गन्यासः -- पद्मप्रभेहृदयाय नमः, पद्मसु
न्दरिशिरसेस्वाहा, पद्मेशिशिखायैवषट् , स्वाहा कवचायहुम् , पद्मप्रभेपद्मसुन्दरि पद्मेशि
स्वाहानेत्रत्रयायवौषट् ॥

साम्राज्यसञ्ज्ञितम् ॥ आदौश्रीबीजमुच्चार्य्यसहकलहरास्ततः ॥ १७ ॥ ईकारान्ताबिन्दुयुताद्वितीयंकूटमुच्यते ॥ पुनश्चश्रींसमुच्चार्य्यमन्त्रस्त्र्यक्षरई रितः ॥१८॥ ऋषिर्हरिस्तथाछन्दोगायत्रीदेवतामता ॥ देवतामोहिनीलक्ष्मी स्सर्वसाम्राज्यदायिनी ॥ १९ ॥ बीजंकूटंसमाख्यातंशक्तिःश्रीबीजमुच्यते ॥ षड्भिर्दीर्घैःस्वरैर्विद्वान्षडङ्गानिप्रविन्यसेत् ॥ २० ॥ अतसीपुष्पसङ्काशांरत्नभू षणभूषिताम् ॥ शङ्खचक्रगदापद्मशार्ङ्गबाणधरांकरैः ॥ २१ ॥ षड्भिःकराभ्यां देवेशींवरदाभयशोभिताम् ॥ पूजयामिजगद्धात्रीं बिन्दुषट्कोणमेवच ॥ २२ ॥ त्रिकोणंचाष्टपत्रंचभूपुरद्वारमण्डितम् ॥ अस्मिन्समावाह्यदेवींपूजयेदुपचार कैः ॥ २३ ॥ बिन्दौदेवींषडङ्गानिषट्कोणेषुयजेत्ततः ॥ अग्रेयजेच्चगायत्रींसा वित्रींचसरस्वतीम् ॥ २४ ॥ ब्राह्मयाद्याश्चाष्टपत्रेषुभूपुरेमनुनामुना ॥ अष्टा दशमहाकोटियोगिनीभ्योनमस्त्विति ॥ २५ ॥ अर्चासुनेत्रयोगिन्यःशक्रा दीनायुधान्यपि ॥ पुनर्देवींसमभ्यर्च्यगन्धपुष्पाक्षतादिभिः ॥ २६ ॥ वटुक क्षेत्रपालेभ्योयोगिनीभ्योबलिंहरेत् ॥ एवमष्टभुजांध्यात्वात्रिलक्षंप्रजपेत्सु धीः ॥ २७ ॥ तद्दशांशेनपद्मैस्तुहुनेत्साम्राज्यसिद्धये ॥ तर्प्पणंमार्ज्जनंकुर्य्या द्ब्राह्मणानपिभोजयेत् ॥ २८ ॥ अथातःसम्प्रवक्ष्यामिसप्तवर्णरमामनुम् ॥ हृदयंब्रह्मतनयेमन्त्रोयंपरिकीर्त्तितः ॥ २९ ॥ मनोःपदद्वयेनैवत्रिरावृत्त्याषड ङ्गकम् ॥ ध्यानपूजापुरश्चर्य्यादिकमेकाक्षरोदितम् ॥ ३० ॥ अथातःसम्प्रव क्ष्यामिज्येष्ठालक्ष्मीमनुंपरम् ॥ ॐह्रींश्रींआदिलक्ष्मीतिपदमुक्त्वास्वयम्भुवे ॥ ३१ ॥ ह्रींज्येष्ठायैनमःप्रोक्तामन्त्रःसप्तदशाक्षरः ॥ ऋषिरस्यस्मृतोब्रह्माछन्द स्त्रिष्टुबुदाहृतम् ॥३२॥ देवताज्येष्ठलक्ष्मीश्चश्रीमायेशक्तिबीजके ॥ प्रमृज्य त्रिःकरोविद्वानङ्गन्यासंसमाचरेत् ॥ ३३ ॥ त्रिवेदाब्धीन्द्वग्नियुग्मवर्णैर

---

१ श्रीं सह् कूलह्रीं श्रीं इति त्र्यक्षरमन्त्रः २ आं ईं ऊं ऐं औं अः, इन छह अक्षरोंका षडंगों में न्यासकरे जैसे आं हृदयाय नमः ईंशिरसे स्वाहा इत्यादि ३ नमः ४ नमः और ब्रह्मतनये इन दोनों पदोंकी तीन आवृत्तियां करके षडङ्ग न्यास होताहै जैसे नमः हृदयाय नमः, ब्रह्मतनये शिरसे स्वाहा, नमः शिखायै वषट्, ब्रह्मतनये कवचायहुम्, नमः नेत्र त्रयायवौषट्, ब्रह्मतनये अस्त्रायफट् ५ ॐ ह्रीं श्रीं आदिलक्ष्मि स्वयम्भुवे ह्रीं ज्येष्ठायै नमः ॥

ज्ञानिषट्क्रमात् ॥ शिरोभ्रूमध्यवक्त्रेषुबीजानांत्रितयंन्यसेत् ॥ ३४ ॥ हृन्ना भ्याधारजान्वंघ्रौपदानांपञ्चकंन्यसेत् ॥ पद्मासनस्थामरुणामरुणाम्बरधारि णीम् ॥ ३५ ॥ कुंकुमक्षोदलिप्ताङ्गींप्रफुल्लकमलेक्षणाम् ॥ मन्दस्मितमुखां ज्येष्ठांसुधापूर्णघटंघटम् ॥ ३६ ॥ धनपूर्णंसृणिंपाशंदधतींभुजपल्लवैः ॥ चि न्तयेत्परयाभक्त्याततोदेवींप्रपूजयेत् ॥ ३७ ॥ सम्यग्धर्म्मादिभिःपीठंमन्त्र वित्परिकल्पयेत् ॥ लोहिताक्षीविरूपाक्षीकरालीनीललोहिता ॥ ३८ ॥ सम दावारुणीपुष्टिरमोघाविश्वमोहिनी ॥ पूर्वादिदलमध्येषुमध्येचार्च्याःक्रमा दिमाः ॥ ३९ ॥ रक्तज्येष्ठायैविद्महेनीलज्येष्ठायैधीमहि ॥ तन्नोलक्ष्मीःप्रचोद यात् ॥ ४० ॥ गायत्र्यावाह्यतांज्येष्ठांपूजयेच्चन्दनादिभिः ॥ अङ्गानिमातृ लोकेशांस्तदस्त्राणिप्रपूजयेत् ॥४१॥ लक्षंतुप्रजपेन्मन्त्रंजुहुयात्तद्दशांशतः ॥ पायसेनसुसिद्धेनसर्पिःसिक्तेनसाधकः ॥४२॥ तर्प्पणंमार्जनंकृत्वाब्राह्मणान पिभोजयेत् ॥ इहवंशंचसम्पत्तिंवैकुण्ठंचमृतोलभेत्॥४३॥ अथातःसम्प्रवक्ष्या मिसिद्धिलक्ष्मीमहामनुम् ॥ एकादशाक्षरैरूनंतंशतत्रयवर्णकम् ॥४४॥ ॐ श्रींनमःसर्वसिद्धियोगिनीभ्योनमोवदेत् ॥ सर्वसिद्धिमातृकाभ्योनमोनित्यो दितावदेत् ॥ ४५ ॥ नन्देत्युक्त्वानन्दितायैसकलेतिपदंततः ॥ कुलचक्रना मिकायैभगवत्यैपदंवदेत् ॥ ४६ ॥ ततश्चण्डकपालिन्यैअंह्रींहूंह्रांवदेत्ततः ॥ अंक्षौंक्रौंनमइत्युक्त्वापरमोक्त्वाचहंसिनि ॥ ४७ ॥ निर्वाणमार्गदेदेविविषमो पप्लवेतिच ॥ प्रशमनिपदंप्रोक्त्वासकलेतिपदंवदेत्॥४८॥ दुरितारिष्टक्लेशेतिद लनीतिततःपदम् ॥ सर्वापदाम्भोधितारिणीत्युक्त्वासकलेतिच॥४९॥शत्रुवि ध्वंसिनीदेव्यागच्छआगच्छउच्चरेत्॥हंसयुग्मंबलायुग्मंनरेतिरुधुरांत्रच॥५०॥ वशाभक्षिणिममशत्रूनउक्त्वामर्दयमर्दय ॥ खाहिखाहित्रिशूलेनभिन्धिभि न्धिवदेत्ततः ॥ ५१ ॥ छिन्धिछिन्धीतिखड्गेनताडयद्वितयंवदेत् ॥ छेदय द्वितयम्प्रोक्त्वातावद्यावन्ममेतिच ॥ ५२ ॥ सकलेतिपदस्यान्तेवदेदेवम्मनो रथान् ॥ साधयद्वितयान्तेतुवदेत्परमइत्यपि ॥ ५३ ॥ कारुणिकेभगवतिम हाभैरवरूपधा ॥ रिणित्रिदशइत्युक्त्वावरेतिनमितेवदेत् ॥ ५४ ॥ सकलेति चमन्त्रेणमातःप्रणतइत्यपि ॥ जनेतिवत्सलेदेविमहाकालिपदंवदेत्॥५५॥

कालनाशिनि ह्रूं ह्रूं ह्रूं प्रसीद मदनातुराम् ॥ कुरुकुरु सुरासुरकन्यकां ह्रीं वसुप्रिया ॥ ५६॥ हूं त्रिधा फट् ततः स्वाहा मन्त्रोयं समुदीरितः ॥ त्रिलोचनमुनिश्चातिजगतीछन्द उच्यते ॥ ५७ ॥ सिद्धिलक्ष्मीदेवता श्रीं बीजं ह्रीं शक्तिरुच्यते ॥ तारादिकन्तु हृदयं वदेत्परमहंसिनि ॥ ५८ ॥ निर्वाणमार्गदे देविशीर्षमन्त्रो ध्रुवादिकः ॥ विषरोपप्लवप्रशमनि ध्रुवाद्या शिखामता ॥ ५६ ॥ सकलदुरितारिष्टक्लेशदलनिवर्म्म च ॥ सर्वापदाम्भोधितारिणीतिनेत्रं ध्रुवादिकम् ॥ ६० ॥ सकलशत्रुध्वंसिनि ताराद्यं चास्त्रमुच्यते ॥ एवं कृत्वा षडङ्गानि वक्त्रन्यासं समाचरेत् ॥ ६१ ॥ ॐ नमः सर्वसिद्धीतियोगिनीभ्यः पदं वदेत् ॥ ईशानवक्त्रायनमः पूर्ववक्त्रे तु विन्यसेत् ॥ ६२ ॥ ॐ नमः सर्वसिद्धीतिमातृभ्य इति चोच्चरेत् ॥ तत्पुरुषेति वक्त्राय नमः प्रोक्तान्यसेद्वाक् ॥ ६३ ॥ ऐं ह्रीं नित्योदितानन्दनन्दितायै वदेत्ततः ॥ अघोरवक्त्राय नमः पश्चिमे तु मुखे न्यसेत् ॥ ६४ ॥ ऐं सकलकुलचक्रनायिकायै पदं वदेत् ॥ वामदेववक्त्रायेति नमश्चोदङ्मुखे न्यसेत् ॥ ६५ ॥ भगवत्यै चण्डकपालिन्यै वाक्पूर्वकं न्यसेत् ॥ सद्योजातेति वक्त्राय नमश्चोर्ध्वमुखे न्यसेत् ॥ ६६ ॥ पञ्चवक्त्रां दशभुजां पीनोन्नतपयोधराम् ॥ तडित्कोटिसमप्रख्यां सिन्दूरारुणविग्रहाम् ॥ ६७ ॥ अक्षमालां कपालञ्च शूलं खड्गञ्च बिभ्रतीम् ॥ खेटं घण्टां स्वर्णपाशं सांकुशं वरदाभये ॥ ६८ ॥ नीलग्रीवां चन्द्रमौलिं त्रिनेत्रां सर्वभूषणाम् ॥ सर्वसिद्धिप्रदां देवीं सिद्धिलक्ष्मीं विचिन्तयेत् ॥ ६६ ॥ मार्गद्वयेपि पूजास्यामापीठे दक्षिणे यजेत् ॥ वामे तु भुवनेश्वर्य्या अङ्गैः स्यात्प्रथमावृतिः ॥ ७० ॥ राज्यविद्या च सौभाग्यामृतकाम्यपदादिकाः ॥ सत्यभोगयोगपूर्वा लक्ष्म्योऽष्टौ च दलाष्टके ॥ ७१ ॥ एतद्द्वितीयावरणं ब्राह्म्याद्याभिस्तृतीयकम् ॥ चतुर्थमसिताङ्गाद्यैर्लोकपालैश्च पञ्चमम् ॥ ७२ ॥ चतुस्सहस्रप्रतिमः पुरश्चर्य्या जपस्स्मृतः ॥ होमयेद्गुग्गुलाज्याभ्यां प्रयोगानथवच्म्यदम् ॥ ७३ ॥ अश्वत्थवृक्षमालिङ्ग्य न्यग्रोधं प्लक्षमेव च ॥ सहस्रन्तु जपेन्मन्त्रं ग्रहपीडादिशान्तये ॥ ७४ ॥ जातीगुल्मं समालिङ्ग्य कर्णिकारं सुपुष्पितम् ॥ बिल्वं वा पूजयेद्देवीं जपेदष्टसहस्रकम् ॥ ७५ ॥ सहस्रं लभते स्वर्णं न दरिद्रो भवेत्ततः ॥ शालिभिः स्वर्णलाभः स्याद्गोधूमैः पुष्टिरेव च ॥ ७६ ॥ यवहोमेन धान्यं स्यादिक्षु

भिश्चतुरंगुलैः ॥ कुमुदैर्जनवात्सल्यंबकुलैरतुलाःश्रियः ॥ ७७ ॥ अशोकपुष्पैर्लभःस्यात्पाटलीभिःशुभाङ्गना ॥ माषहोमेनमूकःस्यात्कोद्रवैर्व्याधियुग्भवेत् ॥ ७८ ॥ फलैर्वैभीतकैर्भ्रान्तोम्रियतेशाल्मलीहुतात् ॥ कटुतैलेनविद्वेषःस्तम्भःपीतप्रकारकैः ॥ ७९ ॥ वायुवेगपतत्पत्रहोमेनोच्चाटनंरिपोः ॥ होमोऽन्येषांपदार्थानामष्टोत्तरसहस्रकम् ॥ ८० ॥ कस्तूरिकादिहोमेनदिव्यदेहंलभेन्नरः ॥ सरसीरुहहोमेनसाम्राज्यंलभतेनरः ॥ ८१ ॥ ब्रह्मवृक्षसमिद्धोमाद्ब्रह्मश्रियमवाप्नुयात् ॥ आयुषेदूर्वयाहोमोवटहोमेनयक्षिणी ॥ ८२ ॥ उदुम्बरसमिद्धोमात्पुत्रःस्यादुत्तमोत्तमः ॥ महाभयेसमुत्पन्नेमहारिष्टसमुद्भवे ॥ ८३ ॥ सितश्रीपुष्पबीजेनापामार्गमिश्रितेनच ॥ तिलतण्डुलहोमेनमहाभयनिवारणम् ॥ ८४ ॥ श्रीफलंघृतसंयुक्तंजुहुयात्तिलतण्डुलम् ॥ श्वेतपद्मकहोमेनविद्यार्थीलभतेचताम् ॥ ८५ ॥ भोगार्थीलभतेभोगान्स्वेष्टंप्राप्नोत्यसंशयम् ॥ ज्वराश्चातुर्थिकाद्याश्चव्याधयोविविधाग्रहाः ॥ सप्तजप्तोदकानान्तुनश्यन्त्यभ्युक्षणात्क्षणात् ॥ एकविंशतिजप्ताम्बुपानात्सर्वविषापहम् ॥ ८६ ॥ कुंकुमागुरुकर्पूरगोरोचनविमिश्रितम् ॥ तिलकंसप्तजप्तन्तुसर्ववश्यकरम्भवेत् ॥ ८७ ॥ भक्ष्यभोज्यान्नहोमस्तुसर्वसिद्धिविभूतिकृत् ॥ इत्यष्टमातृकाःप्रोक्ताःकिमन्यच्छ्रोतुमिच्छसि ॥ १२८८ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेब्राह्म्याद्यष्टमातृकामन्त्रप्रकाशस्त्रयोविंशः ॥ २३ ॥

---

श्रीदेव्युवाच ॥ सर्वेषांयेतुदेवानांबाह्यावरणकेस्थिताः ॥ दिगीशास्तन्मनून्ब्रूहिफलंवापिमहेश्वर ॥ १ ॥ श्रीमहेश्वरउवाच ॥ शृणुदेविप्रवक्ष्यामिदिक्पतीनाम्मनून्क्रमात् ॥ इमिन्द्रायनमश्चेतिशक्रमन्त्रःषडक्षरः ॥ २ ॥ पंक्तिश्छन्दोमुनिर्ब्रह्मादेवइन्द्रःप्रकीर्त्तितः ॥ इन्द्रायशक्तिरिम्बीजंबीजेनैवषडङ्गकम् ॥ ३ ॥ पीतवर्णंसहस्राक्षंवज्रपद्मकरंविभुम् ॥ सर्वालङ्कारसंयुक्तंनौमीन्द्रन्दिक्पतीश्वरम् ॥ ४ ॥ षडस्रमध्येदेवेन्द्रंपत्रेष्वङ्गानिपूजयेत् ॥ तद्बाह्येष्टदलेप्रोक्तमन्त्रैरेतैःक्रमाद्यजेत् ॥ ५ ॥ कंकार्त्तिकेयंरंचाग्निंईंयमंहंचनिर्ऋतिम् ॥

वंवरुणंयंचवायुंसंसोमंईशमंत्विति ॥ ६ ॥ ङेन्तानमोन्तामन्त्राःस्युर्वञ्राद्यैः स्यात्तृतीयकम् ॥ प्रजपेल्लक्षमेकन्तुबिल्वाज्यंजुहुयात्ततः ॥ ७ ॥ एवंसिद्धमनु र्मन्त्रीप्रयोगंकर्त्तुमर्हति ॥ मण्डलन्तुचतुष्कोणंकृत्वातन्मध्यगंलिखेत् ॥ ८ ॥ पद्ममष्टदलंतस्मिन्नववस्त्रेणवेष्टितम् ॥ अव्रणंस्थापयेत्कुम्भंसुवर्णोदकपूरित म् ॥ ९ ॥ पूज्यंसपरिवारेन्द्रंसहस्रेणाभिमन्त्रयेत् ॥ तज्जलंस्थापयेत्तेनराज्य भ्रष्टोनृपोलभेत् ॥ १० ॥ स्वराज्यमन्योपिनरःस्नातोलक्ष्मीपतिर्भवेत् ॥ ना स्नापयेद्धर्महीनम्भक्तिश्रद्धादिविच्युतम् ॥ ११ ॥ अथातःसम्प्रवक्ष्यामितत्त्वा र्णवह्निमन्त्रकम् ॥ भूर्भुवःस्वरग्नेचजातवेदइहावह ॥ १२ ॥ सर्वकर्म्माणि सम्भाष्यसाधयाग्निप्रियान्तकः ॥ ऋषिर्भृगुर्भवेच्छन्दोगायत्रंदेवतानलः ॥ १३ ॥ पञ्चषड्वेदपञ्चत्रिकरवर्णैःषडङ्गकम् ॥ ध्यायेदग्निंकण्ठगतस्वर्ण मालाविराजितम् ॥ १४ ॥ रक्तचन्दनलिप्ताङ्गमरुणस्रक्कुसुशोभितम् ॥ ज्वा लापुञ्जकृताटोपंश्वेतवस्त्रंचबिभ्रतम् ॥ १५ ॥ शक्तिंचस्वस्तिकंदर्भमुष्टिंचजप मालिकाम् ॥ स्रुक्स्रुवौचवराभीतीरक्ताभंदहनम्भजेत् ॥ १६ ॥ गुरोर्ल ब्धमनुर्मन्त्रीचतुर्दश्यामुपोषितः ॥ जपेद्भानुसहस्राणिशुद्धाचारोजितेन्द्रि यः ॥ १७ ॥ अमावास्यादिनेविप्रान्भोजयेन्मधुरोत्तरैः ॥ भक्ष्यैर्भोज्यैर्यथा शक्तिदद्यात्तेभ्यश्चदक्षिणाः ॥ १८ ॥ भुक्त्वास्वयंसमानीयहोमद्रव्याणिशो धयेत् ॥ अपरंदिनमारभ्यहोमंकुर्य्यादतन्द्रितः ॥ १९ ॥ क्रमाद्वटसमिद्व्रीहिति लराजिहविर्घृतैः ॥ नित्यमष्टोत्तरशतंजुहुयाद्दिनशःसुधीः ॥ २० ॥ दशाहमे वंनिर्वर्त्यविधानेनविधानवित् ततःपूर्णाहुतिंसम्यगेकादश्यांद्विजोत्तमान् ॥ २१ ॥ सम्पूज्यतर्प्पयेद्विप्रैर्यथाविभवमादरात् ॥ गुरवेदक्षिणांदद्याद्धेनुंसा ज्ञांपयस्विनीम् ॥ २२ ॥ वासांसिधनधान्यादिनत्वासम्प्रीणयेद्गुरुम् ॥ स्वम ण्डलान्तंप्रजपेत्पीठंसनवशक्तिकम् ॥ २३ ॥ पीताश्वेतारुणाकृष्णाधूम्रातीक्ष्णा स्फुलिङ्गिनी ॥ रुचिराज्वलिनीप्रोक्ताःक्रमशोनवशक्तयः ॥ २४ ॥ स्वबीजेनास नन्दद्यान्मूर्त्तिंमूलेनकल्पयेत् ॥ अत्रसम्पूजयेद्वह्निंविधिनाप्रोक्तलक्षणम् ॥ २५ ॥ अङ्गपूजापुराप्रोक्तामूर्त्तयोष्टौदलेष्विमाः ॥ जातवेदाःसप्तजिह्वोहव्यवाहनस ञ्ज्ञकः ॥ २६ ॥ अश्वोदरजसञ्ज्ञोन्यःपुनर्विश्ववराह्वयः ॥ कौमारतेजाःस्या

द्विश्वमुखोदेवमुखःपरः ॥ २७ ॥ अर्घ्यःस्वस्तिकशक्तिभ्यांविराजितकराम्बुजः ॥ लोकेशानर्चयेद्वाह्येवज्राद्यायुधसंयुतान् ॥ २८ ॥ इतिसम्पूजयेन्नित्यं जपेत्साग्रंसहस्रकम् ॥ जायतेवत्सरादर्वाग्धनधान्यसमृद्धिमान् ॥ २९ ॥ १ एमासंकपिलाज्येनजुहुयाद्वत्सरान्तरे ॥ तस्यसञ्जायतेलक्ष्मीःकीर्त्तिस्त्रैलोक्यवन्दिता ॥ ३० ॥ साज्यमन्नंप्रजुहुयाद्वत्सराल्लभतेश्रियम् ॥ कुसुमैर्ब्रह्मवृक्षस्य दधिक्षौद्रघृतप्लुतैः ॥ ३१ ॥ करवीरप्रसूनैर्वामण्डलात्स्यात्समृद्धिमान् ॥ शालिभिर्जुहुयान्नित्यंविधिनाष्टोत्तरंशतम् ॥ ३२ ॥ व्रीहिगोमहिषान्नाद्यैर्भवनन्तस्यपूर्य्यते ॥ तिलहोमेनमहतीश्रियमाप्नोतिमानवः ॥ ३३ ॥ पलाशबिल्वखदिरशमीदुग्धमहीरुहान् ॥ विकङ्कतारग्वधयोःसमिद्भिःकरवीरजैः ॥ ३४ ॥ प्रसूनैःकुमुदैःपद्मैःकह्लारैररुणोत्पलैः॥जातीप्रसूनैर्दूर्वाभिर्नित्यमष्टोत्तरंशतम् ॥ ३५ ॥ एकेनजुहुयान्मन्त्रीप्रतिपत्स्वथवासुधीः ॥ साधयेदखिलान्कामान्षण्मासान्नात्रसंशयः ॥ ३६ ॥ अथमन्त्रान्तरंवक्ष्येवह्नेःसेव्यंत्रिवर्णकैः ॥ उच्छिष्टपुरुषब्रूयाद्धरिपिङ्गलतत्परम् ॥ ३७ ॥ लोहिताक्षपदन्देहिमेप्रदापयठंद्वयम् ॥ चतुर्विंशत्यक्षरात्मासमृद्धिमनुरीरितः ॥ ३८ ॥ ऋष्यादयःपुराप्रोक्तामन्त्रार्णैरङ्गकल्पनम् ॥ षैट्शशाब्धित्रिवेदद्विमितैर्ध्यायेद्धुताशनम् ॥ ३९ ॥ सिन्दूरपूरप्रतिमंस्वर्णाश्वत्थाद्विनिर्गतम् ॥ रोमवल्लीलसज्ज्वालंकान्ताजनविमोहनम् ॥ ४० ॥ अनर्घ्यरत्नसंयुक्तभूषणैश्चविभूषितम् ॥ लक्षंमनुंजपेदेनंपयोन्नेनससर्पिषा ॥ ४१ ॥ दशांशंजुहुयाद्धोतुरगाग्निमनुस्मरेत् ॥ पीठेप्रागीरितेभ्यर्च्यतदङ्गैर्मूर्त्तिभिःसह ॥ ४२ ॥ आशापालैस्तदीयास्त्रैरभ्यर्च्यहव्यवाहनम् ॥ प्रातःस्नानरतोमन्त्रीसहस्रम्प्रजपेन्मनुम् ॥ ४३ ॥ जित्वारोगान्सजीवेतश्रियावर्षशतंनरः ॥ हृत्प्रमाणजलेस्थित्वाभानुमालोक्यसम्प्लुतः ॥ ४४ ॥ चतुःसहस्रंप्रजपेन्नित्यंसंवत्सरावधि ॥ अपमृत्युभयंरोगकृत्यदारिद्र्यसम्भवान् ॥ ४५ ॥ क्लेशान्निर्जित्यतेजस्वीजीवेद्वर्षशतंसुधीः ॥ कृत्तिकायाम्प्रतिपदिशालिहोमोधनप्रदः ॥ ४६ ॥ दध्नाचसमिद्भिर्वाप्रतिपत्सुभवेद्धनम् ॥

१ स्वाहा २ छह, पांच, चार, तीन, चार और दो अक्षरोंसे न्यास करलेना जैसे उच्छिष्ट पुरुष हृदयाय नमः हरिपिङ्गलशिरसे स्वाहा इत्यादि ॥

इष्टावाप्तिर्भवेदाज्यैःपद्मैर्ग्राममवाप्नुयात्॥ ४७ ॥ तिलैर्ज्योतिष्मतीभूतैरिपुरा ष्ट्रञ्जयेन्नृपः ॥ अश्वत्थसमिधोमेपीघृताक्ताञ्जुहुयान्नरः ॥ ४८ ॥ कन्यामिष्टा मवाप्नोतिसापितंप्राप्नुयाद्वरम्॥ शुद्धाज्येनकृतोहोमोज्वरनाशकरःपरः॥४६॥ सप्ताहंजुहुयान्मन्त्रीबन्धूककुसुमैःशुभैः ॥ सान्नंसहस्रमचिरान्महतींश्रियमा प्नुयात् ॥ ५० ॥ मासंक्षीरेणगव्येनक्षीराहारोजितेन्द्रियः ॥ सहस्रंजुहुयान्म न्त्रीसम्पदामधिपोभवेत् ॥ ५१ ॥ आज्याक्तदूर्वाहोमेनजीवेद्वर्षशतंनरः ॥ अष्टोत्तरशतंनित्यंहविषामृगमुद्रया ॥ ५२ ॥ जुह्वतालभ्यतेलक्ष्मीर्धनधान्य समृद्धिदा ॥ प्रतिमासंप्रतिदिनंजुहुयादयुतंघृतैः ॥ ५३ ॥ श्रीर्भवेन्महतीत स्यषण्मासादनपायिनी ॥ अरुणैरुत्पलैः फुल्लैर्मधुरत्रयसंयुतैः ॥ ५४ ॥ जुहुया द्वत्सरादर्वाक्सभवेदिन्दिरापतिः॥ अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादन्वहंसुधीः॥ ५५ ॥ सहस्रंवत्सरार्धेनभवेद्भूमिपुरन्दरः ॥ वत्सरंजुह्वतस्तैःस्याल्लक्ष्मीरिन्द्रेण वाञ्छिता ॥ ५६ ॥ जुहुयादमृताखण्डैःपयोक्तैःसप्तवासरम् ॥ त्रिसहस्रंप्रति दिनम्मन्त्रसिद्ध्यैजितेन्द्रियः ॥ ५७ ॥ कृत्यादाहज्वरोन्मादरोगाञ्जित्वानिर न्तरम् ॥ जीवेद्वर्षशतंभूत्वातेजसाभास्करप्रभः ॥ ५८ ॥ करवीरजपाबिल्वप लाशानृपभूरुहाम् ॥ प्रसूनैःकुसुमैःफुल्लैःकुटजैर्जातिसम्भवैः ॥ ५६ ॥ पुष्पैर्हु त्वात्रिमध्वक्तैर्मन्त्रीप्रतिपदम्प्रति ॥ आप्नुयान्महतींलक्ष्मींवत्सराद्वाञ्छिता धिकाम् ॥ ६० ॥ आदायतण्डुलप्रस्थंनिर्मलंसाधुशोभितम् ॥ गोदुग्धेनहविः कृत्वाकवलन्तेनकल्पयेत् ॥ ६१ ॥ आज्याक्तंतत्समादायपूजितेहव्यवाह ने ॥ गन्धमाल्यादिभिःसम्यग्जपित्वाष्टोत्तरंशतम् ॥ ६२ ॥ जुहुयात्प्रतिप त्स्वग्निंध्यात्वातुरगविग्रहम् ॥ जायतेवत्सरादेवलक्ष्मीस्त्रैलोक्यमोहिनी ॥ ६३ ॥ मन्त्रेणानेनसञ्जप्तांवचांखादेद्दिनागमे ॥ भारतीनिवसेत्तस्यमुखाम्भोजे तिनिश्चला ॥ ६४ ॥ अष्टोत्तरशतंजप्तञ्जलम्प्रातःपिबेन्नरः ॥ जाठराग्निर्भवे त्तस्यघृतेनेवहुताशनः ॥ ६५ ॥ कृत्वानवपदात्मानंमण्डलम्प्रागुदीरितम् ॥ कलशान्नवकल्याणान्स्थापयेत्प्रोक्तवर्त्मना ॥ ३६ ॥ क्षीरवृक्षसमुद्भूतैःक्वाथै स्तान्पूरयेत्क्रमात् ॥ वस्त्रादिभिरलंकृत्यनवरत्नानिनिःक्षिपेत् ॥६७॥ मध्येसम्पू जयेदग्निंमूर्त्तीरष्टौदिशांक्रमात् ॥ कुम्भेषुधूपदीपाद्यैःपुष्पधूपैर्मनोहरैः ॥६८॥

स्पृष्ट्वाजपेत्ततःकुम्भंमन्त्रमष्टोत्तरंशतम् ॥ अभिषिञ्चेत्ततःसाध्यंविनीतंद त्तदक्षिणम् ॥ ६९ ॥ ज्वरग्रहमहारोगदारिद्र्यादीन्विजित्यसः ॥ जीवेद्वर्ष शतंसम्यगभिषिक्तःश्रियासह ॥ ७० ॥ अग्नेराराधनंचेत्थंभुक्तिमुक्तिप्रदायक म् ॥ अथातःसम्प्रवक्ष्यामियममन्त्रमघापहम् ॥ ७१ ॥ ॐक्रोंह्रींआंचतद्बी जंङेन्तंवैवस्वतंवदेत् ॥ धर्म्मराजायभक्तानुग्रहकृतेनमोवदेत् ॥ ७२ ॥ चतुर्विं शतिवर्णोयंयममन्त्रोखिलेष्टदः॥ त्रिद्वीष्विष्वगयुग्माणैंःषडङ्गानिस्मरेद्यमम्॥ ७३ ॥ मेघश्यामंप्रसन्नास्यंनानालङ्कारसंयुतम् ॥ महिषस्थंदण्डधरंसंस्तुतंपि तृभिर्वृतम् ॥ ७४ ॥ नानारूपधरैर्दूतैःश्वेतवस्त्रंभजेद्यमम् ॥ पूजयेत्षड्दले ङ्गानिवसुपत्रेग्रहाष्टकम् ॥ ७५ ॥ दिगीशांश्चयमस्थानेचित्रगुप्तंप्रपूजयेत् ॥ वज्रादींश्चापितद्बाह्येयमपूजाप्रकीर्त्तिता ॥ ७६ ॥ वर्णलक्षंजपेन्मन्त्रंहुनेदा ज्यान्वितैस्तिलैः ॥ एवंसिद्धमनुर्मन्त्रीनिग्रहानुग्रहक्षमः॥ ७७॥ तस्यसंस्मर णादेवसकलापन्निवारणम्॥ अथातःसम्प्रवक्ष्यामिचित्रगुप्तमनुंपरम् ॥ ७८ ॥ तारोनमोविचित्रायङेन्तःस्याद्यमलेखकः ॥ यमेत्युक्त्वाचवहिकाधिकारिणेव देत्ततः॥ ७९॥ ततःषडक्षरंकूटंयमलकरपास्तथा ॥ उकारस्वरसंयुक्तास्सचन्द्राः कूटमुच्यते॥८०॥ जन्मसम्पत्प्रलयंचद्विधाकथयर्ठद्वयम् ॥ अष्टत्रिंशदक्षरोयंचि त्रगुप्तमनुर्मतः ॥८१॥ सप्तषण्मनुवस्वङ्गनेत्राणैंरङ्गकल्पनम् ॥ किरीटिनंश्वेत वस्त्रंविचित्रासनसंस्थितम्॥ ८२॥ लेखकंपापपुण्यानांचित्रगुप्तमहम्भजे॥ ज पेद्वर्णसहस्रंचततःसिद्धोभवेन्मनुः ॥ ८३ ॥ राजद्वारेविवादेचसंग्रामेजयदाय कः॥भजन्तिलेखकायेतुमन्त्रमेतंनृपाङ्गणे ॥ ८४ ॥ मान्याःकीर्त्तिंचवंशंचसं स्थाप्यस्वर्गगामिनः ॥ अथातःसम्प्रवक्ष्यामिनैर्ऋतस्यमनुंपरम् ॥ ८५ ॥ ॐ क्षंनिर्ऋतयेरक्षोधिपतयेपदंवदेत् ॥ धूम्रवर्णायखड्गेतिहस्तायप्रेतवाहनः ॥ ८६ ॥ ङेन्तस्ततश्चहृदयंत्रिंशदर्णोमनुर्मतः ॥ किरीटिनञ्चपिङ्गाक्षंधूम्राभंप्रेत

---

१ ॐ क्रों ह्रीं आं वैं वैवस्वताय धर्मराजाय भक्तानुग्रहकृते नमः २ तीन, दो, पांच, पांच, सात और दो अक्षरों को क्रमसे षडङ्गों में न्यास होताहै जैसे, ॐ क्रों ह्रीं हृदयाय नमः आंवैं शिरसेस्वाहा, वैवस्वतायशिखायै वषट्, धर्मराजाय कवचायहुम्, भक्तानुग्रहकृते नेत्र त्रयायवौषट्, नमः अस्त्रायफट् ३ कथय कथय ४ स्वाहा ॥

वाहनम् ॥ ८७ ॥ नानारक्षोगणैःसेव्यंखड्गचर्म्मधरंभजे ॥ ॐक्षमाद्यैर्हृद न्तैश्चपञ्चाङ्गःपञ्चभिःपदैः ॥ ८८ ॥ आसुरीशक्तिसहितंमध्येतुनिर्ऋतिंय जेत् ॥ पञ्चकोणेषुपञ्चाङ्गमष्टपत्रेयजेदिमाः ॥ ८९ ॥ नवस्थांपाशिनींवाणीं त्रासिनींगुप्तचारिणीम् ॥ राक्षसींभीतिदांकृत्यांखेटानस्त्राणितद्बहिः ॥९०॥ जपेत्रिंशत्सहस्राणिगुञ्जाज्याभ्यांहुनेत्ततः ॥ एवंतुसिद्धेमन्त्रेस्मिन्नभयंजाय तेवने ॥ ९१ ॥ रक्षोभूतपिशाचाद्याश्चौरव्याघ्रोरगादयः ॥ मनुष्याअपि येवन्यामृगादीनांतुकाकथा ॥ ९२ ॥ स्वयमेवपलायन्तेसाधकस्यरणाद पि ॥ जप्त्वाहुत्वापूर्वदिनेऽयुतंवापिसहस्रकम् ॥ ९३ ॥ परेह्निवागुडाद्यंच काननेविचरेद्बुधः ॥ अनेनमनुनाकुर्यात्तृणसूत्राभिमन्त्रणम् ॥ ९४ ॥ बध्नीयाद्ग्रामसीमायांवनेवामार्गएवच ॥ नभयंजायतेतत्रव्याघ्रचौरोरगादि जम् ॥ ९५ ॥ निर्ऋतिंभजतेयस्तुनीचजातौनजायते ॥ जन्मान्तरेद्विजो भूत्वाकाशीम्प्राप्यविमुच्यते ॥ ९६ ॥ अथातःसम्प्रवक्ष्यामिआसुर्य्यामनुम द्भुतम् ॥ कलौद्भुतफलश्चैतत्सदृशोनास्तिचागमे ॥ ९७ ॥ कटुकेकटुकप त्रेशुभगेआसुरीतिच ॥ ततोरक्तेपदंब्रूयात्तत्पश्चाद्रक्तवाससे ॥ ९८ ॥ अथ र्वणस्यदुहितेअघोरेप्रवदेत्ततः ॥ अघोरकर्म्मकेदेविअमुकस्यगतिंदह ॥९९॥ दहेतिचोपविष्टस्यगुदंदहयुगंतथा ॥ सुप्तस्येतिप्रोच्यमनोदहयुग्मंवदेत्ततः ॥ १०० ॥ प्रबुद्धस्येतिहृदयंदहयुग्मंहनद्वयम् ॥ पचयुग्मंतावदितिदहयुग्मंप चेतिच ॥ १ ॥ यावन्मेवशमायातिहुंफट्स्वाहाध्रुवादिकः ॥ प्रोक्तोयमासुरी मन्त्रोदशोत्तरशताक्षरः ॥ २ ॥ अङ्गिराःस्यान्मुनिश्छन्दोविराड्देवीतथा सुरी ॥ स्वाहाशक्तिस्तथौंबीजंमन्त्रस्यास्यप्रकीर्त्तितम् ॥ ३ ॥ हुंफट्स्वाहान्त कैर्मन्त्रवर्णैःप्रत्यङ्गकल्पनम् ॥ दक्षयोःकार्म्मुकंशूलंवामयोश्चशरांकुशौ ॥ ४ ॥

---

१ ॐक्षंनिर्ऋतयेनमः, हृदयायनमः, ॐक्षंरक्षोधिपतयेनमः, शिरसेस्वाहा, ॐक्षंधूम्रव र्णायनमः, शिखायैवषट्, ॐक्षंखड्गहस्तायनमः, कवचायहुम्, ॐक्षंप्रेतवाहनायनमः, नेत्रत्रया यवौषट् २ ॐकटुकेकटुपत्रेशुभगे आसुरिरक्तेरक्तवाससे अथर्वणस्यदुहितेअघोरे अघोरकर्म्म केदेविअमुकस्य गतिंदहदह उपविष्टस्य गुदंदहदह सुप्तस्य मनोदहदह प्रबुद्धस्य हृदयंदहदह हन हन पचपचतावत्दहदहपच यावन्मेवशमायाति हुंफट्स्वाहा ॥

बिभ्रतींचन्द्रभांपद्मस्थितांसुबहुभूषणाम् ॥ अहियज्ञोपवीतांतामासुरींसंस्मरा
म्यहम् ॥ ५ ॥ जप्त्वायुतंहुनेद्राजीघृताभ्यांमन्त्रसिद्धये ॥ गृहीत्वातुस
पञ्चाङ्गमासुरींमन्त्रयेच्चताम् ॥ ६ ॥ तयाधूपितमात्मानंयोजिघ्रेत्सवशोभवे
त् ॥ मध्वाक्तामासुरींहुत्वासहस्रंवशयेज्जगत् ॥ ७ ॥ राजिकाप्रतिमांकृत्वा
दक्षांघ्रेमस्तकावधि ॥ अष्टोत्तरशतंखण्डान्जुहुयादसिनाकृतान् ॥ ८ ॥
नार्य्याःप्रतिकृतेर्वामपादादिहवनंचरेत् ॥ सप्ताहमेवंकुर्वीतराजीकाष्ठैश्चिता
नले ॥ ९ ॥ दाशवज्जायतेसाध्यस्त्रिलिङ्गोह्यपितद्वशे ॥ कटुतैलान्वितारा
जीनिम्बपत्रयुतारिपोः ॥ १० ॥ नामयुङ्मनुनाहुत्वाज्वरिणंकुरुतेरिपुम् ॥
एवंराजींसलवणांहुत्वास्फोटोभवेदरेः ॥ ११ ॥ अर्कदुग्धाक्तहोमान्नेत्रना
शःप्रजायते ॥ सप्ताहंतुपलाशाग्नौहुनेद्विप्रवशीकृतौ ॥१२॥ क्षत्रियंतुगुडा
भ्यक्तराजिकाभिर्वशंनयेत् ॥ दध्यक्तराजिकाहोमाद्वैश्योवश्यःप्रजायते॥१३॥
शूद्रंलवणयुग्घोमात्त्र्यहंसाष्टकंशतम् ॥ एकादिसप्तकैःसप्तसप्तकान्तंयदाहु
नेत् ॥ १४ ॥ असाध्यंसाधयेत्कार्य्यंसाधकोनात्रसंशयः ॥ आसुरीसमिधो
हुत्वामध्वक्ताल्लभतेनिधिम् ॥ १५ ॥ जलपूर्णेघटेराजीपल्लवैःसमलंकृते ॥
आवाह्यचासुरींतत्रपूजयेदुपचारैकः ॥ १६ ॥ अष्टोत्तरशतंमूलमन्त्रेणापिच
मन्त्रयेत्॥तेनाभिषिक्तोभवतिव्याध्याधिभ्यांविवर्जितः॥१७॥ मनःशिलाच
न्दनंचतगरंनागकेशरम्॥आसुर्य्याश्चापिपुष्पाणिप्रियंगुंचसमंसमम्॥१८॥
सम्यग्विचूर्ण्यगुटिकाःशतवाराभिमन्त्रिताः ॥ गुञ्जानिभायस्यमूर्द्ध्निस्थापितै
कावशस्तुसः ॥ १९ ॥ ससर्षपाश्चनिम्बाग्नौसप्ताहंराजिकाहुनेत् ॥ अष्टो
त्तरशतंयाम्याभिमुखोमारयेदरीन् ॥ २० ॥ कलौकाम्यकरीनान्यासत्यंनास्त्या
सुरीसमा ॥ सर्वेपिकुण्ठितामन्त्रानासुरीपरमेश्वरी ॥ २१ ॥ अथातःसम्प्रव
क्ष्यामिमन्त्रंवरुणदैवतम् ॥ तारंवंवरुणायेतिजलाधिपतयेवदेत् ॥ २२ ॥ व
देच्चशुक्लवर्णायपाशहस्तायसंवदेत् ॥ मकरेतिवाहनायएकोनत्रिंशदर्णकः ॥
२३ ॥ ॐ ममाद्यैर्नमोन्तैश्चपञ्चाङ्गंपञ्चभिःपदैः॥ श्वेतांशुकोदधन्हस्तैःपाशां
कुशाभयावरान् ॥ २४ ॥ स्वच्छारविन्दवसतिर्मुक्ताभरणभूषितः ॥ तुन्दिल
श्चप्रसन्नास्योवरुणोनिधिदोस्तुमे॥ २५ ॥ त्रिष्टुप्छन्दोवसिष्ठर्षिर्देवतावरुणो

मतः ॥ जपेद्वर्णसहस्रंतुहोमःपद्माक्षकैःस्मृतः ॥ २६ ॥ अङ्गानिपूजयेदादौ नदीषट्कंततोर्चयेत् ॥ मणिकर्णींन्तथागङ्गांनर्मदांचसरस्वतीम् ॥ २७ ॥ गोदावरींचकालिन्दींसमुद्रांस्तदनन्तरम् ॥ अनन्तोवासुकिस्तक्षःकर्कोटःपद्मकस्तथा ॥ २८ ॥ महापद्मःशङ्खपालःकुलिकोष्टदलेततः ॥ तद्बाह्येर्कदलेपूज्याविमलाद्याश्चशक्तयः ॥ २९ ॥ दिगीशैरायुधैश्चैवषडावरणपूजनम् ॥ प्रयोगाश्चात्रसिद्ध्यन्तिदेवमन्त्रोदिताःपरे ॥ ३० ॥ अथातःसम्प्रवक्ष्यामिमणिकर्णीमहामनुम् ॥ यस्योपासनतोवश्यंमृत्युःकाश्यांप्रजायते ॥ ३१ ॥ [1]ॐ ऐं ह्रींश्रींकामबीजं ॐमंचमणिकर्णिके ॥ नमॐतिथिवर्णोयंभुक्तिमुक्तिफलप्रदः ॥ ३२ ॥ वेदव्यासोमुनिःप्रोक्तश्छन्दःस्यादतिशक्करी ॥ मणिकर्णीदेवतास्यैकु[2]द्विद्व्यक्षीषुवह्निभिः ॥ ३३ ॥ मन्त्रार्णैःस्यात्षडङ्गानिध्यायेत्तांपश्चिममुखीम् ॥ दक्षहस्तेपद्ममालांमातुलुङ्गमदक्षिणे ॥ ३४ ॥ श्वेतपद्मोद्भवांमालांरुचिरांदधतींगले ॥ श्वेतवस्त्रावृतांत्र्यक्षांध्यायेद्बद्धाञ्जलिपराम् ॥ ३५ ॥ लक्षत्रयंजपेन्मन्त्रंत्रिमध्वक्तैःकजैर्हुनेत् ॥ लिखेदष्टदलंपद्मंकर्णिकायांतुषट्दलम् ॥ ३६ ॥ अङ्गानिषड्दलेऽर्च्यानिपत्रमध्येशिवंहरिम्॥विधिंसूर्य्यंपर्वतेशंमेनांचापिभगीरथम्॥३७॥ वरुणंचदलाग्रेषुमीनंकूर्म्मंचदर्दुरम्॥ मकरांश्चापिहंसांश्चतथाकारण्डवानपि॥३८॥चक्रवाकान्सारसांश्चतद्बाहिर्भूपुरेयजेत् ॥ इन्द्रादींश्चापिवज्रादीन्मन्त्रोयंदक्षमार्गिणाम् ॥ ३९ ॥ सुखानिसन्ततिंवित्तंजीवतःसम्प्रयच्छति॥मन्त्रोयंमृत्युकालेतुकाश्यांमुक्तिप्रदोध्रुवम्॥४०॥अथमन्त्रान्तरंवक्ष्येवामिनामपिसद्गतिः ॥ भवेद्यस्यप्रसादेनतारंमंमणिकर्णिके॥ ४१ ॥ प्रणवात्मिकेहृच्चायंमन्त्रःस्याच्छक्रवर्णकः ॥ उपासनाध्यानपूजास्वीयाम्नायेनकल्पयेत् ॥ ४२ ॥ अद्रोहःसर्वभूतानांपरमंचास्यसाधनम् ॥ पुरश्चर्य्याप्रयोगादिपूर्वमन्त्रसमंमतम् ॥ ४३ ॥ अथातःसम्प्रवक्ष्यामिगङ्गायामन्त्रपञ्चक

---

[1] ॐ ऐं ह्रीं श्रीं क्लीं ॐ मंमणिकर्णिके नमः ॐ [2] एक, दो, दो, दो, पांच और तीन अक्षरों को षडङ्गों में न्यास करे, जैसे, ॐ हृदयायनमः ऐं ह्रीं शिरसेस्वाहा, श्रीं क्लीं शिखायैवषट्, ॐ मंकवचायहुम्, मणिकर्णिके नेत्रत्रयायवौषट्, नमः ॐ अस्त्रायफट् ॥

म् ॥ पञ्चाम्नायैस्तत्क्रमेणचोपास्यंसिद्धिकारकम् ॥ ४४ ॥ [1]तारानमोभगवति वाग्बीजंचहिलिद्वयम् ॥ मिलियुग्मंचगङ्गेमांपावयद्वितयंद्विठः ॥ ४५ ॥ सप्तविंशतिवर्णोऽयंजप्तव्योदक्षिणक्रमैः ॥ [2]त्रिवेदाङ्गाग्निपक्षनेत्रैर्मन्त्राणैरङ्गकल्पनम् ॥ ४६ ॥ शुभ्रवस्त्रांत्रिनेत्रांचवरंपद्मंचदक्षयोः ॥ अभयंकलशंवामकरयोर्मकरस्थिताम् ॥ ४७ ॥ अर्धेन्दुमुकुटांब्रह्मविष्णुरुद्रस्वरूपिणीम् ॥ नानालङ्कारशोभाढ्यांप्रसन्नवदनांभजे ॥ ४८ ॥ पूजाद्यंमणिकर्णीवज्जपोलक्षंप्रकीर्त्तितम् ॥ तिलाज्याभ्यांभवेद्धोमोमन्त्रोयंभुक्तिमुक्तिदः ॥ ४९ ॥ अथायमेवमन्त्रस्तुत्यक्तपूर्वनगाक्षरः ॥ ऊर्ध्वाम्नायेनसाध्यःस्यात्षडङ्गानिशरैःकृतैः ॥ ५० ॥ त्रित्रित्रिनेत्रमन्त्रार्णैर्ध्यानाद्यंपूर्ववन्मतम् ॥ सर्वपापक्षयकरोभुक्तिमुक्तिप्रदायकः ॥ ५१ ॥ अथातःसम्प्रवक्ष्यामिपश्चिमाम्नायगंमनुम् ॥ तारोनमःशिवायैचनारायण्यैपदंवदेत् ॥ ५२ ॥ दशहरायैगङ्गायैस्वाहान्तोनखवर्णकः ॥ वेदव्यासोमुनिश्छन्दःकृतिर्गङ्गाचदेवता ॥ ५३ ॥ त्रित्र्यब्धीषुत्रिनेत्रार्णैःषडङ्गान्यर्चनादिकम् ॥ निखिलंपूर्ववत्कुर्य्यान्निखिलाभीष्टदोमनुः ॥ ५४ ॥ अथातःसम्प्रवक्ष्यामिपूर्वाम्नायगतंमनुम् ॥ ॐह्रींश्रींहृद्भगवतिगङ्गेचदयितेनमः ॥ ५५ ॥ हुंफडष्टादशार्णोयंभजतामीप्सितप्रदः ॥ त्रिद्व्यब्धीषुद्विद्विवर्णैःषडङ्गविधिरीरितः ॥ ५६ ॥ ऋषिच्छन्दोदेवतादिप्राग्वद्ध्यानंचपूजनम् ॥ वर्णलक्षंजपेद्धोमःप्राग्वत्सम्पत्करस्त्वयम् ॥ ५७ ॥ अथातःसम्प्रवक्ष्यामिवाममार्गेप्रसिद्धिदम् ॥ [3]हिलिद्वन्द्वंमिलिद्वन्द्वंगङ्गेदेविनमस्त

---

१ ॐ नमोभगवति ऐं हिलि हिलि मिलि मिलि गङ्गेमांपावयपावयस्वाहा २ स्वाहा ३ तीन, चार, नव, तीन, छह, और दो अक्षरों को षडङ्गों में न्यास करना जैसे, ॐ नमः हृदयायनमः, भगवति शिरसे स्वाहा, ऐं हिलि हिलि मिलि मिलि शिखायै वषट् गंगेमां कवचायहुम् पावयपावय नेत्रत्रयायवौषट्, स्वाहा अस्त्रायफट् ४ इसीपूर्वोक्त मंत्रके आदिवाले सात अक्षरों को छोड़कर बीस अक्षर का मंत्र होताहै जैसे, ऐं हिलि हिलि मिलि मिलि गंगेमां पावय पावय स्वाहा ५ पांच, चार, तीन, तीन, तीन और दो अक्षरोंका न्यास होताहै, ऐं हिलि हिलि हृदयायनमः इत्यादि ६ चार ७ पांच ८ ॐहिलिहिलिमिलिमिलिगङ्गे देविनमः तीन, दो,दो, दो, चार, दो, अक्षरों को क्रमसे न्यास करना जैसे ॐ हिलिहृदयायनमः, हिलिशिरसेस्वाहा, मिलिशिखायैवषट्,मिलिकवचायहुम्,गङ्गेदेवि नेत्रत्रयायवौषट्, नमः अस्त्रायफट् ॥

था ॥ ५८ ॥ तारादिस्तिथिवर्णोऽयंछन्दोमुन्यादिपूर्ववत् ॥ त्रिद्विद्व्यद्वियुग
द्व्यर्णैःषडङ्गविधिरीरितः ॥ ५६ ॥ अथातःसम्प्रवक्ष्यामिरेवामन्त्रमघापहम् ॥
नर्मदायैनमइतिषडर्णःपरिकीर्त्तितः ॥ ६० ॥ युवतींकच्छपारूढांवराभयघट
म्बुजैः ॥ लसद्धस्तांस्वर्णकान्तिंसालङ्कारांभजाम्यहम् ॥ ६१ ॥ मुनिःशिव
स्तुगायत्रीछन्दोरेवाचदेवता॥षडङ्गानिचमन्त्रार्णैःप्रजपेद्वर्णसङ्ख्यया॥६२॥
तिलाज्यहोमोमन्त्रेणसर्वपापप्रणाशनः॥इहसौख्यंपरत्रापिशिवलोकेमहीय
ते ॥ ६३ ॥ सरस्वत्यास्तुयेमन्त्रानद्यास्तेपरिकीर्त्तिताः॥सरस्वतीतटेजप्तास्त्व
रितंसिद्धिदायकाः ॥ ६४ ॥ गङ्गामन्त्रेषुसर्वेषुगौतमीयपदंवदेत् ॥ गङ्गाश
ब्दस्यपूर्वेतेगोदायामनवःस्मृताः॥६५॥ ॐनमःसूर्य्यतनयेयमलोकनिवासि
नि॥श्रीकृष्णवल्लभनदित्राहिमांत्वंभवार्णवात् ॥६६॥ यमुनायाःश्लोकरूपो
मनुर्मुनिरहंस्मृतः ॥ छन्दोनुष्टुप्षडङ्गानिपादार्धार्धक्रमेणच ॥६७॥ गङ्गावत्पू
जनंवर्णसहस्रंजपईरितः॥तिलाज्याभ्यांहुनेन्मन्त्रीभास्करिंनैववीक्षते॥६८॥
अथातःसम्प्रवक्ष्यामिमन्त्रेणापाम्पतेर्मनुम् ॥ अमुकद्वीपावरकामुकद्व्योदधे
वदेत् ॥ ६६ ॥ अमुकम्मेदेहितथादापयेत्यग्निगेहिनी ॥ समुद्रमन्त्राउद्दि
ष्टाःसिन्धुद्वीपोमुनिर्मतः ॥ ७०॥ गायत्रीछन्दउद्दिष्टन्तत्तत्सिन्धुश्चदेवता ॥
पदैर्मनोःषडङ्गानितत्तद्रूपंविचिन्तयेत् ॥ ७१ ॥ जपेद्वर्णसहस्राणितत्तद्द्रव्यै
स्तथाहुनेत् ॥ तत्तदन्तर्गतंवस्तुलभतेसाधकोध्रुवम् ॥ ७२ ॥ अथातःसम्प्र
वक्ष्यामिवायुमन्त्रम्महाद्भुतम् ॥ तारंयंवायवेप्राणाधिपतयेपदंवदेत् ॥ ७३ ॥
कृष्णवर्णायांकुशेतिहस्तायमृगवाहना ॥ यनमोगोद्विवर्णोयंवायुमन्त्रउदी
रितः ॥ ७४ ॥ गणकोस्यमुनिश्छन्दोनिवृद्वायुश्चदेवता ॥ पञ्चाङ्गानिमनो
रस्यॐयंबीजादिकैःपदैः ॥ ७५ ॥ कृष्णवर्णंधावमानम्मृगस्थंवेगवत्तरम् ॥

१ एक एक अक्षर को हृदयादि अंगों में न्यास होताहै जैसे न हृदयायनमः र्म शिरसे स्वाहा दा शिखायैवषट् इत्यादि २ चार चरण और दोनों अर्द्धों को न्यासकरना जैसे ॐनमः सूर्य्यतनयेहृदयाय नमः, यमलोकनिवासिनि शिरसेस्वाहा इत्यादि ३ ॐ यं वायवे प्राणाधिपतये कृष्णवर्णायांकुशहस्तायमृगवाहनाय नमः ४ ॐ यं वायवे नमः हृदयाय नमः ॐ यं प्राणाधिपतये नमः शिरसे स्वाहा ॐ यं कृष्णवर्णायनमः शिखायै वषट् ॐ यं अंकुशहस्ताय नमः कवचायहुम् ॐ यं मृगवाहनाय नमः नेत्रत्रयायवौषट् ॥

पाशांकुशकरम्प्रेतकृत्यापरिसरान्वितम् ॥७६ ॥ सह्याद्रिंचापिशेषाद्रिंमैनाकंम न्दरन्तथा ॥ जपेद्वर्षसहस्राणिलाजाज्याभ्यांचहोमयेत् ॥ ७७ ॥ सिद्धमन्त्र स्तुतत्कालम्भवेद्भूमौबलाधिकः ॥ अथातःसम्प्रवक्ष्यामिमहाकृत्यामहामनु म् ॥ ७८ ॥ येनविज्ञानमात्रेणनासाध्यम्भुवनत्रये ॥ मायामहायोगिनीति गौरीतिभुवनेतिच ॥ ७६ ॥ भयङ्करितथाहुंचषोडशार्णोमतोमनुः ॥ अङ्गि राश्चमुनिर्देवीगायत्रीछन्दईरितम् ॥८० ॥ सिंहवक्त्रामहाकृत्याभीतिदोक्ता चदेवता ॥ पंद्दीर्घयुक्तबीजेनमन्त्रार्धेनास्त्रयोगिना ॥ ८१ ॥ हृदयन्तुततो र्धेनमन्त्रार्धेनशिरःस्मृतम् ॥ शिखाकवचनेत्रास्त्रंपुनरेवंप्रकल्पयेत् ॥ ८२ ॥ सिंहासनांकृष्णमुखींलम्बमानपयोधराम् ॥ दंष्ट्राकरालवदनांत्रिनेत्रांसर्व तोज्वलाम् ॥ ८३ ॥ कृष्णकञ्चुकसंवीतांविधूमाग्निसमप्रभाम् ॥ त्रिशूलच क्रचषकखट्वाङ्गकरपङ्कजाम् ॥ ८४ ॥ लेलिहानमहाजिह्वांविद्युत्प्रेक्षणभीषणा म् ॥ वश्येध्यायेद्रक्तवर्णांरक्तपुष्पैश्चपूजिताम् ॥८५॥ मारणेकृष्णवर्णांचकृष्ण पुष्पाम्बरावृताम् ॥ चतुर्दलन्तथाष्टास्रंभूपुराढ्यंसमुद्धरेत् ॥ ८६ ॥ अर्चाय न्त्रंकर्णिकायांदेवींबाह्यचतुर्दले ॥ पूर्वेतुशाङ्करींनामशुभ्रवर्णाम्बरावृताम् ॥ ८७ ॥ द्विभुजांसौम्यवदनांपाशांकुशधरांशिवाम् ॥ दक्षिणेमारिकांनामल म्बजिह्वामधोमुखीम् ॥ ८८ ॥ कृष्णवर्णांरक्तकेशींरक्तमाल्यानुलेपनाम् ॥ च तुर्भुजांसिंहनादांज्वलच्छूलकपालिनीम् ॥ ८६ ॥ खड्गहस्तांशिरोमालां सर्वाभरणभूषिताम् ॥ पश्चिमेवारुणींनामस्वर्णवर्णांहसन्मुखीम् ॥ ६० ॥ सु वर्णमालिकांशुभ्रदंष्ट्रामभयदांसदा ॥ उत्तरेभीतिकांनामचतुर्वक्त्रांभयङ्करी म् ॥ ६१ ॥ पूजयित्वाजपेन्मन्त्रंहुनेद्राजीघृतैस्तथा ॥ ततःप्रयोगान्कुर्वीत स्वेष्टांस्तत्रनिगद्यते ॥ ६२ ॥ कालंविदित्वाप्रतिमांमारणेचाप्यधोमुखीम् ॥ वर्णलक्षंजपेन्मन्त्रंनित्यमष्टोत्तरंशतम् ॥ ६३ ॥ देव्यग्रतोयजेदष्टदलेकृत्यांम नोन्मनीम् ॥ सर्वकृत्यांभीषणींचश्रीमतींचप्रतिष्ठिताम् ॥ ६४ ॥ विद्यासुत्पा

---

१ ह्रीं महायोगिनि गौरि भुवनभयङ्करि हुम् २ ह्रां महायोगिनि गौरि फट् हृदयाय नमः ह्रीं भुवन भयंकरि शिरसे स्वाहा हूं महायोगिनि गौरि फट् शिखायै वषट् इत्यादि ॥

दिर्नींचेतिदिगीशादींश्चभूपुरे ॥ तस्याधोमेखलायुक्तंत्रिकोणंवह्निकूर्चकम् ॥ ९५ ॥ चन्द्रगौरंविधायाग्निपरिस्तीर्य्यशरैस्ततः ॥ विभीतकपरिध्याचकल्प येद्ग्रस्यमारणम् ॥ ९६ ॥ जुहुयान्निम्बतैलाक्तैःकाकोलूककपक्षकैः ॥ दारयैनं शोषयैनंमारयेत्यभिधायच ॥ ९७ ॥ अष्टोत्तरशतंचैवमनयाजुहुयाद्बुधः ॥ होमान्तेविधिवत्कृत्यामाराध्याग्नेश्चसन्निधौ ॥ ९८॥ योमेकण्ठग्रहोवातिदूर स्थश्चान्तिकेपिच ॥ पिबक्रव्यमसृक्तस्यइत्युक्त्वाचनिवेदयेत् ॥ ९९ ॥ सं रक्ष्याग्निंविधानेननवरात्रंसमाचरेत् ॥ मृतस्तिष्ठतितेनाशस्तावदस्यरिपोर्भृ तिः ॥ २०० ॥ अर्कक्षीरेणमरिचंपिष्ट्वासिद्धार्थमेवच ॥ जलेसंलोड्यमन्त्रेण रिपुंध्यात्वानिरुद्धदृक् ॥ १ ॥ कृष्णाम्बरोत्तरीयोग्रपादेनाक्रम्यतंरिपुम् ॥ वज्रशूलमितिध्यात्वाद्भिस्तस्योपरिनिक्षिपेत् ॥ २ ॥ नवरात्रोत्तरेशत्रुर्म्रियते नात्रसंशयः ॥ हरसिद्धेत्यृचावह्नौतैलसिक्तैर्विभीतकैः ॥ ३ ॥ जुह्वतोम्रियते शत्रुःसत्यमौशनसंमतम् ॥ रिपोःप्रतिकृतिंकृत्वासाध्यर्क्षामलकेफले ॥ ४ ॥ अर्कक्षीरेणमरिचंपिष्ट्वातत्रैवलेपयेत् ॥ फट्कारंहृदयेकृत्वाशिवनिर्माल्यकेक्षि पेत् ॥ ५ ॥ ततःकृष्णचतुर्दश्यांजप्त्वामन्त्रंसहस्रशः ॥ सद्योवगाहनंकृत्वा तस्यामेवचलक्षणम् ॥ ६ ॥ मन्त्रंजप्त्वाविधानेनभेदयेल्लिङ्गमुद्रया ॥ षण्मा सान्म्रियतेशत्रुःसन्ध्ययोरुभयोरपि ॥ ७ ॥ वाय्वासमुद्धृतम्पत्रंशुभ्रंवैभ्रान्तकं ततः ॥ गृहीत्वाविलिखेन्मन्त्रीकृष्णसर्प्पास्यशोणितैः ॥ ८ ॥ उष्ट्रास्थ्नाचश वाङ्गारैःशत्रोरुच्चाटनंभवेत् ॥ दूर्वागुडूचींगव्येनसर्पिषातिलतण्डुलैः ॥ ९ ॥ अन्नैःसमिद्भिःपालाशैःशान्तिंकुर्य्याद्विचक्षणः ॥ लक्ष्मीबिल्वफलैःपत्रैर्नन्द्याव र्त्तैःश्रियेतथा ॥ १० ॥ रक्तपुष्पैरपामार्गैरङ्गारैश्चसुभद्रकैः ॥ मधुरत्रयसंसिक्तै रेभिःकुर्य्याद्वशवश्यकम् ॥ ११ ॥ शान्तिंकृत्वाविधानेनजपेत्परिमलंत्विदम् ॥ महाव्याधिप्रशमनंनित्यमष्टोत्तरंशतम् ॥ १२ ॥ जपेदेकाग्रचित्तस्तुलोकव श्यकरंपरम् ॥ मनसाचिन्तयेत्कृत्यांगजारूढामिभद्रवीम् ॥ १३ ॥ तस्यवश्य म्भवेत्सर्वमश्वारूढांतथैवच ॥ चौरव्याघ्रमृगादीनांसलिलादिभयापहम् ॥ १४ ॥ सप्ताभिमन्त्रितंतोयंपीत्वामन्त्रञ्जपेद्बुधः ॥ मेधावीचभवेद्वाग्मीसावज्जशाभि षेकतः ॥ १५ ॥ सप्ताभिमन्त्रितंकृत्वाविषमप्यमृतंभवेत् ॥ पक्षम्मासंद्विमासं

वाषण्मासंवत्सरंतुवा ॥ १६ ॥ अथातःसम्प्रवक्ष्यामिकृत्याशान्तिविधिक्रमम् ॥ कृत्यांसमर्चयेद्धस्तेयथाविधिपुरःसरम् ॥ १७ ॥ षोडशारंलिखेत्पद्मंयोनियुक्तंसबिन्दुकम् ॥ तन्मध्येष्टदलंलेख्यंयकारादीन्न्यसेत्क्रमात् ॥ १८ ॥ तन्मध्येरसकोणन्तुलिखेन्मूलमनुंस्मरेत् ॥ चन्द्रबिम्बंलिखेत्पद्मंतस्योर्ध्वंप्रतिमांलिखेत् ॥ १९ ॥ तस्यमध्येन्यसेत्कुम्भंरक्तवस्त्रविभूषितम् ॥ कुम्भमध्येन्यसेत्कृत्यांसर्वलक्षणसंयुताम् ॥ २० ॥ अर्चयेच्चयथान्यायम्पायसन्तुनिवेदयेत् ॥ परितोष्यचतान्न्यस्येदसिताङ्गादिभैरवान् ॥२१॥ गन्धपुष्पादिभिश्चार्च्यतद्बाह्येक्षेत्रपालकान् ॥ लोकेशान्तंयजेद्देवितदग्रेहोममाचरेत् ॥ २२ ॥ तस्यदक्षिणपार्श्वेतुलक्ष्मींध्यायेद्यथाविधि ॥ कुम्भमध्येन्यसेद्देवींदक्षिणेतुश्रियंस्मरेत् ॥ २३ ॥ वामपार्श्वेयजेद्देवींहल्लेखांपरमेश्वरीम् ॥ तस्यैववामपार्श्वेतुपूजयेद्गणनायकम् ॥ २४ ॥ अयुतंमूलमन्त्रन्तुजपेन्मृत्युविनाशनम् ॥ कृत्यामन्त्रःपरिप्रोक्तःसर्वकामफलप्रदः ॥ २५ ॥ महाशान्तिस्तुलोकेषुदुःखदारिद्र्यनाशनम् ॥ अथातःसम्प्रवक्ष्यामिराजराजमनूञ्छुभान् ॥ २६ ॥ यक्षायचकुबेरायवदेद्वैश्रवणायच ॥ धनधान्याधिपतयेधनधान्यपदंवदेत् ॥ २७ ॥ समृद्धिंमेदेहिवदेद्दापयाग्निप्रियान्तकः ॥ पञ्चत्रिंशद्वर्णमनुर्विश्रवामुनिरीरितः ॥ २८ ॥ छन्दस्तुबृहती[3]यक्षधीष्वक्षाष्ट[?]गैःषडङ्गकम् ॥ गारुडात्मनिभंशान्तंमुकुटादिविभूषितम् ॥ २९ ॥ वरदाञ्चदधतन्तुन्दिलंयक्षसेवितम् ॥ लक्षमेकञ्जपेन्मन्त्रंदशांशंजुहुयात्तिलैः ॥ ३० ॥ धर्म्मादिपीठेप्रयजेदङ्गलोकेशहेतिकम् ॥ शिवालयेजपेन्मन्त्रमयुतंधनवृद्धये ॥ ३१ ॥ बिल्वमूलोपविष्टेनजप्तोलक्षंधनर्द्धिदः ॥ अथमन्त्रान्तरंवक्ष्येॐक्लींह्रींश्रींचसमुच्चरेत् ॥ ३२ ॥ श्रींह्रींक्लींॐचविंवित्तेश्वरायनमइत्यपि ॥ षोडशार्णोस्यमुन्यादिप्रा

---

१ यस्मात् इतिशेषः, जिस मन्त्रसे २ यक्षायकुबेरायवैश्रवणायधनधान्याधिपतयेधनधान्यसमृद्धिंमेदेहिदापयस्वाहा ३ यक्षायहृदयायनमः ॥ कुबेरायशिरसे स्वाहा, वैश्रवणायशिखायैवषट्, धनधान्याधिपतयेकवचायहुम्, धनधान्यसमृद्धिंमे नेत्रत्रयायवौषट्, देहिदापय स्वाहा अस्त्रायफट् ४ ॐ क्लीं ह्रीं श्रीं श्रीं ह्रीं क्लीं ॐ विंवित्तेश्वराय नमः ॥

ग्वैस्त्रिद्विद्विनेत्रकैः ॥ ३३ ॥ पञ्चाक्षिभ्यांषडङ्गंस्याद्ध्यानपूजादिपूर्ववत् ॥ अथमन्त्रान्तरंवक्ष्येकुबेरस्यगजाक्षरम् ॥ ३४ ॥ तारोवैश्रवणायेतिस्वाहाप ञ्चाङ्गमत्रतु ॥ स्वाहान्तैःप्रणवाद्यैश्चपञ्चभिर्मन्त्रवर्णकैः ॥ ३५ ॥ धनपूर्णं स्वर्णकुम्भंतथारत्नकरण्डकम् ॥ हस्ताभ्यांबिभ्रतंखर्वकरपादञ्चतुन्दिलम् ॥ ३६ ॥ वटाधस्ताद्रत्नपीठोपविष्टंसस्मिताननम् ॥ वर्णलक्षञ्जपेद्धोमपूजापा ग्वन्महाधनी ॥ ३७ ॥ सेवनादस्यभवतियक्षिण्याद्यास्तथावशे ॥ अथातः सम्प्रवक्ष्यामिईशानमनुमद्भुतम् ॥ ३८ ॥ प्रणवंहंसमुच्चार्य्यईशानायवदेत्ततः ॥ विद्याधिपतयेचेतिस्फटिकेतिवदेत्ततः ॥ ३९ ॥ वर्णायशूलहस्तायङेन्तश्चवृष वाहनः ॥ नमोन्तएकत्रिंशद्भिर्वर्णैर्मन्त्रउदाहृतः ॥ ४० ॥ ॐहमाद्यैर्नमोन्तै श्चपञ्चाङ्गंपञ्चभिःपदैः ॥ शक्तीनांमनवोयेचताविद्याःपरिकीर्त्तिताः ॥ ४१ ॥ पुरुषाणान्तुतेमन्त्राविद्यास्तुपुरुषंविना ॥ भवन्तिनैवफलदायथानारीनरंवि ना ॥ ४२ ॥ पुंसांयोगोयत्रनोक्तस्तत्रेशानंप्रयोजयेत् ॥ स्त्रीमन्त्रोभोगदःप्रो क्तःपुम्मन्त्रोमोक्षदःपरः ॥ ४३ ॥ उभयोपासनंदेवाभुक्तिमुक्तिप्रदायकम् ॥ लक्ष्म्याचविष्णुनायोगोगायत्र्याभास्करेणच ॥ ४४ ॥ गणेशेनसरस्वत्याय क्षिण्याद्याभिरात्मना ॥ दक्षिणाम्नायशक्तीनांशैवमन्त्रैश्चयोजनम् ॥ ४५ ॥ वामेतुभैरवैर्मन्त्रैःशेषाम्नायेष्वयंमनुः ॥ अथातःसम्प्रवक्ष्यामिब्रह्मणोमन्त्रमद्भु तम् ॥ ४६ ॥ तारंपाशंब्रह्मणेचलोकाधिपतयेवदेत् ॥ रक्तवर्णायोर्ध्वलोकपा लकायवदेत्ततः ॥ ४७ ॥ पद्महस्तायचपदंङेन्तःस्याद्धंसवाहनः ॥ नमोन्तो

---

१ तीन, दो, दो, दो, पांच, और दो अक्षरों को क्रमसे न्यास करना, जैसे, ॐ क्लीं ह्रीं हृदयाय नमः, श्रीं श्रीं शिरसे स्वाहा इत्यादि ।२ ॐ वैश्रवणाय स्वाहा, आदिमें ॐ और अन्तमें स्वाहा जोड़कर वैश्रवणाय, इस पदके पांचो अक्षरों को पञ्चाङ्गों में न्यास करना जैसे, ॐ वैस्वाहा हृदयाय नमः, ॐ श्रस्वाहा शिरसे स्वाहा इत्यादि ३ ॐ हं ईशानायविद्याधिप तये स्फटिकवर्णायशूलहस्तायवृषवाहनाय नमः, ४ ॐ हं ईशानाय नमः हृदयाय नमः, ॐ हं विद्याधिपतये नमः शिरसे स्वाहा, ॐ हं स्फटिकवर्णाय नमः शिखायैवषट्, ॐ हं शूल हस्ताय नमः कवचायहुम् ॐ हं वृषवाहनाय नमःनेत्रत्रयायवौषट् ५ ॐ आं ब्रह्मणे लोका धिपतयेरक्तवर्णायोर्ध्वलोकपालकायपद्महस्तायहंसवाहनाय नमः ॥

बाणरामार्णोमन्त्रोयंपरिकीर्तितः ॥ ४८ ॥ तारपाशादिकैःषड्भिःपदैरङ्गंह दन्तकैः ॥ नास्यपूजाविधिःप्रायोजपोस्यपरिकीर्त्तितः ॥ ४६ ॥ वर्णलक्षज पादेवनिग्रहानुग्रहक्षमः ॥ दशपत्रेयजेदेनंप्रागीशान्तदलेसुराः ॥ ५० ॥ न तत्रममशापोस्तिशापःकेवलपूजने ॥ अथातःसम्प्रवक्ष्यामिशेषस्यमनुमद्भुत म् ॥ ५१ ॥ तारंमायामनन्तायनागाधिपतयेवदेत् ॥ गौरवर्णायातलादि सप्तलोकेश्वरायच ॥ ५२ ॥ चक्रहस्तायगरुडवाहनायनमोन्तकः ॥ एकच त्वारिंशदर्णोमन्त्रोनन्तस्यकीर्त्तितः ॥ ५३ ॥ मन्त्रम्प्रतिचतुर्दश्याञ्चतुर्दशश तञ्जपेत् ॥ दुग्धंहुनेदिन्द्रविप्रान्भोजयेच्चचतुर्दश ॥ ५४ ॥ कुर्य्याच्चतुर्दशींभ क्त्याधनधान्ययुतोभवेत् ॥ राज्यभ्रष्टोलभेद्राज्यंविद्याकामस्तुपण्डितः ॥५५॥ भाद्रशुक्लचतुर्दश्यांविशेषात्पूजनम्मतम् ॥ ईश्वरस्यचपूजायांपृथिवीपूजनंम तम् ॥ ५६ ॥ एवमुक्तादिक्पमन्त्राःकिमन्यच्छ्रोतुमिच्छसि ॥ ५७ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेदशदिगीशमन्त्रप्रकाशश्चतुर्विंशः ॥ २४ ॥

---

श्रीदेव्युवाच ॥ देवदेवमहादेवतेजोमात्रन्तुसूर्यजम् ॥ तदादीपस्यमे मन्त्रंफलञ्चकृपयावद ॥ १ ॥ ईश्वरउवाच ॥ शृणुदेविप्रवक्ष्यामिदीपस्यवि धिमद्भुतम् ॥ आदौगणेशदीपस्तुकार्य्याकार्य्यविनिर्णये ॥ २ ॥ कर्त्तव्य स्तत्प्रवक्ष्यामिकार्यमष्टविधिस्स्मृतम् ॥ शान्तिकम्पौष्टिकंवश्यंमारणंस्तम्भन न्तथा ॥ ३ ॥ मोहोच्चाटौद्वेषणञ्चतेषुदीपञ्चरेत्क्रमात् ॥ गोधूमयवमाषाणांमृ त्तिकास्वर्णभाण्डजम् ॥ ४ ॥ ताम्रायसौक्रमात्पात्रंवर्त्तयःश्वेतपीतके ॥ कृ ष्णनीलारुणारक्तहरित्कपीतसूत्रकैः ॥ ५ ॥ पूर्वाशाद्यष्टकाष्ठानांक्रमात्सम्मु खमाचरेत् ॥ उदक्प्राग्दक्षतोयेशाग्निरक्षोवायुशूलिदिक् ॥ ६ ॥ सम्मुखन्तु मुखंकुर्य्यात्साधकःस्वस्वकर्म्मणि ॥ गव्याज्यन्तिलतैलञ्चराजिकोत्थञ्चसार्षप म् ॥ ७ ॥ महिष्याज्यमुमातैलंवसातैलंकुशुम्भजम् ॥ लिखेत्सूर्यदलंपद्मंलि प्तगोमयमण्डले ॥ ८ ॥ दीपास्यदिशमारभ्यगणेशंतत्रपूजयेत् ॥ सुमुखश्चै

---

१ ॐ आं, इन दोनों बीजोंको आदिमें उच्चारणकरके मन्त्र का एक कह उसके अन्तमें नमः जोड़कर षडङ्ग न्यासकरे, जैसे ॐ आं ब्रह्मणे नमः हृदयाय नमः इत्यादि २ ओम् ।

कदन्तश्चकपिलोगजकर्णकः ॥ ९ ॥ लम्बोदरश्चविकटोविघ्ननाशोविना
यकः ॥ धूम्रकेतुर्गणाध्यक्षोभालचन्द्रोगजाननः ॥ १० ॥ द्वादशैतानिनामा
नियःपठेच्छृणुयादपि ॥ विद्यारम्भेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसङ्कटे
चैवविघ्नस्तस्यनजायते ॥११॥ एतान्यत्रयजेद्विद्वान्पश्चाद्दीपंप्रदापयेत् ॥
ऊर्ध्वाधःकम्पतेदीपस्तदाकार्य्यंप्रसिद्ध्यति ॥ तिर्यक्कम्पेनकार्यंस्यात्सम्यग्ज्यो
तिषिसत्वरम् ॥ १२ ॥ तेजोमान्द्येविलम्बेनचात्रकौतुकमुच्यते ॥ जातांदेव
गणेकन्यांकुमारंवासमानयेत् ॥१३॥ स्त्रियंवासिद्धवेषञ्चसम्यगानीयपूजयेत् ॥
अधस्तात्स्थापयेत्पूतंविस्तीर्णंकांस्यभाजनम् ॥१४॥ जलपूर्णंचतन्मध्येसाप
श्येत्स्थिरदृक्ततः ॥ चिन्तयित्वास्वीयकार्यंन्तदुपर्य्यक्षतान्क्षिपेत् ॥ १५ ॥
कार्य्यानुसारंसापश्येत्पुत्तलीनांचकौतुकम् ॥ अथातःसम्प्रवक्ष्यामिवगला
दीपमुत्तमम् ॥ १६ ॥ कृतेनयेनविघ्नौघोविलयंयातिमन्त्रिणः ॥ शुद्धानिखलु
बीजानिपक्षतुर्मुद्गरेणवा ॥१७॥ एकीकृत्यविधातव्योदीपःसुस्निग्धशोभनः ॥
षट्त्रिंशत्तन्तुभिःकार्यादृढावर्त्तिःसुरञ्जिता ॥ १८ ॥ गव्यमाज्यञ्चकौशुम्भंतै
लंवादीपकर्म्माणि ॥ एतान्यानीयपूर्वन्तुततोदीपम्प्रदापयेत् ॥ १९ ॥ हरिद्रार
ञ्जितंवस्त्रंपरिधायशुचिःक्षमी ॥ पीतासनोपविष्टश्चपीतमाल्यानुलेपनः ॥
२० ॥ उत्तरासम्मुखोभूत्वाहरिद्राशक्तभूतले ॥ त्रिकोणंकारयित्वातुदीपंसं
स्थाप्ययत्नतः ॥ २१ ॥ घृतमापूर्य्यवर्त्तीचदीपंप्रज्वालयेत्सुधीः ॥ मूलमन्त्रं
समुच्चार्य्यइतिदीपन्ततंवदेत् ॥ २२ ॥ सङ्कल्पन्यासपूर्वंतुजपेदष्टोत्तरंशतम् ॥
एवंरात्रौप्रकुर्वाणोमासेनैकेनसाधकः ॥ २३ ॥ असाध्यंसाधयेत्कामान्वश
येदात्मनोरिपून् ॥ क्षोभयेत्स्तम्भयेच्चापिद्वेषयेत्प्रक्षिपेदपि ॥ २४ ॥ अथातःस
म्प्रवक्ष्यामिसर्वमन्त्रेषुगोपितम् ॥ दीपंवटुकनाथस्यसर्वकामफलप्रदम् ॥२५॥
तारंमायांरमांकामम्मायांलक्ष्मींचवाग्भवम् ॥ सर्वज्ञायप्रचण्डेतिवदेत्पराक्रमा
यच ॥ २६ ॥ वटुकेतिइमंदीपंगृहाणपदमुच्चरेत् ॥ सर्वकार्याणीतिपदंसाधये
तिवदेतिच ॥ २७ ॥ दुष्टान्नाशययुग्मञ्चत्रासयद्वितयंजपेत् ॥ सर्वतोममरक्षां
चवर्त्ममद् ॥ २८ ॥ स्वाहावद्षष्टिवर्णोयंदीपमन्त्रउदाहृतः ॥ भवेद्भैरवमन्त्र
स्यसाधकोयउपासकः ॥ २९ ॥ तेनवर्त्तिःप्रकर्त्तव्यामन्त्रार्णमितसूत्रकैः ॥

आदौतुलघुदीपेनज्ञात्वाकार्यस्यसाध्यताम् ॥ ३० ॥ पश्चात्कुर्य्याच्चसाध्येतु कार्य्यंप्रोक्तन्तुदीपकम् ॥ साध्येकार्य्येद्विगुणितंकष्टेतुत्रिगुणंमतम् ॥ ३१ ॥ असाध्येनैवकर्त्तव्योदीपःत्रासप्रदोभवेत् ॥ यस्यकार्य्यस्यपात्रादियद्युक्तंलघु कर्म्मणि ॥ ३२ ॥ तदेवसर्वविज्ञेयंद्विपलंपात्रमुच्यते ॥ अष्टसूत्राभवेद्वर्त्तिः स्नेहःपलमितःस्मृतः ॥ ३३ ॥ कार्य्यन्तुद्विगुणप्रोक्तंशुभंवाशुभमेवच ॥ य स्मिन्नान्यस्यकष्टंस्याच्छुभंतच्छान्तिपौष्टिकम् ॥ ३४ ॥ तत्रोच्यतेभैरवस्य ध्यानंश्वेतंचतुर्भुजम् ॥ श्वेतवर्णंदक्षहस्तेवामेशृङ्गन्तुराजितम् ॥ ३५ ॥ ध्येयं मुकुटमौलिंचश्वेतकौपीनवाससम् ॥ त्रिनेत्रंश्वेततिलकंमुक्ताभरणभूषितम् ॥ ३६ ॥ वैरिणांदुःखजनकमशुभंमारणादिके ॥ नीलवर्णमुक्तकेशंशिरोमाला विभूषितम् ॥ ३७ ॥ किङ्किणीमालयायुक्तंत्रिनेत्रंचभयानकम् ॥ नागपाशंचघ ण्टांचवामयोर्दक्षयोःपुनः ॥ ३८ ॥ वरंकपालंदधतंध्यायेत्तंक्रूरविग्रहम् ॥ सर्व स्मिन्नशुभकार्य्येतुतैलंस्यात्पुष्पवासितम् ॥ ३९ ॥ गोधूमपिष्टजंपात्रमथवात ण्डुलोद्भवम् ॥ कर्त्तव्यंकुडवग्राहिशोधयेच्छ्वेतपर्वतः ॥ ४० ॥ जलपूतन्तुतद्धा न्यंसोमेकृत्वाविशोषयेत् ॥ कुमार्याहस्तकेनैवभौमेवेष्ट्यंसमाचरेत् ॥ ४१ ॥ दीप पात्रंसाधकस्तुभैरवंकवचंपठेत् ॥ स्वेष्टमन्त्रस्ययेवर्णाःसाध्यनामसमन्विताः ॥ ४२ ॥ कामप्रयोगेकर्त्तव्यावैदिकायास्तुतन्तवः ॥ तिस्रःपञ्चतथासप्तवर्त्तयःकार्य गौरवात् ॥ ४३ ॥ देवानामालयेदीपःशुभकर्म्मणिशस्यते ॥ उत्तराभिमुखः शान्तौप्राङ्मुखःपौष्टिकेमतः ॥ ४४ ॥ दीपमन्त्रमथोवक्ष्येकुर्य्याद्वृत्तत्रयंशुभम् ॥ मध्येत्रिकोणकस्योर्ध्वंकोणेष्वस्यचसंलिखेत् ॥ ४५ ॥ षट्कोणंषोडशदलयुक्तंतस्य चवाह्यतः ॥ लिखेदष्टदलंपद्मंदीपयन्त्रमुदाहृतम् ॥ ४६ ॥ परीक्षार्थंनित्यदी पेकाम्यकर्म्मणिचोच्यते ॥ पुष्पंवासिततैलंवासर्वकामफलप्रदम् ॥ ४७ ॥ माष गोधूममुद्गाश्चतिलतण्डुलकाःशुभाः ॥ तैर्निर्मितन्दीपपात्रंसर्वकामफलप्रद म् ॥ ४८ ॥ एकविंशतिसूत्रैश्चश्वेतैःस्यात्सर्वकामदः ॥ निकटेभैरवस्यापिशा लग्रामस्यसन्निधौ ॥ ४९ ॥ यथास्फटिकलिङ्गस्यनिकटेसर्वकामदम् ॥ अश्व त्थतरुमूलेचसर्वकामसमृद्धये ॥ ५० ॥ शतान्यष्टौतथाचाष्टगुरुकार्य्यपलानितु ॥ मध्यमेष्टांशरहितैःसाध्येष्टाविंशसम्मितैः ॥ ५१ ॥ सहस्रसूत्रजावर्त्तिर्महाकार्य्ये

थमध्यमे ॥ शतत्रयेणकर्त्तव्यालघुकार्य्येशतेनतु ॥ ५२ ॥ श्रीकामस्तिलतैले नपात्रंकस्तूरिकाभवम् ॥ यद्वालवङ्गकर्पूरत्वगेलाभिःसमुद्भवम् ॥ ५३ ॥ दीपं कुर्य्यान्नृपद्वारेवर्षात्स्यान्महतीरमा ॥ दरिद्रस्ताम्रपात्रेवाकस्तूर्य्यादिकलेपि ते॥५४॥ पथिकागमनार्थन्तुतिलतैलेनदीपकम्॥गोधूमतण्डुलसमंचूर्णपात्र म्प्रशस्यते ॥५५॥ राजद्वारेचरेद्दीपमेकविंशतिसूत्रकम् ॥ वर्णजश्चैवचवलवि घ्नमार्गादिकंजयेत् ॥५६ ॥ वश्यार्थमतसीतैलंपात्रंतण्डुलपिष्टकम् ॥ राजद्वारे चरेद्दीपंवर्त्तिःकौशुम्भरञ्जिता ॥ ५७॥ सार्षपंराजनाशायतैलंपात्रन्तुमुद्गजम्॥ हनुमत्सन्निधौदीपोवर्त्तिःकौशुम्भरञ्जिता ॥५८॥ मारणेराजिकातैलंयद्वाबैभी तकोद्भवम् ॥ दीपंदद्यान्मारणार्थंराजद्वारेपितुर्गृहे ॥ ५९ ॥ दक्षिणाभिमुखंदी पंलोहपात्रेप्रकल्पयेत् ॥ शत्रोर्मृत्युकरेकार्य्येवर्त्तिःस्यात्कृष्णतन्तुभिः ॥ ६० ॥ करञ्जतैलमुच्चाटेपात्रंकृष्णतिलोद्भवम् ॥ वर्त्तिश्चकृष्णसूत्रस्यराजद्वारेचरेदि मम् ॥ ६१ ॥ मधूकतैलंविद्वेषेपात्रञ्चात्रकुलत्थजम् ॥ चतुष्पथेदीपदानंवर्त्तिः स्यादत्रकर्बुरा ॥६२॥ मोहनेचाढकीपात्रंमाञ्जिष्ठंसूत्रमुच्यते ॥ प्रदीपेतिलतैलं स्यान्नृपद्वारेचरेदिमम् ॥ ६३ ॥ संग्रामविजयार्थंतुपात्रंस्यान्माषपिष्टजम् ॥ दुर्गायाःसन्निधौदेयारक्तसूत्रैश्चवर्त्तिका ॥ ६४ ॥ सन्धौत्रिपिष्टजंपात्रंवान दीकूलमृद्भवम् ॥ दीपञ्चसङ्गमेदद्याद्वर्त्तिस्त्रिगुणरूपिका ॥६५॥ एकविंशति सङ्ख्याकास्तन्तवोऽध्यध्यतिस्मृताः॥ पात्रंचमृन्मयंकुर्य्याद्दीपदानेचतुष्पथे ॥ ६६ ॥ बालग्रहेचभूतादौखेदेषुविषमेषुच ॥ शैलकूलेदेवतायाःसन्निधौदीपमा चरेत् ॥ ६७ ॥ मारणादिकषट्कर्मसाधनेवाचतुष्पथे ॥ माहिषेणघृतेनैवपात्रं नरकपालजम् ॥ ६८ ॥ विद्याकामोगणेशस्यसंनिधौदन्तपात्रके ॥ श्वेतां वर्त्तिगोघृतेनचतुर्थ्यांतुसमाचरेत् ॥ ६९ ॥ राजद्वारेबन्धमुक्तौकारागेहेथवाचरे त् ॥ पात्रेतुताम्रजेदीपंधूम्रवर्णातुवर्त्तिका ॥ ७० ॥ अथातःसम्प्रवक्ष्यामिदी पयोर्लघुकाम्ययोः ॥ शुभाशुभादिचिह्नानियैःकार्य्याकार्य्यनिर्णयः ॥ ७१ ॥ विप्रादिदर्शनेदीपारम्भेसिद्धिक्रमेणच ॥ पूर्णापादोनितार्धाचपादतुल्याथब न्धनम् ॥ ७२ ॥ म्लेच्छादिदर्शनेप्रोक्तंमार्ज्जारादिकदर्शनम् ॥ मध्यमंनील कण्ठादेःश्रीकीर्त्तिविजयप्रदम् ॥ ७३ ॥ दीपज्वालासमश्लक्ष्णाजायतेचप्रद

क्षिणा ॥ अष्टभिर्दिवसैस्तस्यकार्यसिद्धिर्नसंशयः ।। ७४ ॥ खरकण्टप्रभाज्वा
लामरणंबान्धवैःसह ॥ कृष्णाज्वालातदाशत्रोःकार्य्यंनैवप्रजायते ॥ ७५ ॥
दीपेनादःसुपूर्णेचकार्य्यसिद्धिर्विलम्बतः ॥ यदाचरचरेद्दीपःकार्यनष्टंतदाभवे
त् ॥ ७६ ॥ दीपस्यवपनेचौर्यंगोनाशःपात्रसंश्रवे ॥ दीपवर्य्येपुतद्दीपलाय
नान्मन्दनेत्रता ।।७७॥ कृत्वान्यासादिकंसर्वंप्राङ्मुखोदीपमाचरेत् ॥ एतद्दीप
विधानंतुवटुकस्यप्रकीर्तितम् ॥ ७८ ॥ अथातःसम्प्रवक्ष्यामिशक्तीनांतुष्टिका
रकम् ॥ पात्रेत्रिकोणेशक्त्यर्थंदीपदानंप्रकल्पयेत् ॥ ७९ ॥ दक्षिणाम्नायश
क्तीनांत्रिलोहान्यतमंभवेत् ॥ ऊर्ध्वाम्नायेपिष्टपात्रंकाचपाषाणसम्भवम् ॥
८० ॥ पश्चिमाम्नायदेवीनांप्राच्यानांमार्त्तिकंमतम् ॥ नृकपालंवामगानां
क्रमाद्वैगोघृतंघृतम् ॥ ८१ ॥ तैलंचसार्षपंप्रोक्तंवसाचेतियथाक्रमम् ॥ श्वेतर
क्तहरित्पीतकृष्णसूत्रास्तुवर्त्तिकाः ।। ८२ ॥ देवाम्नायमुखादीपाःकर्त्तव्यादेव
तासये ॥ देवागारेसरित्तीरेराजगेहेचतुष्पथे ॥ ८३ ॥ श्मशानेचकृतादीपा
स्तत्तद्देवततुष्टिदाः ॥ गणेशवत्परीक्षात्रकार्याकार्यविनिर्णये ॥ ८४ ॥ अथा
तःसम्प्रवक्ष्यामिशिवदंशिवदीपकम् ॥ सर्वपापप्रशमनंसर्वोपद्रवनाशनम् ॥
८५ ॥ शून्येतुवह्निसूत्राणांदीपवर्त्तिप्रकल्पयेत् ॥ बिल्वपत्रोद्भवंपात्रंदद्याद्दी
पंशिवालये ॥ ८६ ॥ एवंद्वादशवर्षाणिप्रज्वलेद्दिनरात्रकम् ॥ तस्यवंशेन
दारिद्र्यंनाकालमरणंभवेत् ॥ ८७ ॥ पूर्वद्वारेश्रियेदीपःस्वर्गमोक्षायदक्षिणे ॥
पश्चात्सुवृष्टयेदेयःशेषकार्य्येषुचोत्तरे ॥ ८८ ॥ गोघृतेनकृतोदीपःशिवस्याति
प्रियङ्करः ॥ तिलतैलेनाभिचारेतारतम्यंविचारयेत् ॥ ८९ ॥ अथातःसम्प्रवक्ष्या
मिरोगघ्नंभानुदीपकम् ॥ कुर्य्यात्स्वर्णमयेपात्रेतदभावेपिताम्रके ॥ ९० ॥ कु
शुम्भवर्त्त्याकृतयासूत्रैर्द्वादशभीरवौ ॥ द्वादशांगुलदीर्घासाकुडवन्तुघृतंस्मृत
म् ॥ ९१ ॥ ज्वालयित्वासकृद्दीपंनस्पृशेत्तंयदाखिलम् ॥ घृतंप्रज्वाल्यशान्त
श्चेद्रोगनाशस्तदाध्रुवम् ॥ ९२ ॥ पलमारभ्यखार्यन्तंदृष्ट्वारोगबलाबलम् ॥

१ छह रत्तीका माशा चारमाशेका टंक दो टंकका कोल दो कोल का कर्ष दो कर्ष की शुक्ति दो शुक्तिका पल याने टका दो पलकी प्रसृति दो प्रसृतिकी अञ्जली इसीको कुडव कहते हैं और दो कुडवका शराव दो शरावका प्रस्थ चार प्रस्थका आढ़क चार आढकका द्रोण दो द्रोणका सूर्प दो सूर्पकी द्रोणी चार द्रोणीकी खारी होती है ॥

कल्पयेद्दीपद्धयस्यमानंलोकानुसारतः ॥ ६३ ॥ अथातःसम्प्रवक्ष्यामिविष्णो दीपंमहाद्भुतम् ॥ सर्वकामोगोघृतेनमारणंमाहिषेणच ॥ ६४ ॥ विद्वेषादि षुवर्कर्यात्त्रिषुपात्रंक्रमाद्भवेत् ॥ताम्रजंलोहजंकाचंक्रमात्रिषुचकर्म्मसु॥ ६५॥ विष्णोस्तुप्रीतयेकुर्य्यादामलोत्थरजोद्भवे ॥ दुःस्वप्नोत्पातभूतानिनश्यन्त्यच्यु तदीपतः ॥ ६६ ॥ अथातःसम्प्रवक्ष्यामिसर्वतन्त्रेषुगोपितम् ॥ गोपनीयंप्रय त्नेननवाच्यंयस्यकस्यचित् ॥ ६७ ॥ शक्त्याद्यहर्गणार्केषुभक्तोवर्णात्प्रजाय ते ॥ मन्त्रवर्णस्यदिवसेक्रमाद्दीपम्प्रकल्पयेत् ॥ ६८ ॥ सायन्तुकुडवाज्यस्य वर्त्तयःपञ्चतन्तुभिः ॥ यावज्ज्वलतिदीपोसौतावत्तस्यमनुंजपेत् ॥ ६६ ॥ मन्त्रार्णसंख्यदीपेषुज्वलितेषुचतद्दिने ॥ पुनर्दीपेकृतेसातुदीपंसंपश्यतिस्फु टा ॥१००॥ इष्टंस्वकीयंकथयेद्यावद्यन्मानसेप्सितम् ॥ तदादिदेवतातुष्टागुप्त मेतत्प्रकाशितम् ॥ १ ॥ कार्त्तवीर्य्यसमोन्योनभवेद्दीपप्रियःसुरः ॥ तन्त्रेषुतद्दी पविधिर्बहुधासम्प्रकीर्त्तितः ॥ २ ॥ इतितेभास्करस्योक्तोविधिर्दीपसमन्वितः॥ अतःपरंयदिष्टंत्वंपृच्छतत्तद्वमांप्रति ॥ १०३ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेश्रीशिवप्रणीतेदीपविधिप्रकाशःपञ्चविंशः २५ ॥

---

श्रीदेव्युवाच ॥ भगवञ्छ्रोतुमिच्छामिकल्पेकस्मिन्भवन्तिवै ॥ दशाव ताराःश्रीविष्णोस्तान्समस्तान्वदस्वमे ॥ १ ॥ श्रीशङ्करउवाच ॥ एकत्रभा वउत्पन्नोमत्स्योवैकल्पआदिमे ॥ तस्यमन्त्रम्प्रवक्ष्यामिभुक्तिमुक्तिप्रदायकम्॥ २ ॥ तारोनमोभगवतेमंमत्स्यायरमांवदेत् ॥ द्वादशाक्षरमन्त्रोयंमुनिर्ब्रह्मास मीरितः ॥३॥ गायत्रंछन्दउद्दिष्टंदेवतामीनविग्रहः ॥ भगवान्सरमानाथोबीजं श्रीमंचकीलकम् ॥ ४ ॥ नात्यघोरोहिनसमआकण्ठंवानराकृतिः ॥ घनश्याम श्चतुर्बाहुःशङ्खचक्रगदाधरः ॥ ५ ॥ शृणीमत्स्यनिभोमूर्धालक्ष्मीवक्षोविराजि तः ॥ पद्मचिह्नितसर्वाङ्गःसुन्दरश्चारुलोचनः ॥६॥ जपेद्द्वादशसाहस्रंत्रिमध्व क्तैस्तिलैर्हुनेत् ॥ प्रत्यहंतद्दशांशेनवैशाखेकार्त्तिकेतथा ॥ ७ ॥ माघेचमार्ग शीर्षेचहविष्याशीजितेन्द्रियः ॥ आरभ्यभाद्रबहुलमष्टमींषोडशाहकम् ॥ ८ ॥

---

१ॐ नमोभगवते मं मत्स्यायश्रीम् इतिद्वादशाक्षरमन्त्रः ॥

लक्ष्मींमनुंजपेन्नित्यंत्विमंवापिकलाशतम् ॥ तथैवहोमःकर्त्तव्यस्तथान्यदिव सेपुतु ॥ ९ ॥ तर्पयेद्द्वादशशतंतिलतण्डुलचन्दनैः ॥ आद्यन्तयोःशतान्य ष्टौतर्प्पयेच्चयथाश्रियम् ॥ १० ॥ रक्तोत्पलैर्वापद्मैर्वामालत्यादिसुगन्धिभिः ॥ एवंकृतेचैकवर्षान्मन्त्रसिद्धिःप्रजायते ॥ ११ ॥ नित्यंद्वादशविंशांश्चश्रीरू पांचसुवासिनीम् ॥ भोजयेत्पूजनंचास्यचरेत्तोयाशयेसदा ॥ १२ ॥ षट्पत्र कर्णिकायान्तुश्रीयुतंदेवमर्च्चयेत् ॥ षट्पत्रेषुषडङ्गानियजेद्बाह्यचतुर्दले॥१३॥ मण्डूकंमकरंकूर्म्मंशिशुमारंचपूर्वतः ॥ तद्बाह्येगदलेपूज्याःक्षाराद्याःसप्तसिन्ध वः ॥ १४ ॥ तद्बाह्येष्टदलेपूज्यावासुक्याद्याःफणीश्वराः ॥ तस्यबाह्येशक्रदले रत्नानितुचतुर्दश॥१५॥ समुद्रजानितुपूज्यानिलक्ष्मीकौस्तुभकानिच॥ गङ्गा द्याःषोडशततोमहानद्यःप्रपूजयेत्॥१६॥ ततश्चाष्टदलेवेदानुपवेदसमन्विता न् ॥ दिगीशांश्चतदस्त्राणिनवावरणपूजनम् ॥ १७ ॥ एवंसिद्धमनुर्मन्त्री जायतेसिद्धिभाजनम् ॥ एतंसुसंस्कृतंमन्त्रञ्जपेदष्टोत्तरंशतम् ॥ १८ ॥ तद्देव तादिनेसिद्धःपुस्तकादेवजायते ॥ अकुण्ठितःप्रयोगेननपुनस्तस्यसंस्कृतिः॥ १९ ॥ एतत्पल्लवितामन्त्राममसिध्यन्तिपार्वति ॥ एतत्सम्पुटिताःसर्वेवैदि काःसिद्धिदाःकलौ ॥ २० ॥ अनेनग्रथिताजप्ताःकौलेऽद्भुतसिद्धिदाः ॥ गा णेशावैष्णवाःसौराःसिद्धिंदद्युर्विदर्भिताः ॥ २१ ॥ यद्बलात्सर्वमन्त्राणांस्व यंसिद्धिःप्रजायते ॥ तस्मात्प्रोक्तोनान्यतन्त्रेमेरुतन्त्रेप्रकाशितः ॥ २२ ॥ अथातःसम्प्रवक्ष्यामिकूर्ममन्त्रम्महाद्भुतम् ॥ एकःकूर्मावतारोभून्मथ्यमानेम होदधौ ॥ २३ ॥ तारोनमोभगवतेकुंकूर्मायधराधर ॥ धुरन्धरायनत्यन्तःसि द्धवर्णोमनुःस्मृतः ॥ २४ ॥ प्रकृतिश्छन्दउद्दिष्टंकश्यपोस्यमुनिर्मतः ॥ देव ताभगवान्विष्णुर्जातःकच्छपरूपधृक् ॥ २५ ॥ धराधरेत्यादिशाक्तिःकुंबीजंस्वे ष्टसिद्धये ॥ नियोगोदेवताध्यानंशङ्खचक्रगदाधरम् ॥ २६ ॥ पीताम्बरंकूर्म पृष्ठंलसल्लांगूलशोभितम् ॥ दीर्घग्रीवंमहाग्राहंगिरन्तंरक्तलोचनम् ॥ २७ ॥ मन्त्रवर्णैःषडङ्गानिजपोलक्षचतुष्टयम् ॥ आज्यहोमस्तर्पणन्तुचन्दनोत्पलवा रिभिः ॥ २८ ॥ कर्णिकायांयजेत्कूर्मंदिग्गजांश्चदिगष्टके ॥ तद्बाह्येतुचतु

---

१ ॐ नमोभगवते कुं कूर्माय धराधरधुरन्धराय नमः २ ब्रह्मा ॥

र्दिक्षुमदनंवभ्रुंकंहरिम् ॥ २९ ॥ महेश्वरंचतद्वाह्येयजेदष्टदलेपुनः ॥ धरांशे पंक्षीरनिधिंमण्डूकंदेवताद्रुमम् ॥ ३० ॥ चिन्तामणिंकामधेनुंसुमेरुंचदिगीश्वरान् ॥ भूपुरेतस्यबाह्येतुहेतयोवासमीरिताः ॥ ३१ ॥ एवंसिद्धमनुर्मन्त्रीप्रयोगान्कर्तुमर्हति ॥ श्मशानेकूर्म्मचक्रस्यशत्रुनामादिवर्गतः ॥ ३२ ॥ अष्टम्यांचचतुर्दश्यांभौमेक्रूरेग्रभेतथा ॥ राजिकाप्रतिमांकुर्याच्छत्रुपांशुसमन्विताम् ॥ ३३ ॥ अष्टोत्तरशताङ्गानितत्तैलाक्तानिहोमयेत् ॥ आदौवामंततोदक्षंस्त्रियावैतद्विपर्ययात् ॥ ३४ ॥ पादांगुलीनांदशकंप्रपदौपादमध्यके ॥ पार्ष्णिगुल्फकजङ्घोरुयुगंसक्थियुगंतथा ॥ ३५ ॥ आदौलिङ्गगुदौस्फिक्कौवस्तिर्नाभिस्तथोदरम् ॥ कटित्रिकंचहृदयंहुनेत्पार्श्वद्वयंततः ॥ ३६ ॥ दशांगुल्यश्चकरभगोत्रद्वयंयायुपातथा ॥ रेखास्थानानिचोच्चार्य्यमणिबन्धप्रकोष्ठकौ ॥ ३७ ॥ कूर्प्परौतुभुजौकक्षौस्तनौवक्षस्थलंगलम् ॥ हनुद्वयंतथाचोष्ठौचोर्ध्वाधस्थंरदद्वयम् ॥ ३८ ॥ अश्रुकूर्चंतथानासांकपोलौगण्डशङ्खकौ ॥ नेत्रेभ्रूमध्यकंभालंब्रह्मरन्ध्रमितिक्रमात् ॥ ३९ ॥ एवंकृतेत्रिसप्ताहाद्यातिशत्रुर्यमालयम् ॥ नब्राह्मणेप्रयोक्तव्यायतोसौविष्णुदैवतम् ॥ ४० ॥ अङ्कोलफलपिष्टेनकृत्येयंमोहकारिणी ॥ हरिद्रयाकृतंचैवंस्तम्भयेदखिलंजगत् ॥ ४१ ॥ विद्वेषेरक्तसंयुक्तपादधूपादितोभवेत् ॥ श्मशानस्यमृदोच्चाटेगोधूमैर्वश्यताभवेत् ॥ ४२ ॥ सहस्रमयुतंवापिलक्षंकार्यानुसारतः ॥ सत्कार्यैप्रजपेन्मन्त्रंसिद्धिःस्यान्नात्रसंशयः ॥ ४३ ॥ अथातः सम्प्रवक्ष्यामिवराहस्यमनूञ्छुभान् ॥ कल्पजाताश्चतुर्वर्णाअवताररमापतेः ॥ ४४ ॥ तारोनमोभगवतेवराहेतिचसंवदेत् ॥ रूपायभूर्भुवःस्वःपतयेभूपतीतिच ॥ ४५ ॥ त्वंमेदेहिदापयेतिस्वाहान्तःसुरवर्णकः ॥ ऋष्याद्याभार्गवानुष्टुब्वराहाःपरिकीर्त्तिताः ॥ ४६ ॥ पञ्चाङ्गान्येकभृङ्गायनमःप्रोक्त्वाहृदिन्यसेत् ॥ मांव्योल्कायनमःशीर्षेतेजोधिपतयेनमः ॥ ४७ ॥ शिखायांकवचंतस्यविश्वरूपायवैनमः ॥ महादंष्ट्रायचनमोस्त्रमेतत्पञ्चवान्वितम् ॥ ४८ ॥

---

१ ऐरावतः पुण्डरीकः वामनः कुमुदोञ्जनः । पुष्पदन्तः सार्वभौमस्सुप्रतीकश्च दिग्गजाः
२ कल्पवृक्ष ३ ॐ नमोभगवते वराहरूपाय भूर्भुवःसुवःपतयेभूपतित्वंमेदेहि दापय स्वाहा
४ तेंतीस अक्षर का मन्त्र है ॥

सप्तपद्सप्तपञ्चाष्टमूलार्णैश्चपुनश्चरेत् ॥ न्यासःकेशवमात्राख्योन्यासोनित्यस्तुवैष्णवे ॥ ४९ ॥ पादाग्राज्जानुपर्य्यन्तंस्वर्णाभंचततःस्मरेत् ॥ आनाभिकर्पूरनिभंनाभितस्तुगलावधि ॥ ५० ॥ अग्निवर्णंमस्तकेचपूर्णचन्द्रसमद्युतिम् ॥ शङ्खारिखड्गांश्चगदांवरशक्तीतथैवच ॥ ५१ ॥ अभयंदंष्ट्रयाक्षोणींदधतंश्वसनेनिलः ॥ वागीशाहुंकृतौबाह्वोश्चन्द्रसूर्य्यौशिवोमुखे ॥ ५२ ॥ पद्ममष्टदलंकृत्वामध्येदेवंसमर्चयेत् ॥ दंष्ट्रायांतस्यवसुधांदिक्पत्रेषुयजेत्क्रमात् ॥ ५३ ॥ ईशानपूर्वयोर्मध्येपञ्चाङ्गानिविदिक्षुच ॥ पुनःकोणेषुपूज्यानिरक्षःवाच्यन्तरान्तिमम् ॥ ५४ ॥ दलाग्रेषुक्रमाचक्रंशङ्खंखड्गंचखेटकम् ॥ गदांशक्तिंवरंचैवचापंबाह्येषुदिक्पतीन् ॥ ५५ ॥ भूपुरेथतदस्त्राणिपूजाक्रमइतीरितः ॥ लक्षंजपेच्चपद्मानिसाद्धक्तानिचहोमयेत् ॥ ५६ ॥ तर्प्पणादिततःकुर्य्यान्मन्त्रसिद्धिःप्रजायते ॥ अथास्यान्यप्रकारेणपुरश्चरणमुच्यते ॥ ५७ ॥ बिल्ववृक्षस्यसान्निध्येजपेन्मासससहस्रकम् ॥ दशांशंजुहुयादग्नौपुरश्चरणवान्भवेत् ॥५८॥ अर्थोध्यानाज्जपाद्भूमिर्जपपूजाहुतिव्रतैः ॥ धनधान्यधरालक्ष्म्योभवन्त्यत्रनसंशयः ॥ ५९ ॥ भूमण्डलेसदाध्यातःप्रयच्छतिकुलेशुभम् ॥ वारुणेमृत्युकैःशान्तिराग्नेयेज्वरवश्यता ॥ ६० ॥ वायुमण्डलउच्चाटेखेभूतग्रहरक्षणम् ॥ अथातःसम्प्रवक्ष्यामिमण्डलध्यानमद्भुतम् ॥ ६१ ॥ चतुष्कोणंपीतवर्णंमध्येलंबीजसंयुतम् ॥ नन्द्यावर्त्तांश्चकोणेषुचिन्तयेद्भूमिमण्डलम् ॥६२॥ कुक्कुटाण्डसमाकारमर्धचन्द्रनिभन्तथा ॥ वारुणंमण्डलंश्वेतंमध्येवंबीजलाञ्छितम् ॥ ६३ ॥ रक्तवर्णंत्रिकोणंचमध्येरंबीजमत्रहि ॥ तैजसंमण्डलंप्रोक्तंध्येयंभावुकसत्तमैः ॥ ६४ ॥ यंबीजसंयुतंमध्येवृत्तंषड्बिन्दुलाञ्छितम् ॥ समीरमण्डलंधूम्रवर्णंध्येयंसदाजनैः ॥ ६५ ॥ आकाशमण्डलंवृत्तंमध्येहंबीजसंयुतम् ॥ नीलवर्णमहाशून्यमनाहतरवंस्मरेत् ॥ ६६ ॥ सिंहगेशुक्लपक्षेहिरवौश्वेतशिलांशुभाम् ॥ पञ्चगव्यपरिक्षिप्तांसञ्जप्तामयुतेनच ॥ ६७ ॥ उदङ्मुखोजपेन्मन्त्रंक्षेत्रेतांनिखनेत्पुनः ॥ शत्रूणांसन्निरोधोहिक्षेत्रंचास्यविनश्यति ॥ ६८ ॥ अर्कोदयेङ्गारवारेजपेन्मन्त्रंसमाहितः ॥ वैरिरुद्धादपिक्षेत्रान्मृदमानीययत्नतः ॥ ६९ ॥ तांचत्रिधाविभज्यात्रचुल्लमेकंविलिप्यच ॥ पाक

पात्रंद्वितीयंचपयस्यन्नेतथापरम् ॥ ७० ॥ संस्कृतेहव्यवाहेचतण्डुलैश्चपचेच्च रुम् ॥ तत्रदेवंयथावच्चधूपदीपमदिभिर्यजेत् ॥ ७१ ॥ साज्येनतेनहविषाहुने दष्टाधिकंशतम् ॥ एवंभौमाष्टवारेषुकुर्य्यान्नियतधीःक्रमात् ॥ ७२ ॥ ततःशत्रु गृहीतंतत्क्षेत्रंसम्प्राप्यतेचिरात् ॥ अह्नोमुखेभौमवारेमृदंसंगृह्यपूर्ववत् ॥ ७३ ॥ पूर्ववच्चचरुंकृत्वाजुहुयात्प्रोक्तकर्म्मणा ॥ बलिंचदद्यात्क्षेत्रस्यविरोधोनश्यति क्षणात् ॥ ७४ ॥ देवस्यहुतशेषेणबलिदानमिहोदितम् ॥ सप्तभिर्दिवसैश्चा त्रडाकिनीविकृतिंहरेत् ॥ ७५ ॥ तामेवमृत्तिकांदुग्धंविलोड्याज्येनसंहुनेत् ॥ अष्टाधिकशतंमन्त्रीशालिभिर्द्विनिशंहुनेत् ॥७६॥ तत्तुसंवत्सरात्पूर्णशालिभि श्चगृहंभवेत् ॥ अनेनजुहुयादाज्यंसहस्रंप्रत्यहंहुनेत् ॥७७॥ तेनसर्वसमृद्धिः स्यादञ्जुल्याश्चप्रसूनकैः ॥ सहस्रंस्वादुसंयुक्तैर्वासस्रांसिद्धिरुच्यते ॥ ७८ ॥ लाजहोमाच्चकन्याप्तिर्बिल्वजैःश्रीर्भवत्यलम् ॥ जिनादिक्षेत्रमासाद्यवादिनो जयतेसदा ॥ ७९ ॥ तत्रासीनोजपेन्मन्त्रंचाष्टोत्तरसहस्रकम् ॥ एवंकृतेनतत्त स्यभूमिवादोविनश्यति ॥ ८० ॥ स्वात्मानंमेरुसदृशंकोलरूपंविचिन्तयेत् ॥ अङ्गारवारेप्रजपेत्क्षेत्रंकुर्य्यात्प्रदक्षिणम् ॥ ८१ ॥ ततोमृदंप्रगृह्णीयात्स्वस्यक्षे त्रंप्रजायते ॥ नित्यंभूमिंस्पृशन्मन्त्रीजपेदष्टसहस्रकम् ॥ ८२ ॥ विन्दतेमहतीं लक्ष्मींशमयेत्सर्वकण्टकान् ॥ प्रतिष्ठाभूमिकामस्तुभृगौभौमेधिकंजपेत् ॥८३॥ नित्यमष्टसहस्रंचयोजपेद्धरिमर्चयेत् ॥ महतींश्रियमाप्नोतिमहाराजोभवत्यल म् ॥ ८४ ॥ लक्षंहोमोजपान्तेस्याद्द्रव्यैश्चैवसपायसैः ॥ सप्तद्वीपान्समाप्नोति नात्रकार्य्याविचारणा ॥ ८५ ॥ दधिमध्वाज्यसिक्ताश्चचतुरंगुलसम्मिताः ॥ गुडूचीरष्टसाहस्रंहुनेद्व्याधिर्विनश्यति ॥ ८६ ॥ आम्रपर्णैर्हुनेन्नित्यंज्वरशा न्तिःप्रजायते ॥ गृहीत्वाहस्तयोर्नीरंजपेदक्षरसंख्यया ॥ ८७ ॥ मुखप्रक्षाल नंकृत्वामुखश्रीस्तस्यवर्द्धते ॥ एवम्प्रोक्तोवराहस्यमनुःसर्वार्थसिद्धिदः ॥८८॥ अथातःसम्प्रवक्ष्यामिवराहाष्टाक्षरम्परम् ॥ ॐभूर्वराहायनमोमुनिर्ब्रह्मासमीरि तः ॥ ८९ ॥ जगतीछन्दउद्दिष्टंवराहोदेवतास्मृता ॥ पदैःसमस्तमन्त्रेणपञ्चा

---

१ ॐ भूः वराहाय नमः इन चारपदों और सब मन्त्रको पढकर पंचांगन्यास करना जैसे ॐ हृदयाय नमः इत्यादि क्रमसे समझलेना ॥

ङ्गानिप्रकल्पयेत् ॥ ९० ॥ कृष्णाङ्गंनीलवस्त्रंचमलिनम्पद्मसंस्थितम् ॥ पृथ्वी शक्तियुतंध्यायेच्छङ्खचक्राम्बुजाङ्गदम् ॥ ९१ ॥ भूलक्ष्मीकान्तिभिश्चैवसम स्तैःपरिवारकैः ॥ चर्मासिवह्निश्चकलौहुतसिद्धिप्रदायकम् ॥ ९२ ॥ जपपू जादिकंसर्वमस्यपूर्ववदाचरेत् ॥ एवम्मन्त्रंयःप्रभजेत्सभवेच्चधरापतिः ॥ ९३ ॥ इमित्येकाक्षरोमन्त्रोवराहस्यप्रकीर्त्तितः ॥ हयग्रीवोमुनिःप्रोक्तश्छन्दोनुष्टुप् चदेवता ॥ ९४ ॥ वराहोदीर्घयुक्तेनबीजेनैवाङ्गकल्पनम् ॥ प्राग्वद्ध्यायेद्रक्तव र्णंपूजाद्यंपूर्ववद्भवेत् ॥ ९५ ॥ भूरित्येकाक्षरंबीजंसर्वंप्राग्वत्समीरितम् ॥ पीत वर्णंसदाध्यायेद्वापरेहुतसिद्धिदम् ॥ ९६ ॥ एषाश्चतुर्णांशक्तिस्तुपृथिवीपरि कीर्त्तिता ॥ क्रमाद्वक्ष्येहितन्मन्त्रंवराहस्यप्रियानति ॥ ९७ ॥ ॐनमोभगव त्यैचधरण्यैधरणीधरा ॥ धयेस्वाहेतिमन्त्रोयमूनविंशतिवर्णकः ॥ ९८ ॥ धराहृदयमन्त्रोयंभूपतित्वप्रदायकः ॥ मुनिर्वराहोस्यनिवृच्छन्दोदेवीधराम ता ॥ ९९ ॥ त्र्यब्धित्रीषुद्विद्विवर्णैःपडङ्गविधिरीरितः ॥ इन्दीवरयुतांशालिम ञ्जरींदधतींशुकम् ॥१००॥ धराम्पद्मासनांध्यायेन्नानाभूषणभूषिताम् ॥ पूजा तुवैष्णवेपीठेपूर्वमङ्गानिपूजयेत् ॥ १ ॥ ततोयजेदष्टदलेपूर्वतःकुचभूकलाः ॥ वह्निर्वह्निकलाश्चैवतोयंसूर्यंचतत्कलाः ॥ २ ॥ इन्द्रादींश्चापिवज्रादीनितिपू जाविधिःस्मृतः ॥ लक्षञ्जपेत्प्रजुहुयाद्घृतसिक्तौदनेनच ॥ ३ ॥ तर्पणंमार्ज्जनं कुर्याद्विप्राणांतर्पणन्तथा ॥ विधिनातेनसंसिद्धेमनौकाम्यानिकारयेत् ॥४॥ रक्तोत्पलानिजुहुयात्स्वाद्वक्तानिसहस्रकम् ॥ इष्टांभुवंसमाप्नोतितद्वन्नीलोत्पलै र्हुनेत् ॥ ५ ॥ प्रियंगुपुष्पहोमेनमधुराक्तेनमन्त्रवित् ॥ बहुधान्यधराश्रीणांस त्यम्भवतिभाजनम् ॥ ६ ॥ मधुरार्द्रतरांहुत्वानूतनांशालिमञ्जरीम् ॥ धरापति र्भवेन्मन्त्रीमण्डलेननसंशयः ॥ ७ ॥ प्रातर्भृगुदिनेमन्त्रीसाध्यक्षेत्रान्मृदंहरेत् ॥ शुद्धतोयेसमालोड्यतांचतत्रपचेच्चरुम् ॥ ८ ॥ अग्नौदुग्धघृताक्तंजुहुयात्तं तुयथाविधि ॥ मासषट्कंभृगोर्वारेह्येवंकृत्वालभेद्धराम् ॥ ९ ॥ अथातःसम्प्र वक्ष्यामिधरामन्त्रंमहाद्भुतम् ॥ ॐमहीग्लौंचनमःप्रोक्त्वाभगवत्यैपदंवदेत् ॥ १० ॥ धरायैधरणींप्रोच्यधरेयुग्माग्निगेहिनी ॥ ग्लौंह्रींतारंसमुच्चार्य्यचतुर्वि

१ ॐ लं ग्लौं नमः भगवत्यै धरायै धरणि धरेधरे ग्लौं ह्रीं ॐम् ॥

शाक्षरोमनुः ॥ ११ ॥ चतुर्वर्णैःषडङ्गानिध्यानादिपूर्ववन्मतम् ॥ एषउक्तस्तु वाराहोमन्त्रःसिद्धोखिलेष्टदः ॥ १२ ॥ ग्लौमित्येकाक्षरोमन्त्रःप्राग्वत्पूजादिकम्भवेत् ॥ पेद्दीर्घयुक्तबीजेनषडङ्गविधिरीरितः ॥ १३ ॥ लैमित्येकाक्षरंबीजंसर्वाभीष्टप्रदायकम् ॥ सर्वप्राग्वत्षडङ्गानिदीर्घषट्कान्वितेनच ॥ १४ ॥ अथातःसम्प्रवक्ष्यामिनृसिंहस्यमनूनद्भुतान् ॥ प्रतिमन्वन्तरंवायमवतारोहरेर्भवेत् ॥ १५ ॥ द्वीपान्तरेनृसिंहस्तुचतुर्दशसुमूर्त्तिषु ॥ आकल्पंवसतेतत्रभक्तानुग्रहकारकः ॥ १६ ॥ आदिमन्वन्तरेजातोनृसिंहोवक्ष्यतेधुना ॥ द्वात्रिंशदर्णकोगोप्योमुक्तिभुक्तिप्रदोमतः ॥ १७ ॥ उग्रंवीरंमहाविष्णुंज्वलन्तंसर्वतोमुखम् ॥ नृसिंहंभीषणंरुद्रंमृत्युमृत्युंनमाम्यहम् ॥ १८ ॥ ब्रह्मामुनिरनुष्टुप्चच्छन्दोस्तिनृहरिःसुरः ॥ मन्त्रस्यतुपदैश्चैवप्रणवेनाङ्गपञ्चकम् ॥ १९ ॥ प्रथमोन्यासउद्दिष्टःसर्वाभीष्टप्रदायकः ॥ वेदवेदार्णपट्षट्कवेदार्णैःस्यात्षडङ्गकम् ॥ २० ॥ षडङ्गाख्योद्वितीयोयमङ्गन्यासउदाहृतः ॥ शीर्षेभालेदक्षनेत्रेवामनेत्रेमुखेक्रमात् ॥ २१ ॥ दक्षिणेबाहुमूलेचतन्मध्येमणिबन्धके ॥ दक्षांगुलीनांमूलेचतदग्रेवामगेभुजे ॥ २२ ॥ तन्मध्येमणिबन्धेचांगुलीमूलेतदन्तके ॥ दक्षोरुजानुगुल्फेषुचांगुलीमूलकेग्रके ॥ २३ ॥ कण्ठेहृदितथानाभौदक्षपार्श्वेचवामके ॥ पृष्ठेककुदिमन्त्रस्यन्यसेद्वर्णान्भयापहान् ॥ २४ ॥ तृतीयोन्यासउदितःसाक्षाद्देवमयोभवेत् ॥ दक्षांगुष्ठंसमारभ्यकनिष्ठान्तन्त्रिपर्वसु ॥ २५ ॥ वामांकनिष्ठामारभ्यवामांगुष्ठावधिन्यसेत् ॥ एवंदक्षकरतलेवामेपिकरजंहरेत् ॥ २६ ॥ पातकंतुर्यउदितोन्यासोंगुल्यादिकःपरः ॥ ब्रह्मरन्ध्रेचशिरसिभालेभ्रूमध्यकेततः ॥ २७ ॥ नयनेनयनाधश्चकपोलेकर्णमूलके ॥ दन्तपङ्क्तौचचिबुकेउत्तरोष्ठेऽधरोष्ठके ॥ २८ ॥ कण्ठेनाभौभुजेदक्षेवामेचहृदयेस्तने ॥ एवंदक्षकरतलेवामेवापिकटौततः ॥ २९ ॥ लिङ्गेचोरौतथाजानौजङ्घायांचापिगुह्यके ॥ पादांगुलीषुसर्वासुतथाहस्तांगुलीषुच ॥ ३० ॥ सर्वाङ्गेरोमकूपेषुरक्तहृत्पललास्थिषु ॥ मज्जाशुक्रेक्रमाद्वर्णान्मन्त्रस्यैकैकशोन्यसेत् ॥ ३१ ॥ अ

---

१ ग्लां ग्लीं ग्लूं ग्लैं ग्लौं ग्लः इससे षडङ्ग न्यास करना जैसे ग्लां हृदयाय नमः ग्लीं शिरसे स्वाहा इत्यादि २ लां लीं लूं लैं लौं लः इससे षडङ्ग न्यासकरे ॥

यन्तुपञ्चमोन्यासःसर्वारिष्टनिवारकः ॥ पादयोर्गुल्फयोश्चैवजङ्घयोर्जानुनो स्तथा ॥ ३२ ॥ ऊर्वोःकटिद्वयेनाभौहृदिबाह्वोस्तथागले ॥ चिबुकेदन्तपङ्क्त्यो श्चौष्ठाग्रयोश्चकपोलयोः ॥ ३३ ॥ कर्णयोर्वदनेनासाद्वयेक्ष्णोश्चापिमूर्द्ध नि ॥ पादादिवर्णन्यासोयंपञ्चमःपरिकीर्त्तितः ॥ ३४ ॥ मनोभवबलाकर्षीनृ हरेरतिवल्लभः ॥ मुखेमूर्द्धनिनासायांनेत्रेश्रोत्रेतथामुखे ॥ ३५ ॥ हृदिनाभौ कटौजान्वोःपादयोःक्रमतोन्यसेत् ॥ षष्ठोयन्तुपदन्यासोभुक्तिमुक्तिप्रदायकः ॥ ३६॥ अस्मिन्न्यासेकृतेदेहेरोगैःस्थातुंनशक्यते ॥ नासाग्रेनयनद्वन्द्वेनाभौ हृदिचमूर्द्धनि ॥३७॥ बाह्वोश्चरणयोर्न्यस्येन्मन्त्रार्णानांचतुष्ककम् ॥ सप्तमो यंन्यासउक्तश्चतुर्वर्णात्मकोहरेः ॥३८॥ धर्मार्थकाममोक्षाणांदायकोनात्रसंश यः ॥ मूर्ध्निवक्षसिनाभौचसर्वाङ्गेवाप्रवेशयेत् ॥ ३९ ॥ पादन्यासोष्टमश्चायं सिंहव्याघ्रभयापहः ॥ पादतोहृदयाच्चापिन्यसेदर्धद्वयंमनोः ॥ ४० ॥ अर्द्धन्यासो यमुदितोनवमोघसमूहहृत् ॥ उग्रादिपदमाभाष्यद्वितीयान्तेनमाम्यहम् ॥ ४१ ॥ अन्तेब्रूयान्नवस्थानेन्यसेदास्येचमस्तके ॥ नासायांनेत्रयोःश्रोत्रेब्रह्मरन्ध्रेतथा हृदि ॥ ४२ ॥ नाभौकट्यादिपादान्तंन्यासोयंदशमःस्मृतः ॥ नृसिंहपूर्वा ण्याभाष्यचोग्रादीनिपदानिच ॥ ४३ ॥ नमाम्यहंततःप्रोक्तानवस्वङ्गेषुविन्य सेत् ॥ पूर्वोक्तेष्वेवडाकिन्यादिकभीतिहरोभवेत् ॥ ४४ ॥ अयमेकादशोन्यासो नृहरेरतिपावनः ॥ उग्रादिकपदैरेवंपूर्ववत्तैर्भवेत्पुनः ॥ ४५ ॥ न्यासश्चाष्टवि धोप्येवमूनविंशप्रकारकः ॥ आनाभिमूलाधाराच्चन्यसेद्वर्णत्रयंबुधः ॥ ४६ ॥ नाभेर्हृदयपर्य्यन्तंन्यसेद्वर्णचतुष्टयम् ॥ हृदोभ्रूमध्यपर्य्यन्तंवर्णषट्कंप्रविन्यसेत् ॥ ४७ ॥ मूर्द्धादिपादपर्य्यन्तंचिन्तयेन्नृहरिंविभुम् ॥ एवंविंशतिरुद्दिष्टान्यासानां पातकापहा ॥ ४८ ॥ यस्मान्नृसिंहोभगवान्पापंकृत्वास्यसेवके ॥ तत्कालंकुरुते कोपंविक्षिप्तंकुरुतेजगत् ॥ ४९ ॥ तस्मादपरिहार्य्यैनमज्ञातानांतुपाप्मनाम् ॥ न्यासैर्भवतिनाशोऽतःसर्वन्यासान्समाचरेत् ॥ ५० ॥ वामेशङ्खमरीदक्षेजानुवि न्यस्तबाहुकम् । ग्रसन्तंदैत्यराजानंकृशानूपमतेजसा ॥ ५१ ॥ दंष्ट्राप्रदीप्तव दनंलल ज्जिह्वंत्रिलोचनम् ॥ सुरैश्चमुनिभिर्लक्ष्म्याःकृताञ्जलिकयाशुभम् ॥ ५२ ॥ मूर्त्तिं मूलेनसङ्कल्प्यदेवमावाह्यपूजयेत् ॥ वामाङ्गेनृहरेःपूज्यालक्ष्मीभूष

णभूषिता ॥ ५३ ॥ वामेपद्मधरादक्षबाहुनानृहरिंविभुम् ॥ आश्लिष्यन्तींशा
न्तिमूर्त्तिंततोङ्गानिप्रपूजयेत् ॥ ५४ ॥ यजेदाशासुगरुडशिवानन्तौविधिंक्र
मात् ॥ श्रियंह्रियंधृतिंपुष्टिंतथावह्निदिशादिषु ॥ ५५ ॥ तृतीयेष्टदलेपूज्यंनृ
सिंहानान्तथाष्टकम् ॥ शङ्खिनञ्चक्रिणंस्वर्णश्यामंवाशुभवाससम् ॥ ५६ ॥
नृसिंहंस्तम्भनाख्यंतुश्वेतम्प्राच्यांसमर्चयेत् ॥ सिन्दूरारुणमाग्नेयेयजेद्वश्यनृ
सिंहकम् ॥ ५७॥ बाणचापधरंलक्ष्म्यासेवितम्मकरध्वजम् ॥ दक्षेयजेदब्जमा
लाशङ्खार्घ्यसिगदाधरम् ॥ ५८ ॥ भिन्नदैत्यहृदंकृष्णंत्रिनेत्रंमारणक्षमम् ॥ वि
द्वेषोच्चाटनकरंनीलोत्पलसमप्रभम् ॥ ५६ ॥ वायवीयेतथाकोणेशङ्खचक्रगदा
धरम् ॥ विप्राणांपुष्टिदंनेत्रत्रितयालंकृताननम् ॥ ६० ॥ उदग्दलेनृसिंहंतंपा
ञ्चजन्यंसुदर्शनम् ॥ गदांनिधिंचबिभ्राणंलक्ष्म्यायुक्तंनिधिप्रदम् ॥ ६१ ॥ विद्या
भूतिसुदक्पूर्वेक्षीराभम्पीतवाससम् ॥ पाशांकुशधरोद्बाहुंशङ्खचक्रधरम्प्रभुम् ॥
६२ ॥ हृत्सरोरुहमध्यस्थंचन्द्रपुञ्जसुनिर्मलम् ॥ लक्ष्म्यायुक्तंनारसिंहंपूजयेत्सा
धकःसदा ॥ ६३ ॥ चक्रंशङ्खंमहापद्मंमुशलंदेववदक्षिणे ॥ शङ्खंखड्गंगदांशार्ङ्गं
पूजयेद्देववामतः ॥ ६४ चतुर्थावरणञ्चैतल्लक्ष्म्यादिभिरनन्तरम् ॥ लक्ष्मीदक्षि
णतस्तुष्टिंवामेतत्रैवकौस्तुभम् ॥ ६५ ॥ श्रीवत्संदक्षिणेमध्येवनमालांचपूजये
त् ॥ पीताम्बरंब्रह्मसूत्रंनाभिपद्मंकिरीटकम् ॥ ६६ ॥ भूषणानिचसर्वाणिपुरो
भागेप्रपूजयेत् ॥ षष्ठीश्रद्धादिभिःश्रद्धामेधातुष्टिश्चकार्मुका ॥ ६७ ॥ भीमाक्षी
चैवसभयाचक्राक्षीदीप्तिलक्षणी ॥ एवंसम्पूज्यविधिवत्साधकोभीष्टमाप्नुयात् ॥
६८ ॥ अष्टलक्षंजपेन्मन्त्रंदीक्षितोविजितेन्द्रियः ॥ तत्सहस्रंप्रजुहुयाद्घृताक्त
ह्वाविषानले ॥ ६९ ॥ तर्पणम्मार्जनंकृत्वाब्राह्मणाराधनन्ततः ॥ कुर्यात्संसि
द्धमन्त्रस्तुप्रयोगानाचरेत्ततः ॥ ७० ॥ काम्यप्रयोगसिद्ध्यर्थध्यानभेदान्वदा
म्यहम् ॥ उद्यत्सहस्रार्कभासंत्रिनेत्रम्भीषणाकृतिम् ॥ ७१ ॥ वज्रतुल्येक्षणंव
ह्निकान्तिनानाभुजैर्वृतम् ॥ नखैर्दारितदैत्येशंरक्तधाराक्तकायकम् ॥ ७२ ॥ क्रूर

---

१ बीचमें नृसिंह व उनके वामओर लक्ष्मीजी तदनन्तर षडङ्ग और उनके आगे अष्टदल में पूर्वमें गरुड़ दक्षिण में शिव पश्चिम में शेष उत्तर में ब्रह्मा तथा आग्नेयमें श्री नैर्ऋत्य में ह्री वायव्य में तुष्टि वा धृति ईशानकोणमें पुष्टि इन सबकी पूजाकरै आगे अष्टदल में आठो नृसिंहों को पूजे पूजामन्त्र नाम से बनालेना जैसे गंगरुडाय नमः ॥

कर्मादिविषयेस्मरेदेवम्भयानकम् ॥ विश्वरूपमयंध्यानंनृहरेःप्रोच्यतेधुना ॥ ७३ ॥ नृसिंहन्तम्महाभीमंकालानलसमप्रभम् ॥ अन्त्रमालाधरंरौद्रंकण्ठेहारेणशोभितम् ॥७४॥ नागयज्ञोपवीतंचपञ्चाननसुशोभितम् ॥ चन्द्रमौलिंनीलकण्ठंप्रतिवक्त्रेत्रिलोचनम् ॥ ७५ ॥ भुजैःपरिघसङ्काशैर्दशभिश्चोपशोभितम् ॥ अक्षसूत्रंगदांपद्मंशङ्खंगोक्षीरसन्निभम् ॥ ७६ ॥ धनुश्चमुशलंचैवविभ्राणंचक्रमुत्तमम् ॥ खड्गंशूलंचबाणंचनृहरिंरुद्रगोपनम् ॥ ७७ ॥ इन्द्रनीलकनीलाभञ्चन्द्राभंवर्णसन्निभम् ॥ पूर्वोदयोत्तरज्वालादूर्ध्वास्यंसर्ववर्णकम्॥ ७८ ॥ एवमुग्रहरिंध्यायेत्सर्वव्याधिनिवृत्तये ॥ ध्येयोयदामहत्कर्मतदाषोडशहस्तवान् ॥ ७९ ॥ नृसिंहःसर्वलोकेशःसर्वाभरणभूषितः ॥ द्वौविदारणकर्माणौद्वौजनोद्धरणक्षमौ ॥ ८० ॥ शङ्खचक्रधरौरम्याअन्यौबाणधनुर्धरौ ॥ खड्गखेटधरावन्यौद्वौगदापद्मधारिणौ ॥ ८१ ॥ पाशांकुशधरावन्यौद्वौरिपोर्मुकुटार्पितौ ॥ इतिषोडशदोर्दण्डमण्डितंनृहरिंविभुम् ॥ ८२ ॥ ध्यायेदम्बुजनीलाभमुग्रकर्मण्यनन्यधीः ॥ ध्येयोमहत्तमेकार्य्येतदाषड्विंशहस्तवान् ॥ ८३ ॥ नृसिंहःसर्वभूषाढ्यःसर्वसिद्धिकरःप्रभुः ॥ दक्षिणेखड्गचक्रेचपरशुंपाशमेवच ॥ ८४ ॥ हलंचमुशलंसम्यगभयंचांकुशन्तथा ॥ पट्टिशंभिन्दिपालंचखेटतोमरमुद्गरान् ॥ ८५ ॥ वामभागकरैःशङ्खंखड्गंपाशंचशूलकम् ॥ हुताशनंवरंशक्तिंसम्यङ्मृन्मयकुण्डिकाम् ॥ ८६ ॥ कार्मुकन्तर्जनीमुद्रांगदांडमरुमर्थकान् ॥ करद्वन्द्वैःक्रमाच्छत्रोर्जानुमस्तकपत्तलम् ॥ ८७ ॥ ऊर्ध्वीकृताभ्यांहस्ताभ्यांचान्त्रमालाधरंहरिम् ॥ अधःस्थिताभ्यांहस्ताभ्यांहिरण्यकविदारणम् ॥८८॥ प्रियंकरञ्चभक्तानांदैत्यानांचभयङ्करम् ॥ नृसिंहंसंस्मरेन्नित्यंमहामृत्युभयापहम् ॥ ८९ ॥ अथोच्यतेध्यानमन्यन्मुखरोगभयङ्करम् ॥ विषरोगभियांमृत्योर्हरंशत्रुभयापहम् ॥ ९० ॥ स्वर्णौघतुल्यगरुडेस्थितंपूर्णेन्दुचन्द्रकम् ॥ सुमुखंविद्युदाभासंनेत्रत्रयविराजितम् ॥ ९१ ॥ सुभूषंपीतवसनंशङ्खचक्रभयावरान् ॥ धारयन्तंचतुर्भिश्चकरैःक्षेत्रादिनाशकम् ॥ ९२ ॥ अपमृत्युमहाकृत्यानाशकंनृहरिंस्मरेत् ॥ लक्ष्मीफलैस्त्रिमधुरैःसुगन्धैःकुसुमैर्हुनेत् ॥ ९३ ॥ अयुतंमधुराद्यैश्चदरिद्रोनभवेत्कलौ ॥ उदुम्बरसमिद्धोमाद्धान्यसिद्धिर्भवेद्ध्रुवम् ॥ ९४ ॥ अपूप

लक्षहोमेन धनदेनसमो भवेत् ॥ क्रुद्धस्यसन्निधौराज्ञोजपेदष्टोत्तरंशतम् ॥६५॥ सद्योनैर्मल्यमाप्नोतिप्रसादंवाधिगच्छति ॥कुन्दप्रसूनहोमेनससौन्दर्य्यमवाप्स्यति ॥ ६६ ॥मधूकपुष्पहोमेनचेष्टसिद्धिःप्रजायते ॥ तुलसीपत्रहोमेनकीर्त्तिर्भवतिनान्यथा ॥ ६७ ॥ शतहोमेनकालीनांवशीकरणमुत्तमम् ॥ हरिद्राखण्डहोमेनस्तम्भनम्भवतिध्रुवम् ॥ ६८ ॥ बदरीफलहोमेनसर्वविघ्नःप्रणश्यति ॥ रोगेमध्वाज्यसिक्ताश्चगुडूचीश्चतुरंगुलाः ॥ ६६ ॥ जुहुयादयुतंयोसौचिरञ्जीवतिवत्सरात् ॥शनैश्चरदिनेश्वत्थंस्पृष्ट्वाचाष्टोत्तरंशतम् ॥२००॥ जपेज्जित्वासमृत्युंवैशतवर्षाणिजीवति ॥ श्रीप्रसूनैःप्रजुहुयात्तत्काष्ठैर्ज्वलितेनले ॥ १ ॥ सहस्रमात्रेणततोलक्ष्मीमाप्नोतिनिश्चितम् ॥ दूर्वाहोमादरोगीस्याल्लक्ष्मीवाञ्छीफलैर्भवेत् ॥ २ ॥ अनेनमनुनाजप्तान्वहंभूतिःशित्रस्यच ॥ अशिताप्रातरुत्थायवाक्सिद्धिंसाप्रयच्छति ॥ ३ ॥ जलेनृसिंहंसम्पूज्यचन्दनेनसुपुष्पकैः ॥ अष्टोत्तरशतंनित्यंदूर्वाभिर्जुहुयात्सुधीः ॥४॥ क्षुद्रभूतज्वरास्तस्याविनश्यन्त्युपसर्गजाः ॥ रात्रौदृष्टेतुदुःस्वप्ने मन्त्रीस्नात्वामनुंजपेत् ॥ ५ ॥ रक्षांकरोतिदुष्टेभ्योद्वस्तरेभ्योपिमन्त्रिणः ॥ क्रूरंनृसिंहंसञ्चिन्त्य शत्रुञ्चमृगशावकम् ॥ ६ ॥ कन्धरायांगृहीत्वार्तंनिक्षिप्तंदिक्षुचिन्तयेत् ॥ सबान्धवस्यझटितितस्योच्चाटःप्रजायते ॥ ७ ॥ कृत्वार्वाग्दिशमुत्तानं युगपद्धरिणास्वयम् ॥ नखरैर्दार्य्यमाणंतंसंस्मरेन्निशितैर्द्रुतम् ॥ ८ ॥ अष्टाधिकशतंचामुं जपेन्मनुमनन्यधीः ॥ भवेन्मण्डलमध्येयं दिवाकरसुतातिथिः ॥ ६ ॥ करवीरभवैःकाष्ठैः सम्यक्सन्दीपितेनले ॥ रिपुसङ्घक्षयकरं नृसिंहंचन्दनादिभिः ॥ १० ॥ सम्यगभ्यर्च्यजुहुयाच्छरान्साग्रान्सशूलकान् ॥ सहस्रमेकंचमनुंभक्षयेच्छत्रुमुत्कटम् ॥ ११ ॥ एवंशरान्विनिक्षिप्य शत्रुसेनांविदारयेत् ॥ जुहुयात्सप्तदिवसं ततोराज्ञश्चमूं सुधीः ॥ १२ ॥ सुदिनेचशुभेलग्ने शत्रुसैन्यजिगीषया ॥ प्रस्थापयेत्तांसुदृढांरक्षितांबलिभिर्नरैः ॥ १३ ॥ तदग्रेचिन्तयेद्देवं नृसिंहंशत्रुसञ्चयम् ॥ भक्षयन्तंयजेन्मन्त्री कुर्य्यादायातिसाचमूः ॥ १४ ॥ यावत्तावद्रिपुंजित्वा सर्वान्राजाश्रियासह ॥ आगच्छेद्भूपतिःशूरः पश्चान्मन्त्रिणमादरात् ॥ १५ ॥ तोषयेत्क्षेत्रवसुभिर्वस्त्रालङ्करणैःशुभैः ॥ मन्त्रिणोयदिसन्तोषोनभवेद्भूपतेस्तदा ॥ १६ ॥

अनर्घः सुमहानेव जायतेद्दुःसहोभृशम् ॥ अथातःसम्प्रवक्ष्यामि द्वितीयं नृहरिं विभुम् ॥ १७ ॥ क्षोमित्येकाक्षरोमन्त्रो मुनिरत्रिःप्रकीर्तितः ॥ गायत्री छन्दउद्दिष्टं देवतानृहरिःस्मृतः ॥ १८ ॥ षड्दीर्घयुक्तबीजेन षडङ्गानिसमाचरेत् ॥ एकलक्षं जपेन्मन्त्रं हविष्याशीजितेन्द्रियः ॥ १६ ॥ तद्दशांशंहुनेत्सम्यग्घृताक्तैःपायसैःशुभैः ॥ तर्पयेत्क्षुद्रसलिलैः कृत्वाचात्माभिषेचनम् ॥ २० ॥ ब्राह्मणान्सम्यगाराध्य सिद्धमन्त्रःसमाचरेत् ॥ मन्त्रराजोदितान्सर्वान्प्रयोगानत्रसाधकः ॥ २१ ॥ अष्टाधिकसहस्रेण जप्तैश्चकलशोदकैः ॥ विषार्त्तमभिषिञ्चेत्तमुच्यतेहिविषेणसः ॥ २२ ॥ मुच्यतेन्यैस्तथातैस्तुलूतामूषकजैरपि ॥ बहुपदवृश्चिकोत्थैश्च विषैर्मुक्तोभवेद्ध्रुवम् ॥ २३ ॥ अनेनमनुनाजप्तं भस्मचाष्टोत्तरंशतम् ॥ शिरोक्षिकर्णहृत्कुक्षिकण्ठरोगान्विनाशयेत् ॥ २४ ॥ विसर्पञ्चवमिंहिक्कांज्वरांश्चैवविनाशयेत् ॥ मन्त्रौषधादिसम्भूतानभिचारान्विकारकान् ॥ २५ ॥ शमयेद्भस्मसञ्जप्तं नात्रकार्य्याविचारणा ॥ मृत्युस्थानेखिलेमन्त्री ससाध्यंचदहन्निव ॥ २६ ॥ क्रूरेणचक्षुषामन्त्री जपेदष्टदिनावधि ॥ अष्टाधिकसहस्रञ्च म्रियतेरिपुरस्यहि ॥ २७ ॥ वश्यमाकर्षविद्वेषौमहाचण्डादिकर्म्मच ॥ कुर्य्यादयुतजापेन तत्तदर्हणकर्मणा ॥ २८ ॥ अयमेकाक्षरोमन्त्रः प्रोक्तस्सर्वसमृद्धिदः ॥ अथातःसम्प्रवक्ष्यामि तृतीयंनृहरिर्मनुम् ॥ २६ ॥ आं ह्रीं क्ष्रों क्रों ह्रां फडिति षडर्णोमन्त्रईरितः ॥ पंक्तिश्छन्दोमुनिर्ब्रह्मा श्रीनृसिंहस्तुदेवता ॥ ३० ॥ मन्त्रवर्णैरङ्गषट्कं कृत्वाध्यायेन्नृसिंहकम् ॥ भीषणास्यःक्रोधदीप्तो रक्तवर्णेन्दुशेखरः ॥ ३१ ॥ सोमसूर्याग्निनेत्रश्च नानामणिविभूषितः ॥ दक्षाद्यूर्ध्वक्रमेणैव चक्रशार्ङ्गौगुणांकुशौ ॥ ३२ ॥ वज्रंगदांदारयन्तं द्वाभ्यांदैत्येश्वरोदरम् ॥ पूर्वोदितयजेत्पीठे मूर्तिंमूलेनकल्पयेत् ॥ ३३ ॥ तस्यांसम्पूज्यनृहरिंकुर्यादावरणार्चनम् ॥ तद्बाह्येषड्दलेऽङ्गानि तदस्त्राण्यष्टपत्रके ॥ ३४ ॥ अरिशङ्खंगुणंचैव सृणिंचकुलिशंगदाम् ॥ खड्गंखेटंचतद्बाह्ये भूपुरंतुदिगीश्वरान् ॥ ३५ ॥ तदायुधानितद्बाह्ये नृहरेरितिपूजनम् ॥ लक्षषट्कंजपेन्मन्त्रं केवलेनघृतेनच ॥ ३६ ॥ जुहुयात्षट्सहस्राणि तर्पणादिततश्चरेत् ॥ एवंसिद्धमनुर्मन्त्री प्रयोगानाचरेत्ततः ॥ ३७ ॥

अपामार्गसमिद्भिश्चपूताभिःपञ्चगव्यके ॥ जुहुयाद्वसहस्रैकं सप्ताहंभूतशान्तये ॥ ३८ ॥ गुडूचीसमिधोदुग्धलोलिताश्चसहस्रकम् ॥ चतुर्दिनंप्रजुहुयाज्ज्वरशान्तिःप्रजायते ॥ ३९ ॥ रक्तोत्पलैःप्रत्यहंयोमधुरत्रयलोलितैः ॥ सहस्रसङ्ख्यंजुहुयात्पायसेनेष्टमाप्नुयात् ॥ ४० ॥ मन्त्रजापीवत्सरेण धनधान्यसमृद्धियुक् ॥ प्रफुल्लैस्तरुणाम्भोजैर्मधुरत्रयलोलितैः ॥ ४१ ॥ सहस्रद्वादशमितंहुत्वासर्वजनप्रियः ॥ प्रातस्त्रिमधुरोपेतलाजाभिःपक्षमात्रकम् ॥ ४२ ॥ सहस्रंजुहुयात्कन्यां कन्यार्थीलभतेध्रुवम् ॥ वरार्थिनीलभेदाशु वरंसर्वमनोहरम् ॥ ४३ ॥ तिलराजैरपामार्गैः पायसान्नैर्हुनेद्ध्रुवम् ॥ सदीर्घायुरवाप्नोतिविमुक्तःसकलैर्गदैः ॥ ४४ ॥ कलत्रमित्रपुत्राद्यैर्धनधान्यसमन्वितः ॥ अथातस्सम्प्रवक्ष्यामि तुल्यमन्वन्तरोद्भवम् ॥ ४५ ॥ ज्वालामालंनृसिंहंतुशत्रुभूतादिनाशकम् ॥ ॐ क्ष्रौं नमोभगवतेनारसिंहायसंवदेत् ॥ ४६ ॥ ज्वालेतिमालिनेदीप्तदंष्ट्रायाग्निपदंवदेत् ॥ नेत्रायसर्वरक्षोघ्नायसर्वपदमुच्चरेत् ॥ ४७ ॥ भूतविनाशनोऽन्तःसर्वघोरविनाशनः ॥ ङेन्तएवद्विर्दहेतिपचरक्षयुगंतथा ॥ ४८ ॥ हुंफट्स्वाहेतिमन्त्रोयंषष्टिषट्काक्षरोमतः ॥ ऋषिःप्रजापतिश्छन्दोगायत्रीनृहरिःसुरः ॥ ४९ ॥ विश्वदिग्भवधृत्याशावेदार्णैःस्यात्षडङ्गकम् ॥ ५० ॥ उद्यत्कालानलनिभंप्रलयाब्दसमस्वनम् ॥ शङ्खंचक्रमसिंखेटंदधानंदैवतैस्तुतम् ॥ ५१ ॥ षडक्षरोक्तविधिनापूजाद्यंचास्यकीर्त्तितम् ॥ लक्षंजपेद्दशांशंतु कपिलासर्पिषाहुनेत् ॥ ५२ ॥ तर्पणादिततःकुर्यात्प्रयोगोमन्त्रराजवत् ॥ विशेषतोयंभूतादिज्वरहापरिकीर्त्तितः ॥ ५३ ॥ अथातःसम्प्रवक्ष्यामि योजास्तश्चरमेविभुः ॥ मन्वन्तरेसलक्ष्मीकःसेव्यतेयोगृहस्थितैः ॥ ५४ ॥ ॐ श्रीं ह्रीं श्रीं जयलक्ष्मीप्रियायनित्यशब्दतः ॥ प्रमुदितपदंप्रोच्यचेतसेचततोवदेत् ॥ ५५ ॥ लक्ष्मीश्रितार्धदेहाय श्रीं ह्रीं श्रीं चततोनमः ॥ देववर्णोमनुःप्रोक्तो

---

१ ॐ क्ष्रौं नमोभगवतेनारसिंहायज्वालामालिनेदीप्तदंष्ट्रायअग्निनेत्रायसर्वरक्षोघ्नाय सर्वभूतविनाशनाय सर्वघोरविनाशनाय दह दह पच पच रक्ष रक्ष हुं फट्स्वाहा २ तेरह, दश, ग्यारह, अठारह, दश और चार अक्षरों को षडंगों में न्यास करना जैसे ॐ क्ष्रौं नमोभगवतेनारसिंहायहृदयायनमः, ज्वालामालिनेदीप्तदंष्ट्रायशिरसेस्वाहा इत्यादि ३ ॐ श्रीं ह्रीं श्रींजयलक्ष्मीप्रियायनित्यप्रमुदितचेतसेलक्ष्मीश्रितार्धदेहाय श्रीं ह्रीं श्रीं नमः ॥

जपतांसर्वकामदः ॥ ५६ ॥ लक्ष्मीनृसिंहोदेवोस्यछन्दोनुष्टुप्प्रकीर्त्तितम् ॥
मुनिःप्रजापतिःप्रोक्तःश्रीबीजेनषडङ्गकम् ॥ ५७ ॥ पुरस्तात्केशवःपातुशङ्ख
चक्रगदाधरः॥ पश्चान्नारायणःशश्वन्नीलजीमूतसन्निभः ॥ ५८ ॥ इन्दीवर
दलश्याम ऊर्ध्वंमेमाधवोगदी ॥ गोविन्दोदक्षिणेपार्श्वे धन्वीचन्द्रप्रभोमहा
न् ॥ ५६ ॥ उत्तरेहलधृग्विष्णुः पद्मकिञ्जल्कसन्निभः ॥ आग्नेय्यामरविन्दा
क्षोमुशलीमधुसूदनः ॥ ६० ॥ त्रिविक्रमःखड्गपाणिर्नैर्ऋत्यांज्वलनप्रभुः ॥
वायव्यांवामनोवज्री तरुणादित्यदीप्तवान् ॥ ६१ ॥ ऐशान्यांपुण्डरीकाक्षः
श्रीधरःपट्टिशायुधः ॥ विद्युत्प्रभोहृषीकेशो वायव्यांदिशिमूर्द्धनि ॥ ६२ ॥
हृत्पद्मेपद्मनाभोमेसहस्रार्कसमप्रभः ॥ सर्वायुधःसर्वशक्तिःसर्वज्ञःसर्वतोमुखः॥
६३ ॥ इन्द्रगोपकसङ्काशःपाशहस्तोपराजितः ॥ सबाह्याभ्यन्तरंदेहंव्याप्य
दामोदरःस्थितः ॥ ६४ ॥ एवंसर्वत्रनिश्छिद्रंनामद्वादशपञ्जरम् ॥ प्रविष्टोहं
नमेकिञ्चिद्भयमस्तिकदाचन ॥ ६५ ॥ इति न्यासंविधायादौलक्ष्मीनरहरिं
स्मरेत् ॥ सर्पेन्द्रभोगशयनःसर्पेन्द्रफणछत्रवान् ॥ ६६ ॥ आलिङ्गितश्चरम
यादीप्तभासेन्दुसन्निभः ॥ पद्मचक्रवराभीतिधरस्त्र्यक्षेन्दुशेखरः ॥ ६७ ॥ एवं
ध्यात्वायजेत्पीठेपूर्वोक्तेतुगृहाश्रमी ॥ अङ्गानिषट्दलेभ्यर्च्यशक्तीश्चाष्टदले
यजेत् ॥ ६८ ॥ भास्वरीभास्करीचित्राद्युतिरुन्मीलिनीतथा ॥ रमाकान्तिर्धृ
तिश्चेतिभूपुरेतुदिगीश्वरान् ॥६६॥ तदायुधानीतिभवेच्चतुरावृतिपूजनम् ॥
षष्ट्युत्तरंत्रिलक्षंचप्रजपेत्तत्सहस्रकम् ॥ ७० ॥ मध्वक्तमल्लिकापुष्पैर्जुहुयान्मन्त्र
वित्तमः ॥ अभ्यर्च्यसलिलेदेवंतर्पयेन्मन्त्रनामतः ॥ ७१ ॥ अभिषिञ्चेच्च
मूर्द्धानंब्राह्मणान्भोजयेत्ततः ॥ ततःप्रयोगान्कुर्वीतसाधकोनिजवाञ्छिता
न् ॥ ७२ ॥ मल्लिकाकुसुमैर्होमःसर्वकामकरःशुभः ॥ अनुष्टुभोक्तांस्तत्रापि
सर्वान्कुर्याद्गृहाश्रमी ॥ अथातःसम्प्रवक्ष्यामिषष्ठेमन्वन्तरेभवत् ॥ ७३ ॥ ल
क्ष्म्यासहनृसिंहोयस्तन्मन्त्रंसर्वकामदम् ॥ ॐश्रींलक्ष्मीनृसिंहायमनुरष्टाक्षरो
मतः ॥ ७४ ॥ मुनिःप्रजापतिश्छन्दोलक्ष्मीर्वानृहरिःसुरः ॥ षड्दीर्घयुक्तश्री
बीजैःषडङ्गविधिरीरितः ॥ ७५ ॥ ध्यानपूजादिकंसर्वंषडक्षरवदीरितम् ॥

१ श्रां, श्रीं, श्रूं, श्रैं, श्रौं, श्रः इन अक्षरों का न्यासकरना ॥

वर्णलक्षंजपेन्मन्त्रंतद्दशांशंघृतप्लुतैः ॥ ७६ ॥ पायसैर्जुहुयात्तत्रमन्त्रतर्पण
माचरेत् ॥ अथातःसम्प्रवक्ष्यामियोजातःसप्तमेहरिः ॥ ७७ ॥ जयजयश्री
नृसिंहमनुरष्टाक्षरोमतः ॥ ऋष्याद्यष्टार्णवत्प्रोक्तंपूजाचास्यषडर्णवत् ॥ ७८ ॥
एकार्णवत्प्रयोगांश्चगृहस्थःसाधयेच्छुचिः ॥ अथातःसम्प्रवक्ष्यामित्वष्टमेय
स्त्वजायत ॥ ७९ ॥ दशावतारोनृहरिर्दक्षसावर्णिकोत्रचेत् ॥ ॐक्ष्रौंनमो
भगवतेनरसिंहायसंवदेत् ॥ ८० ॥ ॐक्ष्रौंचमत्स्यरूपायॐक्ष्रौंकूर्मोपिके
न्तकः ॥ ॐक्ष्रौंवराहरूपायॐक्ष्रौंचैवपुनर्वदेत् ॥ ८१ ॥ तथानृसिंह
रूपायॐक्ष्रौंवामनतस्तथा ॥ रूपायॐॐॐक्ष्रौंक्ष्रौंक्ष्रौंरामायेतिकीर्तयेत् ॥
८२ ॥ ॐ क्ष्रौं कृष्णाय ॐ क्ष्रौंचकल्किनेसंवदेत्ततः ॥ जयशब्दद्वयान्तेतु
शालग्रामनिवासिने ॥ ८३ ॥ दिव्यसिंहायेतिचोक्त्वा वदेत्पश्चात्स्वयंभु
वे ॥ पुरुषायनमःॐ क्ष्रौं एकोनशतवर्णकः ॥ ८४ ॥ छन्दोतिजगतीप्रोक्तं
ऋषिरत्रिःप्रकीर्तितः ॥ दशावतारनृहरिर्देवतासर्वकामदः ॥ ८५ ॥ षड्दीर्घ
युक्तबीजेन षडङ्गानिप्रकल्पयेत् ॥ मन्त्रराजवदेतस्य ध्यानपूजादिकंभवेत् ॥
८६ ॥ यजेत्षडङ्गपूजान्तेमत्स्यादीनवतारकान् ॥ अयुतंप्रजपेन्मन्त्रं साध
येद्धविपाततः ॥ ८७ ॥ जुहुयात्तद्दशांशेन तर्पणादिततश्चरेत् ॥ काम्यक
र्माणिसर्वाणि मन्त्रराजवदेवहि ॥ ८८ ॥ अस्यसंसेवनाद्विप्राः ब्रह्मचर्य्यादि
विच्युताः ॥ नृसिंहरूपतांप्राप्य जाताःस्थानेनृसिंहकाः ॥ ८९ ॥ प्रविशन्ति
चतेनेह सम्यक्कुर्वन्तिपूजिताः ॥ अत्रबीजाक्षरत्यागान्नानाबीजादियोज
नाम् ॥ ९० ॥ जायन्तेकोटिशोमन्त्राः क्षुद्रसिद्धिविधायकाः ॥ लोभाधि
क्यात्कलियुगेनगुरुर्नचदेवता ॥ ९१ ॥ एकत्रयस्करंप्रोक्तंनृहरेर्नामगर्ज
नम् ॥ अथातःसम्प्रवक्ष्यामि जायतेनवमेतुयः ॥ ९२ ॥ नरसिंहोवीरनामाशृ
णुतत्साधनंप्रिये ॥ बालेचतरुणेवृद्धेप्रयोगार्थंमनुत्रयम् ॥ ९३ ॥ तारोनमो
भगवतेवीरान्तेनृपदंवदेत् ॥ तद्युक्तंचवदेत्पश्चाद्ङेन्तंसिंहपदंततः ॥ ९४ ॥
पीनोर्ध्वाङ्गायइत्युक्त्वाअग्निनेत्रायसंवदेत् ॥ सर्वभूतविनाशेतिनयेत्युक्त्वादि
धादह ॥ ९५ ॥ रक्षयुग्मंचह्रींयुग्मंरक्षरक्षाग्निगेहिनी ॥ एवंहिप्रथमोमन्त्रोनृ

१ नृसिंहाय ॥

सिंहस्यसमुद्धृतः ॥ ९६ ॥ वेर्णास्त्रयोदशप्रोच्यनीलदीप्तपदंवदेत् ॥ दंष्ट्रा यचाग्निनेत्रायसर्वरक्षोघ्नदेत्ततः ॥ ९७ ॥ घ्नायोक्त्वासर्वभूतेतिवदेद्ङेन्तंविनाशनम् ॥ सर्वघोरविनाशायहनद्वन्द्वंदहद्वयम् ॥ ९८ ॥ पचयुग्मंवधयुग्मंफट् स्वाहान्तोद्वितीयकः ॥ तृतीयमथवक्ष्यामिपूर्वोक्तश्चैत्रयोदश ॥ ९९ ॥ सर्वभूतेतिसम्प्रोच्यङेन्तंचैवविनाशनम् ॥ सर्वघोरेतिपूर्वोक्तंतथासर्वपदंवदेत् ॥ ३०० ॥ रक्षोघ्नायपदंप्रोक्त्वाहनद्वन्द्वंदहद्वयम् ॥ पचद्वयंवधद्वन्द्वंरक्षयुग्मंचमां तथा ॥ १ ॥ हुंफट्स्वाहातृतीयोयंमन्त्रश्चात्रसमुद्धृतः ॥ मन्त्रराजोक्तवच्चैषां पूजाद्यंसम्प्रकीर्त्तितम् ॥ २ ॥ मालामन्त्राइमेख्याताद्भुतसिद्धिविधायकाः ॥ अथातःसम्प्रवक्ष्यामिदशमेजायतेतुयः ॥ ३ ॥ ॐक्ष्रौंमहानृसिंहायनमोन्तोदश वर्णकः ॥ वामदेवोमुनिश्छन्दोविराड्देवोनृसिंहकः ॥ ४ ॥ षड्दीर्घयुक्स्वबीजेनषडङ्गन्यासमाचरेत् ॥ ध्यानपूजापुरश्चर्य्याहोमोलक्ष्मीनृसिंहवत् ॥ ५ ॥ वर्णलक्षंजपेन्मन्त्रंप्रयोगोष्टाक्षरोदितः ॥ अथातःसम्प्रवक्ष्यामिमन्त्रमेकादशस्यतु ॥ ६ ॥ ॐक्ष्रौंनमोभगवतेनरसिंहायमन्त्रकः ॥ त्रयोदशार्णउद्दिष्टोभुक्तिमुक्तिप्रदायकः ॥ ७ ॥ वामदेवोमुनिःप्रोक्तोजगतीछन्दईरितम् ॥ देवतानरसिंहोत्रस्वबीजेनाङ्गकल्पनम् ॥ ८ ॥ ध्यानपूजाप्रयोगादिषडक्षरवदीरितम् ॥ अथातःसम्प्रवक्ष्यामिद्वादशेयोभिजायते ॥ ९ ॥ काश्यांसवसतेनित्यंदुष्टबुद्धिप्रचारकः ॥ तारंसहस्रारज्वालावर्त्तिनेक्ष्रौंहनद्वयम् ॥ १० ॥ हुंफट्स्वाहा चोनविंशवर्णोमन्त्रउदीरितः ॥ मुनिर्जयन्तआख्यातश्छन्दोगायत्रमीरितम् ॥ ११ ॥ सुदर्शननृसिंहोस्यदेवतापरिकीर्त्तितः ॥ चक्रराजायहृत्प्रोक्तंज्वालाचक्रायवैशिरः ॥ १२ ॥ जगच्चक्रायचशिखाकवचंतस्यसम्मतम् ॥ असुरान्तकचक्रायअस्त्रायफडितीरितम् ॥ १३ ॥ सुदर्शनायेतिमनुःपञ्चाङ्गंसमुदीरितम् ॥ चक्राणांतुसभामध्येकालाग्निसदृशप्रभम् ॥ १४ ॥ चतुर्भुजंविवृत्ता

---

१ ॐनमोभगवते वीरनृसिंहाय नीलदीप्तदंष्ट्राय अग्निनेत्राय सर्वरक्षोघ्नाय सर्वभूतविनाशनाय सर्वघोरविनाशाय हनहन दहदह पचपच वधवध फट्स्वाहा २ ॐनमोभगवते वीरनृसिंहाय सर्वभूतविनाशाय सर्वघोरविनाशनाय सर्वरक्षोघ्नाय हनहन दहदह पचपच वधवध रक्षरक्ष मां हुंफट्स्वाहा ३ क्ष्रां, क्ष्रीं, क्ष्रूं, क्ष्रैं, क्ष्रौं, क्ष्रः इन छः अक्षरोंको षडङ्गोंमें न्यासकरे जैसे क्ष्रांहृदयायनमः क्ष्रींशिरसेस्वाहा इत्यादि ॥

स्यंचतुश्चक्रधरंहरिम् ॥ तप्तकाञ्चनसङ्काशंत्रिनेत्रंचाद्यविग्रहम् ॥ १५ ॥ ध्यायेत्समस्तदुःखघ्नंतादृग्लक्ष्म्यासमन्वितम् ॥ पूर्वोक्तेवैष्णवेपीठेपूजयेदुक्तव त्र्मना ॥ १६ ॥ विदिक्ष्वग्रेचपश्चाङ्गंक्रमाद्दिक्षुप्रपूजयेत् ॥ जयांचविजयां पश्चादजितांचापराजिताम् ॥ १७ ॥ विदिक्षुपूजयेत्पश्चान्मुदितांमोदिनीं तथा ॥ सहस्रांसिद्धिसञ्ज्ञांचलोकेशानायुधानिच ॥ १८ ॥ रविलक्षंजपे न्मन्त्रंदशांशैस्तुतिलैःशुभैः ॥ हुनेत्पुष्पैस्ततश्चापिचत्वारिंशसहस्रकम् ॥ १९ ॥ पुनराज्येनजुहुयात्सहस्रेणनमस्क्रिया ॥ तर्पणादिततःकृत्वाप्रयो गानाचरेत्पुनः ॥ २० ॥ ब्राह्मणोजप्तुमीक्षेतकुशानास्तीर्य्यभूतले ॥ त स्मिन्देशेसमाराध्यसुदर्शननृसिंहकम् ॥ २१ ॥ मन्त्रंसहस्रावृत्त्यातुहुनेद्दे वस्यसन्निधौ ॥ सहस्रंमूलमन्त्रेणह्यपामार्गसमिद्वरैः ॥ २२ ॥ तद्भस्म तिलकंकृत्वानिर्गच्छेच्छत्रुसन्निधौ ॥ दासवत्कुरुतेशत्रून्सर्वान्नास्त्यत्रसं शयः ॥ २३ ॥ अथशत्रुमनुंस्मृत्यतर्पणंवापिकारयेत् ॥ अयुतंजयमाप्नो तिनात्रकार्याविचारणा ॥ २४ ॥ अथौदुम्बरपीठेचदेवदेवंनिवेशयेत् ॥ तस्याग्रेवर्त्तुलेकुण्डेहोतव्याज्यादिभिःशमीम् ॥ २५ ॥ अयुतंयोघृताक्तांतुम ध्वक्तांवाजितेन्द्रियः ॥ जयमाप्नोतिसंग्रामेनित्यम्परशुरामवत् ॥ २६ ॥ मन्त्रे णानेनसञ्जप्तंतारहेमादिकञ्चयत् ॥ तेनांगुलीयकंकृत्वाजपहोमादिसाधितम् ॥ २७ ॥ धारयेद्दक्षिणेहस्तेमृत्युरोगाञ्जयेदरीन् ॥ राज्ञःसकाशात्पूजांचलभेतधा रयेत्सदा ॥ २८ ॥ जलंत्रिसप्तजप्तन्तुसर्वोदरगदान्तकृत् ॥ पुनर्नवाशिफानि ष्कत्रयंलवणसंयुतम् ॥ २९ ॥ स्पृष्ट्वाजप्तन्तच्चहरेद्गुल्ममूलादिमासतः ॥ मा समेकंप्रतिदिनंदूर्वाहोमसहस्रकम् ॥ कृत्वासम्पूजयेद्देवंराजयक्ष्माप्रणश्यति ॥ ३० ॥ तैलैर्वामधुनावापितादृग्घोमःप्रमेहहृत् ॥ नेत्ररोगःसहस्रेणपञ्चहोमेनन श्यति ॥ ३१ ॥ त्रिसप्तजप्ततोयेनक्षालनंनेत्ररोगहृत् ॥ दशधाजप्ततोयेनकर केनैवसेचयेत् ॥ ३२ ॥ तावत्सम्मन्त्रितेनापिनवनीतेनलेपनात् ॥ सप्ताहम ध्यात्सद्योहिनाशयेत्तुविसर्पकान् ॥ ३३ ॥ अपामार्गेणजुहुयान्नित्यमष्टोत्त रशतम् ॥ यस्तुतावन्नमस्कारान्कुर्य्यान्न्यासमतन्द्रितः ॥ ३४ ॥ अपस्मारादि कान्सर्वान्ग्रहानन्यान्विनाशयेत् ॥ शुद्धाद्भिःपूरितेकुम्भेचन्द्रमण्डलमध्यग

म् ॥ ३५ ॥ सुदर्शननृसिंहन्तुसुधाविग्रहधारिणम् ॥ यथावच्चिन्तयेत्तत्रपूज
येदुपचारकैः ॥ ३६ ॥ जप्त्वाशतंसहस्रञ्चदष्टंतेनैवसिञ्चयेत् ॥ तथास्पृशेद्वामह
स्तंह्यङ्कस्पर्शाद्विपंहरेत् ॥ ३७ ॥ अथातःसम्प्रवक्ष्यामिभुक्तिमुक्तिप्रदायकम् ॥
जातंत्रयोदशेदेवंनृसिंहंक्ष्रौंतुसम्पुटम् ॥ ३८ ॥ माययाभोगदातास्यात्प्रणवे
नचमोक्षदः ॥ अस्यपूजाप्रयोगाद्यमेकाक्षरसमंभवेत् ॥ ३९ ॥ अथातःसम्प्र
वक्ष्यामिजातमन्वन्तरेविभुम् ॥ अभयाक्षोनृसिंहोयंसमस्तभयनाशनः ॥ ४० ॥
तारोनमोभगवतेनरसिंहायहृद्भवेत् ॥ तेजस्तेजसइत्युक्त्वाआविराविर्भवेतिच ॥
४१ ॥ वज्रनखवज्रदंष्ट्रकर्माशयान्द्विरन्धय ॥ तमोद्विर्ग्रसवह्निस्त्रीवदेदभयमा
त्मनि ॥ ४२ ॥ भूयिष्ठाॐक्ष्रौमितिचद्विषष्ट्यर्णोमनुर्मतः ॥ मुनिःशुकोतिजग
तीछन्दःप्राग्वद्दिवाखिलम् ॥ ४३ ॥ चतुर्दशनृसिंहानांसाधनंवेदबोधितम् ॥
तदत्रकथितंदेविभुक्तिमुक्तिप्रदायकम् ॥ ४४ ॥ अथातःसम्प्रवक्ष्यामिवामनस्य
शुभान्मनून् ॥ मन्वन्तरन्तुप्रत्येकंसुरेशादपहृत्यवै ॥ ४५ ॥ पुनर्ददातिहरयेत्रै
लोक्यंसबलिर्नृपः ॥ एकमन्वन्तरेशाक्रःस्वयमेवाभवद्बलिः ॥ ४६ ॥ एवंपञ्चाम
नाःकल्पेतेषांमन्त्रान्वदाम्यहम् ॥ ॐ नमोविष्णवेब्रूयात्सुरान्तेपतयेमहा ॥
बलायवह्निगृहिणीधृतिवर्णोमनुर्मतः ॥ मुनिरिन्द्रर्विराट्छन्दोदेवताचैववाम
नः ॥ ४७ ॥ एकद्वित्र्याशुगशरनेत्राणैरङ्गकल्पनम् ॥ भ्रूमध्यकण्ठहृदयना
भ्यंघ्र्याधारकेषुच ॥ ४८ ॥ न्यसेन्मनोःषट्पदानिपदन्यासोयमीरितः ॥ मू
र्द्धिनेत्रद्वयेकर्णद्वयेनसिमुखेतथा ॥ ४९ ॥ कण्ठेहृदितथाबाह्वोर्नाभौपृष्ठेचगुह्य
के ॥ जान्वोश्चपादयोरग्निकाष्ठाङ्गन्यासईरितः ॥ ५० ॥ मूर्द्धिभालेदृशोःश्रो
त्रेनस्यास्येतालुकण्ठयोः ॥ बाहुहृज्जठरेनाभौगुह्योर्वोर्जानुजङ्घयोः ॥ ५१ ॥
पादेपृष्ठेन्यसेद्वर्णान्वर्णन्यासोयमीरितः ॥ ज्वलन्मयूखकनकच्छत्राधःपुण्डरी
कगम् ॥ ५२ ॥ पूर्णचन्द्रनिभंध्यायेच्छ्रीभूम्याश्लिष्टपार्श्वकम् ॥ द्वीष्वंगु
ल्योच्छ्रायमामयूखस्फटिकप्रभः ॥ ५३ ॥ दध्यन्नंवामहस्तेनस्वर्णस्यचषके
दधत् ॥ पीयूषपूर्णंस्वर्णस्यकलशंदक्षिणेदधत् ॥ ५४ ॥ वैष्णवेपूजयेत्पीठे

१ ॐ नमो विष्णवेसुरपतये महाबलाय स्वाहा २ ॐ भ्रूमध्ये, नमः कण्ठे, विष्णवे हृदये, सुरपतये नाभौ, महाबलाय पादयोः, स्वाहा आधारके ॥

तत्रसूर्य्याग्निमण्डले ॥ सोमस्यमण्डलंपृष्ठंयोगपीठस्वरूपकम् ॥ ५५ ॥ विष्णवेसहसोमायत्रैलोक्याप्यायनायच ॥ मन्त्रोह्योङ्कारहृत्पूर्वःस्वाहान्तोनववर्णकः ॥ ५६ ॥ अनेनयोगपीठस्यपूजनंसमुदीरितम् ॥ ततःषड्दलमध्येतु पूजयेद्वामनंविभुम् ॥ ५७ ॥ षड्दलेषुषडङ्गानिबाह्येषोडशपत्रके ॥ पूषासुमनसाप्रीतिःपुष्टिस्तुष्टिस्तथैवच ॥ ५८ ॥ ऋद्धिर्धृतिश्चसौम्याचमरीचिर्मुण्डमालिनी ॥ शशिनीसुभगाचैवलक्ष्मीरिच्छातथैवच ॥ ५९ ॥ सम्पूर्णमनुकाचैवममृताषोडशीमता ॥ ततश्चाष्टदलेपूजेत्पूजाद्यैर्वासुदेवकम् ॥ ६० ॥ तदर्धेवातदर्धेवाजपेन्मन्त्रमनन्यधीः ॥ दशांशंपायसंहुत्वातर्पणादिसमाचरेत् ॥ ६१ ॥ स्वेगृहेमण्डलंकृत्वातन्मध्येवामनंयजेत् ॥ दध्योदनंनिशापक्कंनैवेद्यं स्याद्विभूतिकृत् ॥ ६२ ॥ अन्नकामोहुनेन्नित्यमष्टाविंशतिसंख्यया ॥ सितान्नंघृतसम्मिश्रंप्राप्नुयादन्नमक्षयम् ॥ ६३ ॥ अपूपंषड्रसोपेतंहुनेदष्टसहस्रकम् ॥ अलक्ष्मीर्नाशमायातिमहतींश्रियमाप्नुयात् ॥ ६४ ॥ अयुतंमन्त्रविद्धुत्वाद्ध्यन्नंशर्करान्वितम् ॥ अन्नपर्वतमाप्नोतियत्रयत्रसगच्छति ॥ ६५ ॥ हुनेद्बिल्वसमीपस्थःपद्माक्षैरयुतंनरः ॥ वसुधारांमहालक्ष्मीवर्षाद्वर्षतितत्रच ॥ ६६ ॥ विद्यार्थीप्रजपेल्लक्षंध्यायन्देवंजनार्दनम् ॥ जुहुयात्पायसंमन्त्रीसाक्षाद्वागीश्वरोभवेत् ॥ ६७ ॥ पुत्रकामेजपेल्लक्षंपुत्रजीवदलैर्हुनेत् ॥ तत्काष्ठदीपितेवह्नौसस्तपुत्रमवाप्नुयात् ॥ ६८ ॥ ध्यात्वात्रिविक्रमंदेवंरक्ताभंकरवीरकैः ॥ हुनेदयुतसंख्यैश्चसर्वत्रविजयीभवेत् ॥ ६९ ॥ रत्नाकामोपिपद्मानामयुतंजुहुयात्ततः ॥ ध्यात्वाचेन्द्रपदंराज्यंलभेत्ताशुह्यकण्टकम् ॥ ७० ॥ अपामार्गदलैर्हुत्वालवङ्गैर्वामधुप्लुतैः ॥ अयुतंसाध्यनामाद्यंसवश्योभवतिध्रुवम् ॥ ७१ ॥ आरोग्यकामोजुहुयादपामार्गशतंशतम् ॥ सप्ताहान्मुच्यतेरोगैस्तावदेवंजपेत्सुधीः ॥ ७२ ॥ आयुःकामस्त्रिमध्वक्तैस्तिलदूर्वांकुशोक्षितैः ॥ अयुतंजुहुयात्तावज्जपेदायुर्लभेद्ध्रुवम् ॥ ७३ ॥ स्मृत्वात्रिविक्रमंरूपंचाष्टोत्तरसहस्रकम् ॥ जपान्निर्मुक्तबन्धःस्याद्वामनस्यप्रसादतः ॥ ७४ ॥ दधिवामनसेवातोनासाध्यंभुवनत्रये ॥ अथातःसम्प्रवक्ष्यामिसर्वज्ञेश्वरवामनम् ॥ ७५ ॥ ॐक्लींश्रीं

---

१ पूर्वोक्त अठारह अक्षरवाले मन्त्र के आदिमें दोचार बीज जोड़नेसे बाईस अक्षरकामन्त्र होता है॥

वंसमायोज्यपूर्वमन्त्रोमनुर्मतः ॥ च्यवनोमुनिराख्यातोगायत्रंछन्दईरितम् ॥ ७६ ॥ देवताचास्यसम्प्रोक्तासर्वज्ञेश्वरवामनः ॥ द्वाविंशत्यर्णकोङ्गानिषड्दीर्घान्वितकोमतः ॥ ७७ ॥ कर्पूरधवलंदेवंनिविष्टंसरसीरुहे ॥ प्रसन्नञ्चसुनेत्रञ्च चारुस्मितमनोहरम् ॥ ७८ ॥ दण्डंचामृतकुम्भञ्चशरच्चन्द्रसमप्रभम् ॥ दधिभक्तंसोपदंशंवसुपात्रंपवित्रकम् ॥ ७९ ॥ चिन्तयेज्जगतांनाथंसर्वस्यार्तिहरंहरिम् ॥ अस्यपूजादिकंसर्वंपूर्वोक्तेनैववर्त्मना ॥ ८० ॥ कुर्यात्ततोमन्त्रसिद्धः काम्यान्स्वाभीष्टदायकान् ॥ सहस्रंहविषाहोमोलक्ष्मीदोधान्यमाप्नुयात् ॥ ८१ ॥ धान्यहोमोनवीजैश्चशतपत्रसमुद्भवैः ॥ सहस्रहोमाद्धीतीनांनाशोभवतिनिश्चितम् ॥ ८२ ॥ दध्यक्ताज्येनजुहुयाद्दुर्गत्यामुच्यतेनरः ॥ त्रैविक्रमंवामनस्यरूपंध्यायेन्मनुंस्मरेत् ॥ ८३ ॥ घोरोत्पातैर्मुच्यतेसौदेवेशञ्चपटेलिखेत् ॥ भित्तौवालिख्यगन्धाढ्यैःपूजयेद्यञ्चवामनम् ॥ ८४ ॥ महताञ्जयमाप्नोति यद्यदन्यदभीप्सितम् ॥ अथातःसम्प्रवक्ष्यामितृतीयंभोगवामनम् ॥ ८५ ॥ तारोनमोभगवतेविष्णवेचदशाक्षरः ॥ संयुक्तःपूर्वमन्त्रश्चेद्भवेद्द्वाविंशदर्णकः ॥ ८६ ॥ ऋषिःकपिलआख्यातोगायत्रंछन्दईरितम् ॥ उदीरितःसर्ववन्द्योदेवताभोगवामनः ॥ ८७ ॥ त्रिवेदत्रीपुराणद्विमन्त्रार्णैरङ्गकल्पनम् ॥ नीलवर्णश्चतुर्बाहुःशङ्खचक्रगदाब्जभृत् ॥ ८८ ॥ सर्वान्भोगान्ददात्येषभक्तानांभोगवामनः ॥ अस्यपूजादिकंसर्वंमन्त्रीपूर्ववदाचरेत् ॥ ८९ ॥ एतादृशस्तुनास्त्यन्योजन्मन्यस्मिन्फलप्रदः ॥ अथातःसम्प्रवक्ष्यामितुर्य्यंबालकवामनम् ॥ ९० ॥ तारोहृदयमायाचबालकान्तेविधेपदम् ॥ पूर्वमन्त्राग्रिमावर्णाद्वाविंशत्यक्षरोमनुः ॥ ९१ ॥ त्र्यङ्कपट्पञ्चपञ्चद्विमन्त्रार्णैरङ्गकल्पनम् ॥ पीताम्बरोत्तरीयोसौमञ्जीकौपीनधृग्घरिः ॥ ९२ ॥ कमण्डलुंचदध्यन्नंदण्डं छत्रंकरैर्दधत् ॥ यज्ञोपवीतीनीलाभोध्यातव्यश्चञ्चवामनः ॥ ९३ ॥ पूजादिकंपूर्ववच्चकुर्य्यान्मन्त्रीयथाविधि ॥ अन्नविद्याभूमिदोयंभक्तानामभयप्रदः ॥ ९४ ॥ नाश्नीयात्तण्डुलीशाकंतथाचौदुम्बरंफलम् ॥ श्रद्धान्नंकर्कटींचैवभक्षयेन्नकदाचन ॥ ९५ ॥ पद्मपत्रेनभुञ्जीततथाचार्कदलेष्वपि ॥ तुपकार्पाशवी

---

१ क्रां, क्रीं क्लूं, क्रैं, क्रौं, क्रः, इनसे षडङ्गन्यास करे जैसे क्रां हृदयाय नमः ॥

जानिनस्पृशेच्चकदाचन ॥६६॥ वल्मीकंगोमयंविप्रच्छायामपिनलङ्घयेत् ॥ देवाग्निगुरुपूजांचकुर्य्याद्भक्तिसमन्वितः ॥ ६७ ॥ एवंयोनियमैर्युक्तस्तस्य मन्त्रःप्रसिध्यति ॥ अथातःसम्प्रवक्ष्यामिविश्वरूपंतुवामनम् ॥ ६८ ॥ तारोनमोभगवतेमायाबालेतिविष्णवे ॥ तदग्निप्रःपूर्वमन्त्रषड्विंशत्यक्षरोमनुः ॥ ६६ ॥ ब्रह्मामुनिश्चगायत्रीछन्दोबीजंध्रुवःस्मृतः ॥ स्वाहाशक्तिर्देवताश्री मायाबालकवामनः ॥ ४०० ॥ त्रिवेदनागपञ्चेषुद्धिवर्णैरङ्गकल्पनम् ॥ ध्यानपूजाप्रयोगादिसर्वंपूर्ववदाचरेत् ॥ १ ॥ अन्नविद्याभूमिदोयंभक्तानाम भयङ्करः ॥ अथातःसम्प्रवक्ष्यामिषष्ठन्तुबलिवामनम् ॥ २ ॥ तारोनमोभगवते वदेच्चबलिवामनम् ॥ सर्वापत्तिपदंप्रोक्त्वाङेन्तंविनाशनंवदेत् ॥ ३ ॥ ततः श्रीबीजमाभाष्यत्रयोविंशतिवर्णकः ॥ वाङ्मुनिर्जगतीछन्दोदेवताबलि वामनः ॥ ४ ॥ पदैःषड्भिःषडङ्गानिशेषंपूर्ववदीरितम् ॥ अथातःसम्प्रवक्ष्या मिराममन्त्रंसमाहृतम् ॥ ५ ॥ आकल्पमेकएवायंजामदग्न्योमहाबलः ॥ दुष्ट क्षत्रतमोध्वंसीरेणुकोद्भूतभास्करः ॥ ६ ॥ ब्रह्मक्षेत्रायविद्महेक्षत्रियान्तायधीम हि ॥ तन्नोरामःप्रचोदयात् ॥ ७ ॥ भरद्वाजोमुनिःप्रोक्तोगायत्रंछन्दईरितम् ॥ श्रीमान्परशुरामोस्यदेवताभक्तवत्सलः ॥ ८ ॥ अष्टेपुत्र्यक्षिवेदार्णैर्मनोःप्रोक्तंष डङ्गकम् ॥ नेत्रयोःकर्णयोर्नासाद्वयेचाधरयुग्मके ॥६॥ स्तनयोर्भुजयोःपार्श्व द्वयेऽङ्घ्रयोर्विन्यसेत्पदम् ॥ आधारेहृदयेमूर्द्ध्निक्रमात्पादान्प्रविन्यसेत् ॥१०॥ केद्दशिश्रोत्रनासायांकपोलेहनुवक्त्रयोः ॥ कराठांसबाहुहस्तेषुपार्श्वेहृत्पृष्ठकोद रे ॥११॥ नाभिकट्योर्गुदेलिङ्गेऊर्व्वोर्जानुजङ्घयोः ॥ पादेचविन्यसेद्वर्णांस्त तोध्यायेत्रिधातनुम् ॥ १२ ॥ सात्त्विकेश्वेतवर्णंचभस्मोद्धूलितविग्रहम् ॥ किरीटिनंकुण्डलिनंवरंस्वक्षवराभयान् ॥ १३ ॥ करैर्दधानंतरलंविप्रक्षेत्रोद्यतं वृतम् ॥ पीताम्बरधरंकामरूपंबालानिरीक्षितम् ॥ १४ ॥ ध्यायेच्चतामसंक्षत्र रुधिराक्तपरश्वधम् ॥ आरक्तनेत्रकर्णस्थब्रह्मसूत्रंयमप्रभम् ॥ १५ ॥ धनुष्टङ्का रनिर्घोषसन्त्रस्तभुवनत्रयम् ॥ चतुर्बाहुंतुमलिनंराजसंक्रुद्धमेवच ॥ १६ ॥ वैष्णवेतुयजेत्पीठेदेवाग्रेचचतुर्दले ॥ जमदग्निंचकालंचरेणुकांकाममर्चये त् ॥ १७ ॥ तद्दलेषुषडङ्गानितद्बाह्येष्टदलेयजेत् ॥ दिक्षुवेदान्विदिक्ष

त्रेपूपवेदांस्ततोयजेत् ॥ १८ ॥ ततश्चाष्टदलेपूज्याविद्वोद्धाश्चावतारकाः ॥ ब्रह्मास्त्रंवैष्णवास्त्रंचरौद्रंवायव्यमेवच ॥ १६ ॥ आग्नेयंचैवनागास्त्रंमोहनंस्त म्भनंतथा ॥ ऐन्द्रपालिकमस्त्रंचमहापाशुपतंतथा ॥ २० ॥ पूजयेद्दशपत्रेषुद्वा दशारेततोर्चयेत् ॥ कश्यपंचभरद्वाजंविश्वामित्रंचगौतमम् ॥ २१ ॥ वशिष्ठं नारदंचात्रिंपुलस्त्यंपुलहंक्रतुम् ॥ याज्ञवल्क्यंभार्गवंचषोडशारेततोयजेत् ॥ २२ ॥ संहिताश्चपुराणानिमीमांसांन्यायमेवच ॥ साङ्ख्यंपातञ्जलंशिल्पं वेदाङ्गानिचषट्क्रमात् ॥२३॥ सर्वाण्युपपुराणानिचेतिहासपुराणकम् ॥ स्मृ तयोऽष्टपुरश्चेचदिगीशानायुधानिच ॥ २४ ॥ वर्णलक्षंजपेन्मन्त्रंसिताढ्यघृत पायसैः ॥ हुनेद्वाह्मणभोज्यान्तंकृत्वासिद्धोभवेन्मनुः ॥ २५ ॥ ब्रह्मकर्मत तोनित्यंगायत्रीजपतत्परः ॥ सएवजायतेसिद्धोनान्यविप्रःकदाचन ॥२६॥ गायत्रीप्रथमंपादंपूर्वंकृत्वाजपेन्मनुम् ॥ लक्षंश्रग्वद्धुनेद्रामंसात्विकंतत्रचिन्त येत् ॥ २७ ॥ सन्तानार्थंविवाहार्थंकृष्यर्थंवर्षणायच ॥ विषयार्थंधनार्थंचवाक् सिद्ध्यर्थमुदाहृतम् ॥ २८ ॥ सहस्रमयुतंलक्षंप्रयुतंकोटिमेवच ॥ साध्यकृच्छ्रे तिकृच्छ्रेचदैवसाध्येत्वसाध्यके ॥ २६ ॥ कार्याजपस्यसङ्ख्येयंक्रमाज्ज्ञेयाद शांशतः ॥ होमःसर्वत्रविज्ञेयःप्रत्यवायनिराकृते ॥ ३० ॥ तावदेवजपेद्विद्वा न्गायत्रीजपतत्परः ॥ मनागपिनकर्त्तव्योब्रह्मद्वेषःकदाचन ॥ ३१ ॥ गाय त्रीमध्यचरणयुक्तंमन्त्रंजपेद्धुनेत् ॥ तिलौदनाज्यंगमंतुराजसंतत्रभावयेत् ॥ ३२ ॥ देशग्रामपुरादीनांबालानांचगवामपि ॥ लक्षणंस्यान्महामारीशीत लाशान्तयेतथा ॥ ३३ ॥ गायत्र्यन्तिमपादेनयुक्तंमन्त्रंजपेद्धुतम् ॥ होमःसर्प पतैलाक्तैस्तामसंचिन्तयेद्विभुम् ॥ ३४ ॥ सर्वशत्रुविनाशःस्याद्रोगादीनांतथा क्षयः ॥ एवंकुर्याद्यमुद्दिश्यतस्यनाशोभवेद्ध्रुवम् ॥ ३५ ॥ वैशाखशुक्लपक्षे चतृतीयायातुवार्षिकी ॥ भवेदस्यमहापूजातांभक्तःप्रयतश्चरेत् ॥ ३६ ॥ रामभक्तंद्विजंनत्वासंग्रामेयातिचेन्नृपः ॥ अवश्यंसरिपूञ्जित्वाकुशलीस्वगृहं

---

१ आयुर्वेद, धनुर्वेद, गांधर्व, स्थापत्य, २ व्याकरण, ज्योतिष्, निरुक्त, कल्प, शिक्षा, छन्दः, तदुक्तम्—शब्दशास्त्रंमुखंज्योतिषंचक्षुषीश्रोत्रमुक्तंनिरुक्तंचकल्पःकरौ ॥ नासिकाजातु शिक्षेदचोक्तापदृतेःपादपद्मद्वयंछन्दआद्यंबुधैः ॥

व्रजेत् ॥ ३७ ॥ रामभक्तेनयोदत्तःपुस्तकेलिखितोमनुः ॥ सतुसिद्धिप्रदो ज्ञेयो नास्तितस्यपुरस्क्रिया ॥ ३८ ॥ यःकश्चित्पुस्तकारूढोरामभक्तमुखो द्गतः ॥ यन्त्रमन्त्रोथवाविद्यासत्सिद्धोनास्तिसंशयः ॥ ३९ ॥ ज्ञात्वाषोडश संस्कारैःसंस्कृतंचार्यवंशजम् ॥ कुलद्वयविशुद्धंतुराममन्त्राधिकारिणम् ॥ ४० ॥ फिरङ्गायवनाश्चीनाः खुरासानाश्चम्लेच्छजाः ॥ रामभक्तंप्रदृष्ट्वै वत्रस्यन्तिप्रणमन्तिच ॥ ४१ ॥ कृत्वातुवालुकामूर्तिंश्रीरामस्यार्चयेद्वने ॥ शान्तंशत्रुमर्दकुर्य्यात्कुसुमानिचवैहुनेत् ॥ ४२ ॥ राज्ञोमुकस्यकटकंजुहो मीतितथावदेत् ॥ सप्ताहार्वाक्तस्यसैन्यंनष्टंतावन्निमितंभवेत् ॥ ४३ ॥ महे न्द्राग्रेचकाश्यांच योजपेन्निर्जनेवने ॥ वर्षादर्वाक्तस्यरामः प्रत्यक्षोजायते ध्रुवम् ॥ ४४ ॥ सोमवारेकाशिकायां गयायांपितृपक्षके ॥ सूकरकेपौर्णमा स्यां प्रयागेतुमृगेरवौ ॥ ४५ ॥ गोदावर्य्यांसिंहगेर्के गङ्गाद्वारेघटस्थिते ॥ सूर्यग्रहेकुरुक्षेत्रे रामोगच्छतिसर्वदा ॥ ४६ ॥ आद्योरामोजामदग्न्यः क्षत्रि याणांकुलान्तकः ॥ परश्वधधरोदाता मातृहामातृजीवकः ॥ ४७ ॥ समुद्र तीरनिलयेमहेशपठिताखिलः ॥ गोत्राणकृद्धोप्रदाता विप्रक्षत्रियकर्मकृत् ॥ ४८ ॥ द्वादशैतानिनामानि त्रिसन्ध्यंयःपठेन्नरः ॥ नापमृत्युर्नदारिद्र्यं नच वंशक्षयोभवेत् ॥ ४९ ॥ श्रीमत्परशुरामस्य गायत्र्येषामहाद्भुता ॥ राज्यकृ त्कलिभूपानां सर्वतन्त्रेषुगोपिता ॥ ५० ॥ अथातःसम्प्रवक्ष्यामि भुक्तिमुक्ति प्रदायकान् ॥ राममन्त्रान्सभगवान्प्रतिमन्वन्तरेह्यभूत् ॥ ५१ ॥ युगानांप रिवर्तेन कल्पेरामावतारकः ॥ ततोह्यस्यप्रवक्ष्यामि मन्त्रराजंषडक्षरम् ॥५२॥ रामायनमइत्येषरां क्लींह्रींऐंप्रपूर्वकः ॥ श्रींताराद्यश्चषड्वर्णो मन्त्रोयंषड्विधो मतः ॥ ५३ ॥ ब्रह्मासम्मोहनःशक्तिर्दक्षिणामूर्त्तिरेवच ॥ अगस्त्यःश्रीशिवः प्रोक्तामुनयोनुक्रमादिमे ॥ ५४ ॥ छन्दोगायत्रसञ्ज्ञंच श्रीरामोदेवतामतः ॥ पञ्चाशन्मातृकामन्त्रवर्णप्रत्येकपूर्वकः ॥ ५५ ॥ लक्ष्म्यादिर्वाग्भवादिश्च मन्मथादिर्ध्रुवादिकः ॥ रामचन्द्रमनोर्भेदाः शतद्वयमिताअमी ॥ ५६ ॥ राम भद्रेतिशब्देन चैवंभेदाःशतद्वयम् ॥ रमाबीजादिकानांतु विश्वामित्रोमुनि र्मतः ॥ ५७ ॥ वाग्बीजपूर्वकानांतु दक्षिणामूर्त्तिरुच्यते ॥ कामबीजादिपूर्वे

षां मुनिःसम्मोहनोमतः ॥ ५८ ॥ तारादिपूर्वकानांतु श्रीशिवःप्रोच्यतेमुनिः॥ श्रीमायामन्मथैकैकबीजाद्यन्तगतोयदा ॥ ५६ ॥ रामभद्रोरामचन्द्रः षोढाष ड्वर्णउच्यते ॥ षोढानमोन्तःप्राक्प्रोक्तः फट्कारान्तःसएवहि ॥ ६० ॥ षोढा स्याद्वह्निजायान्तः सएवंषड्विधोमतः ॥ चतुर्विंशतिसङ्ख्याकाभेदास्तेननिरू पिताः ॥ ६१ ॥ ब्रह्मरन्ध्रेभ्रुवोर्मध्ये हृन्नाभ्यांगुह्यपादयोः ॥ [१]बीजैःषड्दीर्घ संयुक्तैः षडङ्गविधिरीरितः ॥ ६२ ॥ वीरासनसमारूढं व्याख्यामुद्रोपशो भितम् ॥ वामोरुन्यस्ततद्धस्तं सीतालक्ष्मणसंयुतम् ॥ ६३ ॥ वर्णलक्षंजपे न्मन्त्रं दशांशंमधुरप्लुतैः ॥ बिल्वपत्रैःफलैःपुष्पैस्तिलैर्वापङ्कजैर्हुनेत् ॥६४॥ पूजयेद्वैष्णवेपीठे मूर्तिमूलेनकल्पयेत् ॥ श्रींसीतायैद्विठान्तेन वामपर्श्वग तांयजेत् ॥ ६५ ॥ ततस्त्रिकोणकोणाग्रे पृष्ठतोलक्ष्मणंयजेत् ॥ वामपार्श्वे त्रिकोणस्थंशार्ङ्गंदक्षिणतःशरान् ॥ ६६ ॥ ततःषड्दलमध्येतु षडङ्गानिप्रपूज येत् ॥ तद्बाह्येष्टदलंप्रोक्तं पूजयेदिष्टदिक्षुच ॥ ६७ ॥ आत्मानंचनिवृत्तिंच ह्यन्तरात्मानमेवच ॥ प्रतिष्ठांपरमात्मानं ततोविद्यांप्रपूजयेत् ॥ ६८ ॥ नाना त्मानंतथाशान्तिकेशरेषुप्रपूजयेत् ॥ दलमध्येवासुदेवं श्रियंसङ्कर्षणंतथा ॥ ६६ ॥ शान्तिप्रद्युम्नमग्रेनिरुद्धंचरतिमर्चयेत् ॥ हनूमन्तंचसुग्रीवंभरतंचवि भीषणम् ॥ ७० ॥ निषधाङ्गदशत्रुघ्नाञ्जाम्बवन्तंदलाग्रतः ॥ आञ्जनेयंतद ग्रेच वाचयन्तंकृताञ्जलीम् ॥ ७१ ॥ धृतिंजयन्तंविजयं सुराष्ट्रंराष्ट्रवर्द्धन म् ॥ अकोपंधर्मपालाख्यं मन्त्रिणश्चक्रमाद्यजेत् ॥ ७२ ॥ वशिष्ठंवामदेवं च जाबालिंगौतमंतथा ॥ भरद्वाजंकाश्यपंच कौशिकंवाल्मिकिंतथा ॥७३॥ नारदंसनकंचैव सनातनमतःपरम् ॥ सनत्कुमारंचयजेत्तद्बाह्येद्वादशारके ॥ ७४ ॥ नीलंनलंसुषेणंच मैन्दंचशरभंततः ॥ द्विविदंचगवाक्षंच सकिरीटंच चखुलम् ॥ ७५ ॥ श्रीवत्संकौस्तुभंशङ्खं गदाचक्रेचपद्मकम् ॥ अर्चयेत्षोड शदलेपूर्वतस्तुकृताञ्जलीन् ॥ ७६ ॥ ध्रुवोधरश्चसोमश्च आपश्चैवानि

---

१ मन्त्र के छह अक्षरों को न्यास करना क्रमसे, रांनमोब्रह्मरन्ध्रे इत्यादि २ षड्दीर्घ युक्तबीजों से जैसे रां, रीं, रूं रैं, रौं, रः तथा श्रां, श्रीं, श्रूं, श्रैं, श्रौं, श्रः और क्लां,क्लीं, क्लूं क्लैं, क्लौं, क्लः इत्यादि बीजों से अङ्गन्यास होता है ॥

लोनलः ॥ प्रत्यूषश्चप्रभासश्च वसवोऽष्टौप्रकीर्तिताः॥७७॥ वीरभद्रश्चशण्ड
श्च गिरीशश्चमहायशाः ॥ अजैकपादहिर्बुध्न्यः पिनाकीचापराजितः ॥
७८ ॥ भुवनाधीश्वरश्चैव कपालीचदिशाम्पतिः ॥ स्थाणुर्भगश्चभगवान्
रुद्राएकादशस्मृताः ॥ ७९ ॥ विवस्वान्सूर्यवेदाङ्गो भानुरिन्द्रोरविस्तथा ॥
गभस्तिस्तुयमःसर्वसाक्षीचापिदिवाकरः॥८०॥ चित्रोविष्णुरितिप्रोक्ता आदि
त्याद्वादशक्रमात्॥धातारमन्तेप्रयजेद्द्वात्रिंशत्पत्रकेष्विमान् ॥८१॥ इन्द्राद्यै
र्भूगृहेबाह्ये तदस्त्राणिचसंयजेत् ॥ एवंसिद्धमनुर्मन्त्रीप्रयोगान्कर्त्तुमर्हति ॥
८२ ॥ धनायकमलैर्जातीपुष्पैश्चन्दनलोलितैः ॥ भवेद्धनाधिपतिवर्न्नीलो
त्पलहुतेनच ॥ ८३ ॥ वशयेद्विश्वमखिलंबिल्वपुष्पैर्घनात्यये ॥ हुतादीर्घा
युषेदूर्वारक्ताब्जैर्धनवृद्धये ॥ ८४ ॥आधायकुण्डेविधिवदग्निंपूर्वोक्तवर्त्मना ॥
ततोदेवंसमावाह्यपूजयेदुपचारकैः ॥ ८५ ॥ पञ्चभिर्वाषोडशाभिःपूजोपकरणैः
पृथक् ॥ पलाशाश्वत्थखदिरोदुम्बराम्रवटेन्धनैः ॥ ८६ ॥ अग्निंहुत्वालयेस
म्यग्याज्ञियैरथवेन्धनैः ॥ तत्रसम्पूजयेत्सम्यग्राघवंप्रोक्तवर्त्मना ॥ ८७ ॥ ल
क्षन्तदर्धमथवाजपयित्वादशांशतः ॥ तिलैर्हुत्वायद्यदिष्टंतत्तदेवाप्नुयान्नरः ॥
८८ ॥ बिल्वप्रसूनैरैश्वर्य्यमर्चितेग्नौहुतेभवेत् ॥ पलाशकुसुमैर्हुत्वामन्त्री
वैवेदविद्भवेत् ॥ ८९ ॥दूर्वाभिश्चगुडूचीभिःप्रत्येकमपिवाहुतैः ॥ निरामयश्च
दीर्घायुर्भवत्येवनसंशयः ॥ ९० ॥ ध्यात्वाथमन्मथंरामंसीतामपिरतिंस्मरेत् ॥
कवचस्यप्रयोगेयोजपहोमादिकर्मसु ॥ ९१ ॥ रामंचबोधदातारंस्मरन्नाराध्य
भक्तितः ॥ उपैतिसद्दर्शांकन्यांलाजाहोमेनसाधकः ॥ ९२ ॥ रामंविधिवदा
राध्यज्वलितेग्नौप्रयोगवित् ॥ मधुरत्रययुक्तेनपायसेनहुनेत्सुधीः ॥ ९३ ॥
सर्वाधिपत्यंवैद्रव्यंभवेदेवनसंशयः ॥ तिलैश्चतण्डुलैराज्यैर्हुत्वालोकस्यपूजि
तम् ॥ ९४ ॥ आरात्संवत्सरंयावत्षट्सहस्रंदिनेदिने ॥ जपेच्चजुहुयादग्नौ
तद्दशांशंघृतान्धसा ॥ ९५ ॥ अयमेवान्नदोलोकेसर्वेषामपिजायते ॥ बिल्व
प्रसूनैःकुमुदैस्तथाबिल्वदलैरपि ॥ ९६ ॥ हुत्वातुलभतेलक्ष्मीमचिराद्त्रसाध
कः ॥ आराध्यरामंसाङ्गंचविधिवद्वत्सरात्सुधीः ॥ ९७ ॥ उदयाद्यावदस्तंस्या
ज्जपेन्मन्त्रमनन्यधीः ॥ फलम्भवतितस्याशुदेवानामपिदुर्लभम् ॥ ९८ ॥

वैराज्येनाधिपत्येनमर्त्यानामुत्तमोभवेत् ॥ पूर्णिमायांनिशीथिन्यामुदयास्तम नंविधोः ॥ ९९ ॥ संवत्सरंप्रकुर्वीतजपहोमादिकंबुधः ॥ रात्रौयजेद्दिवाहोमं कुर्यादेवपरेहनि ॥ ५०० ॥ ब्राह्मणान्भोजयित्वातुव्रतमेतत्समापयेत् ॥ सोम सूर्यादिकंयस्तुव्रतंकुर्वीतमानवः ॥ १ ॥ भुक्तिम्मुक्तिंचलभतेहित्वालोकेपरत्र च ॥ रक्तपद्मैश्चबन्धूकैस्तथारक्तोत्पलैरपि ॥ २ ॥ अभीष्टलोकवश्यार्थंजुहु यादर्चितेनले ॥ बाह्यैश्वर्य्यायभोगार्थंजपेल्लक्षमनन्यधीः ॥३॥ पत्रैर्बिल्वप्रसूनै र्वादशांशंजुहुयात्सुधीः ॥ समुद्रतीरेगोष्ठवालक्षजापीपयोव्रतः ॥ ४ ॥ पायसे नाज्ययुक्तेनहुत्वाविद्यानिधिर्भवेत् ॥ मन्त्रवित्स्वाधिपत्यार्थंशाकाहारोजला न्तरे ॥ ५ ॥ जपेल्लक्षंचजुहुयाद्बिल्वपत्रैर्दशांशतः ॥ तदेवपुनरायातिस्वाधि पत्यंनसंशयः ॥ ६ ॥ उपोष्यगङ्गामध्यस्थोराममभ्यर्च्यसंजपेत् ॥ लक्षञपि त्वाजुहुयात्कमलान्यथवातिलान् ॥ ७ ॥ जातीपुष्पाणिमधुरत्रितयाक्तानि संहुनेत् ॥ मन्दभाग्यःस्थिरम्भाग्यमथरामार्चनाल्लभेत् ॥ ८ ॥ जपित्वाजुहु यादिन्दुंराज्यश्रियमवाप्नुयात् ॥ वैशाखेराघवंकुर्य्यात्पश्यन्ननिमिषेक्षणः॥९॥ निराहारोजपेल्लक्षंमौनीपञ्चाग्निमध्यगः ॥ दशांशंकमलैर्हुत्वासचारोगीभवे द्ध्रुवम् ॥ १० ॥ माघमासेजलेस्थित्वाकन्दमूलफलाशनः ॥ जपेल्लक्षंचजुहु यात्पायसेनार्चितेनले ॥ ११ ॥ दशांशंपुत्रपौत्राद्यैरुपेतःप्राप्नुयाच्छ्रियम् ॥ श्रीरामसदृशःपुत्रपौत्राढ्योपिप्रजायते ॥ १२ ॥ वलिष्ठैःशत्रुभिर्मन्त्रीपरिभू तार्थमानसः॥ तदाहनहनेत्युक्त्वातन्नामान्तरितंजपेत् ॥ १३॥ ध्यात्वारघुपतिं क्रुद्धंकालानलमिवापरम् ॥ आकर्णसशराकृष्टकोदण्डभुजमण्डितम्॥ १४ ॥ नाशयन्तंरिपून्सर्वांस्तीव्रमार्गणवृष्टिभिः ॥ रक्तनेत्रम्महावीरवर्य्यमैन्द्रेरथेस्थित म् ॥ १५ ॥ लक्ष्मणादिमहावीरैर्वृतंहनुमदादिभिः ॥ कोटिकोटिमहावीरैः करोकृततरूत्तमैः ॥ १६ ॥ वज्राङ्गैरपिहुङ्कारभीकारसुमहारवैः ॥ नदद्भिरभि धावद्भिःसमरेरिगणंप्रति ॥ १७ ॥ एवंध्यात्वानिराहारोमारणायरिपोःपुनः ॥ जुहुयाच्छाल्मलीपुष्पैर्दशांशंमन्त्रसाधकः ॥ १८ ॥ अत्यन्तसुसमृद्धोपिन शत्रुरवशिष्यते ॥ वैरिणंरावणंध्यात्वातथात्मानंरघूद्वहम् ॥ १९ ॥ विधायपूर्वे त्सर्वमनायासेनमारयेत् ॥ सीताहरणशोकाचक्रुद्धीभूतमचेतसम् ॥ २० ॥

जपेद्रघुपतिंध्यायन्निराहारोजलेवसन् ॥ दशांशंचतिलैर्हुत्वास्तम्भयेच्छत्रुसं हतिम् ॥ २१ ॥ निधायवायुबीजेनयन्नमत्रासयेतिच ॥ जपेन्मन्त्रंनिराहारो जुहुयाच्चतिलैरपि ॥२२॥ रामंध्यात्वाविषण्णान्तंसीतान्वेषणकातरम् ॥ रामभद्रं चिरंसाक्षाद्रावणंचापिवैरिणम् ॥ २३ ॥ समुद्रतीरेलङ्कायांहेमप्राकारसन्निधौ ॥ सुग्रीवादिभिरन्यैश्चदैवतैर्नारदादिभिः ॥ २४ ॥ उपास्यमानंसदसिध्यात्वादे वंसलक्ष्मणम् ॥ विभीषणायागतायददन्तंशरणार्थिने ॥ २५ ॥ वरदंतंजपे ल्लक्षंजुहुयात्पङ्कजैरपि ॥ स्वस्थानमानयेच्छीघ्रंराजानमथवाप्रभुम् ॥२६॥ नि मील्यचक्षुःस्नेहाच्चुचोपलभ्यपुनःपुनः ॥ प्रमोदयन्तंसहसात्वचिरादानयेत्प्रि यम् ॥२७॥ रामंध्यात्वाजपेल्लक्षंहुत्वारक्ताम्बुजैरपि ॥ संमोहयतिवेगेनराजान मपिवाप्रभुम् ॥२८॥ तारादिर्मुक्तयेमन्त्रोरमादिर्भुक्तयेभवेत् ॥ वाक्सिद्धयेचवा गादिःसर्ववश्यायमन्मथः ॥२६॥ ताराद्यैःपुटितान्मन्त्रान्सर्वार्थान्विनियोज येत् ॥ अथातःसम्प्रवक्ष्यामिस्वारोचिषसमुद्भवम् ॥३० ॥ रामस्यैकाक्षरंमन्त्रंकी र्त्यतेसतुरामिति ॥ ब्रह्मामुनिःस्याद्गायत्रंछन्दोरामोस्यदेवता ॥ ३१ ॥ मूर्त्तिप ञ्जरनामानंतत्त्वन्यासंचकारयेत् ॥ षड्दीर्घसमायुक्तबीजेनैवषडङ्गकम् ॥ ३२॥ ध्यानपूजादिकंभाग्वद्रामलक्षंजपेन्मनुम् ॥ अथातःसम्प्रवक्ष्यामितृतीयंतुमनो र्विधिम् ॥ ३३ ॥ रामइत्येषकथितोद्व्यक्षरोभुक्तिमुक्तिदः ॥ एकाक्षरोक्तमृष्यादि स्यादाद्यन्तंषडङ्गकम् ॥३४॥ ध्यानपूजाप्रयोगादिसर्वंज्ञेयंषडर्णवत् ॥ श्रीवेद शतविंशानामयुतस्यलिखेत्क्रमात् ॥ ३५ ॥ एकोपचयकोष्ठेषुमन्त्रमेनंप्रपूज येत् ॥ उपचारैःषोडशभिरामंध्यात्वायथाविधि ॥ ३६ ॥ कृष्णप्रतिपद्यारभ्य पौर्णमास्यांसमापयेत् ॥ जायन्तेतेनकार्य्याणिह्यनुश्लोकदलैःप्रिये ॥ ३७॥ गजाश्ववृषबालानांक्षुद्ररोगोविनश्यति ॥ बन्धमोक्षोरोगनाशःसन्तानोद्यम लब्धये ॥ ३८ ॥ गतराज्यधनादीनांप्राप्तिःख्यातिर्धनागमः ॥ विधानंवाम हासिद्धिर्भवेद्वाचक्रवर्त्तिता ॥ ३६ ॥ अथातःसम्प्रवक्ष्यामिचतुर्थन्तुमनोर्वि धिम् ॥ तारमायारमानङ्गवाक्स्वबीजैश्चषड्विधः ॥ ४० ॥ द्व्यक्षरोमन्त्रराज स्तुत्र्यक्षरःपरिजायते ॥ न्यासपूजाप्रयोगादिसर्वंपूर्ववदाचरेत् ॥ ४१ ॥ अथातःसम्प्रवक्ष्यामिषष्ठमन्वन्तरोद्भवम् ॥ रामायनमइत्येषोमन्त्रःपञ्चाक्षरोम

तः॥४२॥ विश्वामित्रोमुनिःप्रोक्तःपङ्क्तिश्छन्दोस्यदेवता॥ रामभद्रोवीजशक्ती प्रथमार्णस्ततोन्तिमौ॥ ४३॥ भ्रूमध्येहृदिनाभ्यंघ्र्योःपादयोर्विन्यसेन्मनुम्॥ षडङ्गपूर्ववत्कार्य्यमन्त्रार्णैर्मनुनास्त्रकम् ॥ मध्येवनेकल्पतरोर्मूलेपुष्कलतोश ने ॥ ४४ ॥ लक्ष्मणेनप्रगुणितंरक्षःकोणेनशायकम् ॥ अवेक्ष्यमाणंजान क्याकृतव्यजनमीश्वरम्॥ ४५॥ जटाभारलसच्छीर्षंश्यामंमुनिगणावृतम्॥ लक्ष्मणेनधृतच्छत्रमथवापुष्पकोपरि ॥ ४६ ॥ दशास्यमथनंशान्तंससुग्रीव विभीषणम्॥ विजयार्थीविशेषेणवर्णलक्षंजपेन्मनुम्॥ ४७॥ प्राग्वद्धोमस्त र्पणादिप्रयोगाद्यंचसाधयेत् ॥ अथातःसम्प्रवक्ष्यामिसप्तमेजातमन्त्रकम् ॥ ४८॥ रामचन्द्रोरामभद्रोङेन्तोनतियुतोद्विधा ॥ सप्ताक्षरोनिगदितोमन्त्रःस सर्षिसेवितः ॥ ४९॥ ध्यानपूजाप्रयोगादिनिखिलन्तुषडर्णवत् ॥ अथातःस म्प्रवक्ष्यामिमन्त्रंसावर्णिकोद्भवम्॥ ५०॥ तारादिषड्भिःसंयुक्तोद्विधासप्ताक्ष रोमतः ॥ अष्टाक्षरोद्वादशधाकीर्त्तितोवाञ्छितार्थदः ॥ ५१॥ सर्वंषडर्णव ज्ज्ञेयंध्यानपूजाजपादिकम् ॥ अथातःसम्प्रवक्ष्यामिमन्त्रान्नवमसम्भवान् ॥ ५२ ॥ तारोरामश्चतुर्थ्यन्तःक्रोधान्तोवह्निवल्लभः ॥ अष्टार्णोयंपरोमन्त्रोमु न्यादिःस्यात्षडर्णवत्॥ ५३॥ नाशनःसर्वदोषाणांसंग्रामेविजयप्रदः॥ अथा तःसम्प्रवक्ष्यामिमन्त्रान्दशमसम्भवान् ॥ ५४ ॥ क्लूंह्रींनमश्चरामायह्रीमि त्यष्टाक्षरःपरः॥ ऋषिःसदाशिवःप्रोक्तोगायत्रंछन्दउच्यते ॥ ५५ ॥ रामच न्द्रोस्यमन्त्रस्यदेवतापरिकीर्त्तिता॥ नमोरामायह्रींहृत् ॐनमोरामायह्रींशिरः॥ ५६॥ दीर्घयामाययाङ्गानितारपञ्चार्णयुक्तया ॥ रामंत्रिनेत्रंसोमार्धधारिणं शूलिनंवरम्॥ ५७॥ भस्मोद्धूलितसर्वाङ्गंकपर्दिनमुपास्महे॥ रामाभिरामा सौन्दर्य्यसीमांसोमावतंसिनीम्॥ ५८॥ पाशांकुशधनुर्बाणधरांध्यायेत्त्रिलो चनम् । रामशक्तिन्तुसीताख्यांवर्णलक्षंजपेन्मनुम् ॥ ५९॥ होमपूजादिकं सर्वंषडक्षरवदीरितम् ॥ विशेषतोभोगदोसौसंग्रामविजयप्रदः ॥ ६०॥ अथै कादशसम्भूतान्राममन्त्रान्वदाम्यहम् ॥ सप्तार्णोयोमनुःप्रोक्तःषड्भिस्तारा दिकैःपृथक् ॥६१॥ सम्पुटितःद्वादशधानवार्णामनवःस्मृताः॥ ध्यानपूजादि कंसर्वंतेषांसप्तार्णवद्वदेत्॥६२॥ अथातःसम्प्रवक्ष्यामिद्वादशान्तरसम्भवम्॥

जानकीवल्लभोङेन्तःस्वाहान्तश्चहुमादिकः ॥ ६३ ॥ दशाक्षरोयंमन्त्रःस्याद्वशिष्ठोस्यमुनिःस्वराट् ॥ छन्दश्चदेवतारामःसीतापाणिपरिग्रहः ॥ ६४ ॥ आदिबीजन्द्विठःशक्तिरङ्गंपद्दीर्घकामतः ॥ शिरोललाटभ्रूमध्यनेत्रकण्ठस्तनेष्वपि ॥ ६५ ॥ नाभ्यूरुजानुपादेषुदशार्णान्विन्यसेन्मनोः ॥ अयोध्यानगरेचैवविचित्रेस्वर्णमण्डपे ॥ ६६ ॥ मन्दारपुष्पैराबद्धवितानेतोरणान्विते ॥ सिंहासनेसमारूढंपुष्पकोपरिराघवम् ॥ ६७ ॥ रक्षोभिर्हरिभिर्देवैर्दिव्ययानगतैःशुभैः ॥ संस्तूयमानंमुनिभिः प्रह्वैरुपसेवितम् ॥ ६८ ॥ सीतालंकृतवामाङ्गंलक्ष्मणेनोपशोभितम् ॥ श्यामंप्रसन्नवदनंसर्वाभरणभूषितम् ॥ ६९ ॥ ध्यायन्नेवंजपेन्मन्त्रंवर्णलक्षमनन्यधीः ॥ जपपूजाप्रयोगादिसर्वमस्यषडर्णवत् ॥ ७० ॥ अथत्रयोदशे जातराममन्त्रंवदाम्यहम् ॥ रामोङेन्तोधनुष्पाणिस्तथास्याद्वह्निसुन्दरी ॥ ७१ ॥ दशाक्षरोमुनिर्ब्रह्माविराट्छन्दोस्यदेवता ॥ राक्षसान्तकरोरामोरांबीजंपरिकीर्त्तितम् ॥ ७२ ॥ स्वाहाशक्तिःस्वबीजेनषडङ्गानिसमाचरेत् ॥ वर्णन्यासन्तथाध्यानंपुरश्चर्य्याविधिंतथा ॥ ७३ ॥ दशाक्षरोक्तवत्कुर्य्याच्चापबाणधरंस्मरेत् ॥ विशेषाज्जयदश्चायंसर्ववाञ्छितदायकः ॥ ७४ ॥ अथातःसम्प्रवक्ष्यामिचान्यमन्वन्तरोद्भवम् ॥ ॐहृद्भगवतेरामचन्द्रायेतिमनुर्मतः ॥ ७५ ॥ अर्कार्णोद्विविधोप्यस्यमुनिर्ध्यानजपादिकम् ॥ दशाक्षरवदेवस्यादयंकल्याणकारकः ॥ ७६ ॥ अथवक्ष्येवायुतोयोपासितंमन्त्रनायकम् ॥ श्रीरामजयरामेतिजयरामजयेतिच ॥ ७७ ॥ त्रयोदशाक्षरोमन्त्रःसर्वमस्यदशार्णवत् ॥ पदत्रयैर्द्विरावृत्त्याचाङ्गन्यासंसमाचरेत् ॥ ७८ ॥ अथातःसम्प्रवक्ष्यामिभरतोपासितंमनुम् ॥ सतारंहृद्भगवतेरामोङेन्तोमहाततः ॥ ७९ ॥ पुरुषायपदंपश्चाद्विठान्तोष्टादशाक्षरः ॥ विश्वामित्रोमुनिश्छन्दोगायत्रंदेवतामतः ॥ ८० ॥ दशास्यदर्पदलनोरामभद्रःप्रकीर्त्तितः ॥ तारोबीजंनमःशक्तीरामचन्द्रषडङ्गकम् ॥ ८१ ॥ मूलमन्त्रःकोशलेन्द्रःसत्यसन्धस्ततःपरम् ॥ रावणान्तकनामाचसर्वलोकहितस्तथा ॥ ८२ ॥ शश्वत्प्रसन्नवदनश्चतुर्थीनमसावदेत् ॥ नन्दिग्रामस्योपवनेभरतायतनेर्चिते ॥ ८३ ॥ रम्येसुगन्धपुष्पाद्यैर्वृक्षवृन्दैश्चमण्डिते ॥

निष्कोणभेरीपटहशङ्खतूर्य्यादिनिःस्वने ॥ ८४ ॥ पवित्ररूपेपरितोजयमङ्ग
लभाषिते ॥ पाटीरघुसृणोशीरकर्पूरागुरुगन्धिते ॥ ८५ ॥ नानाकुसुमसौर
भ्यवाहिगन्धवहान्विते ॥ देवगन्धर्वनारीभिर्गायत्र्यादिविभूषिते ॥ ८६ ॥
सिंहासनसमारूढंपुष्पकोपरिराघवम् ॥ सौमित्रिसीतासहितंजटामुकुटशोभि
तम् ॥ ८७ ॥ चापबाणधरंश्यामंससुग्रीवविभीषणम् ॥ हत्वारावणमायान्तं
कृतत्रैलोक्यरक्षणम् ॥ ८८ ॥ रामभद्रंहृदिध्यायन्दशलक्षंजपेन्मनुम् ॥ होम
पूजाप्रयोगादिसर्वंज्ञेयंपडर्णवत् ॥ ८९ ॥ अथवक्ष्येविभीषणोपासितंमोक्षदा
यकम् ॥ राज्यश्रियंप्रदातारंभक्तानामभयप्रदम् ॥ ९० ॥ रामभद्रमहेष्वास
रघुवीरनृपोत्तम ॥ दशास्यान्तकरांरक्षदेहिदापयमेश्रियम् ॥ ९१ ॥ द्वाविंश
दक्षरोमन्त्रोविश्वामित्रोमुनिर्मतः ॥ छन्दोऽनुष्टुब्देवतातुरामभद्रःप्रकीर्ति
तः ॥ ९२ ॥ चतुःसागरवेदाब्धिवस्विभैरङ्गकल्पनम् ॥ मस्तकेचललाटेचने
त्रयोःकर्णयोस्तथा ॥ ९३ ॥ गण्डयोश्चनसोरास्येततश्चभुजमूलयोः ॥
कूर्परद्वितयेचापिमणिबन्धद्वयेतथा ॥ ९४ ॥ कण्ठेचस्तनयोर्हृत्केनाभौचजठ
रेकटौ ॥ मेढ्रेपायावूरुमूलद्वयेजान्वोश्चगुल्फयोः ॥ ९५ ॥ मन्त्रवर्णान्न्यसे
त्तेनजपादावधिकारवान् ॥ पूर्वोक्तध्यानमत्रापिलक्षंचप्रयतोजपेत् ॥ ९६ ॥
पीतंवाचिन्तयेद्रामंधनार्थयोमनुंजपेत् ॥ अथातःसम्प्रवक्ष्यामिलक्ष्मणोपासि
तंमनुम् ॥ ९७ ॥ तारोनमोभगवतेङेन्तःस्याद्रघुनन्दनः ॥ रक्षोघ्नविशदाये
तिमधुरेतिपदंततः ॥ ९८ ॥ प्रसन्नवदनायेतिततश्चामिततेजसे ॥ बलाये
तिचरामायविष्णवेनमइत्ययम् ॥ ९९ ॥ सप्तचत्वारिंशदर्णोमालामन्त्रउदी
रितः ॥ मुनिःपितामहश्छन्दःस्यादनुष्टुप्चदेवता ॥ राज्याभिषिक्तोराम
श्चोंबीजंशक्तिर्नमस्त्विति ॥ ६००॥ सप्तषट्सप्तदशपड्रुद्रसङ्ख्यैःपडङ्गकम् ॥
शिरोमुखभ्रूमध्येपुनेत्रयोःकर्णयोर्नसोः ॥१ ॥ गण्डयोरोष्ठयोर्दन्तपंक्त्योरास्ये
चकक्षयोः ॥ तथाकूर्परयोरस्यतथैवमणिबन्धयोः ॥ २ ॥ अंगुलीमूलयोश्चै
वथांगुलीनांतथाग्रयोः ॥ कण्ठेहृदिस्तनद्वन्द्वेपार्श्वयोःपृष्ठकेकरे ॥ ३ ॥ जठरे
चतथानाभौस्वाधिष्ठानेध्वजेगुदे ॥ ऊर्वोर्जान्वोस्तथाङ्घ्र्योश्चसर्वाङ्गेपिन्य
सेत्क्रमात् ॥ ४ ॥ ध्यानंदशाक्षरप्रोक्तंलक्षमेकंजपेन्मनुम् ॥ विल्वप्रसूनैःपत्रै

वौतिलैस्त्रिमधुनायुतैः ॥ ५ ॥ मधुरत्रययुक्तेनपायसेनाथवाम्बुजैः ॥ होमंद शाशतःकुर्यात्तथासर्वत्रतर्पणम् ॥ ६ ॥ मार्जनंभोजयेद्विप्रान्प्रयोगादिचपूर्व वत् ॥ अथातःसम्प्रवक्ष्यामिशत्रुघ्नोपासितांपराम् ॥ ७ ॥ जयदांरामगायत्रीं जप्तायासूर्यवंशजैः ॥ दाशरथायविद्महेतथासीतेतिवल्लभा ॥ ८ ॥ यधी महीतितन्नोरातदग्रेमःप्रचोदयात् ॥ एषास्याद्रामगायत्रीभक्तानांमुक्तिमुक्ति दा ॥ ६ ॥ जन्मप्रभृतियत्पापंदशभिर्यातिसंक्षयम् ॥ पुराकृतंशतंनैवसहस्रे णजपेनवा ॥ १० ॥ चतुर्लक्षंजपेद्यस्तुमोक्षभाक्सनसंशयः ॥ यच्चयावच्चपू जादिसर्वपूर्ववदाचरेत् ॥ ११ ॥ तारादिरेषागायत्रीमुक्तिमेवप्रयच्छति ॥ मायादिरपिवैद्रव्यंरमादिश्चश्रियंपराम् ॥ १२ ॥ मन्मथेनापिसंयुक्तासंमोह यतिमेदिनीम् ॥ अथातःसम्प्रवक्ष्यामिश्रीसीतोपासितंमनुम् ॥ १३ ॥ श्री रामायहुंफट्चस्वाहान्तोयंनवाक्षरः ॥ अगस्त्योस्यमुनिःप्रोक्तःपंक्तिश्छन्दउ दाहृतम् ॥ १४ ॥ श्रीमद्दाशरथीरामोदेवतापरिकीर्त्तितः ॥ स्वाहाशक्तिश्च रांबीजंबीजेनैवषडङ्गकम् ॥ १५ ॥ सबिन्दुभिर्यकाराद्यैःपञ्चाङ्गन्यासईरितः ॥ नीलोत्पलदलश्यामंजटामुकुटमण्डितम् ॥ १६ ॥ पीताम्बरधरंदेवंचापबाणविभू षितम् ॥ दक्षिणेलक्ष्मणंध्यायेत्कनकाभंकिरीटिनम् ॥ १७ ॥ वामभागेजगद्यो निंप्रकृतिंपरमेश्वरीम् ॥ सीतांचम्पकगौराङ्गींश्वेतवस्त्रविभूषिताम् ॥ १८ ॥ सर्वा भरणसंयुक्तांद्विभुजांरत्नकुण्डलाम् ॥ धनुर्बाणकरंदेवंसीतांपद्मकरांस्मरेत् ॥ १६ ॥ यद्वारामंचतुर्बाहुंशङ्खचक्रासिशार्ङ्गिणम् ॥ सीतालक्ष्मणसंयुक्तंध्यायेत्कल्पत रोरधः ॥ २० ॥ ध्यात्वैवंहृदयेराममन्तरावाबहिर्जपेत् ॥ षट्कोणमध्येरामंच कोणेष्वङ्गानिचार्चयेत् ॥ तद्वाह्येष्टदलेपूर्वादिमादौभरतंयजेत् ॥ २१ ॥ ह नूमन्तंलक्ष्मणंच जाम्बवन्तंक्रमेणच ॥ सुग्रीवमर्चयेत्पश्चात्पूजयेच्चविभीषण म् ॥ २२ ॥ सीतांसुग्रीवाग्रेतुदिक्पालान्हेतिभिःसह ॥ जपेद्द्वादशलक्षा णिहोमश्चाशोकपुष्पकैः ॥ २३ ॥ तर्पणादिततःकृत्वा प्रयोगार्होभवेन्म नुः ॥ रक्तापामार्गपत्रैश्च मधुरत्रयसंयुतैः ॥ २४ ॥ वाकंजपत्रैर्जुहुयाद्धो मोयंलोकवश्यकृत् ॥ जपापुष्पहुतंभस्म तिलकंलोकवश्यकृत् ॥ २५ ॥ मल्लिकाभिर्जगद्वश्यंभवत्येवनसंशयः ॥ लक्षत्रयंजपेन्मन्त्रीसर्वज्ञानमवाप्नु

यात् ॥ २६ ॥ अश्रुतान्यपिशास्त्राणि षड्भिर्लक्षैस्तुविन्दति ॥ नवभिर्दे
वकन्याभिर्देववत्सप्रमोदते ॥ २७ ॥ चन्द्रसूर्योपरागेतुमोक्षौषध्यभिमन्त्रित
म् ॥ कपिलाज्यंपिबेद्यस्तुदूर्वारसविमिश्रितम् ॥ २८ ॥ भक्ष्याद्योमिष्यतीतै
लमङ्कोलरसमिश्रितम् ॥ शुद्धब्राह्मीरसंवापिससर्वज्ञोभवेद्द्रुतम् ॥ २९ ॥ स
न्ध्यात्रयेप्रतिदिनंसहस्रत्रितयंजपेत् ॥ मासेनमहदैश्वर्यं जायतेनात्रसंशयः ॥
३० ॥ श्रीकामोजुहुयात्पद्मैरयुतंत्रिमधुरप्लुतैः ॥ धनवाञ्जायतेमन्त्री द्विती
यइवयक्षराट् ॥ ३१ ॥ बिल्वपत्रैश्चजुहुयादथवातद्दलैर्हुनेत् ॥ लक्ष्मेकंविधि
स्थाने निधिलाभोभवेद्ध्रुवम् ॥ ३२ ॥ अथातःसम्प्रवक्ष्यामि मयैवोपासितंसु
रः ॥ ज्ञानप्रदंमहामन्त्रं सनकाद्यैरुपोषितम् ॥ ३३ ॥ ॐ नमोब्रह्मदेवाय
रामायाकुण्ठमेधसे ॥ उत्तमश्लोकवर्य्यायन्यस्तदण्डार्चिताङ्घ्रये ॥ ३४ ॥ शु
कदेवोमुनिश्चास्यच्छन्दोनुष्टुबुदाहृतम् ॥ श्रीरामोदेवताबीजंरांवर्य्यंशक्ति
रुच्यते ॥ ३५ ॥ चतुष्पादैःसमस्तेन पञ्चाङ्गविधिरीरितः ॥ प्राग्वद्ध्याना
दिकंलक्षं पुरश्चर्याप्रकीर्तिता ॥ ३६ ॥ आज्यपायसहोमोत्र ब्राह्मणार्चास
माचरेत् ॥ प्रयोगाःपूर्वमन्त्रोक्ता मोक्षार्थीसाधयेदमुम् ॥ ३७ ॥ येन दारा
गृहान्मुक्तोरावणस्यसुरेश्वरः ॥ तारोनमोभगवतेरामभद्रायसंवदेत् ॥ ३८ ॥
वन्दीविमुक्तशृङ्खलेस्वाहाद्वाविंशदक्षरः ॥ विभीषणोमुनिःप्रोक्तोजगतीछन्दई
रितम् ॥ ३९ ॥ स्वाहाशक्तिर्ध्रुवोबीजंरामभद्रोस्यदेवता ॥ पदैरस्यषडङ्गानि
जपेल्लक्षमितंसदा ॥ ४० ॥ प्राग्वद्धोमादिकंसर्वंयदर्थंजप्यतेयुतम् ॥ सप्ताहा
ज्जायतेमोक्षोनात्रकार्य्याविचारणा ॥ ४१ ॥ अथातःसम्प्रवक्ष्यामिसीताम
न्त्रंमहाद्भुतम् ॥ श्रींसीतायैनमःस्वाहासीतामन्त्रःषडक्षरः ॥ ४२ ॥ जनको
ऽस्यमुनिश्छन्दोगायत्रंदेवतामता ॥ सीताभगवतीप्रोक्ताश्रींबीजंशक्तिरन्यकौ ॥
४३ ॥ दीर्घस्वरयुताद्येनषडङ्गानिप्रकल्पयेत् ॥ पूजयेद्वैष्णवेपीठेध्यायेद्राघव
संयुताम् ॥ ४४ ॥ स्वर्णाभामम्बुजकरांरामालोकनतत्पराम् ॥ वर्णलक्षंजपे

---

१ श्रींसीतायै नमः और श्रींसीतायै स्वाहा यह मन्त्र दोप्रकारका है श्रीसीताजीका प्रथम षडक्षर मन्त्रराज श्रीरामरसिकों में प्रसिद्ध है २ श्रां श्रीं श्रूं श्रैं श्रौं श्रः इन षडक्षरोंको षडङ्गों में न्यासकरै जैसे श्रां हृदयाय नमः ॥

न्मन्त्रमिष्टार्थंसाधयेत्ततः ॥ ४५ ॥ आरोग्यायघृतंधान्यन्ताम्बूलंवश्यसिद्ध ये ॥ श्रीफलानितिलान्मुक्त्यैभुक्त्यैचजुहुयात्सदा ॥ ४६ ॥ अथातःसम्प्रव क्ष्यामिकृष्णमन्त्रान्महाद्भुतान् ॥ कृष्णःसएवभगवान्कलिद्वापरसन्धिगः ॥ ४७ ॥ वृद्धयेकलिधर्म्माणाम्भक्तानान्तारणायच ॥ एकसप्ततिरूपेसौप्रतिम न्वन्तरेभवेत् ॥ ४८ ॥ तद्भक्ताचरणान्मोक्षस्तत्कृत्याचरणाच्च्युतिः ॥ इतितत्त्वं समाख्यातंविष्णोःसन्धिभवस्यच ॥ ४९ ॥ जातश्चाद्येकलियुगेनानागो पीरतेरतः ॥ तत्कर्मकुर्वतांपातस्तद्भक्तिर्मोक्षसाधनम् ॥ ५० ॥ स्वधर्मनिरता नान्तुकलौजन्मनजायते ॥ तस्यमन्त्रंप्रवक्ष्यामिभुक्तिमुक्तिप्रसाधनम् ॥ ५१ ॥ गोपीजनवल्लभायस्वाहामन्त्रोदशाक्षरः ॥ नारदोस्यमुनिःप्रोक्तोविराट्छन्द उदाहृतम् ॥ ५२ ॥ देवतानन्दपुत्रःक्लींबीजंशक्तिःशिखिप्रिया ॥ आंचक्रा यहृदाख्यातंविचक्रायशिरोपिच ॥ ५३ ॥ सुचक्रायशिखापश्चात्त्रैलोक्यरक्ष णन्ततः ॥ चक्रायकवचंप्रोक्तमसुरान्तकशब्दतः ॥ ५४ ॥ चक्रायास्त्रमिदं कुर्य्यादङ्गानांपञ्चकंमनोः ॥ सर्वाङ्गेषुमनुंन्यस्यमन्त्रन्यासंसमाचरेत् ॥ ५५ ॥ जातियुक्तंचपञ्चाङ्गन्तथापञ्चांगुलीषुच ॥ हृदयेशिर्षकेचैवशिखायांकवचेतथा॥ ५६ ॥ अस्त्रेपार्श्वद्वयेकण्ठेपृष्ठेमूर्द्धनिचक्रमात् ॥ ततःकरतलेपृष्ठेव्यापकत्वे नविन्यसेत् ॥ ५७ ॥ प्रणवाद्यंनमोन्तंचसकलंचमनुंबुधः ॥ वामांगुष्ठंसमा रभ्यदक्षांगुष्ठान्तकंन्यसेत् ॥ ५८ ॥ वामांगुष्ठंसमारभ्यदक्षांगुष्ठान्तकंन्यसेत् ॥ तारसम्पुटितैर्वर्णैर्दशभिश्चनमोयुतैः ॥ ५९ ॥ एषसंहारनामातुन्यासःप्रथम ईरितः ॥ दक्षांगुष्ठादिवामान्तंसृष्टिन्यासउदाहृतः ॥ ६० ॥ अंगुष्ठाभ्यांस मारभ्यकनिष्ठान्तंस्थितिर्भवेत् ॥ एवंन्यासत्रयञ्चेतिपञ्चन्यासाःप्रकीर्त्तिताः ॥ ६१ ॥ पूर्व्वमुक्तंतुपञ्चाङ्गंवामदक्षिणहस्तयोः ॥ न्यसेद्दशांगुलीष्वेवं षष्ठोन्यासः प्रकीर्त्तितः ॥ ६२ ॥ आदौमूलंसमुच्चार्य्यमातृकाञ्चसबिन्दुकाम् ॥ विपरीतंपुनर्मूलंसप्तमःपरिकीर्त्तितः ॥ ६३ ॥ पादयोःपाणियुग्मेहन्मुखयोर्म

---

१ आंचक्राय हृदयाय नमः विचक्राय शिरसे स्वाहा इत्यादि मूलोक्त क्रमसे पञ्चाङ्ग करना २ ॐ गों ॐ नमः ॐ पीं ॐ नमः ॐ जं ॐ नमः ॐ नं ॐ नमः इसरीतिसे जानो क्रमसे मूलोक्तस्थानों में न्यासकरना ॥

स्तकेतथा ॥ पुनर्हृदिचसर्वाङ्गेसर्वाङ्गसकलाङ्गके ॥ ६४ ॥ दशतत्त्वानिभू
स्तोयंतेजोवायुर्नभस्तथा ॥ अहङ्कारोमहत्तत्त्वंप्रकृतिःपुरुषःपरः ॥ ६५ ॥ त
त्त्वन्यासोष्टमोयंहिमयातुभ्यंप्रकीर्त्तितः ॥ सर्वाङ्गादिंतुपादान्तंन्यासमेनंप्र
विन्यसेत् ॥ विलोमतत्त्वन्यासोयंनवमःपरिकीर्त्तितः ॥ ६६ ॥ मस्तकादि
तुपादान्तंकराभ्यांव्यापकंन्यसेत् ॥ तारेशपुटितम्मन्त्रंत्रिवारंदशमस्त्वयम् ॥
पादयोर्जानुनोर्लिङ्गेजठरेहृदयेमुखे ॥ नासयोःकर्णयोरक्ष्णोःशिरसिक्रमतो
न्यसेत् ॥ ६७ ॥ सबिन्दुकान्मन्त्रवर्णान्संहारोयंशिरोन्वितः ॥ मस्तकेनेत्र
योःकर्णेनासायाञ्चमुखेहृदि ॥ ६८ ॥ जठरेव्यञ्जनेजान्वोःपादयोश्चक्रमा
न्न्यसेत् ॥ मन्त्रवर्णान्द्वादशोयंसृष्टिन्यासःप्रकीर्त्तितः ॥ ६९ ॥ हृदयेजठरे
लिङ्गेजानुनोःपादयोश्चके ॥ अक्ष्णोःश्रुत्योर्नसिमुखेमन्त्रवर्णान्क्रमान्न्यसे
त् ॥ ७० ॥ स्थितिन्यासःसमाख्यातोमूलस्यायंत्रयोदशः ॥ मूलाधारेध्वजे
नाभौहृदयेचगलेमुखे॥७१॥अंसयोरूरुयुग्मेचन्यासोयंस्याच्चतुर्दशः॥स्कन्धे
नाभौकुक्षिहृदोःकटौपार्श्वद्वयेतथा ॥ ७२ ॥ पृष्ठेग्रेचन्यसेन्मन्त्रवर्णान्पञ्चद
शस्त्वयम् ॥ मूर्द्धिभ्रूमध्यकेचाक्ष्णोःकर्णयोर्नासिकाद्वये॥७३॥गण्डयोश्च
न्यसेद्वर्णान्न्यासोयंषोडशःस्मृतः ॥ दक्षिणेभुजमूलेचतन्मध्येमणिबन्धके ॥
७४॥ मूलांगुलीनामग्रेचतथांगुष्ठादिपञ्चसु॥क्रमेणविन्यसेद्वर्णान्न्यासःसप्तद
शःस्मृतः ॥ ७५ ॥ इत्थंवामकरेन्यस्यन्यासस्त्वष्टादशोभवेत् ॥ दक्षोरुमूलजा
नौचगुल्फेचांगुलिमूलके ॥ ७६ ॥ अंगुल्यग्रेतथांगुष्ठादौन्यासस्तूनविंशकः ॥
एवंन्यसेद्वामपादेन्यासोविंशमितःस्मृतः ॥ ७७ ॥ मस्तकेतत्पूर्वभागादौस
म्पूर्णेशिरस्यथ ॥ बाहुयुग्मेसन्धियुग्मेन्यासोयञ्चैकविंशकः॥ ७८ ॥ शीर्षा
क्षिमुखकण्ठोरोजठरेमूलधारके ॥ लिङ्गेजानुनिपादेचद्वाविंशोयंप्रकीर्त्तितः ॥
७९ ॥ कर्णयोर्गण्डयोर्न्यस्येदंसयोःस्तनयोस्तथा ॥ पार्श्वयोर्भुजयोश्चोर्वो
र्जानुनोर्जङ्घयोःपदोः ॥ ८० ॥ युग्मन्यासोयमाख्यातस्त्रयोविंशतिसंख्यकः॥

---

१ दक्षिण व वाम अंसके भेदसे दो स्थान जानना इसी प्रकार आगे भी यही नियम है कि जहांपर स्थान कमहों और मूलमें द्वय व युग्म आदि पदहों वहांपर दो ओरमें न्यास करने से स्थान पूरे होंगे ॥

चतुर्दशसमारभ्यदशन्यासास्तुयेस्मृताः ॥ ८१ ॥ विभूतिपञ्जरोनामएषएवप्र
कीर्त्तितः ॥ अशेषसुखकर्मार्थकीर्त्तिकान्त्यादिकारकः ॥ ८२ ॥ नरनारीनरे
न्द्राणांवश्यकर्मणिशस्यते॥भुक्तिमुक्तिप्रदोभक्तिप्रदोविष्णोःपदाम्बुजे ॥८३॥
कुर्य्यान्मन्त्रीततोन्यासंनरसिंहेतुपञ्चमे ॥ मूर्त्तिपञ्जरनामाख्यंप्रोक्तंपापप्रणाश
नम् ॥ ८४ ॥ पुनःसृष्टिस्थितिन्यासंदशाङ्गन्यासमाचरेत् ॥ प्रोक्तमाद्यप्रकारे
णन्यासानामुपकल्पने ॥ ८५ ॥ वैष्णवीर्दर्शयेन्मुद्राःपूर्वोक्ताःसकलाअपि ॥
एवंकृत्वाविधानेनमन्त्रीमन्त्रकलेवरम् ॥ ८६ ॥ त्र्यन्तेबोधितंनित्यंकृष्णं
ध्यायेज्जगत्पतिम् ॥ पूर्ववृन्दावनंरम्यंस्मरेत्पुष्पविराजितम् ॥ ८७ ॥
नवीनपल्लवोद्रेकफलसम्पत्तिसंयुतम् ॥ मधुपैःकृतराङ्कारैःकीराद्यैश्चनिनादि
तम् ॥ ८८ ॥ आदित्यतनयापार्श्वलहरीकणशीतलम् ॥ तस्मिन्वने
कल्पतरुंनवपल्लवशोभितम् ॥ ८९ ॥ सर्वशाखाग्रसंयुक्तंनवरत्नफलान्वित
म् ॥ दिव्यामृतौघवर्षेणसिञ्चन्तंविश्वमुच्छ्रितम् ॥ ९० ॥ ज्वलद्रत्नसमाव
द्धांपुष्परेणुविभूषिताम् ॥ षडूर्मिरहितांध्यायेत्तस्याधस्ताद्वसुन्धराम् ॥ ९१ ॥
माणिक्यकुट्टिमंतत्रयोगपीठंविचिन्तयेत् ॥ पद्ममष्टदलंतत्रयथोक्तंरत्नपर्णक
म् ॥ ९२ ॥ तस्यमध्येसुखासीनंकृष्णंध्यायेदनन्यधीः ॥ उद्यदादि
त्यसङ्काशंप्रसन्नवदनंविभुम् ॥ इन्द्रनीलमणिप्रख्यंस्निग्धदीर्घशिरोरुहम् ॥
९३ ॥ मायूरेणसुपिच्छेनराजमानशुभाङ्गकम् ॥ कुटिलालकविभ्राज
दास्यंकर्णकृतोत्पलम् ॥ ९४ ॥ गोरोचनाकृतिलकंपूर्णचन्द्रनिभंस्मरेत् ॥
पद्मनेत्रंदीप्तमणिंमकराकृतकुण्डलम् ॥ ९५ ॥ कपोलस्थललावण्यविजित
स्वच्छदर्पणम् ॥ अत्यद्भुतोन्नासिकंचपक्वविम्बफलाधरम् ॥ ९६ ॥ दाडि
मीबीजरदनंकम्बुसुन्दरकण्ठकम् ॥ आरण्यैःपल्लवैःपुष्पैःकृतग्रैवेयसम्पदम् ॥
९७ ॥ कौस्तुभप्रभयादीप्तविशालोन्नतवक्षसम् ॥ श्रीवत्साङ्काङ्कितोरस्कंवृष
स्कन्धंचहारिणम् ॥ ९८ ॥ आजानुलम्बदोर्दण्डंबलित्रययुतोदरम् ॥ क्षुद्रघ
ण्टिकयाबद्धकटिंग्रैवेयराजितम् ॥९९॥ चक्रशङ्खलसत्पद्मामृतकुण्डाम्बरादि
भिः ॥ कुलिशप्रमुखैश्चिह्नैरङ्कितस्वच्छपत्तलम् ॥ ७०० ॥ मुखाम्बुजसमायु
क्तवंशच्छिद्रार्पितांगुलिम् ॥ तन्मृदुध्वनिसन्तानविवशीकृतमानसम् ॥ १ ॥

अपाङ्गैःप्राणिजातन्तुमोहयन्तमनारतम् ॥ परमानन्दसन्दोहसम्पूर्णीकृतमा नसम् ॥ २ ॥ मुखपद्मसमासक्तस्वान्तनेत्राभिराजितम् ॥ गोभिरुधो महाभारमन्दयानाभिरेवच ॥ ३ ॥ कवलीकृतसन्त्यक्तन्यासलेशाभिरप्यलम् ॥ प्रस्नुतस्तनपानेनसम्भृताननिःस्वनैः ॥ ४ ॥ डिण्डीरवाभिसंयुक्तदैवैर्दृष्टि मनोहरैः ॥ वंशवादनप्रोन्नीतगीताकर्णनलालसैः ॥ ५ ॥ उत्तम्भनीकृतश्रो त्रपुटयुग्मैश्चतर्णकैः ॥ किञ्चिद्विपतरूद्भूतिजातकण्डूतिमस्तकैः ॥ ६ ॥ पर स्परविमर्दार्थिखरस्पृष्टमहातलैः ॥ स्निग्धैर्गुरुभिरत्यन्तसुशोभिगलकम्बलैः ॥ ७ ॥ वत्सीवत्ससमूहैश्चसंवृतंतदनन्तरम् ॥ कृतसम्भ्रमसन्दोहंलघुदीर्घकले वरैः ॥ ८ ॥ उच्चकर्णपुटैःपीतवंशशब्दसुधारसैः ॥ स्ववयस्यैश्चगायद्भिर्नृत्य द्भिःसुविभूषणैः ॥ ९ ॥ नानावेषधरैर्बालैःसंस्तुवद्भिःसमावृतम् ॥ मधुराकृति भिःसर्वैःपीयूषाद्भुतभाषणैः ॥ १० ॥ शार्दूलनखसंक्लृप्तगलाकल्पैस्तथावृत म् ॥ ततोगोपपुरन्ध्रीणांस्मरेद्वृन्दंसमाहितः ॥ ११ ॥ तद्भावभावकल्लोल सञ्जीवितमनोभवम् ॥ वल्लवीवल्लवगवांदेववृन्दंबहिःस्मरेत् ॥ १२ ॥ सम्मुखे देवदेवस्यकांक्षन्तंधनसञ्चयम् ॥ ऋषिसङ्घंतथादक्षेवेदाध्ययनतत्परम् ॥ १३ ॥ धर्मार्थिनंस्मरेत्पश्चान्मेनकाप्रमुखास्तथा ॥ वामभागेचयोगीन्द्रान्यक्षगन्धर्व किन्नरान् ॥ १४ ॥ सिद्धविद्याधरांश्चापिचारणाप्सरसांगणम् ॥ अनेकश्रु तिसम्पूर्णवीणावादनतत्परम् ॥ १५ ॥ आकाशेनारदंध्यायेन्मुनिवर्य्यंगत स्मयम् ॥ एवंध्यात्वायजेत्पीठेदेहेमानसिकार्चनम् ॥ १६ ॥ बाह्यपूजांततः कुर्य्यान्मूर्त्तिंमूलेनकल्पयेत् ॥ न्यासोक्तंक्रमतःपश्चाद्गन्धाद्यैर्देवमर्चयेत् ॥ १७ ॥ एवंध्यात्वायजेत्पीठेवैष्णवेनवशक्तिके ॥ आदौस्वीयेपीठमयेदेहेमान सिकार्चनम् ॥ १८ ॥ सृष्ट्यास्थित्याचसम्पूज्यपश्चाङ्गंचदशाङ्गकम् ॥ वंशंच वनमालांचश्रीवत्संकौस्तुभंतथा ॥ १९ ॥ पूजयेत्कृष्णवर्णस्थांस्ततश्चावर णार्चनम् ॥ कर्णिकायांचतुर्दिक्षुदेवस्यपरितोर्चयेत् ॥ २० ॥ दामंसुदामं श्रीदामंवसुदामंतथापरम् ॥ तेजोरूपधरांश्चैतान्केशरेष्वङ्गपूजनम् ॥ २१ ॥ रुक्मिणीप्रमुखाश्चाष्टपत्रेपुमहिषीर्यजेत् ॥ रुक्मिणीसत्यभामाचनग्नजित्तन यार्कजा ॥ २२ ॥ मित्रविन्दालक्ष्मणाचजाम्बवत्यासुशीलका ॥ कमलंचार्घ

पात्रंचबिभ्रतीदक्षिणान्ययोः ॥ २३ ॥ बिभ्रतीर्दिव्यरक्ताभावस्तुलेपादिभि र्युताः ॥ स्तनभारनतानानारत्नजालविभूषणाः ॥ २४ ॥ पत्राग्रेषुततःपूज्या वसुदेवश्चदेवकी ॥ नन्दगोपोयशोदाचबलभद्रःसुभद्रिका ॥ २५ ॥ गो पालागोपिकाःकृष्णशुश्रूषासक्तमानसाः ॥ स्वर्णाभोवसुदेवस्तुरक्तोनन्दःप्र कीर्त्तितः ॥ २६ ॥ रक्तश्यामनिभेप्रोक्तौमातरौदक्षिणेकरे ॥ वरंवामेवहन्त्यौ तुपात्रंगोपयसाभृतम् ॥ २७ ॥ मुक्ताहारधरेरत्नकुण्डलादिविभूषिते ॥ बलभद्र स्तुकुन्दाभोमुशलीहलसंयुतः ॥ २८ ॥ नीलाम्बरोमदोन्मत्तश्चञ्चलश्चैक कुण्डलः ॥ नानोपायनहस्ताब्जगोपापत्यैःसुपूजितः ॥ २९ ॥ मध्येवहि श्चपूर्वादौमन्दारंपारियातकम् ॥ सन्तानंकल्पवृक्षंचचन्दनंचप्रपूजयेत् ॥ ३० ॥ दीर्घनम्रबृहच्छाखान्भूपुरेतुदिगीश्वरान् ॥ तदायुधानिविधिनाक्रम तःसम्यगर्चयेत् ॥ ३१ ॥ शर्करादधिसंयुक्तंसघृतंगोपयोहविः ॥ नालिकेरंगु डंपूरीनवनीतंसितोत्पलाम् ॥ ३२ ॥ क्षौद्रंसङ्कल्प्यनैवेद्यंगोमुद्रांसंप्रदर्शयेत् ॥ ॐनमःपरमेत्युक्त्वात्मनेनिरुपमंवदेत् ॥ ३३ ॥ नैवेद्यंकल्पयामीतिविंशत्य र्णोमितोमनुः ॥ समयेचनिवेद्यंहिकुर्यादन्यत्पुरोक्तवत् ॥ ३४ ॥ ततश्चन्दन पङ्केनस्वीयेदेहेविभूषयेत् ॥ मूलमन्त्रेणमन्त्रज्ञोमूर्त्तिनिर्माणमन्त्रकैः ॥ ३५ ॥ कुर्य्यात्पुष्पाञ्जलिंपञ्चतुलसीपत्रतोबुधः ॥ मूलमन्त्रंसमुच्चार्य्यपादपद्मद्वयंवि भोः ॥ ३६ ॥ करवीरद्वयेनाथमध्यदेहेप्रकल्पयेत् ॥ अम्भोजयुग्मतःपश्चादु त्तमाङ्गेनिवेदयेत् ॥ ३७ ॥ एभिःसर्वैःकृतेगात्रेतावतःकुसुमाञ्जलीन् ॥ देवस्यद क्षिणेदद्याच्छेतपुष्पाणिमन्त्रवित् ॥ ३८ ॥ सप्तावरणसंयुक्तमित्थंकृष्णस्यपू जनम् ॥ सर्वसम्पत्करंपुंसांभोगमोक्षफलप्रदम् ॥ ३९ ॥ अङ्गैश्चेन्द्रादिभिर्व ज्रप्रमुखैरावृतित्रयम् ॥ संक्षेपपूजनंतेनकृतंकृष्णाष्टकंयजेत् ॥ ४० ॥ कृष्णा यवासुदेवायदेवकीनन्दनायच ॥ दामोदरायगोविन्दहृषीकेशकुभारहृत् ॥ ४१ ॥ धर्मसम्पत्करश्चेतिङेनमोन्तोध्रुवादिकः ॥ एतैरेवविधातव्याकृष्णा र्चाह्यथवाबुधैः ॥ ४२ ॥ समर्पयेदर्घ्यजलैर्गन्धपुष्पाक्षतान्वितैः ॥ सम्पूज्य स्वेहृदम्भोजेसमुद्वास्यनमेत्ततः ॥ ४३ ॥ ततःपूर्वोक्तविधिनादीक्षितःप्रजपेन्म नुम् ॥ मन्त्रार्थंचिन्तयेन्मन्त्रीनियमस्थोजितेन्द्रियः ॥ ४४ ॥ चत्वारिंशत्सहस्रा

णिश्वेतपद्माक्षमालया ॥ पश्चान्मन्त्रस्यशुद्ध्यर्थंदशलक्षंजपेत्सुधीः॥४५॥ लक्षंहुनेद्रक्तपद्मैःसितासर्पिर्मधुप्लुतैः ॥ शर्करांघृतसंयुक्तैरब्जैरपिचवाहुनेत् ॥ ४६ ॥ तर्पयेत्सलिलैःशुद्धैश्चन्द्रचन्दनसंयुतैः ॥ आत्माभिषेकंकृत्वाथभूदेवान्पूजयेत्ततः ॥ ४७ ॥ नानाविधैर्भक्ष्यभोज्यैस्ताम्बूलैश्चसदक्षिणैः ॥ ततोनिजगुरुंसम्यक्प्रणिपत्ययथाविधि ॥ ४८ ॥ धनधान्याम्बराद्यैश्चवित्तशाठ्यविवर्जितः ॥ तोषयेत्परयाभक्त्यानिजकार्यस्यसिद्धये ॥ ४९ ॥ ततःसिद्धमनुर्मन्त्रीप्रयोगान्निजवाञ्छितान् ॥ कुर्याद्भक्तियुतःसम्यग्नित्यनैमित्तिकेरतः ॥ ५० ॥ तत्कालेदेवकीजातंशङ्खचक्रगदाम्बुजान् ॥ दधतंपीतवसनंसुन्दरंगगनप्रभम् ॥ ५१ ॥ निशायामेचतुर्थेतुध्यात्वालक्षंजपेन्मनुम् ॥ त्रिमध्वक्तैस्तद्दशांशैःकिंशुकप्रसवैर्हुनेत् ॥ ५२ ॥ वीर्यंप्रज्ञांस्मृतिंप्राप्यकवीनामग्रणीर्भवेत् ॥ मातुरङ्कगतंदिव्यंचलत्पादकरंशिशुम् ॥ ५३ ॥ ध्यात्वाक्षीरधियांतोयैस्तर्पयेल्लभतेसुतम्॥ पिबन्तंपूतनास्तन्यंयस्तुतस्याःशिरःस्मरेत्॥५४॥ सतंसाग्रंजपेन्मन्त्रंरुदतींपूतनांतथा ॥ छिन्नमर्मप्रनादाढ्यांतदानश्यन्तिराक्षसाः ॥ ५५ ॥ अपामार्गस्यसमिधःपञ्चगव्यान्विताहुनेत् ॥ ध्यायेत्ततस्ताःकृष्णस्यहुतशेषन्तुप्राशयेत् ॥ ५६ ॥ सहस्रमन्त्रितैस्तोयैरभिषिक्तायरोगिणे ॥ ग्रहपीडाविमुक्तिःस्याद्बालानांरुग्विनाशनम् ॥ ५७ ॥ स्वकीयवरसंक्षिप्तंसकलंभावयेन्मनुम् ॥ अयुतंप्रजपेन्मन्त्रंविघ्नसङ्घाःशमंययुः ॥ ५८ ॥ नीलगात्रंस्वहस्ताभ्यांनवनीतंनवंदधि॥दधानंकिङ्किणीसङ्घलसत्स्रग्छविभूषणम् ॥ ५९ ॥ दूर्वात्रयैश्चदुग्धाद्यैर्हुत्वैवंप्रजपेन्मनुम् ॥ सन्तोष्यगुरुविप्रांश्चव्याध्यादिरहितोभवेत् ॥ ६० ॥ कर्मबन्धंपातयन्तंकृष्णंध्यात्वाजपेन्मनुम् ॥ तेनापिमन्त्रितंतोयंक्षिप्त्वापीडांव्यपोहति ॥ ६१ ॥ गोगणंसाधुरक्षन्तंचारयन्तमितस्ततः । वेणुंधमन्तंगोविन्दंध्यायेत्पूर्वोदितंफलम् ॥ ६२ ॥ कालीयस्यफणामध्येनृत्यन्तंकृष्णमञ्जसा ॥ सुधादृष्ट्याभिवीक्षन्तंतद्रात्रौप्रजपेन्मनुम् ॥ ६३ ॥ वामहस्तस्यतर्जन्यातर्जयेन्मतिसत्तमः ॥ सुखीकरोतिधिषणंकल्पदष्टमपिक्षणात् ॥ ६४ ॥ कालीयदमनंकृष्णंध्यात्वाकुशचयेजपेत् ॥ अष्टोत्तर

१ व.पूर ॥

शतंस्नायाद्विषार्तोनिर्विषोभवेत् ॥ ६५ ॥ गोवर्धनगिरिंवामबाहुदण्डेनबिभ्रतम् ॥ दक्षिणेनव्रजप्राणिप्राणसन्त्राणसूचकम् ॥ ६६ ॥ कृष्णंसञ्चिन्तयेन्मन्त्रंगच्छन्च्छत्रंवृधेजयेत् ॥ भीतिदास्तेनबाधन्तेविपवर्षणवायुवत् ॥ ६७ ॥ व्यर्थमेघोद्यमाद्यान्तंवासवंचिन्तयेद्धुनेत् ॥ अयुतंलवणैःशुद्धैरनावृष्टिर्भवेद्ध्रुवम् ॥ ६८ ॥ यमुनायांतुगोपीभिर्जलक्रीडाकरंहरिम् ॥ मुहुर्मुहुःसिच्यमानंक्षीराक्तैरयुतंहुनेत् ॥ ६९ ॥ भूयसींवृष्टिमिष्टांहिकुर्यादसमयेपिसः ॥ एवमेवस्मरन्कृष्णंपीडितस्यतुमस्तके ॥ ७० ॥ मोहनार्त्तिगरस्फोटसूनराक्षसपन्नगैः ॥ मन्त्रंजपेत्तदानींतुसुखीभवतिनान्यथा ॥ ७१ ॥ वैनतेयगतंकृष्णंसप्रद्युम्नंबलान्वितम् ॥ आत्मभूतैः राभूतंजनैः सर्वैःस्तुतंतथा ॥ ७२ ॥ एवंध्यात्वाग्रहाक्रान्तमस्तकेसंजपेन्मनुम् ॥ महाघोरग्रहोद्भूतस्तदानींनाशमाप्नुयात् ॥ ७३ ॥ एवंध्यात्वानलेकृष्णंसाङ्गमभ्यर्च्यचायुतम् ॥ क्षीराच्छिन्नाखण्डहोमात्सर्वंक्रूरज्वरंहरेत् ॥ ७४ ॥ क्षीरार्णवप्रविष्टाङ्गंग्रीष्मपीडाहरंहरिम् ॥ ध्यात्वास्पृशेज्जपन्नार्तेपाणिभ्यांसुखीभवेत् ॥ ७५ ॥ अर्चितेग्नौहुनेत्कृष्णंसान्दीपिनिसुतप्रदम् ॥ ध्यात्वासुदुग्धच्छिन्नाभिरपमृत्युर्विनश्यति ॥ ७६ ॥ कृष्णंपुत्रान्प्रयच्छन्तंविप्रायमृतसूनवे ॥ ध्यात्वापार्थयुतंमन्त्रंजपेत्पुत्रसमृद्धये ॥ ७७ ॥ पुत्रजीवककाष्ठाग्नौसक्षौद्रैस्तुफलैर्हुनेत् ॥ अयुतंसलभेत्पुत्रान्नीरोगांश्चिरजीविनः ॥ दुग्धवृक्षत्वचांक्वाथैःकृष्णमावाह्यशत्रिषु ॥ पूजयित्वायुतंजप्त्वाशतयोषांरतिर्व्रजेत् ॥ ७८ ॥ अभिषिञ्चेद्घृतेनैवपाययेदर्कवासरे ॥ एवंकतिपयैर्मासैर्वन्ध्यापिलभतेसुतम् ॥ ७९ ॥ बोद्धिपत्रगतंतोयंजप्तमष्टोत्तरंशतम् ॥ मौनंकृत्वापिबेन्नारीप्राग्वर्षात्सासुतंलभेत् ॥ ८० ॥ कृत्यांक्रूरांमहाभीमांकाशिराजेनयोजिताम् ॥ पराजित्यात्मचक्रेणकाशींतद्भवह्निना ॥ ८१ ॥ शेषेणभस्मीकुर्वन्तींकृष्णंसम्यग्विचिन्तयेत् ॥ जुहुयान्निशिसिद्धार्थैःस्वीयतैलविलोलितैः ॥ ८२ ॥ एवंकृतेतुनसाहंवैरिणाकेनचित्कृता ॥ कृत्याभूयस्तमेवाशुसंक्षयेन्नात्रसंशयः ॥ ८३ ॥ संस्थितंत्वालयेदिव्येबदरीवृक्षभूषिते ॥ घण्टाकर्णंचहस्ताभ्यांस्पृशन्तंसस्मरेद्धरिम् ॥ ८४ ॥ मधुराक्तैस्तिलैर्लक्षंजुहुयादेधितेऽनले ॥ अशेषपापनाशार्थंपुष्ट्यर्थंचजपेत्तथा ॥ ८५ ॥ खगेश्वररुमा

रूढंकुर्वन्तंबाणवर्षणम् ॥ धावमानंरिपुगणमनुधावन्तमाशुगम् ॥ ८६ ॥ जपे त्ससप्तसहस्राणिकृष्णंध्यात्वामनुंबुधः॥सप्ताहाद्वैरिणांभूयादुच्चाटोदेशतोध्रुवम्॥ ८७॥ कपित्थफलसम्पातेनैवमेवाऽन्दकेक्षिपन्॥कृष्णंध्यात्वायुतंजप्तोमनुरुच्चा टकृद्रिपोः ॥ ८८ ॥ वैरिसङ्कटरूपंचकर्षणंप्राणवर्जितम् ॥ अयुतंप्रजपेन्मन्त्रंहु नेद्दातत्समंबुधः ॥ ८६ ॥ समिद्भिर्जन्मनक्षत्रमारणस्यप्रयोगवित् ॥ शत्रुर्निध नमाप्नोतिसुधाभक्षोपिनान्यथा ॥६०॥ कलिद्रुमसमिद्भिर्वैर्निम्बतैलप्लुतैर्हुनेत्॥ यामिन्यामयुतंस्वस्थोरिपुर्यमपुरंव्रजेत् ॥ ६१ ॥ कर्पासबीजरजनीनिम्बपत्रं कटुत्रयम् ॥ एवंतैलन्तुजुहुयाच्छ्मशानेनिशिमारणे ॥ ६२ ॥मारणंनैवकुर्वीत बलात्कुर्यायुतंजपेत् ॥ हुनेचरात्वद्धविषातत्पातकनिवृत्तये ॥ ६३ ॥ पुरन्दर मुखाञ्जित्वाहरन्तंसुरपादपम् ॥ कृष्णंध्यायञ्जपल्लँलक्षंसर्वतोजयमाप्नुयात् ॥ ६४ ॥ अर्जुनायचगीतार्थंकथयन्तंजपेन्मनुम् ॥ ध्यात्वाधर्मस्यवृद्धिःस्याद्यो गसिद्धिश्चजायते ॥ ६५ ॥ त्रिस्वादुयुक्तैर्लक्षंयःकण्डकप्रसवैर्हुनेत् ॥ महा कविःसवागीशोवेदवेदाङ्गपारगः ॥ ६६ ॥ विश्वरूपंहरिंध्यायेत्सहस्रंसाष्टकंज पेत् ॥ देहगेहपुरग्रामवास्तुरक्षाभवेद्ध्रुवम् ॥ ६७ ॥ आरण्यकारुणैःपुष्पैर्म ध्याह्नेविधिनार्चयेत् ॥ हरिंगृहेजपेत्साष्टसहस्रंद्विजवश्यकृत् ॥ ६८ ॥ मालती कुसुमैःश्वेतैर्गोपवेषंयथापुरा॥कृष्णमभ्यर्च्यनृपतीन्वशान्नयतिदासवत् ॥ ६६॥ रक्ताश्वमारैर्वैश्यांश्चशूद्रान्नीलोत्पलैस्तथा ॥ अत्रध्यायेच्चगायन्तंश्रीकृष्णं जनमोहनम् ॥ ८०० ॥ तण्डुलैर्घृतपुष्पैश्चघृताक्तैर्यःसहस्रकम् ॥ अन्वहंस प्तशतकंहुत्वातद्भस्मधारयेत् ॥ १ ॥ तद्भस्मधारणान्नारीस्वपुमांसंवशंनयेत्॥ पुरुषश्चतथानारींदासीकुर्यान्नसंशयः ॥ २ ॥ पुष्पताम्बूलवासांसिकज्जला लयनादिकम् ॥ सहस्रमभिमन्त्र्याथयेभ्योदद्याच्चतेवशाः ॥ ३ ॥ आपणव्य वहारादौविवादेराजवेश्मसु ॥ अष्टोत्तरशतंजप्त्वावशीवर्त्तिचतद्वचः ॥ ४ ॥ उपविष्टंकदम्बाधोबल्लवीभिःस्मरेद्धरिम् ॥ त्रिमध्वपामार्गसमिद्धोमाल्लोकत्र यंवशम् ॥ ५ ॥ रासक्रीडारतंध्यात्वाजपेन्नित्यंसहस्रकम् ॥ इत्थंकन्यामवाप्नो तिमासमात्रेणसाधकः ॥ ६ ॥ अभ्युच्चयकुसुमारूढंध्यात्वासायंसहस्रकम् ॥ ज पेत्कन्यामण्डलेनलभतेवाञ्छितंवरम् ॥ ७ ॥ कृतमालप्रसूनैश्चकुरण्टकुसु

मैरपि ॥ हुत्वावशीकरोत्येवभूपालान्सपरिच्छदान् ॥ ८ ॥ वकुलोद्भवसत्पुष्पैः पातालोत्थैश्चतैरपि ॥ इक्षुजैर्वैश्यशूद्रौचस्वायत्तौकुरुतेक्षणात् ॥ ६ ॥ रक्तोत्पलैर्वाकुसुमैश्चम्पकैःपाटलोद्भवैः ॥ हुत्वायुतंचमध्वक्तैर्वशयेद्वर्णयोषितः ॥ १० ॥ अश्वमारप्रसूनैर्योमध्वक्तैःप्रत्यहंहुनेत् ॥ रात्रौसहस्रसंख्याकैःसप्तरात्रमतन्द्रितः ॥ ११ ॥ सोङ्गनानांसहस्रञ्चनवयौवनगर्वितम् ॥ पञ्चबाणप्रसिद्धाङ्गंदासीकुर्य्यान्नसंशयः ॥ १२ ॥ सिद्धार्थैर्लवणोपेतैर्मध्वक्तैस्त्रिसहस्रकम् ॥ होमंकुर्वीतरात्रौचवह्नौविप्रान्वशंनयेत् ॥ १३ ॥ त्रिस्वाद्वक्तैर्बिल्वफलैर्वापत्रैर्वाप्रसूनकैः ॥ पद्मैःसतण्डुलैर्होमात्तर्पणाच्छ्रीःस्थिराभवेत् ॥ १४ ॥ वासांसिवल्लवस्त्रीणांमनोभिःसहकेशवम् ॥ समादायकदम्बन्तुसमारूढंविचिन्तयेत् ॥ १५ ॥ जपेत्सहस्रमानंयोरात्रौसदशभिर्दिनैः ॥ शचीमप्यानयेन्मन्त्री किमन्यांनरयोषितम् ॥ १६ ॥ अथातःसम्प्रवक्ष्यामिद्वितीयेयस्तुजप्यते ॥ तारसम्पुटितश्चायंमन्त्रःस्याद्द्वादशाक्षरः ॥ १७ ॥ पुरश्चर्याजपन्यासपूजाद्यंपूर्ववद्भवेत् ॥ प्रयोगाश्चविशेषेणप्रयोगोत्रनिरूप्यते ॥ १८ ॥ चन्द्रकुन्दसुगौराङ्गंरक्तपद्मदलेक्षणम् ॥ अरिकम्बुगदापद्मंबाहुदण्डैश्चबिभ्रतम् ॥ १६ ॥ दिव्यैश्चचन्दनालेपैःपद्मनाम्नाविभूषितम् ॥ पीताम्बरलसद्गात्रंतरुणंमुनिसेवितम् ॥ २० ॥ विकचत्पद्ममध्यस्थंध्यात्वानन्दात्मजंप्रभुम् ॥ स्वहृत्पद्मगतंदेवंपुराणंपुरुषंनवम् ॥ २१ ॥ नीलमेघनिभंवापिद्रुतहेमनिभंतुवा ॥ लक्षद्वादशकंजप्त्वातत्सहस्रंसमिद्वरैः ॥ २२ ॥ दुग्धाप्लुतैर्हुनेन्मन्त्रीपयोद्रुमसमुद्भवैः ॥ मध्वादिलोलितेनापिहविषाविजितेन्द्रियः ॥ २३ ॥ पश्चाद्विश्वाधिपंनित्यंचिदानन्दकलेवरम् ॥ भवान्धकारद्युमणिंस्वीयेहृत्सरसीरुहे ॥ २४ ॥ आत्माभेदेनसञ्चिन्त्यप्रत्यहंपरमेश्वरम् ॥ त्रिसहस्रंजपेन्मन्त्रीयजेत्सन्ध्योक्तवर्त्मना ॥ २५ ॥ विधिमेनंजपेद्यस्तुश्रद्धाभक्तिसमन्वितः ॥ संसाराधिंसमुल्लंघ्यजीवन्मुक्तःसजायते ॥ २६ ॥ अथातःसम्प्रवक्ष्यामितृतीयेयंजगत्पतिः ॥ अयोनिजशरीरेणप्रकटोजायतेभुवि ॥ २७ ॥ दशाक्षरोयंकामादिस्तस्यमन्त्रोभवाक्षरः ॥ कामदेवोमुनिःप्राग्वदन्यत्सर्वंसमीरितम् ॥ २८ ॥ अथातःसम्प्रक्ष्यामिचतुर्थेव्ययमेवहि ॥ हरशिष्यइतिख्यातोवाममार्गप्रवर्त्तकः ॥ २६

दशाक्षरोयं लज्जादिस्तस्य मन्त्रो भवाक्षरः ॥ प्राग्वत्सर्वं विनाशक्किं नाथं मन्त्रो स्य सिद्ध्यति ॥ ३० ॥ अथातः सम्प्रवक्ष्यामि रश्मोयं जगत्पतिः ॥ सुदामदारिद्र्यहे शमन्त्रोयं यत्तदुपासितः ॥ ३१ ॥ दशाक्षरो यं लक्ष्म्याद्यो भवेदेकादशाक्षरः ॥ न्यासपूजाप्रयोगादि पूर्ववत्परिकीर्तितम् ॥ ३२ ॥ अथातः सम्प्रवक्ष्यामि कलौ पेठे जगत्पतिः ॥ संसारानन्दसन्दोहदर्शकोस्यमनुस्त्वयम् ॥ ३३ ॥ श्रीकृष्णाय वदेत्पश्चाद्गोविन्दाय दशाक्षरः ॥ एवमष्टादशार्णोयं मन्त्रः प्रोक्तोखिलेष्टदः ॥ ३४ ॥ कृष्णो देवस्तु गायत्री छन्दः स्यान्नारदो मुनिः ॥ स्वाहा शक्तिश्चक्लीं बीजं वेदाब्ध्यब्धिविलोचनैः ॥ ३५ ॥ मन्त्रार्णैः स्याच्च पञ्चाङ्गं त्वङ्गुलीषु करद्वये ॥ मूलमन्त्रेण सर्वाङ्गे त्रिवारं व्यापकं चरेत् ॥ ३६ ॥ एतान्यङ्गानि विन्यस्य प्रणवेन ततः पुनः ॥ केललाटे भ्रुवोर्मध्ये कर्णयोर्नेत्रयोर्नसि ॥ ३७ ॥ मुखे कण्ठे हृदि नाभौ कट्यां लिङ्गे ततः परम् ॥ जानुयुग्मे पदद्वन्द्वे न्यसेदेकैकमक्षरम् ॥ ३८ ॥ पादादिमस्तकान्तं च न्यसेच्चैव पदानि तु ॥ शिरोवदनहृद्गुह्यपादेषु मनुवित्तमः ॥ ३९ ॥ पञ्चाङ्गानि पुनर्न्यस्य मुन्यादिन्यासमाचरेत् ॥ न्यासान्तरादिकं सर्वं दशवर्णोक्तवद्भवेत् ॥ ४० ॥ ध्यानं चोक्तप्रकारेण पूजनं च तथा भवेत् ॥ अयुतद्वयसंख्यातमधिकारार्थमादरात् ॥ ४१ ॥ पञ्चलक्षं जपेत्पश्चाद्दशांशं पूर्ववद्धुनेत् ॥ तर्पणादि ततः सर्वं पूर्वोक्तविधिना चरेत् ॥ ४२ ॥ अथ साधितमन्त्रस्य साधकस्य कलामये ॥ त्रिकालार्चाविधिं वक्ष्ये गोविन्दस्य जगत्पतेः ॥ ४३ ॥ उक्तवृन्दावने रम्ये स्वर्णभूमौ सुमण्डपम् ॥ रम्यं रत्नमयं दिव्यं स्मरेत्कल्पतरोरधः ॥ ४४ ॥ नानारत्नस्थलीमध्ये रत्नसिंहासने शुभे ॥ यथोक्तपद्ममध्यस्थं वासुदेवं विचिन्तयेत् ॥ ४५ ॥ इन्द्रनीलनिभं कान्तं शिशुं मुमधुराकृतिम् ॥ स्निग्धवक्त्रं ललाटान्तलुठन्मूर्द्धजसञ्चयम् ॥ ४६ ॥ भृङ्गसङ्गसमासक्तपद्मसुन्दरसम्मुखम् ॥ इन्दीवरदलाकारशोभिनेत्रद्वयान्वितम् ॥ ४७ ॥ चलत्कुण्डलसंशोभिपृथुगण्डसुमण्डितम् ॥ रक्ताधरं सुनासं च हसन्तं हृतमानसम् ॥ ४८ ॥ नानारत्नगणाकीर्णकण्ठाभरणभूषितम् ॥ गोधूलिधूसरोरस्कं शार्दूलनखधारिणम् ॥ ४९ ॥ विशिष्टमुष्टसन्देहं स्वर्णनेपथ्यदीपितम् ॥ कटिदेशलसज्जङ्घाद्येवद्धमनोहरम् ॥ ५० ॥ रत्नकाञ्चनसञ्छन्नकिङ्किणीजालमालिनम् ॥ तिर

स्फुरन्तं वनजबन्धूकप्रसवश्रियम् ॥ ५१ ॥ अत्यन्तारुणसच्छायखकलपादाब्ज शोभितम् ॥ पयसोद्भूतपिण्डं च नवनीतमयं शुभम् ॥ ५२ ॥ दक्षिणोत्तरयोः पार्श्वयोर्वहन्तं साधुसस्पृहम् ॥ पृथिव्यघकराणां च दैत्यानां दुष्टचेतसाम् ॥ ५३ ॥ पूतनाशकटादीनां विनाशाय कृतोद्यमम् ॥ गोपीगोपालधेनूनां समूहेनावृतं सदा ॥ ५४ ॥ आखण्डलमुखैर्देवैः सेवितं कामतत्परैः ॥ प्रातरेवंविधं कृष्णं ध्यात्वा सुस्थिरमानसः ॥ ५५ ॥ प्रागुक्त एव पीठे मुं हरिं संपूजयेत्प्रभुम् ॥ स्वाङ्गावरणमाद्यं स्याद्द्वितीयं लोकपालकैः ॥ ५६ ॥ वज्रादिभिस्तृतीयं च पूजयित्वा प्रसन्नधीः ॥ पक्वरम्भाफलं खण्डं नवनीतं हविर्दधि ॥ ५७ ॥ मेलयित्वा सुनैवेद्यं निवेद्य प्रीणयेद्विभुम् ॥ उपस्थेयं विधानेन श्रद्धाभक्तिसमन्वितः ॥ ५८ ॥ श्रीकृष्णं पूजयेद्यत्र पूजोपकरणैः शुभैः ॥ ऐहिकीं सर्वसम्पत्तिं प्रागेव प्राप्नुयात्ततः ॥ ५६ ॥ देहान्ते विष्णुसायुज्यं प्रयाति नियतं कृतम् ॥ प्रातः प्रत्यहमेवं हि पूजयित्वा नरो हरिम् ॥ ६० ॥ गव्यं दधि निवेद्यास्मै गुडयुक्तमथापि वा ॥ तद्बुद्ध्या शुद्धनीरेण तर्पयेत्सुमुखं हरिम् ॥ ६१ ॥ अष्टोत्तरसहस्रं तु मूलमन्त्रं जपेत्ततः ॥ दिनमध्ये भजेद्वापि सुन्दराकृतिमद्भुतम् ॥ ६२ ॥ इन्द्रादिदेवसिद्धैश्च सेवितं खचरैस्तथा ॥ गवां गोपालगोपीनां समूहैः परितो वृतम् ॥ ६३ ॥ नीलाम्बुवाहसत्कान्तिविशिष्टाङ्गश्रियं विभुम् ॥ नीलकण्ठस्य सत्पिच्छैः केशभारसुमण्डितम् ॥ ६४ ॥ उद्भ्रमद्भ्रूलतं देवं पद्मपत्रायतेक्षणम् ॥ पूर्णचन्द्रलसद्वक्त्रं रत्नकुण्डलमण्डितम् ॥ ६५ ॥ गण्डमण्डलसंशोभं सुघोपं सस्मिताननम् ॥ पीतवस्त्रधरं चारुमुक्ताहारविभूषितम् ॥ ६६ ॥ काञ्चीकटककेयूरमुद्रिकानूपुरादिभिः ॥ अलंकृतशरीरं तं पिशङ्गाम्बरसंवृतम् ॥ ६७ ॥ मुक्तामाणिक्यसञ्छन्नवनमालादसुतांशुकम् ॥ कामबाणप्रविद्धाङ्गं वेणुवादनतत्परम् ॥ ६८ ॥ ह्रस्वं विचित्रितं वेपं वामे शङ्खं सुवेत्रकम् ॥ अभिरामतरं दक्षं रत्नश्रेष्ठमभीष्टकम् ॥ ६६ ॥ ध्यात्वैवं विधिना देवं पूजयेदिष्टसिद्धये ॥ दामाद्यैरङ्गकैश्चापि महिषीभिश्च तत्परम् ॥ ७० ॥ वसुदेवादिभिः पश्चात्कल्पवृक्षैरनन्तरम् ॥ इन्द्राद्यैश्च तदस्त्रैश्च सप्तावरणसंयुतम् ॥ ७१ ॥ अर्चयित्वा तु गोविन्दं विधिवत्साधकोत्तमः ॥ नैवेद्यं काञ्चनेपात्रे पूर्वोक्तं च निवेदयेत् ॥ ७२ ॥ अष्टाधिकशतं पश्चाद्धुनेत्साधु पयोन्ध

सा ॥ शर्कराघृतयुक्तेनबलिंपश्चात्प्रकल्पयेत् ॥ ७३ ॥ देवर्षियोगिदेवेभ्यउप देवेभ्यआदरात् ॥ देवाग्रभागमारभ्यसव्यमार्गाद्बलिंमतः ॥ ७४ ॥ स्वस्वदिक्क्रमतोविद्वान्भक्तियुक्तःप्रसन्नधीः ॥ नवनीतहविर्बुद्ध्यातोयैःसन्तर्प्पयेन्मुखे ॥ ७५ ॥ सहस्रंशतमानंवासाष्टकंपूजयेज्जपेत् ॥ मध्याह्नेकृष्णमेवंयःपूजयेद्भक्तितत्परः ॥ ७६ ॥ गीर्वाणवृन्दवन्द्योसौसम्मतःसर्वजन्तुषु ॥ आयुर्बुद्ध्यादिश्रीकान्तिशुभगत्वादिसंयुतः ॥ ७७ ॥ सत्सन्ततिसुहृद्वर्गपशुक्षेत्रधनादिभिः ॥ सर्वैश्वर्य्यसमेतोत्रसुखंभुक्त्वाहरिंव्रजेत् ॥ ७८ ॥ अपराह्णार्चनंसन्ध्यापर्यन्तंमनुनामुना ॥ दशाक्षरेणमनुनारात्रौपूजनमाचरेत् ॥ ७९ ॥ सन्ध्यायांद्वारकामध्येरम्येरामाश्रयेशुभे ॥ गृहैःषोडशसाहस्रैःसर्वतःपरिवेष्टिते ॥ ८० ॥ पद्मेन्दीवरकह्लारसंसृतैःसुजलाशयैः ॥ हंसादिपक्षिभिर्व्याप्तैःसंवृताद्भुतमन्दिरे ॥ ८१ ॥ उद्यदादित्यसङ्काशेचित्रिताद्भुतमण्डले ॥ कोमलास्तरणेदिव्यस्वर्णपङ्कजमण्डिते ॥ ८२ ॥ सूपविष्टंपरात्मानंकृष्णंध्यायेत्समाहितः ॥ नारदादिमुनिश्रेष्ठैःसंवृतंमोक्षकांक्षिभिः ॥ ८३ ॥ अद्वैतार्थविचारेणमुनिवर्य्येभ्यएवच ॥ अग्निरूपंपरंतेजोदिशन्तंमन्त्रगौरवात् ॥ ८४ ॥ नीलेन्दीवरसङ्काशंशान्तमूर्त्तिंगुणालयम् ॥ सरोजदलसङ्काशनेत्रंमकरकुण्डलम् ॥ ८५ ॥ स्निग्धालकाग्रसम्बद्धमुकुटाद्भुतमस्तकम् ॥ अत्यन्तमधुराकारंप्रसन्नमुखपङ्कजम् ॥ ८६ ॥ श्रीवत्सवक्षसंदिव्यवनमालाविभूषितम् ॥ दूरीकृतधराभारंप्रसन्नहृदयंविभुम् ॥ ८७ ॥ शङ्खचक्रगदापद्मधारिणंतुचतुर्भुजम् ॥ इत्थंसञ्चिन्त्यदेवेशंगोविन्दंसम्यगर्चयेत् ॥ ८८ ॥ अष्टप्रियाभिरङ्गैश्चतृतीयेगरुडंपुरः ॥ पर्वतंविष्णुनिशठंवृद्धवृन्दारकंतथा ॥ ८९ ॥ विष्वक्सेनंचसैनेयंप्रादक्षिण्येनपूजयेत् ॥ लोकपालांस्तदस्त्राणिपञ्चमावरणार्चनम् ॥ ९० ॥ नैवेद्यंपायसंदत्त्वासम्यक्पूजावसानकम् ॥ खण्डाक्तक्षीरसद्बुद्ध्यानीरैःकृष्णंतुतर्प्पयेत् ॥ ९१ ॥ अष्टोत्तरशतंपश्चाज्जपेत्तावद्विचिन्तयेत् ॥ सर्वार्चासुहुनेन्मन्त्रीमध्याह्नेतुयथाविधि ॥ ९२ ॥ अवसानार्घ्यविध्यन्तंविधायस्तुतिमारभेत् ॥ नत्वानिवेद्यचात्मानंविष्णुंतुस्वेहृदिस्वयम् ॥ ९३ ॥ न्यसेद्देवमयोभूत्वास्वात्मानंपूजयेत्ततः ॥ सन्ध्याकालेहरिंत्वेवंप्रत्यहंयोर्चयेन्नरः ॥ ९४ ॥ इहभोगान्बहून्भुक्त्वा

व्रजेचान्तेसंसद्गतिम् ॥ नन्दात्मजंयजेद्रात्रौकामाकुलितचेतसम् ॥ ९५ ॥ रासक्रीडासमाक्रान्तंबल्लवीचक्रवेष्टितम् ॥ स्थलपङ्कजपुष्पाणांदिव्यरेणुयुतेन च ॥ ९६ ॥ रिङ्गत्सुरङ्गबिन्दूनां सम्पृक्ताग्रेणवायुना ॥ कालिन्दीसैकतेशुभ्रेशीतलेतापहारिणि ॥ ९७ ॥ कामबाणैर्विद्धाङ्गदिव्यस्त्रीकोटिकादिभिः ॥ सेवितेचन्द्रकिरणसमुद्द्योतितदिङ्मुखे ॥ ९८ ॥ चलद्भृङ्गाङ्गनाशब्दवाचालितदिगन्तरे ॥ सिद्धगन्धर्वदेवौघयक्षकिन्नरपन्नगैः ॥ ९९ ॥ विद्याधरैःसपत्नीकैर्विमानेषुकृतासनैः ॥ आकाशेसञ्चरद्भिस्तैःपुष्पवृष्टिकृताद्भुते ॥ ६०० ॥ रासक्रीडाविधौरत्नशंकुंगंपरमेश्वरम् ॥ एतद्देहसमाक्लृप्तदिव्यानेककलेवरम् ॥ १ ॥ नारीणांयुग्मयोर्दैवंप्रत्येकंचान्तरागतम् ॥ तत्तत्कण्ठसमालम्बिबाहुद्वयविराजितम् ॥ २ ॥ आत्मसम्बन्धसञ्जातकामानलसुदीपितम् ॥ रोमोद्गमसमाक्रान्तनागवल्लीतरुंमुहुः ॥ ३ ॥ नानामुनिगणैर्भिश्रमधुरस्वरसंयुतम् ॥ सुवर्णरचितैर्दिव्यैर्महामणिपरिस्कृतैः ॥ ४ ॥ कृतचारुस्वनैःसर्वालङ्कारैर्हृदयंगमम् ॥ इत्थंपृथक्शरीरंतंसंयुतंमणिभिर्यथा ॥ ५ ॥ हिरण्यरचितंसम्यक्सरोमरकतावृतम् ॥ मणिशङ्खौसुविस्तीर्णैरक्तपद्मगतंप्रभुम् ॥ ६ ॥ अतसीपुष्पसङ्काशंयौवनश्रीसमन्वितम् ॥ तदानींरक्तफुल्लारविन्दच्छदविलोचनम् ॥ ७ ॥ भूषणैर्विविधैश्चारुपल्लवानेकगुच्छकैः ॥ शिखिकण्ठशिखण्डैश्चबद्धमूर्द्धजसञ्चयम् ॥ ८ ॥ पूर्णिमाचन्द्रसङ्काशसुन्दराननपङ्कजम् ॥ रत्नकुण्डलसंशोभिगण्डमण्डलमण्डितम् ॥ ९ ॥ पक्वबिम्बफलाकाररक्ताधरविराजितम् ॥ नानारत्नसमाक्लृप्तसर्वभूषणभूषितम् ॥ १० ॥ स्वर्णवर्णलसद्वस्त्रंचिर्तमश्रीगृहंपरम् ॥ नवप्रवालरुचिरहस्तपादतलंविभुम् ॥ ११ ॥ भ्रमरालीलसत्पुष्पमालिकावृतपद्वयम् ॥ अङ्गनाकुचसंश्लेषलग्नकुंकुमवक्षसम् ॥ १२ ॥ महोक्षचारुवदनंवंशवादनतत्परम् ॥ अनङ्गबाणसंविद्धंसर्वलोकैकसद्गतिम् ॥ १३ ॥ इत्थंध्यात्वायजे

---

१ मयूर २ मोरपिच्छ ३ कपोल ४ अतिशयचैतन्य शोभाके स्थान ५ मूंगा ६ यहां वदन शब्द कांधोंका लक्षक है क्योंकि वृषस्कन्ध इत्यादि प्रयोग अनेक स्थलों में मिलते हैं मुखकी समता नहीं है कांधे से लेकर मुखतक एक एक में करके महोक्षचारुवदनं यह कहना उचित है ॥

त्पीठेचाङ्गावरणसंयुतम् ॥ श्रींक्लींपूर्वाःकेशवाद्याःसबिन्दुस्वरसंयुताः ॥ १४ ॥ मातृकास्तुन्यसेत्पूर्वंततःपूजनमाचरेत् ॥ इन्द्राद्याभूपुरेपूज्यावज्रादीन्यायुधान्यपि ॥ १५ ॥ ततःसुक्वथितंदुग्धंसितोपलसमन्वितम् ॥ राजतेभाजनेसम्यक्संस्कृत्यविनिवेदयेत् ॥ १६ ॥ कांस्यपात्रेपुनैवेद्यंस्वरसङ्ख्येषुकल्पयेत् ॥ प्रत्येकंमिथुनेभ्यश्चान्यत्सर्वंपूर्ववन्मतम् ॥ १७ ॥ रात्रावेनंभोजयेद्वैसर्वकामवशंकरः ॥ इन्दिरामन्दिरोभूत्वासर्वाराध्यःसुभुक्तिमान् ॥ १८ ॥ रात्रौसन्ध्यासुयश्चैवंप्रत्यहंतुप्रपूजयेत् ॥ तुल्यंफलंसमाप्नोतिमनाऽवेःपारगोभवेत् ॥ १९ ॥ अर्चान्तरेदेवकस्यतर्पणानांविधिंब्रुवे ॥ पुरोक्तानांचकाम्यानांसाधकेपुफलप्रदम् ॥ २० ॥ पूजनव्यतिरेकेपितत्फलंलभ्यतेबुधैः ॥ पीठाद्भिस्तर्पणंदौतुकृत्वामूलेनचैकशः ॥ २१ ॥ तत्रावाह्ययजेद्देवंजलेचैवोपचारकैः ॥ धनुर्मुद्रांप्रदर्श्यात्रस्मृत्वातर्पणसाधनम् ॥ २२ ॥ तद्धियाजलमादायस्वर्णपात्रेकृतेनतु ॥ सम्यगञ्जलिनादेवंतर्पयेन्मूलमुच्चरेत् ॥ २३ ॥ त्रिकालंतर्पयेन्नित्यमष्टाविंशतिसङ्ख्यया ॥ तत्तत्कालोचितान्पश्चात्तर्पयेत्परिवारकान् ॥ २४ ॥ एकैकवारंमन्त्रज्ञोमूलेनापिप्रतर्पयेत् ॥ गुडयुक्तंदधिप्रातर्नवनीतयुतंहरेः ॥ २५ ॥ अन्नोमध्येसमाख्यातंसन्ध्यायांदुग्धमुत्तमम् ॥ सितोपलाविमिश्रंतुतर्पणद्रव्यमीरितम् ॥ २६ ॥ वाह्येत्रपूर्ववद्धियादन्यत्सर्वंयथाभवेत् ॥ तत्प्रसादजलैःसिञ्चेदात्मानमिहमन्त्रवित् ॥ २७ ॥ मूलमन्त्राभिसञ्जप्तंजलंमन्त्रीपिबेत्ततः ॥ हरिमुद्रास्यमन्त्रज्ञोजपेन्मन्त्रन्तुतन्मयः ॥ २८ ॥ काम्यतर्पणवस्तूनिततोवक्ष्यामियानितु ॥ भजेदुक्तप्रकारेषुसमालभ्यैकमेवतु ॥ २९ ॥ सकृज्जलेनसन्तर्प्यदुग्धैर्वारचतुष्टयम् ॥ पश्चात्षोडशभिर्द्रव्यैःप्रत्येकंचचतुष्टयम् ॥ ३० ॥ पायसंदधिभक्तंचतिलतण्डुलकंतथा ॥ गुडभक्तंचदुग्धंचदध्यथोनवनीतकम् ॥ ३१ ॥ घृतंचकदलंमोचामलकंमधुवल्लभा ॥ मृद्वीमोदकपूर्यश्चपृथुकाश्चैवलाजकाः ॥ ३२ ॥ द्रव्याणिषोडशैतानिमूलमन्त्रेणतर्प्पयेत् ॥ प्रातरेवंतर्प्पयेद्यः

---

१ श्रीं क्लीं अं केशवकीर्त्यै नमः शिरसि इत्यादि पूर्वोक्त मातृकान्यास स्थानों में न्यास करना २ स्वर संख्या याने सोलह पात्रों में नैवेद्यधरे इससे यह जानो कि बीचमें श्रीकृष्ण जी और षोडशदलों में स्त्री पुरुषका जोड़ा जोड़ा पूजेजाते हैं ॥

सायंवासमपङ्क्ययया ॥ ३३ ॥ कृष्णंप्रतिदिनंविद्वाञ्छुद्धबुद्धिश्चतत्परः ॥
तस्यमण्डलमात्रेणवाञ्छितंभवतिध्रुवम् ॥ ३४ ॥ अथान्यत्तत्फलंवक्ष्येपूर्ववत्त
त्फलप्रदम् ॥ धारोष्णंकथितंदुग्धंदधिदध्युदकंपुनः ॥ ३५ ॥ सर्पिस्तथापाय
संचतक्रंत्रिक्षौद्रमेवच ॥ पञ्चामृतंनवैतानिप्रत्येकंशतमष्टच ॥ ३६ ॥ तर्पयेल्लो
कमान्योसौयशस्वीचप्रजायते ॥ खण्डमिश्रितधारोष्णदुग्धबुद्ध्याजलैःशुभैः॥
३७ ॥ कृष्णंसन्तर्प्यगच्छेद्योग्राममंवानगरंतथा ॥ सतुनानारसोपेतंभक्ष्यंभोज्यं
चविन्दति ॥ ३८ ॥ तर्पणंयावदाख्यातंजपस्तावान्निहस्मृतः ॥ इहसन्तर्पणा
देवफलमाप्नोतिवाञ्छितम् ॥ ३९ ॥ भिक्षुकोब्राह्मणोनित्यंस्वयंगोविन्दरूप
धृक् ॥ भूत्वानानाविधैर्भावैरभिरामैर्मुहुर्मुहुः ॥ ४० ॥ मनोभिःसहगोपीनांद
धिदुग्धघृतादिकम् ॥ बलादगृह्णन्ददद्भिक्षामायातिमहतींतुलाम् ॥ ४१ ॥
गोपीहस्तसरोजानिधृत्वानृत्यन्तमञ्जसा ॥ कृष्णंसञ्चिन्त्यमन्त्रज्ञोजपेदष्टाद
शाक्षरम् ॥ ४२ ॥ लाजैर्मधुप्लुतैर्वापिचूर्णैर्लाजसमुद्भवैः ॥ हुत्वायुतंजपेत्ताव
त्कन्यामिष्टांलभेत्तुनः ॥ ४३ ॥ अष्टादशार्णमन्त्रेणपलाशसमिधोयुतम् ॥ म
धुप्लुतकुसुमैर्वापिहुनेद्वातिलतण्डुलैः ॥ ४४ ॥ वशीभवन्तिभूपालादत्त्वासर्व
स्वमादरात् ॥ एवमष्टादशार्णस्यप्रयोगःकथितोमया ॥ ४५ ॥ अथातःसम्प्र
वक्ष्यामिसप्तमेयंजनार्दनः॥ प्रत्यक्षंजायतेमन्त्रःक्लींकृष्णायनमस्त्विति॥४६॥
मुनिःकामोस्यगायत्रंछन्दःकृष्णोस्यदेवता ॥ षड्दीर्घान्वितबीजेनषडङ्गानि
चपूजनम् ॥ ४७ ॥ प्राग्वज्जपेद्वर्णलक्षंतर्पणंचात्रपूर्ववत् ॥ सम्पत्प्रदोविशेषे
णमन्त्रोयंपरिकीर्त्तितः ॥ ४८ ॥ अथातःसम्प्रवक्ष्यामिजातोयश्चाष्टमेकलौ ॥
एकावतारेसम्पूर्णेसूक्ष्मरूपीजनार्दनः ॥४९॥ हिमाचलेवरेतीर्थेसमाधिंतत्समा
श्रयेत् ॥ पुनश्चकलिधर्माणांप्रवृत्त्यर्थंजनार्दनः ॥५०॥ कश्चिद्वेषंसमापाद्यप्र
कटोजायतेभुवि ॥ भक्तेभ्यश्चाभयंदत्त्वामोहयित्वाचदुष्कृतान् ॥ ५१ ॥ पा
खण्डमार्गंप्रकटंकिञ्चित्सिद्धिसमन्वितम् ॥ दर्शयित्वाचमर्त्यानांपुनस्तत्रैवया
त्यसौ ॥५२॥ एकादशाक्षरोमन्त्रोमायाश्रीबीजपूर्वकः ॥ स्याद्योष्टमेकलियुगे

---

१ क्लां, क्लीं, क्लूं, क्लैं, क्लौं, क्लः इनमें से एक एक बीजको क्रमसे षडंगों में न्यास करे जैसे क्लांहृदयायनमः, क्लीं शिरसे स्वाहा इत्यादि ॥

सर्वसिद्धिविधायकः ॥ ५३ ॥ मुन्यादिकंजपोन्यासोध्यानंहोमश्चतर्पणम् ॥
वक्ष्यमाणस्यकृष्णास्यद्वादशार्णमनोःसमम् ॥ ५४ ॥ अथातःसम्प्रवक्ष्यामियो
जातोनवमेविभुः ॥ क्लींकृष्णायगोविन्दायमन्त्रोस्याष्टाक्षरोमतः ॥ ५५ ॥ प्रा
ग्वन्मुन्यादिकंध्यानंचानुलोमविलोमकैः ॥ पादैःकराङ्गन्यासोस्तुप्रयोगाद्यंचपू
र्ववत् ॥५६॥अथातःसम्प्रवक्ष्यामिदशमेदेवकीसुतः ॥ जातःकृष्णस्तस्यमनुरों
नमोङेन्तकृष्णकम् ॥५७॥ देवकीपुत्रायहुंफट्स्वाहाषोडशवर्णकः ॥ नारदो
स्यमुनिश्छन्दोनुष्टुप्कृष्णस्तुदेवता ॥ ५८ ॥ ताराद्यैःपरपदैश्चास्यषडङ्गवि
धिरुच्यते ॥ वर्णलक्षंजपेन्मन्त्रमन्यत्प्रोक्तंदशार्णवत् ॥ ५९ ॥ अथातःसम्प्र
वक्ष्यामिजातमेकादशेकलौ ॥ स्वयमेवमुनिर्जातःस्वगायत्र्युपदेशतः ॥
६० ॥ उद्धृताबहवोलोकाःसगर्वाभ्रंसिताद्विजाः ॥ शूद्रोपिराज्यंसम्प्राप्यगा
यत्रींसम्यगभ्यसेत् ॥ ६१ ॥ सशूद्रःक्षत्रियोज्ञेयःसंग्रामेजायतेजयः ॥ तस्यव
शेस्थिरंराज्यंमृतोविष्णुपदंव्रजेत् ॥ ६२ ॥ दामोदरायविद्महेवासुदेवायधीम
हि ॥ तन्नःकृष्णःप्रचोदयात् ॥ ६३ ॥ गायत्रंछन्दउद्दिष्टंश्रीकृष्णोदेवतास्मृ
तः ॥ पंचत्रिपञ्चरामाब्धिवेदवर्णैःषडङ्गकम् ॥ ६४ ॥ गायत्रीवत्पुरश्चर्यान्या
सोमुद्रादिदर्शनम् ॥ ध्यानपूजादिकंसर्वंज्ञेयंकृष्णदशार्णवत् ॥ ६५ ॥ प्रयो
गाश्चात्रगायत्र्यास्तथाकुर्यान्नसंशयः ॥ अथातःसम्प्रवक्ष्यामियोजातोद्वाद
शेकलौ ॥ ६६ ॥ नन्दगोपकुमाराख्यःप्रकटोभूज्जनार्दनः ॥ ग्लौंक्लींनमो
भगवतेनन्दपुत्रायबालकः ॥ ६७ ॥ रूपायचबलायेतिगोपीजनपदंवदेत् ॥
वल्लभायाग्निजायान्तोमन्त्रोयंरदवर्णकः ॥ ६८ ॥ षड्दीर्घाढ्याद्यबीजेनषड
ङ्गविधिरीरितः ॥ ध्यानपूजादिकंसर्वंदशार्णवदुदीरितम् ॥ ६९ ॥ अष्टादशार्ण
मन्त्रस्यप्रयोगानाचरेत्तथा ॥ अथातःसम्प्रवक्ष्यामितंयोजातस्त्रयोदशे ॥७०॥
गोपानांमध्यतोगोपश्चमत्कारप्रदर्शकः ॥ योगीश्वरास्तुजानन्तःप्रशमन्ति
महर्षयः ॥ ७१ ॥ गोपीभिश्चतदागोपैःसपृष्टश्चजनार्दनः ॥ केनेदृशीतुभ

---

१ ओंनमः हृदयायनमः ओंकृष्णायशिरसेस्वाहा ओंदेवकीपुत्रायशिखायैवषट् ओंहुंकव चायहुम् ओंफट् नेत्रत्रयायवौषट् ओंस्वाहा अस्त्रायफट् २ पांच तीन पांच तीन चार और चार अक्षरोंको क्रमसे न्यासकरे जैसे दामोदराय हृदयायनमः विद्महे शिरसे स्वाहा इत्यादि ॥

वतासिद्धिर्लब्धातुतद्वद ॥ ७२ ॥ यदागोपाङ्गनाभूत्वाब्रह्मज्ञामुनयोपिच ॥ त्वामेवप्रणमन्तिस्मक्रीडन्नारीशतैस्तथा॥ ७३ ॥ सर्वास्स्खलन्तितास्त्वन्तुवीर्यनैवप्रमुञ्चसि ॥ कामार्त्तःकथ्यतेनातःसर्वज्ञस्त्वंकथंपुनः ॥ ७४ ॥ वयंनिष्कपटाभक्ताःसत्यमेतत्तदावद ॥ एवमुक्तोहरिस्तत्रस्वप्नलब्धंमनुंजगौ ॥ ७५ ॥ तेमुक्तीदेवदेवीततवेदेवरतोरतः ॥ तरन्तोरूढनोख्यातोनख्यातोदेवकीसुतः ॥ ७६ ॥ जप्तव्यःसिद्धमन्त्रोयमेकान्तेनिर्जनेवने ॥ वर्णलक्षजपेनप्राग्जन्मपापंविनश्यति ॥७७॥ ततोलक्षत्रयजपाद्भूतप्रेतपिशाचकाः॥ सर्वेप्रत्यक्षतांयान्तिसाधकानांतुमन्त्रिणाम् ॥७८॥ लक्षद्वादशजापेनदृश्यन्तेयमकिङ्कराः॥ लोकानांवशमायान्तितत्स्मृतंकथयन्तिच ॥ ७९ ॥ जप्त्वाषोडशलक्षाणिशक्राद्याःप्रकटाःसुराः॥ योगिनोयोगिनीसङ्घोब्रह्मविष्ण्वादिदर्शनम् ॥ ८०॥ द्वात्रिंशत्प्रमितेजप्ते मत्समोनात्रसंशयः॥ प्राप्यतेचन्द्रदेवेन श्रीकृष्णस्यसरूपताम् ॥ ८१ ॥ अथातःसम्प्रवक्ष्यामि योजातस्तुचतुर्दशे ॥ सिद्धायज्जपमात्रेणपुरानेकेमहर्षयः ॥ ८२ ॥ क्षीरगोपपगोरक्षी रक्षमाक्षक्षमाक्षर ॥ गोमानोगगनोमागो यक्षगत्यत्यगक्षय ॥ ८३ ॥ अथातःसम्प्रवक्ष्यामि कलौपञ्चदशेतुयः ॥ निवसन्कुन्दकुञ्जेषु मुकुन्दोयःप्रकीर्तितः ॥ ८४ ॥ श्रीमन्मुकुन्दचरणौसदाशरणमित्यपि ॥ अहंप्रपद्येमन्त्रोयं प्रोक्तश्चाष्टादशाक्षरः॥ ८५ ॥ नारदोस्यमुनिश्छन्दो गायत्रंदेवताभवेत् ॥ मुकुन्दआचक्रायेत्यादिकैःपञ्चाङ्गमीरितम् ॥ ८६ ॥ दशार्णवत्पूजनंस्यादङ्गेन्द्रादितदायुधैः ॥ चतुर्लक्षंजपेन्मन्त्रं तद्दशांशंचहोमयेत् ॥ ८७ ॥ पलाशपुष्पैस्तच्चूर्णैस्तर्प्पणादितितश्चरेत् ॥ मन्त्रेणानेनसञ्जप्तमष्टोत्तरशतंजलम् ॥ ८८ ॥ दिनादावन्वहंपीत्वा माससमात्रंप्रसन्नधीः ॥ सद्यःश्रुतिधरोमन्त्री जायतेवेदपारगः ॥ ८९ ॥ अथातःसम्प्रवक्ष्यामि षोडशेबालकृष्णकम् ॥ ध्रुवोनमोभगवतेबालकृष्णायहुंतथा॥९०॥फडन्तोयंमहामन्त्रः षोडशाक्षरउच्यते॥अस्यषोडशवर्ण

---

१ आचक्रायहृदयायनमः इस रीति से आचक्र आदिक न्यास की विधि पहिले कही है इस से यहां नहीं लिखा २ ओम् । ॐनमः, ॐ भगवते, ॐ बालकृष्णाय, ॐ हुम्, ॐफट्, इन पांचों पदों को हृदयआदि पांचअङ्गों में न्यासकरना ॥

स्य मुनिःस्यान्नलकूवरः ॥ ६१ ॥ छन्दोगायत्रमुद्दिष्टं बालकृष्णस्तुदेवता ॥ पञ्चाङ्गानितुयुक्तानि ध्यानंपूर्वोदितंभवेत् ॥ ६२ ॥ पूजाचाङ्गैःस्ववर्गाद्यैः पुरश्चर्यादिपूर्ववत् ॥ अथसप्तदशेजातं कृष्णंवच्म्यन्नदायकम् ॥ ६३ ॥ अन्नरूपरसरूपतुष्टिरूपनमोनमः ॥ अन्नाधिपतयेऽन्नंचतथामह्यंसमुच्चरेत् ॥ ६४ ॥ प्रयच्छाग्निवधूर्मन्त्रस्त्रिंशद्वर्णोन्नदायकः ॥ नारदोमुनिरस्यस्याच्छन्दोनुष्टुबुदाहृतम् ॥ ६५ ॥ अन्नाधिपतिकृष्णोस्य देवतापरिकीर्तिता ॥ पञ्चाङ्गन्यासपूजादि सर्वंज्ञेयंदशार्णवत् ॥ ६६ ॥ अन्नदोजायतेमन्त्री मन्त्रमेतंसदाजपेत् ॥ अथचाष्टादशेजात वासुदेवमनुंब्रुवे ॥ ६७ ॥ तारोनमोभगवतेवासुदेवायहुंचफट् ॥ स्वाहाषोडशवर्णोयं गायत्रंछन्दईरितम् ॥ ६८ ॥ मुनिर्ब्रह्माग्रहह्वाख्यो देवतादेवकीसुतः ॥ दशार्णवच्चपञ्चाङ्गं वर्णलक्षंजपेन्मनुम् ॥ ६९ ॥ अर्चनाङ्गैर्लोकपालैर्ग्रहाद्यैश्चसमीरिता ॥ सर्वग्रहभयेचोरेभूतप्रेतादिसंकुले ॥ १००० ॥ राजद्वारेरणेद्यूते जप्तव्योयंमनूत्तमः ॥ अथातःसम्प्रवक्ष्यामि ऊनविंशेमनुंपरम् ॥ १ ॥ तारोनमोभगवतेवासुदेवायसंवदेत् ॥ पुरुषोत्तमआयुर्मेदेहीत्युक्त्वाचविष्णवे ॥ २ ॥ प्रभविष्णवइत्युक्त्वा नमोन्तस्त्रिंशदर्णकः ॥ मुन्याद्यानारदोनुष्टुप् श्रीकृष्णःपरिकीर्तिताः ॥ ३ ॥ पञ्चाङ्गंद्वादशान्तेहृदानन्दात्मनेतुहृत् ॥ पुरुषोत्तमप्रीत्यात्मने हृदन्तंतुशिरः स्मृतम् ॥ ४ ॥ द्वादशार्णान्तआयुर्मेदेहिस्याज्ज्योतिरात्मने ॥ शिखाथद्वादशार्णान्ते विष्णवेप्रभविष्णवे ॥ ५ ॥ मायात्मनेचकवचंद्वादशार्णततोवदेत् ॥ नमश्चिदात्मनेनेत्रं पञ्चाङ्गविधिरीरितः ॥ ६ ॥ अङ्गलोकेशवज्राद्यैरर्चयित्वाजपेन्मनुम् ॥ लक्षमेकंदशांशेनजुहुयात्पायसैःशुभैः ॥ ७ ॥ दुग्धादिसम्प्लुतैर्दूर्वात्रितयैरेधितेनले ॥ जुहुयाद्दीर्घशालित्वं लभतेनात्रसंशयः ॥ ८ ॥ अथातःसम्प्रवक्ष्यामि विंशेकलियुगेमनुम् ॥ बालवपुषेस्वाहेति सप्तार्णोयमनुर्मतः ॥ ९ ॥ अस्यैकवर्णेनपञ्चाङ्गं षष्ठंद्व्यर्णेनकीर्त्तितम् ॥ मुन्याद्यंध्यानपूजादि सर्वंस्याद्बालकृष्णवत् ॥ १० ॥ सप्तलक्षंजपेन्मन्त्रं नवनीतंहुनेत्त

१ इससप्ताक्षर मन्त्र के एक एक अक्षर को पांच अङ्गों में न्यासकरे और शेष स्वाहा शब्द के दो अक्षरों को छठे अङ्ग में याने अस्त्रायफट् वह के न्यासकरे ॥

थ॥ बालानाभयनाशार्थं रक्षार्थंचततोजपेत् ॥ ११ ॥ अथातःसम्प्रवक्ष्यामि एकविंशकलौमनुम् ॥ गोपालकपदंब्रूयात्ततोवेदधरायच ॥ १२ ॥ वासुदेवा यहुंफट्चस्वाहान्तोष्टादशाक्षरः ॥ नारदोस्यमुनिश्छन्दो गायत्रंकृष्णदेवता ॥ १३ ॥ आचक्रादिभिरङ्गानि पूजापूर्वोक्तवर्त्मना ॥ ग्रहगोपालरक्षादौ प्रशस्तःशान्तिकेपिच ॥१४॥ अथातःसम्प्रवक्ष्यामि द्वाविंशेतुकलौमनुम् ॥ कालीयस्यफणामध्ये दिव्यंनृत्यंकरोतितम् ॥ १५ ॥ नमामिदेवकीपुत्रं नृत्यराजानमद्भुतम् ॥ मुनिर्नारदआख्यातश्छन्दोनुष्टुबुदीरितम् ॥ १६ ॥ कालीयमर्दनःकृष्णो देवतापरिकीर्त्तितः ॥ चतुष्पादैश्चसर्वेण पञ्चाङ्गविधिरीरितः ॥ १७ ॥ अङ्गैरिन्द्रादिभिःपश्चाद्वज्राद्यैरर्चयेच्चतम् ॥ एकलक्षंजपित्वाग्नौ जुहुयादयुतंघृतैः ॥१८॥ विषनाशकरायोगाःकर्तव्यामनुनामुना ॥ एतन्मन्त्रप्रयोगेण त्रस्यन्त्यथमहोरगाः ॥ १९ ॥ एतन्मन्त्रसमोलोके विषघ्नो नैवविद्यते ॥ शुष्कवृक्षस्यपञ्चाङ्गैर्गोमूत्रेणसुवेष्टितैः ॥ २० ॥ निर्मितागुटिकासम्यङ्मन्त्रेणानेनमन्त्रिता ॥ नेत्रेचाञ्जनमात्रेण सैषाविषविनाशिनी ॥ २१ ॥ अथातःसम्प्रवक्ष्यामि त्रयोविंशकलौमनुम् ॥ श्रीमायाकामबीजानि ङेन्तंकृष्णमुदीरयेत् ॥ २२ ॥ ङेयुतंचापिगोविन्दं स्वाहान्तोद्वादशाक्षरः ॥ मुनिर्ब्रह्माचगायत्रं छन्दःकृष्णोस्यदेवता ॥ २३ ॥ भूसूभूरामवेदाक्षिमन्त्रर्णैरङ्गकल्पनम् ॥ कोटिभास्करसङ्काशेद्वारकायांगृहोत्तमे ॥ २४ ॥ बहुभिःकल्पतरुभिर्वेष्टितेरत्नमण्डपे ॥ विद्योतन्मणिवर्यौघचित्रितस्वर्णभित्तिके ॥ २५ ॥ विकचत्पुष्पमालाभिःसहितेऽनङ्गमौक्तिकैः ॥ पुष्परागधराशोभिरत्नविद्योतितान्तरे ॥ २६ ॥ निरन्तरतरद्रत्नसुधाधाराभिवर्षिणः ॥ अधोवैकल्पवृक्षस्य शाखाव्यासस्यपत्रिणः ॥२७॥ फलरत्नप्रदीपालीसमुद्योतितदिङ्मुखे ॥ तद्योगेरविबिम्बाभरत्नसिंहासनाम्बुजे ॥ २८ ॥ सूपविष्टंरमाक्रान्तंद्रुतस्वर्णनिभंस्मरेत् ॥ समेघरविचन्द्रोद्यद्विद्युत्कोटिनिभच्छविम् ॥ २९ ॥ हृद्याङ्गंसर्वतः सौम्यंनानालङ्कारमण्डितम् ॥ अरिशङ्खगदापद्मधारिणंपीतवाससम् ॥३०॥

---

१ श्री ह्रीं क्लीं कृष्णाय गोविन्दायस्वाहा २ एक, एक, एक, तीन, चार और दो अक्षरों को क्रम से षडङ्गों में न्यासकरना। जैसे, श्रींहृदयायनमः इत्यादि ॥

स्पृशन्तंकलशंद्योतन्मणिधारमहर्निशम् ॥ रुक्मिणीसत्यभामेद्वेदक्षवामेस्थि तेप्रभोः ॥ ३१ ॥ कालिन्दीमित्रविन्दाचसत्याजाम्बवतीतथा ॥ सुशीलाल क्ष्मणाचेतिसमावृत्यस्त्रियःस्थिताः ॥ ३२ ॥ ततःषोडशसाहस्रमितानार्यः समन्ततः ॥ स्मर्तव्याःस्वर्णरत्नादिधराढुग्धलसत्कराः ॥ ३३ ॥ यजेदष्टनिधीं स्तासांधनान्यावर्षतोबहिः ॥ ततोग्रेदिक्पतीन्देवान्पूजयेदपिपूर्ववत् ॥ ३४ ॥ पूर्वसञ्चिन्त्यदेवेशंततःपूजांसमाचरेत् ॥ पूर्वोदितप्रकारेणपीठन्यासा वसानकम् ॥ ३५ ॥ कर्मनिर्वर्त्यमन्त्रज्ञोमूलमन्त्रेणमन्त्रवित् ॥ प्राणायाम त्रयंकृत्वाऋष्यादिन्यासमाचरेत् ॥ ३६ ॥ करांगुलीपुकरयोःषडङ्गन्यासमाच रेत् ॥ व्यापकंमूलमन्त्रेणनित्यस्यचकरात्पुनः ॥ ३७ ॥ पुनःषडङ्गंविन्यस्य देहेदेशिकसत्तमः ॥ पुटितंमूलमन्त्रेणमातृकावत्प्रविन्यसेत् ॥ ३८ ॥ मूलेन व्यापकंकृत्वामन्त्रवर्णंततोन्यसेत् ॥ मूर्त्तिपञ्जरकस्थानेमूर्त्तिपञ्जरमाचरेत् ॥ ३९ ॥ देवस्यबाह्यपूजार्थंचोच्यतेयन्त्रमुत्तमम् ॥ गोमयेनोपलिप्तायांभूमौपी ठंप्रविन्यसेत् ॥ ४० ॥ अष्टगन्धादिकेनैवषट्कोणंयन्त्रमुद्धरेत् ॥ कामबीजं कर्णिकायांससाध्यंविलिखेत्ततः ॥ ४१ ॥ क्लींह्रीमष्टादशार्णेनतत्त्वंसम्यक् चवेष्टयेत् ॥ शक्राचसवायूनांकोणेश्रीबीजमालिखेत् ॥ ४२ ॥ अन्त्येष्व ग्न्यादिकोणेषुमायाबीजंप्रकल्पयेत् ॥ कोणसन्धिषुपड्वर्णमन्त्रस्यैकैकमक्ष रम् ॥४३ ॥ बहिरष्टदलंपद्मंकेशरेषुत्रिशस्त्रिशः ॥ विलिखेत्कामतःपश्चाद्वर्णा नथदलेषुच ॥ ४४ ॥ क्रमोत्क्रमाभ्यांमन्त्रस्यकामदेवस्यवर्णितान् ॥ लिखे द्वर्णान्धृतिदलेत्बहिर्वृत्तद्वयंलिखेत् ॥ ४५ ॥ तद्वीथ्यांमातृकावर्णैर्विन्दुयुक्तैश्च वेष्टयेत् ॥ धरापुरेचतुर्दिक्षुरमांमायांचकोणगाम् ॥ ४६ ॥ विलिख्यैवंमहाव श्यंपत्रेस्वर्णादिजेबुधः ॥ सम्यक्संपूज्यप्रजपेच्छ्रुतंचमनुजोत्तमैः ॥ ४७ ॥ करोमिलोकपूज्यंतंराजवश्यंचसर्वदा ॥ अस्मिन्यन्त्रेपीठपूजांकृत्वापूर्वोक्त वर्त्मना ॥ ४८ ॥ तत्रमूर्त्तिंप्रकल्प्यास्यांकृष्णमावाह्यपूजयेत् ॥ आसनप्रमु खैर्मन्त्रीभोज्यान्तैरुपचारकैः ॥ ४९ ॥ चतुर्थेऽङ्गाश्चमूलान्तंभूषणादिप्रपूज येत् ॥ किरीटायनमःशीर्षेकुशलाभ्यांचकर्णयोः ॥ ५० ॥ दक्षोर्ध्वहस्तेचक्राय वामोर्ध्वेकम्बवेनमः ॥ गदांवामाधःकरतलेदक्षेपद्मायवैनमः ॥ ५१ ॥ स्क

न्यादिपादपर्यन्तंनाभ्यन्तोपरिमालिकाम् ॥ वक्षस्थलेश्रीवत्सायकौस्तुभाय गलेनमः ॥ ५२ ॥ पट्सुपूर्वादिकोणेषुषडङ्गानिसमर्चयेत् ॥ वासुदेवादिका मूर्त्तीःकोणकेशरगायजेत् ॥ ५३ ॥ शान्तिंश्रियंभारतींचरतिंदिग्दलकेश रे ॥ ततःपूर्वादिपत्रेषुरुक्मिणीप्रमुखायजेत् ॥ ५४ ॥ दक्षवामक्रमात्पश्चा द्देवदेवंसमर्चयेत् पोडशस्त्रीसहस्राणिदेवदेवस्यशार्ङ्गिणः ॥ ५५ ॥ दला ग्रस्थास्ततःपूज्याःपूजनीयाःक्रमादमी ॥ इन्द्रनीलौचकुमुदोमकरोऽनङ्गक च्छपौ ॥ ५६ ॥ शङ्खपद्मौचतद्बाह्येलोकेशानायुधान्यपि ॥ इत्थंसम्पूज्यगो विन्दंनैवेद्यंहविरर्पयेत् ॥ ५७ ॥ हरेःपायसखण्डादिदधिभिःपरिकीर्त्तितम् ॥ करोद्वर्त्तनताम्बूलवस्त्रादीनिनिवेदयेत् ॥ ५८ ॥ तथाप्रणम्यचोद्वास्यहृत्सि वरणंहृदि ॥ पुनःसञ्चिन्त्यसम्पूज्यप्रजपेच्छक्तितोमनुम् ॥ ५९ ॥ परमभ्यर्च्य देवेशंवदेल्लक्षंजपेन्मनुम् ॥ सर्पिषाजुहुयात्पश्चाद्दशांशंतर्पयेत्ततः ॥ ६० ॥ स्वाभिषेकंविधायाथब्राह्मणान्भोजयेत्ततः ॥ इत्थंसाधितमन्त्रस्तुप्रयोगान्वि दधीतवै ॥ ६१ ॥ पूजयित्वानलेकृष्णंश्वेततत्पुष्पतण्डुलैः ॥ अयुतंघृतसं युक्तैर्हुत्वातद्भस्मधारयेत् ॥ ६२ ॥ समस्तधनधान्यादिस्त्रीवश्यंचभवेद्ध्रुवम् ॥ रक्तार्णैर्लक्षसङ्ख्यंयोहुनेन्मधुरसान्वितैः ॥ ६३ ॥ गोघृतैर्वापिजुहुयात्ततस्यल क्ष्मीःस्थिराभवेत् ॥ रक्तादिवसनाकांक्षीहुनेत्पुष्पैश्चतादृशैः ॥ ६४ ॥ मधुरा क्तैर्घृताक्तैर्वाप्यष्टोत्तरसहस्रकम् ॥ मधुनासंयुतैश्चैवसुगन्धाष्टकसंयुतैः ॥ ६५ ॥ सहस्रंजुहुयान्नित्यंमासमात्रेणसाधकः ॥ राज्ञःपुरोहितोभूत्वाभुक्तिभाग्नात्र संशयः ॥ ६६ ॥ प्रयोगजपहोमादिदशाक्षरसमंमतम् ॥ मन्त्रेणानेनकुर्वीत ताभ्यांमन्त्रोत्तमादरात् ॥ ६७ ॥ न्यासध्यानजपार्चाभिर्होमतोयोभजेन्मनु म् ॥ रत्नकाञ्चनधान्यादिसमृद्धंतस्यमन्दिरम् ॥ ६८ ॥ जायतेहस्तगातस्य सकलावसुधाचिरम् ॥ पुत्रपौत्रकलत्राद्यैर्भुक्त्वाभोगान्बहूनिह ॥ ६९ ॥ अन्तेयातिपरंधामवैष्णवंमुनिदुर्लभम् ॥ अथातःसम्प्रवक्ष्यामिचतुर्विंशकलौ मनुम् ॥ ७० ॥ लक्ष्मीशक्तिमनोजातबीजान्तेदशवर्णकम् ॥ कामाद्यश्चहृद न्तोयंपोडशार्णोमनुर्मतः ॥ ७१ ॥ ऋष्यादिकंदशार्णोक्तंपञ्चाङ्गमपिता दृशम् ॥ वराभयकराभ्यांतमालिङ्गन्तंप्रियाङ्गकम् ॥ ७२ ॥ अब्जोत्पललस

द्धस्तपद्मयालिङ्गितंमुदा ॥ धारयन्तंरथाङ्गंचशङ्खंसव्यकरेपरे ॥ ७३ ॥ एवं ध्यात्वाजपेन्मन्त्रंदशलक्षंसमाहितः ॥ तावत्संख्यसहस्राणिहुनेदाज्यमनुत्तमम् ॥ ७४ ॥ तर्पणाद्यैर्भवेन्मन्त्रःसिद्धोशेषफलप्रदः ॥ पूजाचात्राविधातव्यापूर्वोक्तद्वादशार्णवत् ॥ ७५ ॥ अथातःसम्प्रवक्ष्यामिपञ्चविंशेकलौमनुम् ॥ मायाश्रीसहितोमन्त्रोदशार्णोद्वादशाक्षरः ॥७६॥ विधानमस्यविज्ञेयंषोडशार्णोक्तवर्त्मना ॥ यस्मिन्मन्त्रेयस्यमनोरमतेदिष्टकर्मतः ॥७७॥ देवःप्रागुक्तवत्त्रमन्त्रसिद्धिर्द्रुतंभवेत् ॥ अथातःसंप्रवक्ष्यामिक्रमाज्जातायुगत्रये ॥ ७८ ॥ येमन्त्रादशवर्णस्यभेदाःसिद्धिविधायकाः ॥ काममायेन्दिरापूर्वोमायाश्रीकामपूर्वकः ॥ ७९ ॥ लक्ष्मीमायास्मराद्यश्चमन्त्रराजोदशाक्षरः ॥ त्रयोदशाक्षरामन्त्रास्तएवैतेयुगत्रये ॥८०॥मुन्याद्यन्तुविधिस्तेषांपङ्क्त्यामुक्तविधानमः ॥ ध्यानन्तृतीयमन्त्रेतुदशार्णेसमुदाहृतम् ॥ ८१ ॥ विंशार्णोक्तंद्वितीयेतुप्रथमेथनिगद्यते ॥ दरारिवाद्यशब्देनरञ्जिताशामुखाम्बुजम् ॥ ८२ ॥ वंशमादायहस्ताभ्यांवादयन्तंमुदान्वितम् ॥ रविमण्डलगंकृष्णंध्यायेदिष्टफलाप्तये ॥ ८३ ॥ अङ्गेन्द्रादिकवज्राद्यैरर्चनासर्वसिद्धिदा ॥ बाणलक्षंजपित्वाग्रेदशांशंहविषाहुनेत् ॥ ८४ ॥ तर्पणादिततःकृत्वासिद्धमन्त्रःसमाचरेत् ॥ कान्तिपुष्टिघृनाद्यन्नकामोमन्त्रैःप्रयोगकान् ॥ ८५ ॥ दशाष्टादशवर्णोक्तानष्टाविंशेकलाविति ॥ अथातःसम्प्रवक्ष्यामिचोनत्रिंशन्मितेकलौ ॥ ८६ ॥ अष्टादशाक्षरोमन्त्रःकामान्तोत्रप्रकीर्तितः ॥ नारदोस्यमुनिश्छन्दोगायत्रंकृष्णदेवता ॥८७॥ षड्दीर्घान्वितकामेनषडङ्गविधिरीरितः[1] ॥ बिभ्राणंदक्षिणेहस्तेससितंदुग्धलड्डुकम् ॥ ८८ ॥ वामेनवीनमाज्यस्यपिण्डंसुन्दरमद्भुतम् ॥ वैयाघ्रनखसंशोभिगलंसान्द्रघनच्छविम् ॥ ८९ ॥ एवंध्यात्वाजपेन्मन्त्रमेकलक्षमनन्यधीः ॥ दध्नाश्रीर्मधुनातेजोघृतेनायुर्विवर्धते॥९०॥ अथातःसम्प्रवक्ष्यामिमन्त्रंत्रिंशत्तमेकलौ ॥ ऐंक्लींकृष्णायचेत्युक्त्वागोविन्दायरमां[2]वदेत्॥९१॥ गोपीजनवल्लभायस्वाहान्तोविंशवर्णकः॥सर्वैश्वर्यप्रदोनित्यंसाधकानामभी

---

१ क्लां, क्लीं, क्लूं, क्लैं, क्लौं, क्लः इन छः बीजों को क्रमसे षडंगों में न्यास करे
२ श्रीं बीज ॥

ष्टदः ॥ ९२ ॥ अष्टादशोकलिप्रोक्तंमुन्याद्यंचाङ्गकल्पनम् ॥ विंशाक्षरोक्तवज्ज्ञे या सपर्य्याध्यानमुच्यते ॥ ९३ ॥ दक्षोर्ध्वेस्फटिकींमालांवामेनद्रुतपुस्तकम् ॥ अधःकराभ्यांमुरलींवादयन्तंमनोहरम् ॥ ९४ ॥ मयूरपक्षसम्बद्ध केशजाल श्रियान्वितम् ॥ सर्वज्ञंमुनिवृन्देन सेवितंसर्वदैवतम् ॥ ९५ ॥ युवतीवेषलाव ण्यरमणीयतरंस्मरेत् ॥ पञ्चपक्षेषुवेदत्रिवर्णैःपञ्चाङ्गकल्पनम् ॥ ९६ ॥ वे दलक्षंमनुंजप्त्वा किंशुकैर्मधुनाप्लुतैः ॥ दशांशंजुहुयादग्नौ साधकोमन्त्र सिद्धये ॥ ९७ ॥ तर्पणादिततःकुर्यान्मन्त्रीपूर्वोक्तवर्त्मना ॥ मनुमेनंजपेद्यस्तु देवंसम्पूज्ययत्नतः ॥ ९८ ॥ गङ्गातरङ्गकल्लोलवाग्विलासमनोहरा ॥ गद्य पद्यात्मिकातस्य ब्रुवतोभारतीसदा ॥ ९९ ॥ अशेषवेदवेदार्थसर्वशास्त्रवि शारदा ॥ राज्यैश्वर्यंपरंप्राप्यभुक्त्वाभोगाननेकशः ॥१००॥ ध्यानंपूर्वोक्त मप्यन्तेदेहंत्यक्त्वाहरिंव्रजेत् ॥ अथातःसम्प्रवक्ष्यामिचैकत्रिंशोन्मितेकलौ ॥ १ ॥ तारोनमोभगवतेनन्दपुत्रायनन्दच ॥व्रजगोपीजनेत्युक्त्वातदन्तेऽन्त वल्लभः ॥ २ ॥ स्वाहाष्टाविंशदर्णोयंमुनिरस्यतुनारदः ॥ उष्णिक्छन्दोदेवता चनन्दपुत्रोखिलेष्टदः ॥ ३ ॥ आचक्रादिपदैःप्राग्वत्पञ्चाङ्गंपरिकीर्तितम् ॥ रत्नपात्रंकरेदक्षे हेमजातंचवामतः ॥ ४ ॥ वहन्तंमध्यगंकृष्णं स्त्रीभ्यामालिङ्गि तंसदा ॥ अङ्गलोकेशवज्राद्यैःपूजनंपरिकीर्तितम् ॥ ५ ॥ लक्षंजपेत्प्रजुहुया द्द्विषासर्वसिद्धये ॥ अथातःसम्प्रवक्ष्यामि द्वात्रिंशत्प्रमितेकलौ ॥ ६ ॥ नन्दपुत्रस्यशब्दान्ते श्यामलाङ्गायकीर्तयेत् ॥ ततश्चबालवपुषेकृष्णायपदमु च्चरेत् ॥ ७ ॥ गोविन्दायदशार्णचद्वात्रिंशद्वर्णईरितः ॥ मुन्याद्यानारदो नुष्टुप्कृष्णःपूजादिकास्मये ॥ ८ ॥ अष्टादशार्णकप्रोक्तप्रयोगाइहवर्णिताः ॥ अथातःसम्प्रवक्ष्यामित्रयस्त्रिंशमितेकलौ ॥ ९ ॥ ॐ श्रीं ह्रीं हृद्भगवतेनन्द पुत्रायबालव ॥ पुषेचश्यामलाङ्गाय ततश्चाष्टादशाक्षरः ॥ १० ॥ द्विचत्वा रिंशदर्णोयं छन्दोनुष्टुब्विधिर्मुनिः ॥ कृष्णोदेवस्यपूजाद्यं प्राग्वत्सर्वंप्रकल्प येत् ॥ ११ ॥ रामैकादशपक्षेषु धृत्यर्णैरङ्गकल्पनम् ॥ अन्यत्सर्वंप्रयोगाद्य मष्टाविंशतिवर्णवत् ॥ १२ ॥ मन्त्रोयंसकलैश्वर्यकांक्षितार्थैकसाधनम् ॥ अ

---

१ नन्दपुत्रायश्यामलाङ्गाय बालवपुषेकृष्णायगोविन्दाय गोपीजनवल्लभायस्वाहा ॥

थातःसम्प्रवक्ष्यामि चतुस्त्रिंशात्मिकेकलौ ॥ १३ ॥ तारोनमोभगवतेरुक्मि
णीवल्लभायच ॥ स्वाहान्तःषोडशार्णोयं मन्त्रराण्नारदोमुनिः ॥१४॥ छन्दो
नुष्टुब्देवतास्यरुक्मिणीवल्लभःस्मृतः ॥ भूद्धयब्धिससनेत्रार्णैःपञ्चाङ्गंपरिकी
र्तितम् ॥ १५ ॥ कलयाश्यामलंकृष्णं नानालङ्कारमण्डितम् ॥ पीतकौशेय
सद्वस्त्रं स्वर्णवेत्रविभूषितम् ॥ १६ ॥ करपद्मेनदद्धेण लिम्पन्तंवामपाणिना ॥
वराभीष्टवर्तीदेवीं मञ्चगांकाञ्चनप्रभाम् ॥ १७ ॥ वामहस्तधृताम्भोजांतां
समालिङ्गितांप्रियाम् ॥ अङ्गैर्नारदमुख्यैश्च लोकपालैस्तदायुधैः ॥ १८ ॥
पूजनंधर्मकर्मार्थं निःश्रेयसफलप्रदम् ॥ सप्तलक्षंजपेन्मन्त्रं हुनेन्मधुरलोलि
तैः ॥ १९ ॥ दशांशंकमलैःपश्चात्तर्पणादिसमाचरेत् ॥ महदैश्वर्य्यमोक्षादि
कांक्षिभिःसेवितोमनुः ॥ २० ॥ अभीष्टकृत्प्रयोगाद्यंविज्ञेयन्तुदशार्णवत् ॥ अ
थातःसम्प्रवक्ष्यामि पञ्चत्रिंशन्मितेकलौ ॥ २१ ॥ लीलादण्डंसुशिक्षन्तंगोपी
जनपदंव्रजेत् ॥ दोर्दण्डंबालरूपेति मेघश्यामपदंतथा ॥ २२ ॥ भगवन्प्रभु
विष्णोस्यादेवन्तुत्रिंशदक्षरः ॥ नारदोस्यमुनिश्छन्दो गायत्रीदेवतामता ॥
२३ ॥लीलादण्डधरःकृष्णोदेवस्तुपरिकीर्तितः ॥ वामहस्ताम्बुजस्थेनलीलाद
ण्डेनगोपिकाः ॥ २४ ॥ पुराङ्गनाश्चसाकूतंमोहयन्तंमहाप्रभुम् ॥ आत्मनःप्रि
यमित्रस्यस्कन्धहस्तान्यहस्तकम्॥२५॥हतकंसंस्मरेत्कृष्णमप्रमेयपराक्रमम्॥
अङ्गैरिन्द्रादिवज्राद्यैरर्चनंचसमीरितम् ॥ २६ ॥ लक्षमेकंजपेन्मन्त्रंदशांशं
तिलतण्डुलैः ॥ त्रिमध्वक्तैर्हुनेत्पश्चान्मार्जनादिसमाचरेत् ॥ २७ ॥ शुभ
गःसजगद्वन्द्योरमायाभवनंभवेत् ॥ अथातःसम्प्रवक्ष्यामिषट्त्रिंशेयःकलौ
भवेत् ॥ २८ ॥ गोवल्लभायस्वाहेतिमन्त्रःसप्ताक्षरोमतः ॥ नारदोमुनिरस्य
स्यादुष्णिक्छन्दस्तुदेवता ॥ २९ ॥ गोवल्लभोहरिःप्रोक्तोगवांवृद्धिकरःपरः॥
दशार्णोक्तविधानेनपञ्चाङ्गविधिरीरितः ॥ ३० ॥ इन्द्रनीललसत्कान्तिंपीतवा
ससमच्युतम् ॥ सर्पारिपिच्छनिकरैःसम्यक्क्लृप्तावतंसकम् ॥ ३१ ॥ वंशं
वामकरेयष्टिंदक्षेपाशंचबिभ्रतम् ॥ कपिलांवनमध्यस्थामाह्वयन्तंचगांमुदा ॥
३२ ॥ एवंयजेत्ततस्तस्यपीठेपूर्वोदितेशुभे ॥ आदावङ्गानिसम्पूज्यपूजये
द्योगणाष्टकम् ॥ ३३ ॥ पीतोरक्तश्चसिन्दूरःश्वेतोनीलोहरिद्भवेत् ॥ कालः

कर्णात्मकश्चेतिततःप्रोक्तंगणाष्टकम् ॥ ३४ ॥ पुरन्दरमुखास्तेषामायुधानि ततःपरम् ॥ ध्यात्वामन्त्रंजपेत्तस्यवर्णलक्षंजितेन्द्रियः ॥ ३५ ॥ तत्सहस्रंहुनेन्मन्त्रीगोदुग्धेनपुरोक्तवत् ॥ गोदुग्धैःप्रत्यहंसाग्रंसहस्रंजुहुयाच्चयः ॥ ३६ ॥ मोक्षार्थंचगवांवृद्धिर्जायतेतस्यभूयसी॥ दशाक्षरोक्तवत्सर्वंविधानंचास्यकीर्त्तितम् ॥ ३७ ॥ सर्वेप्रयोगाःसिद्ध्यन्तिसम्पूर्णाःस्युर्मनोरथाः ॥ अथातःसम्प्रवक्ष्यामिसप्तत्रिंशोन्मितेकलौ ॥ ३८ ॥ तारोनमोभगवतेश्रीगोविन्दायसंवदेत् ॥ द्वादशार्णोमनुःप्रोक्तोनारदोस्यमुनिर्मतः ॥ ३९ ॥ गायत्रीछन्दउद्दिष्टंश्रीकृष्णोदेवतामनोः ॥ चन्द्रनेत्राब्धिबाणार्णैःसम्पूर्णेनाङ्गकल्पनम्[1] ॥४० ॥ कल्पद्रुमतलेरम्येरत्नसिंहासनेशुभे ॥ सर्वलक्षणसंयुक्तंनिविष्टंनन्दनन्दनम् ॥ ४१ ॥ प्रस्नुतस्तनभारेणगोवृन्देनयुतंभवेत् ॥ मेघश्यामंवरंदण्डंहस्ताभ्यांबिभ्रतंतथा ॥ ४२ ॥ पद्मायताक्षंशक्रस्यहस्तिकुम्भामृतस्यतु ॥ धारयासिच्यमानंचध्यायेद्विष्णुंतमव्ययम् ॥४३॥ रुक्मिणीसत्यभामादिभागयोर्वामदक्षयोः ॥ शक्रमग्रेपृष्ठतस्तुसुरभिंचसमर्चयेत् ॥ ४४ ॥ रुद्रादिवरुणान्तेपुकेशरेषु चतुर्ष्वपि ॥ देवाग्राद्दशपत्रेषुकालिन्दीरोहिणीतथा ॥ ४५ ॥ नाग्नजितीसुनन्दाचमित्रविन्दासुलक्षणा ॥ जाम्बवतीसुशीलाचचतुष्कोणेषुभूपुरे ॥ ४६ ॥ आग्नेयादिषुसम्पूज्याःकिङ्किणीदामयष्टिकाः ॥ पद्मञ्चतत्पुरोभागेश्रीवत्संकौस्तुभंतथा ॥ ४७ ॥ वनमालांभूपुरेथदेवाग्रादिप्रदक्षिणम् ॥ शार्ङ्गगदांतुचक्रंचवसुदेवंचदेवकीम् ॥ ४८ ॥ नन्दंयशोदांधेनूश्चगोपालांश्चापिगोपिकाः ॥ दशदिक्षुप्रपूज्यैवंलोकपानायुधानिच ॥ ४९ ॥ देवाग्रतस्तस्यवामेकुमुदंकुमुदाक्षकम् ॥ पुण्डरीकंवामनंचशंकुकर्णंततःपरम् ॥ ५० ॥ सर्वनेत्रञ्चसुमुखंसुप्रतिष्ठितमेवच ॥ देवस्यान्तरतोवामेविष्वक्सेनंसमर्चयेत् ॥ ५१ ॥ एवंसन्निन्यदेवेशंवर्णलक्षंजपेन्मनुम् ॥ तत्सहस्राणिगोक्षीरैर्जुहुयात्तर्पयेत्ततः ॥ ५२ ॥ आसनाराधनान्तन्तुप्राग्वत्कुर्यादतन्द्रितः ॥ दिनादावथमध्याह्नेसमयत्रितये

---

[1] एक, दो, चार,पांच, और सब अच्चरों से षडंगन्यास करे जैसे ॐहृदयायनमः नमःशिरसेस्वाहा, भगवतेशिखायैवषट् गोविन्दायकवचायहुम्, ॐनमोभगवतेश्रीगोविन्दायनेत्राभ्यांवौषट् ॥

थवा ॥ ५३ ॥ गोष्ठाभ्यांसततंकृष्णमर्चयेद्विधिनामुना ॥ भक्त्यापरमयोपेतो गोपालाँश्चसमर्चयेत् ॥५४॥ दीर्घायुर्निर्भयश्चैवधनधान्यधरादिभिः॥ पुत्रपौत्रैश्चसन्मित्रैराज्यान्तेविष्णुमन्दिरम् ॥ ५५ ॥ तस्माद्भजेदमुंमन्त्रंद्रुतंसिद्धिप्रदंशिवे ॥ ५६ ॥ अथातःसम्प्रवक्ष्यामित्वष्टाविंशमितेकलौ ॥ ५७ ॥ वदेद्वेकुलनाथायनमोन्ताष्टाक्षरोमनुः ॥ अजोमुनिश्चगायत्रीछन्दोदेवोहरिर्मतः ॥ ५८ ॥ वर्णद्वयेनपञ्चाङ्गंसकलेनप्रकल्पयेत् ॥ कुण्डलाभ्यांलसन्नेत्रंनीलाङ्गाभंमहाद्युतिम् ॥ ५९ ॥ मञ्चान्तिकेचधावन्तंमदनेनपुरान्वितम् ॥ ग्रैवेयाङ्गदहारादिभूषणैर्जयशोभितम् ॥ ६० ॥ नानामुनिगणैर्हृष्टंसेवितंसर्वलीलया ॥ पूर्वोदितयजेत्पीठेचतुर्दिक्ककेशरेषुच ॥६१॥ चतुरङ्गानिसम्पूज्यचास्त्रंकोणेषुपूजयेत् ॥ दिक्पत्रेषुयजेन्मूर्तीर्वासुदेवादिकास्तथा ॥६२॥ रुक्मिणींसत्यभामांचलक्ष्मणांजाम्बवतींतथा ॥ तद्बहिर्लोकपालानांवज्रादीनांचपूजनम् ॥ ६३ ॥ वर्णलक्षंजपेन्मन्त्रंतत्सहस्रंततोहुनेत् ॥ पद्मैर्बिल्वसमिद्भिर्वापायसैर्घृतसंयुतैः ॥ ६४ ॥ तर्प्पणादिततःकृत्वासमृद्धिर्महतीभवेत् ॥ अथातःसम्प्रवक्ष्यामिकलौ[1]गोत्रिमितंहरिम् ॥ ६५ ॥ तारं[2]रमांह्रियंकामंश्रीकृष्णायततोवदेत् ॥ श्रीगोविन्दायचेत्युक्त्वाश्रीगोपीजनवल्लभः ॥ ६६ ॥ ङेन्तोबीजत्रयंचाद्यंपञ्चविंशाक्षरोमनुः ॥ नारदोमुनिराख्यातोगायत्रीछन्दउच्यते ॥ ६७ ॥ श्रीकृष्णोबलदेवेनयुक्तःप्रोक्तोस्यदेवता ॥ वेदैर्वेदेषुगोरामसम्पूर्णेनष[3]डङ्गकम् ॥ ६८ ॥ सेवितौवैनतेयेनमेदिनीमण्डपालितौ ॥ रमन्तौदिव्यभावेनबलकृष्णौचसंस्मरेत् ॥ ६९ ॥ पूजाजपप्रयोगादिसर्वंज्ञेयंदशार्णवत् ॥ अथातःसम्प्रवक्ष्यामिचत्वारिंशत्कलौमनुम् ॥७०॥ एकच्छन्दर्षिदेवादिप्रयोगन्यासकावपि ॥ क्लमित्येकाक्षरोमन्त्रःसर्वकामसमृद्धिदः ॥७१॥ नारदोस्यमुनिर्देवोगायत्रंछन्दउच्यते ॥ देवस्तुबालगोपालः[4]षड्दीर्घान्वितकामतः ॥७२॥

---

१ गो—नव त्रि-तीन याने उन्तालीस २ ओं श्रीं ह्रीं क्लीं श्रीकृष्णायश्रीगोविन्दायश्रीगोपीजनवल्लभाय ओं श्रीं ह्रीं ३ ओं श्रीं ह्रीं क्लीं हृदयायनमः ओं श्रीकृष्णाय शिरसेस्वाहा श्रीगोविन्दायशिखायैवषट् श्री गोपीजनवल्लभाय कवचायहुम् ॥ ओं श्रीं ह्रीं नेत्राभ्यांवौषट् ओं श्रीं ह्रीं क्लीं श्रीकृष्णायश्रीगोविन्दाय श्री गोपीजनवल्लभाय ओं श्रीं ह्रीं अस्त्रायफट् ४ क्लां क्लीं क्लूं क्लैं क्लौं क्लः इन छः बीजों से षडङ्गन्यास करे जैसे क्लां हृदयायनमः क्लीं शिरसेस्वाहा इत्यादि ॥

षडङ्गानिततोध्यायेत्संस्थितंकमलादिके ॥ कृष्णंपद्मासनेगुञ्जत्किङ्किणीविल सत्कटिम् ॥ ७३ ॥ हस्ताभ्यांनवनीतंचपायसंचापिबिभ्रतम् ॥ कण्ठदेशेऽन्या घ्रनखंस्वर्णपट्टविराजितम् ॥ ७४ ॥ मेघश्यामंचपरितोगोपगोपीजनावृत म् ॥ यजेत्पूर्वोदितेपीठेवह्नीशासुरवायुषु ॥ ७५ ॥ हृदादिकवचान्तानिचार्चे दङ्गानिसाधकः ॥ कृष्णंतत्पुरतोभ्यर्च्यदिक्षुतस्तद्बहिःसुरान्॥ ७६ ॥ आख ण्डलमुखांश्चैववज्रादीन्यायुधानिच ॥ लक्षंजपेद्धुनेद्धेनोःपयसाद्ययहविषात था ॥ ७७ ॥ कृत्वाब्राह्मणभोज्यान्तंस्वेप्सितार्थाँल्लभेन्नरः ॥ अथातःसम्प्रव क्ष्यामिकलावेकचतुर्मिते ॥ ७८ ॥ सएवकृष्णःप्रकटःकृष्णोक्षर्णोमनुर्मतः ॥ विप्रादिपादजान्तास्तुनाममन्त्राधिकारिणः ॥ ७९ ॥ अथातःसम्प्रवक्ष्यामि द्विचतुस्सम्मितेकलौ ॥ ॐकृष्णइतिमन्त्रोयंत्रिवर्णःपरिकीर्तितः ॥ ८० ॥ मुन्यादिकप्रयोगान्तंसर्वंपूर्ववदस्यतु ॥ मुनिभिस्तुविशेषेणसंसेव्योभुक्तिमुक्त ये ॥ ८१ ॥ अथातःसम्प्रवक्ष्यामित्रिचतुस्सम्मितेकलौ ॥ ॐकृष्णायेतिम न्त्रोयंचतुर्वर्णोखिलेष्टदः ॥ ८२ ॥ मुन्यादिकंप्रयोगान्तंसर्वंप्राग्वत्समाचरेत्॥ अथातःसम्प्रवक्ष्यामिवेदेवेदामितेकलौ ॥ ८३ ॥ कृष्णायहृदयंपञ्चवर्णःप्राग्व ज्जपादिकम् ॥ अथातःसायकक्षत्त्रसम्मितेकामबीजयोः ॥ ८४ ॥ मध्येकृ ष्णायपञ्चार्णःसर्वंपूर्ववदेवहि ॥ अथातःषट्कृतामितेगोपालायाग्निगेहिनी॥ ८५ ॥ षडक्षरोयंमुन्यादिप्रयोगान्तंचपूर्ववत् ॥ अथातोनँगवेदाख्येक्लींकृष्णा याग्निगेहिनी ॥ ८६ ॥ षडक्षरोमन्त्रराजोजपध्यानादिपूर्ववत् ॥ अथाष्ट वेदतुल्येतुकृष्णायेतिपदंवदेत् ॥ ८७ ॥ गोविन्दायेतिसप्तार्णःप्राग्वन्मुन्या दिकंमतम् ॥ अथगोवेदतुल्येतुश्रीमायाकामबीजतः ॥ ८८ ॥ कृष्णायकाम बीजंचप्राग्वत्सप्ताक्षरोमनुः ॥ अथातःसम्प्रवक्ष्यामिपञ्चाशत्प्रमितेदधि ॥ ८९ ॥ भक्षणायद्विठान्तोयमष्टवर्णःप्रकीर्त्तितः ॥ अथैकपञ्चप्रमितेसुप्रसन्नात्मनेन

---

१ इन्द्रादिदिक्पाल २ चवालीस ३ कृष्णायनमः ४ पैंतालीस ५ कामबीज याने क्लीं इसबीज के बीचमें कृष्णाय पदके जोड़नेसे क्लीं कृष्णाय क्लीं यह पांच अक्षरकामन्त्र होता है ६ गोपालायस्वाहा ७ सैंतालीस ८ उनचास ९ श्रीं ह्रीं क्लीं कृष्णाय क्लीं १० दधिभक्षणायस्वाहा ॥

मः ॥ ६० ॥ अष्टवर्णःसमाख्यातोमुन्याद्यंपूर्ववन्मतम् ॥ अथद्विपञ्चप्रमिते कामंकृष्णायसंवदेत् ॥ ६१ ॥ गोविन्दायपुनःकामोनवार्णःपरिकीर्त्तितः ॥ अथत्रिपञ्चप्रमितेकृष्णोगोविन्दएवच ॥ ६२ ॥ ङेन्तश्चहृदयान्तश्चमनुःप्रो क्तोनवाक्षरः ॥ अथवेदपुतुल्येपुकामंग्लौंकाममुच्चरेत् ॥ ६३ ॥ श्यामलाङ्गाय हृदयंदशार्णःपरिकीर्त्तितः ॥ अथपञ्चेषुतुल्येतुबालान्तेवपुषेवदेत् ॥ ६४ ॥ कृष्णायवह्निजायान्तोमन्त्रःप्रोक्तोदशाक्षरः ॥ अथषड्बाणतुल्येतुक्लींकृष्णा यपरेतिच ॥ ६५ ॥ नन्देतिबालवपुषेस्वाहापञ्चदशाक्षरः ॥ अथातःसम्प्रवक्ष्या मिसप्तबाणमितेकलौ ॥६६ ॥ कामबीजद्वयंकृष्णपदंवेदार्णउच्यते ॥ मुन्या दयःषडङ्गानिचैकार्णोक्तेनवर्त्मना ॥ ६७ ॥ तद्ध्यानंविशेषोत्रकल्पवृक्षतले स्थितम् ॥ अङ्गैरावरणंपूर्वंनिधिभिस्तदनन्तरम् ॥ ६८ ॥ महापद्मश्चपद्मश्च शङ्खोमकरकच्छपौ ॥ मुकुन्दकुन्दनीलाश्चखर्वश्चनिधयोनव ॥ ६९ ॥ लो कपालैश्चवज्राद्यैःपश्चादावरणद्वयम् ॥ एवंध्यात्वाजपेन्मन्त्रंवेदलक्षंजितेन्द्रि यः ॥ १२०० ॥ दशांशंजुहुयादग्नौश्रीफलैर्मधुरप्लुतैः ॥ तर्प्पणादिततःकुर्य्या त्पूर्वोक्तंमन्त्रसिद्धये ॥ १ ॥ मधुरत्रयसद्बुद्ध्याशुद्धतोयैर्दिनागमे ॥ द शपूर्णप्रयोगाश्चकर्त्तव्याःसाधकेनतु ॥ २ ॥ भुक्तिप्रदोमुक्तिदश्चसर्वकामप्र दस्त्विति ॥ अथातःसम्प्रवक्ष्यामिवसुबाणमितेकलौ ॥ ३ ॥ कृष्णस्यादौद्व योःकामबीजयोरंकयोजनात् ॥ मन्त्रान्तरेयुगेवृत्तोनारदाद्यैरुपासितः ॥ ४ ॥ षड्दीर्घभाजाबीजेनतादृशेनाङ्गकल्पनम् ॥ ततोध्यायेत्कल्पवृक्षमूलेचान्दो लिकास्थितम् ॥ ५ ॥ किङ्किणीसंवृतकटिंनीलकुञ्चितमूर्द्धजम् ॥ चित्रन्या संसरोजाक्षंतिलकाभूषणान्वितम् ॥ ६ ॥ आरक्तवर्णगोपीभ्यांदशायांक लितंमुहुः ॥ प्राग्वत्पूजादिकंसर्वपुरश्चर्य्यातथेरिता ॥ ७ ॥ रक्तपद्मैर्हुनेन्म

---

१ क्लीं कृष्णायगोविन्दाय क्लीं २ कृष्णायगोविन्दायनमः ३ क्लीं ग्लौं क्लीं श्यामलाङ्गा यनमः ४ पचपन में ५ बालवपुषे कृष्णायस्वाहा ६ छप्पनमें ७ क्लीं कृष्णायपरानन्द बालवपुषे स्वाहा ८ क्लीं क्लीं कृष्णः ॥ ९ क्लीं कृष्णः १० क्लां क्लीं क्लूं क्लैं क्लौं क्लः इनछः अक्षरोंको षडंगों में न्यासकरे एक एकको एक एक अंगमें जैसे क्लां हृदयायनमः क्लीं शिर सेस्वाहा इत्यादि ॥

न्त्रीरक्तपत्रैर्दशांशतः ॥ तर्पणादिततःकृत्वागुरुंयत्नेनतोषयेत् ॥ ८ ॥ मधुरत्रयसंसिक्तामारक्तांशालिमञ्जरीम् ॥ जुहुयान्नित्यशोसार्धशतमेकेनमन्त्रतः ॥ ६ ॥ मण्डलात्सर्वशस्यादिवस्तुजातंतदाभवेत् ॥ अथातःसम्प्रवक्ष्यामिनवबाणमितेकलौ ॥ १० ॥ वाग्लज्जाक्लींरमाह्रींश्रींक्रींत्रींजयजयेतिच ॥ कृष्णकृष्णेतिचाभाष्यनिरन्तरपदंवदेत् ॥ ११ ॥ क्रीं त्रीं नित्यप्रमुदितरेतसेपदमुच्चरेत् ॥ नित्यक्रियायकृष्णायक्लींगोपीजनवल्लभा ॥१२॥ यस्वाहाश्रीं चह्रींचेतिद्विपञ्चाशल्लिपिर्मनुः ॥ आनन्दनारदमुनिर्विराट्छन्दोस्यदेवता ॥ १३ ॥ सम्मोहनहरिःप्रोक्तोमन्त्रवर्णैःषडङ्गकम् ॥ आद्यन्तेचत्रिभिर्बीजैःसंयुक्तैश्चक्रमेणच ॥१४ ॥ अष्टभीरविभिर्नेत्रैर्नवभिश्चनखेन्दुभिः॥ न्यासादिकंततःकृत्वादेहेपीठंप्रकल्प्यच ॥ १५ ॥ हस्तद्वयेदशार्णोक्तविधिनान्यासमाचरेत् ॥ षडङ्गान्यस्यकामानांपञ्चपञ्चप्रविन्यसेत् ॥ १६ ॥ त्रिवारंमूलमन्त्रेणव्यापकंचततश्चरेत् ॥ कामसम्पुटितान्न्यस्यमातृकार्णान्यथापुरा ॥ १७ ॥ दशतत्त्वादिकंन्यस्यतदन्तेमूर्त्तिपञ्जरम् ॥ सृष्टिस्थितिषडङ्गानिवर्णान्न्यस्येच्च पूर्ववत् ॥ १८ ॥ सर्वमन्यत्पुरोक्तेनविधानेनविधायवै ॥ साधकःसर्वलोकेशंध्यायेत्सम्मोहनंहरिम् ॥ पुरेचमणिजेरम्येपर्वताम्बुधिमध्यगे ॥ १६ ॥ भानांशोभाविचित्रेणमणिभिर्दीपितान्तरे ॥ उद्यानवापिकावाटीनानाजनमनोहरे ॥ २० ॥ तत्रापिरम्येविपुलेविश्वकर्म्मविनिर्मिते ॥ नानारत्नगणाकीर्णेगेहेसञ्चिन्तयेद्धरिम् ॥ २१ ॥ नानालङ्कारशोभाढ्यंश्रीवत्साङ्कितवक्षसम् ॥ नानासुगन्धरुचिरमङ्कन्यस्तकराम्बुजम् ॥ २२ ॥ विहिताम्भोजयुग्माभ्यांविशयातांचकामतः ॥ आलिंग्यतांचबाहुभ्यांश्वेतमुक्ताविभूषितम् ॥ २३ ॥ स्वदक्षस्थितयाश्लिष्टंश्यामयासत्यभामया ॥ चक्रवज्जाम्बवत्याचश्लिष्टंवामस्थयातथा ॥ २४ ॥ कालिन्द्याचपरिश्लिष्टमग्रदेशस्थयाविभुम् ॥ पद्मंगदां

१ ऐं ह्रीं श्रीं क्लीं ह्रीं श्रीं क्रीं त्रीं जयजय कृष्ण कृष्ण निरन्तरं क्रीं त्रीं नित्यप्रमुदितरेतसे नित्य क्रियाय कृष्णाय क्लीं गोपीजनवल्लभायस्वाहा श्रीं ह्रीं यह बावन अक्षरका मन्त्र है ॥

२ आठ, बारह, दो, नव, बीस और एक अक्षरोंको क्रमसे षडङ्गों में न्यासकरे जैसे, ऐं ह्रीं श्रीं क्लीं ह्रीं श्रीं क्रीं त्रीं हृदयायनमः इत्यादि ॥

शङ्खचक्रेचतुर्भिर्दधतंकरैः ॥ २५ ॥ करद्वयलसद्वंशविभावितमुखाम्बुजम् ॥ चतुर्दिक्षुबहिर्देवैर्मुनिभिःसेवकैर्वृतम् ॥ २६ ॥ एवंध्यात्वातुपूर्वोक्तेपीठेदेवंसम र्चयेत् ॥ विंशार्णोदितयन्त्रंचसम्यगत्रविलेखयेत् ॥ २७ ॥ मध्यस्थपीठपरितः पूर्वादिविलिखेत्क्रमात् ॥ ह्रींत्रीं ह्रींत्रींचबीजानिशिष्टैर्वर्णैःप्रवेष्टयेत् ॥ २८ ॥ दशबीजैर्विरहितैर्द्विचत्वारिंशत्सम्मितैः ॥ षट्कोणेथक्रमाल्लेख्यंऐंह्रींश्रींईश कोणतः ॥ २९ ॥ पुनस्तान्येवनैर्ऋत्याःशेषंप्राग्वत्समाचरेत् ॥ अर्घ्यपात्रा दिसंस्थाप्यमध्यबीजेहरिंयजेत् ॥ ३० ॥ यथाध्यानंचतत्पूर्वादिष्वर्च्यारुक्मि णीमुखाः ॥ अङ्गानिषट्सुकोणेषुवामाङ्केसर्वगांयजेत् ॥ ३१ ॥ दलमध्येतु लक्ष्म्याद्यास्तदग्रेधनुरादिकाः ॥ यजेत्कृष्णाग्रमध्येतुपृष्ठगंचाञ्जनंधनुः ॥ ३२ ॥ शङ्खपद्मौनिधीपूज्यौशुक्लवर्णौतुपार्श्वयोः ॥ सर्वदाचापिवर्षन्तौधारा भिर्वस्तुसञ्चयम् ॥ ३३ ॥ हेरम्ब[1]ंशाम्ब[2]नामानंदुर्गांचतदनन्तरम् ॥ विष्वक्सेनं चकोणेषुवर्णगान्यक्षिणोयजेत् ॥ ३४ ॥ रक्तमारक्तसुप्रख्यदूर्वाकनकवर्णका न ॥ तद्बहिर्वासवादीनांवज्रादीनांचपूजनम् ॥ ३५ ॥ दीक्षितोविधिनामन्त्रं प्राप्यासुंसद्गुरोःकृती ॥ दर्शनंभाषणंस्पर्शोवचनश्रवणादिकम् ॥ ३६ ॥ वर्जयेत्प्रजपेल्लक्षंस्त्रीमात्रस्यगुरोरपि ॥ सिताब्जमधुमिश्रैश्चदशांशंपायसैर्हुने त् ॥ ३७ ॥ तर्पणंमार्ज्जनंकृत्वाब्राह्मणान्भोजयेत्ततः ॥ मन्त्रमेनंजपेद्यस्तु प्रत्यहंविधिनामुना ॥ ३८ ॥ समर्चयतिगीर्वाणाँल्लोकानन्दकरश्चसः ॥ दिवादौकृष्णचन्द्रंचदुग्धबुद्ध्याजलैःशुभैः ॥ ३९ ॥ अन्वहंतर्पयेद्यस्तु शतंसाग्रंभवेद्ध्रुवम् ॥ इन्दुश्रीजलबिन्द्वाभस्ताद्विभूतिमहार्णवः ॥ ४० ॥ चन्द्रचन्दनपङ्काक्तमालतीकुसुमैर्यवैः ॥ अयुतंमन्त्रवर्णेनयोजुहोतिविभाव सौ ॥ ४१ ॥ त्रैलोक्यंतद्वशेतिष्ठेत्ख्यातःकविवरोभवेत् ॥ मन्त्रिणोध्या नमात्रेणमन्त्रस्यास्ययथाविधि ॥ ४२ ॥ वश्याभवन्तिसततंस्मरार्ताःसु रयोषितः ॥ जपादिकर्म्मभिर्नूनमस्मात्किंकिंनलभ्यते ॥ ४३ ॥ स्पर्द्धा स्वाभाविकींत्यक्त्वाचित्रमेतत्सुमन्त्रिणः ॥ ग्रहेन्दिरासदस्याद्याःसेवनेभक्ति तत्पराः ॥ ४४ ॥ व्याधिदारिद्र्यपापौघक्रूरग्रहविषादिभिः ॥ विपत्तिदुःख

१ गणेश २ कार्त्तिकेय ३ देवता ४ कपूर ५ चमेली ॥

दौर्भाग्यमृत्य्वादिरहितःसदा ॥४५॥ पुत्रपौत्रधनारोग्यवरस्त्रीगन्धवाहिभिः॥
सम्पन्नःसर्वसम्पत्त्यायशस्वीदीर्घजीवनः ॥ ४६ ॥ अथातःसम्प्रवक्ष्यामिकलौ
षष्टिमितेमनुम् ॥ यज्जपादेवपुत्रादेरुत्पत्तिर्भवतिध्रुवम् ॥ ४७ ॥ देवकीसुत
गोविन्दवासुदेवजगत्पते ॥ देहिमेतनयंकृष्णत्वामहंशरणंगतः ॥ ४८ ॥ द्वा
त्रिंशदक्षरोमन्त्रोनारदोस्यमनोर्मुनिः ॥ छन्दोनुष्टुब्देवताचकृष्णःसन्तान
दायकः ॥ ४९ ॥ पादैश्चतुर्भिःसर्वेश्चपञ्चाङ्गानिमनोर्विदुः ॥ शङ्खचक्रधरंदे
वंश्यामवर्णंचतुर्भुजम् ॥ ५० ॥ सर्वाभरणसन्दीप्तंपीतवाससमच्युतम् ॥ मयू
रपिच्छसंयुक्तंविष्णुतेजोपबृंहितम् ॥ ५१ ॥ समर्प्पयन्तंविप्रायनष्टानानीयबा
लकान् ॥ ध्यात्वाततोर्चनादीनिकुर्य्याद्भक्तिपरायणः ॥ ५२ ॥ अर्चनाचेन्द्रव
ज्राद्यैरुदितास्यमहात्मनः ॥ लक्षंजप्त्वातद्दशांशंजुहुयाद्गोघृतेनच ॥ ५३ ॥
तर्प्पणादिततःकुर्य्यान्मन्त्रःसिद्ध्यतिमन्त्रिणः ॥ दशम्यामर्धरात्रेतुशुक्लपक्ष
स्यमन्त्रवित् ॥ ५४ ॥ पुत्रार्थशान्तिकंकृत्वातत्रस्थोविष्णुमर्चयेत् ॥ यएवंभ
जतेमन्त्रीसाधकःपुत्रकाम्यया ॥ ५५ ॥ सवर्षाल्लभतेपुत्रंविनीतंचिरजीविन
म् ॥ अथातःसम्प्रवक्ष्यामिएकषष्टितमेकलौ ॥ ५६ ॥ वसुदेवायनिगडच्छेदने
तिपदंवदेत् ॥ वासुदेवायहुंफट्चस्वाहाविंशार्णकोमनुः ॥ ५७ ॥ नारदोस्य
मुनिःप्रोक्तोगायत्रीछन्दउच्यते ॥ श्रीकृष्णोदेवताप्रोक्तोनिगडच्छेदकारकः ॥
५८ ॥ न्यासध्यानजपार्चादिदशवर्णोक्तवद्भवेत् ॥ अथातःसम्प्रवक्ष्यामिनेत्र
षष्टिमितेकलौ ॥ ५९ ॥ कामबीजात्मकोमन्त्रोमुनिर्मोहननारदः ॥ छन्दो
गायत्रकंदेवःकृष्णःसम्मोहनोमतः ॥ ६० ॥ षड्दीर्घभाजाबीजेनषडङ्गानिप्र
कल्पयेत् ॥ आसनंन्यासपर्य्यन्तंचोक्तरीत्याविधायतु ॥ ६१ ॥ अंगुलीपुन्य
सेदङ्गंहस्तयोस्तलयोरपि ॥पञ्चांगुलीपुबाणांश्चपूर्वोक्तान्क्रमतोन्यसेत्॥६२॥

---

१ देवकीसुतगोविन्दहृदयायनमः, वासुदेवजगत्पते शिरसेस्वाहा, देहिमेतनयंकृष्णशिखायैवषट्, त्वामहंशरणंगतः कवचायहुम् ॥ देवकीसुतगोविन्दवासुदेवजगत्पते।देहिमेतनयंकृष्ण त्वामहंशरणंगतः नेत्राभ्यांवौषट् ॥ और अन्य ग्रन्थों में इस मंत्रका षडङ्ग न्यास लिखाहै उस रीतिसे आधे मन्त्र से नेत्र व आधे मन्त्रको अस्त्रपै न्यास करना ॥ इस मन्त्रके आदि में क्लीं बीज जोड़कर जप करने से शीघ्र पुत्रप्राप्ति होती है तथा ह्रीं बीज और ॐ बीज भी जोड़ाजाता है ॥

बीजसम्पुटितान्न्यस्यमातृकार्णाननन्तरम् ॥ षडङ्गानिपुनर्न्यस्ययथास्थानेश रान्न्यसेत् ॥ ६३ ॥ शिरोवदनहृल्लिङ्गपादेषुक्रमतःसुधीः ॥ शेषतत्प्रमुखाने तान्पञ्चबीजप्रपूर्वकान् ॥६४॥ जगत्सम्मोहनंकृष्णंध्यायेत्पश्चात्समाहितः॥ वृन्दारकद्रुमौघेनविलसत्कल्पशाखिनः ॥ ६५ ॥ मूलेलसत्स्थलीराजद्रत्नसिं हासनोपरि ॥ वामस्कन्धेपक्षिपत्रेस्थितंबन्धूकसन्निभम् ॥ ६६ ॥ अरिशङ्ख सृणीन्पाशंपुष्पचापेक्षुकार्मुकम् ॥ पद्मंगदांचहस्ताब्जैरष्टभिर्दधतंनिजैः ॥ ६७ ॥ घूर्णनेत्रंकुण्डलिनंहारिणंसुकिरीटिनम् ॥ किङ्किणीनूपुराद्यैश्चमुद्रि कारत्नमाल्यकैः ॥ ६८ ॥ पीताम्बरैरक्तलेपैर्युक्तंवामोरुगांरमाम् ॥ आलिङ्गन्तं वामबाहुधृतपद्मावलिंविभुम् ॥ ६९ ॥ विंशाक्षरोदितेपीठेभूषणान्तैर्यजेद्धरि म् ॥ पश्चादङ्गानिबाणांश्चन्यासमार्गेणपूजयेत्॥७०॥ किरीटंमस्तकेश्रोत्रद्व येकुण्डलयुग्मकम् ॥ चक्राद्यंत्रिपुहस्तेषुश्रीवत्संकौस्तुभंतथा ॥ ७१ ॥ वक्षोहृ दितथाकण्ठेवनमालानितम्बके ॥पीताम्बरंमहालक्ष्मींवामाङ्केबीजपूर्विकाम् ॥ ७२॥अभ्यर्च्यकर्णिकामध्येदिग्विदिक्ष्वङ्गदेवताः॥ततोबहिश्चरान्बाणान्दिक्षु कोणेषुपूजयेत्॥७३॥यजेदष्टाग्रपत्रेषुलक्ष्म्याद्याःप्रोक्तलक्षणाः॥इन्द्रादीन्पूज येद्बाह्येवज्रादीन्यायुधान्यपि॥७४॥जपोद्वादशलक्षाणिपलाशकुसुमैर्हुनेत्॥ त्रिस्वाद्वक्तैस्तर्प्पयेच्चसहस्रद्वादशावधि ॥ ७५ ॥ आत्माभिषेकंकृत्वाथविप्रान भ्यर्च्यतोषयेत् ॥ अनेनमनुनातोयैर्मोहिनीपुष्पसंयुतैः॥७६ ॥दिनादारभ्यतं मन्त्रीतर्प्पयेच्चफलप्रदम्॥सर्वान्कामानवाप्नोतिवाञ्छितानत्रवर्णितान्॥७७॥ अयुतंसर्पिषाहुत्वासम्पातंहुताशने ॥ तावज्जलेचसंजप्तंतद्घृतंभोजयेत्प्रि यम् ॥ ७८ ॥ यस्तुलब्धशगासास्यात्सापितंवशमानयेत् ॥ अष्टादशलिपिप्रो क्तंवश्यकर्म्मात्रसाधयेत् ॥७९॥ एवंयोभजतेमन्त्रंभोगान्भुक्त्वाहरिंव्रजेत् ॥ अथातःसम्प्रवक्ष्यामिरामषष्टिमितेकलौ ॥ ८० ॥ त्रैलोक्यमोहनायविद्महे स्मरायधीमहि ॥ तन्नोविष्णुःप्रचोदयात् ॥ ८१ ॥ मुन्यादिसकलंप्राग्वद्गा यत्रीसपुरस्क्रिया ॥ नाशयेत्सर्वपापानिसिद्धेयंकल्पवल्लिका ॥८२॥ यद्यदि ष्टंभवेत्कार्य्यंसहस्रादयुतादपि ॥ यथायोग्यंजपेत्साध्यमसाध्यंचप्रसिद्ध्यति॥ ८३ ॥ अथातःसम्प्रवक्ष्यामिवेदषष्टिमितेकलौ ॥ ग्लौमित्येकाक्षरोमन्त्रोजग

तीछन्दईरितम् ॥ ८४ ॥ ऋषिस्तुनारदःप्रोक्तःश्रीकृष्णोदेवतामता ॥ बीजंग
कारअंकारःशक्तिःप्रोक्तंषडङ्गकम् ॥ ८५ ॥ षड्दीर्घान्वितबीजेनगकारंमूर्द्धि
विन्यसेत् ॥ ग्लौंनाभौतुतथौंगुल्फेबिन्दुंपादद्वयेन्यसेत् ॥ ८६ ॥ कदम्बमूले
क्रीडन्तंवृन्दावननिवासिनम् ॥ पद्मोपरिस्थितंवन्देवेणुंगायन्तमीश्वरम् ॥
८७ ॥ पीताम्बरधरंदेवंवनमालाविभूषितम् ॥ गोपीभिर्गोपवृन्दैश्चसेवितंकृ
ष्णमर्च्चयेत् ॥ ८८ ॥ दशार्णवच्चपूजास्यातिपङ्गगोपालसम्मता ॥ लक्षायुत
सहस्राणिचत्वार्य्यस्यजपोमनोः ॥ ८९ ॥ घृतहोमोदशांशेनतर्पणादितत
श्चरेत् ॥ एवंससिद्धमन्त्रस्तुदशार्णोक्तप्रयोगकान् ॥ ९० ॥ कुर्य्यादिहतुसौ
भाग्यमन्तेयातिहरेःपुरम् ॥ अथातःसम्प्रवक्ष्यामिपञ्चषष्टिमितेकलौ ॥ ९१ ॥
कामबीजान्तरेकृष्णोमन्त्रोयंत्र्यक्षरोमतः ॥ नारदोस्यमुनिश्छन्दोगायत्रीदे
वतामता ॥ ९२ ॥ कृष्णःककारोबीजंस्यादीकारःशक्तिरुच्यते ॥ ९३ ॥
षड्दीर्घस्वरयुक्तेनमूलेनापिषडङ्गकम् ॥ ध्यानपूजाप्रयोगादिपिङ्गगोपालव
न्मतम् ॥ ९४ ॥ अथातःसम्प्रवक्ष्यामिवसुषष्टिमितेकलौ ॥ तारोनमश्चकृष्णा
यमन्त्रोरसमितार्णकः ॥ ९५ ॥ नारदोस्यमुनिश्छन्दोगायत्रीदेवतामता ॥
श्रीकृष्णःप्रणवोबीजंमायाशक्तिश्चपूर्ववत् ॥ ९६ ॥ अथातःसम्प्रवक्ष्यामिरसष
ष्टिमितेकलौ ॥ उत्तिष्ठश्रीकृष्णस्वाहामनुरष्टाक्षरोमतः ॥९७॥ वामदेवोमुनिः
पंक्तिश्छन्दोविष्णुश्चदेवता ॥ हुंभीषयद्वयंहृच्चहुमन्तंत्रासयद्वयम् ॥९८॥ शिरः
शिखाचवर्मोक्तंप्रमर्दययुगंमतम् ॥ वर्मप्रध्वंसययुगंवर्मान्तरंक्षयद्वयम् ॥९९ ॥
हुमन्तमन्त्रंसम्प्रोच्यषडङ्गानिसमाचरेत् ॥ अष्टाङ्गानिन्यसेन्मन्त्रीमन्त्रवर्णैर्यथा
विधि ॥ १३०० ॥ पञ्चाङ्गनेत्रजठरेपृष्ठेपुक्रमतोन्यसेत् ॥ विदध्यात्करयोर्न्या
संमन्त्रार्णैरष्टभिःसुधीः ॥ १ ॥ दक्षतर्ज्जन्यादिकश्चयावत्स्याद्वामतर्जनी ॥
सृष्टिरेतद्वैपरीत्यंसंहारोगदितःस्थितिः ॥ २ ॥ दक्षान्यतर्जनीपूर्वांकनिष्ठायुग्म
कान्तकाम् ॥ द्रावणाद्यबीजयुतामंगुष्ठादिषुविन्यसेत् ॥ ३ ॥ सबीजपूर्वका
न्कामानंगुष्ठादिषुविन्यसेत् ॥ ततोबाणार्णपुटितमातृकांचप्रविन्यसेत् ॥ ४ ॥

१ गां, गीं, गूं, गैं, गौं, गः, इन छह अक्षरोंको क्रमसे षडंगों में न्यासकरे जैसे, गां हृदयायनमः, गींशिरसेस्वाहा, इत्यादि ॥

प्रकृतिश्चमहत्तत्त्वमहङ्कारस्खवायवः ॥ तेजआपोधराचेतितत्त्वाष्टकमुदीरितम्॥५॥व्यस्तमन्त्रार्णसंयुक्तंपादेलिङ्गेतथाहृदि॥मुखेशीर्षेहृदिपुनर्हृदयेसकलाङ्के ॥ ६ ॥ न्यसेत्संहारमुक्तोयंसर्गस्तद्विपरीतकम्॥ तारसम्पुटमूलेनत्रिशोन्यस्येत्तनौपुनः ॥ ७ ॥ कट्यास्यहृन्नाभिगुल्फजानुपादेषुविन्यसेत् ॥ एषासृष्टिश्चनाभ्याद्याहृदन्तास्थितिरीरिता ॥ ८ ॥ सर्गेत्यक्रमतिश्चापि संहारोमन्त्रिभिर्मतः ॥ मन्त्रार्णनामयंप्रोक्तस्त्रिधान्यासोधनप्रदः ॥ ९ ॥ मूलाधारेहृदिमुखे बाहुद्वन्द्वोरुनाभिषु॥ मन्त्रार्णान्विन्यसेन्मन्त्रीन्यासोयंदार्ढ्यकारकः॥ १०॥ गलेचजठरेहस्तेस्तनयोःपार्श्वयोस्तथा॥ पृष्ठेचविन्यसेद्वर्णान्न्यासोयंशुभकारकः॥ ११ ॥ मूर्द्धनेत्रश्रोत्रमुखहस्ताग्रमणिबन्धयोः॥कूर्परेचांसकेन्यस्यमनोर्वर्णान्धनप्रदान् ॥ १२ ॥ पादाग्रयोर्गुल्फयोश्च जानुनोश्चनितम्बयोः ॥ मन्त्रस्यविन्यसेद्वर्णान्न्यासोयंकामिकःस्मृतः ॥ १३॥ दक्षबाहौतथामूलेमध्येचमणिबन्धके ॥ अंगुष्ठादौन्यसेद्वर्णान्पञ्चमोधर्मवृद्धिकृत्॥ १४ ॥ एवंन्यासोवामहस्तेषष्ठःपापनिवर्तकः ॥ दक्षोरुमूलेजानौचगुल्फेपञ्चांगुलीषुच ॥ १५ ॥ अयन्तुसप्तमोन्यासो वामगस्त्वष्टमोमतः ॥ दक्षांगुष्ठंसमारभ्यवाममध्याचविन्यसेत् ॥ १६ ॥ क्रमेणमन्त्रवर्णांश्चन्यासोयंनवमःस्मृतः ॥ एवन्तुपादयोर्न्यस्यो न्यासोयंदशमोभवेत् ॥ १७ ॥ मूर्द्धाक्षिकण्ठहृदयेजठरेचोरुजानुनोः ॥ पादयोश्चन्यसेद्वर्णान्न्यासएकादशःस्मृतः ॥ १८ ॥ त्वगसृङ्मांसमेदोस्थिमज्जाशुक्रमरुत्सुच ॥ क्रमेणविन्यसेद्वर्णान्न्यासोयंद्वादशस्मृतः ॥ १९ ॥ दक्षगण्डेचदक्षांसेतत्स्तनेदक्षपार्श्वके ॥ दक्षस्फिचिचजङ्घासुपादेयन्तुत्रयोदशः ॥ २० ॥ एवंप्रविन्यसेद्वामगुल्फादौसचतुर्दशः ॥ प्रथमार्णंपादतलेपदपादाग्रजानुषु ॥ २१ ॥ गुदगुह्येतृतीयन्तुपार्श्वनाभौचतुर्थकम् ॥ वक्षःपृष्ठहृदयेषु कण्ठवक्त्रनसोस्तले ॥ २२ ॥ श्रोत्रनेत्रद्वयेचान्यंललाटेचाष्टमंन्यसेत् ॥ सर्वोपद्रवहन्तायंन्यासःपञ्चदशःस्मृतः ॥ २३ ॥ शिरोक्षिमुखहृन्नाभिगुह्यजान्वंघ्रिषुन्यसेत् ॥ षोडशोयमितिप्रोक्तस्तत्त्वपञ्जरसञ्ज्ञकः ॥ २४ ॥ ततस्तनौमूलमन्त्रंव्यापकत्वेनविन्यसेत् ॥ नृसिंहंपञ्चमेप्रोक्तमाचरेन्मूर्तिपञ्जरम् ॥ २५ ॥ मुखेब्राह्मणवर्णंच हस्तयोः

क्षत्रियंन्यसेत् ॥ ऊर्वोर्वैश्यंशूद्रवर्णं पादयोरिति विन्यसेत् ॥ २६ ॥ न्यसेत्किरीटंशिरसिश्रुत्योर्मकरकुण्डले ॥ ग्रैवेयंकौस्तुभंकण्ठेहृदिश्रीवत्सहारकम् ॥ २७ ॥ अङ्गदेभुजयोर्न्यस्यकेयूरान्सर्वबाहुषु ॥ कङ्कणैर्हस्तयोर्न्यस्यमेखलांचकटौन्यसेत् ॥ २८ ॥ न्यस्यांगुलीषुमुद्राश्चन्यसेत्पीताम्बरद्वयम् ॥ परीधानेचोत्तरीयं पादयोर्नूपुरंतथा ॥ २९ ॥ न्यसेच्छङ्खं चचक्रंचवामदक्षोर्ध्वहस्तयोः ॥ अधःपाण्योर्गदापद्मेततोध्यानंसमाचरेत् ॥ ३० ॥ दुग्धाम्भोधौसितद्वीपंनानामणिगणैर्युतम् ॥ वनंसञ्चिन्तयेत्तत्रसकलर्त्तुसमन्वितम् ॥ ३१ ॥ न्यासोक्ताभरणैःशस्त्रैरुपेतंदीप्ततेजसम् ॥ सुरासुरर्षिप्रमुखैःसेवितंचाप्सरोगणैः ॥ ३२ ॥ प्रसन्नवदनं ध्यात्वातत्त्वदेवंप्रपूजयेत् ॥ पूर्वोक्तपीठेमूलेनमूर्तिंसङ्कल्पमाह्वयेत् ॥ ३३ ॥ अङ्गानिकर्णिकायाञ्चदिक्पत्रेषुचतुर्ष्वपि ॥ श्रियंपीताम्बरेरक्तांधृतिंकान्तिंसितासिते ॥ ३४ ॥ इन्द्रादींश्चापिदिक्पत्रेवज्रादींस्तद्बहिर्यजेत् ॥ अष्टलक्षंजपेन्मन्त्रं नियमस्थोजितेन्द्रियः ॥ ३५ ॥ बिल्वदुग्धार्कसमिधांहोमःप्रोक्तोदशांशतः ॥ जलैःसघृतदुग्धान्नैस्तर्प्पणादिसमाचरेत् ॥ गुरुंसन्तोष्ययत्नेनसिद्धमन्त्रोभवेद्ध्रुवम् ॥ ३६ ॥ ततःकुर्वीतमन्त्रज्ञःप्रयोगाणिप्रसिद्धये ॥ दुग्धपूतैःसरसिजैर्युतंजुहुयाच्छ्रियै ॥ ३७ ॥ मधुरत्रयसंयुक्तैःपलाशकुसुमैर्हुनेत् ॥ कान्त्यर्थंकेवलाज्येनदुग्धच्छिन्नाभिरायुषे ॥ ३८ ॥ त्रिस्वादुयुक्तंलवणंहुनेत्त्रिशिसहस्रकम् ॥ अष्टाधिकंचमासेनसोमरस्त्रीवृतोभवेत् ॥ ३९ ॥ काकथासर्वयोषासुचान्यासुवशगासुच ॥ अयुतंजुहुयादाज्यंदूर्वाभक्तैश्चशोधितम् ॥ ४० ॥ भुञ्जीतप्रत्यहंभक्तंगुरुंसन्तोषयेद्धनैः ॥ वस्त्रालङ्करणाद्यैश्चब्राह्मणानपिभोजयेत् ॥ ४१ ॥ योजपेन्मृत्युरोगादौन्यसेचायुश्चविन्दति ॥ सूर्य्यबिम्बेन्यस्तदृष्टिरब्देनसततंजपेत् ॥ ४२ ॥ उत्क्षिप्तबाहुःषण्मासाद्धनाढ्यःसुमहान्भवेत् ॥ दुग्धमध्येप्रातरमुंरमेशंतर्प्पयेद्बुधः ॥ ४३ ॥ अष्टाधिकंसहस्रंतुसभवेद्धर्मान्वितः ॥ सुमिष्टमन्नंलभतेवनेवैभृत्यवर्गयुक् ॥ ४४ ॥ षट्कर्माणिचसिद्ध्यन्तियातिविष्णोःपरम्पदम् ॥ अथोगोपद्कलौमन्त्रस्तारादिरयमेवहि ॥ ४५ ॥ यज्जपेनावतारोत्रसर्वकामफलप्रदः ॥ अथसमितेचायं

१ ॐ उच्छिष्टकृष्णायस्वाहा ॥

लक्ष्म्यादिर्जप्यतेजनैः ॥४६॥ नावतारःसएवात्रदेवःप्रत्यक्षतांगतः ॥ अथातः सम्प्रवक्ष्यामिचैकसप्तमितेकलौ ॥ ४७॥ अवतारोत्रमन्त्रस्तु श्रींकृष्णःशरणंम म ॥ चतुष्पदैःसमस्तेनपञ्चाङ्गविधिरीरितः॥४८॥ ध्यानपूजाप्रयोगादिदशा क्षरवदीरितम् ॥ अथातःसम्प्रवक्ष्यामिबौद्धमन्त्रंमहाफलम् ॥ ४६ ॥ सभ्यत्वा न्नद्विजातीनामधिकारोस्तिकर्हिचित् ॥ वाममार्गरताविप्राःकुण्डकाजातिवि च्युताः ॥ ५० ॥ हीनावैदिकसंस्कारैः प्रमादान्म्लेच्छतांगताः ॥ गोलका श्चतथाजात्याकायस्थादयएवच ॥ ५१ ॥ बौद्धंविष्णुंसमारभ्य भुक्तिंमुक्तिंप्र यान्तिते ॥ पतितानामयंमन्त्रःसम्प्रोक्तःशरणप्रदः ॥ ५२ ॥ नमोभगवतेबुद्ध संसारार्णवतारक ॥ कलिकालादहंभीतः शरण्यंशरणंगतः ॥ ५३ ॥ आ द्यैःपदैश्चतुर्भिश्चचरणद्वितयेनच ॥ षडङ्गविधिराख्यातःसर्वेणव्यापकंचरे त् ॥५४॥ पद्मेपद्मासनस्थंचऊर्वोर्न्यस्तकरद्वयम् ॥ गौरंमुण्डितसर्वाङ्गध्यान स्तिमितलोचनम् ॥५५॥ पुस्तकासक्तहस्तैश्च नानाशिष्यैश्चशोभितम् ॥ इन्द्रादिलोकपालैश्च ताम्रवर्णाम्बरावृतम् ॥५६॥ एवंध्यात्वायजेत्पद्मेद्वात्रिं शद्दलसम्मिते ॥ कर्णिकायांषडङ्गानि दलेशिष्यान्यजेत्क्रमात् ॥५७॥ मीनाङ्कंललितांवीरंयोगिनींज्ञानदायिनीम् ॥ सर्वज्ञंसुगतंबुद्धं पार्श्वनाथंत थागतम् ॥ ५८ ॥ चार्वाकंधर्मराजंच जिनंपद्मावतींतथा ॥ कामिनींचमहा मायांश्रीकृष्णंचविनायकम् ॥ ५९ ॥ समन्तभद्रंवर्त्मपिंनिधिचन्द्रंमनोहरम् ॥ षडभिज्ञंदशबलंशास्तारंश्रीघनंक्षयम् ॥६०॥ दण्डिनंमुण्डिनंक्रान्तंश्रावकं लोकपोषणम् ॥ तद्बाह्येभूपुरेदिक्पांस्तदस्त्राणिचपूजयेत् ॥ ६१ ॥ वर्ण लक्षंजपेन्मन्त्री होमयेच्चघृतौदनम् ॥ तुलसीमिश्रतोयैश्च भगवन्तंप्रतर्प्प येत् ॥६२॥ परस्यदुःखकरणंमनसापिनचाचरेत् ॥ एवंतुवर्तमानस्यवाक्सि द्धयादिप्रजायते ॥ ६३ ॥ राजानोवशगास्तस्यनाशंयान्तिउपद्रवाः ॥ भूतप्रेतादिपीडायां महागदभयेतथा ॥ ६४ ॥ अनेनमन्त्रितंभस्मदत्त्वा

---

१ श्रींआदि में करके यही मन्त्र जपाजाता है श्रीं, कृष्णः, शरणं, मम, और सम्पूर्ण मन्त्रको पञ्चांगों में न्यास होताहै, जैसे श्रींहृदयायनमः, कृष्णः शिरसेस्वाहा, शरणंशिखा यैवषट्, ममकवचायहुम्, श्रींकृष्णःशरणंमम नेत्राभ्यांवौषट् ॥

दुःखात्प्रमुच्यते ॥ अथातःसम्प्रवक्ष्यामिकल्किमन्त्रंमहाफलम् ॥ ६५ ॥ कंकल्किनेहृदन्तोयंमन्त्रःप्रोक्तःषडक्षरः ॥ मन्त्रार्णैश्चषडङ्गानिपूर्णेनव्यापकं चरेत् ॥ ६६ ॥ ध्यानंनीलहयारूढंश्वेतोष्णीषविराजितम् ॥ महामुद्राढ्यहस्तंचकौस्तुभोद्दामकण्ठकम् ॥ ६७ ॥ मर्दयन्तंम्लेच्छगणंक्रोधपूर्णितलोचनम् ॥ अन्तर्हितैर्देवमुनिगन्धर्वैःसंस्तुतंहरिम् ॥ ६८ ॥ वैष्णवेतुयजेत्पीठे पद्मेतंकेशरेषुच ॥ षडङ्गानिचपत्रेषुपूजयेत्तस्यसेवकान् ॥ ६९ ॥ उद्दामंकाशनंदीर्घभीमंघोरंभयानकम् ॥ कालंनीलंलोकपालान्भूपुरेहेतयस्तथा ॥ ७० ॥ षड्लक्षंचजपेन्मन्त्रंससितैःपायसैर्हुनेत् ॥ तर्पयेत्सलिलैःशुद्धैः प्रीणयेद्भूसुरानपि ॥ ७१ ॥ एवमाराधितोमन्त्रःसंग्रामेविजयप्रदः ॥ एतत्साधकमालोक्यदूरतोदुःक्षितीश्वरः ॥ ७२ ॥ प्रणमन्तितथाम्लेच्छाः शत्रवोयान्तिसंक्षयम् ॥ दिनेदिनेवर्धतेश्रीर्मृतोवैकुण्ठमाप्नुयात् ॥ ७३ ॥ एतेतुमनवःप्रोक्ताःश्रीविष्णोःपरमात्मनः ॥ दशावताररूपस्यकिमन्यच्छ्रोतुमिच्छसि ॥ १३७४ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेदशावतार
मन्त्रप्रकाशःषड्विंशः ॥ २६ ॥

---

श्रीदेव्युवाच ॥ देवदेवमहादेवभक्तानुग्रहकारक ॥ चतुर्विंशतिमूर्त्तीनां मन्त्रांश्चमेधुनावद ॥ १ ॥ ईश्वरउवाच ॥ शृणुदेविप्रवक्ष्यामिमूर्त्तिमन्त्रानशेषतः ॥ भुक्तिमुक्तिप्रदान्विप्रैराध्यान्सचतुर्थकैः ॥ २ ॥ कोब्रह्मातुसमुद्दिष्टई शोहंवोहरिस्स्मृतः ॥ वर्णत्रयात्मकोमन्त्रःकेशवःपरिकीर्त्तितः ॥ ३ ॥ पृथक्ताभ्यांषडङ्गानिपूर्णेनव्यापकंचरेत् ॥ आनाभिपादपर्य्यन्तंमङ्गलंमधुसम्मितम् ॥ ४ ॥ शङ्खचक्रेहिशूलेचत्वत्तमालांकमण्डलुम् ॥ भुजैःषड्भिर्दधानंचरक्तवर्णचसत्किरिटम् ॥ ५ ॥ अन्तर्वाह्योत्तरीयंचनागयज्ञोपवीतिनम् ॥ मयूरमुकुटं रम्यंमकराकृतिकुण्डलम् ॥ ६ ॥ एवंध्यात्वायजेत्पीठेपद्मेचापिचतुर्दले ॥ सनकादीन्कर्णिकायांगणेशंनन्दिकेश्वरम् ॥ ७ ॥ कार्त्तिकेयंभृङ्गिनंचदलमध्ये समर्चयेत् ॥ जपेल्लक्षत्रयंमन्त्रंमधुरत्रितयैर्हुनेत् ॥ ८ ॥ सन्तोष्यविप्रान्सि

द्धिःस्यात्कर्त्ताहर्त्तातथात्मवान् ॥ इहलोकेसुखंप्राप्यमृतोमोक्षमवाप्नुयात् ॥ ९ ॥ अथातःसम्प्रवक्ष्यामिनारायणमहामनुम् ॥ नमोनारायणायेतितारायष्टाक्षरोमनुः ॥ १० ॥ देवतापरमात्मास्यपञ्चाङ्गविधिरुच्यते ॥ कुञ्जोल्कश्चमहोल्कश्चअविरक्तोल्कएवच ॥ ११ ॥ सहस्रोल्कश्चतुर्थोक्तःस्वाहोल्कोहेतिसंयुतः ॥ पञ्चाङ्गमन्त्राःसम्प्रोक्ताअंगुष्ठादावपिन्यसेत् ॥ १२ ॥ अष्टाक्षरेणव्यस्तेनकुर्य्यादष्टाङ्गकेषुच ॥ सृष्टिन्यासोयमुद्दिष्टस्संहारश्चारणादिकः ॥ १३ ॥ नाभौचगुह्यदेशेचजानूर्वोःपादयोस्तथा ॥ मूर्द्धिनेत्रद्वयेचैवसमुखान्तेतथाहृदि ॥ १४ ॥ स्थितिन्यासस्त्वयंप्रोक्तोविभूतेःपञ्जरंशृणु ॥ सर्वन्यासेपुतारेणपुटितावर्णान्प्रविन्यसेत् ॥ १५ ॥ मूलाधारेहृदिमुखेभुजयोश्चोरुमूलयोः ॥ नाभिदेशेप्रथमकोन्यासोयंपरिकीर्त्तितः ॥ १६ ॥ गलेनाभौहृदिकुचद्वयेपार्श्वद्वयेतथा ॥ पृष्ठेचेतिद्वितीयोयंन्यासस्तुपरिकीर्त्तितः ॥ १७ ॥ शीर्षेमुखेनासयोश्चकर्णयोर्नासिकाद्वये ॥ क्रमेणविन्यसेद्वर्णान्न्यासोयंस्यात्तृतीयकः ॥ १८ ॥ बाहुमूलेबाहुमध्येमणिबन्धेंगुलीषुच ॥ दक्षहस्तेचतुर्थस्स्याद्वामबाहौचपञ्चमः ॥ १९ ॥ दक्षोरुमूलजान्वोश्चगुल्फेचांगुलिषुन्यसेत् ॥ न्यासःषष्ठोयमुदितोवामांघ्रौसप्तमःस्मृतः ॥ २० ॥ त्वगसृङ्मांसमेदोस्थिमज्जाशुक्रानिलेषुच ॥ हृदिध्यात्वान्यसेद्वर्णान्न्यासोयंचाष्टमःस्मृतः ॥ २१ ॥ शीर्षदेशेमुखेहृत्केजठरोरुपुजङ्घयोः ॥ पादयोश्चन्यसेद्वर्णान्न्यासोयंनवमःस्मृतः ॥ २२ ॥ गण्डयोरंसयोरूर्वोः पादयोश्चततःपरम् ॥ वामोर्ध्वकरगेचक्रेदक्षेधःकरशङ्खके ॥ २३ ॥ गदायांवामोर्ध्वकरेपङ्कजेदक्षहस्तके ॥ विभूतिपञ्जराख्योयंन्यासेदशविधःस्मृतः ॥ २४ ॥ क्षित्यप्तेजोमरुद्व्योमाहंमहत्प्रकृतिस्तथा ॥ तत्त्वाष्टकमिदंबिन्दुयुग्वर्णाद्यंतथोक्तवत् ॥ २५ ॥ ङेयुतेहृदयान्तेचस्थानेष्वेतेषुविन्यसेत् ॥ पल्लिङ्गहृन्मुखेशीर्षनेत्रहृद्व्यापकेषुच ॥ २६ ॥ संहारनामातत्त्वानांन्यासःसृष्टिस्तथाक्रमात् ॥ बिन्दुनादशक्तिशान्तिरूपमात्मचतुष्टयम् ॥ २७ ॥ न्यसेत्पूर्वतनौमन्त्रीदेवताभावसिद्धये ॥ मूर्त्तिपञ्जरविन्यासंप्रणवाद्यंसमाचरेत् ॥ २८ ॥ नारायणायचार्यम्णेअंहृन्मध्येचनाभिगम् ॥ २९ ॥ इंमाधवायमित्रायनमःप्रोक्त्वाहृदिन्यसेत् ॥ ३० ॥ ईंगोविन्दायवरुणाय

नमश्चगलेन्यसेत् ॥ उंविष्णवेअंशवेचनमोदक्षिणपार्श्वके ॥ ३१ ॥ ऊंमधु सूदनायचभगायदक्षिणांसके ॥ एंत्रिविक्रमायविवस्वतेहृद्दक्षगण्डके ॥३२॥ ऐंवामनायचेन्द्रायहृदन्तंवामपार्श्वके ॥ ॐश्रीधरायपूष्णेचनमोवामांसके न्यसेत् ॥ ३३ ॥ हृषीकेशायपर्ज्जन्यायौंहृदावामगण्डके ॥ अंपद्मनाभाय त्वष्ट्रेनमोवंशेप्रविन्यसेत् ॥ ३४ ॥ दामोदरायककुदिसर्गान्तोविष्णवेन मः ॥ किरीटहारकेयूरमकराकृतिंकुण्डलम् ॥ ३५ ॥ शङ्खचक्रगदापद्मह स्तंपीताम्बरावृतम् ॥ श्रीवत्साङ्कंलसद्वक्षस्स्थलंश्रीभूमिसंयुतम् ॥ ३६ ॥ आ त्मज्योतिःसम्प्रदीप्तसहस्रादित्यतेजसम् ॥ सम्बुद्ध्योक्त्वाचसर्वाणितदन्तेच वदेन्नमः ॥ ३७ ॥ द्विसप्तत्यक्षरोमन्त्रोव्यापकत्वेनचोदितः ॥ अतःपरंप्रवक्ष्या मितत्त्वानाञ्चमनूत्तमम् ॥३८ ॥ तारोक्तास्वादिकान्वर्णान्सबिन्दून्हृदयान्त कान्॥परायेतिपदस्यान्तेमुकतत्त्वात्मनेनमः॥ ३९॥ प्रोक्ताद्यसुंन्यसेत्पश्चात्त त्त्वनामस्थलानितु ॥ ४०॥ जीवंप्राणंसर्वतनौन्यसेदेवंद्वयंबुधः ॥ बुद्ध्यहङ्कार मनसोहृदितत्त्वत्रयंन्यसेत् ॥ मस्तकाननहृद्गुह्यपादांसेषुचवैक्रमात् ॥ ४१॥ शब्दस्पर्शरूपरसगन्धतत्त्वानिविन्यसेत् ॥ श्रोत्रत्वगक्षिजिह्वाख्यघ्राणाख्यं तत्त्वपञ्चकम् ॥ ४२ ॥ कर्णयोःसकलाङ्गाक्षिजिह्वाघ्राणेषुविन्यसेत् ॥ वाक्पा णिपायुपादाख्योपस्थाख्यंतत्त्वपञ्चकम् ॥ ४३ ॥ मुखेपाण्योःपादयोश्चगुदे लिङ्गेन्यसेत्क्रमात् ॥ आकाशवायुतेजांसिजलंक्ष्मातत्त्वपञ्चकम् ॥ ४४ ॥ मू र्द्धिवक्त्रेचहृदयेन्यसेल्लिङ्गेचपादयोः ॥ ततस्तुहृदयेन्यस्येन्मण्डलत्रितयंपुनः॥ ४५ ॥ सूर्य्यसोमकृशानूनामर्कषोडशादिकलम् ॥ हंसरंवर्णपूर्वंचयोजयित्वाच पूर्ववत् ॥ ४६ ॥ ततःकुर्य्याद्वासुदेवादिकंन्यासंसउच्यते ॥ न्यसेदोंखांनमः प्रोक्तापरायपरमेष्ठिने ॥ ४७ ॥ वासुदेवेतितत्त्वात्मनेनमोमस्तकेमतम् ॥ ता रोयंनमइत्युक्त्वापुरुषायपदंवदेत् ॥ ४८ ॥ सङ्कर्षणेतितत्त्वात्मनेनमश्चमुखे न्यसेत् ॥ ॐरंनमःपरायेतिनिवृत्तिङेन्तनामनि ॥ ४९ ॥ रुद्रतत्त्वात्मनेप्रो च्यनमोक्तंव्यञ्जनेन्यसेत् ॥ ओलंनमःपरायेतिशर्वायेतिपदंवदेत् ॥ ५० ॥ नारायणायतत्त्वात्मनेनमःपादयोर्न्यसेत् ॥ ओंक्ष्रौंनमःपरायेतिनृसिंहायपदं वदेत् ॥ ५१ ॥ कोपतत्त्वात्मनेहृचसर्वाङ्गेव्यापकंचरेत् ॥ एवंविन्यस्यविभिन्न

त्साक्षान्नारायणोभवेत् ॥ ५२ ॥ ज्वररोगाभिचाराद्याभूताद्यायान्तिसङ्क्षय
म् ॥ वैष्णवींदर्शयेन्मुद्राःपूर्वोक्ताश्चततःपरम् ॥ ५३ ॥ किरीटमनुनादद्या
त्स्वकेपुष्पाञ्जलित्रयम् ॥ ऊर्ध्वंचाधोदक्षभेदाद्घण्टांचकमलंगदाम् ॥ ५४ ॥
शङ्खचक्रंसूर्य्यकान्तिपार्श्वयोर्धरणीरमाम् ॥ केयूरहारमुकुटंसपीताम्बरकुण्ड
लम् ॥ ५५ ॥ कौस्तुभोद्भिन्नहृदयंश्रीवत्साङ्कितवक्षसम् ॥ नवशक्तिसमायुक्ते
पीठेदेवंयजेत्ततः ॥ ५६ ॥ विमलोत्कर्षिणीज्ञानाक्रियायोगास्तथैवच ॥ प्र
भासत्यातथेशानानुग्रहानवशक्तयः ॥५७॥ तारोनमोभगवतेविष्णवेपदमुच्चरे
त् ॥ सर्वात्मनेवासुदेवायसाक्षिणेपदमुच्चरेत् ॥ ५८ ॥ सर्वात्मनेयोगपीठपद्मपी
ठात्मनेनमः ॥ पीठमन्त्रःसमाख्यातःसप्तत्रिंशद्भिरक्षरैः ॥५९॥ अनेनपीठंसम्पू
ज्यदेवमावाहयेत्ततः ॥ तुभ्यंतमभिधास्यामिमन्त्रमावाहनस्यच ॥ ६० ॥ एह्ये
हिभगवन्देवलोकानुग्रहकारक॥यज्ञभागंगृहाणत्वंवासुदेवनमोस्तुते ॥ ६१॥
आवाह्यतत्रविधिवदुपचारैर्यथोदितैः ॥ कर्णिकायांयथास्थानंयजेदङ्गानिपूर्व
वत् ॥ ६२ ॥ केशरेषुयजेत्पश्चान्मन्त्रवर्णान्यथोदितान् ॥ दिक्पत्रेष्वर्चये
द्वासुदेवंसङ्कर्षणंतथा ॥ ६३ ॥ प्रद्युम्नमनिरुद्धंचकम्बुकञ्जारिगदाधराः ॥ गो
रहारिद्रकृष्णाख्यशुक्लनीलनिभाःक्रमात् ॥ ६४ ॥ शान्तिश्रियंभारतींचश
क्तिंकोणेषुपूजयेत् ॥ शुक्लस्वर्णपयःश्यामसङ्काशाश्चारुभूषणाः ॥ ६५ ॥ अ
ब्जंचक्रंदरंचैवगदांपीताम्बरंतथा ॥ अर्चेन्मुशलखड्गौचवनमालांदलाग्रतः ॥
६६ ॥ नूपुरेप्रागिमेपूज्याःखगःकृष्णोरुणोविराट् ॥ अतःशङ्खनिधिःपद्मनि
धिरक्तोथरक्तभाक् ॥ ६७ ॥ विप्रश्यामोबाणदुर्गोविष्वक्सेनोनिशानिभः ॥
आग्नेयादिदलेष्वेतेपूज्याश्चाग्रेदिगीश्वराः ॥ ६८ ॥ तदग्रेहेतयश्चेतिषडा
वरणपूजनम् ॥ नारायणस्यगायत्रींब्रवीम्येकमनाःशृणु ॥ ६९ ॥ नारायणा
यविद्महेवासुदेवायधीमहि ॥ तन्नोविष्णुःप्रचोदयात् ॥ ७० ॥ क्षत्रियादेस्तुसं
स्कारंप्राग्वत्कुर्य्यात्तथानया ॥ योग्यःस्याद्विष्णुदीक्षायांद्विजवत्पापवर्जितः ॥
७१ ॥ दन्तलक्षंजपेन्मन्त्रंत्रिमध्वक्तैःसरोरुहैः ॥ जुहुयात्तर्पयेत्कृष्णचन्द्रंचकेश
राम्बुभिः ॥ मार्ज्जनान्तेसदाचारान्भोजयेद्वैष्णवान्द्विजान् ॥ एवंसिद्धमनु
र्मन्त्रीप्रयोगांस्तुसमाचरेत् ॥ ७२ ॥ सायुधाष्टभुजंसौम्यंसर्वाङ्गधवलद्युतिम् ॥

सम्मुखीकरणेध्यायेद्विष्णुंगरुडगामिनम् ॥ ७३ ॥ एवमेवंहरिंध्यायेद्रोगःसंसारकर्मभिः ॥ दधिमध्वाज्ययुक्ताश्चचतुरंगुलसम्मितम् ॥ ७४ ॥ गुडूच्या अयुतंहुत्वामृत्युमेवातितर्ज्जयेत् ॥ शनैश्चरदिनेश्वत्थंसम्यगालभ्यपाणिना ॥ ७५ ॥ जपेदष्टोत्तरशतंसभवेदपमृत्युजित् ॥ पञ्चविंशमितंजप्त्वामन्त्रीशुद्धाः पिबेदपः ॥ ७६ ॥ निरस्तपातकोभूत्वानिरोगोज्ञानवान्भवेत् ॥ जप्त्वायुतंच कुम्भाद्भिःसेचनंसर्वरोगनुत् ॥७७॥ भुञ्जानःसप्तसञ्जसंधीवृत्त्यारोग्यवान्भवेत् ॥ चन्द्रसूर्य्योपरागेतुत्रिदिनंदिनमेवच ॥ ७८ ॥ उपोष्याष्टसहस्रन्तुस्पृष्टशाली न्घृतंजपेत् ॥ यःपिबेल्लभतेमेधांकवित्वंवादिनंचसः ॥ ७९ ॥ बिल्वैरयुतहोमे नसद्योधनपतिर्भवेत् ॥ पञ्चतन्तुमयंसूत्रमयुतेनाभिमन्त्रितम् ॥ धारयेद्दक्षिणे हस्तेसर्वतःस्यात्सुरक्षितः ॥ ८० ॥ एवंसङ्क्षेपतःप्रोक्तमन्तेमन्त्राष्टकंशृणु ॥ एते ह्यष्टौमन्त्रवर्णामन्त्राष्टकमुदीर्य्यते ॥ ८१ ॥ छन्दर्षिदेवताश्चैषांध्यानाद्यंचव दामिते ॥ गौतमोथभरद्वाजोविश्वामित्रःक्रमेणच ॥ ८२ ॥ जमदग्निर्वशिष्ठश्चकश्यपोत्रिर्घटोद्भवः ॥ गायत्र्युष्णिगनुष्टुप्चबृहतीपङ्क्तिरेवच ॥ ८३ ॥ त्रिष्टुप्चजगतीचैवविराट्छन्दांस्यनुक्रमात् ॥ धरोध्रुवस्तथासोमआपोग्नि र्वायुरेवच ॥ ८४ ॥ प्रत्यूषश्चप्रभासश्चविज्ञेयादेवताःक्रमात् ॥ अग्निर्भूर्वायु राकाशआदित्योद्यौर्विधुश्चते ॥ ८५ ॥ तत्त्वानिसप्तलोकास्तुक्षेत्राणिखचरा त्मकाः ॥ शुक्लंहिरण्मयंकृष्णंरक्तंकुंकुमसन्निभम् ॥ ८६ ॥ पद्मकिञ्जल्कनीला भंरक्तंवर्णाष्टकंमतम् ॥ षडाद्ययोरुदात्तःस्यात्स्वरितस्तुद्वितीययोः ॥ ८७ ॥ प्रचयोस्त्रिचतुर्वर्णैर्निहतंपञ्चमाक्षरम् ॥ उदात्तंसप्तमंचेतिज्ञात्वावेदंजपेन्मनुम् ॥ ८८ ॥ दधच्चक्रंगदांपद्मंदरंदक्षिणवामयोः ॥ सान्तराःस्युःशङ्खचक्रगदापद्मक राःक्रमात् ॥ ८९ ॥ यांमूर्त्तिंपूजयेत्पूर्वमन्यास्तस्याभवन्तिहि ॥ अङ्गान्यन्ति मपत्रेतुमध्यस्थंपुनरर्चयेत् ॥ ९० ॥ तत्रप्रणवपूजायांचाङ्गावृत्तिस्तथादिमा ॥ द्वितीयावरणंप्रोक्तमन्त्रवर्णाष्टमूर्त्तिभिः ॥ ९१ ॥ वासुदेवादिकैःशान्त्यादिसं युक्तैस्तृतीयकम् ॥ तृतीयेष्टदलेप्रोक्तारतिश्चापिधृतिस्तथा ॥ ९२ ॥ कान्ति स्तुष्टिश्चपुष्टिश्चस्मृतिदीप्याख्यकीर्त्तयः ॥ वज्रादिभिश्चतुर्थीस्यात्प्राग्वत्प श्रीसपञ्चमी ॥ ९३ ॥ मोकारावृत्तिपूजायांतृष्णावृत्तिचतुष्टयम् ॥ नाकारावृ

त्तिपूजायामावृत्तित्रयपूजनम् ॥ ९४ ॥ रकारावृत्तिपूजायांतुल्यमेवावृति
द्वयम् ॥ तृतीयावरणेपूज्याश्रीर्मायाचमनोन्मनी ॥ ९५ ॥ ह्रीर्मोहिनीमहा
मायारमद्याआवृतित्रयम् ॥ यवर्णमूर्त्तिपूजायान्तुल्यमेवावृतिद्वयम् ॥ ९६॥
तृतयावरणेचक्रंशङ्खश्चापिगदाहलः ॥ शार्ङ्गंचमुशलंखड्गस्त्रिशूलइतिपूज
नम् ॥ ९७ ॥ शोकारमूर्त्तिपूजायांप्राग्वदावरणद्वयम् ॥ तृतीयेष्टदलेनन्तो
वासुकिस्तक्षकस्तथा ॥ ९८ ॥ कर्कोटकस्तथापद्मोमहापद्मस्ततःपरम् ॥
शङ्खपालश्चकुलिकःप्रोक्तमन्त्रावृतिद्वयम् ॥ ९९ ॥ यकारमूर्तिपूजायामङ्गै
स्स्यात्प्रथमावृतिः ॥ वासुदेवादिभिःशान्त्यादियुक्तैरमयामता ॥ १०० ॥
तृतीयार्कदलेकोणेवाद्यांश्चैवप्रपूजयेत् ॥ चतुर्थ्यामष्टपत्रेतुवज्रादीनांसमर्च
नम् ॥ १ ॥ पञ्चम्यांदिग्दलेष्वर्च्यामत्स्याद्याह्यवतारकाः ॥ षष्ठ्यामिन्द्रादि
काश्चाग्रेतदस्त्राणीतिपूजनम् ॥ २ ॥ जपेत्षोडशलक्षाणिहुनेदत्रतुपूर्ववत् ॥
इहलोकेसुखंप्राप्यविष्णुसायुज्यमाप्नुयात् ३ ॥ अथान्यंमुक्तिदंवक्ष्येनारायण
मनुंपरम् ॥ नारायणस्यचरणौशरणंचततोवदेत् ॥ ४ ॥ प्रपद्येतारमुच्चार्य्य
श्रीमन्नारायणायच ॥ नमोजिनार्णकोमन्त्रोमुन्याद्यंपूर्ववन्मतम् ॥ ५ ॥
षड्दीर्घयुक्तकामेनषडङ्गविधिरस्यतु ॥ ध्यानपूजाप्रयोगादिपूर्ववत्परिकीर्त्ति
तम् ॥ ६ ॥ अथातःसम्प्रवक्ष्यामिमाधवस्यमहामनुम् ॥ क्षिप्रसिद्धिकरःका
श्यांयद्वासौध्रुवपूर्वकः ॥ ७ ॥ रमांबिन्दुपदंप्रोक्त्वामाधवायनमोनमः ॥ द्वाद
शार्णोमहामन्त्रःपञ्चाङ्गानिक्रमात्पदैः ॥ ८ ॥ शङ्खचक्रगदापद्मधरंपीताम्बरा
वृतम् ॥ बद्धाञ्जलीरमावामेवादयन्तीचवल्लकीम् ॥ ९ ॥ नारदस्तुम्बुरुर्दक्षभा
गेतैरपिसंयुतम् ॥ प्रसन्नवदनंध्यायेवरदानसमुद्यतम् ॥ १० ॥ पूर्वोक्तेपूजयेत्पी
ठेमध्येलक्ष्म्यासमावृतम् ॥ पञ्चाङ्गपूर्वमभ्यर्च्ययजेदष्टदलेक्रमात् ॥ ११ ॥
किरणांधूतपापांचयमुनांचसरस्वतीम् ॥ गङ्गामसींचवरुणांगण्डकींचदलाष्ट
के ॥ १२ ॥ बिन्दुंचनारदंभीष्मंदिवोदासार्जुनौबलिम् ॥ विभीषणंचप्रह्लादं
बाह्येषोडशपत्रके ॥ १३ ॥ मोदंप्रमोदंसुमुखंदुर्मुखंगणनायकम् ॥ ढुण्ढिरा
जंविशालाक्षंढुण्ढिभैरवमीश्वरम् ॥ १४ ॥ साम्बादित्यंयोगिनींचदण्डपा

---

१ ॐ, श्रीं, बिन्दुमाधवाय, नमः,–नमः इन पांचपदों को पञ्चाङ्गों में न्यासकरे ॥

र्णिविनायकम् ॥ जैनेन्द्रंचमहामायानूपुरेदिक्पतीनपि ॥ १५ ॥ दन्तलक्षं
जपेन्मन्त्रंहोमंप्राग्वत्समाचरेत् ॥ शान्त्यादिगुणसम्पन्नोधनवान्मुक्तिभाग्भ
वेत् ॥ १६ ॥ अथातःसम्प्रवक्ष्यामिगोविन्दस्यपरंमनुम् ॥ गोविन्दायनम
श्चेतिपडर्णोमनुरीरितः ॥ १७ ॥ शौनकोस्यमुनिश्छन्दोविराड्गोविन्दईश्वरः॥
पडङ्गंमन्त्रवर्णैःस्यात्सर्वेणव्यापकंचरेत् ॥ १८ ॥ शङ्खचक्रगदापद्मधरंध्याय
न्नकिरीटिनम् ॥ गरुडोपरिसंस्थंचसनकाद्यैरुपासितम् ॥ १९ ॥ लक्ष्मीधरा
भ्यांसहितमुद्यदादित्यकुण्डलम् ॥ लोकरक्षाकरंदिव्यंदिव्यमाल्यानुलेपनम्॥
२० ॥ पूर्वोदितेयजेत्पीठेवैष्णवेनोक्तवर्त्मना ॥ देवमावाह्यमन्त्राङ्गैःप्रथमावृ
तिरीरिता ॥ २१ ॥ चक्राद्यैश्चद्वितीयास्यात्तृतीयासनकादिभिः ॥ सनकः
स्यात्ततोप्यग्रेसनन्दनसनातनौ ॥ २२ ॥ सनत्कुमारश्चपराशरोव्यासश्चना
रदः ॥ शौनकोष्टमएवस्याच्चतुर्थीलोकपालकैः ॥ २३ ॥ तदायुधैःपञ्चमीस्या
देवंपूजासमीरिता ॥ लक्षमेकंजपेन्मन्त्रंतद्दशांशंहुनेद्घृतैः ॥ २४ ॥ तर्प्पणं
मार्जनंकुर्य्याद्ब्राह्मणानपिभोजयेत् ॥ एवंकृतप्रयोगस्यरोगनाशोभविष्यति॥
२५ ॥ कन्यार्थीलाजहोमेनलक्ष्म्यर्थीबिल्वहोमतः ॥ वस्त्रार्थीपुष्पहोमेनआ
रोग्यार्थीतिलैर्हुनेत् ॥ २६ ॥ रविवारेजलेस्थित्वानाभिमात्रेयजेद्बुधः ॥ अ
ष्टोत्तरसहस्राणिज्वरनाशोभवेद्ध्रुवम् ॥ २७ ॥ विवाहार्थंजपेन्मासंशशिमण्ड
लसन्निभम् ॥ ध्यायेल्लभेद्रमांकन्यांकुलीनांचकुटुम्बिनीम् ॥ २८ ॥ अथातः
सम्प्रवक्ष्यामिविष्णुमन्त्रंमहाद्भुतम् ॥ विष्णवेनमइत्येषोमन्त्रःपञ्चाक्षरोमतः ॥
२९ ॥ नारदोस्यमुनिश्छन्दोगायत्रीविष्णुरीश्वरः ॥ पञ्चवर्णैःसमस्तेनपडङ्ग
विधिरीरितः ॥ ३० ॥ शङ्खचक्रगदापद्मधरंलक्ष्मीसमावृतम् ॥ पीताम्बरंघन
श्यामंध्यायेत्तंभूषणान्वितम् ॥ ३१ ॥ पूर्वोक्तेचयजेत्पीठेपट्कोणाष्टदलान्विते॥
बलिंविभीषणंभीष्मंप्रह्लादंनारदार्जुनौ ॥ ३२ ॥ षट्दलेचाष्टपत्रेतुविदिक्षुस
नकादिकान् ॥ एवंशीलंसुशीलंचजयंचविजयंदिशि ॥ ३३ ॥ नूपुरेदिक्प
तीनिष्ट्वातदस्त्राणिततोबहिः ॥ पञ्चलक्षंजपेन्मन्त्रंत्रिमध्वक्तैस्तिलैर्हुनेत्॥३४॥
तर्प्पणंमार्जनंविप्रान्भोजयित्वासुसिद्धयति ॥ अनेनलक्षपद्मानिशान्तिका
मःसमर्चयेत् ॥ ३५ ॥ नकदाचिद्दारिद्रःस्याद्दूर्वाभिःस्यादरोग्यता ॥ रक्तैर्हया

रिकुसुमैगजानंवशमानयेत् ॥ ३६ ॥ चम्पकैःश्रियमाप्नोतिमालत्यापिसुखी भवेत् ॥ तुलसीमञ्जरीभिस्तुसर्वकामानवाप्नुयात् ॥ ३७ ॥ केतक्याजायते कामोह्यमरोजायतेनरः ॥ पारिजातैस्तुसौन्दर्य्यंनातःपरतरोमनुः ॥ ३८ ॥ अथातःसम्प्रवक्ष्यामिमधुसूदनसन्मनुम् ॥ तारोनमोभगवतेङेन्तश्चमधुसूद नः ॥ ३९ ॥ त्रयोदशाक्षरोमन्त्रोमुनिर्ब्रह्मासमीरितः ॥ छन्दोनुष्टुब्देवतातु भगवान्मधुसूदनः ॥ ४० ॥ पदैर्मन्त्रस्यसर्वेणपञ्चाङ्गविधिरीरितः ॥ शेषत ल्पप्रसुप्तंतुलक्ष्मीसंवाहितांघ्रिकम् ॥ ४१ ॥ नाभिपद्मस्थितविधिंशङ्खचक्रग दाधरम् ॥ पीताम्बरंघनश्याममंमधुकैटभमारकम् ॥ ४२ ॥ कर्णिकायांयजेद्वि ष्णुंबहिरष्टदलेर्चयेत् ॥ योगनिद्रांमहामायांकालरात्रिंचकालिकाम् ॥ ४३ ॥ महारात्रिंमोहरात्रिंमहाविद्यांचमोहिनीम् ॥ एवंसम्पूज्यदेवेशंजपेल्लक्षचतुष्टय म् ॥ ४४ ॥ पद्मैर्हुनेत्त्रिमधुरप्लुतैस्तस्यदशांशतः ॥ तर्प्पणंमार्जनंकृत्वामन्त्र सिद्धिःप्रजायते ॥ ४५ ॥ आम्रपुष्पैर्गोघृताक्तैर्हुत्वाभोगमवाप्नुयात् ॥ पला शकुसुमैर्हुत्वाशत्रूणांस्तम्भयेद्बलम् ॥ ४६ ॥ अथार्कैःशोकनाशःस्यात्सिन्दूरै र्वश्यताभवेत् ॥ मालत्याचातुलालक्ष्मीरन्यत्पूर्ववदेवतु ॥४७॥ अथातःसम्प्रव क्ष्यामिमन्त्रंत्रैविक्रमंपरम् ॥ तारोनमोभगवतेव्याहृतित्रितयंवदेत् ॥ ४८ ॥ व्यापकायपदंपश्चाद्ङेन्तंचापित्रिविक्रमम् ॥ विंशत्यर्णोमहामन्त्रोगतराज्य प्रदायकः ॥ ४९ ॥पदपञ्चकसर्वेणषडङ्गविधिरीरितः ॥ मुनयोबालखिल्याःस्यु श्छन्दोगायत्रमीरितम् ॥५०॥ देवताविश्वरूपोयंत्रिविक्रमउदाहृतः॥ दक्षांघ्रि व्याप्तपातालंवामांघ्रिव्याप्तभूतलम् ॥५१॥ दक्षिणंपुनरुत्थाप्यस्वर्गव्यासंकरंह रिम्॥बलिदत्तैःकुशतिलैस्तोयैः सम्प्रस्रवत्करम्॥५२॥अभयंवामहस्तेनकुर्वन्तं चसुरेश्वरम् ॥ गङ्गौघधौतपादाब्जंध्यायेद्ब्रह्मादिकैःस्तुतम् ॥५३॥ वैष्णवेच यजेत्पीठेदलेष्वष्टसुचक्रमात् ॥ बलिंविधिंचप्रह्लादंकश्यपंचादितिंशिवम् ॥ ५४ ॥ लक्ष्मींभुवंभूपुरेतुदिगीशानायुधानिच ॥ विंशल्लक्षंजपेन्मन्त्रंतिलत

---

१ ॐ, नमो, भगवते, भूर्भुवःस्वर्व्यापकाय, त्रिविक्रमाय, इस मन्त्रके ॐ आदिक पांच पदों और सम्पूर्ण मन्त्र को षडङ्ग में न्यास करे जैसे, ॐ हृदयायनमः, नमः शिरसे स्वाहा, इत्यादि ॥

ण्डुलसर्षपैः ॥ ५५ ॥ त्रिमध्वक्तैर्हुनेत्पश्चात्तर्प्पणाद्यंचकारयेत् ॥ एवंसिद्ध मनुर्मन्त्रीलभतेवाञ्छितंफलम् ॥ ५६ ॥ अथातः सम्प्रवक्ष्यामिवामनस्यमनुं परम् ॥ तारोनमोभगवतेबलिसर्वस्वहारिणे ॥ ५७ ॥ अमुकंदेहिमामाभीष्ट मनेकंचवामने ॥ मायां[1]रमां[2]समुच्चार्य्यमन्त्रोद्वात्रिंशदर्णकः ॥५८॥ कामोमुनि रनुष्टुप्चच्छन्दोदेवस्तुवामनः ॥ सप्ताष्टा[3]र्कत्रिभूचन्द्रैःषडङ्गविधिरीरितः॥५९॥ प्रगृह्णन्तंबलिंचार्थान्हर्षेणददतेबलिः॥पूर्णकामावुभौध्यायेदितिप्रीतिसमन्वि तौ ॥ ६० ॥ पूर्वोक्तमर्चनन्त्वत्रकोरिमात्रंजपेन्मनुम् ॥ लक्षंहुनेद्बिल्वफलै र्मधुरत्रयसंयुतैः ॥ ६१ ॥ तर्प्पणंमार्जनंकृत्वातथाब्राह्मणभोजनम् ॥ तद्दशां शंचमन्त्रस्यसिद्धिः स्यात्पापनाशिका ॥ ६२ ॥ एवंसिद्धमनुर्मन्त्रीध्याय न्देवंजपेन्मनुम् ॥ साध्येददतमिष्टार्थंध्यात्वावर्णमितंजपेत् ॥ ६३ ॥ भावये द्वाञ्छितंस्वार्थंसदद्यान्नात्रसंशयः ॥ अहोरात्रंजपेद्वापिसदेवादिर्यदाभवेत् ॥ ६४ ॥ प्रातस्तदास्वयंमन्त्रंसाधकायप्रयच्छति ॥ दद्यादभीष्टंललिताप्यन्य देवस्यकाकथा ॥ ६५ ॥ अथातःसम्प्रवक्ष्यामिश्रीधरस्यमनुंपरम् ॥ रमांशक्तिं कामबीजंश्रीधरायततोवदेत् ॥ ६६ ॥ त्रैलोक्यमोहनायेतिनमोन्तः षोडशा क्षरः॥ऋषिर्ब्रह्माभवेच्छन्दोगायत्रंश्रीधरस्सुरः ॥ ६७ ॥ श्रीबीजेनषडङ्गानि[4] कुर्य्यात्षड्दीर्घसंयुजा ॥ दुग्धाब्धौचसितेद्वीपेसर्वर्त्तुफलितद्रुमे ॥ ६८ ॥ तत्र कल्पद्रुमाधःस्थात्पक्षीन्द्ररचितासने॥शङ्खचक्रगदापद्मपाणिंचामीकरद्युतिम्॥ ६९ ॥ किरीटिनंकुण्डलिनंश्रीवत्साङ्कितवक्षसम् ॥ हृदिलक्ष्मीधरंध्यायेच्छ्री धरंपुरुषार्थदम् ॥ ७० ॥ यजेच्चवैष्णवेपीठेकार्णिकायांसुरेश्वरम् ॥ षडङ्गानि यजेत्तत्रदेवाङ्गेषुततोयजेत् ॥ ७१ ॥ वक्षस्स्थलेदक्षभागेश्रीवत्सायेति पूजयेत्॥ वामेचकौस्तुभायेति श्रीवायां पूजयेत्ततः ॥ ७२ ॥ नमोन्तंवनमालायैमु कुटायेतिसंयजेत् ॥ भालेचकर्णिकायांचपक्षिराजायवैनमः ॥ ७३ ॥ नमःपङ्क

---

१ ह्रीं २ श्रीं ३ सात, आठ, बारह, तीन, एक, एक, अक्षरोंको क्रम से छह अंगों में न्यासकरे, जैसे, ॐनमोभगवतेहृदयायनमः इत्यादि ४ श्रां, श्रीं, श्रूं, श्रैं, श्रौं, श्रः इन छह बीजोंको क्रमसे षडंगों में न्यासकरे जैसे श्रांहृदयायनमः इत्यादि ॥

जनाभायगरुडायेति पूजयेत् ॥ पुरुषोत्तमकंलक्ष्मीनिवासंतदनन्तरम् ॥७४॥ सकलजगन्नाथंचजगत्क्षोभणमेवच ॥ सर्वस्त्रीहृदयोन्मादंमदोन्मादकमेव च ॥ ७५ ॥ सर्वसौभाग्यदंसर्वकामदंचप्रपूजयेत् ॥ तद्वत्सङ्गगतांदेवीं पूजये च्छ्रींश्रियेनमः ॥ लोकेश्वरांश्चवज्रादीन्भूपुरेपरिपूजयेत् ॥ लक्षमेकंजपेन्मन्त्रं तद्दशांशंघृतैर्हुनेत् ॥७६॥ तर्प्पणादिततः कुर्य्यात् पूर्ववत्साधकोत्तमः ॥ ततः सिद्धमनुर्मन्त्रीकाम्यकर्मसमारभेत् ॥ ७७ ॥ गन्धैश्चशतपुष्पैश्चहोमोल क्ष्मीकरःपरः ॥ वराहोक्तान्प्रयोगांश्चविदध्यादत्रसाधकः ॥ ७८ ॥ भजतेश्री धरंयस्तुसचलोकद्वयेसुखी ॥ अथातः सम्प्रवक्ष्यामिहृषीकेशस्यसन्मनुम् ॥ ७९॥कामबीजंहृषीकेशोङेहृदन्तोगजाक्षरः ॥ छन्दोनुष्टुबृषिर्ब्रह्माहृषीकेशश्च देवता ॥ ८० ॥ षड्दीर्घयुक्तकामेनषडङ्गविधिरीरितः ॥ शङ्खचक्रगदापद्म धारिणंसंस्मरेद्विभुम् ॥ ८१ ॥ गरुडोपरिसंविष्टंशुभ्रवर्णसुभूषणम् ॥ श्रीधरो क्तेयजेत्पीठेह्यङ्गाद्यावरणान्वितम् ॥ ८२ ॥ अष्टलक्षंजपेन्मन्त्रंतद्दशांशंहुने त्पुनः ॥आज्याक्तैःकमलैःपूर्णैस्तर्प्पणादिततश्चरेत् ॥ ८३ ॥ एवंसिद्धमनुर्म न्त्रीप्रयोगान्पूर्ववच्चरेत् ॥ विजयायप्रसूनैश्चतर्प्पणंसर्वकामदम् ॥ ८४ ॥ अथ मन्त्रान्तरंवक्ष्येश्लोकरूपंमहाफलम् ॥ यज्जपादेवसिद्ध्यन्तिसाधकाभीष्टको टयः ॥ ८५ ॥ स्थानेहृषीकेशतवप्रकीर्त्याजगत्प्रहृष्यत्यनुरज्यतेच ॥ रक्षांसि भीतानिदिशोद्रवन्तिसर्वेनमस्यन्तिचसिद्धसङ्घाः ॥ ८६ ॥ अर्जुनोस्यमुनिः प्रोक्तोनुष्टुप्छन्दश्चदेवता ॥ हृषीकेशोखिलंसर्वज्ञेयंवैपूर्वमन्त्रवत् ॥ ८७ ॥ षड्दीर्घयुक्तबीजेनषडङ्गविधिरीरितः ॥ प्रलयाब्धौशेषतल्पेलक्ष्मीसंवाहितां घ्रिकम् ॥ ८८ ॥ नाभिपुष्करसंस्थेनधात्रास्तुतमरिन्दमम् ॥ पद्मंकौमोदकींह स्तैर्दधतंदीप्ततेजसम् ॥ ८९ ॥ पीताम्बरधरंश्यामम‍र्धोन्मीलितलोचनम् ॥ ध्यात्वार्चयेच्छ्रीधरोक्तपीठेतद्वज्जपादिकम् ॥ ९० ॥ प्रयोगांश्चविजानीया त्पद्मनाभार्चनंत्विति ॥ अथातःसम्प्रवक्ष्यामिदामोदरमनुंपरम् ॥ ९१ ॥ रा धादामोदरायेतिकामबीजेनसम्पुटः ॥ नवाक्षरोमहामन्त्रोभोगभाजांसुसिद्धि दः ॥ ९२ ॥ कामदेवोमुनिश्छन्दोगायत्रंदेवतामता ॥ राधादामोदरःसाक्षा

---

१ क्लां, क्लीं, क्लूं, क्लैं, क्लौं, क्लः, इन बीजों को न्यासकरे ॥

द्भुक्तिमुक्तिफलप्रदः ॥ ६३ ॥ पीताम्बरधरंश्यामंनानालङ्कारभूषितम् ॥ वामोत्सङ्गगतांराधांचालिङ्गन्तंमुदान्वितम् ॥ ६४ ॥ उद्यानेसंस्मरेद्देवंनाना पुष्पलतायुतम् ॥ षडङ्गंकामबीजेनयजेद्देवंसशक्तिकम् ॥ ६५ ॥ कर्णिका यांकेशरेषुगौर्य्याद्यामातृकायजेत् ॥ ब्रह्मादिकान्पद्ममध्येपत्राग्रेतुह्रियंरति म् ॥ ६६ ॥ पञ्चकामान्वसन्तंचतद्बाह्ये भूपुरेर्चयेत् ॥ दिगीशांश्चापिवज्रादी नेवंपूजासमीरिता ॥ ६७ ॥ नवलक्षंजपेन्मन्त्रंतन्मूलंसघृतंहुनेत् ॥ तर्पणं मार्जनंकृत्वादम्पत्योर्भोजनंचरेत् ॥ ६८ ॥ एकलक्षादिपञ्चान्तंकार्य्यलाघव गौरवात् ॥ पुरश्चरणवत्कुर्य्याज्जपाद्यंकार्य्यसिद्धये ॥ ६६ ॥ चतुर्ष्वपियु गेष्वेतत्समोद्भुतफलोनहि ॥ अथातः सम्प्रवक्ष्यामिसङ्कर्षणमनुंपरम् ॥ २०० ॥ कामबीजंसमुच्चार्य्यङेन्तस्त्रैलोक्यमोहनः ॥ ततश्चाप्रतिरूपायपरायचवदे त्पदम् ॥ १ ॥ सङ्कर्षणात्मनेहृच्चपञ्चविंशाक्षरोमनुः ॥ त्रैमुनिस्तुमुनिश्छ न्दोमितंसङ्कर्षणःसुरः ॥ २ ॥ षड्भिःपदैःषडङ्गानितथांगुष्ठादिषुन्यसेत् ॥ अंकुशंदक्षिणेहस्तेवामेनाभयमेवच ॥ ३ ॥ मेघश्यामंपीतवासोनानाभर णसंयुतम् ॥ नारदादियुतंध्यायेद्वाणीलक्ष्म्योचपार्श्वयोः ॥ ४ ॥ सुवर्ण मयेविपिनेस्थितंकल्पद्रुमावृते ॥ यजेच्चवैष्णवेपीठेनवलक्षंजपेन्मनुम् ॥ ५ ॥ हुनेत्तिलैस्त्रिमधुरप्लुतैःस्यात्तर्प्पणादिकम् ॥ एवंसिद्धमनुर्मन्त्रीदूर्वाखण्डायु तंहुनेत् ॥ ६ ॥ समस्तरोगनाशस्तुलक्ष्मीःपद्माक्षरोमतः ॥ आकर्षणंबिल्व फलैस्ताम्बूलैःस्याद्वशीकृतिः ॥ ७ ॥ दीर्घायुष्यंगोघृतेनमाहिषेणापिमन्म थः ॥ पुत्रजीवकबीजानांघृताक्तानांचहोमतः ॥ ८ ॥ बन्ध्यापिलभतेपुत्रंहोम सङ्ख्यायुतादिकम् ॥ अथातःसम्प्रवक्ष्यामिवासुदेवमनुंपरम् ॥ ६ ॥ तारोन मोभगवतेवासुदेवायसंस्मृतः ॥ द्वादशार्णस्तुगायत्रीछन्दश्चास्यप्रजाप तिः ॥ १० ॥ मुनिर्देवोवासुदेवःपञ्चाङ्गविधिरीरितः ॥ पदैःसमस्तेनतथाद्वाद शाङ्गंततोन्यसेत् ॥ ११ ॥ स्तनयोर्हृदयेपीठेबाह्वोरूर्वोश्चजानुनोः ॥ पादयो स्तुमनोर्वर्णान्न्यसेद्बिन्दुनमोन्तकान् ॥ १२ ॥ मन्त्रंसम्पूर्णमेवंतुयथास्थानेन्य सेद्बुधः ॥ त्रिशस्तारत्रिपुटितमूलेनव्यापकंचरेत् ॥ १३ ॥ मन्त्रार्णैस्त्रिविधं न्यासंन्यसेन्मन्त्रीततःपरम् ॥ कभालकर्णदृक्कण्ठदोर्हृज्जठरनाभिषु ॥ १४ ॥

लिङ्गजान्वंत्रिपुप्रोक्तःसृष्टिन्यासस्तुमन्त्रिभिः ॥ हृदादिकोयंशीर्षान्तःस्थिति न्यासउदाहृतः ॥ १५ ॥ पादावारभ्यशीर्षान्तोन्यासःसंहारसञ्ज्ञकः ॥ एष क्रमोयतीनांतुव्यस्ततोब्रह्मचारिणाम् ॥ १६ ॥ संहारसृष्टिस्थितयोगृहस्था नांप्रकीर्तिताः ॥ संहृतौदोषसंहारःसृष्टौचशुभसृष्टयः ॥ १७ ॥ सृष्टौचशान्ति विन्यासःसस्यात्कार्यस्त्रिधाबुधैः ॥ जीवतत्त्वात्मनेप्रोक्त्वापुरुषायनमश्चके॥ १८ ॥ प्राणतत्त्वात्मनेभालेसर्वगायनमोन्यसेत् ॥ बुद्धितत्त्वात्मनेच्युताय नमोनेत्रयोर्न्यसेत् ॥ १९ ॥ चित्ततत्त्वात्मनेवासुदेवायचनमोमुखे ॥ कर्णे हृत्पद्मतत्त्वायचदेत्सङ्कर्षणायच ॥ २० ॥ नमोन्यसेदथोदक्षभुजेसूर्यकलात्म ने ॥ सूर्यमण्डलतत्त्वायप्रद्युम्नायततोन्यसेत् ॥ २१ ॥ न्यसेत्ततश्चहृदयेम ध्यदेशेकलात्मने ॥ अग्निमण्डलतत्त्वायङेन्तोनारायणोमतः ॥ २२ ॥ कु क्षौन्यसेद्वासुदेवंतत्त्वायब्रह्मणेनमः ॥ सङ्कर्षणाख्यतत्त्वायलिङ्गेस्याद्विष्णवे नमः ॥ २३ ॥ ततःप्रद्युम्नतत्त्वायनृसिंहायनमोन्यसेत् ॥ दक्षपादेचवामेनिरु द्धतत्त्वात्मनेन्यसेत् ॥ २४ ॥ वाराहायनमश्चेतितत्त्वन्यासउदाहृतः ॥ मूर्त्तिपञ्जरनामानंकेशवादिकमाचरेत् ॥ २५ ॥ न्यासंततोवासुदेवंध्यायेत्त द्ध्यानमुच्यते ॥ दुग्धाम्भोधौसितद्वीपेदिव्ययोषाविराजिते ॥ २६ ॥ तत्रा हृतेमहारम्येसर्वर्त्तुद्रुमसंकुले ॥ तत्रकल्पद्रुमाधःस्थाद्रत्नमञ्चेतुपङ्कजम् ॥२७॥ स्वर्णाभंचिन्तयेत्तत्रवासुदेवंस्मिताननम् ॥ चन्द्रकान्तिशङ्खचक्रगदापद्मल सत्करम् ॥ २८ ॥ श्रीवत्साङ्कनकेयूरमुकुटंचारुकुण्डलम् ॥ सकौस्तुभंपीतव स्त्रंधृतग्रैवेयकङ्कणम् ॥ २९ ॥ सनकाद्यैःसिद्धविद्याधरगन्धर्वसेवितम् ॥ यजे न्नारायणेपीठेमूर्त्तिंमूलेनकल्पयेत् ॥ ३० ॥ पूर्वमङ्गानिसम्पूज्यवासुदेवादि हेतयः ॥ दिग्विदिक्षुचसम्पूज्यततोद्वादशमूर्तयः ॥ ३१ ॥ केशवाद्याःसम भ्यर्च्यालोकेशाआयुधैःसह॥३२॥एवंसम्पूज्यविधिवज्जपेद्द्वादशलक्षकम्॥ तत्सहस्रंचकमलैर्जुहुयान्मधुरप्लुतैः ॥ ३३ ॥ तर्प्पणादिततःकृत्वाप्रयोगाना चरेत्तथा ॥ क्षीरवृक्षसमिद्भिश्चहोमःस्यात्पापमुक्तये ॥ ३४ ॥ दुग्धकाष्ठैःशमी मिश्रैःसहस्राण्ययुतानिच ॥ आज्येनहविषाहुत्वाचित्तंबुद्धिःप्रजायते ॥ ३५॥ पायसेनतिलैःशुद्धैःसमिदाज्यैःसशालिभिः ॥ पृथगष्टसहस्राणिहुत्वाभीष्टम

वाप्नुयात् ॥३६॥ नारायणोक्तान्निखिलान्प्रयोगानाचरेत्ततः ॥ अथातःसम्प्रव क्ष्यामिवासुदेवमनुंपरम्॥३७॥तारंमायाद्वयंलक्ष्मीद्वयंलक्ष्मीपदंवदेत्॥वासुदे वायहृदयंशक्रवर्णःस्मृतोमनुः ॥ ३८ ॥ ऋषिःप्रजापतिश्छन्दोगायत्रीवीज कंध्रुवः ॥ देवोलक्ष्मीवासुदेवःशक्तिर्देवीप्रकीर्त्तिता ॥३९॥द्विद्विद्वीपुद्विभिर्व र्णैस्ताराद्यैरङ्गकल्पनम् ॥ उद्यत्सौदामिनीकान्तिनानाभूषणभूषितम् ॥४०॥ लक्ष्म्यालिङ्गनतश्चैकीभूतंचाङ्कगतांहिताम् ॥ पुस्तकंदर्पणंपद्मंरत्नकुम्भंरमां करैः ॥ ४१ ॥ दधतींशङ्खचक्राब्जगदाहस्तंगदाधरम् ॥ द्वादशाक्षरवत्पूजा शक्रलक्षंजपोमतः ॥ ४२ ॥ दशांशंपङ्कजैर्होमोमधुरत्रयसंयुतैः ॥ पायसेन कृतोहोमोलक्ष्मीवश्यप्रदोभवेत् ॥ ४३ ॥ मधुराक्तैस्तिलैर्हुत्वासर्वकार्याणिसा धयेत् ॥ अथातःसम्प्रवक्ष्यामिप्रद्युम्नमनुमद्भुतम् ॥ ४४ ॥ क्लींप्रद्युम्नायहृदयं मनुःसप्ताक्षरोमतः ॥ कामोमुनिर्विराट्छन्दःप्रद्युम्नश्चास्यदेवता ॥ ४५ ॥ नियोगःसमरेजेतुंकामयुद्धेतथास्त्रियः ॥ ध्यायेन्मधुवनेदेवंसर्वर्तुकुसुमावृते ॥ ४६ ॥ आलिङ्गितंप्रभावत्यानानारूपंसुभूषितम् ॥ शरचापधरंकान्तंकान्ता भिरपिवीक्षितम् ॥ ४७ ॥ गन्धर्वैरभितोगीतंप्रसन्नमुखपङ्कजम् ॥ यजेत्पूर्वोदि तेकामपीठेमन्त्रायुतंजपेत् ॥ ४८ ॥ शरत्कालेवसन्तेवादिनानामेकविंशतिः॥ आद्यन्तयोःपूजनंस्याद्भोजयेद्दम्पतीयुगम् ॥ ४९ ॥ एवंसिध्यतिमन्त्रोयंस र्वाभीष्टप्रदायकः ॥ सहस्रादिचकोट्यन्तंहोमःकार्य्योवशोभवेत् ॥ ५० ॥ यक्षिण्योवशगाश्चैववश्यःस्याद्योगिनीगणः ॥ राजिकाभिःस्त्रियोवश्याः सर्प्पाःस्युर्गारुडीदलैः ॥ ५१ ॥ विप्राःपलाशकुसुमैःसेवन्तीभिर्नृपास्तथा ॥ वैश्याश्चचम्पकैःशूद्राःपुष्पैःसहचरोद्भवैः ॥ ५२ ॥ तुरुष्कायान्तिदासत्वंज यन्त्याःकुसुमैर्हुनेत् ॥ अथातःसम्प्रवक्ष्यामित्वानिरुद्धमनुंतथा ॥ ५३॥ वाणरु द्धानिरुद्धायमनोन्यस्मिन्मनोरथे॥ऊषाहृदयरुध्यायकामरूपायतेनमः॥५४॥ वात्स्यायनोमुनिश्छन्दोनुष्टुब्देवोनिरुद्धकः ॥ स्मरेद्रूपागृहेतंचचित्रलेखादि संयुते ॥ ५५ ॥ पर्यङ्केसुखमासीनंनानालङ्कारभूषितम् ॥ आलिङ्गितप्रियोरवं चस्त्रीकौतुकरमान्वितम् ॥ ५६ ॥ नमोन्तैःषट्पदैःकामबीजाद्यैःस्यात्षडङ्ग कम् ॥ कामपीठेयजेद्देवंवर्णलक्षंजपेन्मनुम् ॥ ५७ ॥ घृताक्तैःकामकुसुमैरभा

वेचूतसम्भवैः ॥ जुहुयान्मन्त्रराजस्यसिद्धितोस्यजगद्वशे ॥ ५८ ॥ अयंलौकिकमार्गेणसाधकोनिशिहोमयेत् ॥ अष्टोत्तरसहस्रंतुकुलवत्सतदानृपाः ॥ ५६ ॥ दासीभूताःसाधकस्यजपेद्दतुमतींयभेत् ॥ अष्टोत्तरसहस्रंतुभूतप्रेतपिशाचकाः ॥ ६० ॥ प्रत्यक्षीभूयकार्य्याणिकुर्वतेदासवच्चिरम् ॥ किञ्चिद्भक्षन्तुतेभ्यश्चदद्यात्तेसर्वकारकाः ॥ ६१ ॥ अथवक्ष्येमहामन्त्रंसौख्यदंपौरुषोत्तमम् ॥ मायारमातारकामबीजंहृत्पुरुषोत्तम ॥ ६२ ॥ आद्यानिरुद्धलक्ष्मीतिनिवाससकलेतिच ॥ जगत्क्षोभणसर्वस्त्रीहृदयेतिविदारण ॥ ६३ ॥ ङेन्तंमनोन्मादकरःसुरासुरपदंवदेत् ॥ मनुजसुन्दरीत्युक्तामनोन्मथमनांसिच ॥ ६४ ॥ तापयद्वितयंप्रोक्तादिद्दिदापयशोषय ॥ द्विर्मारयस्तम्भयद्विर्द्विर्नाशयपदंवदेत् ॥ ६५ ॥ आकर्षयद्वयंप्रोक्ताद्विरावेशयसंवदेत् ॥ परमोक्ताचसुरभेसौभाग्यकरसर्वच ॥ ६६ ॥ कामप्रदेतिचोच्चार्य्यचालक्ष्मींहनयुग्मकम् ॥ चक्रेणगदयाचेतिखड्गेनेतिसमुच्चरेत् ॥ ६७ ॥ सर्वबाणैर्भिन्दभिन्दपाशेनत्रासयद्वयम् ॥ बन्धबन्धेत्यंकुशेनद्विस्त्रासयकुरुद्वयम् ॥ ६८ ॥ किन्तिष्ठसीतिचोच्चार्य्यतावद्यावत्समीप्सितम् ॥ मेसिद्धंभवतिक्लींहूंफड्नमोह्रींरमांवदेत् ॥ ६६ ॥ कामंकामंकुशुभ्रांशुद्विवर्णोयंमनुर्मतः ॥ भेदानस्यप्रवक्ष्यामिकामनावर्णभेदतः ॥ ७० ॥ आदौमायांतथान्तेचसप्तबीजानिवर्जयेत् ॥ ज्ञानदीक्षीचसन्न्यासीयस्तुकेवलवैष्णवः ॥ ७१ ॥ मोहनार्थन्तुदेवानांत्यजेदावरणद्वयम् ॥ स्तम्भयद्वितयंब्रूयात्तथासम्मोहयद्वयम् ॥ ७२ ॥ निष्कामःह्रींरमादौतुनब्रूयात्सरमस्यच ॥ पूर्वसमस्तशब्दंचयोजयेद्विधेरेतिच ॥ ७३ ॥ अनिष्टकरणार्थन्तुशत्रोर्नामप्रयोजयेत् ॥ स्थानेलक्ष्म्याइतिप्रोक्ताभेदाश्चत्वारएवहि ॥ ७४ ॥ जैमिनिर्मुनिरेतेषांछन्दश्चामितमीरितम् ॥ त्रैलोक्यमोहनोनामदेवतापुरुषोत्तमः ॥ ७५ ॥ ॐक्लींपूर्वाणिहुंफट्चनमोन्तानिप्रविन्यसेत् ॥ षडङ्गेषुपदान्यत्रवदेच्चपुरुषोत्तम ॥ ७६ ॥ त्रिभुवनोन्मादकरहृदयेपरिकीर्त्तितम् ॥ सकलजगत्क्षोभणेतिलक्ष्मीदयितशीर्षके ॥ ७७ ॥ शिखायांस्यान्मन्मथोत्तमाङ्गजकामदीपन ॥ कवचंस्यात्परमसुभगसर्वपदंवदेत् ॥ ७८ ॥ सौभाग्यकराप्रतिमरूपकेशवसंस्मरेत् ॥ अत्रैवकवचान्तेतुन्यसेदस्त्रंसुरासुर ॥ ७६ ॥ सुन्दरी

मनुजेत्युक्काहृदयेतिविदारण ॥ सर्वप्रहरणेत्युक्काधरसर्वमनांसिवा ॥ ८० ॥ हनद्धयंचहृदयंधनान्याकर्षयद्धयम् ॥ महानन्तेतिचास्यान्तेनेत्रेमंफट्चकीर्त्यते ॥ ८१ ॥ भुवनेश्वरसर्वज्ञवदेज्जनमनांसिच ॥ हनयुग्मंदारयद्विर्मेविद्यांवशमानय ॥ ८२ ॥ नेत्रमन्त्रःसमाख्यातस्तथांगुष्ठादिषुन्यसेत् ॥ कनिष्ठयोर्नेत्रमनुमस्त्रंतुकरपृष्ठयोः ॥ ८३ ॥ तत्त्वन्यासंततःकुर्य्याद्वासुदेवस्यभूतिदम् ॥ न्यसेत्करांगुलिषुचकामबीजानिशक्तयः ॥ ८४ ॥ द्रांद्राविर्णींतथाकामंक्षोभिर्णींद्रींचमन्मथाम् ॥ वशीकरांक्लींकन्दर्पंक्लींबीजंमकरध्वजम् ॥ ८५ ॥ आकर्षिणींचाथमीनकेतुंसम्मोहिनींचसः ॥ कामबीजप्रपुटितंमातृकान्याससमाचरेत् ॥ ८६ ॥ संहारसृष्टिस्थित्याख्यंतथानारायणोदितम् ॥ मूर्त्तिपञ्जरविन्यासंगायत्रीन्यासमाचरेत् ॥ ८७ ॥ प्रतिवर्णंप्रकुर्वीततांगायत्रीमथोशृणु ॥ सिद्ध्यन्तिसर्वकार्य्याणिजपाद्विष्णुप्रसादतः ॥ ८८ ॥ त्रैलोक्यमोहनायविद्महेस्मरायधीमहि ॥ तन्नोविष्णुःप्रचोदयात् ॥ ८९ ॥ शीर्षेभालेनेत्रयोश्चदक्षदोर्मूलमध्ययोः ॥ मणिबन्धांगुलीमूलेचांगुल्यग्रेप्रविन्यसेत् ॥ ९० ॥ एवंदक्षोरुमूलेचजानुगुल्फांगुलीतले ॥ अंगुल्यग्रेतथावामेभुजमूलादिकेन्यसेत् ॥ ९१ ॥ ततःपुनश्चपूर्वोक्तषडङ्गद्वादशाङ्गकान् ॥ न्यासान्कुर्य्यात्तथाकामबाणन्यासमतःपरम् ॥ ९२ ॥ श्रींस्वांश्रियेनमश्चोक्कावामोरौतुप्रविन्यसेत् ॥ स्वांलक्ष्म्यैचनमःकेस्वींसरस्वत्यैनमोमुखे ॥ ९३ ॥ स्वूंरत्यैचनमःकण्ठेस्वैंप्रीत्यैलिङ्गकेनमः ॥ ककुदिस्वैंनमःकीर्त्यैस्वौंकान्त्यैचनमोहृदि ॥ ९४ ॥ स्वंतुष्ट्यैचनमोनाभौस्वःपुष्ट्यैचनमोङ्गके॥ततश्चमूलमन्त्रेणप्राग्वद्व्यापकमाचरेत्॥ ९५॥ आयुधानियथास्थानंतत्त्वमुद्रादिकंन्यसेत् ॥ कामबीजैर्न्यसेत्पश्चाच्छ्रीवत्संकौस्तुभंतथा ॥ ९६ ॥ वनमालांततःपश्चाद्दृष्यादिन्यासमाचरेत् ॥ ऊर्ध्वांगुष्ठौत्वथाश्लिष्टौमूर्त्तिमूर्द्धनियोजयेत् ॥ ९७ ॥ त्रैलोक्यमोहनाख्योयंमन्त्रस्तंमूर्द्धिधारयेत् ॥ एवंन्यस्यशरीरादौध्यायेच्छ्रीपुरुषोत्तमम् ॥९८॥ उदयार्कसहस्राभंगरुडोपरिसंस्थितम् ॥ सर्वाङ्गसुन्दरंसौम्यंसर्वाभरणभूषितम् ॥ ९९ ॥ सुरासुरनुतंशश्वत्स्त्रीभिश्चैवसमावृतम् ॥ चक्रंशङ्खंधनुःखड्गंगदांमुशलमंकुशम् ॥ ३०० ॥ पाशंचबिभ्रतंदोर्भिर्वामाङ्गस्थितयाश्रिया ॥ सर्वभूषाढ्ययापद्मकर

यालिङ्गितंस्मरेत् ॥ १ ॥ पीठमध्येतुदेवस्यगरुडंपरिपूजयेत् ॥ पक्षिराजायस्वाहेतितस्यपूजामनुर्मतः ॥ २ ॥ ततोदेवंसमावाह्यदद्यात्पुष्पाञ्जलिंततः ॥ तद्वामोरौपूजनीयामन्त्रिणाश्रींश्रियेनमः ॥ ३ ॥ देवाग्न्यादिचतुर्दिक्षुकोणेषुपुरतस्तथा ॥ क्रमादभ्यर्च्चयेदङ्गषट्कंस्यात्प्रथमावृतिः॥ ४ ॥ अष्टभिश्चापिचक्राद्यैरायुधैरपरावृतिः ॥ तृतीयावरणेलक्ष्मीवाग्रतिप्रीतिकीर्त्तयः ॥५॥ कान्तिस्तुष्टिश्चपुष्टिश्चपूज्यावथचतुर्थके॥इन्द्रादींश्चापिवज्रादीन्पञ्चमेचेतिपूजनम् ॥ ६॥ ततःपुष्पाञ्जलिंदद्यात्तत्त्वन्यासोक्तनामभिः ॥ आदौक्लींमत्रत्रैलोक्यमोहनायततोवदेत् ॥ ७ ॥ ततोलज्जारमाकामबीजाद्यैःपञ्चनामभिः ॥ नमोन्तैःपञ्चपुष्पाणामञ्जलीश्चसमर्प्पयेत् ॥ ८ ॥ पुरुषोत्तमहृषीकेशौविष्णुश्रीधररामकाः ॥ पञ्चनामानीतिचात्रपुरुषोत्तमपूजनम् ॥ ६ ॥ चतुर्लक्षंजपेन्मन्त्रंहुनेदर्कसहस्रकम् ॥ बिल्वैर्वाकमलैःपश्चात्तर्प्पणाद्यैर्भवेन्मनुः ॥ १० ॥ सिद्धःप्रयोगान्कुर्वीतायुतंप्रातर्जपेन्मनुम् ॥ समस्ताधौप्रजुहुयादष्टोत्तरसहस्रकम् ॥ ११ ॥ सम्यग्ज्योतिष्मतीतैलेनारोगोबुद्धिमान्भवेत् ॥ समूलकाण्डांशिरसिदद्यादञ्जलिनींतुयः॥ १२ ॥ अष्टाधिकशतंजप्त्वासर्वलोकप्रियोभवेत् ॥ अश्वमारप्रसूनैश्चसम्पूज्यपुरुषोत्तमम् ॥ १३ ॥ अष्टाधिकसहस्रंतुकुमुदैर्जुहुयात्ततः ॥ राजानोवशगाःसर्वेमासमात्रान्नसंशयः ॥ १४ ॥ मालतीपुष्पहोमेनतद्वद्वैश्यान्नयेद्वशम् ॥ पलाशपुष्पहोमेनप्राग्वद्विप्राश्चवश्यकाः ॥ १५॥ अभिवाञ्छतियोयोषांतस्यानामयुतंमनुम् ॥ जपेत्पक्षंप्रतिदिनंचाष्टाधिकसहस्रकम् ॥ १६ ॥ दिनादौसावशीभूयाद्दास्यस्मीत्यादिवादिनी ॥ चौरापहृतवित्तस्तुसाष्टाधिकसहस्रकम् ॥ १७ ॥ अश्वत्थोत्थसमिद्भिस्तुहुनेत्पक्षत्रयंयमी॥ अथवाकटुतैलेनत्रिपक्षान्तंक्रमाद्धुनेत् ॥ १८ ॥ अथवार्णसहस्रंतुप्रजपेन्मनुमन्वहम् ॥ चौरोयातिधनंदत्त्वाप्रणम्यस्वगृहंप्रति ॥ १६ ॥ सहस्रजप्तमनुनात्वमुनामनुजास्थिच ॥ निखातंशत्रुसदनेशत्रुमुच्चाटयेद्ध्रुवम् ॥२०॥ राजिकाष्टशतंजप्तानिखाताशत्रुमन्दिरे ॥ क्रूरवारेचलग्नेपिशत्रुमुच्चाटयेद्ध्रुवम् ॥ २१ ॥ हयारिकुसुमंचापिपक्षयोरुभयोरपि ॥ शुक्लंरक्तंकेशयुक्तंरिपुमुच्चाटयेद्ध्रुवम् ॥ २२ ॥ षण्मासंजुहुयाद्रात्रौकलिद्रुमसमिद्वरैः ॥ रिपुर्निधनमायाति

साष्टाधिकसहस्रतः ॥ २३ ॥ मासषट्कंहुनेदर्कसमिद्भिश्चसहस्रकम् ॥ यद्वा ज्योतिष्मतीतैलंहुनेदष्टसहस्रकम् ॥ २४ ॥ शत्रुर्मरणमाप्नोतिसर्वोमासचतुष्टयात् ॥ मन्त्रीविविक्तेभूदेशेजपहोमार्चनेरतः ॥ २५ ॥ अङ्कोलाज्यंसहस्रंतु हुनेन्मासत्रयावधि ॥ ततःपूर्वाचमध्याह्नेपावकाचन्द्रसन्निभा ॥२६॥ प्रादुर्भवेचगुटिकायस्तामभ्यर्च्यधारयेत् ॥ अनेनैवाथशिरसिसभवेत्खेचरः सदा ॥ २७ ॥ अदृश्यःसिद्धसङ्घैश्चतथास्वर्णादिधातुकृत् ॥ आज्याक्ताभिश्चदूर्वाभिर्होमोभयविनाशकः ॥ २८ ॥ यस्यनामयुतंमन्त्रंजपेदयुतसङ्ख्यया ॥ शमयेदापदस्तस्यनात्रकार्य्याविचारणा ॥ २९ ॥ इमंमन्त्रंजपेद्भूयः समस्तैश्वर्यवान्भवेत् ॥ अयंमनुवरोगोप्योनदेयःपापिनांक्वचित् ॥ ३० ॥ अथातः सम्प्रवक्ष्यामिमन्त्रंश्रीपौरुषोत्तमम् ॥ तारंमारंरमांङेन्तंवदेच्चपुरुषोत्तमम् ॥ ३१ ॥ हुंफट् स्वाहेतिमन्त्रोयंविश्ववर्णःप्रकीर्त्तितः ॥ ब्रह्मामुनिश्चगायत्रीछन्दोसौपुरुषोत्तमः ॥ ३२ ॥ देवताकीर्त्तिताचास्यनियोगोभीष्टसिद्धये ॥ भूभूमद्व्द्विद्विवर्णैःषडङ्गविधिरीरितः ॥ ३३ ॥ संस्मरेत्परमंविष्णुंरक्तवर्णंचतुर्भुजम् ॥ शङ्खचक्रोत्पलगदाधारिणंपुरुषोत्तमम् ॥ ३४ ॥ पूर्वोदितेयजेत्पीठेप्रागवदङ्गानिचार्चयेत् ॥ वासुदेवादीनिदिक्षुशक्तीर्वैकोणगायजेत् ॥ ३५ ॥ नारायणोक्तशङ्खादीन्पार्षदान्कुमुदादिकान् ॥ दिगीशांश्चतदस्त्राणिप्रागवद्वर्णपूजनम् ॥ ३६ ॥ वर्णलक्षंजपेन्मन्त्रंसहस्रंपङ्कजैर्हुनेत् ॥ तर्पणादि ततःकृत्वामन्त्रसिद्धिःप्रजायते ॥ ३७ ॥ ततःप्रयोगानखिलान्पूर्वमन्त्रोदितांश्चरेत् ॥ अथातःसम्प्रवक्ष्यामिमन्त्रमाधोक्षजंवरम् ॥ ३८ ॥ रमांतारंह्रियं कामंहृद्ङेन्तस्स्यादधोक्षजः ॥ दशार्णो मुनिर्ब्रह्मापंक्तिश्छन्दःसमीरितम् ॥ ३९ ॥ साधकानांकामदायीदेवतास्यादधोक्षजः ॥ षड्भिःपदैःषडङ्गानिध्यादेवमनन्यधीः ॥ ४० ॥ शङ्खचक्रगदापद्मपाणिंपीताम्बरावृतम् ॥ मेघश्यामं

---

१ ॐ क्लीं श्रीं पुरुषोत्तमाय हुंफट्स्वाहा २ एक, एक, एक, छह, दो, और दो अक्षरों ो क्रमसे षडङ्गों में न्यासकरे जैसे, ॐ हृदयायनमः, क्लीं शिरसेस्वाहा, श्रीं शिखायै षट् इत्यादि ३ श्रीं ॐ ह्रीं क्लीं नमोधोक्षजाय ४ श्री, ॐ, ह्रीं, क्लीं, नमः, अधोक्षजाय, न छह पदोंको षडंगों में न्यासकरे जैसे, श्रीं हृदयायनमः इत्यादि ॥

सुरुचिरंगरुडासनसंस्थितम् ॥ ४१ ॥ वासुकिप्रमुखैर्नागैःसेवितंरमयायुतम् ॥
यजेच्चवैष्णवेपीठेषडङ्गानिप्रपूजयेत् ॥ ४२ ॥ सनकादीन्नारदंचजयंचविजयं
तथा॥अग्रतश्चापिपक्षीन्द्रंतद्बाह्येष्टदलेयजेत्॥४३॥नागाष्टकंदिगीशांश्चभू
पुरेहेतिसंयुतान् ॥ पञ्चलक्षंजपेन्मन्त्रंतिलाज्यैरयुतंहुनेत् ॥ ४४ ॥ तर्प्पणादि
ततःकृत्वासहस्रंभोजयेद्द्विजान् ॥ एवंसिद्धमनुर्मन्त्रीदशधामन्त्रितंजलम् ॥
४५ ॥ विषार्त्तायचसर्प्पादिदंशनादौप्रदापयेत् ॥ तत्कालंनिर्विषोभूयात्सेवते
तज्जलंयदि ॥ ४६ ॥ कुष्ठादिकगदैर्युक्तोमुच्यतेनात्रसंशयः ॥ अथातःसम्प्र
वक्ष्यामिनृसिंहमनुमद्भुतम् ॥ ४७ ॥ तारंलक्ष्मींचहृल्लेखांजयलक्ष्मीप्रियाय
च ॥ नित्यप्रमुदितेत्युक्त्वाचेतसेप्रवदेत्ततः ॥ ४८ ॥ लक्ष्मीश्रितार्धदेहायरमां
लज्जांनमोनमः ॥ त्रिरामवर्णोमन्त्रोयंमुनिर्ब्रह्मासमीरितः ॥ ४९ ॥ छन्दो
तिजगतीदेवोनृहरिःशक्तिरुदिजा॥ रमाबीजंषडङ्गानिश्रीबीजेनप्रकल्पयेत् ॥
५०॥ क्षीराब्धौसंस्मरेद्देवमग्रेचवसुवेष्टितम् ॥ रुद्रैश्चदक्षिणेभागेशङ्खचक्रगदा
म्बुजान् ॥ ५१ ॥ हस्तैर्दधानंसर्प्पस्यफणाचित्रविराजितम् ॥ पीताम्बरधरं
त्र्यक्षंनीलकण्ठंरमान्वितम् ॥ ५२॥वर्षाहतुल्यसाहस्रंजपोऽस्यपरिकीर्त्तितः॥
मद्धक्तैर्मल्लिकापुष्पैर्होमयेत्तद्दशांशतः॥ ५३ ॥तर्प्पणादिततःकुर्य्यादङ्गैःस्या
त्प्रथमावृतिः॥भास्वतीभास्करीचिन्ताद्युतिरुन्मालिनीरमा॥५४॥ कान्तीरुचि
श्चाष्टपत्रेभूपुरेदिव्यहेतयः॥एवंसिद्धमनुर्मन्त्रीप्रयोगानाचरेत्ततः ॥५५॥ म
ल्लिकाकुसुमैर्होमश्चायुतंत्विष्टदायकः॥अन्यानपिप्रयोगांश्चकुर्य्याद्दशार्णको
दितान् ॥ ५६ ॥ अथातःसम्प्रवक्ष्यामिनृसिंहमभयप्रदम् ॥ तारोनमोभगवते
नरसिंहायहृद्वदेत् ॥ ५७॥ तेजस्तेजसआभाष्याथाविराविर्भवेतिच ॥ वज्रन
खवज्रदंष्ट्रततःकर्म्माशयान्वदेत् ॥ ५८ ॥ रन्ध्रयद्वितयंपश्चात्तमोग्रसयुगंव
देत् ॥ स्वाहांतथाभयंचात्मनिभूयिष्ठाध्रुवंवदेत् ॥ ५९ ॥ नृसिंहबीजमथचद्वि

---

१ ॐ श्रींह्रींजय लक्ष्मीप्रियायनित्यप्रमुदितचेतसेलक्ष्मीश्रितार्धदेहाय श्रीं श्रीं नमोनमः २ श्रां, श्रीं, श्रूं, श्रैं, श्रौं, श्रः, इन अक्षरों को षडङ्गों में न्यास करे ३ ॐ नमोभगवते नरसिंहायनमस्तेजस्तेजसेआविराविर्भववज्रनखवज्रदंष्ट्रकर्माशयान्रन्ध्रयरन्ध्रयतमोग्रसग्रसस्वाहा अभयमात्मनिभूयिष्ठाःॐ क्ष्रौम् ॥

षष्ठ्यर्णोमनुर्मतः ॥ शुकदेवोमुनिः प्रोक्तोऽमितंछन्दश्चदेवता ॥६०॥ अभया
ख्योनारसिंहोध्यानपूजादिकंभवेत् ॥ दशावतारनृहरेस्तुल्यंलक्षमितोजपः ॥
६१ ॥ अथातःसंप्रवक्ष्यामिजनार्दनमनुंपरम् ॥ जंजनार्दनायनमोमन्त्रश्चा
ष्टाक्षरोमतः॥६२॥ ब्रह्माऋषिरनुष्टुप्चच्छन्दोदेवोजनार्दनः ॥ जंपूर्वकैर्नमो
न्तैश्चपञ्चार्णैरङ्गपञ्चकम्॥६३॥वराभयेचक्रगदेदधतंपीतवाससम्॥ आलिङ्गि
तञ्चरमयानारदाद्यैरभिष्टुतम्॥ ६४ ॥ अस्यपूजाप्रयोगादिजपहोमादिकंभवे
त् ॥ नारायणाष्टार्णवच्चविशेषात्पितृतोषकृत्॥६५॥ तत्पुत्रस्यचलोकोस्तिपौ
रुषोयंमनूत्तमः ॥ तथासंसेवितेमुक्तिराजन्मब्रह्मचारिभिः ॥६६॥ अथातःसंप्रव
क्ष्यामिगतराज्यप्रदायकम् ॥ उपेन्द्रमन्त्रंप्रणवमुमुपेन्द्रायहृन्नमः ॥६७॥ दशा
क्षरोमनुश्चास्यमुनिःकश्यपउच्यते ॥ पङ्क्तिश्छन्दउपेन्द्रस्तुदेवोबीजंतथास्मृत
म्॥ ६८ ॥पृथक्पदैःसमस्तेनषडङ्गविधिरीरितः ॥ ध्यानपूजाप्रयोगाद्यंबलिवा
मनवद्भवेत् ॥ ६९ ॥ अथातःसंप्रवक्ष्यामिहरिमन्त्रमभीष्टदम् ॥ हरयेनमइत्येषम
न्त्रःपञ्चाक्षरोमतः ॥७०॥ समस्तपापौघवनदहनेवडवानलः ॥ श्रीबीजाद्यस्तु
दारिद्र्येसर्वनाशायपक्षिराट् ॥ ७१ ॥ लज्जाबीजादिकश्चायंभुक्तिमुक्तिप्रदा
यकः ॥ ऐंसमन्वितमन्त्रोयंद्रुतंविद्याप्रदायकः ॥७२॥ सएवप्रणवाद्यस्स्याद
ज्ञानेन्धनपावकः ॥ जपन्कामादिकंतत्रमोहयेद्धनिनांगणान् ॥ ७३ ॥ वा
ग्बीजपूर्वकंजप्त्वावाक्सिद्धिंसमवाप्नुयात् ॥ हङ्कारपूर्वकंजप्त्वासमरेविजयी
भवेत् ॥ ७४ ॥ तारपूर्वंप्रजप्त्वातंद्रुतंप्राप्नोतिवाञ्छितम् ॥ कामपूर्वंचसञ्जप्य
वंशःकश्यपवद्भवेत् ॥ ७५ ॥ सर्वेषामेवछन्दस्तुगायत्रीनारदोमुनिः ॥ हरिर्दे
वस्त्वाद्यपदंबीजशक्तीमनोर्मते ॥७६॥ हकाराद्यैःपञ्चवर्णैरखिलेनषडङ्गकम् ॥
मेघश्यामंसुनयनंकाकपक्षविराजितम् ॥ ७७ ॥ राधिकादिप्रियायुक्तंपर्य्यट
न्तंवनेवने ॥ विचित्रपरिधिंवंशींदधतंवामदक्षयोः ॥ ७८ ॥ अथकृष्णोक्तव
त्पूजाजपोलक्षाष्टकोमतः ॥ होमःपञ्चामृतेनाथप्रयोगोस्यनिगद्यते ॥ ७९ ॥
यस्मिन्कार्य्येतुयोमन्त्रोगदितःकार्य्यगौरवात् ॥ एकायुतादिपञ्चान्तंपुरश्चर
णवज्जपेत् ॥ ८० ॥ अथवक्ष्येऽयोनिजस्यकृष्णस्यमनुमद्भुतम् ॥ कामोगो
वल्लभोङेन्तोमोहिताखिलयोषितम् ॥ ८१ ॥ भूषितंनूपुराद्यैश्चश्यामलंपञ्चवा

षिकम् ॥ काकपक्षधरंनानाकेलिकौतुककारकम् ॥ ८२॥ कर्णिकायांयजेद्देवं दलमध्येयजेदिमान् ॥ वासुदेवंरुक्मिणींचतथासङ्कर्षणाभिधम् ॥ ८३ ॥ सत्य भामांचप्रद्युम्नंलक्ष्मणामनिरुद्धकम् ॥ जाम्बवतींचतद्बाह्येभूपुरेदिक्पतीनथ ॥ ८४ ॥ तदायुधानिचततोजपेल्लक्षाष्टकंमनुम् ॥ ब्रह्मवृक्षसमिद्भिश्चहुनेदष्टस हस्रकम् ॥ ८५ ॥ तर्प्पणादिततःकृत्वामन्त्रसिद्धिःप्रजायते ॥ विदधीतप्रयो गांश्चपूर्वान्कृष्णमनूदितान् ॥ ८६ ॥ मूर्तीनांमनवश्चैतेमयाप्रोक्ताःसुसि द्धिदाः ॥ उक्ताःकेचिच्चतन्त्रेषुवक्तव्यंकिमतःपरम् ॥ ८७ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेचतुर्विंशतिमूर्तिमनुकथनंनामसप्त विंशःप्रकाशः ॥ २७ ॥

---

श्रीदेव्युवाच ॥ श्रीविष्णोरवतारायेस्थितायुगचतुष्टये ॥ तन्मन्त्राञ्छ्रो तुमिच्छामिभुक्तिमुक्तिप्रदायकान् ॥ १ ॥ शिवउवाच ॥ सम्यक्पृष्टंत्वयादेवि शृणवादौमन्त्रमद्भुतम् ॥ ममविष्णोःप्रियतमंमन्त्रंहरिहरात्मकम् ॥ २॥ [1]प्रण वंचापिहल्लेखाहौंबीजंशङ्करेतिच ॥ नारायणायचनमोहौंह्रींॐषोडशाक्षरः ॥ ३ ॥ ऋषिर्नारायणश्छन्दोनुष्टुब्भरिहरःसुरः ॥ [2]षड्दीर्घयुग्मायययाचषडङ्गा निप्रकल्पयेत् ॥ ४ ॥ शूलंचक्रंपाशजन्यमभयंदधतंकरैः ॥ स्वस्वरूपार्धनी लार्धदेहंहरिहरंभजे ॥ ५ ॥ नवशक्त्यभिधेपीठेपूर्वमङ्गानिसंयजेत् ॥ लक्ष्मी नारायणंभूमिंधराख्यामम्बिकांतथा ॥ ६ ॥ गौराङ्गींगोमतींगौरींगान्धारींभू पुरेपुनः ॥ लोकेशानपिचेन्द्रादीन्वर्णलक्षंजपेन्मनुम् ॥ ७ ॥ तिलैश्चतण्डु लैर्होमस्तर्प्पणादिततश्चरेत् ॥ एवंसिद्धमनुंमन्त्रीहृदिकृत्वातुवाञ्छितम् ॥ ८ ॥ जपेदष्टाक्षरंशान्तोदिनानामेकविंशतिः ॥ लभतेवाञ्छितानर्थान्सद्यःप्री तिकरोमनुः ॥ ९ ॥ अथोच्यतेहयग्रीवमन्त्रःसर्वार्थसिद्धिदः ॥ सहावुकारसं युक्तौबिन्दूनोपरिशोभितौ ॥ १० ॥ विप्रसेव्यौबीजमन्त्रोहयग्रीवस्यचादिमः ॥ हसावौकारसंयुक्तौसबिन्दूक्षत्रियस्यच ॥ ११ ॥ हसावेकारसंयुक्तौसबिन्दूवै श्यजन्मनः ॥ त्रिष्टुप्छन्दोमुनिर्ब्रह्माहयग्रीवोस्यदेवता ॥ १२ ॥ षड्दीर्घयु

---

१ ॐ ह्रीं हौं शंकरनारायणायनमोहौंह्रीं ॐ २ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः, इन छहबीजोंको षडङ्गों में न्यासकरे जैसे, ह्रां हृदयायनमः ॥

क्लींबीजेनषडङ्गविधिरीरितः ॥ कमलंजपमालांचाभयंपुस्तकमेवच ॥ १३ ॥ श्वेतपद्मस्थितंगौरंश्वेतपद्मानुलेपनम् ॥ भक्तप्रियंहयग्रीवंवन्देहंदानवान्तकम् ॥ १४ ॥ गायत्रीमस्यवक्ष्येहंसरुद्रःसंस्कृतोयथा ॥ मन्त्राधिकारीभवतिदेवमावाहयेत्तया ॥१५॥ वागीश्वरायविद्महेहयग्रीवायधीमहि ॥ तन्नोहंसःप्रचोदयात् ॥ १६ ॥ यजेद्वाजिहरेःपीठेचाङ्गैःस्यात्प्रथमावृतिः ॥ प्रज्ञामेधास्मृतिर्विद्याश्रीर्वागीशीहयाननः ॥ १७ ॥ विद्याविलासाख्यहयग्रीवोवैमानमर्दनः ॥ लक्ष्म्यादिभिस्तृतीयास्यात्ताश्चलक्ष्मीःसरस्वती ॥ १८ ॥ रतिःप्रीतिःकीर्त्तिकान्त्यौतुष्टिःपुष्टिश्चतुर्थिका ॥ स्यावृत्तिःकुमुदाद्यैःस्यात्प्रोक्तारतेदधिवाहने ॥१९॥ पञ्चमीलोकपालैःस्यात्षष्ठीस्याच्चतदायुधैः॥ वेदलक्षंजपेन्मन्त्रंदशांशंजुहुयाद्घृतैः ॥ २० ॥ सुगन्धाद्यैस्तर्पणंस्यान्मार्ज्जनंविप्रभोजनम् ॥ सिद्धोमन्त्रःप्रयोगार्होजायतेभुक्तिमुक्तिदः ॥ २१ ॥ शशिमण्डलमध्यस्थंहेमकुण्डलिनंमनुम् ॥ करंध्यात्वान्यसेद्वक्त्रेसभापूज्यःसजायते ॥ २२ ॥ अथवातंकरंकुम्भेन्यस्यतज्जलसेचनात् ॥ प्रातर्हरतिलूतादिदौर्भाग्यंपञ्चधाविषम् ॥ २३ ॥ योम्भस्त्रिसप्तजप्तन्तुप्रभातेप्रत्यहंपिबेत् ॥ सप्ताहाज्जायतेतस्यदिव्यावाणीमनोरमा ॥ २४ ॥ चन्द्रमण्डलमध्यस्थलकारेन्यस्यमन्त्रकम् ॥ पीतंचापिमुखंध्यात्वास्तम्भयेत्परभारतीम् ॥२५॥ शृङ्गाटपुरमध्यस्थंरेखाक्रान्तंतुबीजकम् ॥ ज्वालामालाकुलंध्यायेत्स्तम्भनंपरमंमतम् ॥ २६ ॥ वायुमण्डलमध्यस्थंवायुबीजसमन्वितम् ॥ संहारकमिदंध्यानंविषादीनांनसंशयः ॥२७॥ जलमण्डलमध्यस्थंध्यात्वाचन्द्रांशुनिर्मलम् ॥ आप्यायतेकरेह्येतत्सर्वरोगविनाशनम् ॥ २८ ॥ शून्यगर्भगतंयन्त्रेहेमगोक्षीरसन्निभम् ॥ ध्यायेद्धृत्पद्ममध्यस्थंनिर्विषीकरणम्परम् ॥ २९ ॥ लिखेद्रोचनयाभूर्ज्जे मन्त्रंबाहौविधारयेत् ॥ महारक्षाभवेदेषासर्वदोषविनाशनम् ॥ ३० ॥ बीजंरेफसमायुक्तंमध्यस्थंसहकारयोः ॥ हकारद्वयमध्यस्थंजसंमासन्तुवैरकृत् ॥ ३१ ॥ अथान्यंशृणुदेवेशिमन्त्रंवाग्बुद्धिकारकम् ॥ उद्गिरत्पवनोद्गीथसर्ववागीश्वरेश्वर ॥३२॥ सर्ववेदमयाचिन्त्यसर्वंबोधयबोधय ॥ स्वबीजप्रणवाभ्यांचश्लोकमेनंपुटेदथ ॥ ३३ ॥ षट्त्रिंशदक्षरोमन्त्रःस्वाहान्तोष्टत्रिवर्णकः ॥ छन्दोनुष्टुम्मुनि

ब्रह्माहयग्रीवस्तुदेवता ॥ ३४ ॥ पञ्चाङ्गानिमनोस्तारमनुपादैर्भवन्तिहि ॥ हय
ग्रीवंचतुर्बाहुम्पारदाम्भोधरद्युतिम् ॥ ३५ ॥ शङ्खारिपाणिमश्वास्यंजानुन्य
स्तकरंभजेत् ॥ पूर्वपीठेयजेन्मूर्त्तिंबीजमन्त्रेणकल्पयेत् ॥ ३६ ॥ यजेदष्टदले
पद्मेदेवाद्यादिप्रदक्षिणम् ॥ चतुर्वेदास्तुसम्पूज्यास्तत्कोणेषुयजेत्क्रमात् ॥
३७ ॥ वेदाङ्गानिस्मृतिंन्यायंसर्वशास्त्राणिचार्चयेत् ॥ तस्यबाह्येतुषट्कोणेषड
ङ्गानिसमर्चयेत् ॥ ३८ ॥ भूपुरेलोकपालांश्चतदस्त्राणिततोयजेत् ॥ षट्त्रिं
शल्लक्षकञ्जप्त्वाकुन्दैस्त्रिस्वादुसंयुतैः ॥ ३९ ॥ होमयेत्तर्प्पणाद्यन्तंकृत्वासिद्धो
भवेन्मनुः ॥ लक्ष्मीकामःप्रजुहुयाद्बिल्वपत्रैस्तथायुतम् ॥ ४० ॥ श्रीकामोजु
हुयान्नित्यंकुन्दैस्त्रिमधुरप्लुतैः ॥ आज्यंब्राह्मीरसेपक्वंमन्त्रेणानेनसाधितम् ॥
४१ ॥ सेवितंविधिनाप्रातरतिबुद्धिकरंत्विदम् ॥ साधितांमन्त्रवर्य्येणवचामनु
दिनंसुधीः ॥४२ ॥ भक्षयेत्सर्वशास्त्राणांव्याख्याताभवतिध्रुवम् ॥ अथमन्त्रा
न्तरंवक्ष्येत्वरितंधारणाप्रदम् ॥ ४३ ॥ ऋग्यजुस्सामरूपायवेदाभरणकर्म्मणे॥
प्रणवोह्रींनृवपुषेमहाश्वशिरसेनमः ॥ ४४ ॥ हंसादिःसोहमन्तश्चमन्त्रःषट्
त्रिंशदक्षरः ॥ ऋष्याद्यङ्गविधिर्ध्यानपूजाकाम्यानिपूर्ववत् ॥ ४५ ॥ अथ
मन्त्रान्तरंवक्ष्येतीक्ष्णबुद्धिकरंपरम् ॥ बिल्वोत्तीर्णस्वात्मरूपचिन्मयानन्दरू
पिणे ॥ ४६ ॥ तुभ्यंनमोहयग्रीवविद्याराजायविष्णवे ॥ स्वाहासोहंचहंसा
दिरष्टत्रिंशाक्षरोमनुः ॥ ४७ ॥ तारमन्त्रपदैश्चात्रपञ्चाङ्गविधिरीरितः ॥ पुर
श्चर्य्यातुषट्त्रिंशल्लक्षमन्यच्चपूर्ववत् ॥ ४८ ॥ अथातःसम्प्रवक्ष्यामिपरंज्ञानप्र
दम्मनुम् ॥ स्वबीजंहयशिरसेनमश्चाष्टाक्षरोमनुः ॥ ४९ ॥ एकाक्षरोक्तमृष्या
दिच्छन्दोनुष्टुबुदाहृतम् ॥ हस्तैर्दधानंमालांचपुस्तकंवरपङ्कजम् ॥ ५० ॥क
र्पूराभंसौम्यरूपंनानाभूषणभूषितम् ॥ एवंध्यात्वाखिलंकुर्य्यादेकवर्णोक्तवर्त्म
ना ॥ ५१ ॥ अथविष्णोःप्रवक्ष्यामिमन्त्रंरोगापहारकम् ॥ अच्युतानन्तगो
विन्दपदंङेन्तंहृदन्तकम् ॥ ५२ ॥ भवाक्षरोमनुःप्रोक्तोभवरोगैकभेषजम् ॥
शौनकर्षिर्विराट्छन्दःपरमात्मातुदेवता ॥५३॥ षडङ्गविधिरुक्तोस्यद्विरुक्तैर्मनु
नामभिः ॥ शङ्खचक्रधरंदेवञ्चतुर्बाहुंकिरीटिनम् ॥५४॥ सर्वायुधैरुपेतंचगरुडो
परिसंस्थितम् ॥ सनकादिमुनीन्द्रैस्तुसर्वदेवैरुपासितम् ॥ ५५ ॥ श्रीभूमि

सहितंदेवमुद्यदादित्यसन्निभम् ॥ प्रातरुद्यत्सहस्रांशुमण्डलोपमकुण्डलम् ॥ ५६॥ सर्वलोकस्यरक्षार्थमनन्तंनित्यमेवहि॥ अभयंवरदन्देवंधारयन्तंयुगान्वितम्॥ ५७॥ गोविन्दमनुवत्प्रोक्तम्पञ्चावरणसंयुतम्॥ लक्षमेकञ्जपेन्मन्त्रंतद्दशांशंहुनेद्घृतैः॥ ५८॥ तर्प्पणादिततःकृत्वारोगनाशःप्रजायते॥ लाजाहोमन्तु कन्यार्थीधनार्थीबिल्वहोमकम् ॥ ५६ ॥ वस्त्रार्थीपुष्पहोमंचनैरुज्यार्थीतिलैर्हुनेत् ॥ रविवारेजलेस्थित्वानाभिमात्रेजपेद्बुधः ॥ ६० ॥ अष्टोत्तरसहस्रन्तुज्वरनाशोभविष्यति ॥ विवाहार्थीजपेन्मासंशशिमण्डलसन्निभम्॥ ६१॥ ध्यायेल्लभेच्छुभांकन्यांकुलीनांचकुटुम्बिनीम् ॥ अथातःसम्प्रवक्ष्यामिविष्णोःप्रीतिकरंपरम् ॥ ६२ ॥ अनन्तायनमश्चेतिषड्वर्णोयमुदाहृतः ॥ न्यासोमुनिश्चगायत्रीछन्दोनन्तश्चदेवता ॥ ६३ ॥ नियोगोरोगनाशार्थमन्यद्गोविन्दवद्भवेत् ॥ अथान्यंसम्प्रवक्ष्यामिविष्णोःप्रीतिकरंपरम् ॥ ६४ ॥ वेदव्यासस्यविद्यादिप्रदंपदमिहोच्चरेत्॥ वेदव्यासायहृदयमष्टार्णोमनुरीरितः॥ ६५॥ मुनिर्ब्रह्मातथानुष्टुप्छन्दःसत्यवतीसुतः॥ देवोबीजंभवेदाद्यंनमःशक्तिःप्रकीर्तिता ॥ ६६ ॥ षड्दीर्घाद्येनबीजेनषडङ्गविधिरीरितः ॥ व्याख्यामुद्रादक्षहस्तंवामजानुतलेस्थितम् ॥ ६७ ॥ योगपट्टासनारूढंप्रफुल्लकुसुमद्युतिम् ॥ दीर्घकण्ठंविशालाक्षन्तुन्दिलंमुनिवन्दितम् ॥ ६८ ॥ नानाशिष्यैःपरिवृतं कृष्णद्वैपायनम्भजे ॥ जपेदष्टसहस्राणिपायसैर्होममाचरेत्॥ ६६ ॥ पूर्वोक्तेतुयजेत्पीठेपूर्वमङ्गानिपूजयेत् ॥ प्राच्यादिषुयजेत्पैलंवैशम्पायनजैमिनी ॥ ७० ॥ सुमन्तुंकोणभागेषुश्रीशुकंलोमहर्षणम्॥ उग्रश्रवसमन्यांश्चमुनीन्बाह्येतुभूपुरे ॥ ७१ ॥ इन्द्रादींश्चतदस्त्राणिपूजाचैवंसमीरिता ॥ एवंसिद्धमनुर्मन्त्रीवर्षमात्रंयदाजपेत् ॥ ७२ ॥ त्रिकालेष्टोत्तरशतंकवित्वंशोभनाःप्रजाः ॥ स्वयमेवपुराणानामर्थःस्फुटतिगोपितः॥ ७३॥ व्याख्यानशक्तिंकीर्त्तिचलभतेसम्पदान्वयम्॥ अथमन्त्रान्तरंवक्ष्येचिरजीवित्वकारकम्॥ ७४॥ तारंनमःसमाभाष्यमन्त्रमेतत्ततोवदेत् ॥ सोहंतारंपुनश्चोक्त्वामन्त्रश्चेन्द्राक्षरोमतः ॥ ७५ ॥ कहोलेस्यमुनिर्देवीगायत्रीछन्दईरितम् ॥ अपमृत्युहरोव्यासश्चिरजीवीचदेवता ॥ ७६ ॥ हंबीजंसश्चशक्तिःस्याद्दीर्घषट्कसमन्वि

तः ॥ हकारस्तुषडङ्गार्थंध्यानपूजादिपूर्ववत् ॥ ७७ ॥ षट्पञ्चसहस्राणिजपो स्यपरिकीर्तितः ॥ कुष्ठादिकमहारोगनाशार्थंलक्षमेककम् ॥ ७८ ॥ जपेन्मन्त्रंप्रत्यहन्तुचाष्टोत्तरशतंजलैः ॥ मन्त्रितैःस्नापयेद्दुग्धैर्निरुक्स्यान्नात्रसंशयः ॥ ७९ ॥ स्वल्पमृत्युविनाशश्चपूर्णमायुःप्रजायते ॥ अथविष्णुप्रियान्वक्ष्येगरुडस्यमनून्परान् ॥ ८० ॥ तत्रव्रात्याद्विजायेचसपुत्रायेचवैष्णवाः ॥ तेषांसंस्कृतयेमन्त्रसिद्धैर्विषविनाशिनीम् ॥ ८१ ॥ सर्पभीतिहरींवक्ष्येगायत्रींसर्वकामदाम् ॥ पक्षिराजस्यसर्वेषांनृणामिष्टसुसिद्धये ॥ ८२ ॥ सुपर्णायविद्महेपक्षिराजायधीमहितन्नोगरुडःप्रचोदयात् ॥ ८३ ॥ चतुर्विंशतिलक्षेणजपेनेयंचसिद्ध्यति ॥ ध्यानपूजादिरहिताजपमात्रफलप्रदा ॥ ८४ ॥ अथातःसम्प्रवक्ष्यामिगरुडस्यपरम्मनुम् ॥ तारोनमोभगवतेमहागरुडङेन्तकम् ॥ ८५ ॥ श्रीविष्णुवरवाहेतिनायत्रैलोक्यचेतिच ॥ पूजितायवज्रनखवज्रतुण्डपदंवदेत् ॥ ८६ ॥ वज्रपक्षायपिङ्गेतिशरीरायवदेत्ततः ॥ एह्येहिमहागरुडदुष्टनागान्पदंवदेत् ॥ ८७ ॥ छिन्धिद्वयंदुष्टविषान्द्विरिछिन्धिदुष्टराक्षसान् ॥ द्विर्भिन्ध्यावेशययुगंबद्धोहुंफड्वसुप्रिया ॥ ८८ ॥ षण्णवत्यक्षरोमन्त्रोमुनिर्ब्रह्माप्रकीर्तितः ॥ गायत्रीछन्दउद्दिष्टंदेवतागरुडोमतः ॥ ८९ ॥ हलोबीजानिचोक्तानिस्वरामन्त्रस्यशक्तयः ॥ मन्त्रोक्तविषनाशार्थंविनियोगःप्रकीर्त्तितः ॥ ९० ॥ गरुडात्मावैनतेयस्तार्क्ष्यश्छन्दोमयस्तथा ॥ कपिलाक्षस्तथानागगरलान्तकरोमतः ॥ ९१ ॥ प्रणवादिचतुर्थ्यन्तैर्नमसापिसमन्वितैः ॥ एतैःषण्नामभिर्न्यासश्चाङ्गुल्यादिर्हृदादिकः ॥ ९२ ॥ हिमाद्रिशिखराकारंपूर्णचन्द्रनिभाननम् ॥ दीर्घबाहुंवृषस्कन्धंनागाभरणभूषितम् ॥ ९३ ॥ अनन्तोवामकटकंयज्ञसूत्रंतुवासुकिः ॥ तक्षकःकटिसूत्रंचहारःकर्कोटउच्यते ॥ ९४ ॥ पद्मश्चदक्षिणेपार्श्वेमहापद्मश्चवामतः ॥ शङ्खपालःशिरोदेशेकुलिकस्तुभुजान्तरे ॥ ९५ ॥ आजानुकाञ्चनाभासंह्यानाभंतुहिनप्रभम् ॥ आकण्ठाद्रक्तवर्णंचाविष्णुध्वजगतंभजेत् ॥ ९६ ॥ अङ्गदिक्पायुधैश्चैवगरुडस्यतुपूजनम् ॥ मन्त्रार्णसङ्ख्यशततोजपःसप्तगुणोमतः ॥ ९७ ॥ आज्ञयादर्शनात्तस्यस्थावरंजङ्गमंविषम् ॥ नाशमाया

न्तिरोगाश्चविसर्प्पाद्यानसंशयः ॥ ९८ ॥ वक्ष्येथगारुडंमन्त्रंक्षिपताराग्निगेहिनी ॥ पञ्चाक्षरोमनुःपंक्तिश्छन्दोनन्तोमतोमुनिः ॥९९॥ देवतागरुडस्तारोबीजंशक्तिर्द्वसुप्रिया ॥ स्वाहान्तोहृदयंन्यस्यंज्वलज्वलमहामते ॥ १०० ॥ रुडुचूडाननस्वाहानत्यान्तंमस्तकेन्यसेत् ॥ गरुडान्तेशिखेस्वाहाशिखाया मनुरीरितः ॥ १ ॥ सर्वमन्त्रस्तुगरुडप्रभुंजपयुगंवदेत् ॥ द्विःप्रभेदयवित्रासयद्वयंद्विर्विमर्दय ॥ २ ॥ स्वाहासप्तत्रिंशदर्णान्तेत्रमन्त्रोथकथ्यते ॥ उग्ररूपधरेत्युक्त्वासर्वविषहरेतिच ॥ ३ ॥ भीषयद्वितयंसर्वंदहयुग्मंततोवदेत् ॥ भस्मीकुरुकुरुस्वाहादन्तवर्णोमनुर्मतः ॥ ४ ॥ अस्तुमन्त्रोप्रतिहतबलाप्रतिहतेतिच ॥ त्रासनान्तेवदेद्धुंफट्स्वाहान्तोष्टादशाक्षरः ॥ ५ ॥ पादेकण्ठेहृदिमुखेमूर्ध्निवर्णान्क्रमान्न्यसेत् ॥ तप्तस्वर्णनिभंनागपञ्चसाङ्गविभूषणम् ॥ ६ ॥ चञ्च्वग्रप्रचलद्गोभिर्भोगंमुकुटमण्डितम् ॥ पक्षोच्चारितसच्छामगानंविषहरंभजे ॥ ७ ॥ पक्षिराजायस्वाहेतिपीठेसप्ताक्षरोमनुः ॥ पूजयेन्मातृकापद्मेगरुडंवेदविग्रहम् ॥ ८ ॥ अङ्गान्यादौकर्णिकायांतत्तन्मन्त्रैश्चपूजयेत् ॥ अनन्तोवासुकिस्तक्षकाख्यःकर्कोटपद्मकौ ॥ ९ ॥ महापद्मःशङ्खपालकुलिकोत्थदिगीश्वराः ॥ तदायुधानिभूगेहेपञ्चलक्षंजपेन्मनुम् ॥ १० ॥ तिलैर्हुनेत्तर्प्पणादिकृत्वासिद्धोमनुर्भवेत् ॥ दर्शनाद्दूरगास्तस्यसर्प्पानश्येद्विपद्वयम् ॥ ११ ॥ विष्णुभक्तिपरोभूयोभवेदरिविनाशनम् ॥ इहलोकेसुखीदीर्घजीवीभूपतिपूजितः ॥ १२ ॥ परत्रयातिवैकुण्ठमितिविष्णुप्रियामया ॥ गदितामनवोदेविकिमन्यच्छ्रोतुमिच्छसि ॥ ११३ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेविष्णुप्रियमन्त्रकथनंनामाष्टविंशःप्रकाशः ॥ २८ ॥

---

श्रीदेव्युवाच ॥ सुदर्शनाद्यायुधानांसूचिताःपुरुषोत्तम ॥ मन्त्रास्तान्विधिपूर्वान्मेब्रूहियत्साधनाज्जयः ॥ १ ॥ श्रीशिवउवाच ॥ सर्वेषाचायुधानांचनाथःप्रोक्तोमहायुधम् ॥ सुदर्शनंनामयच्चमयाप्राग्विष्णवेर्प्पितम् ॥ २ ॥ अवतारोयदंशस्यकार्तवीर्यार्ज्जुनाभिधः ॥ यत्कथायास्तुलङ्केशःसहस्राब्दंचचारह ॥ ३ ॥ तस्यादौप्रोच्यतेमन्त्रोभुक्तिमुक्तिप्रदायकः ॥ तारःसहस्रारहुंफट्तस्यम

न्त्रोनवाक्षरः ॥ ४ ॥ अहिर्बुध्न्योमुनिश्छन्दोनुष्टुब्देवःसुदर्शनम् ॥ चक्राया न्तैराविशुद्धिसुज्वालाबकुलैःपृथक् ॥ ५ ॥ षडङ्गमनवस्तस्यजातियुक्ताद्विठा न्तकाः ॥ ऐन्द्रंचक्रेणबध्नातिनमश्चक्राग्निगेहिनी ॥ ६ ॥ वह्निमुच्चार्य्यदिग्ब न्धंचैवंकुर्य्याद्दशस्वपि ॥ दिशासुतर्ज्जन्यंगुष्ठयोगेनात्रस्थलेषुच ॥७॥ तारत्रयं तथारक्षद्वयंचक्रपदंवदेत् ॥ फट्स्वाहेतिद्वादशार्णोवह्निप्राकारसञ्ज्ञितः ॥ ८ ॥ अनेनमनुनाह्यस्यपरितोग्निमयंबुधः ॥ प्राकारंपरिकल्प्याथन्यासानन्यान्समा चरेत् ॥ ९ ॥ सुंउंरक्ताशनाभंचगुह्येशिरसिविन्यसेत् ॥ ईमध्याननहृद्गुह्यजानु गुल्फतलेतथा ॥ १० ॥ अग्निवर्णान्न्यसेद्वर्णास्ततोध्यायेत्सुदर्शनम् ॥ दक्षाद्यू र्ध्वक्रमादष्टभुजैरायुधधारिणम् ॥ ११ ॥ चक्रंशङ्खंगदांपद्मंमुशलंचशरासनम् ॥ पाशमंकुशमादीप्तंभीमदंष्ट्रंरविप्रभम् ॥ १२ ॥ पूजयेद्वैष्णवेपीठेमूर्त्तिमूलेनक ल्पयेत् ॥ कर्णिकायांषडङ्गानिचक्राद्यस्त्राणिकेशरे ॥ १३ ॥ हयग्रीवोदिताल क्ष्मीर्दिक्पत्रेषुचसंयजेत् ॥ भूपुरेलोकपालाश्चतदस्त्राणितदग्रतः ॥ १४ ॥ ध्या नप्राणप्रतिष्ठान्तेपूजान्तेचप्रदर्शयेत् ॥ त्रिस्थानेचक्रगायत्र्याचक्रमुद्रांचतांशृ णु ॥ १५ ॥ सुदर्शनायविद्महेमहाज्वालायधीमहि ॥ तन्नश्चक्रःप्रचोदयात् ॥ १६ ॥ जपेद्द्वादशलक्षंचतत्सहस्रंपृथग्हुनेत् ॥ तिलैस्त्रिमधुरोपेतैःसर्षपैर्मधुरा न्वितैः ॥ १७ ॥ त्रियुक्तैर्बिल्वपत्रैश्चतथादुग्धौदनेनच ॥ ततश्चकेवलाज्ये नतर्पणादिततश्चरेत् ॥ १८ ॥ एवंसिद्धमनुर्मन्त्रीप्रयोगानाचरेत्क्रमात् ॥ खातादिशोधितंस्थानंगोमयेनोपलेपयेत् ॥ १९ ॥ हस्तद्वयान्तरालेचकुर्य्या द्याम्योत्तरद्वयम् ॥ वृत्तवेष्टितषट्कोणंतद्बाह्येभूपुरावृतम् ॥ २० ॥ कर्णिका पीतवर्णास्याद्रक्ताभंकोणषट्ककम् ॥ तदन्तरालंश्यामेनशेषंश्वेतेनपूरयेत् ॥ २१ ॥ कर्णिकायांलिखेत्तारंमन्त्रार्णान्कोणषट्कके ॥ आदावुत्तरचक्रेचदक्षि णेचततोन्यसेत् ॥ २२ ॥ शालिशालिजलैःपूर्णमेकैकंकलशंन्यसेत् ॥ दी क्षाविधिप्रकारेणपीठपूजांसमाचरेत् ॥ २३ ॥ सम्यगावाहयेत्तत्रतंसुदर्शनरू

१ आचक्रायस्वाहा हृदयायनमः, विचक्रायस्वाहा शिरसेस्वाहा, शुद्धिचक्रायस्वाहा शिखायैवषट्, सुचक्रायस्वाहा कवचायहुम्, ज्वालाचक्रायस्वाहा नेत्रत्रयायवौषट्, बकुलचक्राय स्वाहा अस्त्रायफट् ॥

पिणम् ॥ सम्पूज्यसाङ्गावरणमन्यचक्रेततस्तथा ॥ २४ ॥ चक्रेसंस्थापयेद्ध
ह्विवैष्णवंतंविधानतः ॥ प्रतिद्रव्यंभवेद्धोमःषट्त्रिंशदधिकंशतम् ॥ २५ ॥
आज्यंचापामार्गसमिच्चाक्षताराजिकास्तिलाः ॥ हविःपृथक्पञ्चगव्यंहुनेदा
ज्यंतुतत्क्रमात् ॥ २६ ॥ प्रतिद्रव्यस्यसम्पातान्कुम्भतोयेविनिक्षिपेत् ॥ होमं
समाप्यचततःप्रक्षाल्यार्घस्यपिण्डकम् ॥ २७ ॥ कुम्भोपरिनिधायाथसाध्यं
समुपवेशयेत् ॥ स्वस्यदक्षेततःकुम्भंसाध्यस्योपरिचत्रिधा ॥ २८ ॥ भ्रामयि
त्वाततश्चोदङ्मार्ज्जनंकलशंक्षिपेत्॥ दूरदेशेततोग्न्यादिदूरदेशेसमुत्क्षिपेत्॥
२९ ॥ हुतशिष्टान्नेनदद्याद्बलिंचमनुनामुना ॥ नमोविष्णुगणेभ्योनःसर्व[1]
शान्तिकरेवदेत् ॥ ३० ॥ भ्योबलिंप्रतिगृह्णन्तुशान्त्यैहृत्तत्ववर्णकः ॥ आदौस
म्भोज्यगुरवेदक्षिणांचप्रकल्पयेत् ॥ ३१ ॥ ज्वरादिरोगसङ्घातान्प्रयोगोयं
विनाशयेत्॥ अपस्माररुजंचैवपिशाचग्रहवैकृतम् ॥ ३२ ॥ दक्षोभूतादिपीडाच
नाशयेत्सत्वयंविधिः ॥ स्तनजद्रुमसम्भूतैःफलकैःपञ्चरंशतम् ॥ ३३ ॥ कृत्वाम
न्त्रीपञ्चगव्यैःपूजयेत्साध्यमत्रच ॥ निवेशयेच्छुद्धमन्त्रैर्वस्त्रंशुद्धंस्पृशेज्ज
पेत् ॥ ३४ ॥ मन्त्रमग्निंप्रतिष्ठाप्याग्न्यादिकोणेषुमन्त्रवित् ॥ विप्रवर्य्यैःकारये
च्चहोमंपूर्वोदितंक्रमात् ॥ ३५ ॥ द्रव्यैस्तांस्तोषयेद्विप्रान्यजमानोगुरुंतथा ॥
एषयोगःसर्वरोगापमृत्युद्रोहनाशकः ॥ ३६ ॥ गव्यैःसमस्तैःक्षीरेन्द्रुवल्क
लोत्थकषायकैः ॥ त्रिभिस्सम्पूरितैर्जप्तैःकुम्भैःसन्तापसंयुतैः ॥ ३७ ॥ प्राग्व
द्धोमस्तस्यचान्तेग्रहान्विष्णुंचसाधयेत् ॥ अभिषिञ्चेद्वानुदिनेचामयाद्यातुरं
तथा ॥ ३८ ॥ स्वस्थोभवेद्द्रुतंभूतप्रेतराक्षसपीडितः ॥ घृतंपक्वंपञ्चगव्यैःसञ्ज
संमनुनामुना ॥ ३९ ॥ ग्रहपीडानिरुद्धानांगर्भिणीनांहितायच ॥ मन्त्रंजपे
द्दशशतंपञ्चगव्यंस्पृशेत्सुधीः ॥ ४० ॥ पद्मपत्रेब्रह्मवृक्षपत्रेबिल्वफलेतथा ॥
संन्यस्यतत्स्वीयगृहेनिखनेच्चपरस्यवा ॥ ४१ ॥ रक्षाभवतितद्गेहेसम्पद्वृद्धिः
प्रजायते ॥ पलाशस्तनजोरक्तचन्दनंगुग्गुलुस्तथा ॥ ४२ ॥ घुसृणंचह
रिद्राचरोचनंबिल्वराजिका ॥ अपामार्गस्तिलादूर्वाविष्णुकान्तातुलस्य

१ नमोविष्णुगणेभ्योनः सर्वशान्तिकरेभ्योबलिं प्रतिगृह्णन्तुशान्त्यैनमः ॥

पि ॥४३॥कृष्णाचतुलसीप्रोक्ताजवोर्केद्रुमएवच॥ सहदेवीतथालक्ष्मीःकुशगोमयसद्वचाः ॥ ४४ ॥ कमलंरोचनांपञ्चगव्येसंक्राथयेन्मुहुः ॥ संस्कृतेग्नौतस्यभस्मकुर्य्यात्तत्सर्वदायकम् ॥ ४५ ॥ सञ्जप्तंमनुनानेनसम्यक्चशिरसाधृतम् ॥ सर्वभूतग्रहव्याधिकृत्याद्युःस्वादिवारणम् ॥४६॥ द्रोहोन्मादरिपुत्रासससर्वपापहरंमतम् ॥ आपन्नाशकमेतत्स्याद्वश्यदंशिवदंपरम् ॥ ४७ ॥ फलत्रययुतैःकल्पैःपञ्चगव्येपचेद्घृतम्॥प्रस्थंचकल्पद्रव्याणिमुस्ताशुण्ठीनिशातथा॥ ४८॥ चित्रकैलाशतावर्य्योवचावाढ्यावृषातथा॥ मांस्याह्वाचविडङ्गंचमञ्जिष्ठाकटुरोहिणी ॥ ४६ ॥ मनुनानेनसञ्जप्तंबन्ध्यापुत्रप्रदायकम् ॥ भूतप्रेतपिशाचादिभयघ्नंनात्रसंशयः ॥ ५० ॥ पञ्चगव्याज्यमेतस्यगर्भरक्षाकरंपरम् ॥ गुटिकागुग्गुलुंकृत्वाजुहुनेदष्टसहस्रकम् ॥ ५१ ॥ दिवसत्रितयंवापिचतुर्दिवसमेवच ॥ भवेत्सर्वोपद्रवानांनाशोमन्त्रगदस्यच ॥ ५२ ॥ अपामार्गसमिद्भिश्चजुहुनेद्युतसङ्ख्यया ॥ भूतज्वरभयव्याधिकृत्यापस्मारनाशनम् ॥५३॥ घृताक्तैःकमलैर्हुत्वाश्रीवृद्धिंलभतेनरः ॥ आज्याक्ताभिश्चदूर्वाभिर्होमादीर्घायुराप्नुयात् ॥ ५४ ॥ पलाशस्यसमिद्भिश्चमेधावृद्धिःप्रजायते ॥ वस्त्रार्थीश्वेतकुमुदैराज्याक्तैर्जुहुयान्नरः ॥ ५५ ॥ पशूनांवृद्धिमन्विच्छन्जुहुनेत्सकमलैर्घृतैः॥औदुम्बरसमिद्धोमात्पुत्रलाभोभवेद्ध्रुवम्॥५६॥ अष्टोत्तरसहस्रंचजुहुनेदश्वत्थजैस्तथा ॥ समिद्भिर्महारोगमुक्तयेयंविधिःस्मृतः ॥ ५७॥ चक्रमध्येस्थितंस्वंचचिन्तयन्योमनुंजपेत् ॥ एकोपिदुर्जयोयुद्धेभवत्येवनसंशयः ॥ ५८ ॥ कल्पान्ताग्निनिभंचक्रंवैरिणोयस्यमूर्द्धनि ॥ स्मरेत्ससदिनंतस्यज्वलनप्रतिमोज्वरः ॥ ५६ ॥ भवेत्त्रिंशद्दिनैश्चाथप्राप्नोतिमरणंध्रुवम् ॥ सकारंस्वरसंयुक्तंयाहीतिपदवेष्टितम् ॥ ६० ॥ संस्मरेद्यस्यशीर्षेतुतस्योच्चाटोदशाहतः ॥ मण्डलान्मरणंयातिसान्तंकाकनिभंरिपोः ॥ ६१ ॥ मूर्द्धिस्मरेच्चसप्ताहादुच्चाटोवामृतिर्भवेत ॥ शरच्छशाङ्कप्रतिमंसुधाधाराभिवर्षिणम् ॥६२॥ सकारंसंस्मरेन्मूर्द्धिसजीवेच्छरदांशतम् ॥ षट्कोणंविलिखेत्कोणषट्केठस्तुसमालिखेत ॥ ६३ ॥ कर्णिकायांतथाठंचशेषमन्त्राणकंतथा ॥ साध्यनामलिखेन्मध्येकाश्मीरैर्भूर्ज्जपत्रके ॥ ६४ ॥ आपन्निवारणंयन्त्रंभूतप्रेतभयापहम् ॥ अथान्यं

सम्प्रवक्ष्यामिसुदर्शनमहामनुम् ॥ ६५ ॥ तारोनमोभगवतेमहासुदर्शनं वदेत् ॥ ङेन्तंहुंफट्षोडशार्णोमुन्याद्यंपूर्ववन्मतम् ॥ ६६ ॥ तथान्यासश्च पूजायांसर्वरक्षाकरोमनुः ॥ जपेद्द्वादशलक्षाणिप्रत्येकंक्रमतोहुनेत् ॥ ६७ ॥ चतुर्विंशच्छतानीतितिलांश्चापिससर्षपान् ॥ बिल्वाज्यपालाशसमित्पाय सानातिकीर्त्तितम् ॥ ६८ ॥ अनुरूपजपध्यानान्मन्त्रोयंवाञ्छितप्रदः ॥ लिखेदादौतुषट्कोणंमध्यकोणेषुतंलिखेत् ॥ ६९ ॥ एकैकंविलिखेद्वर्णंबहि र्भूपुरवेष्टनम् ॥ सम्पातसाधितंचैतद्गर्भिणीगर्भरक्षकम् ॥ ७० ॥ उन्मादग्रह भूतादीनभिचारांश्चनाशयेत् ॥ अथातःसम्प्रवक्ष्यामिमालामन्त्रंसुदर्शनम् ॥ ७१ ॥ तारोनमोभगवतेमहापूर्वपदत्रयम् ॥ ङेन्तंसुदर्शनंचक्रंज्वालंङेन्तं ततोवदेत् ॥ ७२ ॥ दीप्तरूपंसर्वनाथरक्षयुग्मंचमांमहा ॥ बलायाग्निवधूहुं फट्ख्यातोवेदाक्षरोमनुः ॥ ७३ ॥ ध्यानपूजादिकंप्राग्वज्जपोवर्णसहस्रकम् ॥ अथातःसम्प्रवक्ष्यामिमालामन्त्रंसुदर्शनम् ॥ ७४ ॥ ॐक्लींसुदर्शनमहाचक्र राजदहद्वयम् ॥ सर्वदुष्टभयंद्विर्द्विःकुरुच्छिन्धिचभिन्धिच ॥ ७५ ॥ विदारय द्वयंप्रोक्तापरमन्त्रान्ग्रसद्वयम् ॥ भक्षयद्वितयंप्रोच्यभूतानित्रासयद्वयम् ॥ ७६ ॥ हुंफट्स्वाहेतिचक्रायनमोवदेन्नगाक्षरः ॥ सुदर्शनमहामन्त्रःसंग्रा मेविजयप्रदः ॥ ७७ ॥ ध्यानपूजादिकंसर्वंज्ञेयमस्यषडर्णवत् ॥ जपेद्वर्णसह स्राणिततःसिद्धोभवेन्मनुः ॥ ७८ ॥ जप्त्वादौचाष्टसाहस्रंरणेगच्छेद्द्रुतंज यी ॥ अथातःसम्प्रवक्ष्यामिशङ्खमन्त्रंजयप्रदम् ॥ ७९ ॥ ॐक्लींजलचरायेति स्वाहान्तोयंनवार्णकः ॥ विष्णुहस्तगतंध्यात्वायःशङ्खंनित्यमर्चयेत् ॥ ८० ॥ पूजान्तेप्रजपेन्मन्त्रमष्टोत्तरसहस्रकम् ॥ पाञ्चजन्येनचैकत्वंध्यायेज्जपसमाप नम् ॥ ८१ ॥ कुर्य्यादेवंमासषट्कं ततः सिद्धोभवेन्मनुः ॥ पाञ्चजन्यसमंशङ्ख मात्मानंविष्णुमेवच ॥ ८२ ॥ ध्यात्वाभिवादयेच्छङ्खंरणेविजयकारकम् ॥

---

१ ॐनमोभगवतेमहासुदर्शनायहुंफट् २ ॐनमोभगवते महासुदर्शनाय महाचक्राय महा ज्वालाय दीप्तरूपसर्वनाथ रक्षरक्ष मां महाबलाय स्वाहा हुंफट् ३ ॐ क्लीं सुदर्शनमहाचक्र राज दहदह सर्वदुष्टभयं कुरुकुरु छिन्धिछिन्धि भिन्धि भिन्धि विदारय विदारय परमन्त्रान् ग्रसग्रस भक्षय भक्षय भूतानि त्रासय त्रासय हुंफट् स्वाहा चक्रायनमः ॥ इति मन्त्रः ॥

तारोमारःखड्गतीक्ष्णभिन्धिभिन्धीतिहुंचफट् ॥ ८३ ॥ द्वादशार्णःखड्गमन्त्रो योजपेद्द्वादशाक्षरम् ॥ प्रत्यहंपूजयेत्खड्गंकलयेन्मरणंविना ॥ ८४ ॥ खड्गसिद्धिस्तस्यभूयान्नकदाचित्पराजयः ॥ दैवान्निष्कासितेतस्मिन्फलाद्यंछेदयेत्तदा ॥ ८५ ॥ पूजयित्वाततःकोणेस्थापयेत्प्रणमेदपि ॥ अथातःसम्प्रवक्ष्यामिधनुर्मन्त्रंनवाक्षरम् ॥ ८६ ॥ शार्ङ्गायसशरायेतिहुंफट्जप्योनवायुतम् ॥ तिलाज्यहोमःसंसिद्धोमन्त्रःस्यान्नित्यपूजनात् ॥ ८७ ॥ ततोधनुषिबाणाढ्येशार्ङ्गध्यानंसमाचरेत् ॥ अजयंजयतेधन्वीशार्ङ्गमन्त्रंसमुच्चरेत् ॥ ८८ ॥ अथवक्ष्येगदामन्त्रंतारंकामंसमुच्चरेत् ॥ कौमोदकिमहासर्वबलेसर्वासुरान्तकि ॥ ८९ ॥ प्रसीदहुंफट्स्वाहेतिपञ्चविंशार्णकोमनुः ॥ जपेल्लक्षमिमंमन्त्रंपूजयेन्नित्यशोगदाम् ॥ ९० ॥ कौमोदकींस्मरेत्तत्रद्वन्द्वयुद्धेजयीभवेत् ॥ साधकोवागजारूढोगदाहस्तोविशेद्रणम् ॥ ९१ ॥ स्वयंविष्णुरितिध्यायंस्तत्कालेसर्वशत्रवः ॥ भयभीताःपलायन्तेचतुरङ्गबलाअपि ॥ ९२ ॥ अथातःसम्प्रवक्ष्यामिमुशलस्यमनुंध्रुवम् ॥ कामसंवर्त्तकपदंमुशलंपोथयद्वयम् ॥ ९३ ॥ हुंफट्स्वाहान्तकोमन्त्रऊनविंशतिवर्णकः ॥ प्रजपेदयुतंमन्त्रंखादिरीःसमिधोहुनेत् ॥ ९४ ॥ घृताक्ताश्चायुतंमन्त्रसिद्धिस्तस्यप्रजायते ॥ गृहीत्वामुशलंहस्तेजपेन्मन्त्रंरणेविशेत् ॥ ९५ ॥ पलायन्तेस्यरिपवोदक्षोरुद्रायथातथा ॥ शत्रोःप्रतिकृतिंचैवकुर्य्यान्नामक्रियान्विताम् ॥ ९६ ॥ लिखित्वाहृदयेतस्यक्रोधान्मुशलधारणम् ॥ कुर्य्यादरेर्वागदादेःस्तम्भःस्यान्नात्रसंशयः ॥ ९७ ॥ अथांकुशमनुंवक्ष्येतारंमदनमंकुशम् ॥ कञ्चुद्वयंचवर्म्मास्त्रंस्वाहान्तोविश्ववर्णकः ॥ ९८ ॥ अंकुशस्यमनुश्छन्दोमतिर्गणपतिर्मुनिः ॥ देवश्चात्रांकुशोविष्णुरूपीजगद्विमर्दकः ॥ ९९ ॥ भूभूत्रिवेदयुग्माक्षिवर्णैःकुर्य्यात्षडङ्गकम् ॥ केवलांकुशपूजात्रत्रयोलक्षंत्रयोदश ॥ १०० ॥ साध्येसद्द्रव्यहोमःस्यात्सिद्धमन्त्रोनृपान्रिपून् ॥ अथप्रवक्ष्येपाशस्यमन्त्रंतारंमनोभवम् ॥ १ ॥ पाशंवधयुगंचै

---

१ ॐ क्लीं खड्गतीक्ष्णभिन्धिभिन्धिहुंफट् २ शार्ङ्गायसशरायहुंफट् ३ ॐ क्लीं कौमोदकि महासर्वबले महासुरान्तकि प्रसीद हुंफट् स्वाहा ४ कामसंवर्त्तकमुशल पोथय पोथय हुंफट् स्वाहा ॥

वाकर्षयद्धितयंचद्वम् ॥ फट्स्वाहेत्यूनविंशार्णोवरुणोमुनिरुच्यते ॥ २ ॥
समुद्रश्चामितच्छन्दोभूभूषट्सप्तनेत्रकैः ॥ नेत्रैरङ्गानितस्यैचध्यायेद्वरुणहस्त
कम् ॥ ३ ॥ लक्षत्रयंभवेद्धोमःकैरवाख्यप्रसूनकैः ॥ सिद्धमन्त्रोहुनेदाज्यंव
श्यार्थमयुतेतथा ॥ ४ ॥ मारणायमधुसितेद्वेषतैलंततोगुडम् ॥ अथच्छत्रमनुं
वक्ष्येछंछत्रायनमस्त्विति ॥ ५ ॥ मुनिर्मन्त्रश्चछन्दोस्यगायत्रीदेवताहरः ॥
छत्ररूपंध्यानमस्यस्वर्णदण्डंसितप्रभम् ॥ ६ ॥ आरक्तकलशंध्यायेन्मस्तके
स्वेचपूजयेत् ॥ वर्णलक्षंजपेन्मन्त्रंहोमःस्याद्घृतपायसैः ॥ ७ ॥ तर्पणाद्यं
ततःकुर्य्याच्छत्रमन्त्रस्यसिद्धये ॥ साधयित्वामनुंचैनंगतराज्योविशेद्रणम् ॥
८ ॥ एकोपिसरिपून्जित्वाराज्यंतुलभतेद्रुतम् ॥ अथातःसम्प्रवक्ष्यामिलोक
रूपमनुंपरम् ॥ ९ ॥ चामरस्यग्रहावेशादृष्ट्यादिकनिवारणम् ॥ शशाङ्ककर
सङ्काशक्षीरडिण्डिमपाण्डुर ॥ १० ॥ प्रोत्सारयाशुदुरितंचामरश्रींनमोस्तुते ॥
द्वात्रिंशच्चसहस्राणिजपित्वासुरभेर्घृतम् ॥ ११ ॥ हुत्वासिद्धोभवेन्मन्त्रोनि
त्यंचामरमर्चयेत् ॥ तेनग्रहाभिभूतावाडस्साध्यादीर्घरोगिणः ॥ १२ ॥ सप्ता
हमार्ज्जिताःसायंप्रातःस्युर्दोषवर्ज्जिताः ॥ अथातःसम्प्रवक्ष्यामिध्वजमन्त्र
द्वयंप्रिये ॥ १३ ॥ शक्रकेतवेचमहावीर्य्यायश्यामवर्णकम् ॥ ङेन्तंचच्छत्र
राजायनमोनारायणध्वज ॥ १४ ॥ गरुडासनरक्षद्विरायुधानिरिपून्दह ॥
द्वयंवर्म्मास्त्राग्निजायाद्विपञ्चाशार्णकोमनुः ॥ १५ ॥ ध्वजमन्त्रंजपेत्पञ्चसह
स्रंसिद्धयेहुनेत् ॥ आज्यैःपश्चाल्लिखेद्यन्त्रंस्वसैन्याङ्कैश्चसम्मितम् ॥ १६ ॥
ध्वजंतुपूजयेन्नित्यंशत्रुभीतिनिवारणम् ॥ अथवक्ष्येपताकायामन्त्रंतारंरमा
त्रयम् ॥ १७ ॥ हिरण्यकशिपोर्युद्धेपूतनेदैवतासुरे ॥ रणारपतिकालेतिनेतिमृ
त्युपदंवदेत् ॥ १८ ॥ कालहत्रिदहद्वन्द्वंरिपून्सर्वान्पताकिके ॥ हुंफट्स्वा
हेतिमन्त्रोत्रचैनंपञ्चायुतंजपेत् ॥ १९ ॥ ततस्त्रिमधुरैर्होमादिकैःसिद्धोभवे
न्मनुः ॥ बीजवर्णपताकायांलिखेदङ्ककमेणतु ॥ २० ॥ स्थितप्राणांचतां
दृष्ट्वारिपुर्यातिदिशोदश ॥ अथातःसम्प्रवक्ष्यामिशूलमन्त्रंध्रुवंवदेत् ॥ २१ ॥
त्रिशूलायनमश्चेतिमन्त्रःसप्ताक्षरोमतः ॥ उष्णिक्छन्दोवामदेवोमुनिर्देवः
पिनाकधृक् ॥ २२ ॥ शिवहस्तगतंध्यायेच्छूलंलक्षत्रयंजपेत् ॥ होमस्तुवि

त्वपत्रैःस्यात्सिद्धोमन्त्रस्त्वयंभवेत् ॥ २३ ॥ ॐक्लींसर्वायुधायैचपिनाकिनिर्मितेवदेत्॥ शूलाकृष्टेचरिडवृतेसर्वदुष्टनिबर्हिणि ॥ २४॥ सर्वसत्त्वाङ्गभूतेचदेवताप्रतिपादिते ॥ क्षुरिकेरक्षमांनित्यंसर्वाशुभविनाशिनि ॥ २५ ॥ शान्तिपक्षेद्वयंद्वेधाहत्सप्तत्यक्षरोमनुः ॥ जप्त्वावर्णसहस्रंचेत्सिद्धःशत्रुनिवारणः॥ २६ ॥ अथवक्ष्येकटारस्यमनुंश्लोकस्वरूपकम् ॥ शस्त्रिणामेवसर्वेषांयोस्तिरक्षाकरःपरः ॥ २७ ॥ रक्षाङ्गानिगजान्रक्षरक्षवाजिधनानिच॥ ममदेहंसदारक्षकटारकनमोस्तुते ॥ २८ ॥ जपेद्वर्णसहस्राणितिलाज्यैर्होममाचरेत्॥ स्थापयेत्सिद्धमन्त्रस्तुततःस्थानेकटारकम् ॥ २९ ॥ तत्रसम्पूजयेत्तचनाग्निचौरादिजंभयम् ॥ अथवक्ष्येश्लोकरूपंकुन्तमन्त्रंजयप्रदम् ॥ ३० ॥ प्रासयानयशत्रूंस्त्वमनयादेवमायया॥ गृहाणजीवनंतेषांममसैन्यंचरक्षताम् ॥ ३१ ॥ प्राग्वज्जपादिनासिद्धःप्रयोगार्होमनुर्भवेत्॥ कुर्य्यादष्टांगुलन्यासान्धातुजान्नखजानपि ॥ ३२ ॥ दिगष्टकेरणेयात्वारिपूणांकदनंभवेत्॥ अथातःसम्प्रवक्ष्यामिवर्माणंवर्मसम्पुटम् ॥ ३३ ॥ वर्म्मशर्मप्रदत्वंमांरक्षरक्षसमन्ततः॥ अष्टादशाक्षरोमन्त्रोजप्यस्तावत्सहस्रकम्॥ ३४ ॥ आज्यैस्तावद्धुनेत्सिद्धस्तत्सम्पातेनसंस्कृतम् ॥ संग्रामेकवचंधृत्वारिपून्हत्वाप्रयात्यसौ ॥ ३५ ॥ तत्रैवस्वीयवर्षाणामङ्कयन्त्रंक्षितिप्रदम् ॥ अथातोदण्डगायत्रींवक्ष्येहंहितकाम्यया ॥ ३६ ॥ नानादण्डविनिर्मुक्तोजपाद्यस्याःप्रजायते ॥ जपमात्रेणसंसिद्धिर्हुनेचघृतपायसैः ॥ ३७॥ ब्रह्मोद्भवायविद्महेस्वर्णरूपायधीमहि ॥ तन्नोदण्डःप्रचोदयात्॥ ३८ ॥ सहस्रायुतमारभ्यकार्य्यलाघवगौरवात्॥ कोट्यन्तंप्रजपेन्मन्त्रीसर्वदण्डैर्विमुच्यते॥ ३९ ॥ ॐक्लींरामायुधायेतिश्रींपंपरशवेनमः॥ तिथ्यक्षरोयंपरशोर्मन्त्रःसंग्रामसिद्धिदः॥ ४०॥ इत्यायुधानांमनवःसमाख्याताःसुरेश्वरि ॥ गोपितावहुतन्त्रेषुकिमन्यच्छ्रोतुमिच्छसि॥ १४१ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतआयुधमन्त्रकथनं नामैकोनत्रिंशःप्रकाशः॥ २९ ॥

श्रीदेव्युवाच ॥ शक्तिंविनानदेवोस्तिशक्तिश्चापिपतिंविना ॥ नचास्तीतिपुराप्रोक्तमत्रशक्तीर्वदाधुना ॥ १ ॥ श्रीशिवउवाच ॥ लक्ष्मीरुक्ताविष्णुशक्तिरन्याअपिवदामिते ॥ यतिभिःकेवलोदेवःसेव्योनान्यैस्तथात्रिभिः ॥ २ ॥ शक्तिश्चकेवलासेव्यावाममार्गरतैर्द्विजैः ॥ यतस्तुधर्म्मपतितोवाममार्गीपुमान्मतः॥३॥येहरिंवाममार्गेणपूजयन्त्यद्विजातयः॥ तेषांभुक्तिश्चमुक्तिश्चतदन्तेत्वंमनुंशृणु ॥ ४ ॥ आद्यक्षरंचसकलंकूंमायान्वितंवदेत् ॥ वदयुग्मंचचित्रेश्वरीवाग्बीजंदहाङ्गना ॥ ५ ॥ द्वादशार्णोमनुःप्रोक्तोमुनिर्ब्रह्मासमीरितः ॥ चित्रेश्वरीदेवतास्याश्छन्दोगायत्रमुच्यते ॥ ६ ॥ षड्दीर्घयुक्तकूटेनषडङ्गविधिरीरितः ॥ नीलोत्पलदलश्यामांमदाघूर्णितलोचनाम् ॥ ७ ॥ नानालङ्करणोपेतांरक्तवस्त्रोपशोभिताम् ॥ क्रीडन्तींहरिणासार्धंस्थगितांचवनेवने ॥ ८ ॥ एवंध्यात्वाततोमन्त्रीकुर्य्यात्पूजांयथाविधि ॥ नोपास्याजातुचिद्विप्रैर्वाममार्गप्रभावतः ॥ ६ ॥ अथविष्णोःप्रवक्ष्यामिकुलजांशक्तिमुत्तमाम् ॥ सेव्याकौलिकमार्गेणतदधीनस्तदाहरिः ॥ १० ॥ वाग्बीजंकुलजेवह्नौसरस्वत्यनलाङ्गना ॥ एकादशाक्षरोमन्त्रोमुनिःस्याद्वामकेश्वरः ॥ ११ ॥ त्रिष्टुप्छन्दस्तुकुलजादेवतापरिकीर्त्तिता ॥ पञ्चाङ्गंस्यात्पञ्चपदैरंगुष्ठादिषुविन्यसेत् ॥ १२ ॥ गौराङ्गीनीलवसनानानालङ्कारभूषिता ॥ क्रीडन्तीहरिणासार्धमहावटसमाश्रिता ॥ १३ ॥ पूजादिकंचरेदस्याउग्रतारासमोजपः ॥ अत्रैकादशलक्षाणिसुरामांसंचहोमयेत् ॥ १४ ॥ भगपूजांविशेषेणकुर्य्याद्वीरांश्चभोजयेत् ॥ एकान्तेयोवटाधस्ताल्लिङ्गंयोनौप्रवेश्यच ॥ १५ ॥ लक्षमात्रंजपेद्यस्तुत्रिकालज्ञःसजायते ॥ पञ्चमासंपूजयित्वावटाधस्ताच्चतांनिशि ॥ १६ ॥ षण्मासंनियतंदेवींवाग्बुद्धिस्तस्यजायते ॥ सन्ध्याद्वयेचार्धरात्रौयोवर्षैकंप्रपूजयेत् ॥ १७ ॥ कुलजांपञ्चमैःसस्याद्धनधान्यसमन्वितः ॥ राजमान्योमहातेजाःपूज्यतेसकलैर्जनैः ॥ १८ ॥ अथमार्गद्वयोपास्यांवक्ष्ये गोपालसुन्दरीम् ॥ मायाश्रीकामबीजानिकृष्णायेतिपदंवदेत् ॥ १६ ॥ एकोनविंशकंवर्णरुद्रदेवस्वरौतथा ॥ पञ्चमंचततोबीजमेभिःसप्तमकूटकम्॥२०॥ गोविन्दायपदंपश्चाच्चित्रेश्वर्य्यादिकूटकम् ॥ गोपीजनवल्लभायततश्चकम

लत्रयम् ॥ २१ ॥ कूटरूपंसमुच्चार्य्यवदेद्धंहंसवाहिनीम् ॥ त्रयोविंशाक्षरोमन्त्रो भुक्तिमुक्तिफलप्रदः ॥ २२ ॥ मुनिर्विधातादक्षेतुवामेचानन्दभैरवः ॥ छन्दस्तुदेवीगायत्रीदेवोगोपालसुन्दरी ॥२३॥ त्रित्रिवेदाब्धिवेदाद्विवर्णैःकूटविहीनितैः ॥ षडङ्गविधिरुद्दिष्टोमन्त्रवर्णान्न्यसेत्ततो ॥ २४ ॥ कूटत्रयविहीनांश्चविंशत्यङ्गेषुविन्यसेत् ॥ मूर्द्धिभालेभ्रुवोरक्ष्णोःकर्णयोर्नासयोर्मुखे ॥ २५ ॥ चिबुकेचगलेबाह्वोर्हृदयेजठरेतथा ॥ नाभौलिङ्गेगुदेसक्थ्नोर्जानुनोर्जङ्घयोरपि ॥२६॥गुल्फयोःपादयोःसृष्टिन्यासोयंपरिकीर्त्तितः ॥ हृदयाद्योभुजान्तश्चन्यासोयंस्थितिसञ्ज्ञकः ॥ २७ ॥ पादादिमस्तकान्तश्चसंहारःपरिकीर्त्तितः ॥ एवंन्यासत्रयंकृत्वा पुनःसृष्टिस्थितिंचरेत् ॥ २८ ॥ ततश्चकरशुद्ध्याख्यंन्यासं कुर्वीततच्छृणु ॥ ह्रींश्रींपूर्वंअंचआंचस्वरौन्यस्येत्क्रमेणतु॥२९॥मध्यानामाकनिष्ठासु पुनस्तानेवविन्यसेत्॥मायारमांतथाक्लींचकामबीजंहकारयुक्॥३०॥ ह्रौंचचक्रासनायेतिहृल्लेखाजङ्घयोर्न्यसेत् ॥ मायांलक्ष्मींसमुच्चार्य्यहसयुक्तानिचोच्चरेत् ॥ ३१ ॥ वाक्कामंसौंचबीजानिसर्वमन्त्रासनायच ॥ नमोन्तःशक्रवर्णोयंविन्यसेज्जानुनोस्तथा ॥ ३२ ॥ लज्जांलक्ष्मींसमुचार्य्यसाध्यसिद्धासनायच ॥ नमः प्रोक्तान्यसेल्लिङ्गेरुद्रवर्णोयमीरितः ॥३३ ॥ ततोवाग्देवतान्यासंकुर्य्यात्तस्यमनुंशृणु॥मेघवर्णांवदेन्ङ्गन्तांसबिन्दुंषरिमतस्वरम्॥३४॥आद्यंबीजंषोडशार्णंबीजयुक्तंततोवदेत्॥तदेवबीजंवशिनीदेवतायैनमस्तथा॥३५॥ सप्तविंशतिवर्णोयंमन्त्रःशिरसिविन्यसेत् ॥ कवर्गंबिन्दुसंयुक्तंकामंकामेश्वरीतथा ॥ ३६ ॥ वाग्देवतायैहृदयंन्यसेद्भालेघनार्णकम् ॥ चवर्गंबिन्दुसंयुक्तंदशरामेषुवर्णकान् ॥ बिन्दुतुर्य्यान्स्वरोपेतान्षष्ठंबीजमुदाहृतम् ॥ ३७ ॥ मोदिनीवाग्देवतायैनमःषोडशवर्णकम् ॥ भ्रूमध्येविन्यसेन्मन्त्रंटवर्गंबिन्दुसंयुतम् ॥ ३८ ॥ द्वितीयपञ्चमौषष्ठस्वरबिन्दुसमन्वितौ ॥ विमलावाग्देवतायैनमश्चेतिगलेन्यसेत् ॥ ३९ ॥ तवर्गंबिन्दुसंयुक्तंत्रिसप्तमनुवर्णकान् ॥ बिन्दुतुर्य्यस्वरोपेतंबीजंप्रोक्तातथारुणा ॥ ४० ॥ वाग्देवतायैचनमोन्यसेद्धृदिनृपार्णकम् ॥ पवर्गंबिन्दुसंयुक्तमाद्यमन्त्यंचपञ्चमम् ॥ ४१ ॥ तृतीयंचद्वितीयंचषष्ठबिन्दुसमन्वितम् ॥ जयन्तीवाग्देवतायैनमोयंनृपवर्णकः ॥ ४२ ॥ यवर्ग

बिन्दुसंयुक्तमीशागत्र्यक्षिवर्णकम् ॥ बिन्दुषष्ठस्वरोपेतंकूटकान्तमुदाहृतम् ॥ ४३ ॥ सर्वैश्वर्य्यैचवाग्देवतायैहृत्षोडशाक्षरः ॥ मूलाधारेन्यसेदेनंसवर्गंबिन्दुसंयुतम् ॥ ४४ ॥ क्षींबीजंकौलिनीवाग्देवतायैचहृदन्तकम् ॥ न्यसेद्दूर्व्वादिपादान्तंन्यासंवाग्देवताभिधम् ॥ ४५ ॥ ततोमन्त्रस्थितंकूटत्रयंकाम्यंहृदिन्यसेत् ॥ कूटत्रयद्विरावृत्त्याषडङ्गंपुनराचरेत् ॥ ४६ ॥ कमलावसुधायुक्तंध्यायेच्छ्रीचक्रगंहरिम् ॥ क्षीराम्भोधौसितद्वीपेवनेकल्पद्रुमादिभिः ॥ ४७ ॥ व्याप्तेतस्मिन्स्वर्णमयंचिन्तयेद्रत्नमण्डपम् ॥ मण्डपेतत्रश्रीपीठेस्थितंकृष्णंविभावयेत् ॥ ४८ ॥ पद्ममष्टदलंशङ्खंबाणान्वंशींचदक्षिणैः ॥ भुजैर्दधानंवामैस्तुचापंपाशंतथांकुशम् ॥ ४९ ॥ विपञ्चींचमहारत्ननानाभरणभूषितम् ॥ पीताम्बरधरंगोपीसमूहैःपरितोवृतम् ॥ ५० ॥ आदावष्टदलेपद्मेकर्णिकायांषडङ्गकम् ॥ पूर्वादिकदलेवासुदेवंशान्तिंक्रमाद्यजेत् ॥ ५१ ॥ सङ्कर्षणंश्रियंप्रद्युम्नाख्यंचापिसरस्वतीम् ॥ अनिरुद्धंरतिंपत्राग्रेष्वर्च्याअष्टनायिकाः ॥ ५२ ॥ रुक्मिणींसत्यभामांचकालिन्दींजाम्बवन्तिकाम् ॥ मित्रविन्दांलक्ष्मणांचसत्यांनाग्नजितींतथा ॥ ५३ ॥ तद्बाह्येष्टदलेपूज्यास्तदग्रेनिधयोनव ॥ महापद्मश्चपद्मश्चशङ्खोमकरकच्छपौ ॥ ५४ ॥ मुकुन्दकुन्दनीलाश्चखर्वश्चनिधयोनव ॥ योगिन्यस्तुरहस्याख्यास्तदग्रेष्टदलेर्चयेत् ॥ ५५ ॥ यक्षिणीचापिकामेशीकामिनीमादिनीबलात् ॥ जयिनीचैवसर्वेशीकौलिनीत्यष्टशक्तयः ॥ ५६ ॥ ततोदशदलेपूज्यानिर्गर्भाख्यास्तुयोगिनी ॥ सर्वज्ञासर्वशक्तिश्चसर्वैश्वर्य्यफलप्रदा ॥ ५७ ॥ सर्वज्ञानमयीपश्चात्सर्वज्ञानविनाशिनी ॥ सर्वाधारस्वरूपाचसर्वपापहरापरा ॥ ५८ ॥ सर्वानन्दमयीपश्चात्सर्वरक्षास्वरूपिणी ॥ सर्वेप्सितार्थफलदापश्चिमादिविलोमगाः ॥ ५९ ॥ तदग्रिमेदशदलेपूजयेत्कुलयोगिनीः ॥ सर्वसिद्धिप्रदात्वाद्यासर्वसम्पत्प्रदापरा ॥ ६० ॥ सर्वप्रियङ्करीचैवसर्वमङ्गलकारिणी ॥ सर्वकामप्रदापश्चात्सर्वदुःखविमोचिनी ॥ ६१ ॥ सर्वमृत्युप्रशमनीसर्वविघ्नविनाशिनी ॥ सर्वाङ्गसुन्दरीचैवसर्वसौभाग्यदायिनी ॥ ६२ ॥ अग्रेचतुर्दशारेतुयोगिन्यःसाम्प्रदायिकाः ॥ पश्चिमादिविलोमेनपूजयेत्क्रमतस्तुताः ॥ ६३ ॥ सर्वसंक्षोभिणीचैवसर्वविद्राविणीतथा ॥ सर्वाकर्षिणिकाप्रोक्तास

र्वाह्लादकरीतथा ॥ ६४ ॥ सर्वसम्मोहिनीचैवसर्वस्तम्भनकारिणी ॥ सर्वजृम्भ
णिकाप्रोक्तातत:सर्ववशङ्करी ॥ ६५ ॥ सर्वरञ्जनिकाचैवसर्वोन्मादनिकातथा॥
सर्वार्थसाधिनीचैवसर्वसम्पत्तिरूपिणी॥ ६६ ॥ सर्वमन्त्रमयीचापिसर्वद्वन्द्वक्षय
ङ्करी ॥ ततोष्टारेपुराप्रोक्तायोगिनीःपरिपूजयेत् ॥ ६७ ॥ पूर्वादिष्वनुलोमेनब
न्धूककुसुमप्रभाः॥ अनङ्गकुसुमात्वाद्याद्वितीयानङ्गमेखला ॥६८॥ अनङ्गमद
नातद्वदनङ्गमदनातुरा ॥ अनङ्गलेखाचानङ्गवेगानङ्गांकुशातथा ॥ ६९ ॥ अ
नङ्गमालिनीत्वष्टौपाशांकुशलसत्कराः ॥ तदग्रेषोडशारेतुपश्चिमादिविलोम
तः॥७०॥कामाकर्षिणिकापूर्वंबुद्ध्याकर्षिणिकापरा॥अहङ्काराकर्षिणीचशब्दा
कर्षिणिकातथा ॥७१॥ स्पर्शाकर्षिणिकातद्वद्रूपाकर्षिणिकाभवेत् ॥ रसाकर्षि
णिकाप्रोक्तागन्धाकर्षिणिकामता ॥ ७२ ॥ चिन्ताकर्षिणिकाचापिधैर्य्याकर्षि
णिकामता ॥ नामाकर्षिणिकाचैवबीजाकर्षिणिकातथा ॥७३॥ अमृताकर्षि
णीचापिस्मृत्याकर्षिणिकामता ॥ शरीराकर्षिणीपश्चादात्माकर्षिणिकात
था ॥७४॥ तदग्रेष्टदलेपूज्यायोगिन्यःप्रकटाइह ॥ क्षोभणद्रावणाकर्षमनोन्मा
दमहांकुशाः ॥ ७५ ॥ खेचरीबीजसञ्ज्ञाचयोन्याख्यामूर्द्धतोयजेत् ॥ तद्वचा
धःसमभ्यर्च्यतद्बहिर्भूपुरेयजेत् ॥ ७६ ॥ ब्राह्म्याद्यष्टौतद्बहिश्चप्राग्वच्चागारभू
पुरे ॥ द्वारेद्वयंप्रागणिमामहिमालघिमेशिता ॥ ७७ ॥ वशितागुरुतामुक्तिः
प्राकाम्यप्राप्तिरेवच ॥ रससिद्धिश्चदशमीसपर्य्यैवंसमीरिता ॥ ७८ ॥ लक्षमे
कंजपेन्मन्त्रंजुहुयात्पायसेनवै ॥ तर्पणादिततःकुर्य्यान्मन्त्रसिद्धिःप्रजायते ॥
७९ ॥ नवलक्षंजपेत्तांतुरुद्ररूपोनरोभवेत् ॥ करवीरजपुष्पैश्चहोमान्मोहयते
जगत् ॥ ८० ॥ चन्द्रकुंकुमकस्तूरीहोमात्कामाधिकोभवेत् ॥ चम्पकैःपाटलै
र्बिल्वैर्वशमानयतेचिरात् ॥ ८१ ॥ करञ्जफलहोमेनभूतप्रेतादयोवशाः ॥ बि
ल्वैःस्यादतुलालक्ष्मीरिक्षुखण्डैस्तथावशाः ॥ ८२ ॥ लाजाहोमोराज्यदायीम
धुरोपद्रवक्षयः ॥ निशिस्वर्णफलैर्होमोरिपुसेनाविनाशकृत् ॥ ८३ ॥ दध्या
ज्यदुग्धामधुभिःकृताद्धोमादवाप्नुयात् ॥ आरोग्यंसम्पदंकामंधनंशर्करयासु
खम् ॥ ८४ ॥ कमलैर्धनसम्पत्तिर्दाडिमैराजवश्यता ॥ क्षत्रियोमातुलुङ्गैश्च
वैश्योनारिङ्गजैःफलैः ॥ ८५ ॥ शूद्रःकूष्माण्डसम्भूतैर्वश्याःस्युरचिराद्ध्रुवम्॥

पनसानांलक्षहोमाद्वश्याःस्युश्चक्रवर्त्तिनः॥ ८६ ॥ द्राक्षाफलैरिष्टसिद्धीरम्भाभिर्मन्त्रिणोवशाः ॥ नारिकेरैस्तुपाण्डित्यंतिलैःसर्वेष्टसिद्धयः॥ ८७ ॥ गुग्गुलैर्दुःखनाशःस्यात्सर्वेष्टंशर्करागुडैः॥ पायसैर्धनधान्यादिबन्धूकैःप्राणिनोवशाः॥ ८८ ॥ पक्वचूतफलैर्होमाद्क्कमात्राद्धरावशा॥ लवणैराजिकायुक्तैर्होमाद्दुष्टविनाशनम्॥ ८६ ॥ कर्पूरहोमाल्लभतेवाक्पतित्वंनरोचिरात्॥ घृतहोमादीप्सिताप्तिःशक्तिःस्यात्तिलतण्डुलैः॥ ६० ॥ अथान्यंसम्प्रवक्ष्यामिवाममार्गफलप्रदम्॥ कृष्णस्यशक्तिंसुमुखींद्विजानांनाधिकारिताम्॥ ६१ ॥ उच्छिष्टचाण्डालिनिसुमुखीदेविमहापिशा॥ चिनीह्रींठश्चठःठश्चद्वाविंशत्यक्षरोमनुः॥ ६२ ॥ भैरवोस्यमुनिश्छन्दोगायत्रीसुमुखीसुरी॥ मुनिरामद्विषट्चन्द्रबन्धवर्णैरङ्गकल्पनम्॥ ६३ ॥ ततश्चसुमुखींध्यायेत्पूजाहारविभूषिताम्॥ रक्ताम्बरांरक्तवर्णांरक्तपुष्पानुलेपनाम्॥ ६४ ॥ नृकपालंचखड्गंचकराभ्यांदधतींनवाम्॥ शवाशनांपीनकुचांदेवींश्रीसुमुखींभजे ॥६५॥ कालीपीठेयजेद्देवींपञ्चकोणाढ्यकर्णिके॥ अष्टपत्रेषोडशारेवृत्तभूपुरशोभिते॥ ६६ ॥ मूलेनमूर्त्तिसङ्कल्प्यपाद्यादीनिप्रकल्पयेत्॥ चन्द्रांचन्द्राननांचारुमुखींचामीकरप्रभाम्॥ ६७ ॥ चतुरांपञ्चकोणेषुकेशरेष्वङ्गदेवताः॥ ब्राह्म्याद्याअष्टपत्रेषुषोडशारेकलादिकाः॥ ६८ ॥ कलाकलानिधिःकालीकमलाचक्रियाकृपा॥ कुलाकुलीनाकल्याणीकुमारीकलभाषिणी॥ ६६ ॥ करालीचकरालास्याकान्ताकामप्रदाकुजा॥ भक्तोच्छिष्टोऽयुतंजप्त्वाजायतेसम्पदांपदम्॥ १०० ॥ उच्छिष्टेनैवभक्तेनवलिंदद्यान्निरन्तरम्॥ गव्याज्याक्तैःसञ्जुहुयाल्लक्षंसिद्धार्थतण्डुलैः॥ १ ॥ भवन्तिवशगास्तस्यराजानोराजमन्त्रिणः॥ शस्त्राणिवशगानिस्युर्हुतेनमार्जारमांसतः॥ २ ॥ धनर्द्धिश्छागमांसेनविद्याप्राप्तिस्तुपायसैः॥ मधुपायससंयुक्तस्त्रीरजोयुक्तमांसतः॥ ३ ॥ होममाचरतःपुंसोजनतावशवर्त्तिनी॥ मधुसर्पिर्युतैर्नागवल्लीपत्रैर्महाश्रियः॥ ४ ॥ सद्योनिहतमार्जारमांसेनमधुसर्पिषा॥ युक्तेनान्त्यजकोणाद्यैर्हुतैराकर्षतिस्त्रियः॥ ५ ॥ मध्वाक्तशशमांसेनतत्फलंविद्ययासह॥ उन्मत्ततरुजैर्दीप्तचिताग्नौजुहुयाच्छदैः॥ ६ ॥ कोकिलाकाकमांसेनमारयेदचिरादरीन्॥ वायसोलूक

योःपत्रैर्होमाद्विद्वेषयेदरीन् ॥ ७ ॥ गर्भपातःसगर्भायाउलूकच्छदहोमतः ॥ आज्याक्तैर्बिल्वपत्रैर्वामासमेकंसहस्रकम् ॥ ८ ॥ प्रत्यहंजुहुयात्तेनवन्ध्यापि लभतेसुतम् ॥ सौभाग्यार्थंदुर्भगायाबन्धूककुसुमैर्हुनेत् ॥ ९ ॥ चतुष्पथेब लिंदत्त्वाजपतश्चाष्टकायुतम् ॥ उच्छिष्टस्यचसादेवीप्रत्यक्षाजायतेचिरात् ॥ १० ॥ यत्रनोक्ताहोमसंख्यामन्त्रोक्तन्तत्रनिर्दिशेत् ॥ वाममार्गेणसुमुखीक्षि प्रंकामविधायिनी ॥ ११ ॥ भोजनान्तेतदोच्छिष्टैर्जाप्यासास्वेष्टसिद्धये ॥ नक्षिप्रफलदादेवीसुमुखीसुदृढापरा ॥ १२ ॥ अथातःसम्प्रवक्ष्यामिवाममार्गेण सिद्धिदाम् ॥ कृष्णप्रियामेकजटांह्रींत्रींहुंफट्चर्हेन्मनुः ॥ १३ ॥ अस्यन्या सादिसुन्यादितारापञ्चाक्षरीसमम् ॥ पूजावात्रपुरश्चर्य्याप्रोक्तालक्षचतुष्टयम् ॥ १४ ॥ तद्वत्प्रयोगकरणंकृष्णभक्तिपरम्परा ॥ अथवक्ष्येचैकजटामन्त्रंसर्व्यवशी करम् ॥ १५ ॥ तारोलज्जानमोभेतिगवत्येकजटेमम ॥ पुष्पंप्रतीक्षस्वस्वाहा द्वाविंशत्यक्षरोमनुः ॥ १६ ॥ ऋषिःपतञ्जलिश्छन्दोगायत्र्येकजटासुरी ॥ षडङ्गविधिरुद्दिष्टोदीर्घषड्युक्तमायया ॥ १७ ॥ ध्यानपूजाप्रयोगादिसर्वंपू र्वोक्तवद्भवेत् ॥ अथतत्रैकवीरायाःकृष्णशक्तेर्मनुंशृणु ॥ १८ ॥ यातुभार्गव रामेणकार्त्तवीर्य्यवधायच ॥ कृत्वास्वांशाबरंरूपंवाममार्गेणसेविता ॥ १९ ॥ तेनतन्त्रान्तरेप्रोक्तासेवारीतिर्मयासुराः ॥ जरासन्धभयात्कृष्णोयदासिन्धुंस माश्रितः ॥ २० ॥ तदारामेणनिर्दिष्टाश्रीकृष्णस्यजयैषिणः ॥ तामावाह्यस कृष्णोपिभोगेनपरितोषयेत् ॥ २१ ॥ आरेसुदर्शितंनार्यातस्मात्सारेणुकाभ वत् ॥ सम्भोगेतुजपेन्मन्त्रीयथासन्तोषयेत्स्त्रियम् ॥ २२ ॥ सन्तुष्यतेतदा देवीरेणुकावरदाभवत् ॥ प्रणवःकमलामायाक्रौंऐंपञ्चाक्षरोमनुः ॥ २३ ॥ भैरवोस्यमुनिःपङ्क्तिश्छन्दोदेवीचरेणुका ॥ पञ्चवर्णैःसमस्तेनषडङ्गविधिरीरि तः ॥ २४ ॥ हेमाद्रिसानावुद्यानेनानाद्रुममनोहरे ॥ रत्नमण्डपमध्यस्थवेदि

---

१ नमः २ ॐ ह्रीं नमो भगवतिएकजटेममपुष्पंप्रतीक्षस्वस्वाहा ३ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इन छह बीजों को षडङ्गों में न्यासकरे जैसे ह्रां हृदयाय नमः ह्रीं शिरसे स्वाहा इत्यादि ४ ॐ श्रीं ह्रीं क्रौं ऐं ५ क्रौं आदिक पांच अक्षरों को पांच अङ्गों में और सब मन्त्र से छठें याने अस्त्र में न्यास करना जैसे ॐ हृदयाय नमः, श्रीं शिरसे स्वाहा, ह्रीं शिखायै वषट् इत्यादि ॥

कायांस्थितांस्मर ॥ २५ ॥ गुञ्जाहारीकर्णयुग्मेमयूरच्छदभूषिताम् ॥ कोद ण्डबाणौकरयोर्नववल्कलधारिणीम् ॥ २६ ॥ शोणपुष्पीनूपुरांचमल्लिका कलिकाभराम् ॥ यजेदष्टदलेपद्मेकर्णिकायांपडङ्गकम् ॥ २७ ॥ हुङ्कारीखे चरीचण्डाछेदनीक्षेपणीतथा ॥ स्त्रीतुङ्कारीक्षेमकारीतदग्रेभूपुरेयजेत् ॥ २८ ॥ दिक्पतींश्चतदस्त्राणिपञ्चलक्षंजपेन्मनुम् ॥ विल्वकाष्ठैश्चितेवह्नौहुनेद्बिल्वफ लैस्तथा ॥ २९ ॥ तर्पणाद्यैःसिद्धमन्त्रःप्रयोगानाचरेत्ततः ॥ मल्लीपुष्पैर्हु तोवश्यमिक्षुदण्डैर्धनाप्तयः ॥ ३० ॥ पञ्चगव्यैर्धनानिस्युरशोककुसुमैःसु ताः ॥ इन्दीवरैःकृतोहोमोनृपपत्नीवशङ्करः ॥ ३१ ॥ अन्नादिरत्नैःसकलंमधु कैर्वाञ्छितंभवेत् ॥ अथातःसम्प्रवक्ष्यामिकृष्णस्यातीववल्लभाम् ॥ ३२ ॥ षोडशस्त्रीसहस्राणांयत्प्रभावात्प्रभुर्भवेत् ॥ तारोह्रींयोगिनीद्विधायोगेश्वरि युगंवदेत् ॥ ३३ ॥ योगेभयङ्करीत्युक्त्वासकलस्थावरेतिच ॥ जङ्गमस्यमुखंप्रो च्यहृदयम्ममचोच्चरेत् ॥ ३४ ॥ वशमाकर्षयद्वन्द्वंस्वाहान्तःखशरार्णकः ॥ पितामहोमुनिःप्रोक्तश्छन्दोतिजगतीमता ॥ ३५ ॥ हरेःप्राणसमाशैलपुत्री देवीस्वयंवरा ॥ ॐह्रांजगत्त्रयवश्यमोहिन्यैहृदयायहृत् ॥ ३६ ॥ त्रैलोक्य वश्यमोहिन्यैतारमायादिकंशिरः ॥ उरङ्गवश्यमोहिन्यैॐह्रैमाद्यंशिखाभवे त् ॥ ३७ ॥ ॐह्रैंसर्वराजवश्यमोहिन्यैकवचम्मतम् ॥ ॐह्रौंसर्वस्त्रीपुरुषमो हिन्यैइतिनेत्रकम् ॥ ३८ ॥ प्रणवोह्रःसर्ववश्यमोहिन्यैचास्त्रमीरितम् ॥ तत श्चमूलमन्त्रेणसर्वाङ्गेव्यापकंचरेत् ॥ ३९ ॥ संसारसागरेकृष्णंक्रीडन्तंवीक्ष्य शङ्करः ॥ तत्तत्सुखेच्छयाकृष्णरूपंजग्राहमोहनम् ॥ ४० ॥ आनन्दकान नंध्यायंस्तद्दृष्ट्वागिरिजाभवत् ॥ मोहितास्वस्वरूपञ्चकृत्वाष्टगुणसुन्दरम् ॥ ४१ ॥ तस्मिन्नवसरेविष्णुमयःपीताम्बरंदधत् ॥ जगौमङ्गलगीतानियावत्स्या न्मैथुनालयः ॥ ४२ ॥ मृतःकामोमङ्गलैस्तैःपूर्णश्चिचत्तेतयोरभूत् ॥ देवींमधूक जाम्मालांनागहारंहरोर्प्पयत् ॥ ४३ ॥ विष्णुर्योगकरस्तत्रतयोर्जातःपुरोहि तः ॥ तस्मैदेवीवरंप्रादात्तेनजाताहरिप्रिया ॥ ४४ ॥ एवंध्यात्वात्रिवेदाङ्ग कोणंयन्त्रंसमुद्धरेत् ॥ अष्टदशदिग्भूपालदन्ताष्टकृतिसम्मितैः ॥ ४५ ॥ दलैः पद्मानिकुर्वीतबाह्यवृत्तत्रयंपुनः ॥ भूपुरंचचतुर्द्वारंपूजायन्त्रमितीरितम् ॥ ४६ ॥

शेषास्वयंवरापूज्यात्रिकोणाभ्यन्तरेततः ॥ तद्वाह्येचतुरस्रस्यदिक्षुमेधांयजेत्ततः ॥ ४७ ॥ विद्यांलक्ष्मींमहालक्ष्मींषट्कोणेङ्गानिसंयजेत् ॥ द्विदिस्त्रानष्टदलेशक्रादीन्दिग्दलेपुनः ॥ ४८ ॥ तदायुधानितद्बाह्येदिग्दलेषोडशारके ॥ ताराद्येननमोन्तेनश्रीबीजेनयजेच्छ्रियम् ॥ ४९ ॥ पाशंमायामंकुशंचशिवायैनमइत्यपि ॥ अष्टाक्षरेणमनुनारदपत्रेशिवांयजेत् ॥ ५० ॥ रमामायांचमदनंत्रिपुरायैनमस्तथा ॥ नवाक्षरेणत्रिपुरांचतुष्षष्टिदलेर्चयेत् ॥ ५१ ॥ वृत्तत्रयेमहालक्ष्मींभवानींपुष्पशायकम् ॥ चतुरस्रेचतुर्द्वारि विघ्नक्षेत्रेशभैरवान् ॥ ५२ ॥ योगिनींपूजयेदित्थंनवावरणपूजनम् ॥ जपेल्लक्षचतुष्कंचपायसान्नंहुनेत्तथा ॥ ५३ ॥ एवंयोभजतेदेवींवश्यास्तस्यामिताजनाः ॥ लाजैस्त्रिमधुरोपेतैर्जुहुयादयुतंतुयः ॥ ५४ ॥ लभतेवाञ्छितांकन्यांधनमानसमन्विताम् ॥ सर्वोपास्यात्वियंदेवीसिद्धामार्गेद्वयेपिच ॥ ५५ ॥ लक्ष्मीभेदास्तुयेपूर्वंप्रोक्तास्तुविष्णुसाधने ॥ दक्षमार्गेणसंसिद्धावामेनैतेप्रकीर्त्तिताः ॥ ५६ ॥ त्यज्यतेदक्षिणोमार्गोयतःपापक्षयोभवेत् ॥ सिद्धिर्भवेद्यदामृत्युस्तदाजन्मान्तरेभवेत् ॥ ५७ ॥ नभजेद्वाममार्गन्तुपतन्निष्ठाद्दुरत्यया ॥ तद्धीनस्यमहापापंपापात्मानःपदेपदे ॥ ६८ ॥ एवंतेवैष्णवोमन्त्रोमयासम्यगुदीरितः ॥ यस्मिन्भुक्तिश्चमुक्तिश्चकिंवक्तव्यमतःपरम् ॥ १५६ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेविष्णुशक्तिमनुकथनं नामत्रिंशःप्रकाशः ३० ॥

---

श्रीदेव्युवाच ॥ श्रुतागाणेश्वराःसौरावैष्णवामनवोमया ॥ इदानींश्रोतुमिच्छामितवमन्त्रान्सुसिद्धिदान् ॥ १ ॥ श्रीमहादेवउवाच ॥ कथयिष्यामितेदेविशैवान्मन्त्रान्महाद्भुतान् ॥ यान्साधयित्वाभोगांस्तुभुक्त्वामोक्षमवाप्नुयात् ॥ २ ॥ नमःशिवायेतिमन्त्रःपञ्चार्णस्तारपूर्वकः ॥ षडक्षरोयंविप्राणांभुक्तिमुक्तिप्रसाधकः ॥ ३ ॥ वामदेवोमुनिश्छन्दःपङ्क्तिर्देवःसदाशिवः ॥ षडर्णैस्तुषडङ्गानिपञ्चाङ्गैर्वाङ्गपञ्चकम् ॥ ४ ॥ तर्ज्जन्योर्विन्यसेन्नंतत्पुरुषायनमस्त्विति ॥ मध्ययोर्मंअघोरायविन्यसेच्चकनिष्ठयोः ॥ ५ ॥ शिंप्रोच्यसद्योजातायनमोथा

नामयोर्न्यसेत् ॥ वामुक्त्वा वामदेवायनमोथांगुह्ययोर्न्यसेत् ॥ ६ ॥ यमीशाना यहृदयेचैवमेवमुखेन्यसेत् ॥ ७ ॥ हृदयेपादयोर्गुह्येन्यासोयंस्यात्तृतीयकः ॥ प्राग्याम्यवारुणोदीचीमध्येचक्रेषुपञ्चसु ॥ ८ ॥ एवमेवन्यसेत्प्रोक्तोन्यासोयं पञ्चमोघहृत् ॥ ॐसर्वशक्तिधाम्नेहृदयायनमोवदेत् ॥ ६ ॥ नमुक्त्वानित्यतृप्ते तिशक्तिधाम्नेशिरोभवेत्॥ ममित्युक्त्वानादिबोधशक्तिधाम्नेशिखाभवेत् ॥१०॥ शिमनन्तशक्तिधाम्नेकवचायनमस्त्विति ॥ वामनन्तशक्तिधाम्नेनमोनेत्रत्रयाय च॥११॥ यमनन्तशक्तिधाम्नेवदेदस्त्रायफट्तथा ॥ षोढान्यासंततःकुर्यान्मन्त्रा र्णैर्बिन्दुसंयुतैः ॥ १२ ॥ हृदिवक्त्रेदक्षिणांसेवामांसेदक्षिणोरुके ॥ वामोरौप्रथम श्चायंकण्ठेनाभौचदक्षिणे ॥ १३ ॥ पार्श्वेचवामपार्श्वेचपृष्ठेहृदिद्वितीयकः॥ मूर्ध्निवक्त्रेदक्षनेत्रेवामनेत्रेतथैवच ॥ १४ ॥ दक्षनासापुटेवामनसिप्रोक्तस्तृती यकः ॥ दक्षदोर्मूलकेमध्येमणिबन्धेंगुलीतले ॥ १५ ॥ मध्येंगुलीनामग्रेचच तुर्थःपरिकीर्त्तितः ॥ एवमेवप्रकर्त्तव्योवामदोर्मूलकादिषु ॥ १६ ॥ दक्षोरुमूले मध्येचगुल्फेचांगुलिमूलके ॥ अंगुल्यग्रेचवामोरावेवमेवन्यसेद्बुधः ॥ १७ ॥ पञ्चमोयंभवेन्न्यासोमूर्ध्निवक्त्रेहृदिन्यसेत् ॥ उदरेवापिदक्षोरुमूलादिचरणान्त कम् ॥ १८ ॥ वामोरुमूलपादाग्रपर्य्यन्तःषष्ठकस्त्वयम् ॥ ततोहृदिमुखेकण्ठे न्यसेद्बाहुद्वयेतथा ॥ १६ ॥ पुनर्वक्त्रांसहृत्पादद्वयोरुजठरेन्यसेत् ॥ पुनर्मू र्ध्निचभालेचजठरेचांसयोर्हृदि ॥ २० ॥ एवंद्वादशधान्यस्यवामेनपङ्कजंचरे त् ॥ नमोस्तुस्थानभूतायज्योतिर्लिङ्गामृतात्मने ॥ २१ ॥ चतुर्मूर्त्तिवपुः स्थायभासिताङ्गायशम्भवे ॥ ततोध्यायेत्तुगोक्षीररजताद्रिसमप्रभम् ॥ २२ ॥ चारुचन्द्रकलाराजज्जटामुकुटमण्डितम् ॥ पञ्चवक्त्रधरंशम्भुंप्रतिवक्त्रंत्रिलोच नम् ॥ २३ ॥ शार्दूलचर्म्मवसनंरत्नाभरणभूषितम् ॥ दक्षोर्ध्वेहस्तेटङ्कंचवरं चदधतंकरैः ॥ २४ ॥ वामोर्ध्वेहस्तेहरिणन्दधानमभयम्परे ॥ सुप्रसन्नमुखा म्भोजंनिविष्टंकुशविष्टरे ॥ २५ ॥ ब्रह्मविष्णुमहेशाद्यैःस्तुतंकृष्णंसुरासुरैः ॥ विश्वाद्यंविश्ववपुषंभवभीतिहरंभवम् ॥ २६ ॥ ध्यात्वार्चयेत्ततःपीठेषोडशैरु पचारकैः ॥ नवैताःशम्भुपीठस्यशक्तयःपरिकीर्त्तिताः ॥ २७ ॥ वामाज्येष्ठा ततोरौद्रीकालीकलविकर्णिका ॥ ततोबलविकर्णाचबलप्रमथनीतथा॥ २८॥

सर्वभूतदमन्याख्याततःप्रोक्तामनोन्मनी ॥ तारोनमोभगवतेसकलेतिपदंव देत् ॥ २६ ॥ गुणात्मशक्तियुक्तायययोगपीठात्मनेनमः ॥ योगपीठस्यपूजा यांमन्त्रोरसकरार्णवान् ॥ ३० ॥ आवाह्यदेवंसम्पूज्यपुष्पान्तैरुपचारकैः ॥ ततश्चाष्टदलेपूजादिक्पत्रेषुशिवाग्रतः ॥ ३१ ॥ तत्पुरुषमघोरंचसद्योयातंत तःपरम् ॥ वामदेवन्तथेशानंमध्यकोणेषुसंयजेत् ॥ ३२ ॥ निवृत्तिंचप्रतिष्ठां चविद्याशान्तितुमध्यतः ॥ शान्त्यतीतातथाबाह्येष्टदलेकेशरेषुच ॥ ३३ ॥ अग्नीशासुरवायव्यमध्येसर्वत्रकेशरे ॥ षडङ्गान्यथपत्रेषुदेवाग्राच्चप्रदक्षिणम् ॥ ३४ ॥ अनन्तसूक्ष्मंचशिवम्महोक्षंचैकनेत्रकम् ॥ एकरुद्रंत्रिमूर्त्तिंचश्रीकण्ठं चशिखण्डिनम् ॥ ३५ ॥ रक्तपीतासितारक्तकृष्णरक्ताञ्जनासितान् ॥ किरी टार्पितबालेन्दून्पद्मस्थांश्चारुभूषणान् ॥ ३६ ॥ त्रिनेत्रान्प्रतिवक्त्रेषुचापह स्तान्मनोरमान् ॥ उमांचण्डेश्वरंनन्दिमहाकालौमहेश्वरम् ॥ ३७ ॥ वृषभं भृङ्गिरीटिंचस्कन्दन्तदव्याप्यपङ्कजे ॥ उत्तरंदरमालभ्यबीजनीलाहतान्सि तान् ॥ ३८ ॥ चित्रंनिशाकराभंचपीतनीलान्यजेत्क्रमात् ॥ तद्बाह्येचतुरस्रे चयजेदिन्द्रादिदिक्पतीन् ॥ ३६ ॥ अनन्तंचविधातारमीशनैर्ऋत्यपार्श्वतः॥ तत्पार्श्वेतद्वाहनानिबाह्येस्त्राणिप्रपूजयेत् ॥ ४० ॥ लक्षषट्कंजपेन्मन्त्रंनियम स्थोजितेन्द्रियः ॥ तत्सहस्रंप्रजुहुयात्तिलैःशुद्धैर्घृतप्लुतैः ॥ ४१ ॥ पायसैःक्षी रवृक्षोत्थसमिद्भिर्वाथहोमयेत् ॥ तावत्संख्यतिलैःशुभ्रैस्तर्प्पयेच्चतथासितैः ॥ ४२ ॥ मार्ज्जयेत्तद्दशांशेनभोजयेच्छिवतत्परान् ॥ एवंसंसाधितोमन्त्रःसर्वा न्कामान्प्रयच्छति ॥ ४३ ॥ पर्वतेलक्षमेकन्तुमहानद्यांद्विलक्षकम् ॥ तीर्थेत्रि लक्षंसञ्जप्यहुनेद्दूर्वांकुरैस्तिलैः ॥ ४४ ॥ तद्दशांशेनपूर्णायुर्निरोगःसाधकोभ वेत् ॥ अश्वत्थवृक्षंसंस्पृश्यजपेल्लक्षद्वयंशनैः ॥ ४५ ॥ आम्रैर्हुनेत्तद्दशांशै र्दीर्घायुश्चयुतोभवेत् ॥ आदित्यसम्मुखोभूत्वाजपेल्लक्षमनन्यधीः ॥ ४६ ॥ अर्कैरष्टशतंनित्यंहुनेद्रोगैर्विमुच्यते ॥ समस्तव्याधिनाशार्थंपालाशसमिधाहु नेत् ॥ ४७ ॥ अयुतंचनिरोगःस्यादथपूर्वोदितैर्यजेत् ॥ शान्त्यष्टकंचजुहुया दुपतिष्ठेद्दिवाकरम् ॥ ४८ ॥ नित्यंतस्यमहारोगानाशंयान्तिनसंशयः ॥ न वतोयेनसम्पूर्णघटंसंस्पृश्यसञ्जपेत् ॥ ४६ ॥ अयुतंतज्जलैःस्नानंरोगाणा

मौषधंस्मृतम् ॥ अष्टाविंशंजपित्वातमश्नीयात्प्रत्यहंनरः ॥ ५० ॥ हुनेच्चारुप लाशैश्चतावदारोग्यमाप्नुयात्॥ पिबेदष्टोत्तरशतंजप्त्वाचयोर्कसन्निधौ॥५१॥ औदरैरामयैः सर्वैर्मासेनैकेनमुच्यते ॥ एकादशेनभुञ्जीयादन्नंचैवाभिमन्त्रि तम् ॥ ५२ ॥ भक्ष्यंचोष्यंतथापेयंविषमप्यमृतंभवेत्॥ चन्द्रसूर्य्यग्रहेपूर्वमुपोष्य विधिनाशुचिः ॥ ५३ ॥ यावद्ग्रहणमोक्षस्तुतावज्जप्यांसमाहितः ॥ जपेत्समु द्रगामिन्यांविमोक्षेग्रहणस्यतु ॥ ५४ ॥ अष्टोत्तरसहस्रेणपिबेद्ब्राह्मीरसंततः ॥ ऐहिकींलभतेमेधांसर्वश्रुतिवहांशुभाम्॥ ५५॥सारस्वतीभवेद्देवीतस्यवागति मानुषी ॥ ग्रहाणांचैवपीडासुजप्त्वायुतमथोहुनेत् ॥ ५६ ॥ तिलाज्यैरष्टसाह स्रंग्रहपीडाविनश्यति ॥ दुःस्वप्नदर्शनेस्नात्वाजपेच्चैवायुतंनरः ॥ ५७ ॥ घृते नाष्टशतंहुत्वादुःस्वप्नफलनाशनम् ॥ ५८ ॥ चन्द्रसूर्य्यग्रहेलिङ्गंसमभ्यर्च्यायु तंजपेत् ॥ ५९ ॥ यत्किञ्चित्प्रार्थयेत्तस्यनिकटेनतदाप्नुयात् ॥ गजानांतुरगा णांवागवांवाव्याधिसम्भवे ॥ ६० ॥ समिद्भिर्जुहुयान्मासमयुतंव्याधिशान्त ये ॥ जप्त्वान्तेशस्त्रबाधायांजुहुयादयुतंशुचिः ॥ ६१ ॥ पलाशस्यसमिद्भिस्तु तस्यशान्तिर्भविष्यति ॥ आत्मवादिकसन्ध्यायामेतदेवसमाचरेत् ॥ ६२ ॥ प्रध्वंसयतितच्छक्तिंशत्रुस्तस्यमरिष्यति ॥ विद्वेषणार्थंजुहुयाद्विभीतसमिधाष्ट कम् ॥ ६३ ॥ परापकारःपापायशृणुतत्पापनाशनम् ॥ मांध्यात्वैकाग्रचित्ते नचाभिषिञ्चेत्समन्त्रतः ॥६४॥ अष्टोत्तरशतंजप्तैस्तोयैःपापंलयंव्रजेत्॥ सन्ध्यो पासनविच्छेदेसहस्रैकंजपेत्तथा ॥ ६५ ॥ विड्वराहैश्चचाण्डालैर्मार्ज्जारैःकुक्कुटै रपि॥ स्पृष्टमन्नंनभुञ्जीयात्तत्रचाष्टशतंजपेत् ॥ ६६ ॥ ब्रह्महत्याविशुद्ध्यर्थंजपेल्ल क्षायुतंनरः ॥ यानिजेपुनरर्धंस्यात्तदर्धंभूपयोनिके ॥ ६७ ॥ सहस्रपञ्चकंक्षु द्रपापेपुजपईरितः ॥ जितेन्द्रियोजपेल्लक्षपञ्चकंशिवहद्मनाः ॥ ६८ ॥ ब्राह्म णोवान्यकुलजोवायुपञ्चकजिद्भवेत् ॥ निगृहीतेन्द्रियःपञ्चलक्षंजप्त्वेन्द्रियंजये त् ॥ ६९ ॥ पञ्चविंशलक्षजपात्तत्त्वानांविजयीभवेत् ॥ मध्यरात्रेयुतंजप्त्वा निकटेब्रह्मसिद्धिभाक् ॥ ७० ॥ जपेद्वनेशिवमनानिर्वातेध्वनिवर्जिते ॥ मध्यरात्रेविवश्यश्चतद्वशोभवतिध्रुवम् ॥ ७१ ॥ शिवमभ्यर्च्यसाहस्रजपोनि त्यंरमाप्रदः ॥ सहस्रद्वयजापेनमहारोगैःप्रमुच्यते ॥ ७२ ॥ सहस्रत्रयजापेन

दीर्घमायुर्लभेन्नरः ॥ चतुस्सहस्रजापेनवाञ्छितान्समवाप्नुयात् ॥ ७३ ॥ तिलैःशुद्धैर्घृताज्याक्तैःप्रत्यहंत्रिसहस्रकम् ॥ मासंहुत्वाविनश्येत्तुरोगस्तस्यनसम्भवेत् ॥ ७४ ॥ अयंषडक्षरोमन्त्रःषोढास्यादक्षरात्मकः ॥ लक्षमेकंपुरश्चर्य्यामुनयोमीप्रकीर्त्तिताः ॥ ७५ ॥ ब्रह्माचगौतमोत्रिश्चविश्वामित्रस्तथाङ्गिराः ॥ भरद्वाजोथछन्दांसिपङ्क्तिगायत्र्यनुष्टुभः ॥ ७६ ॥ त्रिष्टुप्चबृहतीचेतिविराट्चैवात्रदेवताः ॥ परब्रह्मेन्द्रविष्णूचविधात्र्यश्विगुहाःक्रमात् ॥ ७७ ॥ ज्योतिर्वर्णकुंकुमाभोमेचकोधूम्रवर्णकः ॥ पीतोरुणःक्रमाद्वर्णादेवतानांप्रकीर्त्तिताः ॥ ७८ ॥ क्रमान्नियोगोमोक्षार्थंगतराज्यासयेश्रिये ॥ ऐश्वर्य्यायचविद्यायैनिजपापक्षयायच ॥ ७९ ॥ लज्जयाद्यन्तयोर्युक्तःपञ्चार्णःसप्तवर्णकः ॥ षंडर्णश्चाष्टवर्णःस्यादेवंमन्त्रद्वयंभवेत् ॥ ८० ॥ वामदेवोमुनिःपङ्क्तिश्छन्दोदेवउमापतिः ॥ तारषड्दीर्घमायाद्यैःस्यान्मन्त्रार्णैःषडङ्गकम् ॥ ८१ ॥ बन्धूककुसुमारक्तंचन्द्रार्धकृतशेखरम् ॥ शूलंकपालमभयंवरंचदधतंकरैः ॥ ८२ ॥ वामोरुसंस्थितांदेवींश्लिषन्तंवामबाहुना ॥ स्मेरवक्त्रंत्रिनयनंसर्वाभरणभूषितम् ॥ ८३ ॥ एवंध्यात्वायजेत्पीठेपूर्वोक्तेनवशक्तिके ॥ आदौपञ्चदलंपद्मंकेशरेष्वङ्गषट्ककम् ॥ ८४ ॥ मध्येप्राग्दक्षिणेदिव्येपश्चात्पत्रेष्विमान्यजेत् ॥ हृल्लेखागगनाशुक्लाचतुर्थीतुकुलालिका ॥ ८५ ॥ मद्योच्छुष्माक्रमादेताःपञ्चभूतसमप्रभाः ॥ पाशांकुशवराभीतिधारिण्योमितभूषणाः ॥ ८६ ॥ तद्बाह्येष्टदलेपूज्यावृषभाद्यष्टदेवताः ॥ सम्यग्ध्यात्वाक्रमादर्च्यादेवाग्रादिप्रदक्षिणम् ॥ ८७ ॥ हिमालयाभंवृषभंतीक्ष्णास्यंतंत्रिलोचनम् ॥ सर्वाभरणसन्दीप्तंसाक्षाच्छन्दस्स्वरूपिणम् ॥ ८८ ॥ कपालशूलविलसत्करंकालघनप्रभम् ॥ क्षेत्रपालंत्रिनयनंदिगम्बरमथार्चयेत् ॥ ८९ ॥ शूलटङ्काक्षवलयकमण्डलुलसत्करम् ॥ त्रिनेत्रंरक्तवस्त्राढ्यंसेनापतिमथार्चयेत् ॥ ९० ॥ तद्बाह्येष्टदलेपूज्याब्रा

---

१ ह्रीं नमःशिवायह्रीं २ ह्रूं ॐनमःशिवायह्रूं ३ ॐ ह्रीं ॐहृदयायनमः ॐ ह्रीं नं शिरसे स्वाहा ॐ ह्रूं मं शिखायैवषट् ॐ ह्रैं शिं कवचायहुम् ॐ ह्रौं वां नेत्रत्रयायवौषट् ॐ ह्रः यं अस्त्रायफट्, इसी रीति से करन्यास भी होता है जैसे ॐ ह्रां ॐ अंगुष्ठाभ्यांनमः ॐ ह्रीं नं तर्जनीभ्यांनमः इत्यादि ॥

ह्मयाद्याश्चाष्टमातरः ॥ तद्बहिश्चतुरस्राणित्रीणितद्वीथिकाद्वये ॥ ६१ ॥ इन्द्रादीन्दशदिक्पालांस्तदस्त्राणिबहिर्यजेत् ॥ मनुलक्षंजपेन्मन्त्रंतत्सहस्रंय थाविधि ॥ ६२ ॥ जुहुयान्मधुरासिक्तैरारग्वधसमिद्वरैः ॥ तर्पणंमार्ज्जनंप्रा ग्वद्विप्रसन्तर्प्पणन्तथा ॥ ६३ ॥ एवंसिद्धमनुःकुर्य्यात्प्रयोगाद्यञ्चपूर्ववत् ॥ एतत्संसाधनात्सम्पत्सन्ततिःसम्प्रजायते ॥ ६४ ॥ हौमित्येकाक्षरोमन्त्रःप्रो क्तःप्रासादसञ्ज्ञकः ॥ वामदेवोमुनिश्छन्दःपङ्क्तिर्देवःसदाशिवः ॥ ६५ ॥ हं बीजंशक्तिरौकारःसर्वाभीष्टेनियोजनम् ॥ षड्दीर्घयुक्तबीजेनषडङ्गविधिरीरि तः ॥ ६६ ॥ पञ्चब्रह्मविधानाख्यंन्यासंशृणवन्तुदेवताः ॥ यस्मिन्कृतेतुपञ्चत्वे जातेपञ्चमुखेभवेत् ॥ ६७ ॥ आदौतुपञ्चमन्त्रेणमस्तकेस्वेमुनिंन्यसेत् ॥ मु निश्छन्दोदेवतास्तुध्यानपूर्वंहृदिन्यसेत् ॥ ६८ ॥ अयन्तुप्रथमोन्यासोदेवता प्रीतिकारकः ॥ ईश्वरःसर्वविद्यानामीश्वरोस्यमनोर्मुनिः ॥ ६९ ॥ तत्रदेव श्चभूपङ्क्त्यनुष्टुप्छन्दांसिचिन्तयेत् ॥ शक्तिंडमरुकाभीतिवरान्संदधतंकरैः ॥ १०० ॥ ईशानंत्रीक्षणंशुद्धंनागयज्ञोपवीतिनम् ॥ मनोस्तत्पुरुषायेतिमुनि स्तत्पुरुषःस्मृतः ॥ १ ॥ आपोदेव्योस्यगायत्रीछन्दोध्यानंनिरूप्यते ॥ परश्व धंवराभीतीर्दधानंविद्युदुज्ज्वलम् ॥ २ ॥ चतुर्मुखंतत्पुरुषंत्रिनेत्रंवृषगामि नम् ॥ अघोरेभ्योथघोरेभ्योमनोरग्निर्मनुर्मतः ॥ ३ ॥ अनुष्टुप्छन्दआख्या तंदेवआपःप्रकीर्त्तितः ॥ मालांदण्डंपाशसृणीडमरुंखट्विकाङ्गकम् ॥ ४ ॥ ख ङ्गंकपालंहस्तैश्चदधतंत्रीक्षणंभजेत् ॥ अञ्जनाभंचतुर्वक्त्रंवामदेवंत्रिलोचन म् ॥ ५ ॥ वराभयाक्षवलयकुठारंदधतंकरैः ॥ सद्योजातंप्रपद्यामिमन्त्रस्यतुह रोमुनिः ॥ ६ ॥ अञ्जनाभंचतुर्वक्त्रंभीमदंतुभयापहम् ।' नानाभीमगणैर्युक्तम घोरंचिन्तयेद्धृदि ॥ ७ ॥ वामदेवायेतिमनोर्वामदेवोमुनिःस्मृतः ॥ विकृति श्छन्दउद्दिष्टंभर्गोदेवःप्रकीर्त्तितः ॥ ८ ॥ अथद्वितीयंवक्ष्यामिन्यासंसर्वार्थसि द्धिदम् ॥ त्रैश्रींह्रीं च तथाहं क्षैं हूं ह्रौं च श्रींत्रयंवदेत् ॥ ९ ॥ पराबीजद्वयंप्रो क्तासर्वज्ञायहृदीरितम् ॥ अमृततेजोज्वालेतिमालिनीतिपदंततः ॥ १० ॥ तृ प्तायब्रह्मशिरसेशिरोमन्त्रउदीरितः ॥ ज्वलितशिखिशिखायानादिबोधायत च्छिखये ॥ ११ ॥ वज्रायवज्रहस्तायस्वतन्त्रायतनुच्छिदे ॥ सौंचौंसौमितिसंभा

ष्यमुनये ऽलुप्तशक्तये ॥ १२ ॥ नेत्रत्रयायेतिमन्त्रोनेत्रस्यैवप्रकीर्त्तितः ॥ श्री परशुंचङेन्तंहुंफट्तथानन्तशक्तये ॥ १३ ॥ अस्त्रमुक्तंषडङ्गानिकुर्य्यादेवंसमा हितः ॥ पूर्वदक्षिणपाश्चयाशासौम्यमध्येपुपञ्चसु ॥ १४ ॥ मुखेषुविन्यसेदी शानादीन्पञ्चहिचक्रमात् ॥ तृतीयोथतथेशानादिकानंगुष्ठकादिके ॥ १५ ॥ न्यसेत्ततिर्य्यक्छिरोवक्त्रहृदयांत्रिपुपञ्चमः ॥ पञ्चब्रह्ममनोर्न्यासानेवंकृत्वाततः परम् ॥ १६ ॥ अष्टत्रिंशत्कलान्यासंकुर्य्यात्तेजोभिवृद्धये ॥ ईशानादिकलाः पञ्चअंगुष्ठादिषुविन्यसेत् ॥ १७ ॥ प्रणवाद्यंमन्त्रपदंकलाङेन्तानमोन्तकाः ॥ ईशानःसर्वविद्यानांशशिनीप्रथमाकला ॥ १८ ॥ ईश्वरःसर्वभूतानामङ्गदा ख्याततःपरम् ॥ ब्रह्माधिपत्याद्यर्णानांत्रिदशानांतथेष्टदा ॥ १९ ॥ शिवो मेत्रास्तुमारीचीचतुर्थीकथिताकला ॥ सदाशिवोंतथैतस्यपञ्चमींचांशुमालि नीं ॥ २० ॥ तत्पुरुषायविद्महेशान्तिंपूर्वमुखेन्यसेत् ॥ दक्षिणांसेघोररू पांविन्यसेद्द्वादशींकलाम् ॥ २१ ॥ घोरतरेभ्योवामांसेनिद्राख्यांतुत्रयो दशीम् ॥ सर्वेभ्योनाभिमध्येतुव्याचितास्त्रांत्रयोदशीम् ॥ २२ ॥ कुक्षौतु सर्वसर्वेभ्योभूतिःपञ्चदशीभवेत् ॥ नमस्तेअस्तुपृष्ठेतुसुधाख्याषोडशीकला ॥ २३ ॥ वक्षःस्थलेरुद्ररूपेभ्यःकलात्रत्रियामिका ॥ वामदेवायविरजांगुह्ये त्वष्टादशींन्यसेत् ॥ २४ ॥ वामदेवायविरजांदक्षांदक्षांसकेन्यसेत् ॥ श्रे ष्ठायनमइत्युक्त्वावामांसेतुरतिंन्यसेत् ॥ २५ ॥ रुद्रायनमइत्युक्त्वादक्षोरौपा लिनींन्यसेत् ॥ कालायनमोद्वाविंशसंज्ञांवामोरुकेन्यसेत् ॥ २६ ॥ त्रयो विंशीकलेत्युक्त्वाकलाख्यांदक्षजानुनि ॥ न्यसेच्छ्रियंविकर्णायनमोवामेच जानुनि ॥ २७ ॥ बलेत्युक्त्वाबुद्धिनाम्नींदक्षजङ्घगतास्मरेत् ॥ न्यसेज्ज्ञानावि कर्णायनमोवामेचजङ्घके ॥ २८ ॥ हृदिरात्रिंसप्तविंशींबलायनंमइत्यपि ॥ कट्यांबलप्रमथनायनमोगुह्यकेन्यसेत् ॥ २९ ॥ सर्वभूतदमनायमोहिनींदक्ष पार्श्वके ॥ वामपार्श्वेमनोन्मनायनमश्चोभयंन्यसेत् ॥३०॥ सद्योजातंप्रपद्या मिसिद्धिंपादतलेत्ववाक् ॥ ऋद्धिंचोदक्पादतलेसद्योजातायवैनमः ॥ ३१ ॥ भवेच्छुतिंत्रयस्त्रिंशींदक्षहस्ततलेन्यसेत् ॥ वामहस्ततलेलक्ष्मीमभवेविन्यसेत्त तः ॥ ३२ ॥ पञ्चत्रिंशींनासिकायामेधांनाभिभवेन्यसेत् ॥ षट्त्रिंशींमूर्द्धनि

क्षान्तिविन्यसेच्चभुजेरमाम् ॥ ३३ ॥ सप्तत्रिंशींभवेत्युक्ताशुद्धांन्यस्येद्वाग्भुजे ॥ उद्भवायनमःप्रोच्यतिर्य्यग्वामभुजेन्यसेत् ॥ ३४ ॥ ततश्चवाममनुनापुटान्सव्यंचमन्त्रकान् ॥ सद्योजातादिकान्न्यस्येद्व्यापकत्वेचरेद्धके ॥ ३५ ॥ सदाशिवात्मकंध्यात्वास्वात्मानंसर्वदैवतैः ॥ अवस्थितंशिवोहंचध्यात्वान्तःपूजनंचरेत् ॥ ३६ ॥ ततश्चावाह्यपूजायामीशानाद्यैश्चपञ्चभिः ॥ प्रथमावरणंज्ञेयंद्वितीयंस्यात्पडङ्गकम् ॥ ३७ ॥ अनन्ताद्यैस्तृतीयंस्याच्चतुर्थंस्यादुमादिभिः ॥ इन्द्राद्यैःपञ्चमंचापिवज्राद्यैःषष्ठकंमतम् ॥ ३८ ॥ लक्षद्वयंजपेन्मन्त्रंहविष्याशीजितेन्द्रियः ॥ पञ्चविंशतिसाहस्रसम्मितैःकरवीरजैः ॥ ३९ ॥ जपापुष्पैस्तुपद्मैर्वाहोमयेत्तर्प्पणादिकम् ॥ कृत्वासंसिद्धमन्त्रस्तुकुर्यात्काम्यानिपूर्ववत् ॥ ४० ॥ तारमायाधराबीजपूर्वःपञ्चाक्षरोमनुः ॥ अष्टवर्णोभवेदस्यवामदेवोमुनिर्मतः ॥ ४१ ॥ देवःसदाशिवःप्रोक्तःपंक्तिश्छन्दउदाहृतम् ॥ मायाप्रमादबीजाभ्यांभेदिताभ्यांचपट्स्वरैः ॥ ४२ ॥ पड्भिस्तथामन्त्रवर्णैःपडङ्गानिसजातिभिः ॥ ध्यायेत्ततश्चसिन्दूरारुणंशम्भुंत्रिलोचनम् ॥ ४३ ॥ टङ्कंमृगंतथादेवींचालिङ्गन्तंवरप्रदम् ॥ हस्तैश्चतुर्भिराक्तपद्मंचदधतींकरैः ॥ ४४ ॥ पीतवृत्तघनोत्तुङ्गस्तनींवामाङ्कसंस्थिताम् ॥ रक्तपद्मसमासीनंरक्तस्रग्गन्धलेपनम् ॥ ४५ ॥ एवन्ध्यात्वाचपञ्चार्णपीठेतद्वयजेद्धरम् ॥ अष्टलक्षंजपेन्मन्त्रंतत्तद्दस्रंतथाहुनेत् ॥ ४६ ॥ घृताप्लुतैःपायसान्नैस्तर्प्पणादिततश्चरेत् ॥ एवंसिद्धमनुःकुर्य्यात्प्रयोगानिपडर्णवत् ॥ ४७ ॥ ॐजूंसः इतिमन्त्रस्यप्रोक्तोमृत्युञ्जयाभिधः ॥ ऋषिःकहोलोदेव्यादिगायत्रीछन्दईरितम् ॥ ४८ ॥ मृत्युञ्जयोमहादेवोदेवतापरिकीर्त्तिता ॥ पड्दीर्घयुक्तभृगुणापडङ्गानिसमाचरेत् ॥ ४९ ॥ स्मरेत्पद्मद्वयस्थंचचन्द्रार्काग्नित्रिलोचनम् ॥ हस्तेपुञ्ज्ञानमुद्रांचपाशसद्राक्षमल्लिके ॥ ५० ॥ कर्पूराभंशीर्षचन्द्रंकरोद्गामृतधारया ॥ अर्धाङ्गबहुभूषाढ्यंकान्ताभिश्चविमोहितम् ॥ ५१ ॥ एवंसंपूजयेत्पीठेमूर्त्तिंमूलेनकल्पयेत् ॥ अङ्गेन्द्राद्यैस्तदस्त्रैश्चत्रिरावरणपूजनम् ॥ ५२ ॥ जपेत्त्रिलक्षंजुहुयादमृताखण्डकैःप्लुतैः ॥ शुद्धदुग्धेनचततस्तर्प्पणादिसमाचरेत् ॥ ५३ ॥ एवंसंसिद्धमन्त्रस्तुप्रयोगानिचरेदथ ॥ सुधाफलैःसुधाखण्डैर्मन्त्रीमासंसहस्रकम् ॥ ५४ ॥ आरा

धिताग्नौजुहुयाद्विधिवद्विजितेन्द्रियः ॥ सन्तुष्टःशङ्करस्तस्यसुधाप्लावितविग्रहः ॥ ५५ ॥ आयुरारोग्यसम्पत्तियशःपुत्रान्विवर्धयेत् ॥ सुधावटौबिल्वदूर्वाःपयःसर्पिःपयोहविः ॥ ५६ ॥ इत्युक्तैःसप्तभिर्द्रव्यैर्जुहुयात्सप्तवासरम् ॥ अष्टोत्तरसहस्रंतुनित्यंसप्ताधिकान्द्विजान् ॥ ५७ ॥ भोजयेन्मधुरान्नैश्चसर्वरोगैःप्रमुच्यते ॥ होमाद्यंपूर्ववद्द्याद्विप्रेभ्योधिकदक्षिणाम् ॥५८॥ आरण्याःपशवोगाश्चहस्तिनोवाजिनस्तथा ॥ गुरुंसम्प्रीणयेत्पश्चाद्धनाद्यैर्देवताधिया ॥ ५९ ॥ अनेनविधिनासद्यःकृत्याद्रोहज्वरादिभिः ॥ विमुक्तःसुचिरंजीवेत्साधिकंशरदांशतम् ॥ ६० ॥ अभिचारज्वरेतीव्रेघोरोन्मादेशिरोगदे ॥ असाध्यरोगेसंजातेतथाचैवमहाभये ॥ ६१ ॥ होमोयंशान्तिदःप्रोक्तःसर्वसम्पत्प्रदायकः ॥ द्रव्यैरेतैःप्रजुहुयात्त्रिजन्माचयथाविधि ॥ ६२ ॥ भोजयेन्मधुरैर्भोज्यैर्ब्राह्मणान्वेदपारगान् ॥ दीर्घमायुरवाप्नोतिकाश्मरीबकुलोद्भवैः ॥ ६३ ॥ समिद्भैःकृतोहोमःसर्वमृत्युगदापहः ॥ सिद्धान्नैर्विहितोहोमोमहाज्वरविनाशनः ॥ ६४ ॥ अपामार्गसमिद्धोमःसर्वामयविनाशनः ॥ अथातोदक्षिणामूर्तिमन्त्रंवक्ष्याम्यभीष्टदम् ॥ ६५ ॥ ॐकारमायाबीजाभ्यांपुटंषट्त्रिंशदक्षरम् ॥ दक्षिणामूर्त्तयेतुभ्यंवटमूलनिवासिने ॥ ६६ ॥ ध्यानैकनिरताङ्गायनमोरुद्राय शम्भवे ॥ मुनिःशुक्रःसमुद्दिष्टोनुष्टुप्छन्दःप्रकीर्त्तितम् ॥ ६७ ॥ देवताजगतामादिर्दक्षिणामूर्त्तिरव्ययः ॥ प्रणवोबीजमित्युक्तंहृल्लेखाशक्तिरीरिता ॥६८॥ विनियोगःसमुद्दिष्टःपुरुषार्थचतुष्टये ॥ आदौतुमूलमन्त्रेणकरशुद्धिंसमाचरेत् ॥ ६९ ॥ रसनेत्राष्टकवसुबाणवह्निमितैःक्रमात् ॥ तत्रैवतुचमन्त्रार्णैस्तारमायादिकैःपुनः ॥ ७० ॥ षड्दीर्घैस्तारमायान्तैःषडङ्गानिसमाचरेत् ॥ मूर्द्धिभा

१ ॐ ह्रीं दक्षिणामूर्त्तयेतुभ्यंवटमूलनिवासिने ॥ ध्यानैकनिरताङ्गायनमोरुद्रायशम्भवे ॐ ह्रीं २ ॐ ह्रीं दक्षिणामूर्त्तयेहृदयायनमः ॐ ह्रीं तुभ्यं शिरसेस्वाहा ॐ ह्रीं वटमूलनिवासिने शिखायैवषट् ॐ ह्रीं ध्यानैकनिरताङ्गाय कवचायहुम् ॐ ह्रीं नमोरुद्राय नेत्रत्रयायवौषट् ॐ ह्रीं शम्भवे अस्त्रायफट् ३ आं ईं ऊं ऐं औं अः इन छः अक्षरोंके अन्तमें ॐ और ह्रीं जोड़कर क्रमसे षडंगोंमें न्यासकरना जैसे आं ॐ ह्रीं हृदयायनमः ईं ॐ ह्रीं शिरसे स्वाहा ऊं ॐ ह्रीं शिखायैवषट् इत्यादि और किसीका मतहै कि यह न्यास दूसरा नहींहै पूर्वोक्त न्यासहीके अन्तमें आं ॐ ह्रीं इत्यादि दीर्घस्वर जोड़कर न्यास होताहै ॥ जैसे ॐ ह्रीं दक्षिणामूर्त्तये आं ॐ ह्रीं हृदयायनमः ॐ ह्रीं तुभ्यं ईं ॐ ह्रीं शिरसेस्वाहा ॐ ह्रीं वटमूलनिवासिने ॐ ह्रीं शिखायैवषट् ॐ ह्रीं ध्यानैकनिरताङ्गाय ऐं ॐ ह्रीं कवचायहुम् इत्यादि, आगे समझलेना ॥

लेदक्षनेत्रेवामेचैवतुकर्णयोः॥ ७१ ॥ दक्षगण्डेवामगण्डेनासिकायांकटौत
था॥ लिङ्गेदक्षोरुमूलेचजानुमूलेचगुल्फके॥ ७२॥ पादांगुलीनांमूलेचजानु
मध्येचगुह्यके॥ पादांगुलीनांमूलेचन्यसेत्स्थानचतुष्टये॥ ७३॥ एवंवामोरु
मध्यादौकुर्य्यान्न्यासोयमीरितः॥ हिमाचलतलेरम्येसिद्धकिन्नरगुह्यकैः॥७४॥
नानाद्रुमैःपुष्पफलपत्रोपेतैर्विराजिते॥ शिलाविवरनिर्गच्छन्निर्जनेनिलशी
तले॥ ७५॥ नानाभृङ्गैःपक्षिगणैर्विधुरीकृतसम्मुखे॥ शुकादिमुनिभिर्युक्ते
वटंतत्रविचिन्तयेत्॥ ७६॥ गारुत्मतमयैःपत्रैःपद्मरागमयैःफलैः॥ नवरत्न
मयाकल्पैस्तोरणाद्यैरलंकृतम्॥ ७७॥ तस्यमूलेस्वर्णभूमौरत्नसिंहासनेशु
भे॥ आसीनममिताकल्पंशरच्चन्द्रनिभाननम्॥ ७८॥ रजताद्रिप्रतीकाशंमु
निदेवगणैस्तुतम्॥ जटामुकुटिनंवीरासनंनासावलोकनम्॥ ७९॥ त्रिनेत्रंसु
प्रसन्नास्यंनिविष्टंशुभपङ्कजे॥ दक्षिणोर्ध्वकरेटङ्कंव्याख्यामुद्रामधःकरे॥ ८०॥
वामोर्ध्वहस्तेहरिणंवामजानुन्यधःकरम्॥ प्राक्प्रोक्तेपूजयेत्पीठेप्रथमेषुदलेयजे
त्॥ ८१॥ केशरेषुषडङ्गानिदेवाग्रादिप्रदक्षिणम्॥ पूजयेदष्टपत्रेषुपूजयेदवृ
षभादिकान्॥ ८२॥ वीथीद्वयेचलोकेशांस्तदस्त्राणिचपूजयेत्॥ पुरश्चरण
सिद्ध्यर्थंप्रजपेदयुताष्टकम्॥ ८३॥ जुहुयात्तद्दशांशेनतिलैःक्षीरपरिप्लुतैः॥
पायसेनाथवादेवाःकेवलेनघृतेनवा॥ ८४॥ तर्प्पणादिततःकृत्वाप्रयोगार्हो
भवेन्मनुः॥ मासमेकञ्चभिक्षाशीसहस्रंचाष्टकंजपेत्॥ ८५॥ मन्त्रंप्रतिदिनं
मन्त्रीवैदुष्यंलभतेध्रुवम्॥ मूलमन्त्रेणपुटितांमातृकांमनुवित्तमः॥ ८६॥ ज
लंस्पृष्ट्वात्रिधाजप्त्वापिवेदब्दाद्भवेद्ध्रुवम्॥ अखिलानांचशास्त्राणांव्याख्या
ताचमहाकविः॥ ८७॥ रोमपिप्पलिकाब्राह्मीवचासर्ज्जरसैर्घृतैः॥ सुगन्ध
द्रव्यसंयुक्तैर्नन्दिकेश्वरकल्पितैः॥ ८८॥ तत्कल्कसहितैर्ब्राह्मीरसेपक्वंचगो
घृतम्॥ अनेनमन्त्रवर्य्येणप्रजप्तमयुतावधि॥ ८९॥ तत्रसंसेवितंकीर्त्तिक
विताश्रीधृतिप्रदम्॥ कान्तिरक्षायुष्यदंचगदितंसर्वसिद्धिकृत्॥ ९०॥ अ
थोविभेदाद्द्वाविंशद्वर्णोमन्त्रोनिगद्यते॥ तारोनमोभगवतेदक्षिणामूर्त्तयेवद
त्॥ ९१॥ मह्यंमेधांप्रयच्छेतिस्वाहान्तोथद्वितियकः॥ मेधास्थानेपठेत्प्रज्ञांफ
ठेनामानुसारतः॥ ९२॥ मेधाकण्ठेनसामर्थ्यंप्रज्ञाप्रोक्तातुयास्मृतिः॥ बीज

दयालिप्तोमन्त्रःसिद्ध्यतेवाममार्गिणाम् ॥ ६३ ॥ ऋषिर्ब्रह्मासमुद्दिष्टोगाय त्रंछन्दईरितम् ॥ देवताश्रीमहादेवोदक्षिणामूर्त्तिसञ्ज्ञकः ॥ ६४ ॥ प्रणवः प्रोच्यतेबीजंस्वाहाशक्तिरितिस्मृता ॥ मेधापदंकीलकंस्यात्पुरुषार्थेनियोजन म् ॥ ६५ ॥ तारुद्धैःस्वरैर्दीर्घैःषड्भिरङ्गानिकल्पयेत् ॥ शिरोरुमध्यवक्त्रेपुहृ दिनाभौचगुह्यके ॥ ६६ ॥ जान्वोश्चरणयोर्न्यस्येत्पदान्यष्टौमनोःक्रमात् ॥ ६७ ॥ वर्णन्यासमथोमूर्द्ध्निभालाक्ष्णोःश्रोत्रयोर्नसि ॥ ओष्ठेदन्तेचजिह्वायांचि बुकाग्रेंसयोर्गले ॥ ६८ ॥ बाहूरोनाभिगुह्येपुगुदोर्वोर्जानुजङ्घयोः ॥ पादपा ण्योश्चसर्वाङ्गेततोदेवंविचिन्तयेत् ॥ ६९ ॥ शङ्करन्तुशरच्चन्द्रनिभमम्भोज मध्यगम् ॥ गङ्गाधरंशरच्चन्द्रकरोल्लसितशेखरम् ॥ २०० ॥ प्रसन्नवदनाम्भो जंत्रिनेत्रंसुस्मितााननम् ॥ दिव्याम्बरधरंदेवंगन्धमाल्यैरलंकृतम् ॥ १ ॥ नानारत्नमयाकल्पमनुकल्पविभूषितम् ॥ मुक्ताक्षमालांदक्षोर्ध्वेज्ञानमुद्रामधः करे ॥ २ ॥ वामोर्ध्वेचसुधाकुम्भंपुस्तकंतदधःकरे ॥ दधानंचिन्तयेद्देवंमु निवृन्दनिषेवितम् ॥ ३ ॥ एवंध्यात्वायजेत्पीठेपूर्वोक्तेनवशक्तिके ॥ पद्मत्रय समोपेतेभूगेहत्रितयान्विते ॥ ४ ॥ चतुर्द्वारयुतेङ्गानिकेशरेपुयजेत्ततः ॥ स्व रान्षोडशतत्रैवद्वन्द्वशःकेशरस्थितान् ॥ ५ ॥ यजेद्वर्गाष्टकंपश्चादष्टपत्रेषु चापरे ॥ सरस्वतीचतुर्वक्त्रंसनकंचसनन्दनम् ॥ ६ ॥ सनातनंचैवसनत्कुमा रंचशुकंतथा ॥ व्यासंचपरतोष्टौतुपार्वतींशुभगांतथा ॥ ७ ॥ भद्रांक्रियांशा न्तिरौद्र्यौकालींकलभिकामपि ॥ चतुरस्रेचतुष्कोणेष्वाग्नेयेशातमर्चयेत् ॥ ८ ॥ सिद्धगन्धर्वयोगीन्द्रान्विद्याधरगणानपि ॥ इन्द्रादींश्चतदस्त्राणिप्राग्वद्वी थीद्वयेयजेत् ॥ ९ ॥ एकलक्षंजपेन्मन्त्रंतद्दशांशंहुनेत्ततः ॥ क्षीराज्याक्तैस्तिलैः पद्मैःपायसैर्वाघृतप्लुतैः ॥ १० ॥ तर्पणादिततःकृत्वाकाम्यकर्म्माणिसाधयेत् ॥ कण्ठमात्रोदकेस्थित्वाजपेन्मन्त्रंसहस्रकम् ॥ ११ ॥ प्रत्यहंमण्डलादर्वाक्कवी नामग्रणीर्भवेत् ॥ पञ्चविंशतिधाजप्तमन्नपायसमेवच ॥ १२ ॥ भक्षितंक्षीरसं सिक्तंपरंवाकाव्यकारकम् ॥ सर्वापन्नाशकंचैवसर्वरोगविनाशनम् ॥ १३ ॥

---

१ ॐ आं ॐ हृदयायनमः ॐ ई ॐ शिरसेस्वाहा ॐ ऊं ॐ शिखायैवषट् ॐ ऐं ॐ कवचायहुम् ॐ औं ॐ नेत्रत्रयायवौषट् ॐ अः ॐ अस्त्रायफट् ॥

त्रयोदश्यांप्रदोषेचसोपवासःशिवालयम् ॥ मौनीगत्वार्चयेद्देवंविद्यायुःपरिवृद्धये ॥ १४ ॥ आज्येनपायसान्नेनवाकामःसर्वदाहुनेत् ॥ श्रीकामोजलजैर्बिल्वैर्नन्द्यावर्त्तैःसदाहुनेत् ॥ १५ ॥ आज्यक्षीराक्तदूर्वाभिर्हुत्वादद्याच्चदक्षिणाम् ॥ गुरवेगांचमहिषींतस्यमृत्युभयंकुतः ॥ १६ ॥ आदित्याभिमुखोभूत्वा दद्याद्दशजलाञ्जलीः ॥ मूलमन्त्रेणमन्त्रज्ञःसर्वदोषैर्नबाध्यते ॥ १७ ॥ प्रातःसायंचसप्तैवमध्याह्नेचैकविंशतिः ॥ दुग्धबुद्ध्याजलैर्देवंतर्पयित्वाततोहुनेत् ॥ १८ ॥ पलाशपुष्पैरचिरात्कविर्होमादिभिर्भवेत् ॥ गौर्य्यापार्श्वस्थयासार्धं श्रीकामश्चिन्तयेत्प्रभुम् ॥ १९ ॥ अयुतंप्रजपेन्मन्त्रंभूयसींश्रियमाप्नुयात् ॥ भुञ्जानःप्रयतोमन्त्रीगोमूत्रेपक्वमोदनम् ॥ २० ॥ भिक्षान्नमथवामन्त्रमयुतद्वितयंजपेत् ॥ अश्रुतान्वेदशास्त्रादीन्व्याचष्टेनात्रसंशयः ॥ २१ ॥ एवमाराधितो मन्त्रोभुक्तिमुक्तिप्रदायकः ॥ अथातोदक्षिणामूर्त्तेर्द्व्यक्षरोमनुरुच्यते ॥ २२ ॥ हंसइत्यस्यगायत्रीछन्दोब्रह्मामुनिर्मतः ॥ देवतादक्षिणामूर्त्तिर्हंबीजंशक्तिरन्तिमः ॥ २३ ॥ हसव्यञ्जनयोर्योगषड्दीर्घाद्यङ्गकल्पनम् ॥ ध्यानपूजादिकंसर्वंतथाकाम्यनियोजनम् ॥ २४ ॥ द्वात्रिंशदक्षरःप्रोक्तोदक्षिणामूर्त्तिमन्त्रवित् ॥ विशेषतःस्वयंरोगहरःसारस्वतप्रदः ॥ २५ ॥ ज्ञानप्रदश्चभवति तथामोक्षप्रदोपिच ॥ अथातःसम्प्रवक्ष्यामिवामिनांसिद्धिदस्यतु ॥ २६ ॥ दक्षिणामूर्त्तिभेदस्यतस्यमन्त्रचतुष्टयम् ॥ ऊर्ध्वपश्चिमयोःसौम्यप्रागाम्नायोक्तसिद्धिकृत् ॥ २७ ॥ क्रमादेतेत्रप्रोच्यन्तेमहादेवायहुंत्विति ॥ वामोमुनिर्विराट्छन्दोदेवतावामनायकः ॥ २८ ॥ कालिकाबीजपूर्वैश्चषड्दीर्घैस्स्यात्षडङ्गकम् ॥ लिङ्गन्यस्तमहाकालींमदिरासक्तमानसाम् ॥ २९ ॥ लौहदण्डंमांसपिण्डंपानपात्रंत्रिशूलकम् ॥ दधतंभर्जितमत्स्यंचचकंरुधिरस्यच ॥ ३० ॥ स्पृशन्तमेकेनभगमपरेणकुचद्वयम् ॥ इत्थंतंचिन्तयेद्देवेशंकालपीठेसमर्चयेत् ॥ ३१ ॥ भगमालांभगलतांभगांकोणत्रयेयजेत् ॥ लिङ्गस्थितंलिङ्गभगमात्मानंचात्ममेखलम् ॥ ३२ ॥ मत्स्यप्रियंचतद्बाह्येपञ्चकोणेसमर्चयेत् ॥ मदोन्मत्तंरतिकरंचलन्मध्यंस्खलत्पदम् ॥ ३३ ॥ वेदपृष्ठंधमशक्तंशान्त्यतीतंनिरञ्जनम् ॥ तत्रस्थितंचतद्बाह्येपूजयेन्नवयोनिके ॥ ३४ ॥ लक्षाष्टकञ्जपेन्मन्त्रंप्र

थमस्तुसुरान्वितैः ॥ हुत्वातुमांसशकलैर्मन्त्रसिद्धिःप्रजायते ॥ ३५ ॥ सम्भो
गीयोजपेल्लक्षंहुनेद्वैचायुतम्परम् ॥ तर्प्पयेचन्दनेनैवततपरम्मन्त्रसिद्धये ॥
३६ ॥ जपादिकंप्रकर्तव्यंयथाकार्यानुसारतः ॥ अवश्यञ्जायतेकार्य्यंतस्माच्चे
द्विकलेन्द्रियः ॥ ३७ ॥ तदानकार्य्यंभवतिवाममार्गेचसाधितम् ॥ अथातो
दक्षिणामूर्त्तेरपरोमन्त्रउच्यते ॥ ३८ ॥ तारोनमोभगवतेदक्षिणामूर्त्तयेवदेत् ॥
मह्यंमेधांवदेत्प्रज्ञांप्रयच्छानलवल्लभा ॥ ३९ ॥ चतुर्विंशतिवर्णोयंमुनिर्ब्रह्मा
समीरितः ॥ देवतादक्षिणामेधागायत्रीछन्दउच्यते ॥ ४० ॥ मेधाबीजंतथाश
क्तिःस्वाहामेधासमृद्धये ॥ नियोगोथषडङ्गानिआंईऊंऐंचऔंचअः ॥ ४१ ॥ ए
तैर्वर्णैस्तुदिग्बन्धम्भूर्भुवःसुवरोमिति ॥ व्याख्यापीठेतिशुभ्रंचभस्मोद्धूलितवि
ग्रहम् ॥ ४२ ॥ ज्ञानमुद्राक्षमालाढ्यंवीणापुस्तकधारिणम् ॥ प्राग्वत्पूजादि
कंसर्वंपुरश्चरणमुच्यते ॥ ४३ ॥ कृष्णाष्टमींसमारभ्ययावत्कृष्णचतुर्दशी ॥
चत्वारिंशत्सहस्राणिजप्त्वास्याचपुरस्क्रिया ॥ ४४ ॥ आज्यंदशांशंहोतव्यं
मन्त्रसिद्धिःप्रजायते ॥ पापाधिक्यान्नचेत्सिद्धिस्तदैवन्तुसमाचरेत् ॥ ४५ ॥
बिल्वाधस्स्थोजपेल्लक्षंततःसिद्धिर्भवेदिति ॥ दूरेदृष्टाचचेत्सिद्धिःपश्चाद्द्वार
शिवालये ॥ ४६ ॥ लक्षमेकंमनुञ्जप्त्वाहुत्वाज्यंसिद्धिभाग्भवेत् ॥ ततःप्रयोगं
कुर्वीतहुनेत्पालाशपुष्पकैः ॥ ४७ ॥ यमुद्दिश्यायुतंसोपिमूर्खोविद्यानिधिर्भ
वेत् ॥ कण्ठमात्रेजलेस्थित्वाजपेन्मन्त्रसहस्रकम् ॥ ४८ ॥ प्रत्यहंमण्डलादर्वा
क्कवीनामग्रणीर्भवेत् ॥ भुञ्जानःप्रयतोमन्त्रीगोमूत्रेपक्वभोजनम् ॥ ४९ ॥
भिक्षान्नमथवामन्त्रमयुतद्वितयंजपेत् ॥ अश्रुतंवेदशास्त्रादिव्याचष्टेनात्रसंश
यः ॥ ५० ॥ स्वहस्तेजलमादायप्रातस्तदभिमन्त्रयेत् ॥ पञ्चविंशतिवाराणि
पाययेद्बालकायतत् ॥ ५१ ॥ मासषट्कंतस्यविद्याभवेद्गङ्गाप्रवाहवत् ॥ अथा
तःसम्प्रवक्ष्यामिनृसिंहाद्धलिनोमम ॥ ५२ ॥ मन्त्रंशरभसञ्ज्ञस्यद्रुतसिद्धिप्र
दायकम् ॥ ॐखंखांखंफड्डुच्चार्य्यद्विःशत्रून्ग्रससीतिच ॥ ५३ ॥ तथाहुंफट्सर्वा
स्त्रसंहरणायशरभेतिच ॥ शान्तायपक्षिराजायहुंफट्स्वाहानमोमनुः ॥ ५४ ॥

१ ॐ खं खां खं फट्शत्रून् ग्रससिग्रससिहुंफट् सर्वास्त्रसंहरणाय शरभाय शान्ताय पक्षि
राजायहुंफट् स्वाहा नमः ॥

एकचत्वारिंशदर्णोवासुदेवोमुनिर्मतः ॥ कालाग्निरुद्रःशरभोदेवतापरिकीर्तितः ॥ ५५ ॥ छन्दस्तुजगतीस्वाहाशक्तिर्बीजंस्वमुच्यते ॥ वेदांङ्कदशसप्तसप्तसागरैरङ्गकल्पनम् ॥ ५६ ॥ पुनःसमस्तमन्त्रेणदिग्बन्धंतुसमाचरेत् ॥ चन्द्रार्काग्निात्रिनयनंकालीदुर्गाद्विपक्षकम् ॥ ५७ ॥ विद्युज्जिह्वंवज्रनखंवडवाग्न्युदरन्तथा ॥ व्याधिमृत्युरिपुघ्नंचचण्डवातातिवेगिनम् ॥ ५८ ॥ हृद्भैरवस्वरूपंचवैरिवृन्दनिषूदनम् ॥ मृगेन्द्रत्वक्छरीरेस्यपक्षाभ्यांचञ्चुनारवः ॥ ५९ ॥ अधोवक्त्रश्चतुष्पादाऊर्ध्वदृष्टिश्चतुर्भुजः ॥ कालान्तदहनप्रख्योनीलजीमूतनिःस्वनः ॥ ६० ॥ अरिर्यद्दर्शनादेवविनष्टबलविक्रमः ॥ शदाक्षग्रहरूपायपक्षविक्षिप्तभूभृते ॥ ६१ ॥ अष्टपादायरुद्रायनमःशलभमूर्तये ॥ एवंध्यात्वासहस्रंतुप्रजपेत्पायसंहुनेत् ॥ ६२ ॥ प्रत्यहंमासपट्केनमन्त्रसिद्धिःप्रजायते ॥ तदाजेयस्तुसंग्रामेभूतप्रेतपिशाचकाः ॥ ६३ ॥ नश्यन्तिदर्शनादेवचाधयोव्याधयस्तथा ॥ अथातःसम्प्रवक्ष्यामिमालामन्त्रंसुसिद्धिदम् ॥ ६४ ॥ तारेणनमोभगवतेङेन्तंशलभशाल्वच ॥ सर्वभूतोच्चाटनायग्रहराक्षसचोच्चरेत् ॥ ६५ ॥ निवारणायज्वालेतिङेन्तंमालास्वरूपच ॥ दक्षनिष्काशनायेतिसाक्षादितिपदंवदेत् ॥ ६६ ॥ कालरुद्रस्वरूपाष्टमूर्त्तयेचतथाचरेत् ॥ कृशानुरेतसेचेतिमहेतिपदमुच्चरेत् ॥ ६७ ॥ क्रूरभूतोच्चाटनायेत्यप्रतिशयनायच ॥ शत्रूंश्चनाशयद्वन्द्वंवदेच्छत्रुपशूंस्ततः ॥ ६८ ॥ गृह्णयुग्मंखादयुग्मंतारंहुंचवसुप्रियाम् ॥ अष्टोत्तरशतार्णोयमष्टोत्तरशतंजपेत् ॥ ६९ ॥ प्रत्यहंमासपट्केनसिद्धिःस्यात्तत्फलंशृणु ॥ पात्रेपूतंजलंस्थाप्यसप्तवाराभिमन्त्रितम् ॥ ७० ॥ पानार्थंतत्प्रसादेनदातव्यंलापयेत्तथा ॥ ७१ ॥ प्रयान्तिसर्वभूतानिज्वराश्चातुर्थिकादयः ॥ सप्ताहात्तत्प्रयोगेणनात्रकार्य्याविचारणा ॥ ७२ ॥ अथातःसम्प्रवक्ष्यामिह्यघोरास्त्रावयंमनुम् ॥ मायांस्फुरद्वयंचैवप्रस्फुरद्वितयंवदेत् ॥ ७३ ॥ पश्चाद्वदेत्तरद्वन्द्वंतरप्रान्तंचटद्वयम् ॥ प्रचटद्वितयंपश्चात्कहद्वन्द्वंमहद्वयम् ॥ ७४ ॥ बन्धद्वयंघातयद्विर्हुंहुंभूशरवर्णकः ॥ मनुःप्रोक्तोघोरमुनिरुष्णिक्

१ चार, नव, दश, सात, सात और चार अक्षरों को क्रमसे षडंगों में न्यास करना जैसे ॐ खं खां खं हृदयाय नमः इत्यादि ॥

छन्दोस्यदेवता ॥ ७५ ॥ अघोररुद्रोवंबीजंह्रींशक्तिश्चप्रकीर्तिता ॥ शर्त्तुद शदिग्दन्तिदिवाकरमितैर्मनोः ॥ ७६ ॥ वर्णैःकुर्य्यात्षडङ्गानिपदन्यासोथव क्ष्यते ॥ भालेवक्त्रेगलेहृद्यथोनाभिकरजानुषु ॥ ७७ ॥ सजङ्घपादयोश्चैवप दान्येकादशन्यसेत् ॥ शरर्त्तुनेत्रवस्वब्धिशरवेदाब्धिवेदकैः ॥ ७८ ॥ रसनेत्र मितैर्वर्णैस्तत्पदानिभवन्त्यमी ॥ मेघाकारंततोध्यायेद्भीमदंष्ट्रंत्रिलोचनम् ॥ ७९ ॥ भुजङ्गभूषणंरक्तवसनालेपशोभितम् ॥ परशुंकरवालंचबाणंत्रिशिख मेवच ॥ ८० ॥ दधानंदक्षिणैर्हस्तैरूर्ध्वादिक्रमतःपरैः ॥ डमरुंखेटकंचापंनृक पालंचबिभ्रतम् ॥ ८१ ॥ काम्यकर्मसुरक्ताभंकृष्णाभमभिचारकम् ॥ निग्रहे ग्रहभूतादिमुक्तौमुक्तानिभंस्मरेत् ॥ ८२ ॥ एवंसञ्चिन्त्यदेवेशंशिवपीठेपुरोदि ते ॥ षट्कोणान्तस्थितेपद्मद्वितयेभूपुरैर्वृते ॥ ८३ ॥ केशरेष्वङ्गपूजास्याद्देवाग्रा दिप्रदक्षिणम् ॥ डमरुंपरशुंखड्गंखेटंबाणंतथाधनुः ॥ ८४ ॥ शूलंकपालंब्रा ह्मयाद्याद्वितीयेष्टदलेर्चयेत् ॥ वीथीद्वयेलोकपालांस्तदस्त्राणिचपूजयेत् ॥ ८५ ॥ लक्षमेकंजपेन्मन्त्रंहविष्याशीजितेन्द्रियः ॥ जुहुयात्तद्दशांशेनतिलैः शुद्धघृतप्लुतैः ॥ ८६ ॥ तर्प्पणंमार्ज्जनंकृत्वाभोजयेन्मधुरैर्द्विजान् ॥ एवंसि द्धेमन्त्रवरेकाम्यकर्माणिसाधयेत् ॥ ८७ ॥ क्रमात्सर्पिरपामार्गतिलसर्षपपा यसैः ॥ साज्यैःसहस्रंप्रत्येकंयामिन्यांजुहुयात्सुधीः ॥ ८८ ॥ होमोयंनाशये त्सद्योभूतकृत्यादिनायकान् ॥ श्वेतकिंशुकनिर्गुण्डीहेमापामार्गसम्भवैः ॥ ८९ ॥ समिद्वरैःकृतोहोमःपूर्ववदद्भुतशान्तिदः ॥ अपामार्गाश्वत्थयोश्चपञ्च गव्येसमुक्षिताः ॥ ९० ॥ समिधोजुहुयात्कृष्णपञ्चम्यांनिशिसंयतः ॥ पृथक् सहस्रहोमेनभूतानांनिग्रहोभवेत् ॥ ९१ ॥ क्रमात्सर्प्पिरपामार्गपञ्चगव्यहवि र्घृतैः ॥ हुत्वासहस्रंप्रत्येकंपात्रेसम्पातयेद्धुते ॥ ९२ ॥ सम्पातसर्पिषासाध्यं भोजयेदद्भुतशान्तये ॥ अघोरास्त्राद्वयोमन्त्रःसर्वकाम्यानिसाधयेत् ॥ ९३ ॥ अथातःसम्प्रवक्ष्यामिमन्त्रंपाशुपतास्त्रकम् ॥ तारःश्रींपशुशब्दान्तेहुंफडम न्त्रःषडक्षरः ॥ ९४ ॥ वामदेवोमुनिःपङ्क्तिश्छन्दःपशुपतिःसुरः ॥ मन्त्रार्णैः षड्भिरङ्गानिहुंफडन्तैःसबिन्दुकैः ॥ ९५ ॥ जातियुक्तानिचाङ्गेषुतथांगुष्ठादि षुक्रमात् ॥ ध्यायेत्पशुपतिंसम्यङ्मन्त्रीचैकाग्रमानसः ॥ ९६ ॥ पञ्चवक्त्रं

दशभुजंप्रतिवक्त्रेत्रिलोचनम् ॥ अग्निज्वालानिभश्मश्रुमूर्द्धजंभीमदंष्ट्रक
म् ॥ ९७ ॥ खड्गंबाणानक्षसूत्रंशक्तिंपरशुमेवच ॥ दधानंदक्षिणैर्हस्तैरूर्ध्वा
दिक्रमतःपरैः ॥ ९८ ॥ खेटचापौकुण्डिकांचत्रिशूलंब्रह्मदण्डकम् ॥ नाना
भरणसन्दीप्तंबालचन्द्रैरलंकृतम् ॥ ९९ ॥ मध्याह्नार्कसमंध्यात्वाशिवपी
ठेतथार्चयेत् ॥ पद्ममष्टदलंकृत्वाकर्णिकाकेशरान्वितम् ॥ ३०० ॥ चतुर्द्वारस
मायुक्तंचतुरस्त्रत्रयावृतम् ॥ एवंपात्रेसमालिख्यस्वर्णरौप्यादिकेशुभे ॥ १ ॥
पटेवाफलजेवापिश्रीकण्ठादिसमुद्भवे ॥ सर्वोपचारैराराध्ययजेदङ्गानिपूर्वव
त् ॥ २ ॥ दलेषुमातृकाःपूज्यालोकेशास्त्राणितद्बहिः ॥ पूजयेद्विधिनाने
नसर्वान्कामानवाप्नुयात् ॥ ३ ॥ लक्षषट्कंजपेन्मन्त्रंहविष्याशीजितेन्द्रि
यः ॥ तद्दशांशैर्हुनेद्द्रव्यैर्घृताक्तैःसंस्कृतेनले ॥ ४ ॥ तर्पणादिततःकृत्वा
प्रयोगार्होभवेन्मनुः ॥ अनेनमन्त्रितंतोयंग्रहभूतास्पदेक्षिपेत् ॥ ५ ॥ सद्य
स्तंमुञ्चतिक्रन्दत्यहोमन्त्रप्रभावतः ॥ अनेनमन्त्रितान्बाणान्विसृजद्युधिभूप
तिः॥ ६ ॥जयेत्क्षणेनसकलानरीन्नास्त्यत्रसंशयः ॥एवंमन्त्रस्तुसंसिद्धोभुक्ति
मुक्तिप्रदोभवेत् ॥ ७ ॥ अथास्यभेदंवक्ष्यामिपशवन्तेपतिशब्दयुक्[1] ॥ भवेद
ष्टाक्षरोमन्त्रोमुन्याद्यंपूर्ववन्मतम् ॥ ८ ॥ हुंशक्तिःश्रींचबीजंस्यात्तद्भिन्नैश्च
षडक्षरैः ॥ प्रणवाद्यैःषडङ्गानिप्राग्वद्ध्यात्वाचपूजयेत् ॥ ९ ॥ सद्योजातादि
भिःपञ्चब्रह्मभिःप्रथमावृतिः ॥ षडङ्गैश्चद्वितीयास्यात्तदस्त्राद्यैस्तृतीयका ॥
१० ॥ उमादिभिश्चतुर्थीस्यात्स्वायुधैश्चापिपञ्चमी ॥ षष्ठीचेन्द्रादिभिःप्रो
क्तासप्तमीचतदायुधैः ॥ ११ ॥ अष्टलक्षंपुरश्चर्य्यापायसेनहुनेत्ततः ॥ अन्य
त्सर्वंप्रयोगादिपूर्ववत्परिकीर्त्तितम् ॥१२॥ नीलकण्ठमनुंवक्ष्येसमस्तविषनाश
नम् ॥ शंनींठःइतिमन्त्रोयंत्रिवर्णःसर्वकामदः ॥ १३ ॥ अरुणोमुनिरुद्दि
ष्टोनुष्टुप्छन्दस्तुदेवता ॥ नीलकण्ठःशंचबीजंठःशक्तिःपरिकीर्तिता ॥१४॥
हरायेतिहृदयंचशिरःप्रोक्तंकपर्दिने॥नीलकण्ठायेतिशिखाकवचंकालकूटवि॥
१५॥षभक्षणायहुंफट्स्याच्छ्रीकण्ठायत्रिनेत्रकम् ॥ अस्त्रंचशितिकण्ठायस्वा

---

१ ॐ श्रीं पशुपतिः हुंफट् २ ॐ ॐ हृदयायनमः ॐपं शिरसे स्वाहा ॐशुं शिखायैव
षट् ॐपंकवचायहुम् ॐतिःनेत्रत्रयायवौषट् ॐफट्अस्त्रायफट् ॥

द्वान्ताइतिसम्मताः ॥१६॥ न्यस्याःषडङ्गमनवश्चांगुष्ठादिषुविन्यसेत् ॥ मूर्ध्नि कण्ठेचहृदयेन्यसेद्बीजत्रयंपुनः ॥ १७ ॥ ध्यायेद्देवंनीलकण्ठंबालार्कायुतवर्चसम् ॥ जटाभूतलसच्चन्द्राकारकैःफणिसत्तमैः ॥ १८ ॥ कृतकल्पकराम्भोजैर्दधानंजपमालिकाम् ॥ शूलंकपालंखट्वाङ्गमक्षमालांचबिभ्रतम् ॥ १६ ॥ प्रतिवक्त्रिनयनंव्याघ्रचर्म्माम्बरावृतम् ॥ पद्ममध्येसमासीनमतिसुन्दरविग्रहम् ॥ २० ॥ एवंध्यात्वार्चयेत्पीठेशैवेसर्वोपचारकैः ॥ पद्मेवसुदलेरम्येचतुरस्त्रत्रयावृते ॥ २१ ॥ चतुर्द्वारेपूर्वमङ्गलोकेशानायुधानिच ॥ एवंप्रपूजयेन्मन्त्रीसर्वकामस्यसिद्धये ॥ २२ ॥ लक्षत्रयंजपेन्मन्त्रंहविष्यैराज्यसंयुतैः ॥ तद्दशांशंतर्पणादिभोजयेन्मधुरैर्द्विजान् ॥ २३ ॥ एवंसिद्धमनुर्मन्त्रीत्वष्टोत्तरसहस्रकम् ॥ स्पृष्ट्वाजपेद्विषग्रस्तंतत्क्षणान्निर्विषोभवेत् ॥ २४ ॥ बीजाभ्यांप्रथमान्त्याभ्यांपार्श्वयोर्विषमाहरेत् ॥ मध्येनमध्यगंसर्वंमनुनानेनसंहरेत् ॥ २५ ॥ एवंमन्त्राभिसञ्जप्तकलशोदकसेचनात् ॥ तस्यकेनापिसन्दष्टस्तत्क्षणान्निर्विषोभवेत् ॥ २६ ॥ विलोक्यविषिणंमन्त्रंप्रजपेत्सुसमाहितः ॥ विषद्वयान्मुच्यतेसौनचिरान्नात्रसंशयः ॥ २७ ॥ दृष्ट्वाचडुण्डुभग्रस्तंस्वशिरःकण्ठहृत्सुच ॥ मनुवर्णत्रयंन्यस्यदेवतारूपकंगुरुम् ॥२८॥ स्मरेत्स्वदक्षिणानामामध्यमातर्जनीषुच ॥ मन्त्राक्षरत्रयंन्यस्यतदंगुलिभिरुत्तमम् ॥ २६ ॥ त्रिशूलमुद्रामासाद्यग्रस्तस्याभिमुखंनयेत् ॥ प्रदर्श्यमन्त्रंप्रजपेत्पञ्चाशद्वारमत्रतु ॥ ३० ॥ स्थावरंजङ्गमंचैवकृत्रिमंचतथाविषम् ॥ रोगग्रहाद्यपस्मारानपमृत्युंचनाशयेत् ॥ ३१ ॥ पञ्चाशन्मनुनाजप्तमन्नमौषधमेवच ॥ भक्षितंचेत्तुरोगादिनाशनंपरमंमतम् ॥ ३२ ॥ ॐनमोनीलकण्ठायमनुरष्टाक्षरःपरः ॥ मुनिर्ब्रह्माचगायत्रीछन्दोदेवःप्रकीर्त्तितः ॥ ३३ ॥ नीलकण्ठोध्यानपूजाजपाद्यंपूर्ववन्मतम् ॥ प्रयोगाश्चविशेषेणमहाविषहरःस्मृतः ॥ ३४ ॥ सएववह्निजायान्तोदशवर्णःप्रकीर्त्तितः ॥ अरुणोस्यमुनिश्छन्दोगायत्रंदेवतामहान् ॥ ३५ ॥ नीलकण्ठोस्यबीजंतुतारःशक्तिर्द्विठप्रिया ॥ हुंनमोनीलकण्ठायशिरःस्वाहानमस्त्वति ॥ ३६ ॥ शिखांनमोनीलकण्ठायनमःकवचंमतम् ॥ स्वाहानमोनेत्रमितिॐनमोस्त्रंसमीरितम् ॥ ३७ ॥ दक्षिणंपादमारभ्यवामपादावधिक्रमात् ॥ वर्गाष्टकंन्यसे

न्मन्त्रीपादोरुगुल्फसन्धिषु ॥ ३८ ॥ हृत्कण्ठमुखशीर्षेषुन्यसेद्वर्गाष्टकंपुनः ॥ पूर्वाद्यैराननैर्युक्तःपीतश्वेतारुणासितैः ॥ ३९ ॥ अभयंपरशुंचापंवासुकिंचद धद्भुजैः ॥ ध्येयोदेवोस्यपार्श्वस्थागौरीचाप्यतिसुन्दरी ॥ ४० ॥ संहारनिर्वि षस्तम्भावेशात्कुर्य्यात्क्रमान्मुखैः॥दशलक्षंपुरश्चर्य्यासर्वत्राक्षरवन्मता॥ ४१॥ मन्त्राक्षराणिहृत्पृष्ठेकेकण्ठेकुक्षियुग्मके ॥ हृदिबाह्वोर्नेत्रयोश्चमस्तकेपुक्रमा द्यजेत् ॥ ४२ ॥ विषाक्रान्तस्यपूर्वोक्तमीशंध्यायञ्छताष्टकम् ॥ जपेन्मन्त्रंद्द शासर्वविषाणांवारणम्भवेत् ॥ ४३ ॥ अथान्योवक्ष्यतेमन्त्रोनानाकार्य्यकरः परः ॥ तारोनमोभगवतेसर्वज्ञेतिपदंवदेत् ॥ ४४ ॥ कण्ठेनिंनीलकण्ठायअ मलेतिपदंवदेत् ॥ ङेन्तंद्विःपक्षिॐस्वाहाचोनत्रिंशाक्षरोमनुः ॥ ४५ ॥ विम लोस्यमुनिःप्रोक्तःकृतिश्छन्दउदाहृतम् ॥ अमलाख्योनीलकण्ठोरुद्रोदेवःप्र कीर्त्तितः ॥ ४६ ॥ स्वाहाशक्तिस्तुवौंबीजंमन्त्राणैरङ्गपञ्चकम् ॥ सप्तभिःपञ्च भिःषड्भिश्चतुर्भिश्चापिसप्तभिः ॥ ४७ ॥ ध्यानार्चनादिकंसर्वंपूर्ववत्समुदाहृ तम् ॥ लक्षमेकंपुरश्चर्य्याहुनेदाज्यंदशांशतः ॥ ४८ ॥ एवंसिद्धमनुर्मन्त्री दशवारंजपेद्यदि ॥ दुष्टंविषंद्रव्यसंस्थंहरेदत्रनसंशयः ॥ ४९ ॥ जप्त्वापञ्चद शोन्मानंहरेद्वृश्चिकजंविषम् ॥ विषमूषीविषंहन्तिजप्त्वासप्तदशोन्मितम् ॥ ५० ॥ अष्टादशजपादन्यद्विसर्पनात्रसंशयः ॥ एकविंशतिजापेनत्वभिचार क्षयोभवेत् ॥ ५१ ॥ परन्तस्यजपाद्धन्तिषड्विंशात्सूतिकागदम् ॥ दन्तमूल गदंत्रिंशच्चतुस्त्रिंशच्चशीतलाम् ॥ ५२ ॥ षट्त्रिंशच्चशिरोरोगंगर्भदुःखंखवेद तः ॥ नेत्ररोगंवेदवेदैःखबाणैःसकलंविषम् ॥ ५३ ॥ शतसंख्यप्रजसेनसर्वरोग विनाशनम् ॥ अग्निनानिहतानान्तुजपेदष्टोत्तरंशतम् ॥ ५४ ॥ अथचिन्ता मणेःकूटंप्रवक्ष्याम्यतिसिद्धिदम् ॥ यद्यत्प्रोक्तंवैदिकानान्तत्तत्सिद्धिविधाय कम् ॥ ५५ ॥ प्रथमःप्रणवःसप्तवेदनेत्रौचतुर्दश ॥ षष्टिबिन्दुयुतंकूटंप्रोक्तंदक्षि णमार्गिणाम् ॥ ५६ ॥ चत्वारश्चापिचत्वारएकवेदाद्विवर्णकाः ॥ द्वितीयः स्वरबिन्दुभ्यांयुक्ताःकूटमुदाहृतम् ॥ ५७ ॥ शैवादीनांवामिनांतुतुर्य्यवर्णसमुच्च रन् ॥ एकोनत्रिंशकश्चैतत्सप्तवेदाक्षिसम्मितम् ॥ ५८ ॥ ततःस्वराःसमुच्चार्य्याः शाक्तंतुतिथिसम्मितम् ॥ एतत्कूटंसमुद्दिष्टंमुन्याद्यमथकथ्यते ॥ ५९ ॥ कश्य

पोस्यमुनिश्छन्दोनुष्टुब्देवउमापतिः ॥ बीजंक्षकारोरःशक्तिर्मकारःकीलकम्म
तम् ॥ ६० ॥ रेफादिव्यञ्जनैःषड्भिःकुर्य्यादङ्गानिषट्क्रमात् ॥ विद्रुमारक्त
वामार्धदेहंनीलाम्बराङ्गकम् ॥ ६१ ॥ अभिटाङ्गाशशाङ्कार्धविलसत्तुङ्गमौलि
कम् ॥ हावभावविलासार्धनारीरूपंमहेश्वरम् ॥ ६२ ॥ त्रिशूलपाणिंपद्मा
निनृकपालंकरेपुच ॥ भीषणपरदेहार्धमालालेपविराजितम् ॥ ६३ ॥ एवं
ध्यात्वायजेत्पीठेशैवेसर्वोपचारकैः ॥ अङ्गानिपूजयेदादौवामेष्टदलकेशरे ॥
६४ ॥ अर्चयेदष्टपत्रेषुकार्त्तवीर्य्यवृषादिकान् ॥ ब्राह्मयाद्यामातरःपूज्याद्विती
येष्टदलेपुनः ॥ ६५ ॥ लोकेशांश्चतदस्त्राणिप्राग्वद्वीथीद्वयेयजेत् ॥ पूजा
द्रव्यादिकंग्राह्यंस्वस्वाम्नायविभेदतः ॥ ६६ ॥ शैवादिभिर्नामिभिश्चध्यायेद
ष्टभुजंशिवम् ॥ परशुंपन्नगंशूलंकपालंचशरासनम् ॥ ६७ ॥ शरान्वह्निंचखड्गं
चदधतंस्त्रीविलासिनम् ॥ गङ्गातरङ्गविलसच्चन्द्रखण्डाभिशेखरम् ॥ ६८ ॥
त्रिनेत्रंत्रिदशैःपूज्यांचिन्तयेत्पार्श्वगांशिवाम् ॥ अरुणामरुणाकल्पामरुणां
शुकधारिणीम् ॥ ६९ ॥ अरुणाम्बुजमालाढ्यांत्रिनेत्रांसद्विभूषणाम् ॥ शू
लैःषोडशभिर्व्यग्रभुजषोडशमण्डिताम् ॥ ७० ॥ लक्षमेकंजपेन्मन्त्रंत्रिमध्व
क्तैःसतण्डुलैः ॥ तिलैर्दशांशंजुहुयात्तर्प्पणादिततश्चरेत् ॥ ७१ ॥ एवंसं
सिद्धमन्त्रस्यप्रयोगोवक्ष्यतेधुना ॥ रेफस्थानेहंसइतिपदंदत्त्वाजपेन्मनुम् ॥
७२ ॥ शीघ्रन्तेनभवेत्सिद्धिर्ज्ञानंचविषनाशनम् ॥ प्रसाद्ययोजपेन्मन्त्रमयु
तम्भाग्यदायकम् ॥ ७३ ॥ ततोनाशोभवेत्सद्योभूतादीनांरुजामपि ॥ द्वि
धाग्रहार्तौजपतिबीजमेतन्नसंशयः ॥ ७४ ॥ त्रिकोणंचिन्तयेन्मूर्द्ध्निग्रस्तस्या
ग्न्यर्कसन्निभम् ॥ तन्मध्येचिन्तयेद्बीजंग्रहानावेशयेत्तदा ॥ ७५ ॥ एतन्म
न्त्राभिजप्तंचबन्धुजीवप्रसूनकम् ॥ ग्रस्तस्यमूर्द्ध्निक्षिप्तंचक्षणादावेशकारकम् ॥
७६ ॥ पौष्टिकेशान्तिकेमन्त्रंशुक्लवर्णंविचिन्त्यच ॥ सकारमादौसंयोज्य
जपेत्सिद्धिःप्रजायते ॥ ७७ ॥ आपुष्टौचवशीकारेरक्तंरेफादिकन्तथा ॥ हका
राद्यंचहेमाभंस्तम्भनेचैवचिन्तयेत् ॥ ७८ ॥ धूम्रवर्णंयकाराद्यंविद्वेषोच्चाट
योरपि ॥ शुद्धस्फटिकसङ्काशोध्येयोग्रस्तुमुमुक्षुभिः ॥ ७९ ॥ आकारादिः
प्रजप्तव्यःसमन्त्रोदेशिकैःसदा ॥ वायुमण्डलमध्यस्थंमन्त्रंकृष्णंविचिन्तये

त् ॥ ८० ॥ नेत्रयोर्विषमंत्वान्ध्यंबाधिर्य्यंकर्णयोरपि ॥ कुक्षौशूलंमुखेछर्दिं कुर्याद्वायुंचमर्म्मसु ॥ ८१ ॥ चिन्तयेत्कण्ठमालेतुचतुरस्त्रस्यमध्यगम् ॥ चन्द्रमण्डलमध्यस्थंस्वरैःषोडशभिर्युतम् ॥ ८२ ॥ नेत्रोत्पातंनेत्ररोगंहरत्या शुनसंशयः ॥ रक्तस्रावंकुशाङ्गीनांयोनौध्यानंहरेत्क्षणात् ॥ ८३ ॥ कुक्षौ ध्यानंचशूलेस्याद्विस्फोटविषमज्वरे ॥ तथारक्तामयेचैवमामेदाहेशिरोगदे ॥ ८४ ॥ स्मरेद्यन्त्रंबाहुगतंतत्रतद्दोषशान्तये ॥ अन्त्यारक्तंत्रिकोणान्तःस्थि तंयन्मूर्द्धिचिन्तयेत् ॥ ८५ ॥ वशयेत्तत्क्षणाद्योषांस्रावयेच्छुक्रमेवच ॥ निज लिङ्गशिरस्स्थंचबीजंसंचिन्तयेत्तदा ॥ ८६ ॥ प्रवेशयेद्योनिमध्येतत्संसर्गाच सावशा ॥ कुलालमृदमानीयतत्रबीजंसमालिखेत् ॥ ८७ ॥ तन्मकारस्यरेफे तुसाध्याख्यांकर्म्मसंयुताम् ॥ विलिख्यतत्त्रिकोणेनवेष्टयेत्तद्बहिस्तथा ॥ ८८ ॥ षट्कोणैकंसमावेष्ट्यषट्कोणेतुसमाचरेत् ॥ रेफंसबिन्दुकंतच्चविलोमैर्वेष्टयेत्स्व रैः ॥ ८९ ॥ प्राणप्रतिष्ठांकृत्वास्यचुल्ल्यधोनिखनेत्ततः ॥ सवश्योजायते क्षिप्रंतत्सिद्धान्नस्यभक्षणात् ॥ ९० ॥ पतिःप्रियायाः कुरुतेतदाज्ञांदासवत्सदा ॥ मधुरत्रययुक्तेनशालिपिष्टेनपुत्तलीम् ॥ ९१ ॥ प्रपदाभ्यांचजङ्घाभ्यांजानुभ्या मूरुयुग्मतः ॥ नाभेरधस्ताद्धृतयाकण्ठादाशीर्षकंततः ॥ ९२ ॥ एवंद्वादश धाछित्वातीक्ष्णशस्त्रेणसंहुनेत् ॥ मूलमन्त्रेणसक्षिप्रंवश्यःस्याज्जीवितान्तक म् ॥ ९३ ॥ चतुरस्त्रेनागवल्लीदलेकृत्वास्यमध्यतः ॥ वकारमध्यसाध्याख्यांलि खित्वामनुमध्यतः ॥ ९४ ॥ कामराधःस्थितोरेफस्तदधश्चतुरस्त्रकम् ॥ लिखे त्तस्यचतुष्कोणेठकारंबिन्दुभूषितम् ॥ ९५ ॥ विलिख्यस्थापितप्राणंमूलमन्त्रा भिमन्त्रितम् ॥ अष्टोत्तरसहस्रेणशिरोरोगीप्रभक्षयेत् ॥ ९६ ॥ शिरोरोगवि निर्मुक्तोयावज्जन्मभवेत्सुखी ॥ सरेफेणककारेणकण्ठेसाध्यस्यबन्धयेत् ॥ ९७ ॥ वक्षस्थलंककारेणवामंचापिमकारतः ॥ दक्षांसंरेफतोवामंतथैवचवकारतः ॥ ९८ ॥ ठोंकारेणमुखंनाभिंडकारेणप्रबन्धयेत् ॥ वक्षोबिन्द्वर्धचन्द्राभ्यांबद्धामू र्खःस्मरेद्धिया ॥ ९९ ॥ मरणान्तंसवश्यस्स्यादचिरान्नात्रसंशयः ॥ बन्धुजी वस्यपुष्पेणत्रिकोणंरचयेल्लिखेत् ॥ ४०० ॥ तत्पुष्पेणचतद्बीजंचन्दनागुरु कुंकुमैः ॥ अस्मिन्संस्थाप्यतत्रैवपूजयित्वाहुनेच्चतैः ॥ १ ॥ अष्टोत्तरशतंतस्य

सम्पातंपातयेत्ततः ॥ त्रिलोहमुष्टिकायांतुपुनस्तामभिमन्त्रयेत् ॥ २ ॥ अ
ष्टोत्तरसहस्रेणतांकरेधारयेन्नृपः ॥ जयेत्सयुधिभूपालान्दुर्जयान्प्रधनेपिच ॥
३ ॥ विषवेतालभूतादिदुरितैर्बाध्यतेनच ॥ पञ्चविंशत्सुवर्णस्यरजतस्यतु
षोडश ॥ ४ ॥ भागादशैवताम्रस्यत्रिलोहेत्रप्रकीर्त्तिताः ॥ अथान्यत्सम्प्रव
क्ष्यामिमुनिभिर्यदुपासितम् ॥ ५ ॥ अन्त्यसप्तमवेदाक्षिवर्णषष्ठंस्वरान्वितम् ॥
बिन्दुयुक्तंभवेत्कूटंमुन्याद्याःपूर्ववन्मताः ॥ ६ ॥ षड्दीर्घभाजाबीजेनषडङ्गवि
धिरीरितः ॥ अंगुल्यादिकरान्तंचकरन्यासंततश्चरेत् ॥ ७ ॥ मूलाद्यन्तंतुभू
कूटंकनिष्ठायांपुनर्न्यसेत् ॥ ततश्चत्वारिबीजानितथैवानामिकादिषु ॥ ८ ॥
क्षकारमूलबीजंतुभसहाभिसमन्वितम् ॥ चत्वार्य्येतानिबीजानिक्रमात्तेषांतुदे
वताः ॥९॥ जयाख्याविजयाख्याचअजिताचपराजिता ॥ पादान्मूर्द्धावधिन्य
स्येन्मुष्टिकामूलमन्त्रकम् ॥ १० ॥ मूर्द्धादिपादपर्य्यन्तंतलाभ्यांव्यापकंन्यसे
त् ॥ षडङ्गानिपुनर्न्यस्यदेवंदेवींचपूजयेत् ॥ ११ ॥ शिरोवदनहृन्नाभिगुदेष्वेवं
क्रमान्न्यसेत्॥ध्यायेत्सूर्य्यप्रतीकाशंप्रतिवक्त्रंत्रिलोचनम्॥१२॥ चन्द्रार्धालंकृतं
हस्तैश्चतुर्भिर्दधतंक्रमात् ॥ सृणिंपाशं कपालंचखट्वाङ्गंरत्नभूषितम् ॥ १३ ॥
रक्ताङ्गंरक्ताभरणांशुकंचिपिटनासिकम्॥शैवपीठेयजेद्देवंवक्ष्यमाणेनचात्मना॥
१४ ॥ नपुंसकस्वरैर्विद्वाननुलोमविलोमगैः ॥ धर्म्मादिकैरधर्म्माद्यैःपादगा
त्राणिकल्पयेत् ॥ १५ ॥ इकारेणयजेद्देवीतत्त्वरूपगुणानपि ॥ चतुर्थपञ्चमा
भ्यान्तुमायाविद्यामयोभवेत् ॥ १६ ॥ अतऊर्ध्वंचपीठस्यजकारेणततोम्बुज
म् ॥ सन्ध्यक्षरैश्चतुर्दिक्षुस्थितावामादिकायजेत् ॥ १७ ॥ वामाज्येष्ठाचरौ
द्रीच्छाज्वालामालाविराजिता ॥ इत्थंसङ्कल्पितेपीठेतुम्बुरुंतत्रपूजयेत् ॥१८॥
चतुर्द्वारसमायुक्तचतुरस्रत्रयावृते ॥ अष्टपत्राम्बुजेङ्गानिकेशरेषुसमर्चयेत् ॥
१९ ॥ दिक्पत्रेषुस्वबीजानिरक्तावामादिकायजेत् ॥ अरुणांशुकपुष्पाढ्या
स्ताम्बूलाकुलिताननाः ॥ २० ॥ वल्लकीवादनरतामदविभ्रममन्थराः ॥ अष्ट
पत्रेपुचाभ्यर्च्यादेवीर्दुर्गादिकाःक्रमात् ॥ २१ ॥ दुर्गगाशुभगाचैवकरालीमो
हिनीतथा॥ बद्धाञ्जलिपुटाःकिञ्चिदानम्रवदनाम्बुजाः ॥ २२ ॥ देवीसदृशभू
षाढ्यास्तद्बीजानिसबिन्दवः॥शषसहास्तुतद्बाह्येयजेद्वीथीद्वयेमनुम्॥२३॥

लोकेश्वरांस्तदस्त्राणिचेत्थंपूजाक्रमःस्मृतः ॥ लक्षमेकंजपेन्मन्त्रं दशांशं
जुहुनेद्घृतैः ॥ २४ ॥ तर्पणादिततःकृत्वाप्रयोगानाचरेत्ततः ॥ युगवह्नि
पुटान्तस्थंबीजंस्मृत्वासहस्रकम् ॥ २५ ॥ अष्टोत्तरंजपेद्वाराज्ज्वरोनश्येन्नसं
शयः ॥ कुपितस्यहृदम्भोजेस्मृत्वाबीजमिदंस्मरेत् ॥ २६ ॥ अष्टोत्तरसहस्रंतु
तत्कोपोनश्यतिध्रुवम् ॥ एतम्मन्त्रंप्रजप्त्वातुप्रातःकालेपिबेज्जलम् ॥ २७ ॥
हृद्रोगास्तस्यनश्यन्तिसर्वेविष्टम्भकादयः ॥मण्डलंनवनाभाख्यंकृत्वासंस्थापये
द्घटम् ॥ २८ ॥ पुत्रिणीकन्यकामाताभवेदत्रतुकाकथा ॥ राजाभिषेकेवि
जयीविप्रोवेदविदांवरः ॥ २९ ॥ भूतप्रेतादिकाःकृत्यारोगानश्यन्तितत्क्ष
णात् ॥ श्रीतुम्बुरुशिवस्यायंमन्त्रःसर्वार्थसिद्धिदः ॥ ३० ॥ अथातोदक्षिणा
मूर्त्तेर्नवार्णोमन्त्रउच्यते ॥ [1]प्रणवाद्यरमाभ्यांतुसम्पुटोनववर्णकः ॥ ३१ ॥
भवेत्पञ्चाक्षरोमन्त्रोविराट्छन्दोमुनिःशुकः ॥ दक्षिणामूर्त्तिरुद्रोस्यदेवतासमु
दीरितः ॥ ३२ ॥ श्रीं[2]पूर्वपञ्चवर्णैश्चबिन्दुयुक्तैर्ध्रुवादिकैः ॥ दीर्घस्वरैःषडङ्गा
नितत्तोर्णन्यासमाचरेत् ॥ ३३ ॥ दृक्कर्णनासिकाद्वन्द्वेमुखेलिङ्गेगुदेपुनः ॥
पुनर्वर्णान्न्यसेच्छीर्षेललाटेदृशिघोणके ॥ ३४ ॥ मुखेहृद्युदरेजानौपादेचायं
द्वितीयकः ॥ सृष्टिन्यासंततःकुर्यात्तृतीयंभुजयोःक्रमात् ॥ ३५ ॥ पादमूले
चतन्मध्येपादान्तेदक्षवामयोः ॥ सर्वांगुलीषुविन्यस्यमूलेनव्यापकंचरेत् ॥
३६ ॥ स्थितिन्यासंततःकुर्य्याच्चतुर्धासनिगद्यते ॥दक्षपार्श्वेवामपार्श्वेपृष्ठेचज
ठरेहृदि ॥ ३७ ॥कण्ठेदक्षेबाहुमूलेन्यसेत्ककुदिचान्तरे ॥ बाहुमूलेप्रथमकोन्यासं
वक्ष्येद्वितीयकम् ॥३८॥ शीर्षेललाटेनेत्रेचवामेदक्षेचकर्णयोः ॥ नासामुखेतृ
तीयंतुकण्ठहृन्नाभिषुन्यसेत् ॥ ३९ ॥ दक्षिणेचतथावामेबाहुमूलेचपार्श्वयोः ॥
कटेश्चभागद्वितयेचतुर्थंकथयाम्यथ ॥ ४० ॥ बाहुमूलेचतन्मध्येवामाङ्गुल्य
ग्रेचदक्षिणे ॥ विन्यसेत्प्रथमंवर्णंद्वितीयार्णंततोन्यसेत् ॥ ४१ ॥ आबाहू
दक्पादमूलतत्सन्ध्यंगुलिकाग्रके ॥ तृतीयंविन्यसेद्वर्णंचांगुलीनांचसन्धि

---

[1] ॐश्रींनमः शिवाय ॐश्रीं इति नवाक्षरमन्त्रः [2] ॐश्रींआंहृदयायनमः, ॐश्रींईंशिरसे स्वाहा, ॐश्रींऊंशिखायैवषट्, ॐश्रींऐंकवचायहुम्, ॐश्रींऔंनेत्रत्रयायवौषट्, ॐश्रींअःअस्त्राय फट् इसी रीतिसे अंगुष्ठादि न्यासको भी करलेना ॥

षु ॥ ४२ ॥ चतुर्थाद्यास्तथावर्णावामदक्षिणहस्तयोः ॥ कनिष्ठाद्यंगुलीनां चन्यसेत्सन्धित्रिकेत्रिके ॥ ४३ ॥ ततश्चव्यापकंकृत्वासंहारन्यासमाचरेत् ॥ वामपादतलेपृष्ठेवामदक्षिणपार्श्वयोः ॥ तेषांचसमुदायेपिजङ्घायामूरुकेतथा॥ ४४ ॥ तथादक्षिणपादेचक्रमादर्णादिमान्न्यसेत् ॥ एवंचदक्षिणेपादेद्वितीयोन्यासउच्यते ॥ ४५ ॥ वामेकरतलेपृष्ठेतथाजानुनिदक्षिणे ॥ ततसमूहेतथा नाभौहृदयेथपुनर्न्यसेत् ॥ ४६ ॥ वामदक्षिणकट्यांचतृतीयोयंप्रकीर्त्तितः ॥ एवंदक्षिणहस्तेचचतुर्थःपरिकीर्त्तितः ॥ ४७ ॥ वामदक्षिणकट्यांतुस्तनान्तं वर्णयुग्मकम् ॥ स्तनाभ्यांहृदयाभ्यांचन्यसेद्वर्णतृतीयकम् ॥४८॥ हृदयान्मस्तकान्तंचचतुर्थवर्णमादिशेत् ॥ मस्तकस्यचतुर्दिक्षुचत्वारोर्णाःसमीरिताः ॥ ४९ ॥ नवमंब्रह्मरन्ध्रेचन्यासोयंपञ्चमःस्मृतः ॥ ततश्चव्यापकंकृत्वासृष्टिन्यासंसमाचरेत् ॥ ५० ॥ व्यापकंचपुनःकृत्वास्थितिन्यासंसमाचरेत् ॥ पुनश्च व्यापकंकृत्वापञ्चशान्त्यादिकान्न्यसेत् ॥ ५१ ॥ मूर्द्धास्यहृद्गुह्यपादेपुनस्ता एवविन्यसेत् ॥ ऊर्ध्वप्रागादिकास्येषुपुनर्व्यापकमाचरेत् ॥ ५२ ॥ पुनर्शुन्यादिकंन्यस्यषडङ्गानिततश्चरेत् ॥ ततोध्यायेद्योनिलिङ्गंदक्षिणामूर्त्तिविग्रहम् ॥ ५३ ॥ शतयोजनमुच्छ्रायंपञ्चसप्ततिविस्तृतम् ॥ वटवृक्षमनुस्मृत्यतदधस्ताद्विचिन्तयेत् ॥५४॥ मण्डपंरुचिरंतद्वत्सहस्रस्तम्भसंयुतम् ॥ चतुःस्तम्भयुतंतस्यमध्येसिंहासनंशुभम् ॥ ५५ ॥ तत्रासीनंमहादेवंदक्षिणामूर्त्तिविग्रहम् ॥ शुद्धस्फटिकसङ्काशंशशिखण्डविभूषितम् ॥ ५६ ॥ व्याघ्रचर्म्मधरंशान्तंजटामुकुटमण्डितम् ॥ मुखपङ्करुहोल्लासंसोमसूर्य्याग्निलोचनम् ॥ ५७ ॥ मुद्रापरश्वधमृगान्बिभ्राणंबाहुभिस्त्रिभिः ॥ अङ्काष्टकेदधानंतुरामबीजंसुशोभनम् ॥५८॥ व्याकुर्वन्तंसमस्तानिब्रह्मतन्त्राणिसादरम् ॥ धृतपङ्कजलक्षंतं सर्वमोहप्रणाशनम् ॥ ५९ ॥ शुकादिमुनिमुख्यैस्तुपुस्तकोज्ज्वलपाणिभिः ॥ उमयेन्दिरयावाचावाग्देव्याचापिवामतः ॥ ६० ॥ ब्राह्मणीपद्मनाभेनचानन्देनचसंवृतम् ॥ वेदैश्चाङ्गैश्चवेदान्तैर्विदिशासुचवेष्टितम् ॥६१॥ मीमांसाधर्म्मशास्त्राभ्यांदिशिप्राच्यामुपासितम् ॥ इतिहासपुराणाभ्यांयमाशायांतुपश्चिमे ॥ ६२ ॥ साङ्ख्यपातञ्जलाभ्यांतुसौम्याशायामुपासितम् ॥

त्रयस्त्रिंशद्भिरिन्द्राद्यैर्देवैःसंवेष्टितंप्रभुम् ॥ ६३ ॥ यावन्तोवैश्वदेवस्यनी वीसम्बन्धिनःसुराः ॥ त्रीणिचैवसहस्राणिषष्ट्यग्राणिशतानिच ॥ ६४ ॥ तावद्भिर्विविधैःसाक्षाद्गन्धवाद्यैश्चसंयुतम् ॥ परभूतंमहादेवं दक्षिणामूर्त्तिमा दरात् ॥ ६५ ॥ भावयेद्योपिसद्भावं सर्वज्ञश्चभवेद्ध्रुवम् ॥ अस्यपूजाप्रयोगा दि द्वात्रिंशार्णसमंमतम् ॥ ६६ ॥ पञ्चलक्षंपुरश्चर्य्या होमोद्वात्रिंशदर्णव त् ॥ अष्टोत्तरशतंनित्यं जपेत्पुष्पाञ्जलिस्तथा ॥ ६७ ॥ अथान्यंसम्प्रवक्ष्या मि मन्त्रंद्वात्रिंशदक्षरम् ॥ सर्वपूर्ववदेवंस्याद्विशेषोज्ञानतस्त्वयम् ॥ ६८ ॥ अज्ञानेन्धनदीप्ताय ज्ञानाग्निज्वालरूपिणे ॥ आनन्दाघहरप्रीत सम्यज्ज्ञानं प्रयच्छमे ॥ ६९ ॥ खड्गरावणमन्त्रोथ कथ्यतेतन्त्रगोपितम् ॥ तारोनमोभ गवते ङेन्तःपशुपतिर्ध्रुवः ॥ ७० ॥ हृद्भूताधिपतिर्ङेन्त ओंहृद्रुद्रायचोच्चरे त् ॥ खड्गरावणलंलंच विहरद्वितयंसर ॥ ७१ ॥ सरनृत्यद्वयं पश्चाद्व्यसनं पदमुच्चरेत् ॥ भस्मार्चितशरीराय ततोघण्टापदंवदेत् ॥ ७२ ॥ कपालमा लाधराय व्याघ्रचर्मपदंततः ॥ परिधानायाथङेन्तः शशाङ्ककृतशेखरः ॥७३॥ कृष्णसर्पपदंप्रोच्य वदेद्यज्ञोपवीतिने ॥ चलद्वयंबलद्वेधा अतिवर्तिकपालि ने ॥ ७४ ॥ हनद्वयंवदेद्भूतान्नाशयद्वितयंततः ॥ मण्डलेतिपदान्तेतु मध्ये फड्द्वितयन्ततः ॥ ७५ ॥ रुद्रांकुशेनशमयप्रवेशययुगंवदेत् ॥ द्विरावेशयरक्षां सि धाराधिपतिसंवदेत् ॥ ७६ ॥ रुद्रोज्ञापयतिस्वाहा मन्त्रोयंखड्गरावणः ॥ रावणस्यमितंछन्दो देवताखड्गरावणः ॥ ७७ ॥ षड्दीर्घबिन्दुयुक्तेन खकारे णषडङ्गकम् ॥ सद्योजातादिकान्देहे चेशानादीन्मुखेषुच ॥ ७८ ॥ रक्ताम्बरं रक्तवर्णं चन्द्रमौलिंत्रिलोचनम् ॥ पञ्चाननंकरैर्घण्टा कपालांकुशमस्तकम् ॥ ७९ ॥ कृपाणंखेटखट्वाङ्गं त्रिशूलंडमरुंकरैः ॥ दधानमभयंचापि ध्यायेत्पञ्चा

---

१ ॐ नमोभगवतेपशुपतये ॐ नमोभूताधिपतये ॐ नमोरुद्राय खड्गरावणलंलंविहर विहर सरसर नृत्यंनृत्यं व्यसनं भस्मार्चितशरीराय घण्टाकपालमालाधराय व्याघ्रचर्मपरिधानाय शशाङ्ककृतशेखराय कृष्णसर्पयज्ञोपवीतिने चलचल बल बल अतिवर्तिकपालिने हनहन भूतान्नाशय नाशय मण्डलाय फट् फट् रुद्रांकुशेन शमय शमय प्रवेशय प्रवेशय आवेशय आवेशय रक्षांसि धाराधिपतिः रुद्रोज्ञापयति स्वाहा ॥

ननंशिवम् ॥ ८० ॥ भूताधिपतयेस्वाहा पूजामन्त्रोयमीरितः ॥ पञ्चाक्षरोदिते पीठे पूजयेत्खड्गरावणम् ॥ ८१ ॥ मूलेनमूर्त्तिसङ्कल्प्यतच्छान्तंमन्त्रबिन्दुमत् ॥ अङ्गानिदलमूलेपुद्वितीयेष्टदलेयजेत् ॥ ८२ ॥ श्यामांद्वितीयांबलिनींतृतीयां कृष्णपिङ्गलाम् ॥ फाल्गुणींक्षिरिटिरिल्लींचपञ्चमींमन्त्रमालिकाम् ॥ ८३ ॥ सप्तमां खड्गिनींपश्चाच्चन्द्राङ्कितजटामिमाः ॥ पूर्वपत्रादिसव्येनखड्गरावणवल्लभाः ॥ ८४ ॥ ऐन्द्रींकौमारिकांब्राह्मींवाराहींवैष्णवींतथा ॥ वैनायकींचामुण्डांमाहेशींदिक्षुपूजयेत् ॥ ८५ ॥ द्वारपालान्यजेद्दिक्षुद्वौद्वौप्रागादिदेशतः ॥ रौद्रपिङ्गलनामानौश्मशानकलिभीषणौ ॥ ८६ ॥ दृढकर्णभृङ्गरीटिमुद्गामर्दकंयजेत् ॥ महाकालंचकेशेपुकुम्भकर्णमशेषकम् ॥ ८७ ॥ भल्लाटंजानुहारंचभूपुरद्वयवीथिषु ॥ इन्द्रादिकांस्तदस्त्राणिबाह्येभूतबलिंहरेत् ॥ ८८ ॥ अयुतद्वितयंमन्त्रंजपित्वातद्दशांशतः ॥ पायसेनघृताक्तेनजुहुयात्तस्यसिद्धये ॥ ८९ ॥ इत्थंसिद्धमनुर्मन्त्रीकृत्याग्रहमपोहयेत् ॥ आदेशंतस्यकुर्वन्तिभूताभीतामहात्मनः ॥ ९० ॥ मन्त्रेणानेनसदृशोनान्योभूतप्रमर्दकः ॥ अथप्रवक्ष्येरुद्रस्यामृतसञ्जीविनीमनुम् ॥ ९१ ॥ प्रणवंव्याहृतीस्तिस्रःप्रासादंमृत्युजिन्मनुम् ॥ त्रियम्बकंमृत्युजितंप्रासादंव्याहृतित्रयम् ॥ ९२ ॥ प्रणवंचोच्चरेदेषमृतसञ्जीविनीमनुः ॥ वसिष्ठोस्यमुनिश्छन्दोनुष्टुब्रुद्रोस्यदेवता ॥ ९३ ॥ मृत्युञ्जयाख्यःप्रणवोबीजंशक्तिस्तुहौंमतः ॥ तारव्याहृतिमन्त्रांघ्रिचतुष्कोणांगुलीमुखम् ॥ ९४ ॥ न्यासंकृत्वाषडङ्गानितत्रकृत्वासमाचरेत् ॥ त्रियम्बकमनोर्न्यासान्पूर्वोक्तानपि संचरेत् ॥ ९५ ॥ अवैदिकानांवक्ष्येहंन्यासंमन्त्रविनिर्णयम् ॥ तारोनमोभगवतेत्र्यम्बकायततोवदेत् ॥ ९६ ॥ शूलपाणिश्चरुद्रश्चङेन्तश्चामृतमूर्त्तये ॥ मांजीवयपदस्यान्तेस्याच्चन्द्रजटिलापदम् ॥ ९७ ॥ त्रिपुरान्तकायहंह्रींङेन्तंरुद्रपदंवदेत् ॥ ऋग्यजुस्सामरूपायरुद्रायाग्नित्रयायच ॥ ९८ ॥ ज्वलद्द्वन्द्वंप्रज्व

---

१ ॐ भूर्भुवःस्वःह्रौं ॐजूंसः त्र्यम्बकंयजामहे सुगन्धिंपुष्टिवर्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॐजूंसः ह्रौं भूर्भुवःस्वःओम् २ ॐ नमोभगवतेत्र्यम्बकाय शूलपाणये रुद्रायामृतमूर्तये मांजीवयचन्द्रजटिल त्रिपुरान्तकाय हंह्रींरुद्राय ऋग्यजुः सामरूपाय रुद्राग्नित्रितयाय ज्वल ज्वल प्रज्वल प्रज्वल मां रक्षरक्षअघोरास्त्रायहुंफट्स्वाहा ॥

लद्दिर्मारिक्षयुगलंवदेत् ॥ अघोरास्त्रायहुंफट्चस्वाहान्तोऽध्यष्टवर्णकः ॥९९॥ तारोनमोभगवतेततोमन्त्राक्षराणितु ॥ स्वाहान्तमङ्गत्रितयेकवचानिचफट्त्रिपु ॥ ५०० ॥ मन्त्राक्षराणिविन्यस्यतत्संख्येयंक्रमात्स्मृता ॥ नृपार्केषु गजस्थाणुदन्तसङ्ख्याक्रमेणच ॥ १ ॥ व्याहृतित्रयमुच्चार्य्यचास्त्रायफडिदंवदेत् ॥ अयंदिग्बन्धमन्त्रःस्याद्ध्यानमस्यनिरूप्यते ॥ ऊर्ध्वविधोर्मण्डलस्यबद्धपद्मासनंविभुम् ॥ २ ॥ स्रवत्पीयूषबिन्दोश्चकलाधृंचन्द्रसुप्रभम् ॥ योगमुद्राधरंद्वाभ्यांघटंचामृतपूरितम् ॥ ३ ॥ सोमसूर्य्याग्निनेत्रंचबद्धपिङ्गजटाधरम् ॥ व्याघ्रचर्माम्बरधरंनानाभरणभूषितम् ॥ ४ ॥ भस्मानुलेपनंभक्तकृपाकरमनुस्मरेत् ॥ त्रियम्बकस्यवेदोक्तपीठेसम्पूजयेच्छिवम् ॥ ५ ॥ चत्वारिंशत्सहस्राणिपौरश्चरणिकोजपः ॥ प्रोक्तद्रव्यैस्तद्दशांशोहोमःशेषंतु पूर्ववत् ॥ ६ ॥ विशेषेणतर्प्पणंतुशीघ्राभीष्टफलप्रदम् ॥ रूपत्रयंयथेत्युक्तंजलेध्यात्वामहेश्वरम् ॥ ७ ॥ सम्पूज्यजुहुयात्तत्रमृत्युरोगापनुत्तये ॥ प्रयोगाश्चापिसिद्धयन्तिपुरामृत्युञ्जयोदिताः ॥ ८ ॥ अथातःसम्प्रवक्ष्यामिरुद्रमन्त्रंदशाक्षरम् ॥ तारोनमोभगवतेरुद्रायेतिप्रकीर्त्तितः ॥ ९ ॥ बौद्धायनोमुनिःपंक्तिश्छन्दोरुद्रोस्यदेवता ॥ पृथक्पदैःसमस्तेनपञ्चाङ्गविधिरीरितः ॥ १० ॥ मस्तकेचापिनासायांललाटेचमुखेगले ॥ हृदयेदक्षिणेहस्तेवामेनाभ्यांचपादयोः ॥ ११ ॥ मन्त्रवर्णान्प्रविन्यस्यध्यानपूजाजपादिकम् ॥ प्रयोगाश्चात्रविज्ञेयाःपञ्चार्णोक्तायथापुरा ॥ १२ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेशिवमन्त्रकथनं नामैकत्रिंशःप्रकाशः ॥ ३१ ॥

---

श्रीशिवउवाच ॥ ममभैरवरूपस्यमन्त्राञ्छृणवन्तुदेवताः ॥ तामसान्राजसांश्चापिसात्त्विकान्सिद्धिदायकान् ॥ १ ॥ सार्धवर्षाष्टकेब्रह्मन्यदायातेसुदेवताः ॥ अहङ्कारोमहानासीत्तत्रविद्याप्रभावतः ॥ २ ॥ तदातस्मिन्कलियुगेशिश्नोदरपरायणाः ॥ नवेदःश्रूयतेक्वापिस्मृतिज्ञानंनविद्यते ॥ ३ ॥ खानंपानंमैथुनंचदेशेदेशेपुरेपुरे ॥ नकश्चिन्मन्यतेविष्णुंगणेशंनरविंशिवम् ॥४॥

मत्वासर्वेजगच्छाक्तंभगपूजांप्रकुर्वते ॥ तदावटुकरूपेणमयापृष्टःपितामहः ॥ ५ ॥ ब्रह्मन्नादिश्यतांधर्मोवयंयेनतरेमहि ॥ तदातुब्रह्मणाप्रोक्तंममोर्ध्वमुखनिर्गतः ॥ ६ ॥ आगमःपञ्चमोवेदोभुक्तिमुक्तिप्रदायकः ॥ तदाद्येकलिसञ्ज्ञेतुमयाप्रोक्तःपितामहः ॥ ७ ॥ ब्रह्मन्निदंत्वयावाच्यंसृष्टिकर्त्तासदाशिवः ॥ तदापितामहेनोक्तंकर्ताहंचापिरक्षकः ॥ ८ ॥ ममोर्ध्वमुखतोजातोमन्यतांवेदआगमः ॥ एतदाचारनिष्ठायेयास्यन्तिपरमांगतिम् ॥ ९ ॥ वटुस्त्वंवेत्सिनोसौख्यंखानपानाङ्गनाभवम् ॥ इतिश्रुत्वाब्रह्मवचोधर्म्मसंस्थापनायतु ॥ १० ॥ युगत्रये तदाजातःक्रोधसंरक्तलोचनः ॥ अवज्ञांवीक्ष्यधातुश्चप्रखरेणनखेनतु ॥ ११ ॥ शिरोनिपातितंधातुःकरांगुल्याधरातले ॥ तन्मुखात्पञ्चमोवेदोममदेहेलयंगतः ॥ १२ ॥ तदाविप्रैर्धिक्कृतोहिसुरासुरमानुषैः ॥ लग्नाचब्रह्महत्यामेपृष्ठतश्चापिभीषणा ॥ १३ ॥ तदातुविष्णुनाप्रोक्तंभीषणत्वाच्चभैरवः ॥ भवत्वंवटुकाख्यश्चसेव्यश्चागममार्गतः ॥ १४ ॥ सात्त्विकस्त्वंकाशिकायांमुक्तिमार्गप्रदोभव ॥ यज्ञादिकर्म्मरक्षाकृद्राजसस्त्वंदिवप्रदः ॥ १५ ॥ मारणोच्चाटकर्तात्वंतामसोवटुकोभव ॥ तस्मात्समर्चयेदेनंपञ्चाम्नायोक्तवर्त्मना ॥ १६ ॥ तन्मन्त्रान्सम्प्रवक्ष्यामिसाधकाभीष्टदायकान् ॥ मायांचवटुकंङेन्तमापदोद्धारणायच ॥ १७ ॥ कुरुद्वयंचवटुकायह्रींप्रकृतिवर्णकः ॥ बृहदारण्यकमुनिश्छन्दोनुष्टुप् चदेवता ॥ १८ ॥ भैरवोह्रींबीजशक्तीआंकीलकमुदाहृतम् ॥ अथन्यासान्प्रवक्ष्यामिभैरवस्यतुयैर्विना ॥ १९ ॥ नजायतेमनोःसिद्धिस्तत्राद्यौवर्णमातृकः ॥ विसर्गमातृकान्यासोद्वितीयःप्रागुदाहृतः ॥ २० ॥ वामहस्तांगुलीमूलमारभ्यामणिबन्धकम् ॥ श्रीबीजाद्यान्न्यसेद्वर्णानादिक्षान्तांस्तुसप्तमः ॥ २१ ॥ श्रीबीजान्ताःक्षकाराद्या अकारान्ताविलोमतः ॥ न्यसेद्वर्णान्मातृकायाः स्थानेयंत्वष्टमःस्मृतः ॥ २२ ॥ कामबीजादिमातॄणां न्यासस्तु नवमःस्मृतः ॥ मुन्यादित्रितयन्यासे गुह्येह्रींबीजमादिशेत् ॥ २३ ॥ ह्रीं शक्तिपादयोर्नाभौ आंकीलंदशमस्त्वयम् ॥ ह्रांत्रामीशानाय नमोन्यसेदंगुष्ठयोस्तथा ॥ २४ ॥ ह्रींवींतत्पुरुषायेति नमस्तर्जनिकाद्वये ॥ ह्रूंवूमघोरायनमो विन्यसेन्मध्ययोरपि ॥ २५ ॥ ह्रैंवैंचवामदेवाय नमश्चानामयोर्न्यसेत् ॥

ह्रौंवौंचसद्योजाताय नमोन्यासःकनिष्ठयोः ॥ २६ ॥ अयमेकादशोन्यासो स्त्येवमेवप्रविन्यसेत् ॥ केमुखेहृदयेगुह्ये पादयोर्द्वादशस्त्वयम् ॥ २७ ॥ एव मेवन्यसेत्पश्चादूर्ध्ववक्त्रायवैनमः॥इतिप्रयोगाःप्रागादि वक्त्रेष्वेवंत्रयोदशः॥ २८ ॥ षड्दीर्घस्वरहृदिनाभ्यां ह्रींवातारप्रपूर्वकम् ॥ जातियुक्तषडङ्गंच न्यसे न्न्यासश्चतुर्दशः ॥ २९ ॥ चतुर्दशस्वरोपेतैराद्यन्ताद्यैः सबिन्दुभिः ॥प्रेतबी जमिदंतेन न्यासस्तिथिमितस्स्मृतः॥ ३० ॥ आद्यन्तप्रणवानाद्यांश्चतुर्थस्वर संयुतान् ॥ सबिन्दून्विन्यसेन्मूर्ध्नि बाह्वोश्चैवतुवक्षसि ॥ ३१ ॥ नाभौ हस्तांगुलीमध्ये तथापादांगुलीषुच ॥ स्थानषट्केक्रमान्न्यस्य न्यासोयंस्या त्तुषोडशः ॥ ३२ ॥ एकादश्यांचतुर्थींतु शक्रस्वरसबिन्दुकौ ॥ ध्यान बीजमिदंप्रोक्तंब्रह्मरन्ध्रेमुखेदृशोः ॥ ३३ ॥ ग्रीवानासाकपोलेषु चिबुकेब्रह्म रन्ध्रके ॥ पुनर्न्यसेदयंन्यासः प्रोक्तःसप्तदशःसुराः ॥ ३४ ॥ मन्याबीजंस ष्तपञ्चप्रथमास्तारसंयुताः ॥ पादयोर्हस्तयोर्नेत्रश्रोत्रकुक्षीन्द्रियेषुच ॥ ३५ ॥ स्थानषट्केप्रविन्यस्यन्यासश्चाष्टदशःस्मृतः ॥ श्रीबीजंचिबुकेपादेगले पादद्वयेपुनः ॥ ३६ ॥ हृदयेपादयोर्नाभौपादयोश्चप्रविन्यसेत् ॥ पञ्च स्थानेष्वष्टधायंन्यासएकोनविंशकः ॥ ३७ ॥ त्रिंशत्तमचतुर्थौचषष्ठस्वरस बिन्दुकौ ॥ घृणाबीजमिदंन्यस्यहृदयेनाभिमण्डले ॥ ३८ ॥ हृदयेपादयो र्न्यस्यहृदयेदक्षकुक्षिके ॥ हृदयेवामपादेचहृदयेदक्षनेत्रके ॥ ३९ ॥ हृदये वामनेत्रेचहृदयेदक्षघोणके ॥ हृदयेवामघोणेचहृदयेदक्षकर्णके ॥ ४० ॥ हृदयेवामकर्णेचहृदयेविंशकस्त्वयम् ॥ त्रयोदशचतुर्थौतुषष्ठस्वरसबिन्दुकौ ॥ ४१ ॥ घण्टाबीजमिदंन्यस्यघण्टिकानाभिघण्टिषु ॥ हृत्पादेहृत्कटौशीर्षम स्तकेचकटौस्तने ॥ ४२ ॥ गुल्फस्तनेपुस्यादेकविंशकोयंसुसम्मतः ॥ प्रकृ त्यक्षिसमुद्रार्णाःषष्ठस्वरसबिन्दुकाः ॥ ४३ ॥ ख्यातिबीजमिदंमूर्ध्निसृज्जिह्वा नाभिकण्ठके ॥ हृज्जङ्घानेत्रकर्णेषुबाहुयुग्मेस्तनद्वये ॥ ४४ ॥ क्रमेणविन्य सेन्न्यासोद्वाविंशोयंप्रकीर्तितः ॥ प्रणवोमूलबीजंस्याद्धृदयेपादयोर्न्यसेत् ॥ ह स्तयोःकर्णयोर्नासाद्वयेऽयंतुत्रिविंशकः ॥ ४५ ॥ अर्कवेदेष्वन्त्यपूर्ववर्णातु र्यस्वरान्विताः ॥ नादबिन्दुयुताबीजंआसुर्याःपरिकीर्तिताः ॥ ४६ ॥ मुखे

नेत्रद्वयेकर्णद्वयेचैवकपोलयोः ॥ गण्डयोःकण्ठदेशेचस्तनयोर्हृदिपादयोः ॥ ४७ ॥ चिबुकेमस्तकेबाह्वोस्स्कन्धयोर्दन्तमूलयोः ॥ ब्रह्मरन्ध्रेतथाधारेभ्रूमध्ये यंजिनोन्मितः ॥ ४८ ॥ मर्म्मन्यासानतोवक्ष्येत्रिदेवस्यातिदुर्लभान् ॥ दिक् सप्तपञ्चपञ्चागवेदप्रलयसागराः ॥ ४९ ॥ एकत्रिंशत्कृताद्यन्ताचतुर्थस्वरसंयुताः ॥ विन्दुनादसमायुक्ताःकूटसाकूटनामकम् ॥ ५० ॥ न्यसेच्छीर्षेगण्डयोश्चमुखेयंतत्त्वसम्मितः ॥ जिनत्रिंशाब्धिबाणाक्षिनेत्रेदशैलमितायुताः॥ ५१ ॥ बिन्दुतुर्य्यस्वराभ्यांतुकालबीजमुदाहृतम् ॥ नेत्रयोःकर्णयोर्नामौलिङ्गेचापि गुदेन्यसेत् ॥ ५२ ॥ षड्विंशोयंसमाख्यातःसप्तविंशोथकथ्यते ॥ संवर्तवेद वेदेन्द्राःप्रथमाभ्यांचसंयुताः ॥ ५३ ॥ तुर्य्यस्वरेणबिन्द्वाढ्याविद्याबीजमुदाहृतम् ॥ कपोलयोर्ब्रह्मरन्ध्रेदन्तपंक्त्योश्चविन्यसेत् ॥ ५४ ॥ अष्टाविंशमथोवक्ष्येशृङ्खलान्यासमद्भुतम् ॥ अन्त्याब्ध्याद्यादिमेपूनत्रिंशद्बाणान्तकास्तथा ॥ ५५ ॥ तुर्य्यस्वरैस्तथैकत्रिंशन्मिताब्धित्रिसागरैः ॥ त्रिपञ्चरामषष्ठाढ्यंनादबिन्दुविभूषितम् ॥ ५६ ॥ महापरोक्षंतत्कूटमङ्गेष्वेषुप्रविन्यसेत् ॥ मस्तकेनेत्रयोःश्रुत्योःकपोलद्वयगण्डयोः ॥ ५७ ॥ चिबुकेचगलेस्कन्धद्वयेच स्तनयोर्हृदि ॥ कुक्षिद्वयेतथानाभौजङ्घयोर्व्यञ्जनेतथा ॥ ५८ ॥ अण्डद्वयेन्यसेत्पश्चान्मूलाधारेचगुल्फयोः ॥ पादयोश्चपृथङ्न्यस्यपादयोरंगुलीषुच ॥ ५९ ॥ ब्रह्मरन्ध्रेपुनश्चांघ्र्योःपादयोरंगुलीषुच ॥ ब्रह्मरन्ध्रेपुनर्मूलाधारेचब्रह्मरन्ध्रके ॥ ६० ॥ ॐकारमादौसंयोज्यमातृकान्यासमाचरेत् ॥ न्यासश्चूडामणिश्चायमूनत्रिंशःप्रकीर्तितः ॥ ६१ ॥ ऊनत्रिंशाष्टधृत्यक्षिवेदान्त्याङ्कुरसाब्धयः ॥ आद्यैकत्रिंशवर्णास्तुसतुर्यस्वरबिन्दवः ॥ ६२ ॥ एतत्सरस्वती कूटमेतत्पूर्वास्तुमातृकाः ॥ वाक्सिद्ध्यर्थंन्यसेद्देहेत्रिंशोयंसमुदीरितः ॥ ६३ ॥ एतेतुवामिनोन्यासान्यूनैर्हानिमवाप्नुयात् ॥ अवामिनांत्रयोनित्याःशेषाःकाम्यप्रयोगके ॥ ६४ ॥ एवंन्यस्ततनुर्ध्यायेच्छुद्धस्फटिकान्तिकम् ॥ दीप्तमुद्रावराभीतिंकिङ्किणीजालनूपुरैः ॥ ६५ ॥ युतंरत्नमयैःस्मेरवदनंकुटिलालकम् ॥ दक्षेशूलंचपरशुंदधतंवटुरूपिणम् ॥ ६६ ॥ द्विभुजंसंस्मरेद्देवकार्य्यार्थं सात्त्विकंद्विजः ॥ वैष्णवस्तुचतुर्बाहुंजटामुकुटधारिणम् ॥ ६७ ॥ त्रिशूलपा

शदण्डंचदधतंचकमण्डलुम् ॥ मूलाद्यसद्योजातेनस्थापयेत्तदनन्तरम् ॥ ६८ ॥ समूलवामदेवेनसन्निधापनमुद्रया ॥ मूलेनसन्निधायाथसन्निरोधनमाचरेत् ॥ ६९ ॥ अघोरान्तेनमूलेनसन्निरोधनमुद्रया ॥ षडङ्गैःसकलीकुर्यादमृतीकृत्य मूलतः ॥ ७० ॥ परमीकरणंमूलात्स्वस्वमुद्राभिरेवहि ॥ ध्यात्वासंस्था पनंकुर्य्यान्मुद्राःसन्दर्शयेत्ततः ॥ ७१ ॥ लिङ्गाद्यापूर्वमुद्दिष्टायोनिमुद्रातु तत्रया ॥ तांदर्शयेत्तत्पुरुषमूलाभ्यांचततोबलिम् ॥ ७२ ॥ ईशानेनसमूले नकृत्वादेवंतथार्चयेत् ॥ ततोदेवाज्ञयान्यासस्थानेष्वङ्गानिपूजयेत् ॥ ७३ ॥ सद्योजातादिकान्पञ्चांगुष्ठादिषुसंयजेत् ॥ देवस्यदेहेवक्त्रेषुयजेच्चैवपुनश्च तान् ॥ ७४ ॥ व्योमाङ्गंकर्णिकायांतुपूर्वदक्षहरेषुच ॥ पश्चिमायांदे वदेहेसद्योजातादिकान्यजेत् ॥ ७५ ॥ असिताङ्गंरुरुंचण्डंक्रोधमुन्मत्तभैरव म् ॥ कपालिनंभीषणंचसंहारंचसमर्चयेत् ॥ ७६ ॥ देवाग्रतोष्टपत्रेषुयजेत्को णत्रयेपुनः ॥ देशग्रामाधिपौस्थानाधिपतिंसंयजेत्पुनः ॥ ७७ ॥ त्रिकोणेतु र्य्यरेखासुमेघनादंप्रचण्डकम् ॥ कालदूतंचषट्कोणेषडङ्गानिसमर्चयेत् ॥ ७८॥ षट्कोणस्यबहिश्चाष्टदिक्षुदेवाग्रतोयजेत् ॥ डाकिनीपुत्रकान्सर्वांश्छाकिनी पुत्रकानपि ॥ ७९ ॥ शाकिनीपुत्रकानिष्ट्वाहाकिनीपुत्रकान्यजेत् ॥ मालि नीपुत्रकानिष्ट्वादेवीपुत्रांस्ततोयजेत् ॥ ८० ॥ देवस्यवामभागेतुयजेदेतान्क मेणतु ॥ इन्द्रेशानदिशोर्मध्यऊर्ध्वमुख्यायजेत्सुतान् ॥ ८१ ॥ रक्षोजलेशयो र्मध्येत्वधोमुख्यायजेत्सुतान् ॥ एतेषामन्तरालेच्यर्याःपुत्रवर्णास्त्रयोदश ॥ ८२ ॥ ततश्चाष्टदलेपद्मेदेवाग्रादिप्रदक्षिणम् ॥ ब्रह्माणीतनयंमाहेशीपुत्रंवैष्णवीसु तम् ॥ ८३ ॥ कौमारीन्द्राणिकापुत्रौमहालक्ष्मीसुतंतथा ॥ वाराहीतनयंचा मुण्डापुत्रंवटुकाभिधम् ॥ ८४ ॥ पूजयित्वाततोबाह्यपद्मस्येशाग्रतोयजेत् ॥ भूपुरार्वागष्टदिक्षुहेतुकंत्रिपुरान्तकम् ॥ ८५ ॥ वैतालमग्निजिह्वंचकालान्ते चकरालकम् ॥ एकपादंभीमरूपंप्रागीशानान्तरेयजेत् ॥ ८६ ॥ अचलंहाट केशंचपाशिरक्षोदिगन्तरे ॥ चतुरस्रादिरेखायांदेवाग्रादिप्रदक्षिणम् ॥ ८७ ॥ श्रीकण्ठममरेशञ्चानन्तसर्वगसूक्ष्मकौ ॥ भारभूतंत्रिमूर्तिंचतिथीशंचतदग्रिमे ॥ ८८ ॥ चतुरस्रेचदेवस्यदक्षिणादिप्रदक्षिणम् ॥ स्थाण्वीश्वरंचबिल्वीशंदि

गीशंभौतिकेश्वरम् ॥ ८९ ॥ सद्योजातेश्वरंचैवग्रहेशाक्रूरकेश्वरौ ॥ महासे
नेश्वरंपश्चात्तृतीयेचतुरस्रके ॥ ९० ॥ देवस्योत्तरमारभ्ययजेदेतान्प्रदक्षिण
म् ॥ क्रोधेश्वरंचचण्डीशंकूर्मेशंलाङ्गलीश्वरम् ॥ ९१ ॥दारुकेशंचमीनेशम
रेषंभृगुमेवच ॥ वामभागेतुदेवस्यनकुलीशंशिवेश्वरम् ॥ ९२ ॥ संवर्तेशंस
मभ्यर्च्यतद्बाह्येपूजयेदिमान् ॥ वामाग्रकोणमारभ्यप्रादक्षिण्येनकोणजान् ॥
९३ ॥ सशक्तिकांदिव्यसिद्धांनतांदीक्षाख्ययोगिनीम् ॥ भूयश्चयोगिनी
पश्चात्तदन्तेसर्वयोगिनीः ॥ ९४ ॥ तदग्रेलोकपालांश्चपूजाविधिरितीरि
तः ॥ वर्णलक्षंजपेन्मन्त्रंहविष्याशीजितेन्द्रियः ॥ ९५ ॥ हुनेत्तिलैस्त्रिमध्वक्तै
स्तर्पणादिततश्चरेत् ॥ वाममार्गेद्रुतंसिद्धिसपादंदशलक्षकम् ॥ ९६ ॥ पुर
श्चर्य्यातथाहोमोघृतयुक्तपलाशजैः ॥ वामकौलिकमार्गेणसाध्योदुःखप्रदोम
नुः ॥ ९७ ॥ विघ्नंदुर्गांसमाराध्यबलिंदत्त्वाविधानतः ॥ काम्यानिसाधयेन्म
न्त्रीयथोक्तांसिद्धिमाप्नुयात् ॥ ९८ ॥ वश्यायजुहुयादिक्षुशकलैर्वशयेज्जग
त् ॥ जुहुयात्सर्पिषामन्त्रीयथोक्तांसिद्धिमाप्नुयात् ॥ ९९ ॥ जुहुयात्पुत्रला
भायप्रफुल्लैःकैरवैःसुधीः ॥ धनधान्यादिसम्पत्त्यैजुहुयात्तिलतण्डुलैः॥ १०० ॥
विल्वप्रसूनैर्जुहुयान्महतींविन्दतेश्रियम् ॥ लवणैर्मधुसम्मिश्रैर्वशयेद्वनिताज
नान् ॥ १ ॥ वृष्टिकामेनहोतव्यंवेतसानांसमिद्वरैः ॥ अन्नेनजुहुयान्मन्त्रीधन
धान्यादिसम्पदे ॥ २ ॥ वश्यायजुहुयान्मन्त्रीमधुनादिवसत्रयम् ॥ रोगोक्तौ
षधिहोमेनरोगानश्यन्तितत्क्षणात् ॥ ३ ॥ कृत्याद्रोहेग्रहद्रोहेभूतापस्मारसम्भ
वे ॥ व्याघ्राजिनेसमासीनोजुहुयादयुतंतिलैः ॥ ४ ॥ भूतादयःपलायन्तेद्रु
तंनोयान्तितद्दिशम् ॥ कृष्णाष्टमींसमारभ्ययावत्कृष्णाचतुर्दशी ॥ ५ ॥ तिलै
स्तण्डुलसम्मिश्रैर्मधुरत्रयलोलितैः ॥ त्रिसहस्रंप्रतिदिनंजुहुयादयुतंतिलैः ॥
६ ॥ भूतादयःपलायन्तेदर्शनात्तस्यपार्वति ॥ वटुकेश्वरमभ्यर्च्यभक्ष्यभोज्य
फलान्वितम् ॥ ७ ॥ नित्यंनिवेद्यनैवेद्यंमध्यरात्रेबलिंहरेत् ॥ शाल्यन्नंसर्पिषा
युक्तंलाजाश्चूर्णानिशर्कराः ॥ ८ ॥ गुडमिक्षुरसापूपैर्मध्वक्तैःपरिमिश्रितैः ॥
एवंवटुकमाराध्यदेवंप्रागुक्तवर्त्मना ॥ ९ ॥ रक्तचन्दनपुष्पाद्यैर्बलिरेषप्रकी
र्तितः ॥ एवंजपित्वाप्रयतःसहस्राण्येकविंशतिः ॥ १० ॥ समाप्तदिवसेरा

त्रौपूजयित्वाहरेद्बलिम् ॥ ततःकारयिताराजातोषयेत्साधकंधनैः ॥ ११ ॥
विधिनानेनसन्तुष्टोवटुकेशःप्रसीदति ॥ तेजोबलंयशःपुत्रान्कान्तिलक्ष्मीम
रोगताम् ॥ १२ ॥ नश्यन्तिशत्रवःसर्वेवर्द्धन्तेबन्धुबान्धवाः ॥ भवन्तिग्रह
रोगानविषयेतस्यभूपतेः ॥ १३ ॥ जुहुयाल्लवणैरेवायुतंचस्तम्भनेच्छया ॥
निगडादिविमोक्षायप्रयोगोयमुदाहृतः ॥ १४ ॥ वचाचूर्णपलञ्चसंगव्येना
ज्येनलालितम् ॥ विभज्यभक्षयेद्वन्ध्यामण्डलात्पुत्रकांक्षिणी ॥ १५ ॥
विनीतम्पुत्रमाप्नोतिमेधारोग्यबलान्वितम् ॥ आदावन्तेप्रयोगस्यवटुकायबलिं
हरेत् ॥ १६ ॥ बलिस्तुत्रिविधःप्रोक्तःसात्विकोराजसस्तथा ॥ तामसश्चेति
पूर्वोक्तोमांसहीनोयदाबलिः ॥ १७ ॥ मुद्गपायससंयुक्तोमधुरत्रयलालितः ॥
खाद्यैःफलत्रयैर्युक्तःसात्विकःपरिकीर्तितः ॥ १८ ॥ अयंविप्रैःप्रदेयस्तुतेनतु
ष्यतिभैरवः ॥ एवंसमांसोभूपादियोग्यउक्तस्तुराजसः ॥ १६ ॥ राजसस्तु
सुरायुक्तस्सर्वैर्मत्स्यैःसमन्वितः ॥ बलिस्तामसआख्यातःशूद्रादीनांप्रशस्य
ते ॥ २० ॥ अथातःसम्प्रवक्ष्यामिभस्मसाधनमुत्तमम् ॥ उशीरंचन्दनंकुष्ठं
घनसारंचकुंकुमम् ॥ २१ ॥ श्वेतार्कमूलंवाराहींलक्ष्मीक्षीरमहीरुहम् ॥ त्वचं
बिल्वफलंमूलंशोषयित्वातुचूर्णयेत् ॥ २२ ॥ पूर्णव्योमगृहीतेनगोमयेनवि
मिश्रितम् ॥ कृत्वापिण्डांश्चसंशोष्यसंस्कृतेहव्यवाहने ॥ २३ ॥ मूलेनद
ग्ध्वातद्भस्मशुद्धपात्रेविनिक्षिपेत् ॥ केतकीमालतीपुष्पैर्वासयेद्भस्मशोभि
तम् ॥ २४ ॥ अयुतंप्रजपेन्मन्त्रंस्पृष्ट्वाभस्मसुपूजितम् ॥ एतदादायदिव
सःप्रातःपुण्ड्रंकरोतियः ॥ २५ ॥ तस्यरोगाःप्रणश्यन्तिग्रहाःसन्तिशुभ
प्रदाः ॥ रिपुचौरमृगादिभ्योभयमस्यनजायते ॥ २६ ॥ वर्द्धन्तेसम्पदःसर्वाः
पूज्यतेसकलैर्जनैः ॥ राजावश्योभवेत्तस्यसामात्यःसपरिच्छदः ॥ २७ ॥
अथाभिषेकंवक्ष्यामिभूतानांविजयप्रदम् ॥ पूर्वोक्तेमण्डलेलिप्तेवितानध्व
जशोभिते ॥ २८ ॥ सर्वतोभद्रमालिख्यकर्णिकांतस्यपूरयेत् ॥ अष्टद्रो
णप्रमाणेनशालिभिःप्राचितैःशुभैः ॥ २९ ॥ तदर्धांस्तण्डुलांस्तस्मिन्न्य
स्यदूर्वाक्षतान्वितान् ॥ हेमादिविहितंकुम्भंनवरत्नसमन्वितम् ॥ ३० ॥ सं
स्थाप्यविमलैस्तोयैरापूर्य्यास्मिन्विनिक्षिपेत् ॥ क्षीरद्रुमप्रवालानिलक्ष्मीदू

र्वांतथैवच ॥ ३१ ॥ कर्पूरंचन्दनंबिल्वमुशीरंकुंकुमम्पुनः ॥ कंकोलमगुरुंजातीं मल्लिकांचम्पकोत्पलम् ॥ ३२ ॥ एवंन्यस्यत्रिमंपश्चात्पट्टसूत्रेणवेष्टयेत् ॥ तस्मिन्नावाह्यवटुकंराजसंसंप्रपूजयेत् ॥ ३३ ॥ बहिरष्टसुकुम्भेषुभैरवानष्टपूजयेत् ॥ त्रयोदशसुकुम्भेषुत्रयोदशगणान्यजेत् ॥ ३४ ॥ बाह्येदशसुकुम्भेषु लोकेशानर्चयेत्सुधीः ॥ तद्बहिर्न्यस्तकुम्भेषुश्रीकण्ठादीन्सुरान्यजेत् ॥ ३५ ॥ पञ्चत्रिंशघटेष्वर्च्याःकादिवर्णाःस्वराःक्रमात् ॥ इतिगन्धादिभिःसम्यक्पञ्चावरणमर्चयेत् ॥ ३६ ॥ अयुतंप्रजपेत्स्पृष्ट्वातान्घटान्देशिकोत्तमः ॥ सुदिने शोभनेलग्नेवाचयित्वाद्विजातिभिः ॥ ३७ ॥ स्वस्तिमङ्गलवाक्यानि विशुद्धैर्वेदपारगैः ॥ तदास्वयंचनृपतिःप्रणिपत्यगुरुंप्रियम् ॥ ३८ ॥ भूयसींदक्षिणान्दद्यात्प्रसीदतियथागुरुः ॥ राजाभिषिक्तोभवतिसाक्षाद्भूमिपुरन्दरः ॥ ३९ ॥ परान्विजयतेभूपान्स्तूयतेसकलैर्जनैः ॥ कृताभिषेकः षण्मासंप्रतिमासम्महीपतिः ॥ ४० ॥ चतुरम्भोधिवलयांशास्तिसर्वांवसुन्धराम् ॥ अथातःसम्प्रवक्ष्यामिगजोष्ट्रवृषवाजिनाम् ॥ ४१ ॥ रोगादीनांयथाशान्तिस्तत्तच्छालासुकारयेत् ॥ कुण्डंकृत्वाविधानेनहोमंकृत्वायथाविधि ॥ ४२ ॥ पायसाज्यतिलैर्विद्वानयुतत्रितयावधि ॥ ब्राह्मणान्भोजयेन्नित्यंभक्ष्यभोज्यफलादिभिः ॥ ४३ ॥ प्राक्प्रोक्तविधिनाकुम्भान्स्थापयित्वात्रदेशिकः ॥ अभ्यर्च्यगन्धपुष्पाद्यैस्तज्जलैःप्रोक्षयेद्गजान् ॥ ४४ ॥ अश्वशालामनेनैववर्द्धन्तेतेदिनेदिने ॥ युद्धेषुमहतीशक्तिर्जायतेपूर्वतोधिका ॥ ४५॥ सर्वेरोगाःप्रणश्यन्तिकृत्याद्रोहाःपरैःकृताः ॥ अस्मात्परतरारक्षानास्तितेषांमहीतले ॥ ४६ ॥ अभिषिच्यमहीपालंपरेषांविजयोद्यतम् ॥ उक्तेन विधिनामन्त्रीयामिन्यांबलिमाहरेत् ॥ ४७ ॥ अन्यूनाङ्गमजंहत्वाराजसंप्रागुदाहतम् ॥ बलिप्रदानसमयेरिपूणांसर्वसैन्यकम् ॥ ४८ ॥ निवेदयेद्बलिंतेन वटुकायविशिष्टधीः ॥ विदर्भयेच्छत्रुनाम्नाबलिमन्त्रंतथासुधीः ॥ ४९ ॥ शत्रुपक्षस्यरुधिरंपिशितंचदिनेदिने ॥ भक्षयेत्स्वगणैःसार्द्धंसारमेयसमन्वितः ॥ ५० ॥ बलिमन्त्रोयमाख्यातःसर्वेषांविजयप्रदः ॥ अनेनबलिनाहृष्टोवटुकःपरसैन्यकम् ॥ ५१ ॥ सर्वगणेभ्योविभजतेसामिषंक्रुद्धमानसः ॥ एवंकृतेपर

वलंक्षीयतेनात्रसंशयः ॥ ५२ ॥ विजयश्रियमेतेनराजाप्राप्नोत्ययत्नतः ॥ अथातःसम्प्रवक्ष्यामिनानाभैरवसाधनम् ॥ ५३ ॥ श्मशानेयेतुतिष्ठन्तिकालेकालेपुरेपुरे ॥ नियमंकश्चिदेकंयोनत्यजेद्धर्मगर्भितम् ॥ ५४ ॥ वाममार्गादिनिरतोप्यद्धेपत्तरवर्त्मना ॥ हीनेगुरावपूर्णेवासाधनोलोकभीतितः ॥ ५५ ॥ सभवेद्भैरवोदेवस्तस्यदेशस्यशासकाः ॥ तत्रत्यभूतवेतालाभैरवंसेवयन्तितम् ॥ ५६ ॥ स्वर्गमोक्षच्युतानांसशासनंकुरुतेसदा ॥ क्षीणेकर्म्मणितस्मिंश्चगतोग्रामेविलीयते ॥ ५७ ॥ अन्यस्मिन्नेवबीजेनग्रामोवसतिनिश्चितम् ॥ यदाम्नायेभैरवोसौतस्यस्थानंतुतद्दिशि ॥ ५८ ॥ तेनमार्गेणवशयेत्कार्य्यार्थंभैरवश्वतम् ॥ वाग्रमाकाममायाख्यातारोबीजंक्रमाद्भवेत् ॥ ५९ ॥ पूर्वाद्यूर्ध्वान्तकंत्वेतदाम्नायानांक्रमेणच॥ आम्नायबीजंग्रामस्यबीजंभंभैरवायच॥ ६०॥ ग्रामनामततःप्रोक्तापितृगेहनिवासिने॥ नमस्तेषामनुरयंजपेदर्णसहस्रकम् ॥६१॥ निशिश्मशानेचबलिंतदाम्नायोक्तवर्त्मना ॥ जपादौचजपान्तेचनित्यंदद्यादनन्यधीः ॥ ६२ ॥ वटुकोक्तंहुनेद्द्रव्यंतर्पणादिततश्चरेत् ॥ एवंसिद्धमनुर्मन्त्रीभूतानांविग्रहक्षमः ॥ ६३ ॥ तस्मिन्देशेभवेत्तस्यप्रत्यक्षीकरणंशृणु ॥ कृतनित्यक्रियःप्रातःसोपवासोजितेन्द्रियः ॥ ६४ ॥ सायंसन्ध्यादिकंकृत्वाशान्तिपाठौविधायच ॥ प्रगृहीत्वाचसामग्रींसायमुत्तरसाधकः ॥ ६५ ॥ व्रजतिश्मशानसामग्रींशृणुसुस्थिरमानसः ॥ वटकाश्चणकाभक्तंपायसापूपशष्कुलीः ॥ ६६ ॥ कन्यकाकर्पितंसूत्रंकुंकुमेनसुरञ्जितम् ॥ अष्टौवितस्तिदीर्घाश्चसमिधःखादिरामताः ॥ ६७ ॥ कीलालकोहस्तमात्रोगन्धपुष्पादिकंतथा ॥ बलिद्रव्येचपूर्वोक्तंपूर्वाम्नायेसमत्स्यकम् ॥ ६८ ॥ समांसंपश्चिमाम्नायेसमद्यंचोत्तरेभवेत् ॥ ग्राममध्येश्मशानेतदूर्ध्वाम्नायेसरक्तकम् ॥ ६९ ॥ यथायोग्येचनैवेद्यंदद्याच्चभयवर्जितः ॥ पादप्रक्षालनंकृत्वाततःस्मृत्वास्यदेवताम्॥७०॥ बद्धाञ्जलिरिदंवाक्यंप्रवदेत्साधकोत्तमः ॥ अत्रश्मशानेयाःकाश्चिद्देवतानिवसन्तिहि ॥ ७१ ॥ ताःप्रयच्छन्तुमेसिद्धिंप्रसन्नाःसन्तुपान्तुमाम्॥ पूर्वेमांस

---

१ ऐं श्रीं क्लीं ह्रीं और ॐ ये पांचों क्रमही से पूर्वाम्नाय दक्षिणाम्नाय पश्चिमाम्नाय उत्तराम्नाय और ऊर्ध्वाम्नायके बीज हैं जैसे ऐं पूर्वाम्नायका बीज है ॥

ङ्करःपातुतथाग्नेय्यांचशूलधृक् ॥ ७२ ॥ कपालीदक्षिणेपातुनैर्ऋत्येजटिलेव तु ॥ पश्चिमेपार्वतीशस्तुवायव्यांप्रमथाधिपः ॥ ७३ ॥ उत्तरेमुण्डमालाढ्यई शानेवृषभध्वजः ॥ ऊर्ध्वंपातुतथाशम्भुरधस्ताद्धूलिधूसरः॥७४॥अग्रतोभैरवः पातुपृष्ठतःपातुखेचरः ॥ दक्षिणेभूधरःपातुवामेचपिशिताशनः ॥ ७५ ॥ केशा न्पातुविशालाक्षोमूर्द्धानञ्चमरुत्प्रियः ॥ मस्तकंपातुभृग्वीशोनेत्रेपातुमहाम नाः॥७६॥कपोलौपातुवीरेशोगण्डौगण्डादिमर्दनः ॥ उत्तरोष्ठंविरूपाक्षोऽप्यध रंयामिनीप्रियः॥७७॥ दन्तेपुदन्तविध्वंसीचिबुकेनृकपालयुक्॥ कण्ठेरक्षतुमा देवोनीलकण्ठोजगद्गुरुः ॥७८॥ दक्षस्कन्धेगिरीन्द्रेशोवामस्कन्धेरिसूदनः॥ भुजेचदक्षिणेसर्वमन्त्रनाथःसदावतु ॥ ७९ ॥ वामेभुजेसार्वभौमोहृदयम्पातु पाण्डुरः ॥ दक्षस्तनम्पशुपतिर्वामम्पातुमहेश्वरः ॥ ८० ॥ उत्तरेसर्वकल्याणका रकोवतुमांसदा ॥ मनःकामप्रविध्वंसीजङ्घेपातुदयामयः ॥ ८१ ॥ जानुनी पात्वजामित्रोगुल्फौगौरीपतिःसदा ॥ पादपृष्ठंज्ञाननिधिस्तथापादांगुलीर्ह रः ॥ ८२ ॥ पादाधःपातुसततंव्योमकेशोजगत्प्रियः ॥ इतिरक्षांसमाधायम न्त्ररक्षांसमाचरेत् ॥ ८३ ॥ ॐह्रांहूंहूंहुंचपूर्वेॐह्रींहूंह्रींहुताशने ॥ ॐह्रींश्रीं दक्षिणेन्यस्यॐग्लूंग्लूंश्लुंचनैर्ऋते ॥ ८४ ॥ ॐप्रुंम्रुंप्रूंसआप्यत्येरांप्रांयूंसः समीरणे ॥ ॐत्रांभैरवसौम्यायांॐभ्रुंप्रुंचैवफट् शिवे ॥ ८५ ॥ ॐग्लौंव्लुमूर्ध्व देशेथोलांस्रूंस्रूंस्त्वधःस्मृतम् ॥ एवंरक्षांसमाधायोत्कील्यकीलान्दिगष्टके ॥ ८६ ॥ मध्येमहाकीलमथोदिक्पालार्चनमारभेत् ॥ ततोमन्त्रजपंकुर्यात्प्रा र्थयेच्चपुनःपुनः ॥ ८७ ॥ मांभैरवद्विरुच्चार्य्यभयङ्करहरेतिच ॥ मांरक्षरक्षहुं फट् चस्वाहाद्वाविंशदर्णकः ॥ ८८ ॥ जलन्दत्त्वाबलिंत्यक्त्वानयावद्वह्निकी लकम् ॥ अग्नितत्रसमावाह्यप्राग्वदध्यात्वाप्रपूजयेत् ॥ ८९ ॥ तदग्रेमण्ड लंकृत्वादद्यान्मन्त्रेणवैबलिम् ॥ ॐरांरिंरींरुंरूंतदाग्रेग्रेपदंवदेत् ॥ ९० ॥ तेजोनायकशीघ्रंमेसिद्धिंदेहिइमंवदेत् ॥ मुद्गबलिंगृह्णगृह्णहुंफट् देवार्णको मनुः ॥ ९१ ॥ ततोदक्षिणकीलस्यनिकटेयममर्चयेत् ॥ दंबीजेनसमा वाह्यमनुनानिर्वपेद्बलिम् ॥ ९२ ॥ ॐप्रंप्रांप्रिंचप्रींप्रुंप्रूंभोयमेतिपदंव देत् ॥ प्रेताधिपतयेशीघ्रंप्रसन्नोभवसंवदेत् ॥ ९३ ॥ इमांमेसुरांपात्रेब

लिंगृह्णयुगंवदेत् ॥ हुंफडन्तःसमाख्यातोमन्त्रोगोरामवर्णकः ॥ ६४ ॥
ततोनैर्ऋत्यकोणस्यनिकटेनिर्ऋतिंयजेत् ॥ क्षंबीजेनसमावाह्यबलिमन्त्रो
थकथ्यते ॥ ६५ ॥ ॐप्रेंप्रेंप्रेंततोहुंत्रिःश्रींद्विर्ह्रींचरमायुगम् ॥ रक्षोनाथपदं
शीघ्रंप्रसन्नोभवसंवदेत् ॥ ६६ ॥ इमंमेचणकबलिंगृह्णगृह्णपुनर्मतः ॥ षट्त्रिं
शदर्णोमन्त्रोयंततःपश्चिमकीलकम् ॥ ६७ ॥ वंबीजेनसमावाह्यवरुणंतत्र
पूजयेत् ॥ बलिमन्त्रोध्रुवोव्रांव्रींभोभोवरुणसंवदेत् ॥ ६८ ॥ जलनाथपद
स्यान्तेप्रसन्नोभवसंवदेत्॥इमंतेचौदनबलिंगृह्णगृह्णचहुंचफट् ॥ ६९ ॥ त्रिंशद
र्णोमनुःप्रोक्तोवरुणस्यबलेरयम् ॥ ततोव्रजेद्वायुकोणेकीलस्यनिकटेर्चयेत् ॥
२०० ॥ यंबीजेनसमावाह्यवायुंशृणुबलेर्मनुम् ॥ ॐवांवींव्रूंततःक्रांक्रींभोभो
वायोभुवःपुनः ॥ १ ॥ क्षिप्रंप्रसन्नोभवेतिममेदंवायवेपिच ॥ बलिंगृह्णयुगं
हुंफट्पञ्चत्रिंशाक्षरोमनुः ॥ २ ॥ उदकीलंततोगत्वाकुंबीजेनधनेश्वरम् ॥
आवाहयेत्पूजयित्वामनुनानिर्वपेद्बलिम् ॥ ३ ॥ ॐक्लींकूंक्लींनमःक्रांक्रांभो
भोयक्षपदंवदेत् ॥ नाथशीघ्रंप्रसन्नोमेभवेतिचपदंवदेत् ॥ ४ ॥ ममापूपबलिं
गृह्णयुगंहुंफण्मनुःस्मृतः ॥ पुष्पाक्षतान्समादायमध्यस्तम्भंततोव्रजेत् ॥ ५ ॥
ॐस्तांस्तींह्रींतथास्तम्भायनमोयंनवाक्षरः ॥ अनेनमनुनास्तम्भंनिर्भयःपरिपू
जयेत् ॥ ६ ॥ महाकवचमन्त्रेणकुर्याद्देहस्यरक्षणम् ॥ ॐह्रांह्रींह्रूंनमोहुंचक्षां
क्षींक्षूंक्षश्चप्रोच्चरेत् ॥ ७ ॥ खांखींखूंखस्तथाग्रांग्रींग्रूंग्रोंस्रोंस्रींततोवदेत् ॥
स्रुंस्रांस्रैंस्रूंततोम्रांम्रौंत्रिर्ह्रौंमुक्त्वात्रिचात्रिधा ॥ ८ ॥ हुंसप्तकंसमुच्चार्यफ
डन्तंसर्वतोवदेत् ॥ रक्षरक्षपदंप्रोच्यरक्षरक्षेतिभैरव ॥ ९ ॥ नाथनाथफडन्तो
यमेकपञ्चाशदक्षरः ॥ जप्त्वात्मरक्षांकृत्वाथस्तम्भस्यचसमीपतः ॥ १० ॥ आ
सनंसम्यगास्तीर्यतत्रप्राङ्मुखआस्थितः ॥ स्वाग्रेसमेतुभूम्यग्रेगोमयाद्युपले
पिते ॥ ११ ॥ पद्ममष्टदलंकृत्वातद्बहिःषोडशच्छदम् ॥ तद्बाह्येष्टदलंचा
पिह्यसिताङ्गादिभैरवान् ॥ १२ ॥ पत्राष्टकेपूजयित्वापूजयेत्षोडशच्छदे ॥
कुलीशंसुकुलीशंचजामित्रंडामरंरिभम् ॥ १३ ॥ प्रचण्डंचण्डकेशंचचण्डा
त्मानंचचामरम् ॥ चारित्रंचचमत्कारंचबलंचारुभूषणम् ॥ १४ ॥ चामीकरं
चारुवहंचकितंचेतिषोडश॥एतेस्वनामभिःपूज्याःषोडशानन्दपूरिताः ॥ १५ ॥

ब्राह्मयाद्याश्चाष्टपत्रेषु बहिर्वीथ्यांदिगीश्वरान् ॥ तद्बाह्येचतदस्त्राणित
द्वाह्येपित्विमान्यजेत् ॥ १६ ॥ चण्डप्रचण्डोर्ध्वकेश भीषणोद्भीषणाभिधाः।
व्योमकेशोव्योमबाहुर्व्योमव्यापकएवच ॥ १७ ॥ एतान्वीरान्समाहूयचा
याहीतिसमुच्चरन् ॥ अभ्यर्चयेन्निर्भयःसंस्ततोन्यासान्समाचरेत् ॥ १८ ॥
पश्चिमाभिमुखोभूत्वामालांसम्पूज्यसञ्जपेत् ॥ उच्चैःस्वरात्तदायातिप्रत्यहंभै
रवःस्वयम् ॥ १९ ॥ वामहस्तेनदद्याच्चयथाम्नायोचितंबलिम् ॥ सम्भोजये
ज्जपंकुर्यान्निर्भयःप्रीतमानसः ॥ २० ॥ तृप्तोदेवोयदाब्रूयाद्वरंवरयवाञ्छि
तम् ॥ दक्षिणेपयसाचैवतस्यतृप्तिःप्रजायते ॥ २१ ॥ वामादीनांमांऽमद्यर
क्ताद्यैःस्थिरतापिवा ॥ प्रणम्यदण्डवद्भूमौवाञ्छितंवरमुच्चरन् ॥२२॥ आग
त्यचगृहेपश्चात्प्रत्यहंकुर्यान्महोत्सवम् ॥ एवंकलियुगेसिद्धिःश्मशानस्यप्र
कीर्तिता ॥ २३ ॥ जपेदेवंसमारूढोदेवःप्रत्यक्षगोभवेत् ॥ समस्तभैरवानां
तुमन्त्राद्येवंमयोदितम् ॥ २४ ॥ अथातःसम्प्रवक्ष्यामिक्षेत्रपालमनुंपरम् ॥
ङेन्तस्तुक्षेत्रपालःस्यात्क्षौंबीजाद्योगजाक्षरः॥ २५॥सएवप्रणवाद्यस्तुदक्षेवामे
नवाक्षरः ॥ २६ ॥ मुनिर्ब्रह्माचगायत्रंछन्दःस्यात्क्षेत्रपालकः ॥ देवोबीज
मिहक्षौंचनमःशक्तिःप्रकीर्त्यते ॥२७॥ षड्दीर्घभानुबीजेनषडङ्गविधिरीरितः॥
ततःसञ्चिन्तयेद्देवमञ्जनाद्रिसमप्रभम् ॥ २८ ॥ वर्तुलास्यंत्रिनयनमूर्ध्वपिङ्ग
जटाधरम् ॥ दंष्ट्राकरालवदनंभीमरूपंदिगीश्वरम् ॥ २९ ॥ दक्षेगदांकपा
लंचवामसर्पविभूषणम् ॥ शैवपीठेयजेदष्टदिक्पदिक्सुरभूषिते ॥ ३० ॥
मध्येदेवंषडङ्गानिकर्णिकायांदलेषुच ॥अनलंचाग्निकेशंचकरालंकान्तिकार
वम् ॥ ३१ ॥ महाकोपंपिशितास्यंपिङ्गाक्षंचोर्ध्वकेशकम् ॥ यजेद्भूपुरवीथ्यां
चलोकेशानस्त्रसंयुतान् ॥ ३२ ॥ धूपदीपादिकंदत्त्वानैवेद्यंमनुनामुना ॥
एह्येहीतिसमुच्चार्य्यविद्विषोन्तःपुरद्वयम् ॥ ३३ ॥ भञ्जयद्विर्नतयद्विर्विप्रवि
प्रमहावदेत् ॥ भैरवक्षेत्रपालेतियलिंदेवततोवदेत् ॥ ३४ ॥ गृह्णद्वयंवह्नि
जायापञ्चत्रिंशाक्षरोमनुः ॥ एकलक्षंजपेन्मन्त्रंजुहुयात्तद्दशांशतः ॥ ३५ ॥
चरुणाघृतसिक्तेनतर्प्पणादिततश्चरेत् ॥ अथप्रयोगंवक्ष्यामिसर्वोपद्रवनाश
नम् ॥ ३६ ॥ रात्रौगृहाङ्गणेरम्यंकृत्वास्थण्डिलमुत्तमम् ॥ आवाह्यतत्रसम्पू

ज्यक्षेत्रेशंप्रोक्तवर्त्मना ॥ ३७ ॥ दक्षमार्गीचदुग्धाद्यैःकृत्वावैसिक्तकंमहत् ॥ वामाचारीकुलद्रव्यैःस्वाम्नायोक्तैस्तथापरे ॥ ३८ ॥ वक्ष्यमाणेनमनुनातस्य हस्तेबलिंहरेत् ॥ एह्येहितुरुयुग्मंचमुरुद्वन्द्वंतथावदेत् ॥ ३९ ॥ भञ्जद्विर्हन विघ्नंचविनाशयविनाशय ॥ महाबलक्षेत्रपालबलिंगृह्णद्वयंततः ॥ ४० ॥ अग्निजायाबलेर्मन्त्रोभवेत्पञ्चत्रिवर्णकः ॥ दद्याच्चपरिवारेभ्यस्तेषांतेषांतुना मभिः ॥ ४१ ॥ बलिनानेनसन्तुष्टःक्षेत्रपालोमुदान्वितः ॥ ऐश्वर्य्यविजया रोग्यसौभाग्यादिकसम्पदः ॥ ४२ ॥ ददातिरौद्रभूतादिकृत्याद्याशुनिवार येत् ॥ अथवक्ष्येगरहरंवह्निमन्त्रंचमत्कृतम् ॥ ४३ ॥ खःखंस्याद्द्व्यक्षरोमन्त्रोमु निरग्निःप्रकीर्तितः ॥ पङ्क्तिश्छन्दोदेवताग्निःखोबीजंशाक्तिकातुखम् ॥ ४४ ॥ षड्दीर्घस्वरयुक्तेनषकारेणाङ्गकल्पनम् ॥ ध्यानार्चनादिकंसर्वंवैश्वानरसुमन्त्र वत् ॥ ४५ ॥ जपोद्वादशसाहस्रंतद्दशांशंघृतैर्हुनेत् ॥ तर्प्पणादिततःकृत्वा प्रयोगंतुसमाचरेत् ॥ ४६ ॥ स्वस्यवामेकरेध्यायेत्पद्मंपञ्चदलंस्थितम् ॥ त स्याःकर्णिकायांतुसविसर्गंखकारकम् ॥ ४७ ॥ सानुस्वारंखकारंचध्यायेत्प ञ्चदलेस्थितम् ॥ सुधामयंचतज्ज्वालांपश्चादस्त्रंविभावयेत् ॥ ४८ ॥ सम्पू र्णंचामृतमयंविषयुक्तंस्पृशेद्वपेत् ॥ जपेदष्टोत्तरशतंमन्त्रंयस्यतनुंस्पृशेत् ॥ ४९ ॥ सर्वान्विषग्रहान्भूतान्सर्प्पवृश्चिकवेदनाः ॥ ज्वराजीर्णविसर्प्पादि शूलंदन्तादिसम्भवम् ॥ ५० ॥ नेत्ररोगादिकंपीडांसर्वाङ्गस्थांहरेदथ ॥ अ थवक्ष्येचण्डमन्त्रमूर्ध्वंफट्ट्यक्षरोमनुः ॥ ५१ ॥ ऋषिर्ब्रिकोनुष्टुबुक्तंछन्दश्च ण्डोस्यदेवता ॥ आद्यंबीजंशक्तिरन्त्यमिष्टार्थविनियोजनम् ॥ ५२ ॥ दीप्त फट्हृदयंप्रोक्तंज्वालाफट्शिरईरितम् ॥ शिखाज्वालामालिफट्चतत्फट्कवच मीरितम् ॥ ५३ ॥ हनफट्नेत्रमुद्दिष्टंसर्वज्वालिनिफट्परम् ॥ एभिर्मन्त्रैःष डङ्गानिजातियुक्तानिकल्पयेत् ॥ ५४ ॥ ध्यायेच्चण्डेश्वरंरक्तंत्रिनेत्रंरक्तवास सम् ॥ चन्द्रमौलिंचबिभ्राणंशूलंटङ्कंकमण्डलुम् ॥ ५५ ॥ स्फटिकस्रजमाब द्धजटाजूटंसनागकम् ॥ शैवेपीठेयजेद्देवंगायत्र्यावाहनंमतम् ॥ ५६ ॥ ष ष्ठस्वरोबिन्दुयुक्तोन्तश्चण्डेश्वरःसुहृत् ॥ पूजामन्त्रोस्याष्टवर्णोयजेदङ्गानिपू र्ववत् ॥ ५७ ॥ दलेषुमातरःपूज्यावीथ्यांलोकेशहेतयः ॥ यन्त्रपूजाविधिस्त

स्यचैवमेवसमीरितः ॥ ५८ ॥ चण्डेश्वरायविद्महेचण्डचण्डायधीमहि ॥ तन्नश्चण्डःप्रचोदयात् ॥ ५९ ॥ इत्येतंचण्डगायत्रीमन्त्रंलक्षत्रयंजपेत् ॥ स तिलैस्तण्डुलैर्होमस्त्रिमध्वक्तैर्दशांशतः ॥ ६० ॥ राजवृक्षसमिद्भिर्वातर्प्पणा दिततश्चरेत् ॥ एवंसिद्धमनुर्मन्त्रीप्रयोगानाचरेत्तदा ॥ ६१ ॥ शालिपिष्ट मयींकृत्वापुत्तलींप्राणसंयुताम् ॥ देवकाष्ठैरथीतेग्नौसम्यक्त्रिमधुरप्लुताम् ॥ ६२ ॥ दक्षिणांगुष्ठमारभ्यपुंसिस्थित्वापृथक्पृथक् ॥ जुहुयाद्वामपादा दिजोषितश्चापिसंहुनेत् ॥ ६३ ॥ एवंहोमोद्विजादीनांवशकृन्नात्रसं शयः ॥ योमर्त्योनुदिनंपुष्पैर्हुनेदष्टोत्तरंशतम् ॥ ६४ ॥ सप्ताहंतद्वर्णवश्यं प्राप्नुयाद्यश्चतर्प्पयेत् ॥ मनुनानेनचाशिवंचतुर्मासाल्लभेच्छ्रियम् ॥ ६५ ॥ साध्यनक्षत्रवृक्षाद्यैःपुत्तलींप्राणसंयुतम् ॥ स्पृशेत्तांचजपेत्पश्चात्पूजयित्वाहु नेन्निशि ॥६६ ॥ नारींनरंवावशयेद्यावज्जीवंनसंशयः ॥ पञ्चाक्षरप्रयोगांश्च मनुनानेनसाधयेत् ॥ ६७ ॥ अथवक्ष्येभैरवस्यशक्तेर्वन्द्याःपरंमनुम् ॥ यावन्ध यतिपापिष्ठान्स्वभक्तान्मोचयेदघात् ॥६८॥ यस्याःप्रभावतःकाश्यांभैरवोस्त्य धिकारवान् ॥ तारोहिलियुगंदेवीवन्दीङेन्तानमोन्तकः॥६९॥ एकादशाक्षरो मंत्रोभैरवोस्यमुनिर्मतः॥त्रिष्टुप्छन्दोस्यदेवीस्याद्द्विद्विद्विद्विनेत्रकैः ॥७०॥ षडङ्गानिततोध्यायेद्रत्नसिंहासनेस्थिताम् ॥ ७१ ॥ मेघश्यामांसुधाकुम्भमभयं दधतींस्मरेत् ॥ एकवीरेदितपीठेयजेद्बन्धनमुक्तये ॥ ७२ ॥ अङ्गपूजाकेशरेषु यजेत्पत्रेषुसत्तमः ॥ कालींतारांभगवतींततःकुब्जांचशीतलाम् ॥ ७३ ॥ त्रि पुरांमातृकांलक्ष्मींभूपुरेतुदिगीश्वरान् ॥ अग्रवीथ्यामायुधानिवन्दीमेवंसमर्च येत् ॥ ७४ ॥ लक्षद्वयंजपेन्मन्त्रंपायसान्नैर्हुनेत्तथा ॥ विधायतर्प्पणाद्यंचप्र योगानाचरेत्ततः ॥७५॥ एकविंशतिघस्रान्तमयुतंप्रत्यहंजपेत् ॥ ब्रह्मचर्य्यरतो मन्त्रीगणेशार्चनपूर्वकम् ॥ ७६ ॥ कारागृहनिबद्धस्यमोक्षएवंकृतेभवेत् ॥ अपूपोपरिसंलेख्यंघृतेनचतुरस्रकम् ॥ ७७ ॥ तस्यमध्येठकारंतुलिखेत्तदुदरे तथा ॥ अमुकंमोचयेत्येवंदिक्षुह्रींकारमालिखेत् ॥ ७८ ॥ चतुरस्रंपुनस्तच्चम

१ ॐ ह्लिलि ह्लिलि वन्दीदेव्यै नमः इति मन्त्रः २ एक, दो, दो, दो, दो और दो अक्षरों को क्रमसे षडंगों में न्यासकरे, जैसे, ॐहृदयायनमः इत्यादि ॥

न्त्रेणानेनवेष्टयेत् ॥ वाञ्छायाश्रीवन्दिअमुकेतिबन्धपदंवदेत् ॥ ७९ ॥ मोक्षं कुरुयुगंस्वाहाधृतिवर्णोमनुःस्मृतः ॥ तस्मिन्नपूपेसम्पूज्यवन्दीमावरणान्विताम् ॥ ८० ॥ कारानिकेतनस्थायप्रदद्यात्सुहृदेचतम् ॥ सशुद्धोवाग्यतोभूत्वा भक्षयेत्तमपूपकम् ॥ ८१ ॥ तस्मिन्संभक्षितेबद्धोमुच्यतेबन्धनाद्द्रुतम् ॥ अथातःसम्प्रवक्ष्यामिकार्त्तिकेयमनुंपरम् ॥ ८२ ॥ वंवह्नयेनमश्चेतिताराद्दिःसप्रवर्णवान् ॥ ब्रह्मामुनिश्चगायत्रीछन्दोदेवोगुहःस्मृतः ॥ ८३ ॥ हं[1]छांक्किं[2]स्तारकोबीजं[3]संताराद्यैःषडङ्गकम् ॥ ध्येयोदेवोगुहःशक्तिःकुक्कुटाद्यवरान्दधत् ॥ ८४ ॥ रक्तोरक्तांशुकोरक्तप्रवराकल्पभूषितः ॥ प्रथमावृत्तिरङ्गैःस्यात्षड्दलेष्टदले पुनः ॥ ८५ ॥ जयन्तश्चाग्निकेशश्चकृत्तिकापुत्रएवच ॥ भूतःपतिश्चसेनानांगुहोहैरण्यशूलकः ॥ ८६ ॥ चित्राक्षोभूपुरेशक्रादिकपूजाप्रकीर्त्तिता ॥ ८७ ॥ पुरश्चर्य्यायुतंप्रोक्ताघृतहोमोदशांशतः ॥ तर्प्पणाद्यैर्मनुःसिद्धःश्रीरक्षा जयपुत्रदः ॥ ८८ ॥ अथवक्ष्येमहेशस्यवस्त्रप्रक्षालिकातुया ॥ शीतलेतिच विख्यातातस्यामन्त्रंसुसिद्धिदम् ॥ ८९ ॥ तांरोमायारमाशीतलायैहृच्चनवाक्षरः ॥ उपमन्युर्मुनिश्छन्दोबृहतीशीतलासुरी ॥ ९० ॥ पैंड्दीर्घयुक्तयालक्ष्म्या बीजाभ्यांस्यात्षडङ्गकम् ॥ ध्यायेच्चशीतलांदेवींरासभस्थांदिगम्बराम् ॥ ९१ ॥ मार्जनीशूर्प्पहस्तांचरक्तपुष्पाहिमार्चिताम् ॥ तैलादिमलसंयुक्तवस्त्रपोटलिशीर्षकाम् ॥ ९२ ॥ त्रिकोणान्तर्यजेद्देवींकोद्रवांचमसूरिकाम् ॥ शराविकांचकोणेषु भूपुरेत्वष्टभैरवान् ॥ ९३ ॥ अयुतंप्रजपेन्मन्त्रंपायसेनदशांशतः ॥ हुत्वाकृत्वातर्प्पणादिमन्त्रसिद्धिःप्रजायते ॥ ९४ ॥ नाभिमात्रेजलेस्थित्वायःसहस्रंजपेन्मनुम् ॥ तेनसम्मार्जिताश्चैवस्फोटानश्यन्तितत्क्षणात् ॥ ९५ ॥ साधितोयेनमन्त्रोयंतस्यवंशेनशीतला ॥ तेनाभिमन्त्रितंभस्मयद्गृहेतत्रसानहि ॥ ९६ ॥ अथातःसम्प्रवक्ष्यामिभर्त्तुरस्याःपरंमनुम् ॥ तांरःप्रासादबीजंयंवंव्योमव्यापिनेद्विठः ॥ ९७ ॥

---

१ नमः २ ॐ ३ ॐकार आदिमें करके मंत्रके छह अक्षरोंको षडंगों में न्यासकरे ॥ जैसे ॐ वं हृदयायनमः, ॐ वं शिरसेस्वाहा, ॐ ह्न शिखायैवषट्, ॐ ये कवचायहुं, ॐ न नेत्रत्रयायवौषट्, ॐ मः अस्त्रायफट् ४ ॐ ह्रीं श्रीं शीतलायैनमः ५ श्रां, श्रीं, श्रूं, श्रैं, श्रौं, श्रः इनमें प्रत्येक बीजके प्रथम ॐ और ह्रीं जोड़के षडंगोंमें न्यासकरे जैसे, ॐ ह्रीं श्रांहृदयायनमः, ॐ ह्रीं श्रीं शिरसेस्वाहा इत्यादि ६ ॐ हौं यं वं व्योमव्यापिने स्वाहा ॥

एकादशार्णोमन्त्रोयंन्यासध्यानजपादिकम् ॥ प्रासादमन्त्रवज्ज्ञेयमर्धलक्षं पुरस्कृतिः ॥ ९८॥ दशांशंजुहुयादाज्यैस्तर्पणादिततश्चरेत् ॥ सिद्धम न्त्रेणौषधंतुदशवाराभिमन्त्रितम् ॥ ९९ ॥ यथोक्तगुणतामेतिनिर्वीर्य्यमपिना न्यथा ॥ अथवानेनसञ्जप्यदेकादशवारकम् ॥ ३००॥ रोगिणामौषधंदत्तंतत्त त्पूर्णगुणंभवेत् ॥ प्रातःकालेसमुत्थायोदकमेकादशावधि ॥ १ ॥ मन्त्रयि त्वापिबेत्तस्यप्रत्यहंद्वादशाब्दकम् ॥ वलीपलितनिर्मुक्तोजीवेद्वर्षशतंयुवा ॥ २ ॥ त्रिवर्षाच्चमहारोगाःकुष्ठाद्यायान्तिसंक्षयम् ॥ अथवक्ष्येलघुश्यामामन्त्रं तंभैरवप्रियम् ॥ ३ ॥ नेमउच्छिष्टचाण्डालिमातङ्गिप्रवदेत्ततः ॥ सर्ववशङ्करि स्वाहावाग्बीजाद्योनेखार्णकः ॥ ४ ॥ मदनोस्यमुनिश्छन्दोगायत्रीनिवृता दिका ॥ देवतातुलघुश्यामावाग्बीजंबीजमुच्यते ॥ ५ ॥ स्वाहाशक्तिर्नियो गस्तुनिखिलाभीष्टसाधने ॥ वाक्पूर्विकांरतिंमूर्द्धिश्रीतिंमायांदिकांहृदि ॥ ६ ॥ पादयोर्विन्यसेन्मन्त्रीकामपूर्वांमनोभवाम् ॥ इच्छाशक्तिंज्ञानशक्तिंक्रि याशक्तिंक्रमान्न्यसेत् ॥ ७ ॥ वज्रायाकामबीजाद्यांमुखेकण्ठेशिवेतथा ॥ द्रांद्रावणंन्यसेच्छीर्षेद्रींत्रशोषणमास्यके ॥ ८ ॥ क्लींतापनंहृदिन्यस्यब्लूंसंमो हनमिन्द्रिये ॥ सउत्पादनकंपादेततःकुर्य्यात्षडङ्गकम् ॥ ९ ॥ रामाग्निगु णरामाङ्गनेत्रवर्णैर्मनुस्थितैः ॥ आंक्षांब्राह्मीकन्यकायैनमोमूर्द्धिप्रविन्यसेत् ॥ १० ॥ इंलांमहेश्वरीकन्यकायैवामांसकेनमः ॥ कूंहांकौमारीकन्यकायैनमो दक्षांसकेन्यसेत् ॥ ११ ॥ ॐवाराहीकन्यकायैवामेपार्श्वेचविन्यसेत् ॥ ॐ सांइन्द्राणीकन्यायैनमोदक्षिणपार्श्वके ॥ १२ ॥ ॐचांचामुण्डाकन्यायैनम श्चककुदिन्यसेत् ॥ अःलामुक्त्वामहालक्ष्मीकन्यायैचनमोहृदि ॥ १३ ॥ ता स्वागादिकाअष्टौसिद्धयःकन्यकान्तिमाः ॥ चतुर्थस्वरसंयुक्तान्न्यसेच्छीर्षल लाटयोः ॥ १४ ॥ भ्रूमध्यकण्ठहृन्नाभिमूलाधारान्तरेषुच ॥ अणिमामहिमा चैवगरिमालघिमातथा ॥ १५ ॥ वशिताचाथप्राकाम्यंप्राप्तिरित्यष्टसिद्धयः॥ कामाद्याकन्यकाप्रोक्ताअष्टावप्सरसोन्यसेत् ॥ १६ ॥ केभालेनेत्रयोर्वक्त्रकर्ण योःककुदेपिच ॥ उर्वशीमेनकारम्भाघृताचीपुञ्जकस्थली ॥ १७ ॥ सुकेशी

---

१ ऐंनमःउच्छिष्टचाण्डालिमातङ्गि सर्ववशङ्करिस्वाहा २ बीसअक्षर ॥

मञ्जुघोषाचमहारङ्गवतीतिताः ॥ यक्षगन्धर्वसिद्धानांकन्यकानरनागयोः ॥ १८ ॥ विद्याधरकिम्पुरुषपिशाचानांक्रमेणच ॥ अंसयोर्हृदयेन्यस्यस्तनयोर्ज ठरेतथा ॥ १९ ॥ गुह्येचाधारदेशेचक्लीमाद्याश्चनमोन्तकाः ॥ ताराद्यान्नमसा युक्तान्मूलवर्णान्सबिन्दुकान् ॥ २० ॥ न्यसेत्सन्धिपुनाग्रेपुकरयोःपादयो रपि ॥ अंसश्चकूर्परश्चैवमणिबन्धोंगुलीतलम् ॥ २१ ॥ करस्यसन्धयश्चै ताःस्फिग्जानुततोभवेत् ॥ गुल्फमंगुलिमूलंचचतस्रःपादसन्धयः ॥ २२ ॥ न्यासानेवंविधान्कृत्वालघुश्यामांततःस्मरेत् ॥ सुधार्णवान्तर्द्वीपस्थरत्नमन्दि रमध्यगाम् ॥ २३ ॥ माणिक्याभरणांस्मेरांनीलोत्पलनिभाम्बराम् ॥ अलक्तं लिप्तपादाब्जांवीणावादनतत्पराम् ॥ २४ ॥ त्र्यक्षांताम्बूलपूर्णास्यांस्मेरेन्दुरा शिशेखराम् ॥ मातङ्गींप्रोदितेपीठेलघुश्यामांप्रपूजयेत् ॥ २५ ॥ त्रिकोणेपञ्च कोणेपुदलेपोडशपत्रके ॥ वेदद्वारधरागेहावृतेग्न्यादिककोणके ॥ २६ ॥ इच्छा ज्ञानक्रियाशक्तीस्तदग्रेबाणपञ्चकम् ॥ केशरेष्वङ्गदेवांश्चब्राह्म्याद्याश्चाष्टपत्र के ॥ २७ ॥ अणिमाद्याश्चयन्त्राग्रेयजेत्षोडशपत्रके ॥ उर्वश्याद्याश्चकन्या श्चचतुर्दिक्षुचभूगृहे ॥ २८ ॥ गजाननासिंहमुखीगृध्रास्याकाकतुण्डिका ॥ उष्ट्र ग्रीवाहयग्रीवावाराहीशरभानना ॥ २९ ॥ उलूकीचशिवारावामयूरीविकटान ना ॥ अष्टवक्त्राकोटराक्षीनक्रविकटलोचना ॥ ३० ॥ समर्चयेद्दिशिप्राच्यामेताः षोडशयोगिनीः ॥ शुष्कोदरीललज्जिह्वाअदंष्ट्रावानरानना ॥ ३१ ॥ त्र्यक्षाच केकराक्षीचबृहत्तुण्डासुराप्रिया ॥ कपालहस्तारक्ताक्षीशुकीश्येनीकपोतिका ॥ ३२ ॥ पाशहस्तादण्डहस्ताप्रचण्डेतिचदक्षिणे ॥ पूज्याश्चाथप्रतीच्यांतुदशाच ण्डविविक्रमाः ॥ ३३ ॥ शिशुघ्नीपापहन्त्रीचकालीरुधिरपायिनी ॥ वसाधयागर्भ भक्षाशवहस्तान्त्रमालिनी ॥ ३४ ॥ शूलकेशीबृहत्कुक्षीसर्पास्याप्रेतवाहिनी ॥ दन्दशूककराक्रौञ्चीभूतरम्यावृपानना ॥ ३५ ॥ व्याघ्रास्याभीमनिश्वासाव्योमै कचरणाधर्दृक् ॥ लापिनीशोपिणीदृष्टिःकादरीस्थूलनासिका ॥ ३६ ॥ विद्युत्प्र भाबलाकास्यामार्जारीकुटिलानना ॥ अट्टाट्टहासाकामाक्षीश्वसमानश्रुति स्तथा ॥ ३७ ॥ क्रमाच्चण्डाकिनीरेतायजेद्वह्न्यादिकोणके ॥ स्वस्वमन्त्रेणवटु कंगणेशंक्षेत्रपालकम् ॥ ३८ ॥ दुर्गांतद्बहिरिन्द्रादीन्वज्रादीन्यपिपूजयेत् ॥

चतुर्द्वारेषु वाद्यानि ततमानाध्वकं धनम् ॥ ३९ ॥ सुचिरं चेति पूजोक्ता द्वादशावरणैरियम् ॥ सर्वासां सम्पदां पाता चैतदाराधको भवेत् ॥ ४० ॥ मातङ्गीमन्त्र सम्प्रोक्ताः प्रयोगाश्चात्र कीर्तिताः ॥ अथ वक्ष्यामि गायत्रीं गोक्षये दनयाखिलम् ॥ ४१ ॥ यागद्वयं च भूपालस्तद्वशे राजपुत्रकाः ॥ भवन्ति वशगास्तस्य येन गायत्र्युपासिता ॥ ४२ ॥ देवी वन्मानीयाश्च स्त्रियो निन्द्याश्च जातुचित् ॥ अथातः सम्प्रवक्ष्यामि रञ्जकामेश्वरीमनुम् ॥ ४३ ॥ कामस्य बाणबीजानां मन्त्रोयं परिकीर्तितः ॥ ऋषिः सम्मोहनश्छन्दो गायत्री देवता भवेत् ॥ ४४ ॥ बाणेशी सर्वव्यस्तेन मनुनोक्तं षडङ्गकम् ॥ मूर्ध्नि पादे मुखे गुह्ये हृदये पञ्चदेवताः ॥ ४५ ॥ न्यस्तव्याः पञ्चबीजाद्या द्राविणी क्षोभणी तथा ॥ वशाकारिण्याकर्षिण्यौ सम्मोहिन्यपि पञ्चमी ॥ ४६ ॥ अरुणा रक्तवसना नानारत्नैरलंकृता ॥ बाणान्धनुः सृणिं पाशं हस्तैस्सन्दधती भजे ॥ ४७ ॥ मोहिनी क्षोभिणी श्यामास्तम्भिन्याकर्षिणी तथा ॥ द्राविणी ह्लादिनी क्लिन्ना क्लेदिनी पीठशक्तयः ॥ ४८ ॥ बाणेशी योगपीठाय नमो मूलादिको मनुः ॥ दत्त्वानेनासनं मन्त्री तस्मिन्देवीं प्रपूजयेत् ॥ ४९ ॥ आदौ षडङ्गान्याराध्य दिक्ष्वग्रे द्राविणीमुखाः ॥ दलेष्वनङ्गरूपास्यादनङ्गमदना तथा ॥ ५० ॥ अनङ्गमन्मथानङ्गकुसुमा मदनातुरा ॥ अनङ्गाद्या तथानङ्गनिशितानङ्गमेखला ॥ ५१ ॥ अनङ्गभूमिका भूमिपुरे दिक्पाश्च सायुधाः ॥ पञ्चलक्षं जपेन्मन्त्रं हुनेदाज्यं दशांशतः ॥ ५२ ॥ तर्पणादि ततः कृत्वा प्रयोगार्हो मनुर्भवेत् ॥ दधियुक्तैरशोकस्य पुष्पैर्वा दिवसत्रयम् ॥ ५३ ॥ सहस्रं जुहुयात्तस्य वश्याः स्युः प्राणिनोखिलाः ॥ लाजैर्दधियुतैर्मन्त्री होमात्कन्यामवाप्नुयात् ॥ ५४ ॥ कन्यापि वशमाप्नोति मासद्वितयमध्यतः ॥ गव्याज्येन ससम्पातं हुत्वा चाष्टशतं ततः ॥ ५५ ॥ आज्यं सम्पातितं दद्यात्स्त्रियै सम्पातितं श्रिये ॥ सा तदाज्यं कान्तभावं भावयित्वा वशं नयेत् ॥ ५६ ॥ सुगन्धकुसुमैर्हुत्वा धनमाप्नोति वाञ्छितम् ॥ अथ वक्ष्ये रुद्रशीर्षनिवासिन्याः परं मनुम् ॥ ५७ ॥ तारो नमः शिवायै च नारायण्यै पदं वदेत् ॥ दशहरायै गङ्गायै स्वाहान्तो विंशदर्णकः ॥ ५८ ॥ व्यासो मुनिः कृतिश्छन्दो देवी गङ्गा प्रकीर्तिता ॥

१ ॐ नमः शिवायै नारायण्यै दशहरायै गङ्गायै स्वाहा ॥

त्रिवेह्निवेदबाणाग्निनेत्रवर्णैःषडङ्गकम् ॥ ५६ ॥ चतुर्भुजांत्रिनेत्रांचसर्वाभरण भूषिताम् ॥ रत्नकुम्भसिताम्भोजवरदाभयलसत्कराम् ॥६०॥ चामरैर्वीज्यमानां चश्वेतच्छत्रोपशोभिताम् ॥ लक्षंजपेद्दशांशेनजुहुयात्सघृतैस्तिलैः ॥ ६१ ॥ जयादिशक्तिभिर्युक्तेपीठेभागीरथींयजेत् ॥ पूजयेत्केशरेष्वङ्गंदलेरुद्रंहरिंविधि म्॥६२॥सूर्य्यंहिमाचलंमेनांभगीरथमपांपतिम् ॥ दलाग्रतोमीनकूर्ममण्डूकम करानपि ॥ ६३ ॥ हंसान्कारण्डवांश्चचक्रवाकान्सारसकान्यजेत् ॥ चतुरस्रेश क्रमुख्यानायुधैःसंयुतान्यजेत् ॥ ६४ ॥ एवंसंसाधितोमन्त्रोभीष्टंयच्छतिम न्त्रिणाम् ॥ ज्येष्ठशुक्लदशम्यांतुविशेषेणभजेद्बुधः ॥ ६५ ॥ दद्याद्दशभ्योवि प्रेभ्योदशप्रस्थमितांस्तिलान् ॥ जप्त्वासहस्रंहुत्वाचतथोपोष्यविकल्मषः ॥ ६६ ॥ सर्वभोगसमायुक्तोजायतेमानवोभुवि ॥ गङ्गातीरेवर्णलक्षंजप्त्वापद्मा निहोमयेत् ॥ ६७ ॥ श्रीबीजपूर्वमनुनातस्यश्रीःसर्वतोमुखी ॥ एवंजप्त्वाप क्वबिल्वैर्हुत्वावश्यंजगद्भवेत् ॥ ६८ ॥ तिलैर्हुत्वादहेत्पापंदूर्वाभिश्चमहागदा न् ॥ ताम्बूलहोमादाप्नोतिभोगान्नृपतिदुर्लभान् ॥ ६६ ॥ अर्चयित्वातुयोग ङ्गांतुलसीमञ्जरींक्षिपेत् ॥ मन्त्रंपठित्वालक्षैकमेकान्तेस्थिरमानसः ॥ ७० ॥ गङ्गाप्रवाहेतस्यस्याद्वाग्विभूतिविजृम्भिता ॥ अथान्यंसम्प्रवक्ष्यामिवामाचा राद्यनाशनम् ॥ ७१ ॥ बहिर्यजनकर्त्तारःसिद्धाःस्युर्यत्प्रभावतः ॥ तारोन मोभगवतिवाग्भवंचलिहिद्वयम् ॥ ७२ ॥ हिलिद्वयंचगङ्गेमांपावयद्वितयंवदे त् ॥ स्वाहान्तःसप्तविंशार्णोमनुःपापप्रणाशनः ॥ ७३ ॥ ईश्वरोस्यमुनिश्छ न्दोमितंगङ्गाचदेवता॥ रामवेदेषुसप्ताङ्गनेत्रार्णैरङ्गकल्पनम् ॥७४॥ रक्ताम्बरां रक्तवर्णांशूलकुम्भाभयावरान्॥करैःसन्दधतींस्मेरांकच्छपस्थांसुरादिभिः॥७५॥

---

१ तीन, चार, पांच, तीन, दो अक्षरोंको क्रमसे षडङ्गोंमेंन्यासकरे जैसे ॐ नमः हृदयाय नमःशिखायै शिरसेस्वाहा नारायण्यै शिखायैवषट् दशहरायै कवचायहुम् गङ्गायै नेत्रत्रयायवौ-षट् स्वाहा अस्त्रायफट् २ ॐ नमोभगवति ऐं लिहिंलिहिहिलिहिलि गङ्गेमां पावय पावय स्वाहा ३ तीन, चार पांच, सात, छः और दो अक्षरोंको क्रमसे न्यासकरे जैसे ॐनमः हृदयायनमः भगवतिशिरसेस्वाहा इत्यादि इस मन्त्रके प्रथम ॐ आदिक सातअक्षरों को निकालकर ऐं लिहिलिहि इत्यादिक बीसअक्षरका और मन्त्रहै ॥

सदैवसर्वपापस्यनाशायमुनिपेविताम् ॥ कर्णिकायांयजेद्देवींपडस्रेष्वङ्गपूजनम् ॥ ७६ ॥ ततोऽभ्यर्च्येत्तुकावेरींयमुनांगण्डकीमपि ॥ कौशिकींचसमभ्यर्च्य तद्वाह्यदलेषुच ॥ ७७ ॥ सुरासिन्धुमासवाब्धिदुग्धसिन्धुंमधूद्भवम् ॥ दधिसिन्धुंचाज्यसिन्धुंमद्यसिन्धुमिराभवम् । ७८ ॥ धातुसिन्धुंरत्नसिन्धुंसिन्धुमिक्षुरसोद्भवम् ॥ माध्वीसिन्धुंक्षारसिन्धुंसुधायाःसिन्धुमुद्भवम् ॥७९ ॥दिगीश्वरान्भूपुरेचपूजितैवंसरिद्वश ॥ अलोभाद्वाममार्गेपिकृतंपापंविनाशयेत् ॥८०॥ वर्णलक्षंजपेद्धोमःपद्मैःप्रोक्तोदशांशतः ॥ एवंसिद्धमनुर्मन्त्रीमर्वादिनिर्जलस्थले ॥ ८१ ॥ देशेगत्वाजलार्थंतुपुरश्चर्य्यांसमाचरेत् ॥ होमादिसर्वंनिर्वर्त्यगङ्गामावाहयेत्ततः ॥ ८२ ॥ तत्रकूपादिकंकृत्वाभवेत्तदमृतोपमम् ॥ कल्पस्थापिततोयौघंसमस्तगदनाशनम् ॥ ८३ ॥ इयमादिमसप्तार्णहीनास्याच्चनखाक्षरी ॥ प्राग्वन्मुन्यादिकंबाणवेदत्रित्रित्रिवाहुभिः ॥ ८४ ॥ मन्त्रार्णैःस्युःषडङ्गानि पुरश्चर्य्यातुलक्षकम् ॥ होमद्रव्यादिकंप्राग्वत्सिद्धमन्त्रःसमाचरेत् ॥ ८५ ॥ प्रयोगाञ्जलमध्येतुस्थित्वाजप्त्वायुतम्मनुम् ॥ त्र्यहाद्वर्षाकालेपिवृष्टिर्भवति भूयसी ॥ ८६ ॥ अयुतंचमनुंजप्त्वासहस्रैर्जलजैर्हुनेत् ॥ सम्पाताज्यंपिबेद्या स्त्रीगौर्वाक्षीरनिधिर्भवेत् ॥ ८७ ॥ अनेनमन्त्रितंतोयंवर्षमेकंपिबेत्तुया ॥ तस्याःपुत्राःप्रजायन्तेभीष्मतुल्यपराक्रमाः ॥ ८८ ॥ एतन्मन्त्रजपासक्तपादतीर्थंक्षिपेत्कृदि ॥ भूताविष्टस्यतत्कालंमुक्तोभवतिनान्यथा ॥ ८९ ॥ तारोहिलिमिलिद्वन्द्वंगङ्गेदेविनमोमनुः ॥ तिथिवर्णोस्यमुन्यादिपूजापूर्ववदीरिता ॥ ९० ॥ त्रिद्विद्व्यक्षिकृतद्व्यर्णैःषडङ्गविधिरीरितः ॥ एतस्यभजनाज्जन्तोर्नान्तीर्थेमरणम्भवेत् ॥ ९१ ॥ तारोलज्जारमाद्यार्दंततोभगवतीपदम् ॥ सम्बुद्धौगङ्गदयितेनमोवर्मतथास्त्रकम् ॥ ९२ ॥ अष्टादशार्णोमन्त्रोयम्मुन्याद्यम्पूर्ववन्मतम् ॥ जपादिनासिद्धमन्त्रःप्रयोगानाचरेदपि ॥ ९३ ॥ पुत्र

---

१ पांच,चार, तीन, तीन, तीन और दोअक्षरोंको क्रमसे न्यासकरे जैसे ऐं लिहि लिहि हृदयायनमः हिलि हिलि शिरसेस्वाहा इत्यादि २ ॐ हिलिमिलि मिलि गङ्गेदेवि नमः ३ तीन दो दो दो चार दो अक्षरोंको क्रमसे न्यासकरे जैसे ॐ हिलि हृदयाय नमः मिलि शिरसे स्वाहा इत्यादि ४ ॐ ह्रीं श्रीं नमो भगवति गङ्गदयिते नमो हुंफट् ॥

जीवफलैर्होमात्पुत्रःशीलयुतोभवेत् ॥ गुडूच्यारोगनाशःस्याद्रमापद्मादिहो
मतः ॥ ९४ ॥ लक्ष्मीप्राप्तिःश्रीफलैश्चसर्षपैरभिचारकम् ॥ जातिप्रसूनैर्व
श्यंस्याज्जपापुष्पैर्जयोभवेत् ॥ ९५ ॥ अथातःसम्प्रवक्ष्यामिवाङ्मत्याश्चम
नुद्वयम् ॥ वाग्बीजप्रथमंह्यत्रनारदोस्यमनोर्मुनिः ॥९६॥ छन्दोनुष्टुब्देवतात्र
वाङ्मयीपरिकीर्त्तिता ॥ बीजैपूर्वैश्चषड्दीर्घैःषडङ्गविधिरीरितः ॥ ९७॥ श्वे
ताम्बरांश्वेतवर्णांश्वेतगन्धानुलेपनाम् ॥ सुधाकुम्भंचपद्मंचवीणांपुस्तकमेव
च ॥ ९८ ॥ करैर्दधानांमीनस्थांमुक्ताभरणभूषिताम् ॥ एवंध्यात्वाकर्णिका
यांयजेद्देवींषडस्रके ॥ ९९ ॥ रुद्रधारांमतिमतींफल्गुंविष्णुमतींतथा ॥ प्रभा
वतींभानुमतींनूपुरेतुदिगीश्वरान् ॥ ४०० ॥ लक्षत्रयंजपेन्मन्त्रंपञ्चखाद्यैस्त
थाहुनेत् ॥ तर्पणादिततःकृत्वासिद्धमन्त्रःप्रजायते ॥ १ ॥ सद्योजातस्य
बालस्यजिह्वायांबीजमालिखेत् ॥ मधुनास्वर्णलेखन्यासोष्टवर्षैःकविर्भवेत् ॥
२ ॥ वाङ्मत्यांवाथगङ्गायांपुरश्चर्य्यांकरोतियः ॥ द्वितीयादप्रतिग्राहीभिक्षा
शीवाथमौनवान् ॥ ३ ॥ ब्रह्मचारीभूमिशायीश्वेताम्बरधरःशुचिः ॥ वाक्
सिद्धिंलभतेवश्यंदाताभोक्तात्वयाचकः ॥ ४ ॥ ऐंमात्रपावाग्बीजानिवदेन्
ङेन्तांचवाङ्मतीम् ॥ नमोममेतिचपदंधारणांचधियन्तथा ॥ ५ ॥ वाचंगु
णान्प्रदेहीतिस्वाहान्तस्तत्त्ववर्णकः ॥ मुन्यादिकन्तथापूजापुरश्चर्य्याचपूर्व
वत् ॥ ६ ॥ स्खलज्जिह्वोमनुष्योद्द्यादिमंतुतुलसीदले ॥ वचाकल्केनमन्त्रंतु
लिखितंभानुवासरे ॥ ७ ॥ हविष्यमन्नम्भुञ्जीतमौनीलवणवर्ज्जितम् ॥ सप्त
भिर्भानुवारैश्चसाक्षात्स्याद्धिषणोपमः ॥ ८ ॥ अश्रुतग्रन्थबोधायब्रह्मचारी
जितेन्द्रियः ॥ रवौतुपायसेमन्त्रंलिखेत्स्वर्णशलाकया ॥ ९ ॥ तदेवपायसं
भुक्त्वाध्यात्वादेवींस्वपेन्निशि ॥ स्वप्नेतमर्थंशृणुयात्प्रातर्बीजंस्वयंस्मरेत् ॥ १० ॥
अथातःसम्प्रवक्ष्यामिमनुकर्णीमनुद्वयम् ॥ तारोवाग्ह्रींरमाकामस्तारोमंमणि
कर्णिके ॥ ११ ॥ नमोन्तश्शाक्रवर्णोयंमनुःपरमदुर्लभः ॥ मुनिर्व्यासोतिश

१ ऐं नमः २ ऐं आं हृदयाय नमः ऐं ईं शिरसे स्वाहा ऐं ऊं शिखायै वषट् ऐं ऐं कवचा
यहुम् ऐं औं नेत्रत्रयायवौषट् ऐं अः अस्त्रायफट् ३ श्रीं ह्रीं ऐं वाङ्मत्यै नमो मम धारणां
धियंवाचंगुणान्प्रदेहिस्वाहा ४ ॐ ऐं ह्रीं श्रीं क्लीं ॐ मंमणिकर्णिके नमः ॥

करीलन्दःस्यान्मणिकर्णिका ॥ १२ ॥ देवताचन्द्रनेत्राक्षिद्वीषुद्वयर्णैःषड ङ्गकम् ॥ बीजपूरंदक्षहस्तेवामेचेन्दीवरस्रजम् ॥ १३ ॥ बद्धाञ्जलिःश्वे तवस्त्रात्र्यचाचन्द्रनिभानना ॥ पश्चिमाभिमुखीस्मेरापद्मस्थापद्ममालिका ॥ १४ ॥ नानाभरणभूषाढ्याध्येयाश्रीमणिकर्णिका ॥ लक्षत्रयंजपेन्मन्त्रं जुहुयात्तद्दशांशतः ॥ १५ ॥ पुण्डरीकैरुक्तयन्त्रेयजेत्तांगङ्गयासमम् ॥ आवाह्यकलशेदेवींपूजयेदयुतंजपेत् ॥ १६ ॥ जन्मंकारागृहस्थायवाप्रसूति विरोधने ॥ पायसंस्याद्द्वयोर्मुक्तीरोगपीडाविनश्यति ॥ १७॥ भूतप्रेतंपिशा चानांमोक्षदंपरमंमतम् ॥ भुक्तिमुक्तिप्रदोमन्त्रोधनधान्यसमृद्धिदः ॥ १८ ॥ वंशवृद्धिकरःप्रोक्तःकाशीवासप्रदायकः ॥ तारोमंमणिशब्दान्तेकर्णिकेप्रणवा त्मिके ॥ १६ ॥ नमश्चतुर्दशार्णोयंमुन्याद्यंपूर्ववन्मतम् ॥ पदैःसम्पूर्णमन्त्रेण षडङ्गविधिरीरितः ॥ २० ॥ ऐंश्रीं मेकलकन्यायैनर्मदायैहृदादिकम् ॥ सोमो द्भवायैदेवापगायैहृदयपूर्वकम् ॥ २१ ॥ हृदादिसुप्रकल्पायैहृदयंदेववर्णकः॥ भृग्वर्षिरमितंछन्दोदेवतानर्मदामता ॥ २२ ॥ ङेन्तैःपृथक्पञ्चपदैःसमस्तैरङ्ग कल्पनम् ॥ कनकाभांकच्छपस्थांत्रिनेत्रांबहुभूषणाम् ॥ २३ ॥ पद्माभयसुधा कुम्भवरदान्बिभ्रतींकरैः ॥ मध्येदेवींषड्दलेषुषडङ्गानिप्रपूजयेत् ॥ २४ ॥ घोणांज्योतिष्मतींचापिवामदक्षिणतोयजेत् ॥ इन्द्रादयोदिगीशाश्चपूज्या भूपुरवीथिषु ॥ २५ ॥ लक्षंजपेद्धुनेद्योवैभुक्तिर्मुक्तिस्ततोभवेत् ॥ २६ ॥

इति महामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेभैरवादिमनुकथनंनामद्वाविंशःप्रकाशः॥२२॥

---

श्रीदेव्युवाच ॥ राज्ञांभाग्यवतांदेवयैश्चरक्षाभिजायते ॥ दुर्ग्रहाश्चयथादुः खंदातुंशक्तानविद्विषः ॥ १ ॥ कथंस्यात्स्थिरसम्पत्तिःसन्ततिश्चकथंक्रिया ॥

---

१ एक दो दो दो पांच दो अक्षरों को क्रमसे न्यासकरे जैसे ॐ हृदयाय नमः ऐं ह्रीं शिरसे स्वाहा इत्यादि २ ॐ मंमणिकर्णिके प्रणवात्मिके नमः ३ ॐ हृदयायनमः मंशिर से स्वाहा मणिकर्णिके शिखायैवषट् प्रणवात्मिके कवचायहुम् नमः नेत्रत्रयायवौषट् ॐ मंमणिकर्णिकेप्रणवात्मिके नमः अस्त्रायफट् ४ ऐं श्रींमेकलसुतायै नमो नर्मदायै नमस्सोमो द्भवायैदेवापगायैनमःसुकल्पायैनमः ५ पांचपदों और समस्तमन्त्रको षडङ्गों में न्यासकरे जैसे ऐं श्रीं मेकलसुतायै नमः हृदयाय नमः इत्यादि ॥

साधकैस्तुप्रकर्त्तव्याकथंसिद्धिःप्रजायते ॥ २ ॥ ईश्वरउवाच ॥ अथयन्त्रविधिंवक्ष्येसर्वतन्त्रेषुगोपितम् ॥ सिद्धस्यलेखनादेवयन्त्रासिद्धिःप्रजायते ॥ ३ ॥ नभावियन्त्रकार्य्येतुसिद्धस्यापितदाभवेत् ॥ दुःखप्रदर्शनंपूर्वंतदायन्त्रन्नुकारयेत् ॥ ४ ॥ साधकस्यशुभेघस्रेसमाराध्येष्टदेवताम् ॥ स्वप्यात्रिदिवसंभूमौहविष्याशीजपेत्ततः ॥ ५ ॥ एतद्यन्त्रंकरिष्यामिममतत्कीदृशंप्रभो ॥ स्वप्नेवदेत्तुदेवेशस्तदङ्गत्वेनपूजनम् ॥ ६ ॥ कृत्वाप्रदोषसमयेलिखेत्त्रिदिवसंभुवि ॥ तृतीयदिवसेरात्रौयथास्वप्नःप्रजायते ॥ ७ ॥ तथैवाज्ञांगृहीत्वातुसत्स्वप्नेवालिखेद्बुधः ॥ अस्वप्नेवाथसुस्वप्नेनैवकुर्य्यालिखेन्नतत् ॥ ८ ॥ जीवसंस्थापनंयन्त्रेकुर्य्याद्येनफलंलभेत् ॥ षष्ठन्तंसाधकपदंमध्येबीजार्णयोर्लिखेत् ॥ ९ ॥ द्वितीयान्तंसाध्यमध्येकुरुद्वन्द्वंचपार्श्वयोः ॥ हंसोयन्त्रस्यबीजंस्यान्मध्यभागादधोलिखेत् ॥ १० ॥ हंसःसोहंमनोरस्यलिखेदेकैकमक्षरम् ॥ ईशानादिषुकोणेषुदक्षपार्श्वेचईद्वयम् ॥ ११ ॥ ठद्वयंवामपार्श्वेचलिखेत्पूर्वादितःक्रमात् ॥ लंनंमंक्षंतथावंयंसंहंपूर्वादिकेलिखेत् ॥ १२ ॥ ईशानसोमयोर्मध्येआंह्रींवायव्यसोमयोः ॥ एवंदिक्पालबीजानिविन्यसेद्दिक्षुचक्रमात् ॥ १३ ॥ यन्त्रराजायविद्महेवरप्रदायधीमहि ॥ तन्नोयन्त्रम्प्रचोदयात् ॥ १४ ॥ एतस्याःप्रतिकाष्ठायांलिखेद्वर्णत्रयंत्रयम् ॥ बहिःप्राणप्रतिष्ठायामन्त्रेसर्वत्रवेषयेत् ॥ १५ ॥ एवन्तुलिखितंयन्त्रंसर्वसिद्धिप्रदायकम् ॥ स्थूलानुक्तौभूर्जपत्रेक्षौमेवाम्भोजपत्रके ॥ १६ ॥ यन्त्रंविलिख्यगुटिकांबद्ध्वासूत्रेणवेष्टयेत् ॥ लाक्षयाछादितंस्वर्णैरौप्येताम्रेथवाक्षिपेत् ॥ १७ ॥ यद्देवताकंयन्त्रंस्यात्तद्बीजेनचपूजयेत् ॥ तदभावेमातृकार्णैर्यन्त्रपूजांसमाचरेत् ॥ १८ ॥ अष्टोत्तरसहस्रंतुमूलंजप्त्वाहुनेद्घृतम् ॥ तत्रपात्रेनसंसिक्तंकृत्वामन्त्रंनियोजयेत् ॥ १९ ॥ मूर्द्धिबाहौगलेवापितत्तदिष्टार्थसिद्धये ॥ उपास्यावाभूतलिपिर्यन्त्रसिद्धिविधायिनी ॥ २० ॥ अक्लेशेनैवसर्वेषांमन्त्राणांसिद्धिमाप्नुयात् ॥ मन्त्रोद्धारंप्रवक्ष्यामियन्त्रोद्धारंसबिन्दुकम् ॥ २१ ॥ अक्प्रत्याहारमुच्चार्य्यरोंरौंडोंडौंततोवदेत् ॥ हंयंरंवंततोलंटंकंखंगंघमितिक्रमात् ॥ २२ ॥ वर्गान्त्यमाद्यद्विच्यब्धिवर्णान्वर्गचतुष्टये ॥ वर्गेषुप्राक्पराशांखंसमेवंद्व्यब्धिवर्णकः ॥ २३ ॥

ऋषिःस्याद्दक्षिणामूर्त्तिर्गायत्रीछन्दईरितम् ॥ वर्णेश्वरीदेवतास्यषडङ्गानिस माचरेत् ॥ २४ ॥ स्वरहीनैर्हयाद्यैश्चैर्मन्त्रार्णैःपञ्चपञ्चभिः ॥ गुदेलिङ्गउरोना भिकण्ठेपुमध्यकेशयोः ॥ २५ ॥ शिरसिब्रह्मरन्ध्रेचक्रमान्न्यस्यानवस्वराः ॥ ऊर्ध्वेप्राग्दक्षिणोदक्चपश्चिमेषुमुखेषुच ॥ २६ ॥ हंयंटंरंवंलमितिन्यसेद्बीजा निवैक्रमात् ॥ ततःकराग्रेमूलेचकूर्परेऽङ्गुलिसन्धिषु ॥ २७ ॥ दक्षवामक्रमे णैवटादिवर्गंचचादिकम् ॥ वर्गंन्यसेत्तथापादाग्रकेमूलेचजानुनोः ॥ २८ ॥ तथासन्धावङ्गुलीनांगुल्फेसर्गादिनादिकान् ॥ ठद्वयंपार्श्वयुग्मेचनाभौपृष्ठे चमादिकान् ॥ २९ ॥ गुह्येहृत्ककुदोर्मध्येशषसान्विन्यसेत्क्रमात् ॥ ततो भूतलिपिंध्यायेत्त्रिनेत्रांचन्द्रशेखराम् ॥ ३० ॥ वराक्षमालापद्मानिकपालंबि भ्रतींकरैः ॥ लक्षंप्रजप्याद्युतंघृतंहुत्वाचतर्पयेत् ॥ ३१ ॥ एवंभूतलिपिःसे व्यायन्त्रसिद्धिःप्रजायते ॥ श्रीविद्याराधनेचापिसमर्थोजायतेनरः ॥ ३२ ॥ अथाहंसम्प्रवक्ष्यामिहैरम्बंयन्त्रमुत्तमम् ॥ भूर्जपत्रेलिखेद्यन्त्रंकुङ्कुमेनमदेनच ॥ ३३ ॥ लिखेद्भूमिगतंमध्येमूकस्येतितदुद्धृतम् ॥ अमुकंचेत्यधःस्थानेवशंकु र्वितिपार्श्वयोः ॥ ३४ ॥ इत्यादिकंस्वेष्टकर्मपदंज्ञात्वालिखेद्बुधः ॥ षट्षड् भागेकेशराणांगांगींगूंगैंचगौमिति ॥ ३५ ॥ गश्चेतिविलिखेद्यन्त्रेपूर्वाशा दिप्रदक्षिणम् ॥ हेरम्बमालामन्त्रंचगंनमोवह्निगेहिनीम् ॥ ३६ ॥ अंआं ह्रींक्रींनमोऽन्तंसर्वविद्याधिपंवदेत् ॥ सर्वार्थसिद्धिदायेतिसर्वदुःखपदंवदेत् ॥ ३७ ॥ प्रशमनायैह्येहिभगवन्सर्वानुवादय ॥ संक्षोभयद्वितयंह्रींगांनमोव ह्निगेहिनी ॥ ३८ ॥ अंआंह्रीमितिमन्त्रोयंप्रोक्तःषट्पञ्चवर्णकः ॥ पद्माद्बहिः प्रकर्त्तव्यंवर्त्तुलद्वितयन्ततः ॥ ३९ ॥ ततःप्रथमवीथ्यांतुलिखेत्स्वाग्रात्प्रदक्षि णम् ॥ लक्ष्मीबीजानिपरतऐंबीजेनप्रवेष्टयेत् ॥ ४० ॥ ततश्चगुटिकांकृत्वा श्वेतसूत्रेणवेष्टयेत् ॥ अकृत्वाचाग्निसम्बन्धंतांत्रिलोहेनिधापयेत् ॥ ४१ ॥ ज पादिमालामन्त्रस्यकुर्य्याद्धेरम्बयन्त्रवत् ॥ अमितंछन्दइत्युक्तंयन्त्रंदद्यादभी प्सितम् ॥ ४२ ॥ षट्कोणमध्येश्रीबीजपुटितंप्रणवंलिखेत् ॥ साध्यनामच तन्मध्येतद्बाह्येष्टदलंलिखेत् ॥ ४३ ॥ कामबीजंप्रतिदलंबाह्येसाङ्कुशपत्रकम् ॥ ग्लौंबीजंतद्दलेलेख्यंतद्बाह्येचलिखेत्पुनः ॥ ४४ ॥ चतुर्विंशद्दलंपद्मंतत्रया

र्णानिचालिखेत् ॥ चतुर्विंशत्यक्षरंचगणेशस्यमनुंशृणु ॥ ४५ ॥ लक्ष्मीर्गंग णपतयेवरवरदसर्वज ॥ नंमेवशमेत्युक्तानयस्वाहामनुर्मतः ॥ ४६ ॥ द्वात्रिं शद्दलपद्मंतुतद्बाह्येतत्रसंलिखेत् ॥ कादिकांस्तान्मातृवर्णान्सबिन्दूंस्तस्यबा ह्यतः ॥ ४७ ॥ चन्द्राष्टकयुतंकुर्य्याच्चतुरस्रंमनोहरम् ॥ तस्यकोणेपुलंबीजंलि खेत्तस्यबहिःपुनः ॥ ४८ ॥ वारुणंमण्डलंलेख्यमर्द्धचन्द्रसमप्रभम् ॥ तद्वेष्टये द्वंबीजेनतद्बहिर्वृत्तयुग्मकम् ॥ ४९ ॥ ह्रींबीजेनादिवीथ्यांतुवेष्टयेत्परमंकु शेः॥बीजंचाद्यन्तयोर्लेख्यंमहागणपतेरिदम् ॥ ५० ॥ यन्त्रंभूर्जेथशय्यांवा वसनेवासमालिखेत् ॥ गोरोचनागोमयन्तुकस्तूरीकेशरंतथा ॥ ५१ ॥ एतै श्चविलिखेद्यन्त्रंलेखनीस्वर्णरौप्यजा ॥ एतद्यन्त्रंधृतंयेनसत्वजेयोनरोभवे त् ॥ ५२ ॥ नदह्यतेवह्निनासौनभयंतस्करान्नृपात् ॥ रणेराजकुलेद्यूतेसंग्रा मेशत्रुसङ्कटे ॥ ५३ ॥ गृहेवनेजलादौवासर्वदासजयीभवेत् ॥ अनामिकार क्तयुक्तैरक्तद्रव्यैर्लिखेच्चतत् ॥ ५४ ॥ रक्तपुष्पादिभिश्चैवनैवेद्यैःपरिपूजयेत् ॥ मनोज्ञांचततोमूर्त्तिंकृत्वातदुदरेक्षिपेत् ॥ ५५ ॥ प्रतापयेच्चदीपाग्नौसप्ताहात्त्रि यमाप्नुयात् ॥ जप्त्वामनुंचाष्टशतंहोमयेच्चघृतंतदा ॥ ५६ ॥ अवश्यंवशये न्नारींविद्वेषणमथोच्यते ॥ विद्वेषिरक्तसंघृष्टश्मशानाङ्गारकेणच ॥ ५७ ॥ लिखेद्यन्त्रंतुमृतकवस्त्रपुञ्जेबहिष्कृते॥सम्यक्संपूजयेद्द्वन्द्वंद्वेपयेत्तद्ध्वजाग्रके ५८ ॥ स्थापयेद्वैरिसङ्घस्यविद्वेषोजायतेमहान् ॥ स्तम्भनंवक्ष्यतेचाथलिखेद्य न्त्रंशिलातले ॥ ५९ ॥ पीतद्रव्यैःपीतपुष्पैरर्कपुष्पैःप्रपूजयेत् ॥ पीतसूत्रैर्वेष्ट यित्वासाध्यस्यस्थापयेदसून् ॥ ६० ॥ तद्देहल्यास्त्वधस्ताच्चनिखनेत्स्तम्भका रकम् ॥ वाक्स्तम्भंवागतिस्तम्भंसेनास्तम्भंकरोतितत् ॥ ६१ ॥ श्मशाना ङ्गारमष्यातुमृतवस्त्रेसमालिखेत् ॥ नरास्थिनक्रोधसंयुक्तःपूजयेच्चन्दनादि भिः ॥ ६२ ॥ निखातंशवभूमौतदवश्यंमारयेद्रिपून् ॥ उत्खातमेतत्पयसाधौ तंयन्त्रंचशान्तिकृत् ॥ ६३ ॥ महागणपतेर्यन्त्रंप्रोक्तंषट्कर्मसिद्धिदम् ॥ द्वि तीयमथवक्ष्यामिसाधकाभीष्टदायकम् ॥ ६४ ॥ कृत्वाषट्कोणमादौतुतस्यम ध्येत्रिकोणकम् ॥ ॐकारंतस्यमध्यस्यमध्यगंबीजमालिखेत् ॥ ६५ ॥ त्रि कोणोर्ध्वेचतुर्दिक्षुश्रींह्रींक्लींग्लौंसमालिखेत् ॥ षट्कोणस्यचकोणेषुपूर्वाशा

दिक्रमेणच ॥ ६६ ॥ ॐश्रींह्रींक्लींग्लौंचगंचलिखित्वाषड्दलेलिखेत् ॥ तस्योपरिलिखेत्तत्रमनोर्वर्णास्त्रयंत्रयम् ॥ ६७ ॥ गणपतयइत्यादिवर्णैकंचाष्टमेदले ॥ कार्य्यंतस्यबहिर्वृत्तपञ्चकंप्रथमेलिखेत् ॥ ६८ ॥ वीथ्यग्रेतुअकारादीन्क्षकारान्तान्द्वितीयके ॥ अकारादिक्षकारान्तान्व्यत्यस्तांस्तुतृतीयके ॥ ६९ ॥ ऐंबीजैर्वेष्टयेत्तुर्य्यंह्रींबीजेनततोबहिः ॥ चतुरस्रद्वयंकुर्य्यात्त्रीणामर्थेयदाभवेत् ॥ ७० ॥ पुरुषार्थकृतंयन्त्रंत्वष्टास्त्रेणैववेष्टयेत् ॥ महागणपतेर्यन्त्रंलेख्यंहेमशलाकया ॥ ७१ ॥ अलक्तंचैवकाश्मीरकस्तूरीरोचनान्वितम् ॥ मेलयित्वाविभागेनपिष्ट्वाचन्दनवारिणा ॥ ७२ ॥ स्वर्णपट्टेथवासूत्रेधृतंप्राणप्रतिष्ठितम् ॥ आयुरारोग्यसम्पत्तिकीर्त्तिकृत्प्रीतिवर्धनम् ॥ ७३ ॥ अथयन्त्रंप्रवक्ष्यामिहरिद्रागणपस्यत्र ॥ लिखेदष्टदलंपद्मंकर्णिकायांतुवर्तुलम् ॥ ७४ ॥ तस्यमध्येसाध्यनामवेष्टितंप्रणवंलिखेत् ॥ प्रणवस्योत्तरेग्लौंचाग्रेतस्यजठरेतुगम् ॥ ७५ ॥ गकारमध्येह्रींकारंततःपद्मस्यदिग्दले ॥ भूबीजोदरगंहंचपूर्वाशादिषुविन्यसेत् ॥ ७६ ॥ आग्नेयादिकपत्रेषुकेवलंगंसमालिखेत् ॥ कमलंवाततोलेख्यंचतुरस्रद्वयाकृति ॥ ७७ ॥ अष्टकोणंतस्यकोष्ठाष्टकेभूपुरमालिखेत् ॥ तस्यगर्भेवकारंचसबिन्दुंकोणमस्तके ॥ ७८ ॥ कुर्य्याच्चहस्तिमुण्डानितेषांमध्येचहंलिखेत् ॥ तद्बहिश्चतुरस्रंचग्लौंतत्कोणेषुसंलिखेत् ॥ ७९ ॥ गंकारंदिक्षुविलिखेदास्येकर्णविरोचिते ॥ आदित्यबुधशुक्राणांमध्येकस्यापिवासरे ॥ ८० ॥ निशीथेनिर्जनेदेशेप्रलिप्तेगोमयाम्भसा ॥ प्रदीपदीपितेतत्रतथैवार्द्रकसंयुताम् ॥ ८१ ॥ संस्थापयेद्धरिद्रांच सम्यक्प्रक्षालितांजलैः ॥ स्थानाष्टकेगणेशस्यहरिद्रांपादसम्मिताम् ॥ ८२ ॥ मृदमानीयसंमील्यकन्ययापेषयेच्चताम् ॥ पश्चात्संशोधयित्वातांपञ्चविंशतिसंख्यया ॥ ८३ ॥ तांहरिद्रागणेशस्यमूलमन्त्रेणमन्त्रयेत् ॥ पश्चात्तांलेपयेन्मन्त्रीशुभेसूक्ष्मेसितेम्बरे ॥ ८४ ॥ अस्मिन्पटेलिखेद्यन्त्रमेतत्पूर्वोक्तमेवहि ॥ अत्रप्राणान्प्रतिष्ठाप्यपूजितंगुटिकीकृतम् ॥ ८५ ॥ गणेशस्यापिप्रतिमांचाङ्गप्रत्यङ्गसंयुताम् ॥ विनिर्माययत्रिभिर्भागैर्निशायांतद्धृदिक्षिपेत् ॥ ८६ ॥ प्राणसंस्थापनंभूयःकुर्य्यान्मूर्त्तौविचक्षणः ॥ गन्धपुष्पादिनैवेद्यैरभ्यर्च्यगणना

यकम् ॥ ८७ ॥ सदातन्निलयेन्यस्यसहस्रंसाष्टकंमनुम् ॥ संजप्यपूजयेद्र क्त्यापीतवर्णैश्चपुष्पकैः ॥ ८८ ॥ सिद्धौदनेननैवेद्यंनिवेद्याथबलिंहरेत् ॥ तण्डुलाञ्छालिसम्भूतान्प्रस्थमानमिताञ्छुभान् ॥ ८९ ॥ विदलीकृतमूर्द्गांश्चतदर्धंतत्रमेलयेत् ॥ गुडंचैवतथाभूयोनारिकेलंचतत्समम् ॥ ९० ॥ मरिचंमुष्टिमानंचसैन्धवंचतदर्धकम् ॥ तदर्धंजीरकंचाज्यंकुडवार्धसमंभवेत् ॥ ९१ ॥ एतत्सर्वंचतुःप्रस्थगोदुग्धेमन्दवह्निना ॥ पचेत्सिद्धौदनंचैतद्गणेशस्यमहत्प्रियम्॥ ९२॥अमुनापायसेनाथलड्डुकापूपकादिभिः॥ कर्पूरवासितैः पूगैस्ताम्बूलैश्चन्दनादिभिः ॥ ९३॥ तोषयित्वाविधानेनहरिद्रागणपंविभुम्॥ प्रणमेद्दण्डवद्भूमौस्तुत्वास्तुतिभिरादरात्॥ ९४॥ एवंयःकुरुतेनित्यंपञ्चभिःसप्तभिर्दिनैः ॥ विघ्नेश्वरप्रसादेनत्रैलोक्यंसचराचरम् ॥ ९५ ॥ स्तम्भयेत्साधकःसत्यंयुद्धभूमौमहानिशि ॥ स्थापयेद्वैरिणःसेनाव्याकुलास्तम्भिताभवेत् ॥ ९६ ॥ देशेग्रामेपुरेगेहेसभायांस्थापितेभुवि ॥ तत्तत्स्थानगतान्सर्वाञ्जनान्संस्तम्भयेन्नरः ॥ ९७ ॥ शाखिशाखागतंसम्यक्स्तम्भयेद्वर्षणंमहत्॥ अश्ववारणशालासुक्षणात्सर्वानुपद्रवान् ॥ ९८ ॥ सम्यग्निवेश्यचैतेपुस्थानेपुबलिमाहरेत् ॥ स्तम्भयेदखिलंविश्वंकिम्पुनर्वाञ्छितंजनम् ॥ ९९ ॥ अथ कृष्टिकरंवक्ष्येहरिद्रागणपस्यच ॥ हरिद्रांशोधयेद्वेश्मभृदाशोक्तेनवर्त्मना ॥ १०० ॥ लिखेदष्टदलंपद्मंकर्णिकायांतुवर्त्तुलम् ॥ तस्यमध्येसाध्यनामवेष्टितम्प्रणवंलिखेत् ॥ १ ॥ प्रणवस्योदरेह्रींचतस्यास्तुजठरेतुगम् ॥ तद्वेष्टयेत्साध्यनामह्रंगंभ्यांहरिदक्षरैः ॥ २ ॥ हरिद्राविघ्नमन्त्रार्णैर्वृत्तंकुर्यात्तदूर्ध्वतः ॥ ह्रींकारैर्वेष्टनंकृत्वालिखेदष्टदलेपुनः ॥ ३ ॥ ॐह्रींबीजंदलाग्रेषुवंबीजंचादिशालिखेत ॥ विदिक्पत्रंवेष्टयेचपूर्ववच्चाष्टकोष्ठकम् ॥ ४ ॥ तस्यपूर्वादिकोष्ठेपुद्रांद्रींक्लिंब्लूंक्रमाल्लिखेत् ॥ ५ ॥ विदिक्पत्रेपुसंलिख्यशूलान्कोष्ठाग्रतोलिखेत् ॥ शूलाग्रेष्वपिह्रंकारंतत्सन्धावर्धचन्द्रयोः ॥ ६ ॥ सम्पुटीकृत्यसंलिख्यमाययाकोणयुग्मके ॥ पञ्चमावरणंह्येतल्लिखितंपूर्ववर्त्मना ॥ ७ ॥ कृतप्राणप्रातिष्ठंतद्धरिद्राविघ्नकुक्षिगम्॥ ॐह्रंसम्पूज्ययत्नेनसमीरंस्थापयेद्बुधः॥ ८ ॥ चक्रिहस्तमृदापोह्यगणेशागारमृत्तिकाम् ॥ शरावयुगलंरम्यंनिर्माया

न्यत्रचोभयोः ॥ ९ ॥ विन्यस्यतंगणेशानंकुसुमैररुणैर्यजेत् ॥ बलिंदत्त्वाथ सम्पूज्यविघ्नेशंचन्दनादिकैः ॥ १० ॥ द्वितीयेनशरावेणविदधीतसुसाधकः ॥ प्रत्यहंकुर्वतस्त्वेयंसप्तभिर्दिवसैर्भुवि ॥ ११ ॥ साधकस्यसमायातिसन्निधौवा ञ्छितोजनः ॥ भूपालस्तत्सुतोवापिमहिषीवावराङ्गना ॥ १२ ॥ अमात्य स्तस्ययोषावासूरकन्यापिवाद्भुता ॥ आगच्छन्तिनसन्देहोमन्त्रिणःक्लिन्न चेतसः ॥ १३ ॥ यन्त्रमेतल्लिखित्वातुतारपत्रेगुडाम्भसः ॥ पूजितंस्थापित प्राणंदुग्धेनैवाभिषेचयेत् ॥ १४ ॥ साध्यस्याभिमुखेभूत्वाकथयेत्प्रजपेन्मनु म् ॥ तदानीमानयेन्नूनंकाम्यमानांतुसुन्दरीम् ॥ १५ ॥ सामुद्रंरामठंन्यस्य तस्यागारेहरिद्रया ॥ स्विन्नेनमर्दयित्वातुकृत्वासाध्याकृतिंशुभाम् ॥ १६ ॥ श्वेतार्कच्छदयुग्मातःसप्राणांसन्निवेश्यताम् ॥ दीपाग्नौतापयेन्मन्त्रंजपेद ष्टसहस्रकम् ॥ १७ ॥ क्षणादायातिकाभार्त्तावाञ्छितावरवर्णिनी ॥ नागव ल्लीदलेक्षौद्रलिप्तेयन्त्रमिदंलिखेत् ॥ १८ ॥ साध्यंसंस्मृत्यसम्पूज्यस्वैरंजसंप्रभ क्षयेत् ॥ सीमन्तिनीसमायातिशीघ्रंयौवनगर्विता ॥ १९ ॥ पत्रेपुष्पेतुवस्त्रा दौक्षौमेवापिलिखेत्क्रमात् ॥ यमुद्दिश्यात्रतस्यापिक्षणादाकृष्टिकारकम् ॥ २० ॥ प्रवाहाभिमुखोवापिसरित्सङ्गमनीरगः ॥ तर्प्पयेत्तज्जलैःशुद्धैरष्टोत्तरसहस्र कम् ॥ २१ ॥ शतयोजनदूरात्तुसाध्यमाकर्षयेद्ध्रुवम् ॥ बहुनोक्तेनकिंचात्रसमृ त्वायंप्राणिनंजपेत् ॥ २२ ॥ मनुमेनंविधानेनसतदाकर्षयेद्धितम् ॥ अथव क्ष्यामिवश्यार्थयन्त्रसाधनमुत्तमम् ॥ २३ ॥ यन्त्रंविलिख्यपूर्वोक्तंमायाबीज मुदास्यच ॥ तत्स्थानेकामबीजंचकाममध्येतुगंलिखेत् ॥ २४ ॥ बहिःश्लिष्टै र्मन्त्रवर्णैर्वेष्टयेद्यन्त्रबाह्यतः ॥ वेष्टयेत्कामबीजेनशेषंपूर्ववदेवहि ॥ २५ ॥ पूर्व वत्कृतविघ्नेशकुक्षिमध्येनिवेशयेत् ॥ विधिनास्थापितप्राणंशरेविन्यस्यतंजपे त् ॥ २६ ॥ रक्तमाल्यानुलेपाद्यैर्नैवेद्यैःपूर्ववत्कृतैः ॥ मनौसाध्याभिधांदत्त्वा स्थानेपूर्वसमीरिते ॥ २७ ॥ वशमानययुग्मंचजपेदष्टसहस्रकम् ॥ साध्यदि क्सम्मुखोभूत्वामन्त्रंमन्त्रीसमाहितः ॥ २८ ॥ विघ्नेशायबलिंदत्त्वाच्छादयेत्त चपूर्ववत् ॥ एवंदिनत्रयंकुर्वन्सप्तभिर्दिवसैर्बुधैः ॥ २९ ॥ रक्षोभूतपिशाचाद्या न्देवदानवपन्नगान् ॥ राजानंमन्त्रिणंराज्ञींस्त्रियंजप्त्वातथेप्सिताम् ॥ ३० ॥

वशयेत्साधकःशीघ्रंयावज्जीवंनसंशयः ॥ निशांशेनावशिष्टेननिजदेहेविले पयेत् ॥ ३१ ॥ अचलांकमलांलब्ध्वावशयेद्विश्वमञ्जसा ॥ हरिद्रयासमंचूर्णं शालितण्डुलसम्भवम् ॥ ३२ ॥ तत्समेनगुडेनापिमधुनासैन्धवेनच ॥ सम्य ग्विमर्दयित्वाचपिण्डाकारंपचेद्घृते ॥ ३३ ॥ निर्मायगणपंतेनयन्त्रंतद्धृदिनि क्षिपेत् ॥ समीरंचप्रतिष्ठाप्यगन्धाद्यैःपूर्ववद्यजेत् ॥ ३४ ॥ त्रिदिनंपूजयेत्त्वे वं यन्त्रमध्यात्पृथक्पृथक् ॥ प्रतिमांभक्षयेत्पश्चात्साध्यावश्याभवेद्ध्रुवम् ॥३५॥ शालिपिष्टादिपिण्डेनकृत्वासाध्याकृतिंशुभाम् ॥ अष्टाधिकशतंजप्त्वापूजितां स्थापितानिलाम् ॥ ३६ ॥ निवेद्यविघ्नराजायसाध्यंसंस्मृत्यभक्षयेत् ॥ वश येद्वाञ्छितंसाध्यंसदासर्वस्वदायिनम् ॥ ३७ ॥ वश्यमन्त्रंलिखेन्नाम्नीखाद्य पानादिवस्तुषु ॥ एवंकृत्वाजपेन्नात्रिसहस्रंसाष्टकंबुधः ॥ ३८ ॥ लक्षेणवशये त्साध्यंवसुमात्रस्यसाधकम् ॥ चन्दनागुरुकर्पूरनिशाकुंकुमरोचनाः ॥ ३९ ॥ मृगेभमदसंयुक्ताअष्टाङ्गंविघ्ननाशने ॥ सम्पिष्यतद्वशीकारयन्त्रमालिख्यपूर्व वत् ॥ ४० ॥ अर्चनादितथाकृत्वाजप्त्वाचाष्टोत्तरंशतम् ॥ लिम्पेदनेनगात्रं स्वंकुर्वतोस्यविशेषकम् ॥ ४१ ॥ ईक्षणात्स्पर्शनात्तत्त्रिलोकींवशमानयेत् ॥ एवंकृत्वाविधिंसद्योवशयेद्योषितःपुमान् ॥ ४२ ॥ चन्दनेनैववाकुर्य्याद्विधि मेनंफलप्रदम् ॥ द्विरेफश्चसदाभद्रामुशलीचन्द्रिकाजटी ॥ ४३ ॥ बन्धूकवाल कोशीरविष्णुक्रान्ताबलास्तथा ॥ वाराहीशतवीर्य्याचमायूरीचण्डलोचना ॥ ४४॥ सर्वौषधिरसेनैवनिशाभागार्धसम्मिता ॥ पिष्ट्वावश्याभिधंयन्त्रंनिर्माय प्रतिमामपि ॥ ४५ ॥ प्राणसंस्थापनंकृत्वाजपेदष्टसहस्रकम् ॥ शिष्टद्रव्येणति लकंकुर्य्यात्प्रातस्तुयोनरः ॥ ४६ ॥ त्रैलोक्यसम्पदासोपितिरस्कुर्य्याद्धनाधि पम् ॥ कपिलागोमयंव्योम्निनलिनीदलसम्पुटे ॥ ४७ ॥ आदायब्रह्मचर्य्ये णभेषजैरुदितंसमम् ॥ पञ्चगव्येनसम्मर्द्यपिण्डाकारंप्रकल्पयेत ॥ ४८ ॥ घृतप्लुतंदहेन्मन्त्री शोषयित्वैधितेनले ॥ समुद्धृत्यचतद्भस्म तन्मध्येयन्त्रमा लिखेत् ॥ ४९ ॥ समीरणंप्रतिष्ठाप्यगणपंतत्रपूजयेत् ॥ अष्टाधिकशतंमन्त्री जपित्वामन्त्रमुत्तमम् ॥ ५० ॥ काष्ठजेरूप्यरचितपात्रेकांस्यमयेतथा ॥ नि धायलापयेद्भस्मललाटादिषुसाधकः ॥ ५१ ॥ कान्तिपुष्टिधनारोग्यपुत्रपौत्र

यशःपशून् ॥ लब्ध्वालोकप्रियोभूत्वादीर्घजीवीभवेद्ध्रुवम् ॥ ५२ ॥ पुरोधानृपतेरक्षांभस्मनासायमन्वहम् ॥ कुर्य्यादायुष्यवृद्ध्यर्थंयोवैविजयसम्पदे ॥ ५३ ॥ तस्मैनिष्कत्रयंनित्यंमन्त्रीकुर्य्यात्पुरोधसे ॥ रक्ताम्बरसुवर्णैस्तुप्रोक्तभेषजपूर्वकम् ॥ निधायकपिलाज्येनतद्वर्त्यानृकपालके ॥ ५४ ॥ दीपंप्रज्वाल्यतेनैवजपन्मन्त्रंपुनःपुनः ॥ अष्टोत्तरशतंजप्त्वागृहीत्वाकज्जलंचतत् ॥ ५५ ॥ नेत्रेदत्त्वाचवशयेन्निखिलंविश्वमोजसा ॥ शुद्धयानिशयाकृत्वाविघ्नेशंप्रोक्तलक्षणम् ॥ ५६ ॥ प्रोक्तंगणपतेर्मन्त्रंनरोजप्त्वासहस्रकम् ॥ अष्टाधिकंसमभ्यर्च्यचन्दनादिभिरादरात् ॥ ५७ ॥ शिखायांबन्धयेन्नित्यंसर्वतोजयमाप्नुयात् ॥ संग्रामेविपिनेदुष्टश्वापदोत्थभयेपरे ॥ ५८ ॥ आपणव्यवहारेषुद्यूतेवादेमहार्णवे ॥ राजश्चरसमूहेषुसभार्यांशत्रुसङ्कटे ॥ ५९ ॥ विजयीजायतेवीरोरोगकृत्याविवर्जितः ॥ पराङ्गनासमूहेषुशोभतेमन्मथोयथा ॥ ६० ॥ नागवल्लीदलेयन्त्रंलिखित्वानागवारिणा ॥ सप्राणमर्चितंजसमष्टोत्तरसहस्रतः ॥ ६१ ॥ अशितंवाञ्छितंसाध्यंवश्यंनयतितत्क्षणात् ॥ गोदुग्धेसतिलेमन्त्रीकथितेसुदृढीकृते ॥ ६२ ॥ यन्त्रंविलिख्यतेनैवनिर्मायगणनायकम् ॥ अभिमन्त्र्यशतंसाग्रंतक्षयेद्वशयेज्जगत् ॥ ६३ ॥ नारिकेलंगुडोपेतंसघृतंत्रिशतंहुनेत् ॥ अन्वहंकृतसम्पातमष्टाधिकशतंबुधः ॥ ६४ ॥ सम्पातंलक्षयेद्यन्त्रंवशमायातिसोचिरात् ॥ अन्यत्किमुबहूक्तेनसाध्यंसञ्चिन्तयन्मनुम् ॥ ६५ ॥ जपेत्सदासतांयातियावदायुर्नसंशयः ॥ वशीकरणमन्त्रस्यप्रयोगोयमुदाहृतः ॥ ६६ ॥ अथातःसम्प्रवक्ष्यामियन्त्रमुच्चाटनम्परम् ॥ उक्तरीत्यालिखेद्यन्त्रंहूंकारंतस्यमध्यतः ॥ ६७ ॥ हूंकारमध्येयंलेख्यंतस्यमध्येयथातथा ॥ तस्यमध्येसाध्यनामयंलिखेत्पत्रमध्यतः ॥ ६८ ॥ गंबीजंचदलाग्रेषुतदग्रेचाष्टकोणकम् ॥ कोणेकोणेत्रिशूलञ्चशूलाग्रेषुनिवेशितम् ॥ ६९ ॥ पद्बिन्दुलाञ्छितंकार्य्यंबहिर्वृत्तंसुशोभनम् ॥ पद्बीजस्थानकेलेख्यंयंबीजेनचवेष्टितम् ॥ ७० ॥ प्रणवंचतदालेख्यंनिशालेपनपूर्वकम् ॥ श्मशानाङ्गारसारेणध्वाङ्क्षपक्षशलाकया ॥ ७१ ॥ यन्त्रमेतत्समालिख्यस्थापयेदीरणंततः ॥ पिकमध्यस्थितध्वाङ्क्षगृहकाष्ठंप्रयत्नतः ॥ ७२ ॥ श्मशानवह्नौसंदह्यभस्मादायत

द्भवम् ॥ विघ्नाधीशगृहद्वाःस्थशर्करारजसान्वितम् ॥ ७३ ॥ यन्त्रमध्येप्रवि न्यस्यपुनस्तद्गुटिकीकृतम् ॥ शवालिप्तनिशालेपचिताभस्मास्थिनीतथा ॥ ७४ ॥ पेषयेच्चचिताङ्गारंकपिकच्छुंचवानरीम् ॥ साधकोमन्त्रसारेणनिर्माय गणपाकृतिम् ॥ ७५ ॥ तत्तस्यामध्यगंकृत्वापुनःप्राणान्प्रवेशयेत् ॥ चक्रिह स्तमृदाचैवसाध्यपादोत्थपांशुना ॥ ७६ ॥ शरावयुगलंमन्त्रीनिर्मायान्यत्र चोभयोः ॥ अन्यत्रतत्प्रविन्यस्यकृष्णपुष्पैःप्रपूजयेत् ॥ ७७ ॥ मनावुच्चाटय द्वन्द्वंयोजयित्वाजपेन्मनुम् ॥ ७८ ॥ अष्टोत्तरसहस्रंतुच्छादयित्वापरेणत म् ॥ निखनेद्यस्यचद्वारिमासेनोच्चाटयेच्चतम् ॥ ७९ ॥ अथातःसम्प्रवक्ष्यामि यन्त्रंविद्वेषणाह्वयम् ॥ यन्त्रंपूर्ववदिनेलेख्यंमध्येयंचसबीजकम् ॥ ८० ॥ पद्ममष्टदलंपश्चात्त्रिशूलानिदलोर्ध्वतः ॥ त्रिशूलाग्रेतुहूंकारंहंकारेणतुवेष्ट येत् ॥ ८१ ॥ निशातुर्य्यांशमानेनमरिचंनिम्बमेवच ॥ द्वित्रित्रिद्वि गुणंपिष्ट्वाहेमपत्राम्बुनाततः ॥ ८२ ॥ मृतकर्पटकंपिष्ट्वाशेषमन्त्रमिमंलि खेत् ॥ पञ्चाङ्गंपारिभद्रस्यकाकिणीश्चतथापुनः ॥ ८३ ॥ चिताग्नौसन्दहे द्भस्मयन्त्रमध्येनिवेशयेत् ॥ संवृत्यविघ्नराजस्यकुक्षौपूर्ववदर्चयेत् ॥ ८४ ॥ पिचुमन्दभवैःपत्रैःकृष्णपुष्पैर्विशेषतः ॥ विद्वेषयद्वयंमन्त्रेजपेत्संयोज्यसा ष्टकम् ॥ ८५ ॥ सहस्रंचशरावंचनिखनेच्छादितंततः ॥ प्रीतयोर्विधिनाने नविद्वेषोभवतिध्रुवम् ॥ ८६ ॥ आदायगणपंमन्त्रीप्रीतयोरन्तराक्षिपेत् ॥ वैरम्प्रजायतेशीघ्रंदेशनाशोभवेद्द्वयोः॥८७॥ सतद्यन्त्रगतंभस्मगृहीत्वापथि विन्यसेत् ॥ गच्छतांपादसंस्पर्शाद्विवादस्तुमहान्भवेत् ॥ ८८ ॥ देशेग्रामेपुरेय त्रस्थापितोगणपोभवेत् ॥ वैरंचप्राणिवत्तत्रवैरंभवतिसर्वदा ॥ ८९ ॥ पारिभ द्रस्यपञ्चाङ्गमेकभागमितंभवेत् ॥ भागैकंमरिचस्यापिनिशायाश्चतथैवच ॥ ९० ॥ सन्दह्यभासितंपूर्ववत्मनासत्कृतंपुनः ॥ विकीर्णंवैरिणोमूर्द्ध्निकुर्याद्उ न्मादमूकताम् ॥ ९१ ॥ इतिविद्वेषणंप्रोक्तंमारणंकथ्यतेधुना ॥ पूर्वोक्तमन्त्र मालिख्यह्रींकारंतस्यमध्यतः ॥ ९२ ॥ मायाविघ्नेशबीजेद्धेहूंकारेतुसमालिखे त् ॥ लेख्यंदलेष्वग्निबीजंतद्वाह्येष्टास्रकंभवेत् ॥ ९३ ॥ चतुरस्रद्वयेस्याथरंत त्कोणाष्टकेलिखेत् ॥ त्रिकोणंतद्वहिःकार्यंत्रिकोणेचवरंलिखेत् ॥ ९४ ॥

मन्त्रप्रोक्तानि बीजानि वह्निकोणे लिखेदथ ॥ तदग्रहर्विर्वह्निकोणेषु वह्निबीजंस मालिखेत् ॥ ९५ ॥ निशांशुद्धांसमालिख्य मृतकर्पटकेशुभे ॥ चिताङ्गारोत्थ यामष्याकाकपक्षशलाकया ॥ ९६ ॥ यथोक्तंविलिखेद्यन्त्रमेतन्मारणनाम कम् ॥ कणारामठचव्याख्यनिशामरिचसद्वचाः ॥ ९७ ॥ स्नुहीक्षीरेणसंलि प्यपिष्ट्वाशवपटेथवा ॥ कारस्करस्यपञ्चाङ्गैरण्डबीजान्वितामृताम् ॥ ९८ ॥ पि ष्ट्वाकर्पटकेशौचेलिम्पेच्छेषंपुरोक्तवत् ॥ समीरंचप्रतिष्ठाप्यकृत्वागणपतिंततः ॥ ९९ ॥ यन्त्रस्यत्रिदलेन्यस्यपुनःप्राणप्रतिष्ठितम् ॥ मातृसद्मसमुद्भूतांगणेशा गारमृत्तिकाम् ॥२००॥ निम्बामृदंचकर्कन्धूवृक्षमूलसमुद्भवाम् ॥ श्मशानमृ त्तिकांतद्वत्करवीरद्रुममूलजाम् ॥ १ ॥ कुम्भकारकरस्पृष्टामूपरस्थानजांमृदम् ॥ पिष्ट्वाशरावयुगलंकृत्वाचान्यत्रचोभयोः ॥ २ ॥ यन्त्रंनिवेशयेच्चापिकृष्णपु ष्पैः प्रपूजयेत् ॥ कारस्करभवैःपत्रैर्नैवेद्यैश्चयथापुरा ॥३॥ उक्तमन्त्रपदस्थाने साध्यनामनिवेश्यहि॥मानयेत्पूजयेच्चैवसहस्रंसाष्टकंजपेत्॥४॥ दक्षिणाशामु खोभूत्वारजन्यांभूतवासरे ॥ चत्वरेपितृभूमौचमातृविघ्नगृहेथवा॥५॥ वल्मीके कोटरेवापिकारस्करतरूद्भवे ॥ विधायान्यशरावेचनिखन्यबलिमाहरेत् ॥६॥ साध्योयमपुरंयातिसप्ताहाज्ज्वरपीडितः ॥ अमोघवीर्यमेतद्धिविधानंभुविदु र्लभम् ॥ ७ ॥ भूदेवव्यतिरिक्तेपुराजवैरिषुयोजयेत् ॥ नृपोपिकारयेद्यस्तुक र्तारंतोषयेद्धनैः ॥ ८ ॥ कर्त्तापितद्दशांशेनप्रायश्चित्तंसमाचरेत् ॥ एतान्यु क्तानियन्त्राणिहरिद्रागणपस्यच ॥ ९ ॥ षट्षट्कर्मकराण्याशुगोपनी यानियत्नतः ॥ अथवक्ष्येमातृकायायन्त्रंसाधकसिद्धिदम् ॥ १० ॥ अष्टपत्रं लिखेत्पूर्वंमातृकूटंतुमध्यतः ॥ ह्सौंइतिचैवपत्रेषुकेशरेषुत्रिशःस्वराः ॥ ११ ॥ तस्योर्ध्वंभूपुरंकुर्याद्रचनेयंप्रदर्शिता ॥ एतद्यन्त्रस्यमध्यस्थंनामकृत्वाप्रयोज येत ॥ १२ ॥ प्रातर्मूर्द्धिशिरोबिन्दुमध्यस्थंसर्वसम्पदे ॥ अभिषेकाच्चधनकृत्पू जनाल्लोहकल्पिते ॥ १३ ॥ स्थापनाद्गृहदेशादौयन्त्रंसर्वार्थसिद्धिदम् ॥ सौवर्णेराजतेताम्रेपट्टेवायन्त्रमुद्धरेत् ॥ १४ ॥ यस्यप्रतिष्ठादेवस्यलिखेत्तन्ना मपूर्वकम् ॥ यन्त्रमध्येमहादेवंसम्यग्ध्यात्वातुतत्रच ॥ १५ ॥ प्राणप्रतिष्ठां कुर्वीतदेवींतत्रार्चयेत्पुनः ॥ स्पृष्ट्वायन्त्रंजपेन्मन्त्रमष्टोत्तरसहस्रकम् ॥ १६ ॥

मातृकानामतोयन्त्रंनिखनेच्चधरातले ॥ तत्रसम्यक्पूजायित्वामृदाभूमिंचपूजयेत् ॥ १७ ॥ मातरश्चोपरिस्थाप्याःस्वाभीष्टादेवताततः ॥ सान्निध्यंदेवतायाःस्यात्साधकःसुखमाप्नुयात् ॥ १८ ॥ अथोलिपीश्वरस्यान्यंवक्ष्येयन्त्रंसुसिद्धिदम् ॥ लिखेदष्टदलंपद्मंतन्मध्येज्ञानिनोमनुम् ॥ १९ ॥ हृद्ज्ञानिनइत्येषनमोन्तःसप्तवर्णकः ॥ ज्ञानिमन्त्रंवसुदलेपूर्वादिषुलिखेत्क्रमात् ॥ २० ॥ ह्रूंकारपुटितंयंचएकारंहंततःपुनः ॥ इंईउंऊंचएँलेख्यंचाष्टपत्रेषुमन्त्रिणा ॥ २१ ॥ सिद्धादिचक्रेसाध्यस्यनामाद्यर्णस्थितोभवेत् ॥ यन्त्रकोष्ठेतत्रसंस्थैर्वर्णैःसाध्यस्यनामकम् ॥ २२ ॥ पुटयित्वाष्टमंपत्रंलिखेदथचवेष्टयेत् ॥ वृत्तेनयन्त्रमुक्तंतन्मातृकायास्तथैवच ॥ २३ ॥ चन्दनस्यपटेलेख्यंचिरंजयतिदुःखदम् ॥ सर्वशान्तिकरंराहौरोहिण्यामुदयेसति ॥ २४ ॥ साधकस्यकरेबद्धंपूर्वोक्तंफलमादिशेत् ॥ एतस्याएवदेव्यास्तुवक्ष्यउच्चाटमारणम् ॥ २५ ॥ यन्त्रंप्राग्वच्चाष्टदलेकर्णिकायांमनुःश्रियम् ॥ रंकांपेश्वरायनमःप्रोक्तश्चाष्टाक्षरस्त्विह ॥ २६ ॥ ततोमध्यादष्टदिक्षुवर्णान्सम्पुटिताँल्लिखेत् ॥ ईमध्येपूर्वतोयैंचकंचंदंतंयमेवच ॥ २७ ॥ यंशंवंहंचप्राच्यांहिप्राग्वद्दासप्तमालिखेत् ॥ सिद्धादिचक्रकोष्ठस्थावर्णाःसम्पुटितास्तुये ॥ २८ ॥ बहिस्तुतेवेष्टनीयावायुमण्डलचक्रतः ॥ षड्बिन्दुलाञ्छितंवृत्तवेष्टितंरसकोणकम् ॥ २९ ॥ वायुमण्डलमेतत्स्यात्स्नात्वामन्दोदयेसति ॥ तालपत्रेलिखित्वारिगृहमध्येनिरापयेत् ॥ ३० ॥ अवश्यन्तस्यमृत्युस्स्याद्देहल्याधःप्रपूजितम् ॥ यदातदाभवेच्छत्रोरुच्चाटोनात्रसंशयः ॥ ३१ ॥ अष्टपत्रंलिखेत्पद्मंकर्णिकायांलिखेन्मनुम् ॥ क्रोस्वंठंठैनैफट्नमोमनुरष्टाक्षरःस्मृतः ॥ ३२ ॥ अष्टपत्रेषुलेख्यानिरंकारपुटितानितु ॥ उंईखंछंठंचयंचहंसंचेतिप्रवेष्टयेत्॥ ३३॥त्रिकोणेनाष्टमेपत्रेशत्रोर्नामलिखेदथ ॥ सिद्धादिचक्रेकथितायेवर्णास्तैश्चसंयुतम्॥ ३४ ॥ भौमोदयेकृत्तिकायांशववस्त्रेसमालिखेत् ॥ श्मशानाङ्गारकेणापिससाध्यःस्याद्यमातिथिः ॥ ३५ ॥ एवमष्टदलेचस्यान्नाममित्रार्णवेष्टितम् ॥ काश्मीरीयावकाभ्यान्तुभूर्जपत्रेलिखेत्पुनः ॥ ३६ ॥ अर्चयित्वाकरेचैवबध्नीयाद्वामकेतुयः ॥ सर्वत्रकुरुतेरक्षांयन्त्रमेतत्सुदुर्लभम् ॥ ३७ ॥ अथय

न्त्रान्तरंवक्ष्येप्राग्वदष्टदलंकुरु ॥ तत्कर्णिकायांविलिखेदोंवोंविंविंविधुन्तु दा ॥ ३८ ॥ यनमश्चेतिरुद्रार्णान्दलेषुविलिखेत्क्रमात् ॥ प्रादक्षिण्यने पूर्वादौवर्णान्बीजेनसंयुतान् ॥ ३९ ॥ अं ॐ वंधंकंचटंचधंभंचैवाष्टप त्रके ॥ प्राग्वत्साध्यंचमित्रार्णयुक्तंसम्यक्क्रमाल्लिखेत् ॥ ४० ॥ ततस्तुवे ष्टयेत्सर्वमर्धचन्द्रैःसुशोभनैः ॥ पूर्वाषाढाख्यनक्षत्रेलिखेच्छुक्रोदयेसति ॥ ४१ ॥ कुचन्दनोदकेनैतद्सुक्कम्भक्ष्येणभाग्यदम् ॥ वक्ष्येत्रिपुरभैरव्याय न्त्रंसर्वार्थसाधकम् ॥ ४२ ॥ नवयोन्यात्मकंसम्यक्त्रिकोणन्तस्यमध्यतः ॥ यायोनिस्तानमारभ्यप्राच्याभागात्प्रदक्षिणम् ॥ ४३ ॥ ससार्वकूटमेकैकं लिखेत्तानिवदाम्यहम् ॥ हकारश्चसकारंचतथौंकारसमन्वितम् ॥ ४४ ॥ नादबिन्दुसमायुक्तंमध्ययोनाविदंलिखेत् ॥ हकारश्चसकारंचककारश्चतथा लरौ ॥ ४५ ॥ नादबिन्दुयुतौचैवतत्तलेचसमालिखेत् ॥ हकारश्चसकारंचरेट मौकारसंयुतम् ॥ ४६ ॥ विसर्गाद्यमिदंकूटंत्रितीयेविलिखेत्ततः ॥ पुनरेता निकूटानिचतुस्सप्तादियोनिषु॥४७॥वृत्तद्वयन्तुतद्बाह्येवीथिकायाम्प्रवेष्टयेत्॥ सबिन्दुकैर्मातृकार्णैस्तद्बहिश्चाष्टकोणकम्॥४८॥ चतुरस्रद्वयेनैवकर्तव्यन्त त्रसंलिखेत् ॥ कामबीजन्तुकोणेषुयन्त्रमेतत्प्रवेष्टयेत् ॥ ४९ ॥ लाक्षयाच त्रिलोहेनहोमसम्पातसाधितम् ॥ बाहुमूलेधृतंयन्त्रम्पुत्रायुस्सुखदम्भवेत् ॥ ५० ॥ अथान्यत्त्रैपुरंवक्ष्येभूर्ज्जेषट्कोणमालिखेत् ॥ कोणेष्वपिलिखेत्कामंब हिःषोडशपत्रकम् ॥ ५१ ॥ कुर्य्यात्पत्रेषुविलिखेत्कामबीजानितद्बहिः ॥ कृत्वावृत्तद्वयंवीथ्यांहंबीजेनप्रवेष्टयेत् ॥ ५२ ॥ तद्बहिश्चतुरस्रन्तुकुर्य्याद्यन्त्रं विलेखयेत् ॥ गोरोचनाकुंकुमाभ्यांसम्पत्सौभाग्यकारकम् ॥ ५३ ॥ करो तिकविताकीर्त्तिसाधकस्यनसंशयः ॥ अथान्यत्सम्प्रवक्ष्यामित्रैपुरंत्रीवशङ्क रम् ॥ ५४ ॥ आदौलिखित्वाषट्कोणन्तन्मध्येकामबीजकम् ॥ काममध्ये तुंह्रीङ्कारंदलेषुविलिखेच्चतत् ॥ ५५ ॥ अग्न्यादिप्रादक्षिण्येनद्रांद्रींक्लींब्लूंस इत्यपि ॥ वृत्तद्वयञ्चतद्बाह्येकृत्वावीथीद्वयम्भवेत् ॥ ५६ ॥ वेष्टयेत्प्रथमांवी थींद्रांद्रींक्लींब्लूंसइत्यपि ॥ द्वितीयांमातृकावर्णैस्तद्बहिश्चतुरस्रकम् ॥ ५७ ॥ चतुरस्रेशकोणात्तुकामबीजंसमालिखेत् ॥ सुवर्णनिर्मितपट्टेकेशर्य्यामन्त्रमा

लिखेत् ॥ ५८ ॥ कण्ठेवादक्षिणेबाहौधृतंतत्स्त्रीवशङ्करम् ॥ दद्याद्यथेप्सि तान्कामान्साधकायरणेद्रुतम् ॥ ५९ ॥ अथातोराजमातङ्ग्यायन्त्रंवक्ष्येसु सिद्धिदम् ॥ सुवर्णरचितेपट्टेलेखिन्यास्वर्णरूप्यया ॥ ६० ॥ राजतेताम्र केवापिभूर्जेवापिमनोहरे । काश्मीरीरोचनैर्वायुतचन्दनवारिभिः ॥ ६१ ॥ लिखेद्यन्त्रंतुतत्रादौत्रिकोणंतुसमालिखेत् ॥ साध्यनामान्वितंतत्रह्रींक्लींबी जद्वयंलिखेत् ॥ ६२ ॥ ह्रींश्रींतस्यबहिःकुर्य्यात्पञ्चपत्रसरोरुहम् ॥ अंनमः प्रथमेपत्रेऽन्यस्मिन्भगवतीतिच ॥ ६३ ॥ मातङ्गेश्वरीतृतीयेसर्वजनमनोहरी ॥ चतुर्थेपञ्चमेपत्रेस्यात्सर्वमुखरञ्जिनी ॥ ६४ ॥ बहिश्चाष्टदलंकृत्वाक्लींह्रीं श्रींप्रथमेलिखेत् ॥ एतानपिलिखेत्तत्रसर्वराजवशङ्करीम् ॥ ६५ ॥ द्विती येतुदलेसर्वस्त्रीपुरुषवशङ्करीम् ॥ तृतीयेसर्वदुष्टेतिलिखेन्मृगवशङ्करीम् ॥ ६६ ॥ चतुर्थेसर्वसर्वेतिलिखेच्चापिवशङ्करीम् ॥ पञ्चमेसर्वलोकेतिलिखेन्मन्त्रवशङ्क रीम् ॥ ६७ ॥ लिखेत्षष्ठेतथायन्त्रेमुकंमेवशमानय ॥ स्वाहासप्तमपत्रेस्यात् श्रींह्रींऐंमौंचक्लींचऐं ॥ ६८ ॥ वृत्तद्वयन्तुतद्बाह्येवीथ्यान्तत्रप्रवेष्टयेत् ॥ बीजं षट्कोणकेप्रोक्तमष्टपत्रंद्वितीयके ॥ ६९ ॥ उक्त्वाश्रींचतृतीयादिपत्रसंस्थै श्चवर्णकैः ॥ ततोष्टपत्रजैर्वर्णैर्लिखेच्चैवाग्रतस्तदा ॥ ७० ॥ वृत्तद्वयेतुतद्बा ह्येतत्रवीथ्यांतुसंलिखेत् ॥ साध्यनामाक्षरयुतान्मातृकार्णान्क्रमात्क्रमात् ॥ ७१ ॥ तद्बहिश्चतुरस्रंचतत्कोणेषुसमालिखेत् ॥ साध्यनामयुतंकामबीजम त्यन्तशुद्धिमान् ॥ ७२ ॥ तेनलेख्यमिदंयन्त्रंसाधुसर्वेषुजन्तुषु ॥ एतद्यन्त्रं लिखेच्चैवजप्त्वामन्त्रमनन्यधीः ॥ ७३ ॥ हुत्वाघृतादिकंचैवगुटिकीकृत्यसा धकः ॥ साभिषेकःस्वयंबाहौदक्षिणेतद्विधारयेत् ॥ ७४ ॥ पूज्यतेत्रिदशाद्यै श्चकिंपुनर्मानवोत्तमैः ॥ आयुरारोग्यमैश्वर्य्यमिच्छेद्यद्यत्सवाञ्छितम् ॥ ७५ ॥ अथातःसम्प्रवक्ष्यामिभुवनेश्यास्तनूजदम् ॥ कुर्य्याच्चषड्दलंपद्मंकर्णिकायां चह्रींलिखेत् ॥ ७६ ॥ साध्ययुक्तंषड्दलेषुकेवलंशक्तिबीजकम् ॥ बहिर्वृत्तद्वयं कृत्वावीथिकायांप्रवेष्टयेत् ॥ ७७ ॥ स्वरैःषोडशभिर्विन्दुयुक्तैस्तद्बाह्यमौलि खेत् ॥ भूपुरंयन्त्रेमतत्तुबन्ध्यानामपिपुत्रदम् ॥ ७८ ॥ अथातोभुवनेश्वर्या वश्यकृद्यन्त्रमुच्यते ॥ आदौविलिख्यषट्कोणंमायांसाध्यसमन्वितम् ॥ ७९ ॥

कर्णिकायांपद्दलेषुतद्बहिर्भूपुरंलिखेत् ॥ एतद्यन्त्रंवश्यकरंपूजितंवाहुमध्य
गम् ॥ ८० ॥ अथान्यद्भुवनेश्वर्याः प्रोच्यतेयन्त्रमुत्तमम् ॥ आदौकुर्य्याच्च
षट्कोणंकोणावज्रसमन्विताः ॥ ८१ ॥ मध्येससाध्यांमायांचलिखेत्कोणेपुतां
पुरः ॥ वृत्तत्रयंबहिःकुर्य्यात्तत्रवीथीद्वयंभवेत् ॥ ८२ ॥ वेष्टयेन्मायया वीथीद्वयमेत
च्चतुर्थकम् ॥ श्रीखण्डरोचनाभ्यांतुलेख्यंसर्वजयप्रदम् ॥ ८३ ॥ दद्याच्चमनसा
द्दिष्टंवाहौवाहृदयेधृतम् ॥ मायास्थानेतुयन्त्रंवाभुवनेश्याःसमालिखेत् ॥ ८४ ॥
अथातःसम्प्रवक्ष्यामिभुवनेश्यास्तुयन्त्रकम् ॥ अष्टपत्रंलिखेत्पद्मंकर्णिकायां
समालिखेत् ॥ ८५ ॥ आंह्रींक्रींमितिबीजानित्रित्रिधाकेशरेषुच ॥ लिखे
त्स्वरान्पत्रमध्येकादिवर्गाष्टकंलिखेत् ॥ ८६ ॥ भूपुरंचबहिःकुर्य्याल्लिखेत्प्रा
ग्वच्चधारयेत् ॥ सर्ववाञ्छाप्रदंयन्त्रंसम्पत्सन्ततिदंपरम् ॥ ८७ ॥ अथातःस
म्प्रवक्ष्यामिलक्ष्मीयन्त्रंरमाप्रदम् ॥ भूर्ज्जपत्रेलिखेत्पद्मंकर्णिकायांध्रुवंन्यसे
त् ॥ ८८ ॥ तत्पत्रेषुलिखेत्क्रींह्रींक्लींतथासाध्यनामच ॥ तत्केशरेषुसंलेख्यं
श्रींह्रींक्लींचदिगष्टके ॥ ८९ ॥ लिखेद्द्वादशपत्रेषुक्रमादेकैकमक्षरम् ॥
वाचंमायांरमांकामंहंसनौंइतिकूटकम् ॥ ९० ॥ जगत्प्रसूत्यैहृदयंद्वादशार्णो
मनुस्त्वयम् ॥ तद्बाह्येषोडशदलेकेशरेषुद्वयंद्वयम् ॥ ९१ ॥ ककारा
दिसकारान्तान्द्वात्रिंशद्वर्णकाँल्लिखेत् ॥ तारोह्रींकवचंकेंकेंक्षेंक्षेंश्रींह्रींततः
परम् ॥ ९२ ॥ क्षंह्रींफडितिसूर्यार्णोलक्ष्मीमन्त्रःसमीरितः ॥ यन्त्रमेतन्महा
लक्ष्म्याःप्रोक्तंसम्पत्करंपरम् ॥ ९३ ॥ सर्वसौभाग्यदंचापिसर्वदुःखविमो
चनम् ॥ अश्वारूढायन्त्रमथोप्रोच्यतेसाधकेष्टदम् ॥ ९४ ॥ षट्कोणमध्ये
साध्याख्यांभुवनेशींसमालिखेत् ॥ आं ह्रीं क्रीं ऐं क्लीं च[1]सौंचषड्द
लेषुलिखेत्क्रमात् ॥ ९५ ॥ बहिर्द्वादशपत्रेचवर्णानेतान्समालिखेत् ॥
अंआंक्रांहहिपरमेश्वरिस्वाहाततःपरम् ॥ ९६ ॥ बहिश्चत्वारिकार्य्याणिवृ
त्तान्येवंतुवीथिकाः ॥ द्रांद्रींक्लींब्लूंसइत्येतैर्बाणबीजैःप्रवेष्टयेत् ॥ ९७ ॥ द्विती
यवीथ्यांहृल्लेखानित्यक्लिन्नेमदद्रवे ॥ स्वाहेत्येकादशार्णेनवेष्टयेन्मातृकार्णकैः ॥
९८ ॥ तृतीयांतद्बहिःकुर्य्याद्भूपुरंचैवशङ्करम् ॥ अथान्यत्त्वरितायास्तुम

---

१ हृस्नौम् इति कूटम् ॥

नोज्ञंयन्त्रमुच्यते ॥ ६६ ॥ एकाशीतिपदं चक्रंलिखित्वातस्यमध्यमे ॥ कोष्ठे लिखेच्चकारन्तुसाध्यनामास्यचोदरे ॥२००॥ तत्कोष्ठकाश्चतुर्दिक्षुलिखेत्कोष्ठ चतुष्टये ॥ १ ॥ ज्ञांसंचंवंतथैकैकमक्षरंचेशकोणतः ॥ आग्नेय्यान्तंलिखेच्छ्लो कंपूर्वोक्तंमध्यमांविना ॥ २ ॥ एवमेवचनैर्ऋत्यांवायव्यान्तंपुनर्लिखेत् ॥ तद्बाह्येतुचतुर्दिक्षुमनुमेनंसमालिखेत् ॥ ३ ॥ ॐह्रींह्रखेंचक्षेंत्वःस्त्रींह्रंक्षंह्रींचव षड्मनुः ॥ वृत्तद्वयंतुतद्वाह्येकृत्वावीथ्यांसमालिखेत् ॥ ४ ॥ चंमालिकातुत द्वाह्येकुम्भंकुर्य्यात्सुशोभनम् ॥ तस्यमूलमुखेचापिलिखेत्पद्मंसमाहितः ॥ ५ ॥ कुंकुमलाक्षयाचापिलिखितंस्वर्णपट्टके ॥ धवलेवसनेवापिलेखन्यास्वर्ण जातया ॥ ६ ॥ सम्पूज्यजपसंसिद्धिंप्राप्नुयाद्यत्रतत्रवै ॥ भवेल्लक्ष्मीरतिप्री तानिरोगाश्चप्रजास्तथा ॥ ७ ॥ गजाश्वपशवस्त्वन्येसुखिनःप्राणिनोभृश म् ॥ भूतप्रेतपिशाचादिपीडासुविभूयादिदम् ॥ ८ ॥ अलक्ष्मीःशान्तयेचा शुसिद्धयेसर्वसम्पदाम् ॥ कृत्यामृत्युग्रहेदुष्टसर्वरोगविमुक्तये ॥ ६ ॥ पुत्रपौ त्रैश्वर्य्यदीर्घायुष्यसंसिद्धयेपिच ॥ एतद्यन्त्रोत्तमंप्रोक्तंत्वरितायावराङ्गलम् ॥ १० ॥ अथान्यत्सम्प्रवक्ष्यामित्वरितायन्त्रमुत्तमम् ॥ कृत्वातुदिग्दलंपद्मंक र्णिकायांसमालिखेत् ॥ ११ ॥ चौरव्याघ्रादिकभयंजप्त्वातद्धारयेदद्भुतम् ॥ र क्षोजयःस्यात्संग्रामेविवादेविजयस्तथा ॥ १२ ॥ अथातःसम्प्रवक्ष्यामित्वरि तायाश्चमत्कृतम् ॥ नवव्यूहाभिधंयन्त्रंनववर्गादिनामके ॥ १३ ॥ साधक प्रोक्तफलदंतत्प्रकारोनिरूप्यते ॥ कृत्वाचाष्टदलंपद्मंकर्णिकायान्तुह्रींलिखेत् ॥ १४ ॥ तस्यमध्येलिखेत्तारंतन्मध्येसाध्यनामकम् ॥ ततश्चाष्टदलेलेख्यमौं ह्रींफट्कारवर्जितम् ॥ १५ ॥ शेषमन्त्राक्षरंकोष्ठेतत्पद्मंवेष्टयेत्पुनः ॥ ह्रींकारै स्तस्यबाह्येतुलेख्याचौङ्कारशृङ्खला ॥ १६ ॥ कुम्भंकुर्य्याच्चतद्बाह्येप्रथमंमन्त्र मीरितम् ॥ एवमस्यैवयन्त्रस्यकर्णिकायांसमालिखेत् ॥ १७ ॥ ह्रींकारस्योद रेविद्यातृतीयार्णससाध्यकम् ॥ तदातारादिवर्णांश्चप्राग्वत्पत्रेषुसंलिखेत् ॥ १८ ॥ ह्रींकारमध्येफट्कारंयदास्याच्चतदालिखेत् ॥ ह्रींकारपुटितान्वर्णा नोङ्कारान्तान्दलेपुच ॥१६॥ नवभेदमिदंयन्त्रंनामवर्गादिभेदतः ॥ सर्वरक्षा करंप्रोक्तंदुःखदारिद्र्यनाशनम् ॥ २० ॥ शुभलक्ष्मीयशोधान्यवासांसिसमवा

प्नुयात् ॥ अथान्यत्सम्प्रवक्ष्यामित्वरितायन्त्रमद्भुतम् ॥ २१ ॥ तिर्य्यगूर्ध्वा
द्वादशैवरेखास्तत्रतुकोष्ठगाः ॥ एकादशानांवर्गेणतुल्यालेख्यास्तथाग्रके ॥
२२ ॥ त्रिशूलानिलिखेन्मध्यकोष्ठकेप्रणवंलिखेत् ॥ तस्यमध्येसाध्यनामचतु
र्दिक्कोष्ठकेषुच ॥ २३ ॥ प्रवेशगत्याविलिखेत्पञ्चपञ्चाक्षराणिच ॥ क्षंत्रींहूंक्षंत
थाफट्चबाह्येप्राकारकेततः ॥ २४ ॥ ईशानकोणाद्विलिखेत्क्रमात्कोष्ठेषुपञ्च
सु ॥ आमध्यान्तंभुवंवर्मकंखंचंक्षेतिवर्णकान् ॥ २५ ॥ एवंचतुर्षुकोणेषुप्रा
न्तंदत्त्वालिखेत्पुनः ॥ सव्यासव्येतथाहंखंवंक्षंवर्णचतुष्टयम् ॥ २६ ॥ एवंद्विती
यप्राकारेतारंकोणचतुष्टये ॥ २७॥ हूंक्षंचेतित्रयोवर्णालेख्यावामेचदक्षिणे॥एवं
तृतीयप्राकारकोणेषुप्रणवंलिखेत् ॥ २८ ॥ ह्रस्वैर्वर्णैःसव्यमपसव्यंचैवतथालि
खेत् ॥ पुनश्चतुर्थेप्राकारेलिखेत्तारंचसाधकः ॥ २९ ॥ हूंकारंपञ्चमेध्यात्वा
प्राकारेकेवलंभुवम् ॥ पूजनीयंप्रयत्नेनकेवलंभाग्यकाम्यया ॥३०॥ मायाही
नांश्चद्विद्वयर्णांस्त्वरितायामनोःक्रमात् ॥ ईशानकोणात्प्राकारप्रदक्षिणक्र
मेणच ॥३१ ॥ प्रवेशमार्गतस्तुर्य्यतुल्यसंख्यावृतिर्भवेत् ॥ मूलयन्त्रंतत्रवर्णै
सम्पाताज्यपरिप्लुतम् ॥ ३२ ॥ ग्रहभीतिहरंनित्यंजयलक्ष्मीयशःप्रदम् ॥ अ
थातःसम्प्रवक्ष्यामित्वरितायाविनिग्रहे ॥ ३३ ॥ शत्रूणांयत्क्षमंयन्त्रंयन्नका
पिचकुण्ठितम् ॥ एकाशीतिपदंचक्रंलिखेत्तन्मध्यकोष्ठके ॥ ३४ ॥ महोदरे
साध्यनामनिर्गमेचदिशासुच ॥ चतसृषुलिखेद्बीजचतुष्कन्तन्निगद्यते ॥
३५ ॥ अंआंब्रूंहूंततश्चेशकोणलःकालिकामनुम् ॥ समालिखेच्छ्लोकरूपंत
थानैर्ऋत्यकोणतः ॥ ३६ ॥ एवंपुरोक्तवद्यन्त्रंलिखेत्तद्बाह्यतःपुरे ॥ वेष्टयेद्य
ममन्त्रेणाभिचार्य्यश्चेत्पुमान्भवेत् ॥ ३७ ॥ अभिचार्य्यायदास्त्रीस्यात्तदा
तुर्य्यममन्त्रकम् ॥ कालिकायाश्चमन्त्रेणबाह्यतोवेष्टयेत्ततः ॥ ३८ ॥ यंरं
भ्यांवेष्टयेद्दुःखंकालीयममनूयथा ॥ ३९ ॥ कालीमाललमालीकालीनमोक्ष
चमोनली ॥ मोदोदेननदेदोमोरक्षमत्वत्वमच्चर ॥ ४० ॥ यमाधाररधामाय
माटपोटटमोटमा ॥ वामोमूगिरिमूमोवाटीटलीललीटटी ॥ ४१ ॥ सीसपट्टे
थवाश्यावस्त्रेवाप्रस्तरेपिवा ॥ विषमष्यासमालेख्यंलेखिन्याकाकपिच्छया॥
४२ ॥ काल्यादिशक्तिदेहल्यावामभागेप्रपूरयेत् ॥ शत्रुर्दुःखमवाप्नोतिसद्यो

न्त्रप्रभावतः ॥४३॥ निखातंचत्वरेतच्चेच्छत्रोर्व्याधिकरंभवेत् ॥ पूरितंकरिवि
आधःपुत्रस्त्रीणांवियोगकृत् ॥४४॥ अथातःसम्प्रवक्ष्यामिबगलायन्त्रमुत्तमम्॥
र्ज्जपत्रेसमालेख्यंहरितालनिशारसैः ॥ ४५॥ षट्कोणन्तस्यमध्येतुवलया
कारतोलिखेत् ॥ षट्त्रिंशदक्षरम्मन्त्रंबगलायाःसउच्यते ॥ ४६ ॥ तारंलज्जां
बगलामुखिसर्वपदंवदेत् ॥ दुष्टनामितिचोच्चार्य्यवाचम्मुखमथोपदम् ॥
४७॥ स्तम्भयेतिसमुच्चार्य्यजिह्वांकीलयचेत्यपि ॥ बुद्धिंविनाशयान्तेतुतारवी
जाग्निसुन्दरीः ॥४८॥ अयम्मन्त्रःसमुद्दिष्टःसाध्यनाम्नस्तुवेष्टकः ॥ वेष्टयेत्पी
सूत्रेणकुलालस्यमृदंव्रजेत् ॥४६ ॥ चक्रेमृदंसमारोप्यभ्रामयेद्वृषभन्तया ॥
कारयेच्चमृदातत्रहरितालेनलेपयेत् ॥ ५० ॥ तन्मध्येनिक्षिपेद्यन्त्रंनासायामथ
ततः ॥ अर्चयेत्तच्चतुष्कालंसाध्यनाम्नात्रसाधकः ॥ ५१ ॥ दुष्टानांस्तम्भये
चंसाक्षाद्वाचस्पतेरपि ॥ अथान्यद्बगलायास्तुवक्ष्यतेयन्त्रमुत्तमम् ॥ ५२ ॥
हैवाप्यथपाषाणेह्लींकारपुटितंलिखेत् ॥ साध्यनामोन्मत्तरसहरिद्रातालकैस्त
ः ॥ ५३॥ पूर्वमन्त्रेणसंवेष्ट्यचोर्ध्वंत्रिवलयंलिखेत् ॥ गर्भस्तम्भंगतिस्तम्भंकु
र्यादेतन्नसंशयः ॥ ५४ ॥ अथान्यद्वक्ष्यतेयन्त्रंश्मशानस्थमधोमुखम् ॥
खर्परमानीयगृहीत्वावामहस्तके ॥ ५५ ॥ लिखेद्दक्षिणहस्तेनश्मशानाङ्गा
रेणच ॥ मन्त्रितंनिहितम्भूमौरिपूणांस्तम्भयेद्गतिम् ॥ ५६ ॥ प्रेतवस्त्रेलिखे
न्त्रमङ्गारेणचतत्पुनः ॥ मण्डूकवदनेन्यस्येत्पीतवस्त्रेणवेष्टितम् ॥ ५७ ॥
जितम्पीतपुष्पैस्तद्वाचंसंस्तम्भयेद्द्विषाम् ॥ अथातःसम्प्रवक्ष्यामिवाराही
मुत्तमम् ॥ ५८ ॥ विलिख्यतारंसाध्याख्यांग्लौंबीजेनप्रवेष्टयेत् ॥ ठका
संवेष्ट्यभूपुरेचततोलिखेत् ॥ ५६ ॥ वज्रादिकन्तथातस्यप्रान्तेप्रणवमा
खेत् ॥ वज्रमध्येसाध्यनामलिखेत्कर्मसमन्वितम् ॥ ६० ॥ धराबीजेन

---

[1] षट्कोण में अमुकं स्तम्भय इस पद को ह्लीं बीजसे संयुत करके लिखे मंत्र के शेष
रों से घेर दे पुनः यन्त्रके बाहर चतुरस्र भूपुर बनाकर प्राणप्रतिष्ठा करे ॐ ह्लीं बग-
मुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वांकीलय बुद्धिं विनाशय ॐ ह्लीं स्वाहा
कहीं इस मन्त्र में ह्लीं के स्थान में ह्रीं बीज है ॥

संवेष्ट्य भूपुरंमूलविद्यया ॥ ॐऐंग्लौंऐंनमःप्रोच्चार्य ततो भगवतीतिच ॥ ६१ ॥ वार्त्तालिवाराहियुगंवाराहमुखिवाग्भवम् ॥ ग्लौंऐंअन्धेअन्धिनीतिनमोरुन्धे चरुन्धिनि ॥ ६२ ॥ नमोजृम्भेजृम्भिणीतिनमोमोहेचमोहिनि ॥ नमःस्तम्भे स्तम्भिनीतिनमऐंग्लौंचवाग्भवम् ॥ ६३ ॥ सर्वदुष्टप्रदुष्टानांसर्वेषांसर्ववाग्व देत् ॥ चित्तचक्षुर्मुखगतिजिह्वास्तम्भंकुरुद्वयम् ॥ ६४ ॥ शीघ्रंवश्यंकुरुकु रुऐंग्लौंऐंठश्चतुष्टयम् ॥ हुंफट्स्वाहेतिमूलाख्याविद्यावेदेशवर्णिका॥६५॥ बहिर्वृत्तत्रयंकृत्वाक्रींबीजेनाद्यवीथिकाम् ॥ हुंकारेणद्वितीयान्तुवीथिकाम्प रिवेष्टयेत् ॥ ६६ ॥ एतद्यन्त्रंसमालिख्यबाह्यभूपुरसंयुतम् ॥ कृष्णपुष्पैःसम भ्यर्च्यनिक्षिपेत्पथिविद्विषः ॥ ६७ ॥ रिपुमुच्चाटयेच्छीघ्रंस्थितंवर्षशतादपि ॥ वादित्रेमन्त्रमालिख्यवादयेत्समरान्तरे ॥ ६८ ॥ सन्त्रस्तास्तद्ध्वंश्रुत्वापला यन्तेविरोधिनः ॥ अथचैतत्पताकास्थंयुध्यतेवैरिभिःसह ॥ ६९ ॥ दृष्ट्वा चशत्रवःसर्वेपलायन्तेनसंशयः ॥ अथातःस्वप्नवाराह्यायन्त्रंवक्ष्येचमत्कृतम् ॥ ७० ॥ कृत्वात्रिकोणंषट्कोणंषोडशारंवसुच्छदम् ॥ दशारद्वितयम्पञ्चदशा सम्भूगृहद्वयम्॥ ७१ ॥त्रिकोणेकामबीजस्थंवाग्भवंसम्यगालिखेत् ॥ षट्को णेपूर्वतोवाचंआंह्रींक्रींश्रींचहूंतथा ॥ ७२ ॥ लिखेत्षोडशपत्रेषुशक्तीरुच्चाटनींत था ॥उच्चाटनीश्वरींचापिशोषिणींशोषिणीश्वरीम् ॥ ७३ ॥ मारणींमारणी शींचभीषणींभीषणीश्वरीम् ॥ त्रासिनींत्रासिनीशींचकम्पिनींकम्पिनीश्वरी म् ॥ ७४ ॥ आज्ञाविवर्तिनींपश्चादाज्ञाविवर्तिनीश्वरीम् ॥ वस्तुजातेश्वरीं पश्चात्सर्वसम्पादिनीश्वरीम् ॥ ७५ ॥ यजेदष्टदलेपद्मेमातृभैरवसंयुताः ॥ दशारेविन्यसेत्स्वस्यबीजपूर्वान्दिगीश्वरान् ॥ ७६ ॥ रंलंमंक्षंततोवंयंसंहंश्रीं ह्रीमितिक्रमात् ॥ द्वितीयेदशपत्रेतुवज्रादीन्यायुधानिच॥ ७७॥तिथिपत्रेतु वाराह्यामूलमन्त्रंसमालिखेत्॥ ॐह्रींनमश्चवाराहिघोरेस्वप्नंविसर्गयुक्॥७८॥

---

१ ॐ ऐं ग्लौं ऐं नमो भगवति वार्तालि वाराहि वाराहि वाराहमुखि ऐं ग्लौं ऐं अन्धे अन्धिनि नमो रुन्धे रुन्धिनि नमो जृम्भे जृम्भिणि नमो मोहे मोहिनि नमःस्तम्भे स्तम्भिनि नमः ऐं ग्लौं ऐं सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भं कुरु कुरु शीघ्रंवश्यं कुरुकुरु ऐं ग्लौं ऐंठःठःठःठः हुंफट् स्वाहा इति मन्त्रः २ ॐ ह्रीं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा ।

ठद्वयंवह्निजायान्तोमन्त्रःपञ्चदशाक्षरः ॥ एतद्यन्त्रंपुनःसम्यङ्मातृकार्णैः प्रवेष्टयेत् ॥ ७९ ॥ भूपुरस्यचकोणेषुचतुर्थ्यपिवरंलिखेत् ॥ भूर्जादौय न्त्रमालिख्यजपसम्पातसाधितम् ॥ ८० ॥ बाह्वादौविधृतंदद्यान्नृणांकीर्ति धनंसुखम् ॥ बहुनाकिमिहोक्तेनवाराहीष्टंप्रयच्छति ॥ ८१ ॥ अथवक्ष्येमातृ कायायन्त्रंरक्षाकरंपरम् ॥ हकारमध्येविलिखेत्सकारंसाध्यसंयुतम् ॥ ८२ ॥ त द्बाह्येष्टदलंपद्मंकेशरेषुस्वराँल्लिखेत् ॥ षड्दीर्घयुक्क्षकारेणबहिस्तद्वेष्टयेत्पुरः॥ ८३ ॥ रोचनाकुंकुमाभ्यांचभूर्जपत्रेलिखेदिदम् ॥ रक्षाभवतियन्नैतद्धृतंस्वर्णा दिवेष्टितम् ॥ ८४ ॥ अथातःसम्प्रवक्ष्यामितारायन्त्रन्तुसिद्धिदम् ॥ भूर्जपत्रे लिखेद्यन्त्रमलक्तकरसेनतु ॥ ८५ ॥ षट्कोणमध्येॐह्रींस्त्रींहुंफट्चसमाध्यक म् ॥ तद्बहिश्चाष्टपत्रस्यकेशरेषुद्विशःस्वरान् ॥ ८६ ॥ पत्रेषुकाद्यष्टवर्गान्बहि र्भूपुरमालिखेत् ॥ पीताम्बरेणसंवेष्ट्यबध्नीयात्पट्टसूत्रतः ॥ ८७ ॥ शिशूनांक ण्ठतोबद्धंरक्षाकृद्भूतभीतितः ॥ वामबाहौतुनारीणांबद्धंपुत्रप्रदंमतम् ॥ ८८ ॥ दक्षबाहौनृणांबद्धंनिर्धनानांधनप्रदम् ॥ ज्ञानदंज्ञानमिच्छूनांराज्ञांतुविजयप्र दम् ॥ ८९ ॥ अथातोभुवनेश्वर्यावश्यकृद्यन्त्रमुच्यते ॥ चतुरस्रदलैनैवकुर्य्यादष्ट दलंबुधः ॥ ९० ॥ साध्यनामयुतांमायांलिखेद्यन्त्रंपुनस्तुतत् ॥ वेष्टयेच्चतुरस्रेण चतुष्कोणेषुवंलिखेत् ॥ ९१ ॥ चतुरस्रस्यभूर्जादौरोचनाकेशरेणच ॥ जातीक ष्ठस्यलेखन्यावश्यकृत्परमंमतम् ॥ ९२ ॥ अथातःसम्प्रवक्ष्यामिसौरंयन्त्रोत्तमं पुनः ॥ चतुःपत्रस्यपद्मस्यकर्णिकायांसमालिखेत् ॥ ९३ ॥ ससाध्यप्रणवंअहिं हंसःपत्रेषुसंलिखेत् ॥ एकैकमक्षरंतस्यबाह्येऽष्टदलमालिखेत् ॥ ९४ ॥ ॐघृणिः सूर्य्यआदित्यःक्रमादष्टदलेलिखेत् ॥ वृत्तद्वयंतुतद्बाह्येमध्यवीथ्यांसमालिखेत् ॥ ९५ ॥ भूपुरस्यचतुष्कोणेअंआंह्रींह्रींसमालिखेत् ॥ सौरंयन्त्रमिदन्नृणांसर्व्व भयविनाशनम् ॥ ९६ ॥ तेजःप्रतापसौभाग्यपुत्रायुःकीर्त्तिवर्धनम् ॥ धन धान्यप्रदंवश्यंसर्वरक्षाकरंपरम् ॥ ९७ ॥ अथातःकुरुकुल्यायायन्त्रंसर्प्पनिवार णम् ॥ षट्कोणंविलिखेत्तस्यमध्येपूर्वादितःक्रमात् ॥ ९८ ॥ तारश्चकुरुकुल्या यैस्वाहासप्ताक्षरोमनुः ॥ मध्यपूर्वक्रमेणैवलेख्यमेकैकमक्षरम् ॥ ९९ ॥ प्रस्तरे लिखितंगेहेपूजितंयन्त्रगंगृहे ॥ अर्च्चितंवाधृतंदेहेनाशयेद्विविधंविषम् ॥ ४०० ॥

अथातःसम्प्रवक्ष्यामियन्त्रंशत्रुभयावहम् ॥ ॐह्रींचमेखलेस्वाहासप्तार्णो यंमनुर्मतः ॥ १ ॥ लिखेत्प्राग्वच्चषट्कोणेसर्वशत्रुनिवारणः ॥ सम्यक् सुनिष्ठितोगेहेकलहादिन जायते ॥ २ ॥ अथातःसम्प्रवक्ष्यामिगर्भस्तम्भकरंपर म् ॥ समन्त्रंत्रिपुरायन्त्रंपञ्चपञ्चालयंलिखेत् ॥ ३ ॥ तिर्य्यगूर्ध्वंकोष्ठकास्तु जा यन्तेतत्रषोडश ॥ कुर्य्याद्दलानिचत्वारिकोष्ठार्धंचतथातले ॥ ४ ॥ ऊर्ध्वकोष्ठ चतुष्केतुह्रंह्रंह्रंह्रंसमालिखेत् ॥ अधःकोष्ठचतुष्केतुहंकारंतुसमालिखेत् ॥ ५ ॥ अन्योन्यसम्मुखेलेख्यंह्रंकारंयाम्यसौम्ययोः ॥ अष्टसप्तमयोर्लेख्यंसाध्यनामद्वयं द्वयम् ॥ ६ ॥ रक्षेतिदशमेलेख्यंपुनरेकादशेतथा ॥ कस्तूरीरोचनाचन्द्रकेशरै र्भूर्ज्जपत्रके ॥ ७ ॥ लिखेद्धूपंततोदत्त्वाकण्ठेयन्त्रंतुधारयेत् ॥ ऐंह्रींश्रींसमु च्चार्य्यत्रिपुरायैनमोवदेत् ॥ ८ ॥ गर्भस्तम्भययुग्मंचडाकिनीदोषमित्यपि ॥ द्विर्मुञ्चयाग्निगृहिणीकुत्रिवर्णोमनुर्मतः ॥ ९ ॥ एकविंशतितन्तूनांग्रन्थानां डोरकंचरेत् ॥ चतुर्दशासितांस्तन्तूंस्तन्तुनातेनबन्धयेत् ॥ १० ॥ मन्त्रयेत्सप्त वारंचधूपोदीपोगुरोस्तथा ॥ त्रिःकट्यांवेष्टयेद्धार्य्यागर्भरक्षाकरंपरम् ॥ ११ ॥ अथातःसम्प्रवक्ष्यामिवाराहंयन्त्रमुत्तमम् ॥ आदौषट्कोणमालिख्यतन्मध्ये प्रणवंलिखेत् ॥ १२ ॥ प्रणवाभ्यन्तरेह्रंचह्रंमध्येसाध्यनामकम् ॥ सहस्रारहुं फडितिकोणेष्वेकैकमक्षरम् ॥ १३ ॥ तत्राविस्त्वपिसंज्वालापदानामन्तरा वदेत् ॥ चक्रायस्वाहेतिपदंतदाप्यमन्त्रसम्भवः ॥ १४ ॥ षट्कोणसन्धिषु चतेलेख्यास्तद्बहिरालिखेत् ॥ चतुर्दलन्तुकमलंद्विद्विवर्णादलेदले ॥ १५ ॥ नमोनारायणायेतितारद्योष्टाक्षरस्यतु ॥ केशरेषुलिखित्वाथपत्रमध्येततोलि खेत् ॥ १६ ॥ तारोनमोभगवतेवेतिबाह्यद्दलेलिखेत् ॥ दाहरूपायभूर्भुवःसं लिखेच्चद्वितीयके ॥ १७ ॥ स्वःपतयेभूपतित्वंतृतीयेविलिखेद्दले ॥ मेदेहिदापय स्वाहालेख्यंपत्रेचतुर्थके ॥ १८ ॥ तद्बाह्येष्टदलंकृत्वाकेशरेद्वन्द्वशःस्वरान् ॥ दलमध्येधुनाप्रोक्तवाराहार्णःकृताक्षरम् ॥ १९ ॥ प्रत्येकंविलिखेद्यन्त्रंलिखेच्चै वद्वितीयके ॥ तद्बहिःषोडशदलेकादिसान्तान्द्विशोलिखेत् ॥ २० ॥ के शरेषुदलस्यान्तेवाराहार्णद्वयंद्वयम् ॥ अधुनाचाष्टपत्रन्तुपद्मंतस्यबहिश्च

१ आचक्राय, विचक्राय, सुचक्राय, अपिचक्राय, संचक्राय, ज्वालाचक्राय ॥

रेत् ॥२१॥ वृत्तानांपञ्चकंतत्रचतस्रोवीथयोमताः ॥ साध्याक्षरेणपुटितंह्रींबीजेनतृतीयकम् ॥ २२ ॥ अत्रोक्तकोलमन्त्रेणसाध्यस्याख्याविदर्भिता ॥ तयासंवेष्टयेत्पङ्क्तितदग्रेभूपुरंलिखेत् ॥ २३ ॥ लिखेत्तस्यचतुष्कोणेग्लौंसाध्याख्याविदर्भितम् ॥ चतुरस्रादबहिःकुर्य्यादशदिक्षुत्रिशूलकान् ॥ २४ ॥ ह्रींग्लौं तेषुलिखेदेतद्यन्त्रंवाराहमद्भुतम् ॥ लाक्षाकृष्णागुरुश्चन्द्रोरोचनाकुंकुमंहिमम् ॥ २५ ॥ गोमयस्याम्भसापिष्टंलेखनद्रव्यमीरितम् ॥ लेखनीकरकोद्भूतायन्त्रस्यास्यतथोच्यते ॥ २६ ॥ स्वर्णपत्रेखिलावाप्तीराजतेचायुराप्यते ॥ ग्रामप्राप्तिर्भवेत्ताम्रेपिचुमन्ददलेसुखम् ॥ २७ ॥ भूफलक्षौमवस्त्रेस्याद्भूर्जेसंसारमान्यता ॥ साधुजप्तमिदंयन्त्रंसम्पातेनाभिषेचितम् ॥ २८ ॥ जन्मचन्द्रंविनाधार्य्यंतद्भवेदखिलेष्टदम् ॥ स्वस्यध्यात्वाकोलरूपंसाध्यदेशेप्रपूरयेत् ॥ २९ ॥ यन्त्रंवाराहमावाह्यतत्राङ्गानिप्रपूरयेत् ॥ दिक्षुमुक्ताशुद्धरागैर्भाजयेन्नात्रसंशयः ॥ ३० ॥ अथातःसम्प्रवक्ष्यामिपृथिवीयन्त्रमद्भुतम् ॥ अष्टकोणंचाष्टदलंकर्णिकायांसमालिखेत् ॥ ३१ ॥ ससाध्यंप्रणवंतस्यमध्यकोणाष्टकेचह्रम् ॥ अंह्रींग्लौंपूर्वपत्रेचनमोभेतिहुताशने ॥ ३२ ॥ गवत्यैदक्षिणदलेधारिण्यैदक्षपश्चिमे ॥ धरणीपश्चिमेचैवधरेधेहिसमीरणे ॥ ३३ ॥ स्वाहावायुदलेलेख्याग्लौंह्रीमोमीशपत्रके ॥ वृत्तत्रयन्तुतद्बाह्येतत्रवीथीद्वयंभवेत् ॥ ३४ ॥ तत्राद्यवीथ्यांप्रणवंनमोभगवतेवरा ॥ हरूपायभूर्भुवःसुवःपतयेचभूपति ॥ ३५ ॥ त्वंमेदेहिदापयस्वाहेतिदेवमितार्णकान् ॥ परवीथ्यांमातृकार्णास्ततोभूपुरमालिखेत् ॥ ३६ ॥ गृहान्तःस्थापितंहेमधान्यादेर्वृद्धिकारकम् ॥ बाहौधृतेजगद्वश्यंपूर्णायुःसुखमेधते ॥ ३७ ॥ अथातःसम्प्रवक्ष्यामिनृहरेर्यन्त्रमद्भुतम् ॥ षट्कोणकर्णिकामध्येह्रल्लेखांसाध्यसंयुताम् ॥ ३८ ॥ आंह्रींक्षौंक्रोंह्रूंफडितिषट्कोणेषुषट्लिखेत् ॥ बहिरष्टदलंकृत्वास्वरद्वन्द्वंलिखेत्ततः ॥ ३९ ॥ केशरेष्वथपत्रेषुचतुरर्णान्समालिखेत् ॥ नृसिंहानुष्टुम्मनोर्बहिर्वृत्तद्वयंलिखेत् ॥ ४० ॥ उग्रवीरंमहाविष्णुंज्वलन्तंसर्वतोमुखम् ॥ नृसिंहंभीषणंभद्रंमृत्युमृत्युंनमाम्यहम् ॥ ४१ ॥ वीथ्यांतुमातृकावर्णान्बहिर्भूपुरमालिखेत् ॥

---

१ ह्रीं २ इस श्लोक का नृसिंहानुष्टुप् नाम है ॥

लिखेच्चिन्तामणेःकूटंकोणेषुआगुदीरितम् ॥ ४२ ॥ भूर्जपत्रेलिखित्वेदंधृतंच शिरसाहरेत् ॥ विषरोगरिपुक्लेशभूतग्रहभयादिकम् ॥ ४३ ॥ अथातोवक्ष्यतेय न्त्रंवामनस्येष्टदायकम् ॥ कृत्वाचाष्टदलंपद्मंतन्मध्येसाध्यसंयुतम् ॥ ४४ ॥ विलिख्यप्रणवंतस्यकेशरेषुक्रमाद्ध्रुवम् ॥ नमोनारायणायेतिलिखेदेकैकम क्षरम् ॥ ४५ ॥ दलेद्वयंद्वयंलेख्यंचतुर्वर्णास्तथाष्टमे । ॐनमोविष्णवेब्रूयात्सु रान्तेपतयेमहा ॥ ४६ ॥ बलायवह्निगृहिणीधृतिवर्णोमतोमनुः ॥ वृत्तत्रयंत तःकुर्य्यादन्तर्वीथ्यांसुवेष्टयेत् ॥ ४७ ॥ तारोनमोभगवतेवासुदेवायवर्णकैः ॥ बाह्यवीथ्यांमातृकाभिरितियन्त्रंप्रकीर्त्तितम् ॥ ४८ ॥ अथातःसम्प्रवक्ष्यामि रामयन्त्रंमहाद्भुतम् ॥ आदौविलिख्यषट्कोणंतन्मध्येवृत्तमालिखेत् ॥ ४९ ॥ रामेतदस्यजठरेसाध्यनामसमालिखेत् ॥ साधकाख्यांकर्मनाममध्येचैवसमा लिखेत् ॥ ५० ॥ पार्श्वयोरचक्रियालेख्यारेफवर्णान्तरेलिखेत् ॥ श्रीबीजं तच्चतत्कालंप्रणवाभ्यांचसम्पुटेत् ॥ ५१ ॥ ऊर्ध्वाधःसम्मुखाभ्यन्तःषट्कोणे क्रमनूँलिखेत् ॥ षट्कोणपार्श्वयोर्मायाबीजंचाग्रेचमन्मथम् ॥ ५२ ॥ षट्स न्धिषुचहूंबीजंतत्सर्वंवेष्टयेत्पुनः ॥ वाग्भवेनबहिःपद्ममष्टपत्रंसकेशरम् ॥ ५३ ॥ केशरेषुस्वरान्वर्णान्पत्रेषुविलिखेत्क्रमात् ॥ पत्राग्रेषुलिखेन्मालामन्त्रवर्णा स्तथैवच ॥ ५४ ॥ तारोनमोभगवतेङेन्तःस्याद्रघुनन्दनः ॥ रक्षोघ्नविशदाये तिमधुरेतिपदंततः ॥ ५५ ॥ प्रसन्नवदनायेतितत‌श्चामिततेजसे ॥ बलायेति चरामायविष्णवेनमइत्ययम् ॥ ५६ ॥ सप्तचत्वारिंशदर्णोमालामन्त्रउदी रितः ॥ तद्बाह्येष्टदलंपद्मंश्रीबीजंकेशराष्टके ॥ ५७ ॥ पत्रमध्येलिखेदष्टवर्णा नादौध्रुवंलिखेत् ॥ नमोनारायणायेतितद्बाह्येकैदलंलिखेत् ॥ ५८ ॥ तत्के शरेषुमन्त्रार्णांश्चतुरश्चतुरोलिखेत् ॥ अकारादिक्षकारान्तानन्त्यपत्रेचस प्तकम् ॥ पत्रमध्येवासुदेवद्वादशाक्षरवर्णकान् ॥ ५९ ॥ तारोनमोभगवते वासुदेवायसस्मृतः ॥ तद्बहिःषोडशदलंमायांचनृपकेशरे ॥ ६० ॥ तारो नमोभगवतेरामचन्द्रायहुंचफट् ॥ नमःप्रत्येकवर्णंतुदलमध्येसमालिखेत् ॥ ६१ ॥ हंसंभंविंनिअंशजांधृंजंविंसुधरांतथा ॥ अंघंक्रमाचबीजानिबाह्येषो

---

१ ॐकार ॥

डशपत्रके ॥ ६२ ॥ प्रत्येकंपत्रमूलेतुह्रींश्रींक्लींविलिखेद्बुधः ॥ दलस्यपूर्व
भागेपुरामस्यानुष्टुबर्णकान् ॥ ६३ ॥ रामभद्रमहेष्वासरघुवीरनृपोत्तम ॥
दशास्यान्तकमांरक्षदेहिदापयमेश्रियम् ॥ ६४ ॥ दलोत्तरार्धेसंलेख्योनृसिं
हानुष्टुभोमनुः ॥ पुरानृसिंहयन्त्रेचकथितोत्रनिगद्यते ॥ ६५ ॥ उग्रंवीरंमहा
विष्णुंज्वलन्तंसर्वतोमुखम् ॥ नृसिंहंभीषणंरुद्रंमृत्युमृत्युंनमाम्यहम् ॥ ६६ ॥
बहिर्भूपुरमालिख्यवज्राष्टकविवर्जितम् ॥ क्ष्रौंबीजंचचतुर्दिक्षुहंबीजंचविदि
क्षुच ॥ ६७ ॥ एवंलिखेद्रामयन्त्रंसर्वयन्त्रोत्तमोत्तमम् ॥ साधितंजपपूजाभ्यां
होमसंपातकेनच ॥ ६८ ॥ धृतंशिरसिवाहौवायुरारोग्यप्रदंनृणाम् ॥ रक्षा
करंमहेशानिमहदैश्वर्यवर्धनम् ॥ ६९ ॥ वन्ध्यानामपिनारीणांपुत्रदंसुखदं
परम् ॥ भुक्तिमुक्तिप्रदंचैवगोपनीयंप्रयत्नतः ॥ ७० ॥ अथान्यत्सम्प्रवक्ष्यामि
रामभद्रस्यमन्त्रकम् ॥ आदौविलिख्यषट्कोणंतन्मध्येबीजमालिखेत् ॥७१॥
रामित्येतस्यजठरेतलेसाध्यंसमालिखेत् ॥ साधकाख्यांतदूर्ध्वंतुकर्ममध्येसमा
लिखेत् ॥ ७२ ॥ पार्श्वयोश्चक्रियालेख्यामनुंपर्णान्तरेलिखेत् ॥ श्रीबीजे
नचरामायनमोवर्णैःप्रवेष्टयेत् ॥ ७३ ॥ तद्बाह्येहुंजानकीतिवल्लभायाग्नि
गेहिनी ॥ एतैर्वर्णैश्चदशभिर्वेष्टयेत्कोणषट्ककम् ॥७४॥ षड्दीर्घानुस्वारयु
तंरांबीजंतुसमालिखेत् ॥ ह्रींश्रीमितिचकोणाग्रेकोणपार्श्वेषुहुंलिखेत् ॥७५॥
बहिरष्टदलंकृत्वाकेशरेद्वन्द्वशःस्वरान् ॥ दलेषुपूर्वयन्त्रोक्तमालामन्त्रार्णकाँ
ल्लिखेत् ॥७६ ॥ बहिर्वृत्तद्वयान्तःस्थवीथ्यांकाद्यैःप्रवेष्टयेत् ॥ सबिन्दुकैश्चत
द्बाह्येभूपुरेक्ष्रौंदिशासुच ॥ ७७ ॥ हुंकोणेषुजपाद्धोमसाधितंयन्त्रमुत्तमम् ॥
सर्वेष्टफलदंमोक्षदायकंश्रीकरंपरम् ॥ ७८ ॥ षट्कोणमध्येप्रणवंप्राग्वत्सा
ध्यादिकंलिखेत् ॥ मूलार्णान्वसुकोणेषुषड्दीर्घैरांचसन्धिषु ॥ ७९ ॥ स्वबा
मपार्श्वेकोणस्यशक्तिबीजंसमालिखेत् ॥ दक्षिणेकामबीजंचबहिरष्टदलंलि
खेत् ॥ ८० ॥ द्विशःस्वरान्केशरेषुमालामन्त्रंचपूर्ववत् ॥ दलमध्येलिखेत्त
स्यबहिर्वृत्तत्रयंचरेत् ॥ ८१ ॥ प्राग्यन्त्रोक्तदशार्णेनचान्तर्वीथ्यांप्रवेष्टयेत् ॥
कादिक्षान्तैर्बहिर्वीथ्यांतद्बहिर्भूपुरंचरेत् ॥ ८२ ॥ दिशासुक्ष्रौंहुंविदिक्षुयन्त्रं
स्याद्विभवप्रदम् ॥ कीर्त्तिलक्ष्मीविजयदंरामयन्त्रंनसंशयः ॥ ८३ ॥ अथातः

सम्प्रवक्ष्यामियन्त्रंगोपालदैवतम् ॥ षट्कोणान्तर्लिखेत्कामंसाध्याख्याकर्म संयुतम् ॥ ८४ ॥ तारोनमश्चकृष्णायलिखेद्वर्णांश्चषड्दले ॥ बाह्येदशद लेपद्मंतल्किअल्केषुसंलिखेत् ॥ ८५ ॥ द्विशोवर्णान्ङेन्तदामोदरोस्यब्जगदा भृते ॥ वासुदेवायकवचंफट्स्वाहान्तोनखाक्षरः ॥ ८६ ॥ गोपीजनवल्लभा यस्वाहैकैकंतुपत्रके ॥ कोणेषुमदनाक्रान्तंभूगृहंरचयेत्ततः ॥ ८७ ॥ रोचना लिखितंयन्त्रंसम्यक्स्वर्णशलाकया ॥ हेमपट्टेविधानेनगुटिकीकृत्यपूजितम् ॥ ८८ ॥ सम्यक्सम्पातसंसिक्तंदशार्णेनाभिमन्त्रितम् ॥ गोपालयन्त्रमेतद्धिपुण्य वद्भिःकरेधृतम् ॥ ८९ ॥ शान्त्यादिवश्यकर्मादौसमर्थंचापिगोपितम् ॥ कीर्त्या दिवर्धनंचैवपुत्रपौत्रविवर्धनम् ॥ ९० ॥ कान्तिरक्षाकरंनृणांसर्वसौभाग्यसौ ख्यदम् ॥ अपस्मारादिकरक्षोभूतकान्तादिमस्तके ॥ ९१ ॥ एतद्यन्त्रंस्मरेत्त त्रजपेन्नश्यतितत्क्षणात् ॥ अथातःसम्प्रवक्ष्यामिकृष्णयन्त्रंमहाद्भुतम् ॥ ९२ ॥ आदौवृत्तंसमालिख्यतन्मध्येग्लौंसमालिखेत् ॥ बीजमध्येसाध्यनामबहिःषट् कोणमालिखेत् ॥ ९३ ॥ तारोनमश्चकृष्णायदलेत्वेकैकमक्षरम् ॥ दलसन्धौ लिखेन्मन्त्रानाग्नेयीतःक्रमादिमान् ॥ ९४ ॥ आचक्रायततःस्वाहाप्रथमोयंषड क्षरः ॥ विचक्रायततःस्वाहाद्वितीयोपिषडक्षरः ॥ ९५ ॥ सुचक्रायततःस्वाहा तृतीयोपिषडक्षरः ॥ शैलरक्षणचक्रायस्वाहान्तोयंदशाक्षरः ॥ ९६ ॥ असुरान्ते तिचक्रायस्वाहान्तोयंनवाक्षरः ॥ कामबीजेनषष्ठींतुसन्धिमेवंप्रपूरयेत् ॥ ९७ ॥ तद्बाह्येष्टादशदलंतत्रवर्णानिमाँल्लिखेत् ॥ क्लींकृष्णायपदंप्रोक्तागोविन्दाय पदंलिखेत् ॥ ९८ ॥ गोपीजनवल्लभेतियस्वाहाधृतिवर्णकः ॥ तद्बाह्येजि नपत्रेतुकृष्णगायत्रिवर्णकान् ॥ ९९ ॥ दामोदरायविद्महेवासुदेवायधीमहि तन्नःकृष्णःप्रचोदयात् ॥ ५०० ॥ तद्बाह्येवृत्तयुग्मान्तर्वीथ्यांकामेनवेष्टयेत् ॥ तद्बाह्येदन्तपत्रेतुगोपालानुष्टुभंलिखेत् ॥ १ ॥ ग्लौंक्लींनमोभगवतेनन्द पुत्रायबालक ॥ वपुषेश्यामलायेतिगोपीजनपदंवदेत् ॥ २ ॥ वल्लभाया ग्निजायान्तोमन्त्रोयंरदवर्णकः ॥ वेदवृत्तानितद्बाह्येतत्रवीथीत्रयंभवेत् ॥ ३ ॥ यत्तुगोपालमन्त्रेतुग्लौंतेनाद्यांप्रवेष्टयेत् ॥ द्वितीयांमातृकावर्णैःक्रींभ्यां चतृतीयकाम् ॥ ४ ॥ यन्त्रराजमिदंख्यातंसर्वविश्वविमोहनम् ॥ धर्मकाम

र्थफलदंशत्रून्दस्यून्निवारयेत् ॥ ५ ॥ कीर्त्तिकान्तिधरारोग्यरक्षाश्रीविजयप्रद
म् ॥ पुत्रपौत्रप्रदंलोकेभूतवेतालनाशनम् ॥ ६ ॥ लिखितंभूर्जपत्रादौपूजितं
चाभिमन्त्रितम् ॥ धारितंसर्वकामानांसिद्धिदंनात्रसंशयः ॥ ७ ॥ अभक्ताय
नदातव्यंनदेवब्राह्मणद्विषे ॥ अथान्यतकृष्णयन्त्रंतुसर्वोपद्रवनाशनम् ॥ ८ ॥
लिखेत्ससाध्यंग्लौंबीजंतच्चसम्यक्प्रवेष्टयेत् ॥ अष्टादशार्णमन्त्रेणषट्कोणंच
तदूर्ध्वतः ॥ ९ ॥ कोणेषुविलिखेद्वर्णान्पत्राक्षरमनोस्तथा ॥ तद्बाह्येदिग्दलं
कृत्वादशवर्णान्क्रमाँल्लिखेत् ॥ १० ॥ गोपीजनवल्लभायस्वाहामन्त्रोदशाक्षरः ॥
वृत्तद्वयान्तर्वीथ्यांतुकामबीजेनवेष्टयेत ॥ ११ ॥ तद्बहिःषोडशदलंकेशरेषुस्व
राँल्लिखेत् ॥ दलेषुषोडशार्णेषुवर्णान्प्राग्वत्तथालिखेत् ॥ १२ ॥ द्वात्रिंशत्कद
लंबाह्येकादिसान्तांश्चवर्णकान् ॥ तत्केशरेषुचालिख्यदलमध्येचपूर्ववत् ॥ १३ ॥
द्वात्रिंशदर्णमन्त्रस्यलिखेदर्णास्ततोबहिः ॥ वृत्तद्वयान्तर्वीथ्यामांक्रांबीजा
भ्यांप्रवेष्टयेत् ॥ १४ ॥ चतुरस्रद्वयेनाथतद्बाह्येष्टास्रमालिखेत् ॥ अष्टार्णाके
कवर्णन्तुमनुमेतंसुदुर्लभम् ॥ १५ ॥ चौरमारीभयहरंचतुर्वर्गफलप्रदम् ॥ अ
थातःसम्प्रवक्ष्यामिहनुमयन्त्रमद्भुतम् ॥ १६ ॥ पद्ममष्टदलंकृत्वाकर्णिका
यांसमालिखेत् ॥ ससाध्यंप्रणवंतत्रकेशरेषुद्विशःस्वरान् ॥ १७ ॥ दलेषुवि
लिखेद्वर्णाश्चतुरश्चतुरोमनोः ॥ नमोभगवतेतुभ्यमाञ्जनेयहनूमते ॥ १८ ॥
खगपतङ्गाद्युपद्रवान्नाशयपदंवदेत् ॥ हुंफट्स्वाहारदार्णोयंबहिर्वृत्तद्वयंचरेत् ॥
१९ ॥ तदन्तरालवीथ्यांतुकादिक्षान्ताँल्लिखेत्क्रमात् ॥ वृत्तद्वयंबहिःकृत्वात
त्रमालामनुंलिखेत् ॥ २० ॥ नमोभगवतेप्रोच्यवदेद्धनुमतेततः ॥ पवनात्मजायव
देद्राघवप्राणसंवदेत् ॥ २१ ॥ प्रदायलक्ष्मणेत्युक्त्वादात्रेसीतापदंवदेत् ॥ २२ ॥
दुःखविनाशनायेतिरावणेतिपदंततः ॥ दर्प्पघ्नायेतिसर्वेतिडेन्तोदुष्टविनाश
नः ॥ २३ ॥ रिपुचौरव्याघ्रवराहकृमिचोच्चरेत्तथा ॥ पतङ्गादिदुष्टसत्त्वविनाशन
पदंवदेत् ॥ २४ ॥ ङेन्तंहुंफट्ततःस्वाहाद्व्यशीत्यर्णोमनुर्मतः ॥ तद्बहिश्च
तुरस्रंचयन्त्रमेतद्विलेखयेत् ॥ २५ ॥ भूर्ज्जेताम्रेथवावस्त्रेभित्तौपट्टेशिलातले ॥
गोगलेवाथसंलेख्यंरोचनानाभिकेशरैः ॥ २६ ॥ रक्षःकृत्याग्रहादीनांपीडारोगा
दिभीतिहृत् ॥ बालग्रहामयव्याघ्रभयाद्यंक्रमशोहरेत् ॥ २७ ॥ अथातोदक्षिणामू

त्रैर्यन्त्रंवक्ष्येचमत्कृतम् ॥ कुर्य्यादष्टदलंपद्मंकर्णिकायांसमालिखेत् ॥ २८ ॥ साध्यनामस्वरालेख्याद्वन्द्वशःकेशरेषुच॥ ततश्चाद्यदलेलेख्याअउमास्तारव र्णकाः ॥२९॥ पत्रेद्वितीयेनमोभतृतीयेगवतेलिखेत् ॥ चतुर्थेदक्षिणाचेतिमूर्त्त येपञ्चमेलिखेत् ॥ ३० ॥ मह्यमेविलिखेत्पष्ठेसप्तमेद्यांप्रयेतिच ॥ च्छस्वाहेत्यष्टमे पत्रेवृत्तयोरन्तरेततः ॥ ३१ ॥ वीथ्यांकादिकवर्णांश्चतद्बाह्येभूपुरंलिखेत् ॥ चतुष्कोणेचतुर्थस्यवर्गस्यप्रथमाक्षरम् ॥३२॥ चतुर्थेचद्वितीयंचतृतीयंवह्निको णतः ॥ लिखेच्चैवाष्टगन्धेनभूर्ज्जेधार्य्यंसदागले ॥ ३३ ॥ पुत्रपौत्रप्रदंनॄणा मायुःश्रीविजयप्रदम्॥कृत्यापस्मारभूतादिनाशनंसर्वकामदम्॥३४॥ अथातः सम्प्रवक्ष्यामियन्त्रंमृत्युञ्जयाभिधम् ॥ लिखेदष्टदलंपद्मंकर्णिकायांलिखेद्ध्रु वम्॥ ३५॥तस्यमध्येसाध्यनामदिग्दलेषुचक्षंलिखेत् ॥ विदिक्पत्रेषुसोलेख्यो बहिर्भूपुरमालिखेत् ॥ ३६ ॥ वंकारंतच्चतुर्दिक्षुउकारंविदिशासुच ॥ यन्त्रंमृत्यु ञ्जयस्येदंजपहोमादिसाधितम् ॥३७॥ धृतंभूर्ज्जेथवाकण्ठेबाहौकोष्ठेप्रकोष्ठके ॥ ग्रहरोगविषादीनांनाशनंमृत्युभञ्जनम् ॥ ३८ ॥ कीर्त्तिश्यादीन्दिराकान्तिपु त्रदंनात्रसंशयः ॥ एतद्यःपूजयेन्नित्यमपमृत्युर्विनश्यति ॥ ३९ ॥ अथातः सम्प्रवक्ष्यामियन्त्रंवटुकभैरवम् ॥ आलिख्याष्टदलंपद्मंकर्णिकायांसमालि खेत् ॥ ४० ॥ श्रींह्रींक्लींक्षौंचाष्टदलेद्विरावृत्त्यासमालिखेत् ॥ वटुकायेत्यक्षरा णिबहिःषोडशपत्रके ॥ ४१ ॥ आपदुद्धारणायेतिद्विर्वदेद्वटुकायह्रीम् ॥ ले ख्यएकैकवर्णोयंबहिःषोडशपत्रके ॥ ४२ ॥ लिखेत्स्वरांश्चतद्बाह्येद्वात्रिंश द्दलकंलिखेत् ॥ ककारादिसकारान्तान्बहिर्भूपुरमालिखेत् ॥ ४३ ॥ जयदंसुख दंवश्यंमृत्युदारिद्र्यनाशनम्॥श्रीप्रदंदुरितव्याधिदुष्टग्रहनिकृन्तनम् ॥५४४॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेदैवतयन्त्रकथनं नामत्रयस्त्रिंशःप्रकाशः॥ ३३ ॥

---

श्रीदेव्युवाच ॥ ब्रूह्येकादशरुद्रस्यमन्त्रान्हनुमतोमम ॥ राक्षसानिहतायेन त्वत्तोलब्धवराअपि ॥ १ ॥ श्रीशिवउवाच ॥ वक्ष्यामितवदेवेशिमन्त्रान्ह नूमतस्त्विह ॥ चातुर्युगांस्तानाकल्पसंस्थितान्सिद्धिदायकान् ॥ २ ॥ तत्रा

दौकथयिष्यामिमालामन्त्रंमहाफलम् ॥ तारंचवाग्भवंलक्ष्मींह्रींक्लींहुंचसमु च्चरेत् ॥ ३ ॥ आद्यन्ताकृतिवेदार्णोबिन्दुरुद्रस्वरान्वितः ॥ हनुमतस्त्वाद्यकू टमेतत्साधकउच्चरेत् ॥ ४ ॥ प्रकृत्याकृतिवेदार्णाबिन्दुरुद्रस्वरान्विताः ॥ द्विती यकूटमेतत्स्यादाद्यन्तकृतवर्णकाः ॥ ५ ॥ विसर्गेन्द्रस्वरोपेतास्तृतीयंकूटमु च्यते ॥ आद्यन्तसिद्धाकृत्यब्धिवर्णैरीशस्वरान्वितैः ॥ ६ ॥ सानुस्वारैस्तूर्य्य कूटंसाध्यासौपञ्चमंमतम् ॥ तारोनमोहनुमतेप्रकटेतिपराक्रम ॥७॥ आक्रान्त दिङ्मण्डलयशोवितानधवेतिच ॥ लीकृतजगत्रितयवज्रदेहज्वलेतिच ॥८॥ दग्निसूर्य्येतिकोटीतिसमप्रभतनूरुह ॥ रुद्रावतारलङ्केतिपुरीदहनसंवदेत् ॥६॥ उदधिलङ्घनदशग्रोक्त्वाचाथशिरःकृतान् ॥ तकसीताश्वासनेतिवदेद्वायुसुते तिच॥१०॥अञ्जनीगर्भसम्भूतश्रीरामलक्ष्मणावदेत्॥नन्दकरकपिसैन्यप्रकारे तिततोवदेत् ॥ ११ ॥ सुग्रीवसख्यकारेतिणेतिबालिनिबर्हणा ॥ कालनद्रो णपर्वेतिनोत्पादनपदंवदेत् ॥१२॥अशोकवनभीत्युक्त्वादारणेतिपदंवदेत्॥ अक्षकुमारकच्छेतिनवनेतिपदंततः ॥ १३ ॥ रक्षाकरसमूहेतिविभेदनपदंवदे त् ॥ ब्रह्मास्त्रेतिब्रह्मशक्तिग्रहणोक्त्वाचलक्ष्मण ॥ १४ ॥ शक्तिभेदविदारेतिण विशल्यौषधीतिच ॥ समानयनबालेतिसंवदेद्भानुमण्डल ॥ १५ ॥ ग्रसनो ग्रमेघनादहोमविध्वंसनेतिच ॥ इन्द्रजिद्वधकारेतिणेतिसीतेनिरञ्जक ॥ १६ ॥ राक्षसीसङ्घवीथ्यन्तेदारणेतिवदेत्पदम् ॥ कुम्भकर्णादिवधकृत्परायणपदंवदे त् ॥ १७ ॥ रामभक्तितदित्युक्त्वावदेत्परपदंततः ॥ समुद्रव्योमपदतःसमुलङ्घ नसंवदेत् ॥ १८ ॥ महासामर्थ्येतिमहातेजःपुञ्जविराजमा ॥ नस्वामिवचने त्युक्त्वासम्पादितार्जनेतिच ॥ १६ ॥ संयुगेतिसहायेतिकुमारेतिग्रहावदेत् ॥ दीनांभीमपदान्तेतुशब्दोदयपदंवदेत् ॥ २० ॥ दक्षिणांशेतिमार्त्तण्डमेरुप र्वतवीथिका ॥ चलेतिसकलेत्युक्त्वामन्त्रागपदतोवदेत् ॥ २१ ॥ माचार्य्यम मसर्वग्रहविनाशनसर्वच ॥ ज्वरोच्चाटनसर्वेतिवदेच्चविषनाशन ॥ २२ ॥ स र्वापत्तिपदान्तेतुनिवारणपदंवदेत् ॥ सर्वदुष्टपदान्तेचनिबर्हणपदंतथा ॥ २३ ॥ सर्वव्याघ्रादिपदतोवदेद्भयनिवारण ॥ सर्वशत्रुच्छेदनेतिवदेन्ममपर स्यच ॥ २४ ॥ त्रियुगेतिपदान्तेतुनपुंस्त्रीतिपदंवदेत् ॥ नपुंसकात्मकसर्वा

न्तेवदेज्जीवयद्वंततः ॥ २५ ॥ वशयद्वयमानयममाज्ञाकारकंवदेत् ॥ सम्पा
दयद्वयंनानामुनिध्येयततोवदेत् ॥ २६ ॥ सर्वेतिममसम्प्रोच्यपरिवारान्ममे
तिच ॥ २७ ॥ सेवकान्कुरुयुग्मंत्रसर्वशस्त्रास्त्रंवदेत् ॥ विषान्विध्वंसयेति
द्विरुक्त्वाह्लांत्रितयंवदेत् ॥ २८ ॥ ह्वाहाहापाहिपाहीतिभागुक्तंकूटपञ्चकम् ॥
विलोमेनवदेत्सर्वंसर्वशत्रुहरंपरम् ॥ २९ ॥ वृत्तानिपरसैन्यानिक्षोभयद्वितयं
मम ॥ सर्वकार्य्यजातमितिसाधयद्वितयंततः ॥३०॥ सर्वदुष्टदुर्जनेतिमुखानि
कीलयद्वयम् ॥ यंत्रयंह्लांत्रयंत्रींह्रींहुंफट्यंचाग्निगेहिनी ॥ ३१ ॥ मालामन्त्रो
हनुमतोनागनागशराक्षरः ॥ मुनिरस्येश्वरश्छन्दोनुष्टुब्देवोञ्जनीसुतः॥३२॥
तारोनमोभगवतेचाञ्जनेयायहृन्मनुः ॥ तारोनमोभगवतेशिरःस्याद्रुद्रमूर्त्तये ॥
३३ ॥ तारोनमोभगवतेशिखावायुसुतायच ॥ अग्निगर्भायभद्रायकवचस्य
मनुःस्मृतः ॥ ३४ ॥ तारोनमोभगवतेरामदूतायनेत्रके ॥ ब्रह्मास्त्रनिवारणाय
नरवक्त्रास्त्रमन्त्रकः ॥ ३५ ॥ स्फटिकाभंस्वर्णकान्तिन्द्विभुजञ्चकृताञ्जलिम् ॥
कुण्डलद्वयसंशोभिमुखाम्भोजंस्मरेन्मुहुः ॥ ३६ ॥ पूजातुवैष्णवेपीठेशैवेवा
चावृतिंविना ॥ अयुतञ्चपुरश्चर्य्यारामस्याग्रेशिवस्यच ॥ ३७ ॥ घृतहोमःसह
स्रंस्यात्तर्प्पणादिततश्चरेत्॥ जितेन्द्रियश्चणकाशीहनुमद्ध्यानतत्परः॥३८॥
क्षुद्ररोगनिवृत्त्यर्थमष्टोत्तरशतंजपेत् ॥ महारोगादिशान्त्यर्थमष्टोत्तरसहस्रक
म् ॥ ३९ ॥ सप्ताहंनियताहारोजपेन्निशिचराक्षसः ॥ ग्रहादयश्चनश्यन्ति
तथासर्वेभिचारकाः ॥ ४० ॥ जयादिकाङ्क्षीत्वयुतंजपेन्निशियतासनः॥ अ
युतेनैवविच्छिन्नांसन्धिमाप्नोत्यसंशयम् ॥ ४१ ॥ लङ्कायादाहकंध्यायन्द्वाद
शार्णमहामनुम् ॥ हौंबीजंसम्यगुच्चार्य्यपूर्वोक्तंकूटपञ्चकम् ॥ ४२ ॥ हनूमते
नमोमन्त्रोरामचन्द्रोमुनिःस्मृतः ॥ जगतीछन्दउद्दिष्टंहनुमान्देवतामतः ॥
४३ ॥ बीजंतुपञ्चमंकूटंशक्तिराद्यंतुकूटकम् ॥ षड्बीजैःप्रथमैर्न्यासःषडङ्गोस्य
प्रकीर्तितः ॥ ४४ ॥ मूर्द्धिभालेदृशोरास्येकण्ठेबाहौतथाहृदि ॥ कुक्षौनाभौ
ध्वजेजान्वोःपादयोर्मनुवर्णकान् ॥ ४५ ॥ मूर्द्धिभालेमुखेहृत्केनाभावूर्वोश्च
जङ्घयोः ॥ पादयोर्विन्यसेन्मन्त्रंषड्बीजानिपदद्वयम् ॥ ४६ ॥ बालार्काभं
त्रिभुवनक्षोभकंसर्वराक्षसान् ॥ नादेनैवत्रासयन्तंसुग्रीवादिकसेवितम्॥४७॥

सुन्दरं रामचरणध्यानं ध्यायेत्समीरजम् ॥ यजेदष्टदले पद्मे केशरेष्वङ्गपूजनम् ॥ ४८ ॥ रामभक्तो महातेजाः कपिराजो महाबलः । द्रोणाद्रिहारको मेरुपीठकार्चनकारकः ॥ ४९ ॥ दक्षिणाशाभास्करश्च सर्वविघ्ननिवारकः ॥ एवं पत्रेषु नामानि पूजयेच्च दलाग्रतः ॥ ५० ॥ सुग्रीवमङ्गदं नीलं जाम्बवन्तं तथानलम् ॥ सुषेणं द्विविदं चैव भूपुरे दिक्पतीनपि ॥ ५१ ॥ तदस्त्राणि च तदस्त्राणि जपेदर्कसहस्रकम् ॥ दशांशं जुहुयाद्व्रीहीन्पयोदध्याज्यसंयुतम् ॥ ५२ ॥ एवं सिद्धमनुर्मन्त्री प्रयोगानाचरेत्तथा ॥ कदलीबीजपूराम्रफलैर्हुत्वा सहस्रकम् ॥ ५३ ॥ द्वाविंशति ब्रह्मचारी विप्रान्सम्भोजयेत्ततः ॥ एवं कृते महाभूतविषचौराद्युपद्रवाः ॥ ५४ ॥ नश्यन्ति क्षणमात्रेण विद्विष्टग्रहदानवाः ॥ अष्टोत्तरशतेनाभिमन्त्रितं विषनाशनम् ॥ ५५ ॥ रात्रौ नवशतं मन्त्रं जपेद्दशदिनावधि ॥ यो नरस्तस्य नश्यन्ति राजशत्रुप्रभीतयः ॥ ५६ ॥ अभिचारे तु भूतोत्थज्वरे तन्मन्त्रमन्त्रितैः ॥ भस्मभिः सलिलैर्वापि ताडयेज्ज्वरिणं क्रुधा ॥ ५७ ॥ दिनत्रयाज्ज्वरान्मुक्तः सुखं संलभते नरः ॥ तन्मन्त्रितौषधं जग्ध्वा नीरोगो जायते ध्रुवम् ॥ ५८ ॥ तन्मन्त्रितं पयः पीत्वा योद्धुं गच्छन्मनुं जपेत् ॥ तज्जप्तभस्मलिप्ताङ्गः शत्रुसङ्घैर्न बाध्यते ॥ ५९ ॥ सूर्य्यास्तमयमारभ्य जपेत्सूर्य्योदयावधि ॥ कीलकं भस्म चादाय सप्ताहावधि संयुतम् ॥ ६० ॥ निखनेद्भस्म कीलौ तु विद्विषां द्वार्य्यलक्षितः ॥ विद्वेषाद्भयमापन्नाः पलायन्तेऽरयो चिरात् ॥ ६१ ॥ अभिमन्त्रितभस्माम्बुदेवचन्दनसंयुतम् ॥ दीयते तु यदा यस्मै स तदा तस्य दासवत् ॥ ६२ ॥ क्रूराः स्वयं तु चौराद्या भवन्ति विविधा वशाः ॥ ईशानदिशि मूलेन भूतांकुरा नगेः शुभाम् ॥ ६३ ॥ अंगुष्ठमात्रां प्रतिमां तं विधाय हनूमतः ॥ प्राणसंस्थापनं कृत्वा सिन्दूरैः परिपूज्य च ॥ ६४ ॥ गृहस्याभिमुखीं द्वारे निखनेन्मन्त्रमन्त्रिताम् ॥ संजायन्ते कदाचिन्न गेहे तास्मिन्नुपद्रवाः ॥ ६५ ॥ प्रत्यहं धनपुत्राद्यैरेधते तद्गृहं चिरम् ॥ निशि श्मशानभूमिस्थमृत्स्नया वापि भस्मना ॥ ६६ ॥ शत्रोः प्रतिकृतिं कृत्वा हृदि नाम समालिखेत् ॥ कृतप्राणप्रतिष्ठान्तां भिन्द्याच्छस्त्रैर्मनुं जपेत् ॥ ६७ ॥ मन्त्रान्ते प्रोच्चरेच्छत्रोर्नाम च्छिन्धि च भिन्धि च ॥ मारयेति च तस्यान्ते दन्तैरोष्ठं निपीडयच्च ॥ ६८ ॥ एवं सप्तदिनं कुर्वन्हन्याच्छत्रून्न संशयः ॥ अर्द्धचन्द्राकृतौ कुण्डे स्थण्डिले वा हुतं चरे

त॥६९॥ मुक्तकेशः श्मशानस्थो वलसौराष्ट्रिकायुतैः॥ उन्मत्तफलपुष्पैश्च वनखरोमाषपैरपि॥७०॥ काककौशिकगृध्राणां पक्षैः श्लेष्मान्तकाक्षजैः॥ समिद्भिश्च त्रिशतैर्दक्षिणाशामुखो निशि॥७१॥ होमं कुर्य्यात्स्मरन्मन्त्रं मारयेद्रिपुमुद्धतम्॥ शतषट्कं जपेद्रात्रौ श्मशाने दिवसत्रयम्॥७२॥ ततो वेताल उत्थाय तदेह्माविशुभाशुभम्॥ उदितं कुरुते सर्वं किङ्करीभूपमन्त्रिणः॥७३॥ हनुमत्प्रतिमां भूमौ विलिखेत्तत्पुरो मनुम्॥ साध्यनामद्वितीयान्तं विमोचय विमोचय॥७४॥ तत्सर्वं मार्जयेद्वामहस्तेनाथ पुनर्लिखेत्॥ एवमष्टोत्तरशतं लिखित्वा मार्जयेत्पुनः॥७५॥ एवं कृते पराधीनो निगडैर्मुच्यते क्षणात्॥ एवं विद्वेषणादीनि कुर्य्यात्तत्पल्लवं लिखेत्॥७६॥ वश्यार्थं सर्षपैर्होमो विद्वेषे कस्वीरजैः॥ कुसुमैस्तस्य काष्ठैर्वा जीरकैर्मरिचैरपि॥७७॥ ज्वरे दूर्वागुडूचीभिर्दध्ना क्षीरेण वा घृतैः॥ तैलाक्ताभिश्च निर्गुण्डीसमिद्भिर्वा समाचरेत्॥७८॥ सौभाग्यश्चन्दनैः श्वेतै रोचनैलालवङ्गकैः॥ सुगन्धिपुष्पैर्वश्यार्थं सप्तधान्यैस्तदाभये॥७९॥ किंबहूक्तैर्विषव्याधौ शान्तौ मोहे च मारणे॥ विवादे स्तम्भने चैव भूतभीतौ च संकटे॥८०॥ वश्ये युद्धे क्षते दिव्ये बन्धमोक्षे महाबले॥ मन्त्रोऽयं साधितो दद्यादिष्टसिद्धिं नृणां ध्रुवम्॥८१॥ अथातः सम्प्रवक्ष्यामि मालामन्त्रानुपासितान्॥ नवग्रहैर्हनुमतो जपात्सिद्धिविधायकान्॥८२॥ तेषां मुन्यादिकं न्यासः षडङ्गं पूजनन्तथा॥ प्रयोगाश्च परिज्ञेयाः साधकैर्द्वादशार्णवत्॥८३॥ तत्रादौ सम्प्रवक्ष्यामि भास्करोपासितम्मनुम्॥ पूर्वोक्तमालामन्त्रस्य बीजमेकादशन्तु तत्॥८४॥ नवानामपि मन्त्राणामादौ जानन्तु देवताः॥ वदेन्नमो हनुमते वदेन्नमः परस्य च॥८५॥ क्षयदुष्टगणान्प्रोच्य तथा चारिज्ञतज्वर॥ एकाहिकद्व्याहिकेति त्र्याहिकेति चतुर्थक॥८६॥ सन्ततज्वरसन्नीतिपातिकज्वरभूत्वदेत्॥ तज्ज्वरेति च मन्त्रेति ज्वरशूलभगन्दर॥८७॥ मूत्रकृच्छ्रकपोलेति वृन्दस्थलपदन्ततः॥ कर्णशूलेत्यक्षिशूलवदेच्चरदशूल च॥८८॥ हस्तशूलेति पादेतिशूलादीन्सर्वमुच्चरेत्॥ व्याधीन्नुक्षणे त्रासयेति भिन्धि छिन्धि विनाशय॥८९॥ द्विधा निकृन्तय द्वेधा छेदय द्विश्च भेदय॥ महावीरपदन्तारं हनुमन्ह्रां द्वयं वदेत॥९०॥ हूंहूं द्वे च वदेद्ह्रीं द्वे हूंहूं फट् द्व वह्निगेहिनी॥ मालामन्त्रोऽयमु

द्दिष्टःसर्वरोगविनाशकः ॥ ९१ ॥ अथातःसम्प्रवक्ष्यामि चन्द्रेणोपासितम्मनुम् ॥ वदेन्नमोभगवतेराक्षसेतिकुलेतिच ॥ ९२ ॥ दानवानलदिव्यार्ककोटिज्वर प्रभेतिच ॥ रंलुंरुंहंभीमनादवदेन्ममपरस्यच ॥ ९३ ॥ दुष्टदुर्जनमोहायवदे त्कारकवादिवि ॥ वादिद्वेषकारकेतिकार्य्यभञ्जकसंवदेत् ॥ ९४ ॥ कुरुप्रकृति केत्युक्त्वाप्रवृत्तमुदमुच्चरेत् ॥ कोपावेशेनहत्वेतिचामुकान्वैसमुच्चरेत् ॥ ९५ ॥ दू रस्थेतिसमीपस्थांस्ततोभूतमवीतिच ॥ व्वद्वर्त्तमानान्पुंस्त्रीनपुंसकान्पदमुच्चरे त् ॥ ९६ ॥ चातुर्वर्णाचक्षणेनेतिसत्वरंहनयुग्मकम् ॥ दहसंहारयद्धिर्द्धिर्द्धिर्मो हयपदंवदेत् ॥ ९७ ॥ शमयद्धिर्द्धेपयद्धिर्वदेत्सर्पालमूषक ॥ वत्सद्वयःपदमुच्चा र्य्यप्राणिनःपदमुच्चरेत् ॥ ९८ ॥ द्विर्विध्वंसयहिलिद्धिर्द्धिर्द्धिर्मूकम्पराजय ॥ बन्धयद्धिःपातयद्धिर्ममेतिचपरस्यच ॥ ९९ ॥ दासीभूतंवदेद्द्वेशासम्पादय त्रिधात्रिधा ॥ ह्रांहुंत्रिधाचफट्स्वाहामन्त्रोयंसमुदीरितः ॥ १०० ॥ अथातः सम्प्रवक्ष्यामिमङ्गलोपासितंमनुम् ॥ वदेन्नमोहनुमतेमहाबलपराक्रम ॥ १ ॥ ममपरस्यचभूतवदेत्प्रेतपिशाचशा ॥ किनीडापदमुच्चार्य्यकिनीयक्षिणिकाच पू ॥ २ ॥ तनामारीमहामारीकृत्यायत्तेतिराक्षस ॥ वदेद्भैरववेतालग्रहेतिब्र ह्मराक्षसा ॥ ३ ॥ दिकजातकूरबन्धान्क्षणेनहनयुग्मकम् ॥ भञ्जयद्वितयं प्रोच्यवदेद्द्वेधानिरासय ॥ ४ ॥ द्वेधावारयबन्धद्वितुदसूदद्वयंद्वयम् ॥ धनुर्द्वे धामोचयद्धिर्ममेनंचपदंवदेत् ॥ ५ ॥ रक्षरक्षमहामोहेश्वररुद्रावतारहा ॥ हा हाह्रंह्रंत्रिधाहुंफट्स्वाहायमुदितोमनुः ॥ ६ ॥ अथातःसम्प्रवक्ष्यामिबुधेनो पासितंमनुम् ॥ नमोहनुमतेप्रोच्यत्रैलोक्यक्रमणेतिच ॥ ७ ॥ सर्वशत्रूंश्च तुर्वर्णसम्भवानितिचोच्चरेत् ॥ पुंस्त्रीनपुंसकान्भूतभविष्यद्वर्त्तमोच्चरेत् ॥ ८ ॥ नान्दूरस्थसमीपस्थान्नानानामपदंलिखेत् ॥ तथासङ्करजातिजातान्पदंचैव समुच्चरेत् ॥ ९ ॥ कलत्रपुत्रमित्रेतिभृत्यबन्धुसुहृत्पदम् ॥ समतापुरुशक्तीतिस मेतान्धनरावदेत् ॥ १० ॥ ज्यादिसम्पत्तियुतान्राजराजेतिपुत्रसे ॥ वकान्म न्त्रिसचिवसखीनुक्त्वात्यन्तिकान्क्षणात् ॥ ११ ॥ वदेदधिपतिंमांचकुरुद्वयप दंततः ॥ नानोपायैर्मारयद्धिःशत्रूञ्छेदयछेदय ॥ १२ ॥ भूतसङ्घैःसहेत्युक्त्वा वदेद्भक्षयभक्षय ॥ भिन्धिभिन्धिचसम्प्रोच्यत्वग्निनाज्वालयद्वयम् ॥ १३ ॥

दाहयद्वितयंप्रोच्यवदेदक्षकुमारवत् ॥ पादतलाक्रमणेनतनुंचैवशिलातले ॥ १४ ॥ व्यात्रोटयघातयद्विर्द्विर्बन्धयपदंवदेत् ॥ क्षुधाचेतिपदंप्रोच्यनखैर्द्वेधा विदारय ॥ १५ ॥ देशादस्मादितिप्रोच्यवदेदुच्चाटयद्वयम् ॥ द्विर्ध्वंसयत्रास यद्विर्वदेत्पश्चाद्भयातुरान् ॥ १६ ॥ विसंज्ञान्सद्यउच्चार्य्यद्वेधाकुरुपदंवदेत् ॥ भस्मीभूतांस्ततोद्वेधावदेदुत्पाटयेतिच ॥ १७ ॥ भक्तजनवत्सलेतिसीताशो कापहारक ॥ सर्वत्रमांवदेदेनंरक्षरक्षचहापुनः ॥ १८ ॥ हाहाहुंहुंत्रिधाद्विः फट्स्वाहान्तोमनुरीरितः ॥ अथातःसम्प्रवक्ष्यामिगुरुणोपासितंमनुम् ॥ १९ ॥ नमोहनुमतेप्रोच्यवदेन्ममपरस्यच ॥ महाभयानिसर्वेतिव्याघ्रतस्करसंवदेत् ॥ २० ॥ ज्वालाग्निविपुजङ्गेतिमस्थावरमहेतिच ॥ कृत्रिमोपविषमहासंग्रामेच पदंवदेत् ॥ २१ ॥ दुष्टवादेविवादेचशत्रोःकामान्हरद्वयम् ॥ द्विर्ग्रासयत्रोट यद्विर्भञ्जयस्तम्भयद्विधा ॥ २२ ॥ कण्डयत्रोटयद्विर्द्विर्वानरक्षमसंवदेत् ॥ महा वीरेतिमामेनंरक्षरक्षत्रिधात्रिधा ॥ २३ ॥ हाहुंद्वेत्रिश्चफट्स्वाहाप्रोक्तोयंमनु सत्तमः ॥ अथातःसम्प्रवक्ष्यामिशुक्रेणाराधितंमनुम् ॥ २४ ॥ तारोनमोहनु मतेवदेत्सर्वग्रहानिति ॥ भूतेतिचभविष्यञ्चवर्त्तमानान्पदंवदेत् ॥ २५ ॥ दूरस्थांश्चसमीपस्थान्सर्वकालंवदेत्पदम् ॥ उच्चाटयद्वयंप्रोच्यपरेतिचबलानि च ॥ २६ ॥ क्षोभयद्वितयंसर्वकार्य्याणिसाधयद्विधा ॥ ह्रांह्रींह्रंद्वित्रयंफट्च स्वाहान्तोयंमनुर्मतः ॥ २७ ॥ अथातःसम्प्रवक्ष्यामिशनिनाराधितंमनुम् ॥ परकृतयन्त्रमन्त्रपराहंकारसंवदेत् ॥ २८ ॥ भूतप्रेतपिशाचेतिसर्वज्वरपरेतिच ॥ दृष्टिरोगादिकान्प्रोच्यद्विस्त्रासयनिवारय ॥ २९ ॥ बन्धबन्धयचद्वेधाइलवुचि लवुवदेत् ॥ कुयन्त्राणिसर्वदुष्टवाचंहुंफड्दहाङ्गना ॥ ३० ॥ इत्येवायंमनुःप्रो क्तःसर्वापत्तिनिवारकः ॥ अथातःसम्प्रवक्ष्यामिराहुणोपासितंमनुम् ॥ ३१ ॥ नमोभगवतेप्रोच्यवदेद्धनुमतेपदम् ॥ पवनात्मजायेतिराघवप्राणसमायतु ॥ ३२ ॥ लक्ष्मणप्राणदात्रेचसीताशोकविनाशकः ॥ ङेन्तोरावणदर्पघ्नोङेन्तः सर्वपदंवदेत् ॥ ३३ ॥ दुष्टविनाशनायेतिरिपुचौरपदंवदेत् ॥ व्याघ्रवराहकृत्ये तिचान्तकायपदंवदेत् ॥ ३४ ॥ दुष्टसत्त्वविनाशेतिनायहुंफड् हुताङ्गना ॥ उक्तोयंमनुराजस्तुलक्ष्मीविद्याजयप्रदः ॥ ३५ ॥ अथातःसम्प्रवक्ष्यामिकेतुनो

पासितम्मनुम् ॥ नमोभगवतेप्रोच्यवदेद्धनुमतेपदम् ॥ ३६ ॥ चोररिपुक्रूमि खगपतङ्गादीन्समुच्चरेत् ॥ उच्चाटयहुंफट्चस्वाहान्तोमनुरीरितः ॥ ३७ ॥ रामचन्द्रोमुनिश्चैषांगाथाछन्दःप्रकीर्तितम् ॥ महावीरोत्रहनुमान्देवतासम्प्रकीर्तिता ॥ ३८ ॥ नवमंकूटमुद्दिष्टंबीजंशक्तिस्तथाष्टमम् ॥ एकदशकूटपूर्वनामन्यासंसमाचरेत् ॥ ३९ ॥ ङेन्तंनामतथांगुष्ठादिकेचापिषडङ्गकम् ॥ हनुमान्रामदूतश्चलक्ष्मणप्राणदायकः ॥ ४० ॥ अञ्जनीसूनुरित्येवसीताशोकविनाशनः ॥ नेत्रान्तमेवंकृत्वातुलङ्काप्रासादभञ्जकः ॥ ४१ ॥ अर्कास्तमयमारभ्य यावत्सूर्य्योदयोभवेत् ॥ तावन्मन्त्रं जपेद्रात्रौकार्य्यमुद्दिश्यमन्त्रवित् ॥ ४२ ॥ सप्ताहाज्जायतेसिद्धिर्वायुपुत्रप्रसादतः ॥ दशवासरपर्य्यन्तंराजशत्रुभयंहरेत् ॥ ४३ ॥ ओषधावसरेमन्त्रंदशवारंजपेद्बुधः ॥ तेनाभिमन्त्रितंदत्तंसर्वंसफलतांव्रजेत् ॥ ४४ ॥ भस्माभिमन्त्रितंयस्यदेहेचन्दनमिश्रितम् ॥ चर्चितंपरबाधादितस्यनश्यत्यसंशयम् ॥ ४५ ॥ सवश्योजायतेनूनंप्राणैरपिधनैरपि ॥ दासतां यातिदेवोपिमनुष्येषुचकाकथा ॥ ४६ ॥ क्रूरसत्त्वानिसर्वाणिवशयेदमुनाखलु ॥ प्रकारेणमहावीरज्वरितःशान्तितामियात् ॥ ४७ ॥ बन्धमुक्तौजपेन्मन्त्रं रात्रौरात्रौनसंशयः ॥ द्वादशार्णप्रयोगांश्चनिखिलांस्तत्रकारयेत् ॥ ४८ ॥ संस्तम्भनेतुयवोमाषान्यग्रोधस्यफलानिच ॥ शाल्मलीकुसुमंतालंहरिद्रामलकीफलम् ॥ ४९ ॥ मधुरत्रयसंयुक्तंयथालाभंतुहोमयेत् ॥ उच्चाटार्थंनिशिहुनेच्छ्लेष्मान्तकबिभीतकान् ॥ ५० ॥ अष्टोत्तरशतंरात्रौकार्य्यमिष्टंचसिद्ध्यति ॥ वश्यार्थंहोमयेद्द्राक्षामपूपानिचगुग्गुलम् ॥ ५१ ॥ विद्वेषेकटुतैलेनसंयुक्तंहिंगुहोमयेत् ॥ पञ्चखाद्यैर्नारिकेलैरिक्षुभिःकदलीफलैः ॥ ५२ ॥ सर्वसन्तोषकृद्धोमोमधुरत्रितयान्वितैः ॥ सौभाग्यार्थंतुकाश्मीरकस्तूरीत्वक्समीरणैः ॥ ५३ ॥ पत्रागुरुनखैर्मांसीजातीपत्रफलैस्तथा ॥ धत्तूरफलपुष्पाणिसमिधोमोहनेस्मृताः ॥ ५४ ॥ अथान्यंसम्प्रवक्ष्यामिमन्त्रमष्टादशाक्षरम् ॥ नमोभगवतेप्रोच्य आञ्जनेयायसंवदेत् ॥ ५५ ॥ महाबलायस्वाहेतिमुनिरस्येश्वरःस्मृतः ॥ छन्दोनुष्टुब्देवतातुहनुमान्हंचबीजकम् ॥ ५६ ॥ स्वाहाशक्तिश्चाञ्जनेयोरुद्रमूर्त्तिःसुरोमतः ॥ अग्निगर्भोरामदूतोब्रह्मास्त्रविनिवारकः ॥ ५७ ॥ द्विराष्ट्

त्यापडङ्गानितथांगुष्ठादिपुन्यसेत् ॥ तप्तकाञ्चनसंकाशंहृदयेहृदयाञ्जलिम् ॥ ५८ ॥ किरीटिनंकुण्डलिनंध्यायेद्वानरनायकम् ॥ वैष्णवेपूजयेत्पीठेद्वादशार्णोक्तवर्त्मना ॥ ५९ ॥ अयुतंप्रजपेन्मन्त्रंदशांशंजुहुयात्तिलैः ॥ विप्रसन्तर्पणाद्यंतुप्राग्वत्सिद्धोभवेन्मनुः ॥ ६० ॥ जितेन्द्रियोनक्तभोजीप्रत्यहंसाष्टकंशतम् ॥ जपित्वाक्षुद्ररोगेभ्योमुच्यतेदिवसत्रयात् ॥ ६१ ॥ भूतप्रेतपिशाचादिनाशायैवंसमाचरेत् ॥ महारोगनिवृत्त्यैतुसहस्रंत्रिदिनंजपेत् ॥ ६२ ॥ यताशनोयुतंनित्यंजपेद्ध्यायन्कपीश्वरम् ॥ राक्षसौघंविनिघ्नन्तमचिराज्जयतिद्विपः ॥ ६३ ॥ सुग्रीवेणसमंराममेलयन्तंस्मरन्कपिम् ॥ प्रजप्यायुतमात्रंतुसन्धिंकुर्य्याद्विरुद्धयोः ॥ ६४ ॥ लङ्कांदहन्तंतंध्यायेदयुतंप्रजपेन्मनुम् ॥ शत्रूणांप्रदहेद्ग्रामानचिरादेवसाधकः ॥ ६५ ॥ प्रयाणसमयेध्यायन्हनुमन्तंमनुंजपेत् ॥ योयातिसोचिरात्स्वेष्टंसाधयित्वागृहंव्रजेत् ॥ ६६ ॥ यःकपीशंसदागेहेपूजयेज्जपतत्परः ॥ आयुर्लक्ष्म्यःप्रवर्धन्तेतस्यनश्यन्त्युपद्रवाः ॥ ६७ ॥ अथान्यंसम्प्रवक्ष्यामिमन्त्रमष्टाक्षरंपरम् ॥ षड्दीर्घयुक्ताहृल्लेखाप्रणवेनैवसम्पुटा ॥ ६८ ॥ अष्टार्णोयंहनुमतोमन्त्रराजःप्रकीर्तितः ॥ षड्दीर्घयुक्तबीजेनषडङ्गविधिरीरितः ॥ ६९ ॥ ध्यानपूजाजपाद्यत्रसर्वंस्याद्द्वादशार्णवत् ॥ एतत्प्रभावाज्झटितिचाधिव्याधिविवर्जितः ॥ ७० ॥ अथान्यंसम्प्रवक्ष्यामिमालामन्त्रंवदेद्ध्रुवम् ॥ वज्रकायवज्रतुण्डवदेत्कपिलपिङ्गल ॥ ७१ ॥ ऊर्ध्वकेशमहावेतिलरक्तमुखकीर्त्तयेत् ॥ तडिज्जिह्वमहारौद्रदंष्ट्रोत्कटकहृदयम् ॥ ७२ ॥ करालिनेमहादृढप्रहारिन्निति कीर्त्तयेत् ॥ लङ्केश्वरवधायान्तेमहासेतुपदन्ततः ॥ ७३ ॥ बन्धान्तेचमहाशैलप्रवाहगगनेचर ॥ एह्येहिभगवन्प्रोच्यमहाबलपराक्रम ॥ ७४ ॥ भैरवाज्ञापयप्रोच्यएह्येहीतिपदंवदेत् ॥ महारौद्रपदम्प्रोच्यदीर्घपुच्छेनवेष्टय ॥ ७५ ॥ वैरिणम्भञ्जयद्वन्द्वंहुंफट् चायंध्रुवादिकः ॥ बाणनेत्रेन्दुवर्णोत्रमालामन्त्रोऽखिलेष्टदः ॥ ७६ ॥ एवमाराधनम्प्रोक्तंरुद्रस्यैकादशस्यतु ॥ अतःपरम्प्रवक्ष्यामिकार्त्तवीर्य्यार्जुनस्यच ॥७७॥

इतिश्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेहनुमन्मन्त्रकथनंनामचतुस्त्रिंशत्प्रकाशः ३४॥

श्रीशिवउवाच ॥ शृणुदेविप्रवक्ष्यामिसर्वतन्त्रेषुगोपितान् ॥ पञ्चाम्नायगतान्मन्त्रानर्जुनस्यब्रवीमिते ॥१॥ धर्मपादाग्रभेदेनदेव्याम्नायाःप्रकीर्त्तिताः ॥ धर्मादीनांपादभेदाद्देवितुल्यंब्रवीमिते॥२॥ लोकानिन्द्यस्त्वेकपादःशास्त्रानिन्द्योद्विपाद्भवेत् ॥ त्रिपादद्वयोरनिन्द्यस्तुभक्तिश्रद्धासमन्वितः ॥ ३ ॥ सालोक्यमेकपात्प्रोक्तंसामीप्यन्तुद्विपात्स्मृतम् ॥ सारूप्यम्पादहीनःस्यात्सायुज्यम्पूर्णमुच्यते ॥ ४ ॥ देहाभिमाननाशेनलिङ्गदेहविनाशनम् ॥ तेनकालस्वरूपत्वंतत्कैवल्यम्प्रकीर्त्तितम् ॥ ५ ॥ यथोक्ताम्नायसेवाभिर्लभन्तेतत्परम्पदम् ॥ हीनसेवातूत्तमानांरासभारोहणंयथा ॥ ६ ॥ अथेष्टदान्मनून्वक्ष्येकार्त्तवीर्य्यार्जुनस्यच ॥ यःसुदर्शनचक्रस्यावतारःक्षितिमण्डले ॥ ७ ॥ वह्नितारयुतारौद्रीलक्ष्मीरग्नीन्दुशान्तियुक् ॥ वेधाधरेन्दुशान्त्याढ्योनिद्राघींशाग्निबिन्दुयुक् ॥ ८ ॥ पाशोमायांकुशम्पद्मावर्मास्त्रेकार्त्तवीपदम् ॥ रेफोबिन्द्वासनोनन्तोवह्निजौकर्णसंस्थितौ ॥ ९ ॥ मेषःसदीर्घपवनोमनुरुक्तोहृदन्तकः ॥ ऊनविंशतिवर्णोयन्तारादिर्नखवर्णकः ॥ १० ॥ दत्तात्रेयोमुनिश्चास्यच्छन्दोनुष्टुबुदाहृतम् ॥ कार्त्तवीर्य्यार्जुनोदेवोबीजंशक्तिध्रुवश्चहृत् ॥ ११ ॥ फ्रांब्रामितिस्याद्धृदयंक्लींभ्रींमितिशिरःस्मृतम् ॥ ऊंहंशिखासमाख्याताक्रोंश्रींकवचमीरितम् ॥ १२ ॥ हुंफडस्त्रंसमाख्यातंशेषेणव्यापकञ्चरेत् ॥ हृदयेजठरेनाभौजघनेगुह्यदेशके ॥ १३ ॥ दक्षपादेवामपादेसक्थिनजानुनिजंघयोः ॥ विन्यसेद्बीजदशकम्प्रणवद्वयमध्यगम् ॥ १४ ॥ ताराद्यान्नवशेषार्णान्मस्तकेचललाटके ॥ भ्रुवोःश्रुत्योस्तथैवाक्ष्णोर्नसिवक्त्रेगलेंसयोः ॥ १५ ॥ सर्वमन्त्रेणसर्वाङ्गेव्यापकञ्चततश्चरेत् ॥ सर्वेष्टसिद्धयेध्यायेत्कार्त्तवीर्यार्जुनेश्वरम् ॥ १६ ॥ प्रभाकररुचिःस्वर्णकण्ठमालाविराजितः ॥ ध्येयोरक्तांशुकोष्णीषीनानाकल्पविराजितः ॥ १७ ॥ सहस्रार्धभुजैर्बाणान्सहस्रार्धैर्धनूंषिच ॥ दधद्धुंकारशब्देश्चत्रासिताखिलदुर्जयः ॥ १८ ॥ स्यन्दनेचसमारूढःसप्तद्वीपधरापतिः ॥

---

१ क्रों व्रीं क्लीं भ्रं ऋां ह्रीं क्रों श्रीं हुंफट् कार्त्तवीर्य्यार्जुनाय नमः यह उन्नीसअक्षरका मंत्र है और इसके प्रथम ॐकार के मिलाने से बीस अक्षर होते हैं जैसे ॐ क्रों व्रीं क्लीं इत्यादि ॥

भूपालमुकुटाघृष्टपादपद्मोकुलोचनः ॥ १६ ॥ स्थूलकायोतिभीष्मश्चभक्तवत्स
लसत्तमः ॥ वैष्णवेतुयजेत्पीठेपद्मंदशदलंचरेत् ॥ २० ॥ तस्याङ्गमूर्त्तयःपञ्च
कर्णिकायाम्प्रपूजयेत् ॥ अग्नीशासुरवायव्यकोणेषुहृदयादिकः ॥ २१ ॥
अस्त्राण्यपिचतुर्दिक्षुपञ्चताःस्फटिकोज्ज्वलाः ॥ खड्गचर्म्मधराध्येयाश्चन्द्राभा
अङ्गमूर्त्तयः ॥२२॥ षट्कोणेषुषडङ्गानिततोदिक्षुविदिक्षुच ॥ चौरमदविभञ्जन
म्मारीमदविभञ्जनम् ॥२३॥ अरिमदविभञ्जनन्दैत्यमदविभञ्जनम् ॥ दुःखना
शंदुष्टनाशंदुरितामयनाशकौ ॥ २४ ॥ दिक्ष्वष्टशक्तयःपूज्याःप्राच्यादिषुसि
तप्रभाः ॥ क्षेमङ्करीवश्यकरीश्रीकरीचयशस्करी ॥२५॥ आयुःकरीतथाप्रज्ञाक
रीविद्याकरीपुनः ॥ धनकर्य्यष्टमीपश्चाल्लोकेशाअस्त्रसंयुताः ॥ २६ ॥ चतुर्ल
क्षंजपेन्मन्त्रंहोमःकार्य्यःपयोन्धसा ॥ तिलाज्यतण्डुलैर्वापिपुरश्चर्य्याविधान
तः॥ २७ ॥ तर्पणादिततःकुर्य्यान्मन्त्रसिद्धिःप्रजायते ॥ प्रयोगानपिकुर्वी
तशृणुतानघुनेश्वरि ॥ २८ ॥ अथातोदक्षिणेमार्गेवक्ष्यतेकाम्यपूजनम् ॥
शुद्धभूमावष्टगन्धैर्लिखेद्यन्त्रंतदुच्यते ॥ २९ ॥ लिखेद्दशदलम्पद्मंकर्णिका
यांसमालिखेत् ॥ क्ष्रौंक्लींॐऐंचपत्रेषुप्रणवाद्यानिसंलिखेत् ॥ ३० ॥ मन्त्रस्य
नवबीजानिततःपत्रान्तरेषुच ॥ अमादिदशवर्णाश्चकेशरेषुसमालिखेत् ॥
३१ ॥ शषसहान्स्वरांश्चापितदग्रेचलिखेत्पुनः ॥ वेष्टयेत्कादिकैर्वर्णैःशेषैःस
हविर्जितैः ॥ ३२ ॥ तद्बाह्येचतुरस्रेतुवेष्टयेद्भूतवर्णकैः ॥ पञ्चह्रस्वाःपञ्चदी
र्घाएकाराद्याश्चपञ्चच ॥ ३३ ॥ पञ्चवर्गाःपञ्चयाद्याःषसहाश्चलक्षौक्रमात् ॥
स्तम्भनेपार्थिवैरौप्यैःशान्तौवश्येचतैजसैः ॥ ३४ ॥ उच्चाटनेवायवीयैर्विद्वेषेचा
पिनाभसैः ॥ मारणेतैजसैःशान्तौवायवैःपुष्टौचपार्थिवैः ॥ ३५ ॥ अस्मिन्य
न्त्रेतोयपूर्णघटेभूयंप्रपूजयेत् ॥ कुम्भंस्पृष्ट्वाजपेन्मन्त्रंसहस्रंतेनसेचयेत्॥ ३६॥
सम्यक्साध्यंतदासस्यात्पुत्रवान्रोगवर्जितः ॥ यशस्वीदीर्घजीवीचसत्कल
त्रानुरञ्जकः ॥ ३७ ॥ वाक्सिद्धश्चापितेजस्वीप्रतापीविजितेन्द्रियः ॥ शत्रू
पद्रवमापन्नेग्रामेवापुटभेदने ॥ ३८ ॥ संस्थापयेदिदंमन्त्रंवैरिभीतिनिवृत्तये ॥
काम्यहोमंप्रवक्ष्यामिसंख्याकार्य्यानुसारतः ॥ ३९ ॥ सर्षपारिष्टलशुनकार्पासै
र्मार्यतेरिपुः ॥ धत्तूरैस्तभ्यतेनिम्बैर्द्वेष्यतेवश्यतेम्बुजैः ॥ ४० ॥ उच्चाट्यतेविभी

तस्यसमिद्भिःखदिरस्यच॥ यवैर्हुतैःश्रियःप्राप्तिस्तिलैराज्यैरघक्षयः॥४१॥ तिलतण्डुलसिद्धार्थलाजैर्वश्योनृपोभवेत्॥ अपामार्गार्कदूर्वाणांहोमोलक्ष्मीप्रदोघनुत्॥४२॥ स्त्रीवश्यकृत्प्रियंगूनांगुग्गुलोभूतशान्तिदः॥ अश्वत्थोदुम्बरप्लक्षवटबिल्वसमुद्भवाः॥४३॥समिधोलभतेहुत्वापुत्रानायुर्धनंसुखम्॥ सर्षपकञ्चुकसिद्धार्थधत्तूरस्यफलानिच॥४४॥ हुत्वालवणमिश्राणिचोरनाशःप्रजायते॥ रोचनागोमयैःस्तम्भोभूप्राप्तिःशालिभिर्हुतैः॥४५॥ अथातःसम्प्रवक्ष्यामिकार्त्तवीर्य्यमनोर्भिदः॥ एकोनविंशत्यर्णोयंताराद्निखवर्णकः॥४६॥ कार्तवीर्य्यार्जुनंङेन्तमन्तेचनमसान्वितम्॥ स्वबीजाद्योदशार्णोसावन्येनवशिवाक्षराः॥४७॥ आद्यबीजद्वयेनासौद्वितीयोमन्त्रईरितः॥ स्वकामाभ्यांतृतीयोसौस्वभूभ्यांतुचतुर्थकः॥४८॥ स्वपाशाभ्यांपञ्चमोसौषष्ठःस्वेनचमायया॥ स्वांकुशाभ्यांसप्तमःस्यात्स्वरमाभ्यामथाष्टमः॥४९॥ स्ववाग्भवाभ्यांनवमोवर्मास्त्राभ्यांतथान्तिमः॥ एतेषुमन्त्रवर्य्येषुस्वानुकूलंमतुंभजेत्॥५०॥ एषामाद्येविराट्छन्दोन्येषुत्रिष्टुबुदाहृतम्॥ दशमन्त्राइमेप्रोक्तायदास्युःप्रणवादिकाः॥५१॥ तदादिमःशिवार्णःस्यादन्येतुद्वादशाक्षराः॥ एवंविंशतिमन्त्राणांयजनंपूर्ववन्मनोः॥५२॥ त्रिष्टुप्छन्दस्तदाद्येस्यादन्येषुजगतीमता॥ दीर्घाद्यमूलबीजेनकुर्य्यादेषांषडङ्गकम्॥५३॥ तारोहृत्कार्त्तवीर्य्यार्जुनायवर्मास्त्रठद्वयम्॥चतुर्दशार्णोमन्त्रोयमस्येज्यापूर्ववन्मता॥५४॥ भूनेत्रसप्तनेत्राक्षिवर्णैरस्याङ्गपञ्चकम्॥ तारोहृद्भगवान्ङेन्तःकार्त्तवीर्य्यार्जुनस्तथा॥५५॥ वर्मास्त्राग्निप्रियामन्त्रःप्रोक्तोष्टादशवर्णवान्॥ त्रिवेदसप्तयुग्माक्षिवर्णैःपञ्चाङ्गकंमनोः॥५६॥नमोभगवतेश्रीतिकार्तवीर्य्यार्जुनायच॥ सर्वदुष्टन्तकायेतितपोबलपराक्रमः॥५७॥ परिपालितसप्तान्तेद्वीपायसर्वराजन्यचूडामणान्तेयेसर्वशक्तिमतेततः॥५८॥ सहस्रबाहवेप्रान्तेवर्मास्त्रान्तोमहामनुः॥ त्रिषष्टिवर्णवान्प्रोक्तःस्मरणात्सर्वसिद्धिकृत्॥५९॥ राजन्यचक्रवर्त्तीचवीरःशूरस्तृतीयकः॥ माहिष्मतीपतिःपश्चाच्चतुर्थःसमुदीरितः॥६०॥ रेवाम्बुपरितृप्तश्चकारागेहप्रबाधित॥ दशास्यश्चेतिषड्भिःस्यात्पदैरेतैःषडङ्गकम्॥६१॥ सिञ्च्यमानंयुवतिभिःक्रीडन्तंनर्मदाजले॥ हस्तैर्जलौघंरुन्धन्तंध्यायेन्मत्तंनृपोत्तमम्॥६२॥ एवंध्यात्वायुतंमन्त्रंजपेद

न्यत्तुपूर्ववत् ॥ पूर्ववत्सर्वमेतस्यसमाराधनमीरितम् ॥६३॥ कार्त्तवीर्य्यार्जुनो नामराजाबाहुसहस्रवान् । तस्यसंस्मरणादेवहृतंनष्टंचलभ्यते ॥ ६४ ॥ पादैःसर्वेणपञ्चाङ्गंध्यानयोगादिपूर्ववत् ॥ द्वात्रिंशदर्णमन्त्रस्यविधिरेवमुदाहृतः ॥ ६५ ॥ कार्त्तवीर्य्यायविद्महेमहावीर्य्यायधीमहि ॥ तन्नोऽर्जुनःप्रचोदयात् ॥ ६६ ॥ गायत्र्येषार्जुनस्योक्ताप्रयोगादौजपेत्तुताम् ॥ आनुष्टुभंमनुंरात्रौजपतांचौरसञ्चयाः ॥ ६७ ॥ पलायन्तेगृहाद्दूरंहवनात्तर्पणादपि ॥ अथोदीपविधिंवक्ष्येकार्त्तवीर्य्यप्रियङ्करम् ॥ ६८ ॥ वैशाखेश्रावणेमार्गेकार्त्तिकाश्विनपौषतः ॥ माघेचफाल्गुनेमासेदीपारम्भःप्रशस्यते ॥ ६९ ॥ तिथौरिक्ताविहीनायांवारेशनिकुजौविना ॥ हस्तोत्तराश्विरौद्रेषुपुष्यवैष्णववायुभे ॥ ७० ॥ द्विदैवतेचरोहिण्यांदीपारम्भःप्रशस्यते ॥ चरमेचव्यतीपातेधृतौवृद्धौसुकर्मणि ॥ ७१ ॥ प्रीतौहर्षेचसौभाग्येशोभनायुष्मतोरपि ॥ करणेविष्टिरहितेग्रहणेऽर्द्धोदयादिषु ॥ ७२ ॥ एषुयोगेषुपूर्वाह्णेदीपारम्भःकृतःशुभः ॥ कार्त्तिकेशुक्लसप्तम्यांनिशीथेतीवशोभनः ॥ ७३ ॥ यदितत्ररवेर्वारःश्रवणंभंतुदुर्लभम् ॥ श्रुत्वावश्यककार्य्येषुमासादीनांनशोधनम् ॥ ७४ ॥ आद्येह्युपोष्यनियतोब्रह्मचारीशयीतकौ ॥ प्रातःस्नातःशुद्धभूमौलिप्तायांगोमयोदकैः ॥ ७५ ॥ प्राणानायम्यसंकल्पंन्यासान्पूर्वोदितांश्चरेत् ॥ षट्कोणंरचयेद्भूमौरक्तचन्दनतण्डुलैः ॥ ७६ ॥ मध्येकामंसमालिख्यषट्कोणेषुसमालिखेत् ॥ मन्त्रराजस्यषड्वर्णान्कामबीजविवर्जितान् ॥ ७७ ॥ क्रों श्रीं हुंफट्चपूर्वादिदिशासुविलिखेत्क्रमात् ॥ नवार्णैर्वेष्टयेत्तच्चत्रिकोणंतद्बहिःपुनः ॥७८॥ एवंविलिखितेयन्त्रेनिदध्याद्दीपभाजनम् ॥ स्वर्णजंरजतोत्थंवाताम्रजंतदभावतः ॥ ७९ ॥ कांस्यपात्रंमृन्मयंचकनिष्ठंलोहजंमृतौ ॥ शान्तयेमुद्गचूर्णोत्थंसन्धौगोधूमचूर्णजम् ॥ ८० ॥ वश्येपूर्ववसमानन्तुपात्रंकुर्य्यात्प्रयत्नतः ॥ अर्कदिग्वसुषट्पञ्चचतूरामांगुलैर्मितम् ॥ ८१ ॥ आज्येपलसहस्रेतुपात्रंशतपलैःकृतम् ॥ आज्येयुतपलेपात्रंपलपञ्चशतीकृतम् ॥ ८२ ॥ पञ्चसप्ततिसंख्येतुपात्रंषष्टिपलंमतम् ॥ त्रिसहस्रेघृतपलेशरार्कपलभाजनम् ॥८३॥ द्विसहस्रेशरशिवंशतार्द्धेत्रिंशतामतम् ॥ शतेक्षिशरसंख्यातमेवमन्यत्रकल्पयेत् ॥ ८४ ॥ नित्यदीपेवह्निपलंपात्रमाज्यंपलंस्मृतम् ॥ एवंपात्रंप्रतिष्ठाप्यवर्त्तीःसूत्रोत्थिताःक्षिपे

त्॥ ८५ ॥एकातिस्रोथवापञ्चसप्ताद्यविषमाअपि ॥ तिथिमानाद्यासहस्रांतन्तु संख्याविनिर्मिता ॥ ८६॥ गोघृतंप्रक्षिपेत्तत्रशुद्धवस्त्रविशोधितम् ॥ सहस्रपल संख्यादिदशान्तंकार्य्यगौरवात् ॥ ८७ ॥सुवर्णादिकृतांरम्यांशलाकांषोडशां गुलाम् ॥ तदर्धांवातदर्धांवासूक्ष्माग्रांस्थूलमूलकाम् ॥ ८८॥ विमुञ्चेद्दक्षिणेभा गेपात्रमध्येकृताग्रकाम् ॥ पात्राद्दक्षिणदिग्देशेमुक्त्वांगुलचतुष्टयम् ॥ ८९ ॥ अधोग्रांदक्षिणाधारांनिखनेच्छुरिकांशुभाम् ॥ दीपंप्रज्वालयेत्तत्रगणेशस्मृ तिपूर्वकम् ॥ ९० ॥ दीपात्पूर्वत्रदिग्भागेसर्वतोभद्रमण्डले ॥ तण्डुलाष्टदलेवा पिविधिवत्स्थापयेद्घटम् ॥ ९१ ॥ तत्रावाह्यनृपाधीशंपूर्ववत्पूजयेन्निशि ॥ एत द्दोर्क्षंद्विजातीनांवामभिर्भामभागके ॥ ९२ ॥ क्षेप्याशलाकाच्छुरिकापश्चा त्पश्चिमभागके ॥ जलाक्षततिलान्हस्तेगृहीत्वामन्त्रमुच्चरेत् ॥ ९३ ॥ अथ मन्त्रंप्रवक्ष्यामितारंपाशंचह्रींवषट् ॥ कार्त्तवीर्य्यार्जुनायेतिवदेन्माहिष्मतीप दम् ॥ ९४ ॥ नाथायेतिसहस्रेतिबाहवेपदमुच्यते ॥ सहस्रक्रतुशब्दान्तेदी क्षितायपदंवदेत् ॥ ९५ ॥ दत्तात्रेयप्रियायेतिआत्रेयायवदेत्ततः ॥ अनुसू यागर्भरत्नायहुंफट्चप्रवदेत्ततः ॥९६॥ इमंदीपंगृहाणेतिअमुकंरक्षरक्षच ॥ दु ष्टान्नाशययुग्मंस्यात्तथापातयघातय ॥ ९७ ॥ शत्रूञ्जहिद्वयंमायांतारंफ्रों क्लींहुताङ्गनाम् ॥ अनेनदीपवर्य्येणपश्चिमाभिमुखेनच ॥ ९८ ॥ अमुकंरक्ष इत्युक्त्वाअमुकेतिवरप्रदा ॥ नायह्रींह्रींचह्रींतारंक्लींच्रींस्वाहासबिन्दुकान् ॥ ९९ ॥ वदेद्वर्णांस्तकारादीन्दशतारंहुताङ्गनाम् ॥ दीपदानस्यमन्त्रोयंनेत्र बाणधराक्षरः ॥ १००॥ दत्तात्रेयोमुनिश्छन्दोमितंदेवोर्जुनःस्मृतः ॥ च्रींबीजे नषडङ्गानिदीर्घषट्कयुजाचरेत् ॥ १ ॥ध्यात्वादेवंमन्त्रमेतमष्टोत्तरसहस्रकम्॥ ज पेत्तारंतथापाशंस्मांफ्रींच्रींदहाङ्गनाम् ॥ २ ॥ अंकुशंचपुनस्तारंमनुःप्रोक्तोनवा क्षरः ॥ प्राग्वद्दर्पिर्देवताङ्गेछन्दोनुष्टुप्समीरितम् ॥ ३ ॥ एवंदीपप्रदानस्यकर्त्ता प्नोत्यखिलेप्सितम् ॥ दीपप्रबोधकालेतुवर्जयेदशुभाङ्गिरम् ॥४॥ विप्रादीनांतु पञ्चाशत्पदार्थानांनिरीक्षणम् ॥ तस्मिन्नवसरेकार्य्यंसिद्धम्भवतिनान्यथा॥५॥ शूद्रादीनांतुपञ्चाशत्पदार्थानांनिरीक्षणम् ॥ अतियत्नात्कार्य्यसिद्धिंकुर्य्याच्चै वविलम्बतः ॥ ६ ॥ भारद्वाजादिपञ्चाशत्पदार्थानांतुदर्शने ॥ व्यत्ययेसति कार्य्यस्यनैवसिद्धिःप्रजायते ॥ ७ ॥ कार्य्यनाशोवन्ध्यवधौम्लेच्छादीनांतुद र्शने ॥ आरुग्रोत्वोर्दर्शनंदुष्टंगवयस्यमुखात्वहम् ॥ ८ ॥ दीपज्वालासमासि द्धैवक्रानाशविधायिनी ॥ सशब्दाभयदाकर्तुरुज्ज्वलासुखदामता ॥ ९ ॥ कृष्णाशत्रुभयोत्पत्त्यैवमन्तीपशुनाशिनी ॥ कृतेदीपेयदापात्रभग्नंदृश्येत दैवतः ॥ १० ॥ पश्चाद्वर्ताकृन्दागच्छेद्यजमानोयमालयम् ॥ वर्त्यन्तरंयदाकु

र्य्यात्कार्य्यंसिध्येद्विलम्बतः ॥ ११ ॥ नेत्रहीनोभवेत्कर्त्तातस्मिन्दीपान्तरेकृते ॥ अशुचिस्पर्शनेव्याधिर्दीपनाशेतुचौरभीः ॥ १२ ॥ श्वमार्जाराखुसंस्पर्शेभवेद्भूपतितोभयम् ॥ पात्रारम्भेत्रसुपलैःकृतोदीपोखिलेष्टदः ॥ १३ ॥ पलानांपञ्चविंशत्यादीपोदेयोर्थसिद्धये ॥ पञ्चाशताकृतोदीपःशत्रुवश्यायचेष्यते ॥ १४ ॥ पराजयश्चशत्रूणांपञ्चसप्ततिभिर्भवेत् ॥ शतेनशत्रुनाशःस्यात्सहस्रेणाखिलाःक्रियाः ॥ १५ ॥ तस्माद्दीपोरक्षणीयःप्रयत्नेनान्तरायतः ॥ आसमाप्तेःप्रकुर्वीतब्रह्मचर्य्यंक्षभूशयम् ॥ १६ ॥ स्त्रीशूद्रपतितादीनांसम्भाषामपिवर्जयेत् ॥ जपेत्सहस्रंप्रत्येकंमन्त्रराजंनवाक्षरम् ॥ १७ ॥ स्तोत्रपाठंप्रतिदिनंनिशीथिन्यांविशेषतः ॥ एकपादेनदीपाग्रेस्थित्वाथोमन्त्रनायकम् ॥ १८ ॥ सहस्रंप्रजपेद्रात्रौसोभीष्टंक्षिप्रमाप्नुयात् ॥ समाप्यशोभनेघस्रेसंपूज्यद्विजनायकान् ॥ १९ ॥ कुम्भोदकेनकर्त्तारमभिषिञ्चेन्मनुंस्मरन् ॥ कर्त्ताचदक्षिणांदद्यात्पुष्कलांतोषहेतवे ॥ २० ॥ पलानांतुदशांशेनमुख्यंप्रामुख्यभाजने ॥ विंशत्यंशेनमध्यंस्याच्छतांशेनापरंस्मृतम् ॥ २१ ॥ गुरौतुष्टेददातीष्टंकृतवीर्य्यसुतोनृपः ॥ गुर्वाज्ञयास्वयंकुर्य्याद्यदिवाकारयेद्गुरुम् ॥ २२ ॥ गुर्वाज्ञामन्तराकुर्य्याद्योदीपंस्वेष्टसिद्धये ॥ प्रत्युतानुभवत्येवहानिमेवपदेपदे ॥ २३ ॥ दीपदानविधिंब्रूयात्कृतघ्नादिषुनोगुरुः ॥ दुष्टेभ्यःकथितोमन्त्रोवक्तुर्दुःखावहोभवेत् ॥ २४ ॥ उत्तमंगोघृतंप्रोक्तंमध्यमंमहिषीभवम् ॥ तिलतैलंतुतादृक्स्यात्कनीयोजादिजंघृतम् ॥ २५ ॥ आस्यरोगेसुगन्धेनदद्यात्तैलेनदीपकम् ॥ सिद्धार्थसम्भवेनाथद्विषतांनाशहेतवे ॥ २६ ॥ सहस्रेणपलैर्दीपेविहितेचेन्नदृश्यते ॥ कार्य्यसिद्धिस्तदाकुर्य्यात्त्रिवारंदीपजंविधिम् ॥ २७ ॥ तदातुदुर्लभंकार्य्यंसिध्यत्येवनसंशयः ॥ यथाकथंचिद्यःकुर्य्याद्दीपदानंस्ववेश्मनि ॥ २८ ॥ विघ्नाःसर्वेरिभिःसाकंतस्यनश्यन्तिदूरतः ॥ सर्वदाजयमाप्नोतिपुत्रान्पौत्रान्धनंयशः ॥ २९ ॥ दीपप्रियःकार्तवीर्य्योमार्त्तण्डोनतिवल्लभः ॥ स्तुतिप्रियोमहाविष्णुर्गणेशस्तर्पणप्रियः ॥ ३० ॥ दुर्गार्चनप्रियानूनमभिषेकप्रियःशिवः ॥ तस्मात्तेषांप्रतोषायकुर्य्यात्तत्तुचतादृशम् ॥ ३१ ॥ इतिमोःकथितंदेवादीपदानंमहीक्षितुः ॥ अतःपरंकिंवक्तव्यंतत्पृच्छतसुरोत्तमाः ॥ १३२ ॥

इति श्रीमहामायामहाकालानुमतेमेरुतन्त्रेशिवप्रणीतेकार्त्तवीर्य्यार्जुनमन्त्रकथनंनाम पञ्चत्रिंशत्प्रकाशः ॥ ३५ ॥

समाप्तश्चायंग्रन्थः ॥

शुभमस्तु ॥

